धर्मो विश्वस्य जगतः प्रतिष्ठा

# धर्मकोशः

## उपनिषत्काण्डम्

### द्वितीयो भागः

संपादकः
लक्ष्मणशास्त्री जोशी, तर्कतीर्थः
अध्यक्षः प्राज्ञपाठशालामण्डलस्य

संवत् २००६

# DHARMAKOS'A

## UPANIṢATKĀṆḌA

### Volume II
### Part II

1949

EDITED BY
**Laxmanshastri Joshi,** *Tarkateerth,*
**President, Prājña Pāṭhaśāḷā Maṇḍaḷa.**

# EDITORIAL STAFF

Editor-in-Chief :—

Pt. Laxmanshastri Joshi, Tarkateerth,
President, Prājñapāṭhaśālā Maṇḍaḷa, Wai.

Sub-editors :—

1. Pt. Ranganathshastri Joshi, Sahityashastri, Wai.
2. Pt. Govindshastri Kelkar,
   Vyakaranateerth, Vedanta Chudamani, Wai.
3. Dr. K. L. Daftari, Esqr., B.A., LL.B., D.Litt. Nagpur.
4. Prof. Dr. V. G. Paranjape, M.A., LL.B., D.Litt., Poona.
5. Prof. N. R. Phatak, B.A., Bombay.
6. Justice P. B. Gajendragadkar, M. A., LL. B.,
   High Court Judge, Bombay.

Secretary :—

Pt. Vasudeoshastri Konkar, Wai.

# TABLE OF CONTENTS

# प्रास्ताविकम्

संप्रति त्रयोविंशत्यधिकद्विशतसंख्याका उपनिषदः समुपलभ्यन्ते लिखितरूपेण मुद्रितरूपेण वा । तासां सर्वासां संग्रहोऽस्मिन्काण्डे नास्माभिः क्रियते । वयं तासामेव परिग्रहार्हतमत्वं मन्यामहे यासां वचनानि ब्रह्मसूत्रव्याख्यानेषु आचार्यप्रणीतेषु तत्तत्संप्रदायमान्येषु प्रमाणत्वेन सूत्राधिकरणविषयवाक्यतयोदाह्रियन्ते, याश्चोपनिषदः भगवत्पूज्यपादेन शंकराचार्येण व्याख्याताः तासां च । उपनिषत्काण्डस्य द्वितीयतृतीयभागयोः संगृहीता उपनिषदः क्रमेण यथा—

१ ऐतरेय २ कौषीतकि ३ तैत्तिरीय ४ छान्दोग्य ५ बृहदारण्यक ६ ईश ७ तलवकारब्राह्मणोपनिषत् (केन) ८ काठक ९ मुण्डक १० प्रश्न ११ माण्डूक्य १२ शिवसंकल्प १३ श्वेताश्वतर १४ महानारायण १५ मैत्रायणी १६ जाबाल १७ कैवल्य १८ अथर्वशिरस् १९ अथर्वशिखा इत्याख्याः ।

संप्रत्युपलभ्यमानशारीरकसूत्रभाष्याणां कर्तारः शंकरभास्कररामानुजनिम्बार्कमध्वश्रीकण्ठश्रीकरवल्लभविज्ञानभिक्षुबलदेवाः । एतेषामेव ब्रह्मसूत्रभाष्याणि संप्रति तत्तत्संप्रदायविद्भिः प्रमाणत्वेनाङ्गीकृतानि । तत्र बलदेवभाष्यं आङ्ग्लानुवादरूपमेवास्माभिर्लब्धं, न मूलस्वरूपं गीर्वाणवाणीनिबद्धम् । अतस्तदुद्धृतवाक्यस्थलनिर्देश एव उपनिषत्काण्डेऽस्माभिः कृतः, पाठभेदादिपरामर्शश्च न कृतः, मूलप्रमाणानुपलम्भात् । श्रीकरकृतभाष्यं लिङ्गायतसंप्रदायेन प्रमाणीकृतं बेंगलोरनगर्यां मुद्रितं प्राप्यते । परन्तु तत्राशुद्धिबाहुल्यस्य प्रतिपत्रं समुपलम्भाद्ग्रन्थार्थनिर्णये पदेपदे प्रत्यवायो जायते । तदीयसंपादकमहोदयश्च स्वप्रणीतवाक्यान्यपि अनवधानादिदोषवशादशुद्धिसंकुलान्येवामुद्रयत् । तथा च श्रीश्रीकरस्य अर्थावधानकरशुद्धभाष्यस्यालाभादप्रामाण्यशङ्कोच्छेदो नासीदिति । याश्चोपनिषदः प्रमाणत्वेनोद्धृताः परंतु नाधिकरणसूत्रविषयवाक्यतयोद्धृता आचार्यैस्तासां संग्रहार्थमुद्धारं उपनिषत्काण्डेऽस्मिन् नास्माभिः कृतः । यथा—'गोपालतापनीयोपनिषत्' भगवता वल्लभाचार्येण बहुषु स्थलेषु प्रमाणत्वेन निर्दिष्टाऽपि न कस्यचनाधिकरणस्य सूत्रस्य वा विषयवाक्यभावं संपादिता; श्रीभगवता रामानुजाचार्येण च 'सुबालोपनिषत्' बहुषु स्थलेषु प्रमाणत्वेन परिगणिताऽपि नाधिकरणसूत्रविषयभाव नीता; रामानुजविज्ञानादिभिश्च 'चूलिकोपनिषत्' प्रमाणत्वेनोपन्यस्ताऽपि नाधिकरणसूत्रविषयभाव प्रापितेति तादृश्य उपनिषदो नास्मिन्काण्डे संगृहीताः । एतादृगुपनिषदां परिगणननिर्देशोऽग्रे समनन्तरमेव करिष्यते ।

आत्मषट्कमेव 'आत्मा वा इदमग्र आसीत्' इत्यारभ्य 'अमृतः समभवत्समभवत्' इत्येतदन्तं ऐतरेयोपनिषत्त्वेन पण्डितैः परिगृहीतमिति प्रसिद्धतरम् । अस्माभिस्तु ऐतरेयारण्यकस्य द्वितीयतृतीयारण्यके एवैतरेयोपनिषत्त्वेन परिगण्येते, तथैव चात्र संगृहीते । यतो भगवत्पूज्यपादशंकराचार्येणैतदेवारण्यकद्वयं समग्रमुपनिषत्त्वेन व्याख्यातं न केवलमात्मषट्कम् । आत्मषट्कातिरिक्तस्य ग्रन्थस्य शांकरं व्याख्यानं सकलमेवात्रोद्धृतं जिज्ञासूनां कृते, नेतरद्भाष्याणामांशिकसंकलनमिव । अस्य लिखितस्य मुद्रितस्य वा क्वचिदेव समुपलम्भात् । अस्मत्संनिधौ अस्मद्गुरुश्रीमत्केवलानन्दसरस्वतीचरणानां प्रसादाल्लब्धं षष्टिवर्षेभ्यः प्राक् काश्यां शिलाक्षरमुद्रितं समस्तीदम् । अस्य शांकरत्वनिर्णयश्च विद्यारण्यकृतैतरेयारण्यकवृत्तितः कर्तुं पार्यते । यथा तत्र प्रस्तावावसरोक्तम्—'आरण्यकं द्वितीयं च तृतीयं च तदात्मकम् । ज्ञानकाण्डं ततः सोपनिषदित्यभिधीयते ॥ करोम्युपनिषद्व्याख्यां शंकराचार्यवर्त्मना । आचार्यस्य प्रसादेन संसारान्मुच्यतां बुधः ॥' इति ।

कौषीतक्यारण्यकमपि समालोच्य साक्षादौपनिषदतत्त्वचिन्तनपराणामाम्नायानां तत्रैव चोपनिषत्त्वेन समाख्यातानामस्मिन्काण्डे 'कौषीतक्युपनिषत्, कौषी-

तकिसंहितोपनिषत्, कौषीतक्यग्निहोत्रोपनिषत्, कौषीतकिवेदशिरउपनिषत्' इति स्वाम्नातसंज्ञाभिरेव संग्रहोऽत्र कृतः ।

तलवकारब्राह्मणोपनिषत् इति जैमिनीयोपनिषद्ब्राह्मणमिति वाऽपरनामधेया यस्याः अंशभूततया 'केनोपनिषत्' समुपतिष्ठते तस्याः अतीवविस्तृताया अस्मिन्काण्डे समुद्धारः कृतः । एषा खलु हॅन्स ओरटेल ( Hanns Oertel ) महोदयेन प्रथमं रोमनलिप्यां प्राकाश्यं नीता पाठभेदनिर्देशपुरःसरम् । तान् पाठभेदान् समालोच्य पुनःसंस्करणपूर्वकं पाठभेददोषनिर्धारणोत्तरं स्थलविशेषेषु विशुद्धत्वेनाभिमतपाठसंनिवेशपुरःसरं नागराक्षरैरत्र पुनर्मुद्रिता 'तलवकारब्राह्मणोपनिषत्' इति संज्ञासहिता । दोषोद्धारप्रकारस्तूदाहरणाभ्यां प्रदर्श्यते —

डॉ. ओरटेलमहोदयपाठः—'अलं न्वै मह्यमिति ह स्माह । सैवालम्मस्यालं मतायैद्गतस्य हालमेवोज्जगौ । तस्मादालम्यैलाजोद्गातेत्याख्यापयन्ति' । ( तलवकारब्राह्मणोपनिषत् ३।६।३।१० )

उपनिषत्काण्डे संस्कृत्य धृतः पाठः—'अलं न्वै मह्यमिति ह स्माह । सैवालम्मस्याऽलम्मता । यदुद्गातास्य हालम्ममेवोज्जगौ । तस्मादलम्मो राजोद्गातेत्याख्यापयन्ति' । ( तलवकारब्राह्मणोपनिषत् ३।६।३।१० )

डॉ. ओरटेलमहोदयेन अस्या उपनिषद आङ्ग्लभाषानुवादटिप्पण्यां अस्य खण्डस्य अर्थबोधाक्षमता निर्दिष्टा । अस्मत्संशोधितपाठानुसारेणास्य खण्डस्यार्थो विनायासेन चकास्ति । अलम्मनामा राज्ञ उद्गाता पञ्चविंशब्राह्मणे ताण्ड्याख्ये अलम्मसाम्नो द्रष्टा निर्दिष्टः ( ताब्रा. १३।१०।८ ) । तद्दर्शनेनेदृशः पाठ उन्नीतोऽस्माभिः ।

डॉ. ओरटेलपाठः—'आ इति आवृद्यात् । वागिति तद्ब्रह्म' । उपनिषत्काण्डे संस्कृत्य धृतः पाठः—'आ इति आवृत् । यद्वागिति तद्ब्रह्म' । ( तलवकारब्राह्मणोपनिषत् ३।७।२।२ )

शिवसंकल्पोपनिषत् प्रायः ऋग्वेदखिलास्मिकैव । 'अस्ति विनाशयित्वा' 'अस्ति नास्ति विपरीतः' 'कैलासशिखराभासः' इत्यादयः केचिन्मन्त्रा ऋग्वेदखिलगताः शिवसंकल्पोपनिषदि न सन्ति । 'विश्वतश्चक्षुरुत' 'मा नो महान्तमुत' 'मा नस्तोके तनये' इत्यादयश्च शिवसंकल्पोपनिषद्गताः केचिन्मन्त्रा ऋग्वेदखिले न सन्ति । अतः सा पृथक्तया संगृहीता । बहूनां मन्त्राणां ऋग्वेदे शुक्लयजुर्वेदे तैत्तिरीयारण्यके च पठितत्वात्तस्या वैदिकोपनिषत्त्वेन परिग्रहः सम्यगुपपद्यते ।

मैत्रायण्युपनिषदः भगवच्छंकराचार्यरामानुजाचार्यभास्कराचार्यादिभिः ब्रह्मसूत्रभाष्येषु प्रमाणत्वेन समुद्धरणस्याकृतत्वात् विज्ञानभिक्ष्वादिभिरल्पसंमतैराचार्यैरेव प्रमाणत्वेनोरीकरणात्संदेहो जायते तस्याः प्रतिष्ठितवैदिकोपनिषत्त्वं प्रति । परन्तु मोक्षमूलरादिभिः पाश्चात्यपण्डितैः तस्या वैदिकशैलिवत्त्वनिश्चयेन वैदिकत्वं निर्णीतम् । मैत्रायणीशाखायां अविच्छिन्नपरम्परया आरण्यकत्वेनास्या अध्ययनादुक्तनिर्णयमुपोद्बलयितुं सम्यक् पारयामः । अतः साऽपि अत्र संग्रथिता ।

श्रीशंकराचार्यैः स्वयं व्याख्याता उपनिषदः— ( १ ) ऐतरेयोपनिषत् ( २ ) तैत्तिरीयोपनिषत् ( ३ ) छान्दोग्योपनिषत् ( ४ ) बृहदारण्यकोपनिषत् ( ५ ) ईशोपनिषत् ( ६ ) केनोपनिषत् ( ७ ) काठकोपनिषत् ( ८ ) मुण्डकोपनिषत् ( ९ ) प्रश्नोपनिषत् ( १० ) माण्डूक्योपनिषत् ( ११ ) नृसिंहपूर्वतापनीयोपनिषत् ।

यद्यपि श्वेताश्वतरोपनिषदः श्रीमच्छंकराचार्यविरचितं भाष्यं आनन्दाश्रमेण मुद्रितं तथापि तस्य शंकरविरचितत्वस्य निश्चयो न कर्तुं पार्यते । एतदुपनिषट्टीकाकर्त्रा नारायणेन स्वाधारत्वेन तस्यानुल्लेखात् । दशोपनिषदां च व्याख्यानावसरे नारायणः स्वाधारत्वेन शांकरभाष्यं निर्दिशति । किंच अस्य भाष्यस्य शैलिरपि विभिद्यते इतरशांकरभाष्येभ्यः । यथा अत्र पौराणिकवचनसंदोहस्य समुद्धारस्तथा नान्यत्र । अतः अस्माभिः श्वेताश्वतरोपनिषदः शंकरानन्दस्यैव वृत्तिः समुद्धृताऽस्मिन्काण्डे ।

नृसिंहपूर्वतापनीयोपनिषद्भाष्यं श्रीमच्छंकराचार्यकृतं आनन्दाश्रममुद्रणालयमुद्रितमुपलभ्यते । तस्या उपनिषदः प्राधान्येन केवलोपासनापरत्वान्नास्माभिरुपनिषत्काण्डे संग्रहः कृतः । तान्त्रिकोपासनाकाण्डे करिष्यमाणे तस्याः संग्रहश्चिकीर्षितोऽस्माभिः । एतद्भाष्यं श्रीमच्छंकराचार्य-

स्यैवेत्यत्र प्रमाणं माण्डूक्यभाष्यपरामर्शः प्रपञ्चसारसमानकर्तृकत्वं च । प्रपञ्चसारश्च श्रीमच्छंकराचार्यकृत एव । तस्य पद्मपादाचार्यकृतटीकायाः प्रस्तावे तत्कर्तृत्वेन श्रीमच्छंकराचार्यगुरोर्निर्देशात् । किंच नृसिंहतापनीयोपनिषद्भाष्यस्य वार्तिकमपि सुरेश्वराचार्यप्रणीतं आसीदित्यनुमीयते विद्यारण्यविरचिताया नृसिंहोत्तरतापनीयवृत्तेः प्रस्तावे 'तथा ह्युक्तं वार्तिककृद्भिः—नृसिंहब्रह्मविद्यैषा व्याख्याता ज्ञानसिद्धये' इति नृसिंहपूर्वतापनीयविषयपरामर्शस्य कृतत्वात् । नृसिंहोत्तरतापनीये श्रीमच्छंकराचार्यभाष्यमासीन्न वेत्यत्र निर्णयो न कर्तुं शक्यते । आसीदिति संदेहस्तूदेति यतो विद्यारण्यैः सप्तमखण्डवृत्तौ अन्यत्र च नृसिंहोत्तरतापनीयवाक्यभावार्थविवेचकवार्तिककृच्छ्लोकानामुद्धारः कृत इति ।

श्रीशंकराचार्यैर्ब्रह्मसूत्रभाष्ये नामोल्लेखपुरःसरमुद्धृता दशोपनिषद्बहिर्भूता उपनिषदः—

( १ ) कौषीतक्युपनिषत्— ब्रसू. ३।१।१२ 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' ( कौउ. १।२ ); ब्रसू. ३।३।२७ 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' ( कौउ. १।३ ) ।

( २ ) श्वेताश्वतरोपनिषत्— ब्रसू. २।१।३ 'त्रिरुन्नतं स्थाप्य समं शरीरम्' ( श्वेउ. २।८ ); ब्रसू. ३।३।३४ 'द्वा सुपर्णा सयुजा सखाया' ( श्वेउ. ४।६ ) ।

( ३ ) महानारायणोपनिषत्— ब्रसू. ३।३।२४ 'तस्यैवं विदुषो यज्ञस्याऽऽत्मा' ( नाउ. ८० ) ।

( ४ ) जाबालोपनिषत्— ब्रसू. १।२।३२ 'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति' ( जाउ. २ ) ।

'तथाऽन्यप्रतिषेधात्' ( ब्रसू. ३।२।३६ ) इति ब्रह्मसूत्रभाष्ये श्रीमच्छंकराचार्यैः 'ब्रह्मैवेदं सर्वम्' इति वाक्यं समुद्धृतम् । श्रीसाधलेशास्त्रिसंपादितोपनिषद्वाक्यमहाकोशेऽस्य वाक्यस्य 'नृसिंहो० ७।३' इति स्थलं निर्दिष्टम् । यद्यपि केषुचिन्नृसिंहोत्तरतापनीयपुस्तकेषु 'ब्रह्म वा इदं सर्वम्' इत्येतादृशं वाक्यं पठितमुपलभ्यते, तथापि अन्यत्रानुपलम्भात् श्रीसाधलेशास्त्रिसमाश्रितपाठानुसारेण च संभवति नृसिंहोत्तरतापनीयादस्य वाक्यस्योद्धारः ।

'अत एव चोपमा सूर्यकादिवत्' ( ब्रसू. ३।२।१८ ) इत्यत्र 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इति श्लोकः शंकराचार्यैः समुद्धृतः । स्थलनिर्देशस्तु न कृतः । 'जलसूर्यकादिवत् इत्युपमा उपादीयते मोक्षशास्त्रेषु' इत्येतावदेव उक्तम् । अत्र मोक्षशास्त्रशब्देन महाभारते शान्तिपर्वणि वर्तमानं मोक्षधर्मपर्व विवक्षितमित्यनुमीयते । यतः अयमेव श्लोकः सनत्सुजातीयशांकरभाष्ये ( १।२० ) 'तथा च मोक्षधर्मे' इत्युक्त्वा अवतारितः । तथा च ब्रह्मबिन्दूपनिषदि अयं श्लोक उपलभ्यमानोऽपि न तदीयत्वेनोद्धृत इति भाति ।

'कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः । यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ॥' इति वचनं सनत्सुजातीयभाष्ये ( १।३१ ) 'तथा च श्रुतिः' इत्युक्त्वाऽवतारितम् । एतद्वचनं नारदपरिव्राजकोपनिषदि ( ३।३२ ) समुपलभ्यते ।

'अनाविष्कुर्वन्नन्वयात्' ( ब्रसू. ३।४।५० ) इति ब्रह्मसूत्रव्याख्यानावसरे शंकरभगवत्पादैः '—अव्यक्तलिङ्गोऽव्यक्ताचारः—इति चैवमादि' इत्युक्तम् । एतद्वचनं नारदपरिव्राजकोपनिषदि परमहंसपरिव्राजकोपनिषदि च उपलभ्यते । एतद्वचनोद्धारपूर्वमाचार्यैः स्मृतिवचनानि निर्दिष्टानि 'तथा चोक्तं स्मृतिकारैः' इत्युक्त्वा । तथा च 'अव्यक्तलिङ्गः' इत्यादिवचनं श्रुतित्वेनोद्धृतं न वेति संदेहः । वस्तुतः बृहदारण्यकोपनिषद्भाष्ये ( ३।५।१ ) 'विद्वांल्लिङ्गवर्जितः—तस्मादलिङ्गो धर्मज्ञः — अव्यक्तलिङ्गोऽव्यक्ताचारः — इत्यादिस्मृतिभ्यः' इत्युक्तत्वात् स्मृतित्वमेव निर्णीयते । किंच तत्रैवाग्रे 'निराशिषमनारम्भम्' इत्यादिस्मृतिनिर्देशानन्तरं 'विद्वांल्लिङ्गवर्जितः— तस्मादलिङ्गो धर्मज्ञः — इति च' इत्युद्धारः कृतः तस्मात् स्मृतित्वमेवानुमीयते 'दर्शयति स्मृतिः' इत्यनुषङ्गात् ।

'यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः — इति श्रुतेः' इति बृहदारण्यकोपनिषद्भाष्ये ( ३।५।१ ) कठरुद्रोपनिषदः वचनं समुद्धृतम् । तत्रैव 'सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम् — इति च' इत्युक्तम् । एतद्वचनं कठरुद्रोपनिषदि संन्यासोपनिषदि च वर्तते ।

एतद्वचनपूर्वं 'अथ परिव्राड्विवर्णवासाः' इति जाबालोपनिषद्वाक्यं श्रुतित्वेन पठितम्। तस्मात्सांनिध्यादनुमीयते एतदपि वचनं श्रुतित्वेन समुद्धृतमिति।

श्रीभास्कराचार्यैर्ब्रह्मसूत्रभाष्ये नामोल्लेखपुरःसरमुद्धृता दशोपनिषद्बहिर्भूता उपनिषदः—

(१) कौषीतक्युपनिषत्— ब्रसू. ३।१।१२ 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौउ. १।२); ब्रसू. ३।३।२७ 'देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौउ. १।३)।

(२) श्वेताश्वतरोपनिषत्— ब्रसू. ३।२।५ 'ज्ञात्वा देवं सर्वपाशापहानिः' (श्वेउ. १।११); ब्रसू. ३।२।१३ 'भोक्तारं भोग्यं प्रेरितारं च मत्वा' (श्वेउ.१।१२)।

(३) महानारायणोपनिषत्— ब्रसू. १।४।८ 'अजामेकां लोहितशुक्लकृष्णाम्' (नाउ. १२।१); ब्रसू. ३।३।२४ 'तस्यैवं विदुषो यज्ञस्यात्मा' (नाउ. ८०)।

(४) जाबालोपनिषत्— ब्रसू. ३।४।२६ 'ब्रह्मचर्यं समाप्य गृही भवेत्' (जाउ. ४)।

श्रीभास्कराचार्यैर्नाम्नाऽनुल्लिखिता उपनिषत् —

नृसिंहोत्तरतापनीयोपनिषत्— ब्रसू. १।१।१ 'ब्रह्मैवेदं सर्वम्' (नृसिंहोत्त० ७।३); ब्रसू. ३।२।३६ 'ब्रह्मैवेदम्' (नृसिंहोत्त० ७।३)।

एवं प्रायः सर्वैर्भाष्यकारैः कौषीतकिश्वेताश्वतरमहानारायणजाबालोपनिषदो नाम्ना समुल्लिखिताः।

श्रीरामानुजाचार्यैर्नाम्नोल्लिखिताः शंकरापेक्षया अधिका उपनिषदः—

(१) 'चमसवदविशेषात्' (ब्रसू. १।४।८) इति सूत्रे श्रीरामानुजाचार्यैः 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' (मन्त्रिको० ३–७, १३, १४) इत्यादीनि वाक्यानि 'यथाऽऽथर्वणिका अधीयते' इत्येवमवतारितानि। मन्त्रिकोपनिषदि वाक्यान्येतानि समुपलभ्यन्ते। इयमेवोपनिषत् 'चूलिकोपनिषत्' इत्यपि ख्यायते। अन्यत्रापि अस्या उपनिषदो वाक्यानि समुद्धृतानि।

(२) सुबालोपनिषत्— ब्रसू. १।२।१९ 'नैवेह किंचनाग्र आसीत्......दिव्यो देव एको नारायणः' (सुबालो० ६, ७); ब्रसू. १।४।२७ 'यस्य बुद्धिः शरीरं... दिव्यो देव एको नारायणः' (सुबालो० ७); ब्रसू. २।१।९ 'यः पृथिवीमन्तरे संचरन्... दिव्यो देव एको नारायणः' (सुबालो० ७)। तृतीयस्थले सुबालोपनिषद्गतत्वेन 'य आत्मानमन्तरे संचरन्यस्याऽऽत्मा शरीरम्' इति वाक्यं समुद्धृतम्। तत्तु सुबालोपनिषदि नोपलभ्यते। अन्यत्र च षोडशसु स्थलेषु सुबालोपनिषद्वाक्यानामुद्धारः कृतः। एषां कानिचिद्वाक्यान्यध्यात्मोपनिषदि समुपलभ्यन्ते।

'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इत्याद्यनिर्दिष्टस्थलं वाक्यं ब्रसू. १।१।४, १।१।२१, २।१।१५ इत्यादिषु षट्सु स्थलेषूद्धृतम्। वाक्यमिदं महोपनिषदि (१।१) चतुर्वेदोपनिषदि (१) च किञ्चित्पाठभेदेनोपलभ्यते। चतुर्वेदोपनिषदः सकलाया विकीर्णतया महोपनिषदि समुपलम्भात्, 'अथातो महोपनिषदमेव तदाहुः' 'य इमां महोपनिषदं ब्राह्मणोऽधीते' इति तद्गतोपक्रमोपसंहाराभ्यां च महोपनिषदः सकाशात्संकलितेयमुपनिषदिति निश्चीयते। ततश्च महोपनिषद एवायं वाक्योद्धार इति च संभाव्यते। यश्च 'देवा ह वै स्वर्गँल्लोकमायंस्ते देवा रुद्रमपृच्छन्' इत्यादिरन्तिमश्चतुर्वेदोपनिषदः खण्डो महोपनिषदनन्तर्भूतः, स तु पूर्वमुपनिषद उपसंहृतत्वात् पूर्वभागस्य नारायणपरत्वादस्य रुद्रपरत्वाच्च पुनः परमोपसंहारस्यान्तेऽकरणाच्चासंगत इवाऽऽभाति।

ब्रसू. १।२।१ इत्यत्र 'अत एव—परमात्मा परं ब्रह्म—इति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः' इति रामानुजभाष्यपङ्क्तिः। अत्र 'परमात्मा परं ब्रह्म' इत्येकं वाक्यं, 'परमात्मा' 'परं ब्रह्म' इति वा पृथक् कस्यचिद्वाक्यद्वयस्यांशग्रहणमिति न निर्णीयते। एकं चेद्वाक्यं, तर्हि तत् सर्वोपनिषदि (४) समुपलभ्यते।

ब्रसू. १।१।१ (पृ. ७७, ७८) इति सूत्रे रामानुजभाष्ये 'तथा च श्रुतिः' इत्युक्त्वा 'द्वा सुपर्णा' इत्याद्याः काश्चिच्छ्रुतीरुद्धृत्यान्ते 'सर्वात्मा—इत्याद्या' इत्युक्तम्। अस्य 'सर्वात्मा' इत्यौपनिषदपदस्य श्रीविश्वबन्धुशास्त्रिमहोदयैः संपादिते उपनिषत्पदकोशे—कैवल्योपनिषत् १।१६; नृसिंहोत्तरतापिन्युपनिषद्

४।४, ८।१; तेजोबिन्दूपनिषत् ३।२७, ४।३४, ४१; ब्रह्मविद्योपनिषत् १०७; अन्नपूर्णोपनिषत् ४।२६; कठरुद्रोपनिषत् ८; वरदोत्तरतापिन्युपनिषत् ४।४७; भवसंतरणोपनिषत् २।५४ — इत्येतानि स्थलानि संकलितानि।

ब्रसू. २।३।३१ रामानुजभाष्ये 'तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरम्' इति वाक्य समुद्धृतम्। सर्वेष्वेतदुपनिषत्पुस्तकेषु 'तं सप्तधातुं त्रिमल द्वियोनिं चतुर्विधाहारमयं शरीरम्' इत्येतादृशं वाक्यं पठ्यते। उपनिषद्वाक्यमहाकोशे पुंलिङ्गपाठात्मकस्य वाक्यस्यास्य गर्भोपनिषद्गतमेकमेव स्थलं निर्दिष्टम्। ततः संभवति गर्भोपनिषद्वाक्यमिदं समुद्धृतमिति।

निम्बार्कभाष्ये प्रायः शांकरातिरिक्ता उपनिषदो न सन्ति। ब्रसू. २।३।१४ 'पृथिव्यप्सु प्रलीयते' इति वाक्यं पठितम्। तत् सुबालोपनिषदि (२) श्रूयते।

ब्रह्मसूत्रमध्वभाष्ये १।२।२६, १।४।२९, २।३।१३, ४।२।६ इत्येतेषु स्थलेषु 'महोपनिषदि' इत्युल्लिख्य 'अथ हेममात्मानमणोरणीयांसम्०' 'एष ह्येव शून्य एष ह्येव तुच्छः०' 'स ब्रह्मणा विसृजति०' 'पृथिव्यामृभवो विलीयन्ते०' इत्यादीनि वाक्यानि पठितानि। न च तानि प्रसिद्धमहोपनिषद्युपलभ्यन्ते।

ब्रसू. २।४।२२ इत्यत्र मध्वभाष्ये 'यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजः' इत्यादि वाक्यमुद्धृतम्। तत् गर्भोपनिषदि (१) शारीरकोपनिषदि (१) चोपलभ्यते।

भगवता **आनन्दतीर्थेन** ब्रह्मसूत्रभाष्ये प्रमाणत्वेन नाम्नोद्धृता बह्व्यः श्रुतयो न केष्वपि तत्पूर्ववर्तिषु भाष्येषु अधुनोपलभ्यमानोपनिषत्सु वा समुपलभ्यन्ते। बलदेव एवैकः आनन्दतीर्थैकगम्यश्रुतीनां कासांचिदुद्धारं करोति। स त्वानन्दतीर्थोत्तरकालभावीति तद्भाष्यसमालोचनाज्ज्ञायते। न वा ज्ञायते तानि नामानि वेदशाखाविशेषज्ञापकानि उपनिषद्विशेषनिर्देशरूपाणि वेति। कानिचित्तु नामानि चरणव्यूहादिषु वेदशाखाविस्तरप्रतिपादकेषु ग्रन्थेष्वपि न निर्दिष्टानि। यथा— कौषारवश्रुतिः, माध्यन्दिनायनश्रुतिरित्यादीनि। कानिचित्तु नामानि शाखाविशेषसंज्ञा इति तु निश्चेतुं शक्यते, यथा— जाबालश्रुतिः, पैङ्गिश्रुतिः, पिप्पलादशाखेत्यादीनि। आनन्दतीर्थाधिगतानामन्याचार्यानुपलब्धानां श्रुतीनां नामानीमानि—

(१) माल्लवेयश्रुतिः— ब्रसू. १।१।१ 'नामानि विश्वानि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्। नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति॥'

(२) पैङ्गिश्रुतिः—ब्रसू. १।१।१० 'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव। प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे॥'

(३) चतुर्वेदशिखा — ब्रसू. १।१।१५ 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम्'।

(४) पिप्पलादशाखा — ब्रसू. १।४।१ 'अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम्। यो वेद हरिमात्मानं स भयादनुमुच्यते॥'

(५) काषायणश्रुतिः— ब्रसू. २।१।१७ 'काल आसीत्पुरुष आसीत्परम आसीत्तद्यदासीत्तदावृतमासीदथ ह्येक एव परम आसीद्यस्यै तदासीन्न ह्येतदासीत्'।

(६) गौपवनश्रुतिः— ब्रसू. २।३।२० 'अणुर्ह्येष आत्माऽयं वा एते सिनीतः पुण्यं चापुण्यं च'।

(७) पौष्यायणश्रुतिः— ब्रसू. २।३।२० 'सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छ यमुष्मादिमं लोकमागच्छति स गर्भीभवति स प्रसूयते स कर्म कुरुते'।

(८) पाराशर्यायणश्रुतिः— ब्रसू. २।३।२७ 'स पञ्चधा स सप्तधा स दशधा च भवति स शतधा सहस्रधा स गच्छति स मुच्यते'।

(९) शाण्डिल्यश्रुतिः— ब्रसू. २।३।२७ 'अथैक एव सन् गन्धवद्व्यतिरिच्यते। अथैकीभवति। अथ बह्वीभवति। तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति। सोऽचिन्त्यः परमो गरीयान्'।

(१०) कौशिकश्रुतिः— ब्रसू. २।३।२८ 'भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसंघो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाऽभिवाञ्छेत्॥'

( ११ ) आग्निवेश्यश्रुतिः—ब्रसू. २।३।३० 'नित्यः परो नित्यो जीवोऽनित्यास्तस्य धातवः। अत उत्पद्यते म्रियते विमुच्यते च'।

( १२ ) कौण्डिन्यश्रुतिः— ब्रसू. २।४।६ 'द्वादश वा एते प्राणा द्वादश मासा द्वादशाऽऽदित्या द्वादश राशयो द्वादश ग्रहाः'।

( १३ ) माण्डव्यश्रुतिः— ब्रसू. २।४।१२ 'तानि ह वा एतानि सर्वाणि करणान्यथ प्राण एवाकरणस्तस्मान्मुख्यस्तस्मान्मुख्य इत्याक्षचते'।

( १४ ) सौत्रायणश्रुतिः— ब्रसू. २।४।१४ 'अणुनैतत्सृज्यतेऽणुनैतद्धार्यतेऽणौ लयमभ्युपैति प्राणो वा अणुः प्राणैर्ह्येतद्भवति'।

( १५ ) पौत्रायणश्रुतिः— ब्रसू. २।४।१८ 'अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा हीदं द्रवन्ति'।

( १६ ) कौण्ठरव्यश्रुतिः— ब्रसू. ३।१।६ 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति'।

( १७ ) कौषारवश्रुतिः— ब्रसू. ३।१।१७ 'सर्वं विसृजति सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्टः'।

( १८ ) चतुरश्रुतिः— ब्रसू. ३।३।३४ 'नानाविधा जीवसंघा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः। दोषाभावाद्गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेः॥'

( १९ ) वत्सश्रुतिः— ब्रसू. ३।३।४० 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञानाऽबद्धा बन्धिका सैषा प्रकृतिरविकृतिः'।

( २० ) कमठश्रुतिः— ब्रसू. ३।३।५२ 'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टयः'।

( २१ ) माठरश्रुतिः— ब्रसू. ३।३।५४ 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी'।

( २२ ) इन्द्रद्युम्नश्रुतिः— ब्रसू. ३।४।४२ 'यथर्षीन्प्रजापतीन्नाऽऽकाङ्क्षेदेवं न गन्धर्वान्न विद्याधरान्न सिद्धान्'।

( २३ ) माध्यन्दिनायनश्रुतिः— ब्रसू. ३।४।४४ 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किञ्चेमाः प्रजा विजानते देवा एतद्विजानते देवाना ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः'।

( २४ ) सौपर्णश्रुतिः— ब्रसू. ३।४।५० 'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत्। यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्वेक्ष्य॥'

( २५ ) बृहच्छ्रुतिः— ब्रसू. ४।२।५ 'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता'।

( २६ ) मौद्गल्यश्रुतिः— ब्रसू. ४।४।१ 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदत आनन्दी भवति'।

( २७ ) उद्दालकश्रुतिः— ब्रसू. ४।४।६ 'सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते'।

( २८ ) औद्दालकश्रुतिः— ब्रसू.४।४।११ 'स वा एष एवंवित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथाऽऽनन्दी ह्येवैष भवति नानानन्दं किंचिदुपस्पृशति'।

( २९ ) जाबालश्रुतिः— ब्रसू. ४।४।२१ 'स एष एतस्मिन्ब्रह्मणि संपन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवाऽऽत्मानं तस्यैवं दर्शयतो नाऽऽपत्तिर्न विपत्तिः'।

श्रीकण्ठभाष्ये नामनिर्देशपुरःसरमुद्धृता शांकरातिरिक्ता उपनिषदः—

( १ ) शिवसंकल्पोपनिषत्— ब्रसू. ३।२।३५ 'विश्वतश्चक्षुरुत विश्वतोमुखः' ( शिउ. २६ ); ब्रसू. ४।३।१४ 'परात्परतरो ब्रह्मा परात्परतरो हरिः' ( शिउ. १८ )।

( २ ) कैवल्योपनिषत्—ब्रसू. १।२।४ 'हृत्पुण्डरीकं विरजम्' 'उमासहायं परमेश्वरं प्रभुम्' ( कैउ. १।५,७,८ ); ब्रसू. ३।३।५३ 'आत्मानमरणिं कृत्वा' ( कैउ. १।११ )।

( ३ ) अथर्वशिरउपनिषत्—ब्रसू. १।१।२ ( पृ. १२८) 'अथ कस्मादुच्यते महादेवो यः सर्वान् भावान् परित्यज्य' ( शिरउ. ४ ); ब्रसू. १।२।९ 'तस्मा उपसंहर्त्रे महाग्रासाय वै नमः' ( शिरउ. ३ )।

( ४ ) अथर्वशिखोपनिषत् — ब्रसू. १।१।४ (पृ. १८९ ) 'शिव एको ध्येयः शिवंकरः' ( शिखाउ. ३ ); ब्रसू. १।२।९ 'ध्यायीतेशानं प्रध्यायितव्यम्' ( शिखाउ. ३ )।

श्रीकरभाष्ये नामान्युल्लिख्योद्धृता शंकरोक्तातिरिक्ता उपनिषदः—

( १ ) शिवसंकल्पोपनिषत्— ब्रसू. ३।२।३५ 'विश्वतश्चक्षुरुत विश्वतोमुखः' ( शिउ. २६ ); ब्रसू. ४।३।१६ 'परात्परतरो ब्रह्मा तत्परात्परतो हरिः' ( शिउ. १८ )।

( २ ) कैवल्योपनिषत्— ब्रसू. १।१।१ ( पृ. ८) 'श्रद्धाभक्तिध्यानयोगादवेहि' ( कैउ. १।२); ब्रसू. १।१।१ ( पृ. १५ ) 'उमासहायं परमेश्वरं प्रभुम्' ( कैउ. १।७ )।

( ३ ) अथर्वशिरउपनिषत्— ब्रसू. १।१।१ ( पृ. ९ ) 'प्राङ्गः प्रत्यङ्गोऽहम्' ( शिरउ. १ ); ब्रसू. १।१।१९ 'यो वै रुद्रः स भगवान्यश्च ब्रह्मा' ( शिरउ. २ )।

( ४ ) अथर्वशिखोपनिषत्— ब्रसू. १।१।१ ( पृ. २७ ) 'ध्यायीतेशानं प्रध्यायितव्यम्' (शिखाउ. ३ ); ब्रसू. १।१।२७ 'शिव एको ध्येयः शिवंकरः' ( शिखाउ. ३ )।

( ५ ) सुबालोपनिषत्— ब्रसू. १।१।२२ 'यस्याऽऽत्मा शरीरम्' 'यस्याऽऽपः शरीरम्' ( सुबालो० ७ ); ब्रसू. २।१।२२ 'स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' ( सुबालो० ७ )।

'यस्याऽऽत्मा शरीरम्' इति वाक्यं सुबालोपनिषदि नोपलभ्यते।

( ६ ) बृहज्जाबालोपनिषत्— ब्रसू. १।२।४ 'त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते। धारयन्ति तु ये भक्त्या धारयन्ति तमेव ते ॥' ( बृहज्जाबालो० ५।१५ ); ब्रसू. १।२।७ 'येषां न जायते ( नास्ति मुने ) श्रद्धा श्रौते भस्मनि सर्वदा। गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः ॥' (बृहज्जाबालो० ५।१२ )।

अस्या उपनिषद उपरिनिर्दिष्टादिस्थलेषु 'जाबाले' इति निर्देशः कृतः। यत्र तु— ब्रसू. १।२।७ 'रुद्राक्षाणां तु भद्राणां धारणे स्यान्महाबलम्। धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम् ॥'; ब्रसू. १।४।११ 'स पुनस्तं होवाच कानि षट्त्रिंशत्तत्त्वानीति......तदा प्राज्ञतैजसविश्वाख्या आगच्छन्ति' — इत्यादौ 'बृहज्जाबाले सप्तमब्राह्मणे च' 'बृहज्जाबालोपनिषदि' इत्येवं पूर्णनामनिर्देशः कृतः, तत्रत्यानि वाक्यानि अस्मदुपलब्धायां बृहज्जाबालोपनिषदि नोपलभ्यन्ते।

( ७ ) महोपनिषत्— ब्रसू. १।१।२ ( पृ. ३५) 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' ( महो० १।१ )।

( ८ ) हंसोपनिषत्— ब्रसू. १।१।१०, १।३।१५, ३।२।११ 'एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं सर्वं व्याप्तम्' ( हंसो० ६ )।

( ९ ) कालाग्निरुद्रोपनिषत्— ब्रसू. १।२।४ 'अधीहि भगवंस्त्रिपुण्ड्रविधिम्' 'तिर्यक्तिस्रो रेखाः प्रकुर्वीत'; ब्रसू. १।२।७ 'कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ' 'त्रिपुण्ड्रविधिं भस्मना करोति'।

( १० ) सदानन्दोपनिषत्— ब्रसू. १।१।१ ( पृ. ९ ) 'अन्तर्धारणशक्तेन ह्यशक्तेन द्विजोत्तमाः। संस्कृत्य गुरुणा दत्तं शैवं लिङ्गमुरःस्थले। धार्यं विप्रेण मुक्त्यर्थं शिवतत्त्वविदो विदुः ॥'

वाक्यमिदं मूलपुस्तके सुतरामशुद्धं मुद्रितम्।

श्रीकरभाष्ये अकृत्वा नामनिर्देशमुद्धृता उपनिषदः—

'अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते। प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥' इति वाक्यं ब्रसू. ३।२।२५, ४।१।१५ इत्यत्रोद्धृतम्। तत् मैत्रेय्युपनिषदि ( २।२२ ) उपलभ्यते।

'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति' 'नारायणाद्ब्रह्मा जायते' इति वाक्यं ब्रसू. १।१।१ ( पृ. २६ ), १।१।११ इत्यादौ समुद्धृतम्। तत् नारायणाथर्वशिरउपनिषदि समुपलभ्यते।

'इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः' (२।८०) 'किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम्। यन्मया पूरितं विश्वं महत्कल्पाम्बुना यथा॥' (२।३५, ३६) इति वाक्ये क्रमेण ब्रसू. २।४।१५, ४।४।९ इत्यत्र समुद्धृते। ते च वराहोपनिषदि समुपलभ्येते।

'एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥' इति वाक्यं ब्रसू. १।१।२ (पृ. ३३), ३।२।१८ इत्यत्र श्रुतित्वेनोदाहृतम्। वाक्यमिदं ब्रह्मबिन्दूपनिषदि (१२) त्रिपुरातापिन्युपनिषदि (५।१२) च श्रूयते। श्रीशंकराचार्यैरेतद्वाक्यं 'मोक्षशास्त्रेषु' इत्युदाहृतं, अत्र तु श्रुतित्वेनेति विशेषः।

'द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत्। दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी॥' इति वाक्यं ब्रसू. ३।३।१९ इत्यत्रोद्धृतम्। वाक्यमिदं तेजोबिन्दूपनिषदि (१।३०) उपलभ्यते।

'समाधिमथ कर्माणि मा करोतु करोतु वा। हृदयेनास्तसंदेहः स जीवन्मुक्त उच्यते॥' इति वाक्यं ब्रसू. ३।४।५० इत्यत्र, 'बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः' इति च ब्रसू. ३।४।५१, ४।४।९ इत्यत्र समुद्धृतम्। तत्र प्रथमं वाक्यं किंचित्पाठभेदेन, द्वितीयं च यथाश्रुतं मुक्तिकोपनिषदि (२।१९,६८) पठ्यते।

'गच्छंस्तिष्ठन्नुपविशञ्छयानोऽप्यन्यथाऽपि वा। यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः॥' इत्ययं श्लोकः ब्रसू. ४।१।७ इत्यत्रोदाहृतः। अयं च श्लोकः कुण्डिकोपनिषदि (२८) दृश्यते।

'हंस हंसेति यो ब्रूयात्' इति वाक्यं ब्रसू. १।३।७ इत्यत्र गृहीतम्। तत्तु ब्रह्मविद्योपनिषदि (३४) पठ्यते।

'सर्वमिदं शिव एव विजानीहि शुद्धो निरञ्जनो विभुरद्वयः शिव एकः' इति वाक्यं ब्रसू. १।१।१ (पृ. २७) इत्यत्र समुद्धृतम्। वाक्यमिदं त्रिशिखब्राह्मणोपनिषदि (१) श्रुतम्।

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' (शु. र. ३।१२; त्रि. म. ना. ४।८) इति वाक्यं ब्रसू. १।१।२ (पृ. ३३) इत्यत्र, 'येनेक्षते शृणोति' (शु र. ३।१) इति च ब्रसू. १।२।१२ इत्यत्रोद्धृतम्। इदं वाक्यद्वयं शुकरहस्योपनिषद्युपलभ्यते। प्रथमं तु त्रिपाद्विभूतिमहानारायणोपनिषद्यपि श्रूयते।

'न मोक्षो नभसः पृष्ठे न पाताले न भूतले। सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीर्यते॥' इति वाक्यं ब्रसू. ३।४।५१, ४।४।९ इत्यत्रोदाहृतम्। वाक्यमिदं अन्नपूर्णोपनिषदि (२।२३) समुपलभ्यते।

'ब्रह्मवेद सर्वम्' इति वाक्यं ब्रसू. २।१।१४ इत्यत्र समुद्धृतम्। एतद्वाक्यविषये यद्वक्तव्यं तत् पूर्वत्र श्रीशंकराचार्योद्धृतवाक्यनिर्णयप्रस्तावे उक्तम्।

श्रीवल्लभाचार्यैर्नामोल्लेखपुर्वकमुद्धृता शंकरोक्तातिरिक्ता उपनिषदः—

(१) रामोत्तरतापिन्युपनिषत् — ब्रसू. ३।३।३, ५ 'यो वै ये मत्स्यकूर्माद्यवतारा भूर्भुवः सुवस्तस्मै वै नमो नमः' (रामोत्तर० ५।१०)। वाक्यमिदं रामोत्तरतापिन्युपनिषदि पाठभेदेनोपलभ्यते। तत्र च 'भूर्भुवः' इत्यादिरंशः प्रथममन्त्रे उक्त्वा द्वितीयादिमन्त्रेष्वतिदिष्टः। अस्या उपनिषदः प्रथमे स्थले 'आथर्वणोपनिषत्सु' इति, द्वितीये च स्थले 'श्रीरामोपनिषत्सु' इति निर्देशः कृतः।

(२) गोपालपूर्वतापिन्युपनिषत् — ब्रसू. ३।३।२७ 'परं ब्रह्मैतद्यो धारयति' 'भजति सोऽमृतो भवति' (१।३) 'मुक्तो भवति संसृतेः' (१।७); ब्रसू. ३।३।३० 'किं तद्रूपं किं रसनम्' (१।४) 'भक्तिरहस्यभजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्यात्मनः कल्पनमेतदेव नैष्कर्म्यम्' (२।२)। कियांश्चित्पाठभेदोऽस्ति। 'आथर्वणोपनिषत्सु' इति च निर्देशः।

(३) गोपालोत्तरतापिन्युपनिषत् — ब्रसू. ३।३।३ 'स होवाचाब्जयोनिर्योऽवताराणां मध्ये श्रेष्ठोऽवतारः को भविता येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात्संसाराद्भवन्ति कथं चास्यावतारस्य ब्रह्मता भवति। स होवाच तं हि नारायणो देवः' (१।१४) 'यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या

समाहितः ' ( २।२ )। अत्र ' आथर्वणोपनिषत्सु ' इति निर्देशः।

( ४ ) ब्रह्मोपनिषत्—ब्रसू. २।३।२० ' ऊर्णनाभिर्यथा तन्तून्सृजते संचरत्यपि। जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥ ' ( ब्रह्मो० २० ).

नाम्नाऽनिर्दिष्टा उपनिषत्—

' एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ' इति वाक्यं ब्रसू. ३।२।१८ इत्यत्रोदाहृतम्। तत् ब्रह्मबिन्दूपनिषदि ( १२ ) त्रिपुरातापिन्युपनिषदि ( ५।१२ ) चोपलभ्यते।

विज्ञानभिक्षुभाष्ये नामनिर्देशपुरःसरमुद्धृता शंकरोक्तातिरिक्ता उपनिषदः—

( १ ) नृसिंहोत्तरतापिन्युपनिषत्—ब्रसू. १।१।१ ( पृ. ११ ) 'अशिखा अयज्ञोपवीताः ' 'प्रणवे एव पर्यवसिताः ' ( नृसिंहो० ६ )। अत्र 'तापनीये' इति निर्देशः कृतः। अत्रत्यं द्वितीयवाक्यमस्मदुपलब्धोपनिषत्पुस्तकस्थितस्य ' तत्रैव परिसमाप्ताः ' इति वाक्यस्य पाठभेदो वा स्यात्, ' ओंकारे परे ब्रह्मणि पर्यवसितो भवेत् ' इति फलवाक्ये पर्यवसितशब्दप्रयोगात्, अर्थतोऽनुवादो वा।

( २ ) मन्त्रिकोपनिषत्—ब्रसू. १।४।९ 'अशक्यः सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकाः। विकारजननीं मायामष्टरूपामजां ध्रुवाम् ॥' ( मन्त्रिको० ३ ); ब्रसू. २।१।२ ' ध्यायते ध्यासिता तेन तन्यते प्रेरिता पुनः........यस्मिन्नेव लयं याति बुद्बुदाः सागरे यथा ' ( मन्त्रिको० ४–८, १४–१७ )। पाठभेदो विद्यते। अस्या एवोपनिषदः ' चूलिकोपनिषत् ' इत्यभिधानान्तरेणात्र निर्देशः कृतः।

( ३ ) मैत्रायण्युपनिषत्—ब्रसू. २।१।२, २।३।४४ ' तमो वा इदमेकमास तत्परे स्यात्...... असावात्माऽन्तर्बहिश्चान्तर्बहिश्च ' ( ४।५ ); ब्रसू. २।४।७ ' पञ्चतन्मात्राणि ( भूतशब्देनोच्यन्ते ) पञ्चमहाभूतानि भूतशब्देनोच्यन्ते ' ( ३।२ )। अस्या उपनिषदः ' मैत्रेयोपनिषत् ' इति निर्देशः कृतः। पाठभेदोऽस्ति। अकृत्वा नामनिर्देशं सप्तसु स्थलेष्वस्या वाक्यान्युद्धृतानि।

( ४ ) गर्भोपनिषत्— ब्रसू. २।१।२ ' अष्टौ प्रकृतयः षोडश विकाराः शरीरे ' ( गर्भो० ३ )।

( ५ ) कठश्रुत्युपनिषत्— ब्रसू. ३।४।२० इत्यत्र ' सशिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतम् ' इति वाक्यमुद्धृत्य 'इति काठकः' इत्युक्तम्। तथा अतः पूर्वं पश्चाच्च कानिचिद्वाक्यान्युद्धृत्यान्ते 'एतानि मिताक्षराधृतवाक्यानि ' इत्यभिहितम्। मिताक्षरायामेतद्वाक्यं काठकश्रुतित्वमात्रेण धृतं, न विशेषतः। वाक्यमिदं कठश्रुत्युपनिषदि ( ४ ) कठरुद्रोपनिषदि ( ३ ) च समुपलभ्यते।

अनिर्दिष्टनाम्न्य उपनिषदः—

कैवल्योपनिषत्— ब्रसू. १।१।२, १।१।४ इत्यादिषु त्रिंशतिस्थलेषु ' आधारमानन्दमखण्डबोधं यस्मिँल्लयं याति पुरत्रयं च। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ॥ ' ( कैउ. १।१५ ) 'अधीहि भगवन्ब्रह्मविद्यां वरिष्ठाम्' ( कैउ. १।१ ) इत्यादीनि वाक्यानि समुद्धृतानि। तानि कैवल्योपनिषदि श्रूयन्ते।

महोपनिषत्— ब्रसू. १।२।१ ( पृ. २४ ) ' सत्ता सर्वपदार्थानां नान्या संवेदनादृते ' ( ५।४७ ); ब्रसू. १।१।२ (पृ.६४) 'नानन्दं न निरानन्दम्' ( ५।९८ )। वाक्ये एते महोपनिषदि श्रूयेते।

ब्रह्मबिन्दूपनिषत्—ब्रसू. १।१।४ (पृ. ९५) इत्यत्रोद्धृतं ' सर्वभूताधिवासं यद्भूतेषु च वसत्यधि। सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः ॥ ' इति वाक्यं ब्रह्मबिन्दूपनिषदि (२२) वर्तते। इयमेवोपनिषत् अड्यारमुद्रितपुस्तके ' अमृतबिन्दूपनिषत् ' इति समाख्याता।

ब्रसू. २।३।५०, ३।२।१८ इत्यत्र ' एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ' इति वाक्यं ; ब्रसू. २।३।२९, ५३ इत्यत्र च 'घटसंवृतमाकाशं नीयमाने घटे यथा। घटो नीयेत नाऽऽकाशं तद्वज्जीवो नभोपमः ॥ ' इति वाक्यं समुद्धृतम्। वाक्ये एते ब्रह्मबिन्दूपनिषदि ( १२, १३ ) त्रिपुरातापिन्युपनिषदि ( ५।१२, १३ ) च समाम्नाते। त्रिपुरातापिन्युपनिषदः पञ्चम्युपनिषत् प्रायो ब्रह्मबिन्दूपनिषदात्मिकैव।

'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्लोकार्धं ब्रसू. १।१।४ ( पृ. ९७ ), १।४।२७, २।२।४०, २।३।३१ इत्येतेषु स्थलेषु समुद्धृतम् । तत्तु शुकरहस्योपनिषदि ( ३।१२ ) त्रिपाद्विभूतिमहानारायणोपनिषदि ( ४।८ ) चोपलभ्यते । तत्र प्रथमायां 'कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते' इति, द्वितीयस्यां च 'ईश्वरस्य महामाया तदाज्ञावशवर्तिनी' इत्युत्तरार्धं पठ्यते ।

ब्रसू.१।१।५ इत्यत्र 'यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः' ( २।४७ ) इति वाक्यं, ब्रसू. ३।४।३३ इत्यत्र च 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां लभ्यते परमं पदम् ॥' ( १।३३ ) इति वाक्यं समुदाहृतम् । अनयोर्वाक्ययोर्भवसतरणोपनिषद्गते स्थले श्रीसाधलेशास्त्रिसंपादितोपनिषद्वाक्यमहाकोशे निर्दिष्टे । उपनिषदियमस्माभिर्नोपलब्धा ।

आरुणिकोपनिषत्——ब्रसू. १।१।१ (पृ. ७) इत्यत्र 'अत ऊर्ध्वममन्त्रवदाचरेत्' 'संधिं समाधावात्मन्याचरेत्' इति वाक्ये समुद्धृते । आरुणिकोपनिषदि ( २ ) वाक्ये एते वर्तेते ।

परमहंसोपनिषत्——'परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या' इति वाक्यं ब्रसू. १।१।१ (पृ. ८) इत्यत्रोद्धृतम् । तत्तु परमहंसोपनिषदि ( ४ ) समाम्नायते ।

संन्यासोपनिषत् — 'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥' इति वाक्यं ब्रसू. १।१।१ ( पृ. १५, १६ ) इत्यत्र श्रुतित्वेन समुद्धृतम् । वाक्यमेतत् संन्यासोपनिषदि (२।१२) श्रूयते ।

'न स पुनरावर्तते' इति वाक्यं भास्कर. ३।३।३२; श्रीकर. २।१।११, ३।२।७, ९ ; वल्लभ. १।१।३ ( पृ. १२६ ), २।३।२९; विज्ञान. ३।३।३१ इत्यादौ तत्तद्भाष्यकारैः समुद्धृतम् । वाक्यमिदं निरालम्बोपनिषदि ( ३३ ) नारदपरिव्राजकोपनिषदि ( ९।२२ ) कालाग्निरुद्रोपनिषदि ( ५ ) जाबाल्युपनिषदि चोपलभ्यते । छाउ. ८।१५।१ इत्यत्र च 'न च पुनरावर्तते' इति वाक्यं श्रूयते । तथा च निरालम्बाद्यन्यतमोपनिषद्गतं वाक्यमिदं समुद्धृतं, छान्दोग्यगतस्य वा वाक्यस्य पाठभेदोऽयं मुद्रकादिप्रमादो वेति न निर्णीयते ।

श्रीमद्बलदेवाचार्यैः स्वभाष्ये नामानि निर्दिश्योद्धृता शंकरोक्तातिरिक्ता उपनिषदः——

( १ ) नृसिंहपूर्वतापिन्युपनिषत्——ब्रसू. ४।१।१२ 'यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च' (२।४)।

( २ ) कैवल्योपनिषत्—— ब्रसू. १।२।२३ 'अपाणिपादोऽहमचिन्त्यशक्तिः' ( २।२ ); ब्रसू. ३।२।२४ 'श्रद्धाभक्तिध्यानयोगादवेहि' ( १।२ )।

( ३ ) गोपालपूर्वतापिन्युपनिषत्—— ब्रसू. १।१।१ 'तं पीठस्थं ये तु युञ्जन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' ( ५ ); ब्रसू. १।१।३ 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥' ( १ )।

( ४ ) गोपालोत्तरतापिन्युपनिषत् — ब्रसू. ३।३।४२ 'यो हि वै कामेन कामान्कामयते स कामी भवति'; ब्रसू. ३।३।४६ 'तस्मादेव परो रजस इति सोऽहमित्यवधार्य गोपालोऽहमिति भावयेत्' ।

( ५ ) रामपूर्वतापिन्युपनिषत् —— ब्रसू. ३।३।६ 'प्रकृत्या सहितः श्यामः पीतवासा जटाधरः । द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः ॥' ( ४।७ ); ब्रसू. ३।३।१० 'ओं चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ । रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥' ( १।१ )।

( ६ ) रामोत्तरतापिन्युपनिषत् —— ब्रसू. ३।३।६ 'ओं यो वै श्रीरामचन्द्रः स भगवान्ये मत्स्यकूर्माद्यवतारा भूर्भुवः स्वस्तस्मै वै नमो नमः' ।

( ७ ) मन्त्रिकोपनिषत्—— ब्रसू. १।१।१ 'गौरनादवती सा तु जनित्री भूतभाविनी । असिता सितरक्ता च सर्वकामदुघा विभोः ॥' ( ५ )। उपनिषदियं 'चूलिकोपनिषत्' इति निर्दिष्टा ।

( ८ ) महोपनिषत् —— ब्रसू. २।२।३७ 'तदाहुरेको ह वै नारायण आसीन्न ब्रह्मा न ईशानो नाऽऽपो

नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यः स एकाकी नर एव ' ( १।१ ) ।

( ९ ) ब्रह्मबिन्दूपनिषत्— ब्रसू. २।३।४१ ' घटसंवृतमाकाशं लीयमाने घटे यथा । घटो लीयेत नाऽऽकाश तद्वज्जीवो नभोपमः ॥' ( १३ ); ब्रसू. ३।२।१८ ' एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ ' ( १२ ) । अत्र प्रथमस्थले ' आथर्वणश्रुतिः ' इति निर्देशः कृतः ।

( १० ) गर्भोपनिषत्— ब्रसू. २।४।२१ ' पञ्चात्मकं पञ्चसु वर्तमानं षडाश्रयं षड्गुणयोगयुक्तम् । तं सप्तधातुं त्रिमलं द्वियोनिं चतुर्विधाहारमयं शरीरम् ॥ ' ( १ ) ।

( ११ ) सुबालोपनिषत्— ब्रसू. १।२।२० ' अन्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद ' ( ७ ) ।

( १२ ) ध्यानबिन्दूपनिषत् — ब्रसू. ३।२।२६ ' स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ ' ( २२ ) ।

( १३ ) राधोपनिषत् — ब्रसू. ३।३।११ ' एको देवो नित्यलीलानुरक्तः ' ( ४।३ ) । अस्या उपनिषदः ' आथर्वणोपनिषत् ' इति निर्देशः कृतः ।

अकृतनामनिर्देशे उपनिषदौ—

( १ ) नारायणाथर्वशिरउपनिषत् — ब्रसू. २।२।३७ ' अथ पुरुषो ह वै नारायणोऽकामयत... ...नारायणे प्रलीयन्ते ' ( १ ) ।

( २) भवसंतरणोपनिषत्—ब्रसू. ३।३।४८ 'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणो गतिः । तथैव कर्मज्ञानाभ्यां मुक्तो भवति मानवः ॥ ' ( १।३३ ) । उपनिषदियमस्माभिर्नोपलब्धा ।

श्रीमदानन्दतीर्थैरुदाहृतास्वप्रसिद्धासु श्रुतिषु काश्चिदत्रोद्धृताः श्रुतयः—

( १ ) माल्लवेयश्रुतिः— ब्रसू. १।४।२८ 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ' ।

( २ ) कौण्डिन्यश्रुतिः— ब्रसू. २।४।२१ 'अद्भ्यो हीदमुत्पद्यते आपो वाव मांसमस्थि च भवन्त्यापः शरीरमाप एवेदं सर्वम् ' ।

( ३ ) गौपवनश्रुतिः— ब्रसू. ३।२।२ ' एतस्माद्ध्येव पुत्रो जायते एतस्माद्भ्रातैतस्माद्भार्या यदैनं पुरुषमेव स्वप्नेनाभिहन्ति ' ।

( ४ ) पैङ्गिश्रुतिः— ब्रसू. ३।२।२० ' सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेष्यते । जीव ईशस्यानुपाधिरिन्द्रचापो यथा रवेः ॥'

( ५ ) चतुर्वेदशिखा— ब्रसू. ३।३।१५ ' स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छम् ' ।

( ६ ) कौशारवश्रुतिः— ब्रसू. ३।४।३२ ' पश्यन्नपीममात्मानं कुर्यात्कर्म विचारयन् । यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् ॥ '

( ७ ) सौपर्णश्रुतिः— ब्रसू. ४।१।१२ ' सर्वदैनमुपासीत यावद्विमुक्ति । मुक्ता अपि ह्येनमुपासते ' ।

( ८ ) माध्यन्दिनायनश्रुतिः— ब्रसू. ४।४।१२ ' स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसंपद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति ' ।

## ब्रह्मसूत्रभाष्येषु नाम्ना निर्दिष्टा दशोपनिषद्भिन्ना उपनिषदः

( १ ) कौषीतक्युपनिषत् ( २ ) महानारायणोपनिषत् ( ३ ) श्वेताश्वतरोपनिषत् ( ४ ) जाबालोपनिषत् ( ५ ) शिवसंकल्पोपनिषत् ( ६ ) मैत्रायण्युपनिषत् ( ७ ) नृसिंहपूर्वतापिन्युपनिषत् ( ८ ) नृसिंहोत्तरतापिन्युपनिषत् (९) कैवल्योपनिषत् (१०) अथर्वशिरउपनिषत् ( ११ ) अथर्वशिखोपनिषत् ( १२ ) मन्त्रिकोपनिषत् ( चूलिकोपनिषत् ) ( १३ ) सुबालोपनिषत् ( १४ ) महोपनिषत् ( १५ ) गोपालपूर्वतापिन्युपनिषत् (१६) गोपालोत्तरतापिन्युपनिषत् (१७) रामपूर्वतापिन्युपनिषत् ( १८ ) रामोत्तरतापिन्युपनिषत् ( १९ ) बृहज्जाबालोपनिषत् ( २० ) ब्रह्मबिन्दूपनिषत् ( २१ ) ध्यानबिन्दूपनिषत् ( २२ ) गर्भोपनिषत् ( २३ ) ब्रह्मोपनिषत् ( २४ ) कठश्रुत्युपनिषत् (२५) कठरुद्रोपनिषत् ( २६ ) हंसोपनिषत् ( २७ ) कालाग्निरुद्रोपनिषत् ( २८ ) सदानन्दोपनिषत् (२९) राधोपनिषत् ।

## ब्रह्मसूत्रभाष्येषु नाम्नाऽनिर्दिष्टा उपनिषदः

( १ ) नारदपरिव्राजकोपनिषत् ( २ ) तेजोबिन्दूपनिषत् ( ३ ) ब्रह्मविद्योपनिषत् ( ४ ) अन्नपूर्णोपनिषत् ( ५ ) भवसंतरणोपनिषत् ( ६ ) मैत्रेय्युपनिषत् ( ७ ) नारायणाथर्वशिरउपनिषत ( ८ ) वराहोपनिषत् ( ९ ) मुक्तिकोपनिषत् ( १० ) कुण्डिकोपनिषत् ( ११ ) त्रिशिखब्राह्मणोपनिषत् ( १२ ) शुकरहस्योपनिषत् ( १३ ) आरुणिकोपनिषत् ( १४ ) परमहंसोपनिषत् ( १५ ) संन्यासोपनिषत् ( १६ ) सर्वोपनिषत् ( १७ ) परमहंसपरिव्राजकोपनिषत् ( १८ ) वरदोत्तरतापिन्युपनिषत् ( १९ ) शारीरकोपनिषत् ( २० ) त्रिपुरातापिन्युपनिषत् ( २१ ) त्रिपाद्विभूतिमहानारायणोपनिषत् ( २२ ) निरालम्बोपनिषत् (२३) जाबाल्युपनिषत्.

कानिचित्तु वाक्यानि सर्वोपनिषदादिषु जाबाल्यन्तासु अनेकासूपनिषत्सूपलभ्यन्ते । उदाहर्त्रा भाष्यकारेण तानि वाक्यानि कस्या उपनिषदः विशेषेणोद्धृतानीति न निश्चेतु पार्यत इति तानि यत्रयत्रोपलभ्यन्ते तासां सर्वासामुपनिषदामत्र संग्रहः कृतः ।

---

## व्याख्यानसंग्रहपद्धतिः

( १ ) त्रयाणामेव ब्रह्मसूत्रव्याख्याकाराचार्यसंप्रदायानामुपनिषद्व्याख्यानानि शांकररामानुजीयानन्दतीर्थीयानि अधुनोपलभ्यन्ते । एतानि व्याख्यानानि कालक्रमेण समुद्धृतानि । यासूपनिषत्सु शांकरभाष्यं नास्ति तासां शंकराचार्यानुसारिणः शंकरानन्दस्य टीका समग्रा समुद्धृता । ब्रह्मसूत्रभाष्यकारैः ब्रह्मसूत्रव्याख्यानावसरे उपनिषद्वचनानां यद्विवरणं कृतं तदपि कालक्रममनुसंधायास्माभिः संगृहीतम् ।

भगवान् शंकराचार्यः ईशादिदशोपनिषदां नृसिंहपूर्वतापनीयस्य च भाष्याणि प्राणैषीत् । भगवान् आनन्दतीर्थोऽपि मध्वेत्यपरसुगृहीतनामधेयः काश्चिदुपनिषदो व्याकरोत् । अस्माभिः प्राप्तानि तत्प्रणीतभाष्याणि ऐतरेयतैत्तिरीयछान्दोग्यबृहदारण्यकेशकेनकठप्रश्नोपनिषदामेव । भगवान् रामानुजस्तु यद्यपि न स्वयं व्याख्यातवानुपनिषदस्तथापि तन्मतानुवर्तिभिः रङ्गरामानुजनारायणकूरनारायणैर्विद्वद्भिः प्रणीता उपनिषद्वृत्तयः समुपलभ्यन्ते । श्रीरङ्गरामानुजः केनकाठकप्रश्नमुण्डकतैत्तिरीयछान्दोग्यबृहदारण्यकोपनिषदो व्याकरोत्, नारायणः ईशोपनिषदं, कूरनारायणश्च माण्डूक्योपनिषदम् ।

( २ ) कालक्रमापवादः— यत्र शांकरं रामानुजीयं वा व्याख्यानं नास्ति तत्र शांकररामानुजीययोर्यः क्रमस्तेनैव तदनुयायिनां व्याख्यानानि तत्प्रणयनकालमननुसृत्य समुद्धृतानि ।

( ३ ) य उपनिषद्भाष्यांशो ब्रह्मसूत्रभाष्यांशो वा क्लिष्टबोधस्तदीयं व्याख्यानमपि [ ] चतुष्कोणकंसमर्यादया समुद्धृतं केषुचित्स्थानेषु न सर्वत्र ।

( ४ ) पदार्थवाक्यार्थव्युत्पादनपराणामेव व्याख्यानानां संग्रहोऽत्र कृतः । तत्रत्यो व्याख्यानबाह्यः पृथग्विषयप्रतिपादनविस्तरस्तु वर्जितः । इदं त्ववधेयं, यद्ब्रह्मसूत्रभाष्यं उपनिषद्वचनविशेषं साक्षादनिर्दिश्यैव तत्तात्पर्यं व्युत्पादयति तदप्यत्र संगृहीतम् । आनन्दतीर्थीयभाष्यं च समग्रमेव समुद्धृतं बृहदारण्यकस्थवादतर्कशास्त्रपरं प्रघट्टकं विहाय, यतः तत् साक्षादुपनिषदर्थबोधानुपकारकमिति ।

( ५ ) उपलब्धव्याख्यानानां शांकरभाष्यस्य प्राचीनतमत्वात्तत्प्रथममुद्धृत्य तद्भिन्नार्थपराणां तद्विरुद्धार्थपराणां चैवोत्तरकालीनव्याख्यानानां संग्रहः कृतः। उत्तरोत्तरकालीनव्याख्यान पूर्वापेक्षया विशेषपरं चेत्संगृहीतं, अन्यथा न संगृहीतं पौनरुक्त्यभयात् । इदं त्ववधेयं यत्र ब्रह्मसूत्रव्याख्याने अधिकरणव्याख्याने वा विषयपरामर्शानुसंधानार्थं व्याख्यानपुनरुक्तिरुपकरोति तत्र सा न परिहृता ।

( ६ ) यदा यस्याचार्यस्य उपनिषद्भाष्ये ब्रह्मसूत्रसंदर्भोद्धृतोपनिषद्वचने च समानार्थकं व्याख्यानं तदा पुनरुक्तिपरिहारार्थमुपनिषद्भाष्यमेवोद्धृतं न ब्रह्मसूत्रभाष्यस्थोपनिषद्वचनव्याख्यानम् ।

( ७ ) उत्तराचार्यपूर्वाचार्ययोः व्याख्यानसाम्ये यथोचितं 'अमुकवत्' 'शेषं अमुकवत्' 'अमुकेन गतार्थम्' 'अमुकवद्भावः' इत्याद्याकाराः साम्यवैषम्[?] भावार्थादिपरामर्शपरा वा टिप्पण्यस्तत्र तत्र विहिताः

( ८ ) व्याख्यानानां साधर्म्यवैधर्म्यादिपरामर्श[?] उपरिनिर्दिष्टः उपनिषद्वाक्यार्थमपेक्ष्यैव, न ब्रह्मसू[?] विषयकप्रतिपादनमपेक्ष्य ।

( ९ ) उपनिषद्वचनाना परामर्शपराणि यानि ब्रह्[?] सूत्राणि सव्याख्यानानि तत्र तत्र तदधस्तान्नोद्धृतान्युपल[?] भ्येरन् तानि व्याख्यानपरिशिष्टे द्रष्टव्यानि ।

( १० ) आनन्दतीर्थीयं छान्दोग्योपनिषद्भाष्यं तद्[?] पनिषन्मुद्रणावसरे नास्माभिः प्राप्तमासीत् । तन्मुद्रण[?] समाप्तिसमनन्तरं दक्षिणहैद्राबादस्थानां जोशीत्युपाह्वान[?] कृष्णाचार्यमहोदयानामनुग्रहाल्लब्धं छान्दोग्योपनिषद्[?] व्यवहितोत्तरमेव मुद्रितं द्रष्टव्यम् ।

---

## उपनिषत्काण्डस्य रचनास्वरूपं स्थलनिर्देशपाठभेदपद्धतिश्च

( १ ) उपनिषत्काण्डस्य द्वितीयतृतीयभागयोरुपनिषदां क्रमः ईशकेनकठादिप्रसिद्धक्रममनादृत्यान्य एव स्वीकृतः ।

( २ ) विषयनिर्देशः सूक्ष्माक्षरैः मूलग्रन्थस्योपरितने प्रदेशे कृतः ।

( ३ ) मूलवचनसमनन्तरं व्याख्यानसंग्रहो व्याख्याकारकालक्रममनुसृत्य क्रमेण कृतः । एतावान् विशेषो यत्र शांकरं व्याख्यानं नास्ति तत्र शांकरमतानुसारिणी टीका तट्टीकाकृतः कालमननुसंधाय शांकरभाष्यस्थाने मुद्रिता। एष एव नियमो रामानुजमतानुयायिटीकाविषयेऽप्यनुसंधेयः । तत्तद्व्याख्यानावसाने तत्तत्स्थलनिर्देशः कृतः। या टीका अतिविस्तृता मूलग्रन्थेऽस्ति तदंशो यत्र संगृह्यते तत्र तत्पृष्ठाङ्कोऽपि निर्दिष्टो मूलग्रन्थेऽन्वेषणसौलभ्याय ।

( ४ ) मूलवचनं स्थूलकाक्षरैः, व्याख्यानं मध्यमाक्षरैः, स्थलनिर्देशानां पाठभेदानां गतार्थत्वादिसमालोचनस्य च टिप्पणी सूक्ष्माक्षरैः सूक्ष्मकालाक्षरैश्च मुद्रिता

( ५ ) मूलग्रन्थो व्याख्यानसहितो रेखया मर्यादितः तदुत्तरं गतार्थत्वादिसमालोचनपरा टिप्पणी, तदुत्त[?] च स्थलनिर्देशाः पाठभेदाश्च द्रष्टव्याः ।

( ६ ) स्थलनिर्देशाः पाठभेदाश्च यद्वचनान्यवलम्बन्ते तेषु एकादिसंख्याङ्का मुद्रिताः । त एव संख्याङ्का अधस्तात्परामृष्टाः ( ) एतच्चिह्नेनावकृष्य । यथा—
( १ ) तैउ. १।१. ( पृ. ६९३, स्तम्भः १ )

( ७ ) संगृहीतानामुपनिषदां वेदानामन्येषां च ग्रन्थानां नामधेयानि प्रत्याहाररूपेण अक्षरगौरवभयान्निर्दिष्टानि । यथा — कौषीतक्युपनिषत् = कौउ., तैत्तिरीयोपनिषत् = तैउ.

( ८ ) प्रथमं प्रत्याहाररूपग्रन्थसञ्ज्ञास्तदुत्तरं स्थलनिर्देशाः पाठभेदाश्चेत्यनुक्रमः । अनेकस्थलनिर्देशा एकग्रन्थान्तर्गताः , एतद्विरामचिह्नेनैव विभिन्नाः । ग्रन्थभेदे ; एतच्चिह्नेन व्यवस्था कृता । समाप्तौ अवसानचिह्नं . मुद्रितम् । यथा— ( १ ) छाउ. ६।८।३; ब्रशंकर. १।१।९, ४।२।७, ४।३।१४; रंग. अशनापि ( अशनायापि ). ( पृ १०७, स्तम्भः १ )

( ९ ) उपनिषत्स्थवचनानां ब्रह्मसूत्रभाष्येषु समुद्धारः कृत इति ब्रह्मसूत्रभाष्याणां स्थानान्यपि अध्यायपादसूत्राङ्कनिर्देशपुरःसरं प्रदर्शितानि । क्वचित् एतावान् विशेषः, यत्र भाष्यं बहुषु पत्रेषु विस्तृतं तत्रादर्शपुस्तकपृष्ठाङ्कानामपि निर्देशः कृतोऽस्ति । यथा— ब्रशंकर. १।१।४ ( पृ. ६० ). ( पृ. ७३२, स्तम्भः १ )

( १० ) उपनिषद्वाक्यानां ब्रह्मसूत्रभाष्यस्थाननिर्देशो यदा क्रियते तदा कियतांशेन तद्वाक्यं भाष्येषु पठितमेतन्न दर्शितं, ग्रन्थविस्तरभयात् । वाक्यखण्डो वा स्यात्समग्रं वा वाक्यं स्यात् ।

( ११ ) एकग्रन्थस्था बहवः स्थलनिर्देशा यत्र, तत्र पाठभेदस्थले : एतच्चिह्नेन पूर्वस्थलनिर्देशविच्छेदो दर्शितः । यथा— ब्रमध्व. २।३।६ : २।४।३ इदं सर्व ( स इदं सर्वं ). ( पृ. ७२०, स्तम्भः २ )

( १२ ) पाठभेदाश्च मूलवचनानां न व्याख्यानानां संगृहीताः ।

( १३ ) यस्य मूलस्य पाठभेदस्तन्मूलं (      ) कंसचिह्नाद्बहिः दत्त्वा कंसचिह्नोदरे पाठभेदो निर्दिष्टः । यथा — ब्रमध्व. ४।१।१३ हास्य ( हैवास्य ). ( पृ. ८८२, स्तम्भः १ )

( १४ ) य आदर्शग्रन्थोऽशुद्धिबहुलो यथा बेंगलोरमुद्रितं श्रीकरभाष्यं, तत्र शुद्धपाठेन धृतोपनिषद्वचनानामेव पाठभेदः स्वीकृतः ।

( १५ ) यत्र पूर्वार्धः उत्तरार्धो वा अनेकपाठसंयुतस्तत्र ' पूर्वार्धे ' ' उत्तरार्धे ' इति वा निर्दिश्य तदुत्तरं कंसचिह्नोदरे संपूर्णः पूवार्धः उत्तरार्धो वा पाठभेदमयः पठितः ।

( १६ ) यत्र संपूर्णः श्लोकः परिच्छेदो वा पाठभेदमयस्तत्र श्लोकं परिच्छेदं वा अनिर्दिश्यैव कंसचिह्नोदरे पाठभेदमयः संपूर्णः श्लोकः परिच्छेदो वा समुद्धृतः ।

( १७ ) पूर्वोद्धृतग्रन्थेन उत्तरोद्धृतग्रन्थस्य पाठभेदसाम्ये उत्तरग्रन्थोद्धारसमनन्तरं ' अमुकवत् ' इति निर्दिष्टम् । अंशेन साम्यं चेत् ' शेषं अमुकवत् ' इति निर्दिष्टम् । यथा— भास्कर. १।१।२८ मे वृणीष्व ( मे वरं वृणीष्व ) शेषं ब्रशंकरवत् ; रामानुज. १।१।२९, ३०, ३१, ३२, ३।४।२३ भास्करवत्. ( पृ. ६५६, स्तम्भः २ )

( १८ ) यत्र परिच्छेदांशो विस्तृतः पाठभेदमयस्तत्र तदंशस्य आद्यन्तौ......एतादृशचिह्नगर्भौ दर्शितौ न संपूर्णोऽंश उद्धृतः । कंसचिह्नोदरे च पाठभेदमयः संपूर्णोऽंशः पठितः । यथा— क. शकुनिर्वा ... ...परश्वा वा ( मत्स्यो वा शकुनिर्वा सिंहो वा वराहो वा परश्वा वा शार्दूलो वा ). ( पृ. ६३०, स्तम्भः १ )

( १९ ) यत्र अधिकांशरूपः पाठभेदो निर्देष्टुमिष्टस्तत्र अधिकचिह्नं + कृत्वा कंसचिह्नोदरे अधिकांशरूपः पाठभेदः प्रदर्शितः । यथा— वल्लभ. १।४।२३, २।३।६ त्वमतं + ( भवति ). ( पृ. ८८३, स्तम्भः २ )

( २० ) यदि मूलादर्शवचनापेक्षया कस्मिंश्चित्पाठे न्यूनता निर्देष्टुमिष्टा तदा यावान् न्यूनांशः स कंसोदरे निर्दिश्य तत्पश्चात् ० एतादृशं चिह्नं कृतम् । तावानंशो नास्तीति तदर्थः । यथा— रंग. ( प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति० ). ( पृ ७१५, स्तम्भः २ )

( २१ ) एकस्मिन् परिच्छेदे यदा समानपदस्यावृत्तिः पाठभेदश्च प्रत्यावृत्ति अनुवर्तते तत्रैकवारं पाठभेदो दर्शितः । यथा— क. रुन्धे ( रुन्धते ). ( पृ. ६४१, स्तम्भः २ )

# Introduction

At present, nearly 225 Upaniṣads are available. All of them are not included in the Upaniṣatkāṇḍa; but the ten well-known Upaniṣads and those from which texts are accepted as the centre of discussion in the aphorisms and the Adhikaraṇas in the Brahmasūtra Bhāṣyas by Śankara, Bhāskara, Rāmānuja, Nimbārka, Madhva, Śrīkanṭha, Vallabha and Vijñānabhikṣu are included in parts 2 & 3.

The texts, from those Upaniṣads e. g. Kaṭharudropaniṣad referred to by Śankara in Bṛhadāraṇyakopaniṣad Bhāṣya and Gopālatāpanīyopaniṣad referred to by Vallabha in Brahmasūtra Bhāṣya, which are not accepted as the centre of discussion by the above-mentioned Ācaryas are not included in the main body of the Upaniṣatkāṇḍa, evidently because of their secondary importance. However, a list of such Upaniṣads is appended here.

The Upaniṣadic texts which might have been accepted as the centre of discussion in the aphorisms and Adhikaraṇas in Brahmasūtra Bhāṣya by Śrīkara and Baladeva are not included; for, the reliable edition of Śrīkara Bhāṣya was not available ( The Bangalore edition of Śrīkara Bhāṣya by Hayavadana is absolutely unreliable as it contains innumerable corrupt readings ) and, we could not secure the original Sanskrit Bhāṣya by Baladeva. We had to depend only on the English translation of his Bhāṣya.

The Talawakāra Upaniṣad, of which Kena - Upaniṣad forms a part even less than ⅛, is included. The parts mentioned as Upaniṣads in the Kauṣītaki Āraṇyaka are also appended. Again, Maitrāyaṇīyopaniṣad, being an old Upaniṣad according to western scholars is included. Śivasankalpa Upaniṣad, though it has occurred in the first part of the Mantra-Brāhmaṇopaniṣad, is again included as it contains three or four hymns more. Thus the Upaniṣads included here are—

( 1 ) Aitareya ( 2 ) Kauṣītaki ( 3 ) Taittirīya ( 4 ) Chāndogya ( 5 ) Bṛhadāraṇyaka ( 6 ) Īśa ( 7 ) Talavakārabrāhmaṇopaniṣad ( Kena ) ( 8 ) Kaṭha ( 9 ) Muṇḍaka ( 10 ) Praśna ( 11 ) Māṇḍūkya ( 12 ) Śivasankalpa ( 13 ) Śwetāśwatara ( 14 ) Mahānārāyaṇa ( 15 ) Maitrāyaṇī ( 16 ) Jābāla ( 17 ) Kaivalya ( 18 ) Atharvaśiras ( 19 ) Atharvaśikhā. Thus they are 19. Out of these the following four are included in the II part. ( 1 ) Aitareya ( 2 ) Kauṣītaki ( 3 ) Taittirīya ( 4 ) Chāndogya. And the remaining are included in part third.

## Upaniṣads referred to by S'ankara

The Upaniṣads commented on by Śankara himself are:— ( 1 ) Aitareya ( 2 ) Taittirīya ( 3 ) Chāndogya ( 4 ) Bṛhadāraṇyaka 5 ) Īśa ( 6 ) Kena ( 7 ) Kaṭha ( 8 ) Muṇḍaka ( 9 ) Praśna (10) Māṇḍūkya ( 11 ) Nṛsimhapūrvatāpanīya.

Ānandāśrama however, has published the edition of Śankara's commentary on Śvetāśvatara Upaniṣad. But it is difficult to ascertain whether it is Śankara's own commentary; for, Nārāyaṇatīrtha, who

takes, wherever possible, Śankara's commentary, as an authority in his commentary, on other Upaniṣads (cf. नारायणेन रचिता शंकरोक्त्योपजीविना) does not take it to be so in his commentary on this Upaniṣad (cf. नारायणेन रचिता श्रुतिमात्रोपजीविना.)

Again, the style of this so-called commentary by Śankara, differs from that of all his other commentaries. In Śankara's commentaries, we do not find Paurāṇika texts profusely quoted; while in the present one they are quoted abundantly. Hence we are inclined to believe that it is not his commentary. We have, therefore, cited the commentary of Śankarānanda belonging to the S'ankara school in this Kāṇḍa.

An edition of Śankara's Nṛsimhapūrvatāpanīya Upaniṣad, printed by Ānandāśrama, is available. This Upaniṣad is not included here by us as it only deals with the Upāsanās. We intend to include it in the Tāntrikopāsanākāṇḍa of Dharmakosha. We believe that the commentary mentioned above, is Śankara's own, on the ground that a reference to Māṇḍūkya Bhāṣya, and to his being the author of Prapañcasāra is found in the same Upaniṣad Prapañcasāra is definitely the work of Śankara; for Padmapādācārya, the commentator on it, mentions Śankara as its author.

Moreover the hemistich 'नृसिंहब्रह्मविद्यैषा व्याख्याता ज्ञानसिद्धये —' referred to by Vidyāraṇya with the remark 'तथाह्युक्तं वार्तिककृद्भिः' in his introduction to the Nṛsimhottaratāpanīya Upaniṣad, regarding the subject-matter of Nṛsimhapūrvatāpanīya Upaniṣad shows that there existed a Vārtika by Sureśvara on the Nṛsimhapūrvatāpanīya and Nṛsimhottaratāpanīya Upaniṣad; for it is an established fact in the tradition of the Advaita philosophy, that every Vārtika is written by Sureśvara and none else and that too, on the commentary of Śankara. So verses from the Vārtika, explaining the Nṛsimhottaratāpanīya Upaniṣad, quoted by Vidyāraṇya in the VII Khaṇḍa and elsewhere, suggest that there might have existed a commentary by Śankara on it.

Upaniṣads, other than the ten, quoted and referred to by Śankara mentioning their names, in his commentary on the Brahmasūtras:—

(1) Kauṣītaki Upaniṣad– ब्रसू. ३।१।२२ 'ये व के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' (कौउ. १।२ ); ब्रसू ३।३।२७ 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौउ. १।३ ).

(2) Śvetāśvatara Upaniṣad– ब्रसू. २।१।३ 'त्रिरुन्नतं स्थाप्य सम शरीरम्' (श्वेउ. २।८); ब्रसू ३।३। ३४ 'द्वा सुपर्णा सयुजा सखाया' ( श्वेउ. ४।६ ).

(3) Mahānārāyaṇa Upaniṣad– ब्रसू. ३।३। २४ 'तस्यैवं विदुषो यज्ञस्याऽऽत्मा' ( नाउ. ८० ).

(4) Jābāla Upaniṣad–ब्रसू. १।२।३२ 'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति' (जाउ. २ ).

Śankara has quoted the text 'ब्रह्मैवेदं सर्वम्' in his commentary on 'तथाऽन्यप्रतिषेधात्' ( ब्रसू. ३।२।३६ ). In the Upaniṣadvākyamahākośa, edited by Sādhale Shāstri, this text is referred to Nṛsimha. A v. l. viz. 'ब्रह्म वा इदं सर्वम्' is found in some editions of the Nṛsimhottaratāpanīya Upaniṣad; but as it is not found elsewhere, it follows, on the authority of the v. l. accepted by Sādhle Shāstri, that it is quoted from Nṛsimhottaratāpanīya Upaniṣad.

The verse 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' is quoted by Śankara in his commentary on 'अत एव चोपमा सूर्यकादिवत्' ( ब्रसू. ३।२।१८). However, he has not made a reference to the work from which he has quoted it. It is said 'जलसूर्यवत् इत्युपमा उपादीयते मोक्षशास्त्रेषु'.

ष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः । सर्वपुरुषाणां च निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । इहविषये च इष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा । न च असति जन्मान्तरसंबन्ध्यात्मास्तित्वज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा । स्वभाववादिदर्शनात् । तस्माज्जन्मान्तरसंबन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्तते । ' येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ' ( काउ. १।१।२० ) इत्युपक्रम्य ' अस्तीत्येवोपलब्धव्यः' ( काउ. २।३।१३ ) इत्येवमादिनिर्णयदर्शनात् । ' यथा च मरणं प्राप्य ' ( काउ. २।२।६ ) इत्युपक्रम्य ' योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ' ( काउ. २।२।७ ) इति च । ' स्वयंज्योतिः ' ( बृउ. ४।३।९ ) इत्युपक्रम्य ' तं विद्याकर्मणी समन्वारभेते ' ( बृउ. ४।४।२ ) ' पुण्यो वै( ण्यः पु ) पुण्येन कर्मणा भवति ' ( बृउ. ३।२।१३) इति । 'ज्ञपयिष्यामि' ( बृउ २।१।१५ ) इत्युपक्रम्य ' विज्ञानमयः' ( बृउ. २।१।१७ ) इति च व्यतिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेव इति चेन्न । वादिविप्रतिपत्तिदर्शनात् । न हि देहान्तरसंबन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः । नहि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति । स्थाण्वादौ पुरुषदर्शनान्नेति चेन्न । निरूपिते अभावात् । नहि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहादिव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात् प्रत्यक्षविषयवैलक्षण्यात्प्रत्यक्षात् नात्मास्तित्वसिद्धिः । तथा अनुमानादपि । श्रुत्या आत्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वान्नेति चेन्न । जन्मान्तरसंबन्धस्य अग्रहणात् । आगमेन त्वस्तित्वेऽवगते वेददर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्च अहंप्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति प्रत्यक्षोऽनुमेयश्चात्मेति । सर्वथा अस्त्यात्मा देहान्तरसंबन्धीत्येवं प्रतिपत्तुः देहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषज्ञापनाय कर्मकाण्डमारब्धम् । न तु आत्मन इष्टानिष्टप्राप्तिपरिहारेच्छाकारणमात्मविषयाज्ञानं कर्तृत्वभोक्तृत्वस्वरूपाभिमानलक्षणं तद्विपरीतब्रह्मात्मस्वरूपविज्ञापनेनापनीतम् । यावद्धि तन्नापनीयते तावदयं कर्मफलरागद्वेषादिस्वाभाविकदोषप्रयुक्तः शास्त्रविहितप्रतिषिद्धातिक्रमेणापि वर्तमानो मनोवाक्कायैर्दृष्टादृष्टानिष्टसाधनान्यधर्मसंज्ञकानि कर्माण्युपचिनोति बाहुल्येन स्वाभाविकदोषबलीयस्त्वात् । ततः स्थावरान्ता अधोगतिः । कदाचिच्छास्त्रकृतं संस्कारबलीयस्त्वं, ततो मनआदिभिरिष्टसाधनं बाहुल्येनोपचिनोति धर्माख्यम् । तत् द्विविधं, ज्ञानपूर्वकं केवलं च । तत्र केवलं पितृलोकादिफलम् । ज्ञानपूर्वकं देवलोकादिब्रह्मलोकान्तप्राप्तिफलम् । तथा च शास्त्रम्—' आत्मयाजी श्रेयान्देवयाजी ' ( न ? ) ( शब्रा. ११।२।६।१३ ) इत्यादि । स्मृतिश्च—' द्विविधं कर्म वैदिकम् ' इत्याद्या । साम्ये च धर्माधर्मयोर्मनुष्यत्वप्राप्तिः । एवं च ब्रह्माद्या स्थावरान्ता स्वाभाविकाविद्यादिदोषवतो धर्माधर्मसाधनकृतसंसारगतिर्नामरूपकर्माश्रया । तदेतद्व्याकृतं साध्यसाधनरूपं जगत् प्रागुत्पत्तेरव्याकृतमासीत् । स एव बीजाङ्कुराविव अविद्याकृतः संसार आत्मनि क्रियाकारकफलाध्यारोपलक्षणोऽनादिरनन्तोऽनर्थः इति एतस्माद्विरक्तस्य अविद्यानिवृत्तये तद्विपरीतब्रह्मविद्याप्रतिपत्त्यर्थोपनिषदारभ्यते ।

यदि ब्रह्मविद्याप्रतिपत्त्यर्थोऽयमारम्भः, किं महाव्रतविषयविज्ञानप्रस्तवनेन । इदमेवारब्धव्यं ' आत्मा वा इदमेक एवाग्र आसीत् ' इति । तत्रेदं प्रयोजनं मन्यते श्रुतिः । महाव्रताख्यं कर्म सर्वकर्मसंदोहलक्षणं सर्वात्मनो हिरण्यगर्भस्य प्राप्तिकारणम् । तथा च वक्ष्यति—' एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थं ' ( ऐआ. २।३।४ ) । फलं चास्य विज्ञानसंयुक्तस्य ' प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद ' ( ऐआ. २।२।४ ) इति देवताऽप्ययलक्षणं संसार एव अशनायापिपासादिमत्त्वाद्देवतानाम् । तस्मात् ज्ञानसंयुक्तादपि कर्मणो नात्यन्तिकी संसारनिवृत्तिः । आत्मज्ञानादेव केवलात्संसारनिवृत्तिरित्येतत्प्रयोजनम् । वक्ष्यति च—' ता एता देवताः सृष्टाः

अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत् ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति' (ऐआ. २।४।२) 'स इतः प्रयन्नेव पुनर्जायते' (ऐआ. २।५।१) इति चोक्त्वा आत्मज्ञानादेवामृतत्वप्राप्तिमुपसंहरिष्यति—'स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत्' (ऐआ. २।६।१) इति। तस्मात् —(एष पन्थाः। एतत्कर्म। एतद्ब्रह्म। एतत्सत्यमिति।) एष पन्थाः अमृतत्वप्रतिपत्तये यदेतदात्मज्ञानम्। एतदेव कर्म कर्तव्यत्वात्। सर्वैर्हि यज्ञदानतपोभिः पुण्यैः कर्मभिर्यमनियमैश्च आत्मज्ञानमुत्पाद्यमित्यर्थः। तद्धि पन्थाः मार्गः अमृतत्वगमनाय 'नान्यः पन्था अयनाय विद्यते' (तैआ. ३।१२।७) इति मन्त्रवर्णात्। 'तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः' इति च स्मृतेः। एतद्ब्रह्म तत्प्राप्तिफलत्वात्। एतत्सत्यं परमार्थसदात्मविषयत्वात्। वाचारम्भणमात्रविकारानृतविषयाणि हीतरज्ञानानि। शंकर.

**तस्मान्न प्रमाद्येत्। तं नातीयात्। न ह्यत्यायन्पूर्वे। येऽत्यायंस्ते पराबभूवुः॥**

तस्मादस्मादात्मविषयज्ञानमार्गात् न प्रमाद्येत् प्रमादो न कर्तव्यः। प्रमादस्तदतिक्रमः। अतस्तन्न कुर्यादित्यर्थः। प्रमाद्यतः किं स्यादित्युच्यते—तं पन्थानं नातीयात् नातिगच्छेत्। तदतिगमने च दोषः, तस्मान्न कुर्यात्। यस्माद्धि पूर्वे अतिक्रान्ता ब्राह्मणा न हि तं मार्गं अतीत्यायन् नातिगतवन्त इत्यर्थः। ये अस्मान्मार्गाद्भ्रष्टा अत्यायंस्ते पराबभूवुः पराभूताः। कर्मज्ञानानुष्ठानं प्रति अयोग्याः संवृत्ता इत्यर्थः। स हि तेषां पराभवः। तस्मात्पूर्वेषां पन्थानं ज्ञानकर्मानुष्ठानमप्रमत्तोऽनुपालयेत्। शंकर.

**तदुक्तमृषिणा।**

**प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे।**

**बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति॥**

ब्राह्मणोक्तमर्थजातमृषिणा मन्त्रेणाप्युक्तम्। किं पुनस्तदर्थजातं, ये इमं पन्थानमतिक्रान्तास्ते पराभूताः। ये तु कर्मज्ञानानुष्ठानमप्रमत्तास्ते अस्मात्पथोऽनपेता आत्मज्ञानयोग्याः इतीममर्थं प्रदर्शयन्नाह—प्रजा ह तिस्र इत्यादि। प्रजाः प्रजननात्। ह इति वृत्तावद्योतको निपातः। तिस्रः त्रिसंख्याकाः राशिभेदेन। किमित्याह—अत्यायमतिगमनमीयुः गतवत्यः। तिस्रः प्रजा ज्ञानायोग्यतां गता इत्यर्थः। याः पुनरन्यास्ता अर्के अग्निं अभितः उभयतः कर्मणा ज्ञानेन चेत्यर्थः। अभितो निविविश्रे अभिनिविष्टाः। कर्मज्ञानाभ्यामग्निमाश्रिता इत्यर्थः। किंच, बृहत् महान् इत्यर्थः, ह तस्थौ स्थितवान्। भुवनेषु, भवन्त्येषु भूतानीति लोका भुवनशब्दवाच्याः, तेष्वन्तः मध्ये तस्थौ महान् सविता सर्वलोकप्रकाशकृद्देव इत्यर्थः। तं च काश्चिदभिनिविविश्रे इत्यनुषङ्गः। पवमानो वायुः हरितो दिशः आविवेश प्रविष्टः। यश्च वायुर्दिक्षु प्रविष्टः। तं काश्चित् अभिनिविविश्रे। शंकर.

**प्रजा ह तिस्रो अत्यायमीयुरिति। या वै ता इमाः प्रजास्तिस्रो अत्यायमायन्। तानीमानि वयांसि वङ्गावगधाश्चेरपादाः। न्यन्या अर्कमभितो विविश्र इति। ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम्। बृहद्ध तस्थौ भुवनेष्वन्तरिति। अद उ एव बृहद्भुवनेष्वन्तरसावादित्यः। पवमानो हरित आ विवेशेति। वायुरेव पवमानो दिशो हरित आविष्टः॥ १॥**

(१) काः पुनस्तास्तिस्रः अत्यायमीयुरितिमन्त्रोक्तमर्थं ब्राह्मणमन्वाचष्टे। या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्ता वक्ष्यामीति वाक्यशेषः। तानीमानि वयांसि पक्षिणो यान्यप्यन्यानि गतिमन्ति भूतानि। वेर्गत्यर्थत्वाद्धातोः कर्मज्ञानायोग्यानि वयःशब्देनोच्यन्ते। तानि वयांसि तिसृणामेको राशिः। वङ्गावगधाः वङ्गाश्चावगधाश्च वङ्गावगधाः। वङ्गाः वनगमनादवर्णलोपेन, वनगा इत्येतत्। वनस्पत्यादयो महान्तः स्थावरा इत्यर्थः। अवगधाः क्षुद्रस्थावरा व्रीहियवाद्या ओषधयः। अवतेर्धातोः पालनार्थस्य गध्यतेश्च मिश्रीभावकर्मणो रूपमवगधा इति। अवनेन प्रयोजनेन जङ्गमैः प्राणिभिरन्नभूताः सन्तः आत्मानं मिश्रयन्तीत्यवगधाः। चशब्दः समुच्चयार्थः। एवं स्थावराश्चैको राशिरित्यर्थः।

इरपादाः इत्युरःपादाः । उकारस्य इकारत्वमापाद्य विसर्जनीयस्य अपसर्जनं कृत्वेरपादा इति सर्पादयो गृह्यन्ते । एवमेतास्तिस्रः प्रजा अत्यायमीयुः कर्मज्ञानमार्गात्परिभ्रष्टा इत्यर्थः । प्रत्युद्धारश्चासामत्यन्तदुर्लभः । तस्मात्पापकर्मणो जुगुप्सेत, श्रेयसो मार्गान्न प्रमाद्येत्, इति वैराग्यहेतोरिदं वचनम् । न्यन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा: कर्मज्ञानपरा इति व्याख्यातम्। अर्कमिति इममेवाग्निं यं कर्मपरा अर्चयन्ति । बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव असावेव इत्यर्थः । भुवनेष्वन्तः असावादित्यो नान्यस्तस्थौ महान् । महत्त्वं हि प्रसिद्धं सवितुः । व्याख्यातमन्यत् । पवमानो हरित आविवेशेति वायुरेव पवमानो दिशो हरित आविष्ट इति ऋग्विवरणे एवोक्तम् । शंकर.

(२) श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । नारायणं निखिलपूर्णगुणैकदेहं सर्वज्ञमच्युतमपेतसमस्तदोषम् । प्राणस्य सर्वचिदचित्परमेश्वरस्य साक्षादधीश्वरमियां शरणं रमेशम् ॥ 'प्रादुर्बभूव भगवांस्तपसेतराया नारायणोऽब्जजसुतस्य वेशालनाम्नः । तस्मिन्गतेऽध्वरमभूत्सुरविप्रसघो नेश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ॥ तेन स्तुतः स भगवान् गिरिशेन्द्रमुख्यान्सर्वानबोधयदजेन सहैव तेऽथ । दासत्वमापुरत एव महत्सुराणां दासत्वतः स महिदास इति प्रसिद्धः ॥ शृण्वत्सु तेषु भगवानवदद्रमायै दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् । सा बह्वृचैः प्रपठिता चतुराननास्याद्यस्यां रहस्यमुदितं परमं हि विष्णोः ॥ महाभूतिश्रुतिः सैषा महाभूतिर्यतो हरिः । विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः ॥' इति ऋक्संहितायाम् । एष एव सदा पन्था भगवान्पुरुषोत्तमः । नित्यं स्वप्रासिहेतुत्वात्कर्तृत्वात्कर्म मातृतः ॥ ब्रह्मैष गुणपूर्णत्वात्सत्यं साधुस्वरूपतः । क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत् ॥ पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संस्तुतेः । मुक्ताः श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका ॥ विहायस्ययनात्प्रोक्ता वयांसीति पिशाचकाः । वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा ॥ अन्नरूपैर्गंधवो हि वङ्गावगधनामकाः । राक्षसा असुरा ईरपादा इति समीरिताः ॥ धर्मो ज्ञानं च वैराग्यमैश्वर्यं चतुरात्मकः । वायुर्देवोऽत्रासुराणामैश्वर्यगुण एव हि ॥ ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् । पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ॥ देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः । आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ॥ अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् । आजनैरर्चितत्वात्स ह्यर्क इत्युच्यते हरिः ॥ अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः । कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ॥ आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ । तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ॥ आदानात्सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः । मुच्यन्ते ऋषयो नित्यं नान्यथा तु कथंचन ॥ वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम् । संसारात्पावयित्वा यन्महानन्दे मिनोत्ययम् ॥ पवमानस्ततो विष्णुर्व्याप्तः सर्वासु दिक्षु च । आश्रितो भगवान्सर्वैः सर्वत्रापि विशेषतः । आश्रयात्पृथगुक्तोऽयं नित्यानन्दो रमापतिः ॥ मध्व.

उक्थरूपः अनेककाललोकदेवतादिभेदभिन्नः प्रजापतिस्वरूपः भोज्यभोक्तृप्रपञ्चात्मकः पुरुषः प्राणः उपास्यः अधिदैवताध्यात्मप्रपञ्चसहितः

*** उक्थमुक्थमिति वै प्रजा वदन्ति । तदिदमेवोक्थमियमेव पृथिवी । इतो हीदं सर्वमुत्तिष्ठति यदिदं किंच । तस्याग्निरर्कः । अन्नमशीतयः । अन्नेन हीदं सर्वमश्नुते ॥**

अत्रानन्तरातिक्रान्तग्रन्थे महाव्रताख्यं कर्माधिगतं यस्मिन् महदुक्थाख्यं शस्त्रं बृहतीसहस्रलक्षणं शस्यते । तत्कर्म उक्थशस्त्रोपलक्षितमुक्थं नाम अनेकलोककालदेवतादिभेदविशिष्टप्राणविज्ञानेन समुच्चिचीषितमिति सप्रपञ्चप्राणनिर्दिधारयिषयेदमाह—उक्थमुक्थमित्यादि । अनिर्धारितार्थयाथात्म्यमिदं पदमृग्वेदपराः प्रजा वदन्ति । किं तत्, उक्थमिति शब्दमात्रमेव केवलम् । न त्वस्यार्थः केवलैर्याज्ञिकैरवगम्यते इत्यर्थः । वैशब्दः प्रसिद्धयव-

---

* छाउ. १।१।१ द्रष्टव्यम् ।

(१) ऐआ. २।१।२; ब्रशांकर. १।१।७, ३।३।५५, ३।४।२२; भास्कर. ३।३।५५; रामानुज. ३।३।५३; मध्व. प्रेर्ता३इ (प्रेता३इ) तस्येशो यक्षा (तस्येशोऽयं ना).

द्योतको निपातः। यस्तूक्थशब्दस्यार्थस्तमिह प्रदर्शयिष्याम इत्यभिप्रायः। किं पुनस्तत्। इदमेव तावदुक्थमियमेव पृथिवी। कथं पुनरुक्थशब्दः शास्त्रे प्रसिद्धः सन् पृथिव्यां प्रयुज्यते इत्युच्यते। परशब्दस्य हि परत्र प्रवृत्तस्य सामान्यं किंचिद्वक्तव्यम्। इहास्ति चोक्थेन पृथिव्याः सामान्यम्। इतः अस्याः हि यस्मादिदं सर्वं स्थावरं जङ्गमं चोत्तिष्ठति उत्पद्यते यदिदं किंच यत्किंचेदं, अतोऽस्त्युकारथकारयोगात्पृथिव्या उक्थस्य च सामान्यम्। किंच, तस्यास्य पृथिव्युक्थस्याग्निरर्कः। तथोक्थसंबन्धिन्यपि महाव्रतेऽग्निरेवार्कः। किंच, अन्नमशीतयः। तिस्रस्तृचाशीतयोऽन्नसंस्तुता उक्थे, तथा अत्रापि अन्नमेवाशीतयः। कथमित्याह—अन्नेन हि यस्मादिदं सर्वं प्राणिजातमश्नुते व्याप्नोति। अन्नवान् हि लोके प्रभविष्णुर्भवति। अश्नोतेः अशीतयोऽन्नम्। तृचाशीतीनां चेन्द्रस्यान्नत्वं वक्ष्यति—'स ह्यान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस' इति। शंकर.

**अन्तरिक्षमेवोक्थम्। अन्तरिक्षं वा अनु पतन्ति। अन्तरिक्षमनु धावयन्ति। तस्य वायुरर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते॥**

तथाऽन्तरिक्षमेवोक्थम्। उक्थत्वे कारणमाह—अन्तरिक्षं वै अनु पतन्त्यन्तरिक्षमेव लक्षयित्वा गच्छन्ति। तथाऽन्तरिक्षमनु धावयन्ति धावन्ति। तदुभयमुत्थानपूर्वकमित्युक्थशब्दलाभे कारणमन्तरिक्षस्य। तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते इति पूर्ववत्सर्वम्। शंकर.

**असावेव द्यौरुक्थम्। अमुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किंच। तस्यासावादित्योऽर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते। इत्यधिदैवतम्॥**

असावेव द्यौरुक्थम्। अमुतः अस्माद्दिवः समुत्थितात्प्रदानात् वृष्ट्यादिलक्षणात् हि यस्मादिदं स्थावरजङ्गमं च सर्वमुत्तिष्ठति यदिदं किंच, तस्मात् द्यौरुक्थशब्दवाच्या। तस्याप्युक्थशब्दवाच्यस्य असावादित्योऽर्कः, अन्नमशीतयः, अन्नेन हि इदं सर्वमश्नुते इति पूर्ववत्। इत्येवं देवताविषयं दर्शनमधिदैवतमुक्तम्। शंकर.

**अथाध्यात्मम्। पुरुष एवोक्थमयमेव महान् प्रजापतिः। अहमुक्थमस्मीति विद्यात्। तस्य मुखमेवोक्थम्। यथा पृथिवी तथा। तस्य वागर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते। नासिके एवोक्थम्। यथान्तरिक्षं तथा। तस्य प्राणोऽर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते। तदेतद्ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव। ललाटमेवोक्थम्। यथा द्यौस्तथा। तस्य चक्षुरर्कः। अन्नमशीतयः। अन्नेन हीदं सर्वमश्नुते॥**

अथानन्तरमध्यात्ममुच्यते। पुरुष एवोक्थम्। कः पुनरसौ पुरुषः इत्यत आह—अयमेव प्रसिद्धः शिरःपाण्यादिमान्। कथं तस्योक्थत्वं इत्युच्यते। यतोऽयं महान् प्रजापतिः। महत्त्वं प्रजापतित्वं चास्य वक्ष्यति—'अथातो विभूतयोऽस्य पुरुषस्य' इत्यादिना। यस्मात् महानयं प्रजापतिः पुरुषो ज्ञानकर्मसाधनत्वेन जगदुत्पादकत्वात्, तस्मादुक्थम्। यस्मादेवं तस्मादात्मानमेव पुरुषो विद्यादहमुक्थमस्मीति। पुरुषे ह्यन्तरतमां यां यामवस्थामुपनेष्यत्यपरब्रह्मात्मत्वप्रतिपत्तेस्तां तामवस्थामहमुक्थमस्मीत्येवं विद्यादित्येवमर्थो विज्ञानारम्भे इहादौ प्रयुज्यते विधिरहमुक्थमस्मीति विद्यादिति। यथोक्थशब्दः पृथिव्यादौ स्थूले प्रयुक्तोऽन्तरतमे प्राणे कथमुक्थत्वेन संस्थास्यते। 'इयमेव पृथिवी' इति प्रस्तुत्य 'तदेतदुक्थाँ३ प्राण एव' इति निर्धारणश्रुतेः। पुरुषस्योक्थत्वे अर्काशीतिसंबन्धो वक्तव्य इत्याह—तस्य वागर्कोऽन्नमशीतय इत्यादि। मुखादीनामुक्थत्वविशेषाभिधानं बाह्योक्थैः संख्यादिसामान्यसंपादनार्थम्। तथा च आह—तस्य आध्यात्मिकस्य पुरुषोक्थस्य विशेषतो मुखमेवोक्थम्। यथा उक्थं पृथिवी बाह्यस्य त्रैलोक्यात्मनः प्रजापतेः, तथा आध्यात्मिकस्यापि मुखमुक्थम्। यथा च तस्याग्निरर्क एवं वागर्को मुखेन संबन्धात्। अन्नमशीतय इत्यादि व्याख्यातमन्यत्। अन्नेन हीदं सर्वमश्नुते। नासिके एवोक्थं यथान्तरिक्षं तथा तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते। तदेतत्, किं, तत् अन्तरिक्षावसाने स्वर्गो वै लोको ब्रध्नस्य विष्टपं यत् इहाध्यात्मं एतद्यदेतन्नासिकायै नासिकाया

अवसाने भ्रुवोश्चाधस्ताद्विशेषेण नतमिव निम्नमिव। निम्नतायाः प्रत्यक्षत्वादिवशब्दः अनर्थकः। ललाटमेवोक्थमिति समानमन्यत्। शंकर.

**समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव। अन्नेन ह्यीमानि सर्वाणि भूतानि समनन्ती॑३। अन्नेनेमं लोकं जयति। अन्नेनामुम्। तस्मात्समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव॥**

उक्थभेदेष्वर्कभेददर्शनादशीतिषु तत्प्रसङ्गो मा भूदित्याह—समानमशीतय इत्यादि। किं पुनस्तत् समानं, अन्नमेव अध्यात्मं चाधिदैवतं चाशीतयः। कस्मात्पुनरर्कवदशीतयोऽन्या अन्याश्च न कल्प्यन्ते इति, तत्र हेतुमाह—अन्नेन हि यस्मादिमानि प्राणाविष्टानि सर्वाणि भूतानि समनन्तीं चेष्टन्ते प्राणनं कुर्वन्ति। अन्नेनेमं लोकं जयति वशीकरोति धनमानयशोभिः। तथा अन्नेन अमुं लोकं यागदानादिभिर्जयति व्याप्नोति इत्यन्नवतो ह्युभयलोकव्याप्तिः प्रसिद्धा लोके। अश्नोतेर्हि व्याप्तिकर्मणोऽशीतिशब्दरूपम्। तस्मात्समानमशीतयः अध्यात्मं चाधिदैवतं चान्नमेव, नान्यदर्कवत्कल्पनार्हं, शब्दसारूप्यासंभवात्। शंकर.

**तदिदमन्नमन्नादम्। इयमेव पृथिवी। इतो हीदं सर्वमुत्तिष्ठति यदिदं किंच। यद्ध किंचेदं प्रेर्ता३इ तदसौ सर्वमत्ति। यदु किंचातः प्रैती॑३ तदियं सर्वमत्ति। सेयमित्याद्याऽत्त्री। अत्ता ह वा आद्यो भवति। न तस्येशे यन्नाद्यात्। यद्वैनं नाद्युः॥२॥**

(१) तदिदं यथोक्तं बाह्याध्यात्मलक्षणं जगद्द्वयमेवान्नं च अद्यते इति अन्नादं च अन्नमत्तीति। अस्य जगतोऽ(न्ना)न्नादत्वं कथमित्युच्यते। इयमेव तावत्पृथिवी अन्नम्। कुतः,इतः अस्याः पृथिव्या इदं सर्वं स्थावरं जङ्गमं च क्रियाकर्तृसाधनलक्षणं उत्तिष्ठति उत्पद्यते पार्थिवत्वात्सर्वस्य, यदिदं किंच यत्किंचेदमविशेषेण कर्तृसाधनरूपम्। यद्येवं किं स्यादित्युच्यते। यद्ध किंचेदं कर्तृप्रयुक्तं च पुरोडाशादि सकर्तृकम्। प्रेर्ता३इ इति पञ्चमो लकारः। प्रेर्तै इत्यस्य अयादेशे यलोपे च इदं रूपं प्रैतीत्यस्मिन्नर्थे। यत्किंचिदितोऽमुं लोकं प्रैति गच्छतीत्यर्थः। तत्सर्वमसौ द्यौरत्ति भक्षयति आत्मसात्करोति। तेनेयं पृथिवी आद्या, द्यौरत्त्री। यदु किंचातोऽमुष्मात् द्युलोकात् प्रैती॑ गच्छति वृष्ट्यादि क्षीणलोकाश्च यजमानाः, तत्सर्वमियं पृथिव्यत्ति। तेनासौ आद्या द्यौः, पृथिव्यत्त्री। तथा अन्तरिक्षलोको ह्युपकार्योपकारकत्वदर्शनादत्ता आद्यश्च। तथा प्राणिनः सर्वे अन्योन्यमुपकार्योपकारकत्वदर्शनात्। तदिदं जगदन्नमन्नादं चेति प्रस्तुतमुपसंहरति—सा इयं पृथिवी इति एवं आद्याऽत्त्री आद्या च अत्त्री चेति। तथासावपि द्यौराद्याऽत्त्री। तथाऽन्यदपि तत्सर्वम्। पृथिवीग्रहणं सर्वस्योपलक्षणार्थं आद्यात्तृत्वं प्रति। एवमहमन्नाद्यरूपः प्रजापतिरुक्थमस्मीति यो वेद तस्येदं विदुषः फलमुच्यते - अत्ता ह वै सर्वस्यान्नजातस्य भवति आद्यश्च। उभयात्मको हि प्रजापतिः। प्रजापतिरेव भवतीत्यर्थः। ननु तस्य किं विद्याफलं यद्यसौ अत्ता आद्यश्च भवति। यावता सर्वो हि लोकः परेणोपक्रियमाणः अत्ता भवति उपकुर्वन् परस्य आद्यश्च भवति, तथा विद्वानपि। नैष दोषः। कथमित्युच्यते। न तस्य वस्तुनः ईशो ईष्टे न स्वामी कश्चिद्भवति सः, यो यद्वस्तु न अद्यात्। यदेव योऽद्यात् तस्यैव स ईष्टे। अयं तु सर्वस्यैवात्तृत्वात् स्वामी विद्वान्। यत् यस्मात्। वाशब्दश्चार्थे। यस्माच्च यथैनं विदित्वा नाद्युः परे, तस्माद्विद्वान् सर्वात्मा सन् सर्वस्यात्ता न स्वात्मभूतस्यैव आद्यस्य। यस्त्वविद्वान् स परेषामाद्यः, न च सर्वस्यात्तेत्येवं विशेषो विदुषोऽविदुषश्च। शंकर.

(२) उत्थापनादुक्थनामा स एव पृथिवीस्थितः। प्रथितः पृथिवीनामा सोऽन्तरिक्षाभिधोऽन्तगः। अन्तरीक्ष्यो यतो द्युस्थो द्युनामातिप्रकाशनात्। अध्यात्मे च निविष्टोऽसौ पुरुषाख्यो जनार्दनः। पूर्षु स्थितत्वात्स महान् प्रजानां पतिरेव च। अहमुक्थमिति ह्येतां विद्यामनुभवत्यसौ। पृथक् पृथक् च तस्याङ्गान्युक्थानि जगदीशितुः। अग्निवातदिनेशानामुत्थानानि पृथक्पृथक्। वदनं नासिका नेत्रमित्येतानि परात्मनः। तृचाशीतिविभिन्नस्य शस्त्रस्यान्नत्वहेतुतः। विष्णोस्तृचाशीतिवत्स्यात् प्रसिद्धान्नमिति स्फुटम्। अन्नाभिमानिदेवश्च तृचाशीत्याश्च देवता। सोम एव ततश्चान्नमशीतय इतीरिताः।

---

(१) मध्व. प्रेर्ता३इ (प्रेता३इ) तस्येशे यन्ना (तस्येशेऽयं ना).

अदनाऽऽघ्राणदृष्ट्याख्यभोगत्रयविभागतः । मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् । अरणं गमनं यस्मादर्कः शीघ्रगतिस्ततः । श्येन एव, तदाकारा चितिरर्कपदोदिता । सुपर्णप्रतिमा सा यत्तदारुढो जनार्दनः । यस्मात्तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः । योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि । तथा वाक्प्राणचक्षुःषु तस्मात्तेऽर्काः प्रकीर्तिताः । तेषु स्थिते सुपर्णे च रूपभेदैः पृथक् पृथक् । स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः । व्यात्तत्वाज्जीवदेहेषु मुखे विष्णोर्मुखं स्मृतम् । नासयोर्नासिके विष्णोरक्ष्णोरेव तदक्षिणी । जीववाक्प्राणचक्षुःषु तद्वागाद्यास्ततः स्थिताः । विष्णोर्वाग्भार्गवो रामः प्राणोऽस्य नरकेसरी । चक्षुस्तु कपिलो विष्णुरग्न्यादीनां च कारणम् । जीववागादिसंस्थं च सुपर्णमधिसंस्थिताः । अविशेषोऽपि भगवान्पूर्णैश्वर्यस्वरूपतः । अङ्गाङ्गित्वेनैक एव स्वानन्दानुभवे स्थितः । स एव व्यूह्य चात्मानं पृथग्रूप इव स्थितः । सुपर्णनामा भगवान्सुपर्णे च व्यवस्थितः । अग्न्यादिषु च तन्नामा वासुदेवः स संस्थितः । अन्ननामा स एवान्ने चेष्टयन्सर्वमास्थितः । अन्ने स्थितः स एवेशो ह्यन्नदातृगतिप्रदः । तस्यान्तरिक्षगस्यैव नियमादनु पक्षिणः । पतन्ति धावयन्त्यश्वान्नरादींश्च नरादयः । परस्य विष्णोर्धामत्वात्सूर्यो ब्रध्न इतीरितः । निहितश्चैव तल्लोको नासिकायां नतस्थले । पृथिव्यां संस्थितो विष्णुः स्त्रीरूपेण द्युलोकतः । पतितं सर्वमेवात्ति तथा दिवि च संस्थितः । इतो गतं सर्वमत्ति द्युनामा भगवान्परः । भोग्यत्वादाद्य इत्युक्त एवमाद्यात्तृरूपवान् । एक एव परो विष्णुरत्तान्यैरुपजीव्यतः । आद्यो भवति चान्येषां नोपजीव्यो भवेद्यथा । हरिः स सर्वजीवानां, न भुज्यन्ते यथाऽमुना । सर्वे लोकास्तथा कर्तुं नैवेष्टे कश्चन क्वचित् ॥ मध्व.

प्रजापतेः रेतोरूपा सृष्टिः, पुरुषोऽन्नमयो ब्रह्मलोकः

**अथातो रेतसः सृष्टिः । प्रजापते रेतो देवाः । देवानां रेतो वर्षम् । वर्षस्य रेत ओषधयः । ओषधीनां रेतोऽन्नम् । अन्नस्य रेतो रेतः । रेतसो रेतः प्रजाः । प्रजानां रेतो हृदयम् । हृदयस्य रेतो मनः । मनसो रेतो वाक् । वाचो रेतः कर्म । तदिदं कर्म कृतम् । अयं पुरुषो ब्रह्मणो लोकः । स इरामयः । यद्धीरामयस्तस्माद्धिरण्मयः । हिरण्मयो ह वा अमुष्मिँल्लोके संभवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ॥ ३ ॥**

(१) अथातो रेतसः सृष्टिः । यस्माद्भोज्यभोक्तृस्वरूपं जगत् प्रजापतिः स चायमेव पुरुषः इत्युक्तम् । तस्य पुरुषस्य प्रजापतेद्वर्यात्मकत्वमनिर्धारितविशेषं अनेन स्वेनात्मना आद्यत्वमनेन वा अत्तृत्वं, अतस्तद्विशेषनिर्दिधारयिषया आह — अथ अनन्तरं रेतसः कार्यस्य अन्नात्मनः सोमभूतस्य बाह्यपिण्डस्य सृष्टिरुच्यते । कथम् । प्रजापतेः पुरुषस्य कर्मज्ञानाधिकृतस्य रेतः कार्यं देवाः वागाद्यभिमानिनोऽग्न्यादयः । एते इतः संभूताः । 'तस्य वाचा सृष्टौ पृथिवी चाग्निश्च' इत्यादौ यथा पुरुषस्य कार्यं देवाः इति हि वक्ष्यामः । देवानां रेतो वर्षं वृष्टिः । तथा वर्षस्य रेतः वृष्टेः कार्यं ओषधयो व्रीहियवाद्याः । ओषधीनां रेतोऽन्नं प्रसिद्धमेव । अन्नस्य भुक्तस्य रेत एव नृबीजं रेतः कार्यम् । रेतसः स्त्रीयोनौ निषिक्तस्य रेतः कार्यं प्रजाः । एवमयं पुरुषः अनेन क्रमेण प्रजानां स्रष्टृत्वात्प्रजापतिः । तथा प्रजानामप्यनेन क्रमेण स्रष्टृत्वात्प्रजापतित्वम् । एवं सर्वस्य स्रष्टेति प्रजापतिरेव भवति । भवतु तावदेवं, स प्रजापतिः केन साधनेन एवमन्नमयीः प्रजाः सृजतीत्युच्यते । प्रजानां प्रजापतित्वापन्नानां रेतः कार्यं हृदयं बुद्धिः सर्वविज्ञानाधारभूता । तस्या बुद्धेर्हृदयस्य रेतो मनो ज्ञानम् । मनसो ज्ञानस्य रेतो वाक् मन्त्रचोदनालक्षणा । तस्या वाचो रेतः कर्म । मन्त्रेण हि स्मृतं चोदितं कर्म क्रियते । 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' इति च वक्ष्यति । मनोवाक्प्रसूतं हि पाङ्क्तं कर्म इति वाजसनेयके । तथा च 'विज्ञानं यज्ञं तनुते' (तैउ. २।५) इत्यादि । तदिदं शरीरं हृदयाधारं मनोवाक्प्रसूतं कर्मणा कृतम् । तेनेदं विनाशि आगमापायि चलं अध्रुवम् । तथापि ह्ययं पुरुषः शिरःपाण्यादिमान् ब्रह्मणः प्राणाख्यस्य वक्ष्यमाणस्य परस्य च प्रज्ञानलक्षणस्य लोकः । लोक्यतेऽस्मिन्दृश्यते, स्वयं वा लोकयति पश्यतीति लोकः । स चायं इरामयः अन्नमयः । तथा

(१) ऐभा. २।१।३; ब्रशंकर. ३।३।१६; मध्व. मयस्तस्मा ( मयास्तस्मा ).

च व्याख्यातं 'अन्नस्य रेतो रेतो रेतसो रेत: प्रजा:' इति । यत् यस्मात् इरामयोऽन्नमयस्तस्माद्धिरण्मय:, हिरण्यं अमृतं ज्योति:, तन्मय: । सोमात्मकं ह्यन्नम् । सोमश्चामृतोऽन्नभूतो देवानां, तन्मयं ह्यन्नम् । अतो हिरण्मयो बाह्य: पिण्ड: कर्मकृतो ब्रह्मणो लोक: । 'अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदमन्नं च' इति हि वाजसनेयके विज्ञायते । एवं सोमात्मकत्वाद्धिरण्मयोऽन्नमय: पिण्ड इत्येवंविद: फलमुच्यते—हिरण्मयोऽमृतमय: सोमात्मको ह वै अमुष्मिन् स्वर्गे लोके संभवति संनिर्वर्तते इत्यर्थ: । किंच हिरण्मय एव सन् सर्वेभ्यो भूतेभ्योऽर्थाय ददृशे दृश्यते । सोमवदुपास्यो भवतीत्यर्थ: । कोऽसौ । य एवं यथोक्तमन्नात्मसतत्त्वं सोमात्मकतां यो वेद उपास्ते शरीरात्मना अन्नमयेन सोमोऽमृतोऽस्मीति चेत: समाधाय आस्ते इत्यर्थ: ।

शंकर.

(२) स एष भगवान्विष्णु: प्रजापतिरितीरित: । तस्माज्जाता: सर्वदेवा ब्रह्माद्यास्तेभ्य एव च । वृष्टि: संजायते तस्या: सर्वा ओषधयोऽभवन् । ओषधीभ्योऽन्नमन्नाच्च रेतो रेतस एव च । सर्वा: प्रजा: प्रजायन्ते संकल्पो हृदयाभिध: । प्रजाभ्यो जायते तस्माद्विकल्पाख्यं मनस्तथा । विकल्पाद्वाक्प्रचारश्च वाचा नामादिवेदनात् । कर्म संजायते तस्मात्कर्मणश्च जगत्पुन: । कर्माभिमान्ययं जीव: परस्य ब्रह्मणो हरे: । आवासस्थानमुद्दिष्टो विशेषात्स इरामय: । इच्छानुरूपं तु सुखमिरेत्येव प्रकीर्तितम् । इच्छानन्दप्रभूतत्वात्स एव च हिरण्मय: । हिरुक्सुखं हिरण्यं स्याद्बाह्यानन्दात्पृथग्यत: । अधिकार्थे मयड्यस्मादधिकानन्दरूपत: । उत्सृज्य कर्मजं रूपं निजानन्दैकरूपक: । एवं नारायणं जानन्सर्वलोकैककारणम् । तल्लोके दृश्यते भूतैर्मुक्तैरानन्दरूपक: ॥

मध्व.

शरीरे प्रविष्टं ब्रह्म अन्नमयस्याभ्यन्तर आत्मा प्राण:, स
एव उक्थाख्य: ब्रह्म इन्द्रश्च, आध्यात्मिकाधि-
दैवतस्वरूप: स एव सत्यम्

**[1]तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम् । यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे । तस्मात्प्रपदे इत्याचक्षते । शफा: खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत् । ता ऊरू अभवताम् । उरु गृणीहीत्यब्रवीत् । तदुदरमभवत् । उर्वेव मे कुर्वित्यब्रवीत् । तदुरोऽभवत् । उदरं ब्रह्मेति शार्कराक्ष्या उपासते । हृदयं ब्रह्मेत्यारुणय: । ब्रह्मा हैव ता३इ ॥**

अथेदानीमन्नमयस्याभ्यन्तर आत्मा साधारण: अत्ता उक्थं ब्रह्म इन्द्र: प्राण इत्येवंशब्दवाच्यो यस्तस्य स्वरूपनिर्दिधारयिषया इदमारभ्यते— तं प्रपदाभ्यामिति । तं कम् । य: प्रकृतोऽन्नमयो ब्रह्मणो लोक इत्युक्तविशेषणस्तम् । प्रपदाभ्यां, पादयोरग्रप्रदेशौ प्रपदे, ताभ्यां द्वारभूताभ्यां प्रापद्यत प्रपन्नं प्रविष्टं पादाग्रप्रभृति आमस्तकं शरीरं प्रविष्टमित्यर्थ: । किं पुनस्तत् । ब्रह्म बृहत्त्वात्प्राणाख्यम् । यस्यायं ब्रह्मणो लोक: पिण्डो नामरूपात्मक: । 'नामरूपे सत्यं ताभ्यामयं प्राणश्छन्न:' (बृउ. १।६।३) इति विज्ञायते वाजसनेयके । इमं पुरुषं शिर:पाण्यादिमन्तं स्वलोकम् । यत् यस्मात् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे पादाग्रे संवृत्ते । तस्मादेव च प्रपदे इत्याचक्षते लौकिका: । प्रपदे एव च सती शफा: खुरा इति चाचक्षते मनुष्यपशुभ्योऽन्येषां पशूनां चतुष्पदामश्वप्रभृतीनाम् । तदूर्ध्वमुदसर्पत् तद्ब्रह्म प्रपदाभ्यां प्रपन्नं सत् ऊर्ध्वमुदसर्पत् उद्गतवद्विपमिव व्याप्नुयत् । यस्मादूर्ध्वमुदसर्पत् तस्मात्तौ ऊरू ऊरूशब्दवाच्यावभवतां संवृत्तौ लोके । तद्ब्रह्म ऊरुदेशं प्राप्य उरु विस्तीर्णं बहुधा गृणीहि ग्रसनं कुरु बहुनिगरणयोग्यं विपुलं छिद्रं कुर्वित्यब्रवीदित्यर्थ: । तस्मात् ब्रह्मणो वचनात्तच्छरीरमध्यमुदरमभवत् । पुनरप्युदरादूर्ध्वं उरु एव विस्तीर्णतरमेव मे मम कुर्वित्यब्रवीत् । तत एव उरोऽभवत् उर:शब्दवाच्यो हृदयप्रदेशोऽभवत् । तदुदरं विशेषेण वैश्वानरभूतेन ब्रह्मणाऽत्राधिष्ठितत्वात् ब्रह्मेति ब्रह्मदृष्ट्या शर्कराक्षस्यापत्यानि शार्कराक्ष्या ऋषय: उपासते चिन्तयन्ति । हृदयं उदरादूर्ध्वप्रदेशं पुण्डरीकाकारं ब्रह्मण उपलब्धिस्थानत्वात् ब्रह्मेत्युपासते । के, अरुणस्यापत्यान्यारुणय: । ब्रह्मा ह एव ब्रह्मणी एवेति वादेशो एतद्रूपं द्रष्टव्यम् । ता३इ (ते) । उदरोरसी ब्रह्मणी एवेत्यर्थ: । स्थानत्वाद्ब्रह्मणो ब्रह्मेति गृहीतं युक्तमयुक्तं

(१) ऐआ. २।१।४; मध्व. ता३इ (ता३ई); बलदेव. ३।३।५५.

(वा) इति विचार्य अध्यवस्यति श्रुतिः ब्रह्मणी एवेति। शंकर.

**ऊर्ध्वं त्वेवोदसर्पत्। तच्छिरोऽश्रयत। यच्छिरोऽश्रयत तच्छिरोऽभवत्। तच्छिरसः शिरस्त्वम्। ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः। श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद ॥**

पुनरप्यूर्ध्वं त्वेवोदसर्पत्। तद्ब्रह्म ऊर्ध्वमुद्गम्य शिरोऽश्रयत आश्रितवत्। विशेषेण शिरसि हि चक्षुःश्रोत्रादीनि खानि करणानि स्वेषु पृथक् निक्षिप्य दर्शनश्रवणादिव्यापारं कुर्वदास्ते। यत् यस्माच्छिरोऽश्रयत तद्ब्रह्मणः श्रयणाच्छिरोऽभवत्। एवं तत् शिरसः शिरस्त्वं प्रसिद्धं लोके। तथा श्रयणादेव श्रियोऽभवन्। काः, ताः एता वक्ष्यमाणाश्चक्षुः श्रोत्रं मनो वाक्प्राण इति। ताश्च शीर्षन् शिरसि श्रिताः श्रियः। श्रीहेतुत्वाच्छ्रयणाच्च प्राणानां श्रीत्वं शिरसश्च शिरस्त्वं यो वेद, अस्मिन्विदुषि श्रियः श्रयन्ते। श्रीशब्दसामान्याद्भूतिलक्षणा श्रीरेकापि सती पश्वादिसाधनभेदेन बहुवचनभाक् श्रिय इति। चक्षुराद्या वा श्रियोऽस्मिन्पक्षे कल्प्याः। कल्पेन्द्रियत्वं विद्वदविदुषोर्विशेषः। कल्पेन्द्रियत्वं हीष्यते फलम्। शंकर.

**ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति। ता अब्रुवन्। हन्तास्माच्छरीरादुत्क्रामाम। तद्यस्मिन्न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति। वागुदक्रामत्। अवदन्नश्नन्पिबन्नास्तैव। चक्षुरुदक्रामत्। अपश्यन्नश्नन्पिबन्नास्तैव। श्रोत्रमुदक्रामत्। अशृण्वन्नश्नन्पिबन्नास्तैव। मन उदक्रामत्। मीलित इवाश्नन्पिबन्नास्तैव। प्राण उदक्रामत्। तत्प्राण उत्क्रान्तेऽपद्यत। तदशीर्यत। अशारीती३ तच्छरीरमभवत्। तच्छरीरस्य शरीरत्वम्। शीर्यते ह वा अस्य द्विषन्पाप्मा भ्रातृव्यः। पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति। य एवं वेद ॥**

शरीराश्रयाणां प्राणानां संकीर्णत्वाद्यत्प्रविष्टं ब्रह्म तद्ब्रह्म दुर्निर्धारणमिति तन्निर्दिधारयिषया इदं प्रस्तूयते—ता अहिंसन्तेत्यादि। ताः प्रकृताश्चक्षुराद्या अहिंसन्त अस्पर्धन्त। स्पर्धा च हिंसा, अन्योऽन्यपीडाहेतुत्वात्। स्पर्धां कृतवत्यः कस्मिन्नर्थे इत्युच्यते—अहमुक्थमस्म्यहमुक्थमस्मीति। अहं श्रेष्ठतायामित्यर्थः। 'शस्त्राणां हि श्रीमत्तमं यशस्वितमम्' इति कौषीतकिनाम्। अतः प्रसिद्धं महदुक्थस्य श्रेष्ठत्वम्। यदिह विचारणायां श्रेष्ठतमं ब्रह्म भविष्यति, तद्बुद्धिदृष्टिमन्महदुक्थम्। तेनोक्थशब्दं ब्रह्म, श्रेष्ठ्यसामान्यात्। अत इदं विचार्यं, किमिह श्रेष्ठं ब्रह्मेति। तद्विचारणा क्रियते प्राणसंवादाख्यायिकाव्याजेन। ताः श्रियः अहमुक्थमस्मीति वाङ्मात्रेण अन्यतमश्रेष्ठताया निष्पत्तिमपश्यन्त्यः प्राणमन्तरेण अन्योऽन्यमब्रुवन् अन्वयव्यतिरेकार्थम्। हन्त यद्यनुमतिरस्माकं, अस्माच्छरीरात्क्रमेणोत्क्रामाम। तदिदं शरीरं नः अस्माकं मध्ये यस्मिन्नन्यतमे उत्क्रान्तेऽपसृते अपक्रान्ते पत्स्यति पतिष्यति, तदिहोक्थं श्रेष्ठं भविष्यतीति। एवमुक्त्वा वाक् प्रथममुदक्रामत् उत्क्रान्तवती। तस्यामुत्क्रान्तायां वदनमात्रं केवलमकुर्वन् अश्नन्पिबन्नास्त एव देहः। यदि हि वागुक्थमभविष्यत्, पतितोऽभविष्यदयं देहः। न चापतत्। तस्मान्नोक्थं वाक्। समानमन्यत्। चक्षुरुदक्रामत्। मन उदक्रामत् मीलित इवेति। यथा मुग्धः चक्षुर्मीलनोन्मीलनमात्रं कुर्वन् विषयविवेकमकुर्वन्नास्ते तद्वद्देहः। प्राणस्तु अक्षुभितो महत्त्वात्पश्चादुदक्रामत्। तस्मिन्प्राणे उत्क्रान्ते इदं शरीरमपद्यत। न केवलं पतितमेव तच्छरीरं, तदशीर्यत विशीर्णभावं चागमत् विश्लिष्टमर्मसंधिरूपताम्। अशारि शीर्णं इति यस्मात्तत् तस्माच्छरीरमभवत्। तदेवं शरणादेव शरीरत्वं प्रसिद्धम्। अशरणात्मकत्वात् प्राणात्मनोऽन्यत् शरीरमेव शीर्यते इति यो वेद तस्येदं फलमुच्यते—शीर्यते ह वै विनश्यत्येवास्य विदुषो द्विषन् यो भवति। कोऽसौ। प्राणशरीराविवेकदर्शननिमित्तः पाप्मा शरीराभिमानसङ्गलक्षणो भ्रातृव्यः। स ह्येनं सहभूत एवात्यन्तमनर्थे योजयन् द्वेष्टि नेतरो भ्रातृव्यः। स न केवलं शीर्यत एव, पराभवति च अस्य। नाभिमुख्येन शरीरग्रहणजेनानर्थेन योक्तुं शक्नोति प्राणात्मब्रह्मविदमित्यभिप्रायः। शंकर.

**ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति। ता अब्रुवन्। हन्तेदं पुनः शरीरं प्रविशाम। तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं**

**भविष्यतीति । वाक्प्राविशत् । अशयदेव । चक्षुः प्राविशत् । अशयदेव । श्रोत्रं प्राविशत् । अशयदेव । मनः प्राविशत् । अशयदेव । प्राणः प्राविशत् । तत्प्राणे प्रपन्न उदतिष्ठत् । तदुक्थमभवत् । तदेतदुक्थाँ३ प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन् । त्वमुक्थमसि । त्वमिदं सर्वमसि । तव वयं स्मः । त्वमस्माकमसीति । तदप्येतदृषिणोक्तम् । त्वमस्माकं तव स्मसीति ॥ ४ ॥**

( १ ) यादृच्छिकमपि प्राणोत्क्रमणे शरीरपतनं स्यात्, पुनः प्रवेशेन वागादीनां शरीरानुत्थानं, प्राणप्रवेशेन चोत्थानं यावन्न प्रदर्शितं भवति, इत्यत आह— वाक्प्राविशत् । तस्यां प्रविष्टायामपि शरीरं नोत्थितं, अशयदेव सुषुप्तवत्पतितमेवास्ते । तथा चक्षुरादिषु । चक्षुः श्रोत्रं मनः प्राणः प्राविशत् । तस्मिन् प्राणे प्रपन्ने प्रविष्टे उदतिष्ठत् सुप्तप्रबुद्ध इवोत्थितं शरीरम् । प्राणः शरीरोत्थानहेतुत्वात् तदुक्थमभवत् । 'उक्थमुक्थमिति वै प्रजा वदन्ति' इति प्रस्तुत्य इह किं नु खलूक्थं भवितुमर्हतीत्युक्थविचारणायां दर्शयति—तदेतदुक्थाँ३ प्राण एव इति निर्धारितम् । यस्मादेवं प्रकृतेन संयोज्य 'प्राणोऽहमुक्थमस्मीत्येव विद्यात्' इति पूर्वप्रस्तुत एव विधिरनूद्यते निर्धारितब्रह्मसंबन्धार्थम् । प्राणेन पराजितैर्वागादिभिः स्तूयते इति स्तुतिच्छद्मना विद्याविषयस्य प्राणस्य सर्वात्मत्वं दर्शयति । तथा च वक्ष्यति— 'प्राणो वा अहमस्म्यृषे प्राणः' इत्यादि । प्राणैकशब्दवाच्यत्वं च सर्वस्य 'एकैव व्याहृतिः प्राण एव' इति । तस्मान्न स्तुतिरिति विज्ञानविषयो बाह्योऽर्थ उच्यते वागादिभिः । तं प्रकृतं निर्धारितयाथात्म्यं पराजिता वागादयो देवा राज्ञ इव प्रतिराजानः करमिव प्रयच्छन्तोऽब्रुवन् उक्तवन्तः त्वमुक्थमसि, त्वमिदं सर्वमसि । किंच तव स्वामिन इव भृत्या वयं स्मः भवामः । तव रूपादिबल्युपहारिणो वयम् । त्वं तु पुनरस्माकं भृत्यानामिव स्वामी असि भवसि । तदप्येतत् उक्तं वस्तु ब्राह्मणेन ऋषिणा मन्त्रेणाप्युक्तं प्रकाशितम् । * 'त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः । त्वमस्माकं तव स्मसि ॥' (ऋसं. ८।९२।३२) इयमृग्व्याख्येया । त्वया यथोक्तमहाभाग्येन इत् इत्थं इन्द्र हे परमेश्वर युजा योगेन वयं रसयोगेनेव ताम्रं लब्धवीर्याः सन्तः प्रति ब्रुवीमहि प्रतिवक्ष्यामः । स्पृधः संग्रामनिमित्तस्पर्धया इत्यर्थः । त्वद्योगमन्तरेण कुतो नः सामर्थ्यं प्रतिवक्तुमन्यद्वा कर्तुम् । 'त्वमस्माकं तव स्मसि' इति । त्वमेव ह्यस्माकं शक्त्याधानकृत् । तत् तव स्वामिनः प्रेष्याः स्मसि भवामो वयम् । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

शंकर.

( २ ) तमिमं प्रथमज्ञानिपुरुषं चतुराननम् । वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा । यस्मात्प्रपेदे भगवान्प्रपदाच्चतुराननम् । तस्मात्प्रपदनादेव प्रपदं नाम कीर्तितम् । चतुर्मुखाकारवतां नृणां पादतलोपरि । प्रपदाख्या वर्ततेऽतो न तु पश्वादिनां क्वचित् । अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च । स्थित ऊरू च तावास्तामूरूर्ध्वंगमनाद्धरेः । किंचिदूर्ध्वं ततो गत्वा वायुना सह केशवः । वायुमाहोरु गरणं कुर्वन्न स्थित इत्यपि । उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा । तत्स्थानमुदरं नाम पुनराह जनार्दनः । उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् । तथाऽकरोत्स वायुश्च तदुरोऽभूदुरुत्वतः । उरोमध्ये च हृदयं तत्रावासो हरेः सदा । सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः । उदरं ते परं ब्रह्म वासुदेवमुपासते । हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा । उदरस्थं च हृद्रं च ते उभे ब्रह्म तत्परम् । एकमेव यतस्तस्मादुभये ह्यपि तद्विदः । तत ऊर्ध्वं गतो विष्णुर्वायुना सह दैवतैः । स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः । तत्र प्राणात्मना वायुर्मनोरूपेण शंकरः । शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक् पृथक् । अहंभावमनो रुद्रः शेषोऽसौ पाञ्चरात्रकम् । वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः । श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः । एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः । उपासते महाविष्णुं परमात्मानमच्युतम् । वाचा हिंसामकुर्वंस्ते विनिन्दन्तः परस्परम् । ते विष्णोराज्ञयाऽवोच-

* 'त्वयेदिन्द्र...व्याख्येया' इतीयं पङ्क्तिः आदर्शीभूतमुद्रितपुस्तके 'किंच तव ... भवामः' इत्यस्या अव्यवहितोत्तरं मुद्रिताऽस्ति । तत्र तस्या संगत्यभावं विचार्य संगतिलोभेनास्माभिरुपरिष्टान्निवेशिता ।

न्नुत्क्रामाम पृथक्पृथक् । देहादब्जभवस्यास्माद्यस्मिन्नुत्क्रान्त एव हि । शरीरं पद्यते श्रेयान्स न इत्यवधार्यताम् । ततः क्रमेण वाग्न्याद्या निष्क्रान्तास्तेषु सर्वशः । निष्क्रान्तेषु न वै पातः शरीरस्याभवत् क्वचित् । वायावुत्क्रान्त एवैतच्छरीरमपतत्क्षितौ । उदासीनवदास्तां तौ केशवश्चाब्जसंभवः । तेषां बलपरीक्षार्थं वाय्वादीनां च सर्वशः । पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः । नोत्थानमभवत्तेषु प्रविष्टेष्वपि सर्वशः । वायौ प्रविष्टे तूत्थानं कायस्यासीत्तदैव च । उच्चैः स्थितत्वादुक्थोऽभूद्वायुरेव ततः प्रभुः । उच्चत्वं च गुणाधिक्यं त्वमुच्चोऽसीति तेऽब्रुवन् । भृत्या वय तवैव स्मस्त्वमस्माकं पतिः सदा । स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् । इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् । वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद्दिवौकसाम् ॥ मध्व.

[1]तं देवाः प्राणयन्त । स प्रणीतः प्रातायत । प्रातायीती३ । तत्प्रातरभवत् । समागादिती३ । तत्सायमभवत् । अहरेव प्राणः । रात्रिरपानः । वागग्निः । चक्षुरसावादित्यः । चन्द्रमा मनः । दिशः श्रोत्रम् । स एष प्रहितां संयोगोऽध्यात्मम् । इमा देवता अद उ आविरधिदैवतमिति । एतत्तदुक्तं भवति ॥

किंच तमेव प्राणं देवा वागादयः प्राणयन्त प्र अनयन्त प्रणीतवन्तः महाभाग्यं गमितवन्त इत्यर्थः । स प्राणो देवैः प्रणीतः सन् प्र आतायत महाभाग्यसंततिं अगच्छत् स्वामीव । वागादिदेवैः स्थापितः सन् स्वामीव भृत्यान्देवानपालयत् । प्रातायीती३ (तं दृष्ट्वा वागादिदेवा मनुष्या वा प्रातायि इत्येवमुक्तवन्तः । प्रकर्षेण विस्तृतोऽभूदिति तस्य शब्दस्यार्थः । प्लुतिः प्रसिद्ध्यर्था । सायणभाष्यम् ) यस्मात्तस्मात्स प्राणः प्रातःकालोऽभवत् । सं आगात् एकीभावं गतवान् वागादीनां संहरणेन स्वापार्थं लोकस्य, इती३ । (तं संहारं दृष्ट्वा समागात् इत्युक्तवन्तः । संकोचं प्राप्तवानिति तस्यार्थः । सायणभाष्यम् । ) तत् तस्मात् सायमभवत् सायंकालोऽभवत् । प्राणवृत्त्या हि लोकस्य जागरणार्थं वागादीन्विक्षिपन्पालयति यदा, तदा प्राणवृत्तिनिमित्तोऽहराख्यः कालविशेष इत्यहरेव प्राण इत्युच्यते । स्वापार्थं वागादिसंहरणमपानवृत्तिनिमित्तमिति रात्रिरपान उच्यते । प्राणापानवृत्तिभ्यां वागादिविक्षेपसंहरणे कुर्वन् प्राणिनां जाग्रत्स्वप्नार्थं कर्मार्थं विश्रमणार्थं चाहोरात्ररूपः कालोऽभवत्प्राण इत्यर्थः । न केवलं प्राणः कालात्मैव, देवतात्मा च । कथमिति उच्यते— तस्य प्राणस्य या वाक् सोऽग्निः । तथा च चक्षुरसावादित्यः, चन्द्रमा मनः, दिशः श्रोत्रम् । वागादीनां ह्यभिमानित्वं प्रसिद्धमग्न्यादीनाम् । यदेतदग्न्यादीनां वागाद्यभिमानितया संस्थानं, स एष प्रहितां प्रगतानां वागादीनां संयोगोऽध्यात्मं आत्मानमधिकृत्य आत्मनो भोगार्थं एष संयोगः प्रवर्तते, संहतिरित्यर्थः । इमा एव वागाद्यभिमानिन्यो देवता अद उ एतत् । किं तत् । आविः प्रकाशरूपं यद्वर्ततेऽग्न्यादित्यादि तदधिदैवतं यागादिकर्मकाले समुद्दिश्यमानं कर्माङ्गतया अधिदैवतमुच्यते इति । तदेतदुक्तं भवतीति वक्ष्यमाणेन ऋषिवाक्येनेति संबन्धः । शंकर.

एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैदः । न [1]तस्येशे यं मह्यं न दद्युरिति । प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेद । एतद्ध तत् । अनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद । तत्सत्यम् । सदिति प्राणः । तीत्यन्नम् । यमित्यसावादित्यः । तदेतत्त्रिवृत् । त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति । स यदि ह वा अपि मृषा वदति । सत्यं हैवास्योदितं भवति । य एवमेतत्सत्यस्य सत्यत्वं वेद ॥ ५ ॥

( १ ) कोऽसावृषिः, किं वा तदृषिवाक्यमित्याह श्रुतिरेव । तदध्यात्माधिदैवतसंयोगलक्षणं वस्तु यदुक्तम् । ह स्म वै इति वृत्तावद्योतका निपाताः । तदेतद्विद्वान् सन् आह उक्तवान् हिरण्यदन्नाम्ना बिदस्यापत्यं बैद ऋषिः । न तस्य पदार्थस्य यस्य कस्यचित् न ईशे नेष्टे कश्चिद्यं पदार्थं मह्यं न दद्युः न प्रयच्छेयुः । सर्वात्मने प्राणभूताय मह्यमेव सर्वावस्थाय सर्वे पदार्थजातं प्रयच्छन्ति, सर्वैः सर्वतः उपनीयमानस्य अहमेव स्वामी, सर्वे मम बलिहारका इत्यर्थः । अत्र हेतुमाह—प्रहितां वै अह-

(१) ऐआ. २।१।५; अमभ्व. १।१।२८.

१ मध्व. तस्येशे यं ( तस्येशेऽयं ).

मध्यात्मं संयोगं निविष्टं यथोक्तं वेद विजानामि । यत एतत् ह तत् यथोक्तं दर्शनम् । अन्योऽप्येवं वेद तस्य एतत्फलमुच्यते — तद्बलिं ह वै अस्मै एवंविदे आत्मभूताय सर्वाणि भूतानि हरन्ति उपनयन्ति । किंविशिष्टानि । अनीशानानि अस्वतन्त्रा भृत्या इव स्वामिने । यत्तदुक्तं अध्यात्माधिदैवलक्षणं समस्तं सत्यमित्येकेन शब्देनाभिधीयते । 'तदेतया वाचाऽभिव्याह्रियते सत्यमिति' (इति) ह विज्ञायते कौषीतकिनाम् । किं पुनस्तदनेकमेकशब्दवाच्यमिति उच्यते । सदिति नित्यसद्रूपत्वात्प्राणः। ति इत्यन्नवाचकमेव तकारमात्रम् । इकारस्तूच्चारणार्थोऽनुबन्धः। मृत्युशब्दे तकारोऽस्ति। मृत्युमद्धि अन्नं आद्यत्वात् विनाशि । तत्सामान्यात् ति इत्यन्नमुच्यते । यं इत्यसावादित्यः यातीति । यमयतेर्वा बन्धनार्थस्य रूपं यं (इति) । आदित्यात्मना हि सर्वं बद्धम् । आदित्यश्चात्मा सर्वस्य । आत्मसंबद्धं हि सर्वम् । अतो यमित्यसावादित्यः । प्राणेनादित्येन चात्मना अत्र मृत्युमदन्नमन्तर्भावितमनृतरूपमिति सत्यभूयस्त्वमेव । 'आर्त्तं वै भूयसा कनीयः' इति हि श्रुतिः । तस्मादेतत्सर्वं जगत्सत्यं त्रिवृदेव नातोऽतिरिक्तम् । तदेतत्त्रिवृत्त्वं चक्षुषि इह प्रत्यक्षं प्रदर्श्यते । आदित्यात्मकं हि समस्तं बाह्यं, स चादित्य इह चक्षुः । त्रिवृदिव वै । इवशब्दोऽवधारणार्थे । वैशब्दः प्रसिद्धस्मारकः । कथम् । शुक्लं कृष्णं कनीनिका च चक्षुर्मध्ये यत्तेजः । यथोक्तमेवं सत्यस्य सत्यत्वं यो वेद, स यदि ह वै कदाचित्प्रमादतो मृषाऽपि वदति, सत्यमवितथमेव ह वै अस्य विदुषः उदितं उक्तं भवति संपद्यते । अनृतदोषो नैनं हिनस्तीत्यर्थः । विदुषः फलमेतत् ।

शंकर.

(२) तस्मात् श्रुत्वा परं ब्रह्म देवा नारायणाभिधम् । शिष्यप्रशिष्यादिषु च तेऽनयन्वायुनोदितम् । वायुमप्यनयन्सर्वे यशसा तद्गुणोक्तितः । ये ये गुणान्विजानन्ति वायोस्तानाविशन्मरुत् । तत्र तत्र प्रविष्टत्वा[illegible]ऽसौ बभूव ह । प्रततत्वात्प्रातरिति तस्य नामा[illegible] । संगतश्चाभवज्जीवञ्चिता रूपान्तरेण सः । [illegible]मिति तद्रूपं नामतोऽभवत् । वायोस्त[illegible] प्राणापानामिधं द्वयम् । अध्यात्मसन्निवा-गाख्यश्चक्षुः सूर्यः प्रकीर्तितः । यज्ञादिसाधने यत्तु मनश्चन्द्रः प्रकीर्तितः । मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः । श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम् । श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम् । यम एव षडङ्गानां विषयश्रवणोचितम् । श्रोत्रं तु वरुणः काम्यशास्त्रार्थे मित्र एव च । श्रोत्रं यन्नीतिशास्त्रार्थं कुबेरश्च प्रकीर्तितः । विष्णुना प्रहितानां हि संयोगोऽध्यात्ममेषु हि । शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरा । एताः सर्वा देवता हि ब्रह्मवायुसुपर्णकाः । शेषशंकरशक्राश्च चन्द्रसूर्ययमा अपि । अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः । अधिदैवं स एवैक आधिक्यात्पुरुषोत्तमः । देवमात्रास्तदन्ये तु स आविः पुरुषोत्तमः । पूर्णज्ञानस्वरूपत्वादेतावत्कथितं भवेत् । तात्पर्यात्सर्ववेदैश्च तज्ज्ञानन्नवदन्मुनिः । हिरण्यदन्नाम वैदो भूतेषु हि सुरान्तते । मदभीष्टं ममादातुं नैवेष्टे कश्चनाञ्जसा । विष्णुना प्रहितानां हि देवानामहमुत्तमम् । वेद संयोगमध्यात्मं ततो मुक्तौ यथेष्टभुक् । स्यान्नैवात्रास्ति संदेहः स्वेच्छाविहृतिरेव च । मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा । अधिदैवेन सहिता विष्णुना प्रभविष्णुना । एतद्धि तेन कथितं मुनिना तत्त्ववेदिना । विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा । वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् । एतादृशोपासनाया योग्यः सन्सततं सुधीः । स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि । मुक्तस्य वैष्णवे लोके मुक्तानि च न संशयः । इत्येतद्ध्यानयोग्याश्च मुनयो देवतास्तथा । मानुषा ज्ञानमात्रेण स्थावरैः पूज्यतामयुः । मुक्तामुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः । स एष भगवान्विष्णुः सत्यमित्यभिधीयते । सर्वोत्तमत्वात्पूर्णत्वात्सर्वज्ञत्वात्तथैव च । देवतात्रयमन्यच्च पृथक्सत्यमितीर्यते । शेषवीन्द्रशिवादिभ्य उत्तमत्वात्सदैव हि । वायुः सदिति संप्रोक्तो जीवेषु तु सुपूर्णतः । तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् । अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत । अतिनादात्सदा वेदैरप्यन्नं स चतुर्मुखः । यमित्यादित्य उद्दिष्टो यमयेद्यत्प्रकाशनात् । देवतात्रयमेतत्तु सहितं सत्यमुच्यते । शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः । एवं सत्यपदार्थं हि विज्ञायोपास्त आदरात् । योग्यस्तस्या उपासाया नैवासत्येन दुष्यति ।

देवता मुनयश्चैव योग्या अस्या अपि स्फुटम्। मानुषाणां ज्ञानमात्राद्दोषो नातितरां भवेत् ॥

मध्व.

बृहत्यात्मा प्राणः सर्वव्यापकः

**तस्य[1] वाक्तन्तिः। नामानि दामानि। तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितम्। सर्वं हीदं नामनी ३। सर्वं वाचाऽभिवदति। वहन्ति ह वा एनं तन्तिसंबद्धा य एवं वेद। तस्योष्णिग्लोमानि। त्वग्गायत्री। त्रिष्टुम्मांसम्। अनुष्टुप्स्नावानि। अस्थि जगती। पङ्क्तिर्मज्जा। प्राणो बृहती। स छन्दोभिश्छन्नः। यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते। छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणः। यस्यां कस्यांचिद्दिशि कामयते। य एवमेतच्छन्दसां छन्दस्त्वं वेद ॥**

स ह सर्वेण भोज्येन संयुक्तः प्राणः सत्यैकशब्दवाच्यो भवतीत्युपसंहृतम्। तस्यैव प्राणस्य विभूत्यन्तराभिधित्सया इदमारभ्यते— तस्य वाक्तन्तिर्नामानीति। तस्य प्राणस्य वाक् करणं तन्तिरिव तन्तिः। यथा वत्सतन्तिर्लोके स्वात्मसवन्धिभिर्दामभिर्वत्सान् संग्रथ्नाति, तथा वाक्तन्तिसमुत्थितानि हि नामान्यभिधानानि दामानीव दामानि। सर्वं हि जगदभिधेयरूपं नामभिः प्रकाश्यमानं बद्धमिव दामभिरिव वत्साः। तदेतत्सामान्यमाह-- तदिदं जगदस्य प्राणस्य वाचा तन्त्या नामभिर्दामस्थानीयैः सर्वमशेषं सितं बद्धम्। सर्वं हि यस्मात् इदं नामनी ३ नाम्नि बद्धमिव, तेन प्रकाश्यमानत्वात्। तस्माद्युक्तमुक्तं नामभिर्दामभिः सर्वं सितमिति। प्रसिद्धं चैतत्सर्वं वाचाऽभिवदति सर्वो लोकः। ते एवमेते अभिधानाभिधेयलक्षणे नामरूपे प्राणस्य ममात्मभूते न मत्तो व्यतिरिच्येते इत्येवं यो वेद, तमेनमेवंविदं प्रति वहन्ति प्रापयन्ति वाक्तन्तिसंबद्धा नामाभिधेयभूताः प्राणिनो बलिं करदा इव राजानं प्रति। यथाऽयं प्राणो बाह्यभूताभ्यां नामरूपाभ्यां मर्त्याभ्यां छन्नो वृतः तयोरुपष्टम्भकः, एवं प्राणस्थानीया बृहती इतरैश्छन्दोभिश्छन्ना प्राण इव तैर्व्याप्ता। तस्मात्सैव अस्मिन् क्रतौ शस्या। तस्यां हि शस्यमानायां सर्वाणि छन्दांस्युपात्तानि भवन्ति, यथा प्राणेनात्मना नामरूपात्मकं जगद्व्याप्तम्। इत्येतमर्थं दिदर्शयिषुराह---तस्योष्णिग्लोमानि। तस्यास्य बृहत्यात्मनः प्राणस्योष्णिग्लोमानि पुरुषस्य लोमानि, उष्णिक् सप्ताक्षरा लोमसंस्तुता। त्वग्गायत्री अष्टाक्षरा अतो लोम्नोऽभ्यन्तरा त्वक्संस्तुता। त्रिष्टुबेकादशाक्षरा त्वचोऽभ्यन्तरा मांससंस्तुता। अनुष्टुप् ततोऽभ्यन्तरा स्नावानि स्नावसंस्तुता। अस्थि जगती स्नाम्नोऽभ्यन्तरा आस्थिसंस्तुता द्वादशाक्षरा। पङ्क्तिर्मज्जा दशाक्षरा अस्थ्नोऽन्तर्मज्जासंस्तुता। प्राणो बृहती सर्वाभ्यन्तरत्वाद्बृहती प्राणसंस्तुता। सा चतुर्थी सर्वछन्दसां मध्ये भवन्ती सती इतराणि षट् छन्दांसि आप्नोति इत्यात्मसंस्तुता। सा त्विह शरीरधातुसंस्तवे छन्दसां परस्तात्पठिता, प्राणसंस्तवस्य विवक्षितत्वात्। स प्राणो बृहत्यात्मा छन्दोभिरितरधातुभूतैश्छन्नः छादितः। यत् यस्माच्छन्दोभिश्छन्नः, तस्माच्छादनाच्छन्दांसीत्याचक्षते शिष्टाः। गायत्र्यादीनि बृहत्यात्मप्राणभूतं मां अन्यानीतरधातुभूतानि छन्दांसि छादयन्ति वर्माणीव योद्धृन् गोपायन्ति। अतश्छादनाच्छन्दसां छन्दस्त्वं यथोक्तमेवं यो वेद तमेनं छादयन्ति रक्षन्तीत्यर्थः, ह वै छन्दांसि। कुत इत्युच्यते— पापाद्दुरितात्कर्मणः शरस्थानीयाद्धर्मस्थानीयानि योद्धारमिव यस्यां कस्यांचिद्दिशि यस्मिन्कस्मिंश्चिद्दिग्विशेषे प्राच्यादौ कामयते इच्छति पापं कर्म कर्तुमिच्छतीति वाक्यशेषः। तस्मात्कर्मणो रक्षन्तीति विद्याफलम्।

शंकर.

**तदुक्तमृषिणा। अपश्यं गोपामिति। एष वै गोपाः। एष हीदं सर्वं गोपायति। अनिपद्यमानमिति। न ह्येष कदाचन संविशति। आ च परा च पथिभिश्चरन्तमिति। आ च ह्येष परा च पथिभिश्चरति। स सध्रीचीः स विषूचीर्वसान इति। सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिशः। आवरीवर्ति भुवनेष्वन्तरिति। एष ह्यन्तर्भुवनेष्वावरीवर्ति ॥**

एतदुक्तं वस्तु ऋषिणा मन्त्रेणाप्युक्तं प्रकाशितम्। दीर्घतमा नाम ऋषिरेतस्मिन्प्राणात्मदर्शनेऽवस्थितस्तदर्थप्रकाशकमेवं मन्त्रं ददर्श। अपश्यं अदर्शं गोपां गोपायितारं रक्षितारं प्राणं सर्वस्य जगतः। अनिपद्यमानं

(१) ऐआ. २।१।६; श्रीकंठ. २।४।१२.

स्वव्यापारोपरमेण नीचैरगच्छन्तं अनस्तमितस्वरूपेणैव वर्तमानमित्यर्थः । आ च आचरन्तं अर्वाग्भूतैः पथिभिरनेकधा गच्छन्तं प्राण्युपकारार्थमित्यर्थः । स एव प्राणः सध्रीचीः सध्रीच्यो दिशः सह अञ्चन्तीति । 'सहस्य सध्रिः' (पा. सू. ६।३।९५) । स विषूचीः उपदिशो विष्वग्गमनात्, ता एव प्राणः वसानः व्याप्य वर्तमानः । आवरीवर्ति अत्यर्थमनुपरीवर्ति विभ्रमतीत्यर्थः । भुवनेषु लोकेषु अन्तः मध्ये स्रङ्मणिसूत्रवद्विधारयन् भूतानीत्येवंमहिमा यः तमहमपश्यमिति दीर्घतमसो वचो मन्त्रः । गोपामित्येतत्पदं ब्राह्मणं व्याचष्टे — एष वै प्राणो गोपा इति । एष हीति प्रसिद्धिरुच्यते हेत्वर्थम् । प्रसिद्धं प्राणस्य गोप्तृत्वमित्यर्थः । अनिपद्यमानमिति न ह्येष कदाचन संविशतीत्यविश्रान्तत्वमुच्यते प्राणस्य ह्यध्यात्ममधिदैवतं च । आ च परा च पथिभिश्चरन्तमिति आ च ह्येष परा च पथिभिश्चरति इति प्रसिद्धमेतत् । स सध्रीचीः स विषूचीर्वसान इति सध्रीच्यो विषूच्यश्च दिश इत्याह । वसान इति ता दिश एव वस्ते अधिदेवतात्मना निवसति । आवरीवर्ति भुवनेष्वन्तरिति एष ह्यन्तर्भुवनेष्वावरीवर्ति वायुः । शंकर.

**अथो आवृतासोऽवतासो न कर्तृभिरिति । सर्वं हीदं प्राणेनाऽऽवृतम् ॥**

अन्येन च मन्त्रेण तमेतमेव प्राणं स्तौति— 'अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे । आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ॥' (ऋसं. १।५५।८) । अप्रक्षितं अनुपहिंसितं अप्रक्षीणं वा वसु धनं कर्मफलाख्यं बिभर्षि धारयसि हस्तयोः दक्षिणोत्तरायणयोरधिदैवं, अध्यात्मं च प्राणापानयोः जीवनादिलक्षणं कर्मफलम् । किंच, अषाळ्हं अमर्षणीयं अप्रसह्यमन्यैः । किं तत् । सहः बलं तवेत्यर्थः । यस्मात्, तस्मात्कर्मफलरूपं जगद्धारयितुमुत्सहसे इत्यर्थः । किंच, तन्वि तनौ शरीरे आत्मनः श्रुतः श्रवणानि ज्ञानानि दधे धारयसि । स्वदेहाश्रितमेव हि ज्ञानं सर्वं, सर्वात्मकत्वात्तव । किंच, आवृतासः आवृताः । के । अवतासः अवताः अवटाः । न आवृता इवावृताः । नकारस्योपरिष्टादुपचारात् उपमार्थत्वम् । यथा हिरण्यनिध्यादिवस्तुस्थापनकर्तृभिः अवटेषु हिरण्यादि द्रव्यं निधाय मृत्पाषाणादिभिरवटानावृण्वन्ति आच्छादयन्ति । तत्र यथा कर्तृभिरवटा आवृतास्तथा ते तव तनूषु शरीरेषु क्रतवः संकल्पविशेषा निधिस्थानीयानि ज्ञानानीत्यभिप्रायः, हे इन्द्र हे परमेश्वर भूरयः बहवः । अनेकज्ञानाश्रयः सर्वज्ञस्त्वमित्यभिप्रायः । *क्रतवो यज्ञविशेषा वा । यज्ञस्त्वमित्यभिप्रायः । 'अयं वै यज्ञो योऽयं पवते' इति श्रुतेः । आवृतास इत्येकं पदं ब्राह्मणं व्याचष्टे — सर्वं ज्ञानकर्मफलात्मकं हि यस्मादिदं जगत् प्राणेनावृतं व्याप्तं सर्वतः । शंकर.

**सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धः । तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्धः । एवं सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात् ॥ ६ ॥**

( १ ) किंचान्यमपि दृष्टान्तमाह — सोऽयं प्रसिद्ध आकाशः प्राणेन बृहतीछन्दोरूपेण बृहत्या विष्टब्धो विशेषेण स्तब्धो दृढीकृतो व्याप्तः । स प्रसिद्धो दृष्टान्तत्वेनोपादीयते । तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्धः, एवं सर्वाणि भूतानि जीवाविष्टान्या पिपीलिकाभ्यः पिपीलिकाभिः सह प्राणेन मया बृहत्या विष्टब्धानीत्येव विद्यात् । 'अहमुक्थमस्मीति विद्यात्' इति प्रकृतो विधिः सर्वत्रानूद्यते अन्येनान्येन च गुणेन संबन्धार्थः । प्राक् 'आत्मा वै' (ऐआ. २।४।१) इत्येतस्मात्प्राणविषयमेव दर्शनं एकमेव अनेकगुणफलसंबन्धात् मन्दबुद्धीनामनेकदर्शनभ्रान्तिकारणं भवति । शंकर.

( २ ) तस्य नारायणस्यैव सर्ववेदात्मिका हि वाक् । तन्तिरूपा जगद्बन्धे नामब्रह्मादिकं तु यत् । विप्रक्षत्रियवैश्यादिरूपं चाखिलमेव तु । दाम तेनैव बध्नाति सकलं जगदच्युतः । सर्वे हि नामवन्तोऽत्र सर्वे वेदोदिता अपि । वेदात्मिकया यतो वाचा विष्णुर्वदति सोऽखिलम् । य एतद्विष्णुवाचैव बद्धं नामाख्यदामभिः । ज्ञात्वा जगदुपास्ते तु योग्यः संस्तदुपासने । तं प्रत्येवा-

* आदर्शपुस्तके "क्रतवो यज्ञस्त्वमित्यभिप्रायः । क्रतवो यज्ञविशेषा वा 'अयं वै यज्ञो योऽयं पवते' इति श्रुतेः ।" इत्येतादृशी पङ्क्तिर्मुद्रिताऽस्ति । तस्या असाधुत्वं मत्वाऽस्माभिरेवं परिवर्तिता ।

खिलान्येव भूतानि सह दैवतैः । बलिं हरन्ति पश्चाथ भूतान्येनं वहन्ति च । योग्यश्चास्य ( स्या ) उपास्याया योग्यो ब्रह्मपदस्य यः । भूतयुक्ते रथे तस्मात्स तिष्ठति सुरार्चितः । मुक्तः संश्च तदन्येषां ज्ञानमात्राद्विमुक्तिगैः । स्वावरैः सेव्यतैव स्यात्कैश्चिदेव क्वचित् क्वचित् । तथैव वायुना बद्धं जगदेतत्ततोऽवरम् । सुपर्णशेषगिरिशशक्रसूर्याद्यमञ्जसा । विष्णोर्वायोश्च लोमादौ छन्दांस्येवाश्रितानि च । विष्णोर्विमुक्तवायोश्च लोमाद्यं तु चिदात्मकम् । लोमप्राणादिभेदश्च नैव कश्चिच्चिदात्मनि । छन्नश्छन्दोभिरेवं स केशवस्तेन चाभिधा । छन्दांसीत्येव तेषां हि य एवंविदुपासकः । निवारयन्ति पापेभ्यश्छन्दांसि किमु केशवः । योग्या अस्याश्च विद्याया भृग्वाद्या देवतास्तथा । छन्दःसु संस्थितो विष्णुर्गोपायत्येव तद्विदम् । मन्त्रोऽप्यर्थमिमं प्राहाऽपश्यं गोपामिति स्म ह । एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः । छन्दःसु संस्थितो वायुर्वायौ च स जनार्दनः । वायुश्च वायुसंस्थश्च कदाचिन्नैव तिष्ठतः । वायुर्हि नित्यसंचारी सदा सर्वप्रवृत्तिमान् । चोदितः केशवेनैव तत्स्थेनामितशक्तिना । आसमन्तात्पराक्चापि पञ्चभूतेभ्य ईश्वरः । वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः । सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि । नित्यदा वसतः कोणदिक्ष्वथासु विषूचिषु । अन्तश्च सर्वलोकेषु चरतो लोकसाक्षिणौ । हस्तयोरेतयोरेव नित्याक्षीणं वसु स्थितम् । तद्व्यसह्यं बलं वायोरनन्तं किमु तद्धरेः । वायोराधारभूतस्य ताभ्यां हि क्रतुनामकाः । आवृताः सर्वजीवा हि यथैव कनकावटाः । आच्छाद्यन्ते वित्तवद्भिस्ताभ्यामेव च चेतनाः । आवृता महदाद्यास्तु देहे तिष्ठन्ति चैतयोः । विष्टब्धाश्चैव सर्वेऽपि जीवा आकाश एव च । स वायुः प्रकृतिश्चैव विष्टब्धौ केशवेन हि । बृहत्त्वाद्बृहतीत्येव तयोर्नाम प्रकीर्तितम् । वायुकेशवयोः प्राणनाम सर्वप्रणायनात् । विशेषेण बृहत्प्राणो भगवांस्तत्र केशवः । इति विद्यात्– ॥ मध्व.

पुरुषरूपप्रजापतेरिन्द्रियेभ्यः जाता सृष्टिः

**अथातो विभूतयोऽस्य पुरुषस्य । तस्य वाचा सृष्टौ पृथिवी चाग्निश्च । अस्यामोषधयो जायन्ते । अग्निरेनाः स्वदयति । इदमाहरतेदमाहरतेति । एवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च । यावदनु पृथिवी । यावदन्वग्निः । तावानस्य लोको भवति । नास्य तावल्लोको जीर्यते । यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च । य एवमेतां वाचो विभूतिं वेद ॥**

अग्न्यादीनामध्यात्मसंयोगो निविष्ट उक्तः, तत्र कारणं वक्तव्यमित्यत आह— अथातो विभूतयोऽस्येति । अथ अनन्तरं विभूतयः विस्ताराः अस्य ज्ञानकर्माधिकृतस्य पुरुषस्य प्रजापतेः । अस्य हि पुरुषस्य ज्ञानकर्मभ्यां स्रष्टृत्वात्कार्यभूताः सह पृथिव्यादिस्थानैरग्न्यादयो देवाः स्थानिनः । ते तस्मिन्कारणे पुरुषेऽध्यात्मं निविष्टा इत्यस्य उपपन्नो हेतुरुच्यते । कारणे हि कार्यं निविष्टं भवति । तस्य पुरुषस्य वाचा कारणभूतया ज्ञानकर्मसव्यपेक्षया सृष्टावुत्पादितौ पृथिवी च स्थानं अग्निश्च स्थानी । तौ च वाचः पुत्रौ सन्तौ पितुः कमुपकारं कुर्वाते इत्युच्यते । अस्यां पृथिव्यामोषधयो जायन्ते । ताश्चैता अग्निर्भक्ष्यभोज्यादिप्रकारेण पक्तिं कुर्वन्स्वदयति स्वादयुक्ताः करोति । स च पिता वाक् स्वादुतरं इदमाहरतेदमाहरत इत्याहूय भक्षयति । एवमोषधोजननपक्तिरूपेण एतौ पृथिवी चाग्निश्च वाचं पितरं परिचरतः परिचरणं कुर्वाते । मम वाचो विभूतिविस्ताराः पृथिव्यग्नी, इत्येवमेतां वाचो विभूतिं यो वेद तस्यैतद्विद्याफलमुच्यते— यावद्वस्त्वनु पृथिवी व्याप्तवती, यावच्चाग्निर्व्याप्तवान्, तावानस्य विदुषो लोको भोगो भवति, तावदस्यात्मा विस्तीर्यते इत्यर्थः । किंच नास्य तावल्लोको जीर्यते न तावत्क्षीयते । कियन्तं कालं इत्याह— यावदेतयोः पृथिव्याश्चाग्नेश्च लोको न जीर्यते तावन्तं कालमित्यर्थः । एवमुत्तरेषु वाक्येषु योज्यम् । शंकर.

**प्राणेन सृष्टावन्तरिक्षं च वायुश्च । अन्तरिक्षं वा अनु चरन्ति । अन्तरिक्षमनु शृण्वन्ति । वायुरस्मै पुण्यं गन्धमावहति । एवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च । यावदन्वन्तरिक्षम् । यावदनु वायुः । तावानस्य लोको भवति । नास्य तावल्लोको जीर्यते । यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च । य एवमेतां प्राणस्य विभूतिं वेद ॥**

(१) ऐआ. २।१।७; ब्रसंकर. ३।१।५.

चक्षुषा सृष्टौ द्यौश्चादित्यश्च । द्यौर्हास्मै वृष्टिमन्नाद्यं संप्रयच्छति । आदित्योऽस्य ज्योतिःप्रकाशं करोति । एवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च । यावदनु द्यौः । यावदन्वादित्यः । तावानस्य लोको भवति । नास्य तावल्लोको जीर्यते । यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च । य एवमेतां चक्षुषो विभूतिं वेद ॥

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च । दिग्भ्यो हैनमायन्ती ँ ३ । दिग्भ्यो विशृणोति । चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मणे । एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च । यावदनु दिशः । यावदनु चन्द्रमाः । तावानस्य लोको भवति । नास्य तावल्लोको जीर्यते । यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च । य एवमेतां श्रोत्रस्य विभूतिं वेद ॥

मनसा सृष्टा आपश्च वरुणश्च । आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे । वरुणोऽस्य प्रजां धर्मेण दाधार । एवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च । यावदन्वापः । यावदनु वरुणः । तावानस्य लोको भवति । नास्य तावल्लोको जीर्यते । यावदेतेषां न जीर्यतेऽपां च वरुणस्य च । य एवमेतां मनसो विभूतिं वेद ॥ ७ ॥

( १ ) पुरुषस्य नासिक्यप्राणेन सृष्टौ अन्तरिक्षं च वायुश्च एतमुपकारं कुर्वाते । अन्तरिक्षमनु लक्षयित्वा चरन्ति पितरः । तथा अन्तरिक्षमेव लक्षयित्वा शृण्वन्ति । नहि मूर्तद्रव्येण निरुद्धाः सर्वतश्चरन्ति शृण्वन्ति वा । वायुरस्मै पित्रे पुण्यं गन्धमावहति । ननु अपुण्यमपि गन्धं जिघ्रति पिता, तत्र पुण्यमिति कथं विशेषणम् । नैष दोषः । सर्वोऽपि गन्धः पुण्य एव पितुः प्राणस्य । मनसा तु कर्मवशाद्विकल्प्यमानोऽपुण्यो भवति । तदपेक्षया प्राणस्य पुण्यं गन्धमावहतीति विशेषणम् । चरणश्रवणपुण्यगन्धहेतुत्वेन अन्तरिक्षवायू प्राणं पितरं प्रत्युपकुर्वाते । चक्षुषा सृष्टौ द्यौश्चादित्यश्च । द्यौर्हास्मै पित्रे वृष्टिरूपेणोदकमन्नाद्यं प्रयच्छति । आदित्योऽस्य चक्षुषो रूपोपलब्धये ज्योतिरेव प्रकाशः ज्योतिःप्रकाशः तं [illegible] उपकारं करोति । श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च । दिग्भ्यो हैनमायन्ती ँ ३ । आगच्छन्ति सर्वे भोगविशेषाः । दिग्भ्य एव समुपस्थितान् शब्दान् शृणोति । एवं दिशः पितरमुपकुर्वन्ति । चन्द्रमाश्चास्मै पुण्याय कर्मणे पूर्वपक्षापरपक्षौ विचिन्वन् विभजमानः पुण्यकर्माङ्गत्वाय उपकरोति । मनसा सृष्टा आपश्च वरुणश्च । वरुणः अन्नायतनो देवतात्मा । आपो ह्यस्मै पित्रे पुण्यकर्माङ्गत्वाय श्रद्धां आस्तिक्यबुद्धिं संनमन्ते उत्पादयन्तीत्यर्थः । वरुणस्तु अस्य प्रजां धर्मेण दाधार धृतवान् धारयतीत्यर्थः । वारुणैर्व्याध्यादिभिरसंसृष्टां धर्मयुक्तां च प्रजां करोति । श्रद्धोत्पादनप्रजाधारणाभ्यां उपकुर्वन्त्यापश्च वरुणश्च । समानमन्यत् । एवमेकैकः पुरुषो ज्ञानकर्मभ्यां सर्वस्य जगतः स्रष्टृत्वात् प्रजापतिरेव । शंकर.

( २ ) — तस्य विष्णोरङ्गानामथ वैभवम् । उच्यते तस्य वाचा हि सृष्टावग्निः क्षितिस्तथा । शुश्रूषार्थं तस्य पृथ्वी जनयत्योषधीः प्रभोः । ताः पचत्यग्निरुद्युक्त आहुता आहुताः पुनः । आहरेति वचोऽस्यापि शृण्वन्त्येव महर्षयः । मुखजत्वात्तयोर्विष्णोर्मुखं जनकमिष्यते । आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा । सर्वैर्यद्भुज्यते चान्नं तत्र तत्र स्थितो हरिः । तद्भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतः सदा । विष्णोर्वाग्विभवं वेद य उपास्ते च सर्वदा । योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः । समं तयोर्व्यासिमांश्च तद्वन्मुक्तश्च नित्यदा । अनष्टलोको वसति समीपे केशवस्य च । योग्या अस्या उपासायाः पृथिव्यग्निपदस्य ये । योग्यास्ते वै मुख्यतया तदन्ये यत्र तौ स्थितौ । तत्र चर्तुं समर्थाः स्युर्मुक्तिं प्राप्य यदृच्छया । कादाचित्कोपासने तु तावत्येषां च योग्यता । वेदनं ह्यापरोक्ष्येण मुख्यं भवति नान्यथा । एकदेशविदो यस्मात्परोक्षज्ञानिनोऽखिलाः । आपरोक्ष्यं भवेद्यस्मान्नैवोपासामृते क्वचित् । तस्माद्ध्युपासापूर्वं तु योऽपरोक्षं प्रपश्यति । स एव वेद नान्यस्तु योग्यश्चैवापरोक्षदृक् । तस्माद्योग्यस्योक्तफलमन्येषां किंचिदेव हि । प्राणादिभ्यश्च वाय्वाद्या एवं विष्णोः प्रजज्ञिरे । ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः । ते विष्णोर्मनसो जाताः सर्वे द्याऽवभिमानिनः । वैश्वदेव्यस्ततो ह्यापो

वरुणश्च मनोभवः। प्राणिनां पूर्तपुण्येषु श्रद्धारूपमनोऽधिपः। एवं हि सर्वदेवा हि विष्णवङ्गेभ्यः प्रजज्ञिरे। स्वोत्पत्त्यङ्गं च ते विष्णोः शुश्रूषन्ते पृथक्पृथक्। विष्णोर्विषयधर्मेषु ज्ञानादिषु चतुर्मुखः। श्रद्धां ददाति भूतानां वैदिकश्रवणे विपः। तान्त्रिके शेषरुद्रौ च शक्रो यज्ञादिकर्मणि। वायुर्गन्धवहश्चास्य भक्तिज्ञानप्रदस्तथा। भूतानां तस्य विषये त्वन्तरिक्षं च कर्मणः। तदीयस्यैव भोगार्थे जीवानां श्रुतिचारदम्। अन्तरिक्षं च विघ्नेशः सूर्यस्तत्कर्मसिद्धये। भूतानां ज्योतिषो दाता द्यौरप्यन्नाद्यदायिनी॥ मध्व.

सर्वमुदकरूपं मूलतूलपितापुत्ररूपं च, इन्द्रियसमुदायो ब्रह्मगिरिः

**आपा३ इत्याप इति। तदिदमाप एव। इदं वै मूलमदस्तूलम्। अयं पितैते पुत्राः। यत्र ह क्व च पुत्रस्य तत्पितुः। यत्र वा पितुस्तद्वा पुत्रस्येति। एतत्तदुक्तं भवति। एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः। आऽहं मां देवेभ्यो वेद। ओ मद्देवान्वेद। इतःप्रदाना ह्येत इतःसंभृता इति॥**

**स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणः। तं ब्रह्मगिरिरित्याचक्षते। गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यम्। पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद॥**

अयं जगत्सृजन् पुरुषः किमुपादाय सृजतीति सृष्टिमूलनिर्दिधारयिषयेदं प्रस्तूयते। दृश्यते ह्यब्बाहुल्यं जगतः संहतत्वात्। संहतिश्चाप्कार्या मृत्पिण्डादिषु दृष्टा। अतः अपामुपादानकारणत्वं जगतः आशङ्क्य आप्तो विचारयन्नाह— आपा३ः इत्याप इति। आपा३ः इति प्रस्तौति। विचार्य च अन्यस्यासंभवादाप इति निश्चयं चकार। तदिदं जगत् आप एव। यद्यपि इतराणि भूतानि विद्यन्ते, तथापि तु आप एवेदं जगदिति निश्चीयते भूयस्त्वदर्शनात्। कनीयांसि चेतराणि भूतानि। 'आप्तं वै भूयसा कनीयः' (ऐआ. २।३।६)। भूयसश्चारम्भकत्वं प्रसिद्धं लोके। तस्मादप्प्रधानानि भूतान्युपादानं जगत इति। एवं सति इदं अध्यात्मम्। वै इत्यवधारणार्थम्। इदमेव जगतो मूलं, अदः तत्पृथिव्यादिलक्षणं तूलं अग्रम्। अयं पुरुषः कर्मज्ञानाधिकृतः पिता, एते पृथिव्यग्न्यादयः पुत्राः। तथा च व्याख्यातं विभूतिखण्डे—यत्र ह क्व च यस्मिन्कस्मिंश्चित्पुत्रस्य स्वभूतं यद्वस्तु तत्पितुरपि स्वमेव भवति, पितुरात्मभूतत्वात्पुत्रस्य। 'आत्मा वै पुत्रनामासि' (कौउ. २।११) इति दर्शनादात्मत्वमविशिष्टं पितापुत्रयोरिति। यत्र वा पितुर्वस्तु स्वभूतं तद्वा पुत्रस्येति प्रसिद्धं लोके। तथैवेहापि पृथिव्यग्न्यादीनां यत् स्वं तत्पुरुषस्य, यच्च पुरुषस्य तत्पुत्रस्थानीयानां पृथिव्यग्न्यादीनां, एकत्वादध्यात्माधिदैवतयोः। तथा च व्याख्यातम्—यावदनु पृथिवीत्यादिना। एतत्तदुक्तं भवतीति पूर्ववत्। तदेतदध्यात्माधिदैवतैकत्वलक्षणं वस्तु विद्वान् महिदासो नामतः इतराया अपत्यमैतरेयो वेदवदाह स्म। किमाहेत्युच्यते—आ देवेभ्यः देवैः सह एकत्वेन मां आत्मानमहं वेद जाने। आ उ मत् ओ मत्। मया सह एकत्वेन च देवान् वेद। इतः अस्मादध्यात्मं कर्त्रा प्रयुज्यते चरुपुरोडाशादि स्थितिकारणं प्रदानं येषां देवानां ते इतःप्रदानाः हि यस्मात् एते इतः अस्माल्लोकात् मया पित्रा पुत्रा इव अन्नसंस्कारादिना संभृताः सम्यग्भृताः तस्मान्मम च देवानां चैकत्वमेव। यदुक्तमिदं वै मूलमदस्तूलमिति तदेवम्—इतो यद्देवानां सोमाज्यपयःपश्वादि संप्रदीयते तस्मादब्वा(तस्याऽब्वा)-हुत्यादप्त्वं, तत्साधनं वै अग्निहोत्रादिलक्षणं कर्म जगतो मूलं, इत्यतोऽपां जगत्कारणत्वमुपपन्नम्। एवं आप एव इत्युक्तं पुरुषस्य प्रजापतित्वनिरूपणप्रसङ्गेन अप्साधनं कर्म पुरुषनिर्वर्त्यं जगतः कारणमवधृतम्। सर्वोऽप्ययं प्राणस्यैव गुणविस्तारो यत्कारणं यच्च कार्यं, तस्य सर्वस्य प्राणव्यतिरेकेणाभावात्। तस्मात्स प्राणो ब्रह्म इत्युक्तं बृहत्यात्मा च। सर्वस्य तस्य ब्रह्मण आत्मत्वेन अनुपलब्धिकारणमिदमुच्यते—स एष वक्ष्यमाणः चक्षुः श्रोत्रं मनो वाक् प्राण इतीन्द्रियसमुदाय एव गिरिरिव गिरिः। यथा गिरिः उदकरत्नादीनां गिरणाच्छिलासंचयः, तथा चक्षुरादीन्द्रियगिरिरपि प्राणात्मनोः परापरयोर्ब्रह्मणोर्गिरणाद्गिरिः। तं च अत एव ब्रह्मगिरिरित्याचक्षते शिष्टाः। चक्षुरादिव्यापारासक्तबुद्धिः सर्वो लोकः ब्रह्म नोपलभते गीर्णमिवेन्द्रियैः। यस्तु स्वव्यापारप्रवृत्तैरिन्द्रियैराच्छादित-

(१) ऐआ. २।१।८; ब्रमध्व. १।१।२८,.३१,३।४।४०.

त्वान्नोपलभ्यते ब्रह्म इति वेद स इन्द्रियव्यापारमुत्सृजन् तद्व्यापारजनितं पाप्मानमात्मनो विद्विषन्तं भ्रातृव्यं गिरति विनाशयति इत्यनुरूपमेव विद्याफलम्। गतमन्यत्। शंकर.

भूत्यभूत्यमृतमृत्युरूपः प्राणः

**स एषोऽसुः स एष प्राणः। स एष भूतिश्चाभूतिश्च। तं भूतिरिति देवा उपासाञ्चक्रिरे। ते बभूवुः। तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति। अभूतिरित्यसुराः। ते[1] परा बभूवुः। भवत्यात्मना। पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति। य एवं वेद॥**

प्राणब्रह्मणः स्तुतिः उपास्यत्वात्प्ररोचनार्थमारभ्यते। स एषोऽसुः प्राणनं जीवनं प्राणिनाम्। कोऽसौ। यः प्रस्तुतः स एष प्राणः। किंच स एष एव भूतिहेतुत्वाद्भूतिः। प्राणवतो हि भूतिर्भवति नाप्राणस्य। तथा अभूतिश्च अभूतिहेतुत्वात्। तं भूतिरिति देवा उपासाञ्चक्रिरे। भूतिगुणोपासनात्ते देवा बभूवुः भूतिमन्तः संवृत्ता इत्यर्थः। यस्माद्भूतिगुणवानसौ प्राणः तस्माद्धाप्येतर्हि एतस्मिन्नपि काले सुप्तः पुरुषो भूर्भूरित्येव शब्दानुकरणं कुर्वन् भूतिगुणवत्त्वमात्मनो दर्शयन्निव प्रश्वसिति। अभूतिः अभूतिहेतुत्वात्। प्राणापक्रमणे हि अभूतिः प्रसिद्धा लोके। अतः अभूतिरित्युपासाञ्चक्रिरे। तेन ते ह पराबभूवुः। तस्माद्भूतिगुणवान्प्राण उपास्यो नाभूतिगुणः। भूतिगुण एवाहं प्राण इत्येवं यो वेद उपास्ते तस्मै तद्विद्याफलमुच्यते— भूतिगुणात्मनैव देववद्भवति। द्विषंश्च पाप्मा भ्रातृव्यः असुरवत्पराभवति। शंकर.

**स एष मृत्युश्चैवामृतं च। तदुक्तमृषिणा। अपाङ् प्राङेति स्वधया गृभीत इति। अपानेन ह्ययं यतः प्राणो न पराङ् भवति। अमर्त्यो मर्त्येना सयोनिरिति। एतेन हीदं सर्वं सयोनि। मर्त्यानि हीमानि शरीराणी३। अमृतैषा देवता। ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यमिति। निचिम्वन्ति हैवेमानि शरीराणी३। अमृतैषा देवता। अमृतो ह वा अस्मिँल्लोके संभवति। अमृतः सर्वेभ्यो भूतेभ्यो ददृशे। य एवं वेद य एवं वेद॥ ८॥**

**इति श्रीमदैतरेयद्वितीयारण्यके प्रथमोऽध्यायः॥**

(१) किंच स एष प्राणो मृत्युश्च मरणहेतुत्वात्। तदपगमे हि सर्वो लोको म्रियते। अमृतं च अमृतहेतुत्वात्। तदनपगमाद्धि अमृता देवाः। तदुक्तमृषिणा। 'अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः। ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यम्॥' (ऋसं. १।१६४।३८)। अपाङ् अपनयनं कुर्वन् मूत्रपुरीषादीनां अपानवृत्त्या अपाङेति अधो गच्छति। तथा प्राङ् प्राणवृत्त्या एति। एवं प्राणापानवृत्तिभ्यां लोकस्य जीवनं कुर्वन्नास्ते शरीरेषु। किंनिबन्धना हि तस्य शरीरे स्थितिरित्युच्यते। स्वधया अन्नेन गृभीतो गृहीत इत्येतत्। अन्नेन हि दामस्थानीयेनास्मिन् शरीरे बद्धः प्राणो दाम्ना इव वत्सः। तच्चान्नमपानेनाहृतमपानशब्दवाच्यं प्राणस्य स्थितिकारणं भवतीत्येतदाह ब्राह्मणम्— अपानेन अपानसहभूतेनान्नेनेत्यर्थः। हि अयं प्राणो यतः यस्मात् गृहीतत्वान्न पराग्भवति शरीरमुत्सृज्य न गच्छतीत्यर्थः। अमर्त्यः अमरणधर्मित्वादमृतो मर्त्येन शरीरेण सयोनिः समानस्थानः समाननिबन्धनः। अन्नमेव हि समानं प्राणशरीरयोर्निबन्धनम्। तुल्यप्रसवो वा शरीरेण। यथाव्याख्यातमेवार्थमाह ब्राह्मणम्—एतेन प्राणेन हि यस्मादिदं शरीरजातं सर्वं सयोनीति। कः पुनरमर्त्यः, मर्त्यं वा किं इत्याह—मर्त्यानि हीमानि शरीराणी३। अमृतैषा प्राणदेवता इति। ता तौ शरीरप्राणौ शश्वन्ता शश्वन्तौ। नित्यसहभूतत्वात्प्राणेन शरीरमपि शश्वदिव। विषूचीना विष्वग्गती नानागती। नानागतिष्वपि विरुद्धं यन्तौ वियन्तौ। मर्त्यत्वात् शरीरं अधो याति, प्राणस्त्वमृतत्वादूर्ध्वं याति। न्यन्यं अन्यं देहं निचिक्युः उपचितवन्तः वर्धितवन्तः अन्नपानाभ्याम्। न निचिक्युः न वर्धितवन्तः अन्यं प्राणं अमृतत्वात्। यथाव्याख्यातार्थमेवाह ब्राह्मणम् — निचिन्वन्ति हैवेमानि शरीराणी३। अतो मर्त्यानि तानि अचैतन्यत्वाच्च। अमृतैषा प्राणदेवता। अमृत एवाहं प्राणदेवताऽस्मीत्येवं यो वेद तस्यैतद्विद्याफलम्—अमृतः

[1] [illegible] मध्व. ते क्र (ते ह परा); अमध्व. ३।४।४०

अमरणधर्मा अमुष्मिन् हिरण्यगर्भलोके इतः प्रेत्य संभवति। तद्भूतश्च सन्नमृतः प्राणदेवः सर्वेभ्यो भूतेभ्यो ददृशे दृश्यते। सर्वभूतानां ध्येयो भवतीत्यर्थः। द्विर्वचनमध्यायपरिसमाप्त्यर्थम्। शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयद्वितीयारण्यकभाष्ये प्रथमोऽध्यायः ॥

( २ ) आप इत्येव देवानां ब्रह्मादीनां कथं भवेत्। नामेत्यपृच्छल्लक्ष्मीस्तं महिदासजनार्दनम्। आप इत्येव नामैषां भवतीत्याह स प्रभुः। इदं मदाख्यं यद्ब्रह्म ह्याप इत्यभिधीयते। आपूर्णत्वाद्गुणैः सर्वैस्तन्मूलमखिलस्य च। तूलभूतं तदन्यत्तु पिता ह्येष जनार्दनः। पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत्। स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात्परमेशितुः। तन्नामाप इति ह्येतद्ब्रह्मरुद्रादिनां भवेत्। यथा यदव इत्येव रघवः कुरवस्तथा। पुत्रनाम पितुश्च स्यात् तत्तन्त्रत्वात्सुतस्य हि। यथा पितामहाद्याश्च पितरो नाम कीर्तिताः। तथापि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः। आप इत्येव देवानां सर्वेषां प्रददौ हरिः। स्वकीयमेवमन्यानि पृथक्पृथगदात्प्रभुः। नारायणादिनामानि ददौ नान्यस्य केशवः। एवं स भगवान्विष्णुर्महिदासाभिधः प्रभुः। जानन्नित्योदितज्ञानादाह देवीमिदं वचः। देवपर्यन्तमाप्यार्ति वेदाहं मम सर्वदा। मत्पर्यन्तं तथा व्यार्ति देवानामपि सर्वशः। मयि देवास्तेषु चाहमिति विद्धि वरानने। मयैतानि प्रदत्तानि पदानि ब्रह्मपूर्वकाः। अधितिष्ठन्ति सत्ताद्या अप्येतेषां मदाश्रया। ज्ञानकर्मबलेहाद्या मद्दत्ता इति किंवदे। संभृता मत्त एवैते स एष भगवान् गिरिः। गरणात्सर्वभूतानां चक्षुर्नामास्य दर्शनात्। सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः। प्राणनामा प्रणेतृत्वात्तमेनं गुणपूर्तितः। गरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम्। य एवं वेद तं विष्णुमापरोक्ष्येण शाश्वतम्। गिरत्येवाखिलं पापं भ्रातृवत्सह संस्थितम्। पराभवति पाप्माऽस्य द्वेष्टा निरयगः सदा। असनाद्भगवान्सोऽसुः सर्वस्यापि जनार्दनः। प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते। स एष भूतिनामापि ज्ञानैश्वर्यादिभूतिदः। अज्ञानादिप्रदातृत्वात्स एवाभूतिनामकः। सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम्। उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः। बभूवुः सुखसज्ज्ञानपूर्वैः सर्वगुणैर्युताः। देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः। स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति। भूःशब्दार्थौ भूतिरिति वैपरीत्येन चासुराः। अभूतिकारकोऽस्माकमैश्वर्यादिगुणोज्झितः। इत्येवोपासते तस्मात्पराभूताश्च सर्वशः। ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धं तमस्यथ। य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम्। भावाभावं च देवानां दैत्यानां चैवमेव तु। ज्ञानैश्वर्यादिभिः सोऽपि भवेत्तस्य परात्मनः। प्रसादात्तस्य पाप्मा च पराभवति सर्वशः। स एष भगवान्विष्णुर्मृत्युदो मोक्षदस्तथा। स एव जीवनकरो यदाऽपानेन संयुतम्। प्राणं नियमयत्यस्मिन् शरीरे पुरुषोत्तमः। शरीराद्बहिरेतौ तु यदा निःसारयत्यजः। तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम्। प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः। अर्वाक्प्राक्च सदा गच्छेद्वायुरानन्दरूपिणा। अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः। अनेन हरिणा यस्मान्नियतो न पराग्भवेत्। अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः। अनित्या अपि देहास्ते शश्वत्सन्त्याविमोक्षतः। स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः। नानागती तु तावेतौ वायुः प्राप्नोति केशवम्। शरीरं तु विनष्टं स्यात्पञ्चत्वमुपगच्छति। जडं तज्जडतामेति चेतना वायुदेवता। चेतनेशं हरिं याति विरुद्धगमनौ च तौ। ऊर्ध्वं गच्छति देवः स देहोऽधः पतति क्षितौ। दृश्यते तच्छरीरं चाप्यदृश्या वायुदेवता। य एवं वेद तं वायुममृतं सर्वनायकम्। पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा। स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च दृश्यते, इति च।

ब्रह्म, पन्थाः, सत्यं, कर्म इति तस्य नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तयः ( १ )। नासिकायां यन्नेत्रयोर्मध्ये विनतमिव किंचिन्नतस्थानं तत्सूर्यलोकस्थानीयं विद्यात्। तथेति निर्णयः ( २ )। इरामया इति दैर्घ्यमवधारणार्थम्। 'दैर्घ्यं प्लुतं च हिंकारो बिन्दुरप्यवधारणे' इति शब्दनिर्णये ( ३ )। ब्रह्मा हैव ता३ई ते। 'देशतः कालतोऽर्थाच्च बलतो गुणतस्तथा। स्वरूपतोऽपि नैव स्याद्भेदोऽत्यल्पोऽपि यत्र हि।

केवलैश्वर्ययोगेन यत्र संख्या द्विवद्भवेत् । स्वरस्पर्शविभागेन तत्रोक्तिः स्याद्विभक्तिषु । अचिन्त्यात्तु तथैश्वर्यादेकोऽपि बहुरूपवान् । प्रकाशयेद्यतो विष्णुः सर्वत्राप्यविशेषवान् । न विशेषो हि रूपाणां मत्स्यादीनां कथंचन । नैश्वर्ये न बले चैव नानन्दादिगुणेष्वपि ' इत्यादिशब्दनिर्णयवचनात् द्विवचनमत्र व्यवहारमात्रमिति तई इत्युक्तम् । 'संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ॥' इत्यतो ब्रह्माहेति दैर्घ्यमपि परब्रह्मत्वविवक्षया (४)। अद उ एव नारायणाख्यमधिदैवतम् । अन्यानि दैवतमात्राणि । स्थानान्तरेऽन्येषामप्यधिदैवतत्वकथनं कर्मजदेवाद्यपेक्षया । मुख्याधिदैवतं नारायण एव (५)। तस्योष्णिग्लोमानीत्यादि लोमसूष्णिगित्याद्यर्थे सत्सु प्रथमेति । स छन्दोभिश्छन्न इति वाक्यशेषात् । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिवच्च । 'अङ्गेषु यस्य छन्दांसि देवा लोका मखा अपि । तद्वशा नियता नित्यं नमस्तस्मै परात्मने ॥' इति च स्कान्दे (६)। अस्मै पुण्याय कर्मण इति एतमुद्दिश्य जीवानां पुण्यकर्म कर्तुम् । तैर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण शृणोति भगवान् । दिग्भ्योऽप्यन्य एव विशृणोति जीवः । अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेनैव भगवान्भुङ्क्ते । न च जीववागादिना पृथिव्यग्न्यादिकं सृष्टमित्यत्र किंचिन्मानमस्ति । 'मुखादिन्द्रश्चाग्निश्च' इत्यादिना भगवतः सकाशाद्धि सर्वेषां सृष्टिः प्रसिद्धा । सृष्टिभेदादन्यथा वचनम् । न च मुख्यकारणाङ्गीकारे अविरोधे औपचारिकं कारणमङ्गीकर्तुं युक्तम् । अतिप्रसङ्गात् । नहि यत्किंचित्कारणत्वमस्तीत्येतावता ब्राह्मणस्य चण्डालः पितेत्युच्यते । पितृत्वं चात्रोक्तं 'वाचं पितरम्' इत्यादिना । 'मानुषाणां तु यत्कर्म न देवोत्पत्तिकारणम् । दैवतैरुपकारस्तु क्रियते नरकर्मणाम् । देवानां कर्मणैवैते जायन्ते सर्वमानुषाः । प्रधानत्वान्न देवानां नृकर्मोत्पत्तिकारणम् ॥' इति च ब्रह्माण्डे (७)। 'आह महिदास ऐतरेयः' इति तु सर्वस्य वचनस्य तदीयत्वज्ञापनार्थं न तु संनिहितस्यैव । यथा 'इन्द्रं कुत्सः' (ऋसं. १।१०६।६) [illegible] इत्यादि । यथा च 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' (ब्रसू. ३।२।४१) इति (८)। मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महैतरेयभाष्ये द्वितीयप्रघट्टके
प्रथमोऽध्यायः ॥

(३) 'तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः' असुरजातेरेवासुरत्वं, देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव । 'नासुरा दैवीं न देवा आसुरीं न मनुष्या देवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनुभवन्ति' इति नियमश्रुतेः । 'नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवति' इत्यतद्रूपत्वश्रुतेः । 'तं भूतिरिति देवा उपासांचक्रिरे ते बभूवुस्तस्माद्धाऽप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह परा बभूवुः' इति देवासुराणां भावाभावश्रुतेश्च । 'देवानां भूतिरित्येव मनो विष्णौ स्वभावतः । असुराणामभूतिस्त्वेनैतन्नियमतोऽन्यथा । देवाः शापाभिभूतत्वात्प्रह्लादाद्या बभूविरे । अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत् ॥' इति चाध्यात्मे । ब्रमध्व. ३।४।४०

---

## द्वितीयोऽध्यायः

महाव्रताख्यक्रतौ संपाद्यमानः विश्वात्मा प्राण एव
बृहतीसहस्रसंपदुपासनाविषयभूतः कर्ता
ऋग्वेदस्य मन्त्रदृशः ऋषयः सूक्तानि
ऋचः पदान्यक्षराणि क्रियाफलं च

एष इमं लोकमभ्यार्चत्पुरुषरूपेण । य एष तपति । प्राणो वाव तदभ्यार्चत् । प्राणो ह्येष य एष तपति । तं शतं वर्षाण्यभ्यार्चत् । तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । तं यच्छतं वर्षाण्यभ्यार्चत् । तस्माच्छतर्चिनः । तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तम् । स इदं सर्वं मध्यतो दधे यदिदं किंच । स यदिदं सर्वं मध्यतो दधे यदिदं किंच ।

(१) ऐआ. २।२।१; ब्रमध्व. १।४।१०.

**तस्मान्माध्यमाः । तस्मान्माध्यमा इत्याचक्षत एतमेव सन्तम् ॥**

प्राण उक्थमित्येतदवधारितं तस्य च प्राणस्य सर्वात्मत्वम् । तं च सर्वात्मानं प्राणमुक्थमहमस्मीति विद्यात् कर्मज्ञानाधिकृतः पुरुषः प्रजापतिः । अत्र च महाव्रताख्यक्रतौ बृहतीसहस्रं संपिपादयिषितम् । तस्मिंश्च संपाद्यमाने सहस्रसंवत्सरसत्रान्तं कर्म संपादितं भवति । नहि संपादनव्यतिरेकेण तत्कर्म पुरुषेण कर्तुं शक्यम् । पुरुषस्य सहस्रसंवत्सरायुषोऽभावात् । न चानायुषां पुरुषाणां कर्मण्यधिकार इति, तदाम्नानानर्थक्यप्रसङ्गात् । कथं पुनर्बृहतीसहस्रसंपत्त्या सहस्रसंवत्सरनिर्वर्त्यं कर्म संपन्नं भवतीति, उच्यते—पुरुषायुःसंमितत्वाद्बृहतीसहस्रस्य । तच्च वक्ष्यति— 'षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति ' इति । किंच बृहतीसहस्रे च संपाद्यमाने प्राण एव संपादितो भवति । प्राणो बृहतीत्युक्तम् । प्राणश्च सर्वमहोरात्रादिकालः कर्माङ्गभूतः । उक्तं च – 'अहरेव प्राणो रात्रिरपानः ' इति । तथा च कर्ता मन्त्रदृशः मन्त्राः क्रियाफलं च । तस्मात् प्राणे( त्व ) संपाद्यमाने सर्वं सपादित स्यात्, कर्त्रादेः सर्वस्य प्राणव्यतिरेकेणाभावात् । कथं प्राण एव कर्त्रादि सर्वमिति उच्यते—एष इमं लोकमभ्यार्चत् इति । एषः प्राणः यः प्रस्तुतः स इमं शिरःपाण्यादिलक्षणं लोकं पिण्डं पुरुषमभ्यार्चत् अभिगतवान् अभिप्रविष्ट इत्यर्थः । तथा चोक्तं ' तं प्रपदाभ्यां ' इत्यादि । केन स्वरूपेणाभ्यार्चदित्याह—पुरुषरूपेण । कोऽसावभ्यार्चदित्युच्यते—य एष असावादित्यः तपति । यदादित्यकर्तृकं शरीरप्रवेशनं तत्परमार्थतः प्राणो वाव प्राण एव तदभ्यार्चत् । ननु आदित्यप्रवेशः श्रुतः, न प्राणकर्तृक इति । नैष दोषः, प्राणत्वादादित्यस्य । कथम् । प्राणो हि यस्मादेष सविता य एष तपति । तस्मात्प्राणकर्तृक एव प्रवेशः । तथा आदावेव व्याख्यातम् । एवं च सत्युपपन्नं वक्ष्यमाणं ' प्राणो वा अहमस्म्यृषे ' इत्यादि, ' तद्योऽहं सोऽसौ ' इत्यादि च । तमिमं लोकं पिण्डं शतं वर्षाण्यभ्यार्चत् यस्मात्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति । पुरुषायुष इति निपातनात् । पुरुषस्यायूंषीत्येतत् । तस्माच्छतवर्षसंख्ययैव संपक्रियते ' तावन्ति शतसंवत्सरस्याह्नाम् इत्यादि । तं च यत् यस्माच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिनः प्रथममण्डलदृश ऋषयः ऋष्यनुक्रमणे प्रसिद्धाः । तांश्च मण्डलदृश ऋषीन् शतर्चिन इत्याचक्षते एतमेव प्राणं सन्तम् । न ह्यप्राणस्य मन्त्राणां दर्शनमुपपद्यते । स एष प्राण ऋषिः शरीरस्थः शतवर्षाभ्यर्चनाच्छतर्चिशब्दवाच्यः प्रथममण्डलस्थान् आत्मभूतानेव मन्त्रान् ददर्श । उत्तरेष्वपि मण्डलदृक्ष्वेवमेव यथोक्तं योज्यम् । तस्माद्ध्येव ऋषिः सर्वमन्त्राणाम् । स प्राणः इदं जगत्सर्वं मध्यतो मध्ये आत्मनो दधे धृतवान् यदिदं किंच । यस्माच्च एवं धृतवांस्तस्मान्माध्यमा ऋषयः प्राणः । आद्यन्ते मण्डले उक्त्वा (मुक्त्वा) मध्यमानां मण्डलानां द्रष्टारो बहुत्वात् माध्यमा इत्युच्यन्ते ।

शंकर.

**प्राणो वै गृत्सः । अपानो मदः । स यत्प्राणो गृत्सोऽपानो मदः । तस्माद्गृत्समदः । तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तम् । तस्येदं विश्वं मित्रमासीद्यदिदं किंच । तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किंच । तस्माद्विश्वामित्रः । तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तम् । तं देवा अब्रुवन् । अयं वै नः सर्वेषां वाम इति । तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति । तस्माद्वामदेवः । तस्माद्वामदेव इत्याचक्षत एतमेव सन्तम् । स इदं सर्वं पाप्मनोऽत्रायत यदिदं किंच । स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किंच । तस्मादत्रयः । तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥ १ ॥**

(१) विशेषतस्तु द्वितीयमण्डलदृक् गृत्समदः । प्राणो वै गृत्सः स्वापकाले वागादीनां गिरणात् । अपानो मदः रेतोविसर्गकरणं मदहेतुत्वात् । स यत्प्राण इत्यादि पूर्ववत् । तस्य प्राणस्येदं सर्वं भोज्यजातं मित्रं स्निग्धं स्थितिहेतुत्वादासीत् । एवं विश्वमित्रः सन् विश्वामित्र इत्युच्यते प्राणः । तं प्राणं देवा वागादयः पराजिताः सन्तः अब्रुवन् पूजयन्तः अयं नः अस्माकं वामो वननीयः संभजनीयः इति । एवं यस्माद्वामो देवानामिति तस्माद्वामदेवः प्राणः । स प्राण एवेदं सर्वं प्राणिजातं यदिदं

किंच यत्किंचेदं प्राणात्मप्रतिपन्नं पाप्मनोऽनर्थरूपाद-त्रायत पालितवान् । यस्मादेव पाप्मनः अत्रायत तस्मा-दत्रयः प्राणः । शंकर.

( २ ) एष नारायणो देवो वायुना सहैवेमं लोकम-भ्याचर्त् ब्रह्मादिशरीरेषु प्रविवेश । पुरुष इत्यन्तर्यामि-रूपस्याख्या पुरि शेते इति । प्रसिद्धत्वाच्च पञ्चरात्रेषु । य एष सूर्यमण्डले स्थित्वा तपति भगवान्स नारायणः । 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद' ( बृउ. ३।७।९ ) इत्यादिश्रुतिभ्यः । 'य एषोऽन्तरा-दित्ये हिरण्मयः पुरुषो दृश्यते' इत्युक्त्वा 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' ( छाउ. १।६।६, ७ ) इत्युक्तत्वान्न शिवादयः । शिवो हि विरूपाक्षः । प्रसि-द्धश्च पुण्डरीकाक्ष इति भगवान्नारायणः । 'यमादित्यो न वेद' इत्युक्तत्वान्नादित्यः । 'ॐ भेदव्यपदेशा-च्चान्यः' ( ब्रसू. १।१।२१ ) इति भगवद्वचनम् । 'वृत्रं यदिन्द्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे' ( ऋसं. १।५१।४ ) 'यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतशे कः' ( ऋसं. ५।२९।५ ) 'सीदन्नि-न्द्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि' ( ऋसं. ९।६८।२२ ) 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' ( ऋसं. १०।९०।१३ ) 'यः सूर्यं य उषसं जजान यो अपां नेता स जनास इन्द्रः' (ऋसं. २।१२।७ ) 'उद्वेति प्रसवीता जनानां महान्केतुरर्णवः सूर्यस्य' ( ऋसं. ७।६३।२ ) 'येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ॥' ( नाउ. १।१ ) 'तमेताः पञ्च देवताः परिम्रियन्ते विद्युद्वृष्टि-श्चन्द्रमा आदित्योऽग्निः' इत्यादौ सूर्यस्य सर्वत्र पराधी-नत्वान्नगतेश्च । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः । केयूरवान्मकरकुण्डल-वान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥' इति नारसिंहपुराणे । 'तापनी पाचिका चैव शोषणी च प्रका-शनी । नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य हि ॥' इति पाद्मे । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' (भ. गी. १५।१२) इति च । न च विष्णोरन्याधीनत्वं श्रुतिषूक्तं कुत्रचित् । उत्पत्तिस्तु प्रादुर्भावापेक्षया । 'एको नारायण आसीन्न ब्रह्मा न च शंकरः' इति महाप्रलये तस्यैवावस्थानश्रुतेः । 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' (ऋसं.१०।१२५।५) इत्यादि ब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वम्—'मम योनिरप्स्वन्तः समुद्रे' ( ऋसं. १०।१२५।७ ) 'ततो वि तिष्ठे भुवनानु( नि) विश्वा' ( ऋसं. १०।१२५।७ ) 'परो दिवा पर एना पृथिव्या' ( ऋसं. १०।१२५।८ ) इत्याह । 'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ' ( ऋसं. १०।१२५।६ ) 'अहं सुवे पितरमस्य मूर्धन्' ( ऋसं. १०।१२५।७ ) इति ब्रह्मरुद्रयोर्देव्याः सकाशात्सृष्टिसंहारौ चोक्तौ । अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ॥' ( ऋसं. ७।४०।५ ) इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च । 'तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तः' ( बृउ. २।२।२ ) इत्यादिना शिवादिसर्वदेवोपास्यस्य वायोः 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति मध्यमप्राणशब्दोक्तस्य 'प्राणः स्थूणा' ( बृउ. २।२। १ ) इति प्राणशब्दोदितो नारायण आश्रय उक्तः । तस्मात्सर्वोत्तमो भगवान्नारायणः प्राणशब्दोदित आदित्य-मण्डलस्थस्तपतीत्यादि सिद्धम् । 'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः । आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च । शक्रश्चोमा च रुद्रश्च भारती वायुरेव च । मुक्तामुक्ताः शतगुणा बलज्ञानसुखादिभिः । विष्णु-भक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः । तस्माद्रमा ततो विष्णुरनन्तगुणतोऽधिकः । नित्यमुक्तः स्वतन्त्रश्च न चान्यस्तादृशः क्वचित् । कुत एवाधिकोऽन्यः स्याद्य-न्मुक्ता अपि तद्वशाः । रमाऽपि तद्वशा नित्यं स नान्यस्य वशे प्रभुः । न भेदः शेषशिवयोः सुपर्णः शेषसंमितः । कामः शक्रसमो नित्यं प्रतिबिम्बाश्च ते क्रमात् ॥' इति च महासंहितायाम् । स पुरुषेषु शतं वर्षं गत इति शतर्चिनामा । बहुरूपत्वाद्बहुवचनम् । एत-मेव तथा सन्तं मुख्यत आचक्षते ऋषींस्तूपचारतः ।

आत्मन उदरे धृतवान् मध्ये स्थित्वा धृतवांश्च । ‘ प्राणस्थः प्राणनामाऽसावपानेऽपाननामकः । नेतृत्वाच्चापनेतृत्वाद्भगवान्पुरुषोत्तमः ॥ ’ इति च । वामो भद्रः । मध्व.

ऐष उ एव बिभ्रद्वाजः । प्रजा वै वाजः । ता एष बिभर्ति । यद्बिभर्ति तस्माद्भरद्वाजः । तस्माद्भरद्वाज इत्याचक्षत एतमेव सन्तम् । तं देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति । तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति । तस्माद्वसिष्ठः । तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभिप्रागाद्यदिदं किंच । स यदिदं सर्वमभिप्रागाद्यदिदं किंच । तस्मात्प्रगाथाः । तस्मात्प्रगाथा इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभ्यपवयत यदिदं किंच । स यदिदं सर्वमभ्यपवयत यदिदं किंच । तस्मात्पावमान्यः । तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तम् । सोऽब्रवीत् । अहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति । ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च । तस्मात्क्षुद्रसूक्ताः । तस्मात्क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम् । सूक्तं बतावोचतेति । तत्सूक्तमभवत् । तस्मात्सूक्तम् । तस्मात्सूक्तमित्याचक्षत एतमेव सन्तम् । एष वा ऋक् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत । स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत । तस्मादृक् । तस्मादृगित्याचक्षत एतमेव सन्तम् । एष वा अर्धर्चः । एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत । स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत । तस्मादर्धर्चः । तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम् । एष वै पदम् । एष हीमानि सर्वाणि भूतानि पादि । स यदिमानि सर्वाणि भूतानि पादि । तस्मात्पदम् । तस्मात्पदमित्याचक्षत एतमेव सन्तम् । एष वा अक्षरम् । एष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति । न चैनमतिक्षरन्ति । स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति । तस्मादक्षरम् । तस्मादक्षरमित्याचक्षत एतमेव सन्तम् । ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव । प्राण ऋच इत्येव विद्यात् ॥ २ ॥

(१) ऐआ. २।२।२.

( १ ) एष उ एव बिभ्रद्वाज इति । एष एव प्राणो बिभ्रद्वाजः । प्रजा वै वाजः अन्नभूतत्वात् । ता एष स्वात्मानुप्रवेशेन प्रजा बिभर्ति । भरणाद्वाजस्य बिभ्रद्वाजः सन् भरद्वाजः प्राणः । तं देवा अब्रुवन् पूर्ववत् । अयं प्राणो नः सर्वेषां वसिष्ठो वस्तुतमो वस्तुमत्तमः । यस्माच्च देवैरुक्तो वसिष्ठ इति तस्माद्वसिष्ठः प्राणः । स प्राण इदं सर्वमात्मानुप्रवेशेन अभिप्रागात् प्रगतवान् तस्मात्स प्राणः प्रगाथाः । स प्राण इदं सर्वमभि अपवयत अभ्यपवयत आभिमुख्येनाशोधयत् । तस्मादेवं पावनात्सर्वस्य पावमान्यः प्राणः । पावमान्य इत्यृच उच्यन्ते । तदभेदेन ऋषिनिर्देशः ऋषिप्रकरणात् । स प्राणः शरीरेष्वात्मानं सर्वप्राणिनां पश्यन्नब्रवीत् । किमिति उच्यते—अहं प्राण इदं सर्वमसानि भवानि । किं तत् । इदं, यच्च क्षुद्र कृमिकीटादि यच्च महत् हस्त्यादि । तस्मात्स प्राणः क्षुद्रसूक्ताश्च तेऽभवन्महासूक्ताश्च । तत्र ऋषिमपि तन्नाम्ना आचक्षते । तस्मात् प्राण एव सर्वमन्त्राणां द्रष्टा, एतमेवैतमेवेति दर्शनात् । किंच न केवलमृषय एव प्राणः, मन्त्राश्च सूक्तादिरूपाः । तत्कथमित्युच्यते — सूक्तं शोभनमुक्तं बत इत्यनुकम्पां कुर्वन् वागादीन् स्तुतिं कृतवतोऽवोचत उक्तवन्तो यूयमित्युक्तवान्मन्त्रैरेव । तत् तस्मात्सूक्तमभवत्प्राणः । स एव मन्त्रशब्दाकारेण परिणमते इत्यर्थः । तस्मात्सूक्तं प्राणः । तस्मादेव च कारणान्मन्त्रसमुदायं सूक्तमित्याचक्षते एतमेव प्राणं सन्तम् । सूक्तावयवभूता ऋगप्येष एव प्राणः । एष हि प्राणः सर्वेभ्यो भूतेभ्योऽर्थाय अर्चत गतवान् पूजां वा अकरोत् । तस्मादर्चनाद्गेष प्राणो मन्त्रोऽपि । अत एव एष वै मन्त्रावयवोऽर्धर्चः प्राणः । एष हि यस्मात्सर्वेभ्योऽर्धेभ्यः स्थानेभ्योऽर्थाय अर्चत इत्युक्तार्थम् । अर्धेभ्योऽर्चनादर्धर्चः प्राणः । ऋचोऽर्धमपि प्राणं एव सन्तमर्धर्च इत्याचक्षते । पदपादयोस्तुल्यत्वात्समानं निर्वचनम् । एष वै पदं पादः पदं च प्राण एव । कथम् । एष हि यस्मादिमानि सर्वाणि भूतानि पादि अगच्छदात्मभावेन । तस्मात्पदं प्राणः । प्राणमेव सन्तं पदं पादं च पदमित्याचक्षते । एष वै प्राणोऽक्षरं वर्णः । यस्मादेष प्राणः सर्वेभ्यो भूतेभ्योऽर्थाय फल-

साधनप्रदानरूपेण क्षरति । न चनं प्राणमतीत्य भूतानि क्षरन्ति यत्फलं साधनं वा । भूतानि प्राणमतीत्य न प्रयच्छन्तीत्यर्थः । 'प्राणः प्राणाय ददाति' इति श्रुत्यन्तरात् । यस्मात्कारणात् क्षरति, क्षरणाभावेन नञर्थेन युक्तः प्राणः (तस्मात्) अक्षरम् । वर्णमप्येतमेव सन्तमक्षरमित्याचक्षते । ता वै एताः सूक्तादिरूपाः सर्वा ऋच उक्ताः सर्वे च वेदाः सर्वे घोषाः ध्वनयः । न घोषवतामेवाक्षराणां ग्रहणं, सर्वस्य शब्दस्य प्राणत्वेन विवक्षितत्वात् । एकैव व्याहृतिः एकमेव व्याहरणम् । का सा । प्राण एवेति । एकेन प्राणपदेन सर्वमभिहितं भवतीत्यभिप्रायः । यस्मादेवं तस्मात्प्राण ऋच इत्येव विद्यात् विजानीयात् । सर्वोक्तोपलक्षणार्थमृग्ग्रहणम् । सर्वमुक्तं कर्माङ्गजातं प्राण इत्येव विद्यादित्यर्थः ।

शंकर.

(२) वसिष्ठो वसतामुत्तमः । अभ्यपवयत पावयामास संसारात् । तद्विष्ण्वाख्यं ब्रह्म सूक्तान्यवोचतेति सूक्तनामकमभवत् । बतेत्यास्वादने । स्वात्मनैव स्वयं सुष्ठूक्तामिति वा । इदं सर्वं परिपूर्णे सन्नहमल्पप्राणिषु प्रविश्य सूक्ष्मरूपो महाप्राणिषु महारूपश्चासानीति स भगवानब्रवीत् । तस्मात्क्षुद्रोऽसानीत्युक्तत्वात्क्षुद्रसूक्तास्ते क्षुद्रप्राणिषु स्थिता भगवद्रूपसंघाः । महानसानीत्युक्तत्वान्महासूक्ता महाप्राणिषु स्थिताः । सूक्ष्मरूपत्वादेव क्षुद्रनाम भगवतः । न तु सामर्थ्याल्पत्वात् । नहि सामर्थ्यादिगुणेषु कश्चिद्विशेषो भगवद्रूपेषु । एभ्यः प्राणिभ्यो गतवानित्यृक् । गच्छति हि मरणकाले । 'ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते बुधैः' इति हि भारते । 'म्रियमाणमिमं जीवं वासुदेवादिदेवताः । त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् । गतैर्भागैरपि पुनर्विशेयुर्भोगसिद्धये । भोग्यलोकमनुप्राप्तं तस्मात्स्वप्नवदन्तरा ॥' इति च । अर्च गतिपूजनयोः, ऋ गतौ इति धातोः । सर्वेभ्योऽर्थेभ्यः स्थानेभ्यः शरीरेभ्यो गतवानित्यर्धर्चः । सर्वाणि भूतान्यपादि । पद गतौ । तस्मात्पदं नाम । अधिकं क्षरतीत्यक्षरम् । क्षरणं नाम संततदानम् । क्षर विनाशसंततदानयोरिति धातोः । एवमृषिषु शब्देषु च व्यवह्रियमाणान्यपि सर्वाणि नामानि विष्णोरेव मुख्यतः, किमु देवतानामानि । 'यो देवानां नामधा एक एव तं संप्रश्नं भुवनायन्त्यन्या' (ऋसं. १०।८२।३) 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' (ऋसं. १।१६४।४६) 'यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः' (तैब्रा. ३।७।९।३) 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इत्यादिश्रुतिभ्यः । न केवलमृष्यादीनां नाम भगवतः, सर्वे वेदा अपि तस्यैव नामानि किमुत । वेदाः, समुद्रमेघवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि ।

[ न केवलं ऋष्यादिनाम भगवतः, किंतु सर्वे वेदा अपि तस्यैव नाम इत्येतत्किमु वक्तव्यमित्यर्थः । अग्निमीळ इत्यादौ अग्न्यादिनाम्नां, इन्द्रं कुत्स इत्यादौ कुत्सादिनाम्नां, ऋचां त्व इत्यादौ ऋगादिनाम्नां भगवत्परत्वे संसर्गबोधकवाक्यसमुदायरूपवेदचतुष्टयस्य भगवत्परत्वं सुलभमिति भावः । सर्वे घोषा इत्यतः परं च अप्यर्थकस्य किम्वर्थकस्य वा शब्दस्य संबन्धं मत्वा व्याचष्टे — वेदाः समुद्रमेघेत्यादि । किम्वित्येतद्देहलीदीपन्यायेन अस्मिन्नपि वाक्ये संबध्यते । तस्य 'सर्वे घोषा अपि तस्यैव नामानि' इत्यतः परं संबन्धः । वेदाः इत्यतः परं तस्यैव नामेत्यनुवर्तमानस्य संबन्धः । तथा च यद्येवं वेदास्तस्यैव नामानि, तदा समुद्रमेघवृक्षपतनभेरीताडनदधिमथनगोधादिघोषा अपि तस्यैव नामानीति किमु इति योजना । श्रीनिवासीया. ]

एकमेव व्याहरणं एकप्रकारमेव नाम । निर्दोषगुणपूर्तिवाचकत्वादेकप्रकारता । प्राणे नारायण एव नारायणविषय एव व्यवहारः । ऋचस्तु विशेषतः इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायण एवेति विद्यात् । उक्तं च बृहत्संहितायाम् —'हुंकारेण सहैवाब्धिः सर्वाभिभवशक्तताम् । विष्णोर्वक्ति यतो हुं च पराभिभववाचकः । ओमिति स्वरते नित्यं वायुर्मेघेषु संस्थितः । बलवन्नादसंयुक्तो ह्यधिकोच्चत्वमस्य तु । ओंकारस्यार्थ उद्दिष्ट उक्तार्थाधिक्यमेव च । नादो वली प्रवदति तथा भेरीध्वनिः प्रभोः । अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः । तदपेक्षयान्यनीचत्वं घण्टाद्याः स्वरितात्मकाः । उच्चस्थितिमुदात्तस्तु स्वर्णचञ्च्वादिकः स्वरः । विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः ।

एकप्रकारतां विष्णोः सदाऽचाल्यां वदत्यपि। इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम्। वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा। मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत्। तेन मार्जार उद्दिष्टो मोषणान्मूषको हरिः। वर्षणाद्वर्ष उद्दिष्टो बलनाद्बल्लिनामकः। तारणात्तृणनामाऽसावित्याद्येकोऽभिधीयते। सर्वनामाऽपि भगवान् सर्वशक्तिश्च सर्ववित्। ब्रह्मरुद्रादिजीवेभ्यो जडेभ्यः श्रिय एव तु। व्यतिरिक्तः सदाऽनन्तसान्द्रानन्दैकरूपकः। तस्यैव मुख्यनामानि समाकृष्येतरेष्वपि। उपचारात्प्रवर्तन्ते व्यवहारप्रसिद्धये। तथैव सर्वनामानि प्रवर्तन्ते च मारुते। न तावन्मुख्यवृत्त्यैव मुख्यतोऽन्यव्यपेक्षया। मुख्यतः सर्वनामा तु विष्णुरेको न चापरः। तस्मात्प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः। अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते। वायुश्च सूर्यसंस्थः संस्तपत्येतज्जगत्त्रयम्। आज्ञयैव हरेर्वायोः शक्त्या सूर्यस्तपत्ययम्॥' इत्यादि च। न प्रसिद्धसूर्यस्येयं तापनशक्तिरिति ज्ञापयितुं 'प्राणो ह्येष य एष तपति' इत्युक्तम्। 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इति च श्रुतिः। प्राणशब्दश्च मुख्यतो विष्णौ प्रवर्तमानोऽपि वायावपि वर्तते। अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति। 'प्राणस्य प्राणः' ( केउ. १।२ ) इति श्रुतेरुभयोरपि प्राणशब्दः प्रसिद्ध एव। 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' ( बृउ. २।२।१ ) इति वायोर्विशेषणादुत्तमः प्राणो विष्णुरिति च सिद्धम्। 'द्वावात्मानौ हि देवेषु द्वौ प्राणौ द्वौ च चेतनौ। अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ। तदन्ये चेतनाः सर्वे प्राणाश्चात्मान एव च। अज्ञानाभिभवस्पृष्टास्तस्मात्ते ह्यधमाः श्रुताः। मध्यमो वायुरेवैक उत्तमः केवलो हरिः। सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः। अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित्। श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः। तस्मादमितनामानावपि तौ मितनामवत्। श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः। अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः। पृथङ्नामानि यस्मात्तद्गुणानेव प्रचक्षते॥' इत्यादि ब्रह्माण्डे।

मध्व.

[1]विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद। स हान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस। तेनेन्द्रस्य प्रियं धामोपेयाय। तमिन्द्र उवाच। ऋषे प्रियं वै मे धामोपागाः। स वा ऋषे द्वितीयं शंसेति। स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस। तेनेन्द्रस्य प्रियं धामोपेयाय। तमिन्द्र उवाच। ऋषे प्रियं वै मे धामोपागाः। स वा ऋषे तृतीयं शंसेति। स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस। तेनेन्द्रस्य प्रियं धामोपेयाय। तमिन्द्र उवाच। ऋषे प्रियं वै मे धामोपागाः। वरं ते ददामीति। स होवाच। त्वामेव जानीयामिति। तमिन्द्र उवाच। प्राणो वा अहमस्म्यृषे। प्राणस्त्वम्। प्राणः सर्वाणि भूतानि। प्राणो ह्येष य एष तपति। स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि। तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रम्। एष तपन्नेवास्मीति होवाच॥ ३॥

( १ ) यद्यपि सर्वा ऋचः प्राण इत्येव वेदितव्याः तथापि बृहती साक्षात्प्राणसंस्तुता। तस्माद्बृहतीमेवाभिसंपादयेदिति स्थितम्। तत्सहस्रे हि संपाद्यमाने सर्वं संपन्नं भवति कर्मजातं पुरुषायुर्निर्वर्त्यम्। पुरुषायुःसंमितं हि बृहतीसहस्रम्। तत्र महाव्रतीयेऽहनि बृहतीसहस्रे शस्यमाने तिस्रस्तृचाशीतयो बृहतीसहस्रात्मन इन्द्रस्य प्राणस्यान्नमित्येतद्दर्शनं विधित्सन्नाह—विश्वामित्रं हीति। विश्वामित्रं ऋषिं महाव्रते क्रतौ कस्यचिद्यजमानस्य होतारमेतदहः एतस्मिन् महाव्रतीयेऽहनि बृहतीसहस्रं शंसिष्यामीत्येवमुपक्रमं कुर्वन्तं इन्द्रः प्राणो ममान्नमनेन होत्रा तृचाशीतिरूपं मह्यं दित्सितमिति इन्द्रः समीपं विश्वामित्रस्य होतुः उपनिषसाद उपनिषण्णवान् उपविष्टः भोक्ष्यमाण इव भोजयितुः समीपे। स च होता विश्वामित्र इन्द्रस्यान्नमियं तृचाशीतिरिति मनसाऽभिव्याहृत्य संकल्प्य बृहतीसहस्रं बृहतीसहस्रैकदेशत्वात्प्रथमां तृचाशीतिं शशंस शंसितवान्। तेन अन्नाभिध्यानयुक्तेन तृचाशीतिशंसनेन इन्द्रस्य प्रियं धाम प्रियं स्थानं उपेयाय उपगतवान्विश्वामित्रः। सर्वस्य ह्यन्नादः प्रियो भवति। स चेन्द्रः प्रीतः सन् तं विश्वामित्रमुवाच। हे

(१) ऐआ. २।२।३; अमध्व. १।१।२९.

ऋषे प्रियं इष्टं मे मम धाम स्थानमित्येतत्, उपागाः उपगतवानसि । स त्वं हे ऋषे द्वितीयं ममान्नं तृचाशीतिं शंसेति । स ह्यन्नमित्याद्युक्तार्थम् । ननु इन्द्रनियोगमन्तरेणापि तिस्रस्तृचाशीतयः शस्यन्ते एव बृहतीसहस्रसंपादनाय । सत्यमेवं, तथापि तृचाशीतिषु अन्नाभिध्यानकर्तव्यतास्तुतिपरं द्वितीयं तृतीयं शंसेति नियोगरूपं वचनम् । यथा हि लोके भुञ्जानस्य इष्टव्यञ्जनादिप्राप्तौ द्वितीयं तृतीयं प्रयच्छेति, तद्वत् इन्द्रस्यात्यर्थप्रितिकरा अन्नाभिध्यानयुक्तास्तृचाशीतय इति स्तूयन्ते । तथा चे( तमुवाचे )न्द्रः तुष्टः सन् विश्वामित्र, वरं ते तुभ्यं ददामीति । स होवाच होता त्वामेव इन्द्र, यथारूपं जानीयां त्वद्विज्ञानमेव वरं देहीति । तमेवमुक्तवन्तं इन्द्रः प्रत्युवाच प्राणो वा अहमस्मि यथाव्याख्यातः श्रुत्या । हे ऋषे, त्वं च प्राणः । न केवलं त्वमेव प्राणः, सर्वाणि स्थावरजङ्गमादिभूतानि प्राण एव । ‘ तद्यथाऽयमाकाशः ’ इत्याद्युक्तम् । किंच ‘ प्राणो ह्येषः ’ इत्युक्तस्य विशेषणं य एष तपति सवितेति । सोऽहमिन्द्र एतेन प्राणादित्यलक्षणेन रूपेण सर्वा दिशः प्राच्याद्याः विष्टः प्रविष्टोऽस्मि भवामि । तथा चोक्तं ‘ पवमानो हरित आविवेश ’ इति । तथा ‘ आदित्य उदयन्यत्प्राचीं दिशं प्रविशति ’ इत्याद्यथर्वणे । तस्य मे मम एवंभूतस्य प्राणस्येन्द्रस्य सर्वात्मनोऽन्नं मित्रं स्निग्धं संबन्धि स्थितिकरत्वात्सोमात्मकं हि । तद्व्याख्यातं ‘ अथातो रेतसः ’ इत्यादिना । अतो दक्षिणं वर्धयितृ । किं तत् । अन्नं वैश्वामित्रम् । विश्वामित्रेण होत्रा ऋषिणा तृचाशीतिरूपं दृष्टमिति वैश्वामित्रम् । अथवा विश्वं च तन्मित्रं च तत् वैश्वामित्रम् । समस्तं च सोमात्मकं जगदन्नं मम वर्धयितृ । वृद्धिश्च स्वार्थे वैश्वामित्रमिति । तथा चोक्तं ‘ तस्येदं विश्वं मित्रमासीत् ’ इत्यादि । अहं तु अत्ता प्राणोऽग्निभूत आदित्यश्च एष तपन्नेवासीति होवाच । इदं मम त्वं याथात्म्यमेतज्जानीहीत्युवाच । ननु ‘ एष इमं लोकमभ्यार्चत् ’ इत्यादिनोक्तमेव इन्द्रस्य आदित्यादिसर्वप्राणात्मयाथात्म्यं, किमर्थं पुनरिहोच्यते ‘ प्राणो वा अहमस्मि ’ इत्यादिना । तत्र एतज्ज्ञापने प्रयोजनं—निष्कृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते । अहेकवादहं-

मेन यथावत्कृतं श्रौतं कर्म ज्ञानोत्पत्तिकारणमिति, यथा ज्ञानं वरः प्राप्तो विश्वामित्रेण । अशीतयोऽन्नं, सर्वः प्राणोऽस्मीति च विज्ञानपूर्वकमेव प्राप्तत्वान्न पुनर्वचनीयत्वमिति । 　　　　शंकर.

( २ )अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः । तदनन्तरं वायुविषयाश्च । तस्माद्बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नं तदाज्ञया वायोश्च । तस्मात्तच्छंसनेन भगवान्वायुश्च अतिप्रीयेते इति दर्शयति—विश्वामित्रं ह्येतदहः शंसिष्यन्तमित्यादिना । ‘ वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये । महाव्रतं कर्म चक्रे हौत्रं चक्रेऽत्र कौशिकः । भृगुरध्वर्युरभवद्ब्रह्मा ब्रह्माऽभवत्स्वयम् । उद्गाता वायुरभवत्स्वयं नारायणः प्रभुः । सादस्यमकरोत्तत्र तदन्येऽन्येऽपि चर्त्विजः । बृहतीसहस्रं शंसिष्यन् यदा सस्मार केशवम् । वायुना सह देवेशस्तदा वासवमाविशत् । आविष्टो विष्णुनाऽथेन्द्रो वायुना सह कौशिकम् । शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः । ऋक्सहस्रं शशंसाथ यज्ञाङ्गत्वेन भक्तितः । तत् श्रुत्वा तुष्टिमगमत्केशवो वायुसंयुतः । द्वितीयवारं शंसेति प्राह तं च जनार्दनः । प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत् । अतिप्रियत्वाद्भगवान्पुनरप्याह कौशिकम् । तृतीयं च शशंसासौ विष्णोरन्नं प्रकल्प्य तु । ततोऽतितुष्टो भगवान् ददामि वरमित्यमुम् । ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः । प्रादाद्द्वितीये सामीप्यं तृतीये पुनरेव च । वरं ददामीत्युक्तः स मुनिः प्राह जनार्दनम् । सम्यक्त्वामेव जानीयामिति मोक्षे सुखोच्चताम् । इच्छंस्तं प्राह भगवानिन्द्रस्थो वायुसंयुतः । सर्वनामाऽहमस्म्येक इति ज्ञानं ममोत्तमम् । यस्मात्सर्वगुणत्वं स्यात्सर्वनामत्व एव तु । नहि दोषाभिधायीनि विष्णोर्नामानि कर्हिचित् । अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि । सर्वोत्तमगुणात्मत्वात्सदा नारायणस्य हि । सर्वोत्तमगुणानेव नामान्याचक्षते हरेः । यावज्ज्ञानेन मोक्षः स्यात्तावज्ज्ञातवाऽपि कौशिकः । अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये । जानीयां त्वामिति प्राह तस्मा आह स केशवः । इन्द्राविष्टः प्राणनाम तथान्याश्चाभिधाः प्रभुः ।

नामाऽस्म्यसनान्मनुतेरपि। ततो वेत्तीति च त्वं स पूर्णत्वात् सर्वनामकः । सर्वाणि बहुरूपत्वात्सर्वरूपेषु पूर्तितः । प्रभूतत्वाद्भूतनामा सर्वरूपप्रभूततः । बहुरूपः स भूतानीत्युक्तो विष्णुः सनातनः । सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते । स एव सूर्यसंस्थः सन् लोकं तपति केशवः । सर्वनामवतस्तस्य ममान्नं मित्रमुच्यते । अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा । सान्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च । दक्षभागस्थितेनत्वाद्दक्षिणं नाम सोच्यते । तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा । यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा । वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् । विश्वामित्रेण दृष्टत्वाद्वैश्वामित्रं तदीर्यते । इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन्हरिः । आदित्यसंस्थितो विष्णुस्तपन्नस्मीति चोचिवान् । त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः । अभिप्रायद्वयं ह्यस्ति शङ्काविष्टो न चापरः । हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि । तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मया । द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः । इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः । अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ। प्राणो वा अहमित्यादि नामसंदर्भमुक्तवान् । विशेषज्ञानसिद्ध्यर्थं नाम्ना मुक्तिः परात्मनः । इन्द्राविष्टः कोऽयमिति शङ्कानुत्यर्थमेव च । तपन्नेवास्मीत्यवदत्तपन्तं वेद सोऽपि हि । नारायणं सर्वगतं गायत्र्योपासको हि सः॥' इति ब्रह्माण्डे ।

उपनिषण्णमिन्द्रं दृष्ट्वाऽपि त्वामेव जानीयामिति वरस्वीकारादिन्द्रादेव चेन्द्राविष्टो भगवानत्रोक्तः इति ज्ञायते । इन्द्रं तु जानात्येव हि विश्वामित्रः । भगवन्तमपि स्वरूपत आगतं जानात्येव। विशेषज्ञानप्रार्थने 'प्राणो वा अहमस्म्यृषे' इत्यादिकमेव पूर्यते । एष तपन्नेवास्मीति व्यर्थं 'प्राणो ह्येष य एष तपति' इत्युक्तत्वात् । स एतेन रूपेण सर्वा दिशो विष्टोऽस्मीत्यादिनाथा( दिनेन्द्रा )-विष्टस्य विष्णुत्वं किंचिज्ज्ञायते । तथाऽप्येतेनेति तृतीयात्वात्करणत्वाशङ्का भवति । तस्य म इति वैयधिकरण्यमिति च । अतो भगवन्नामानि पृथगुक्त्वा अहं विष्णुरिति एष तपन्नेवास्मि इत्युवाच । इन्द्रशरीरमेव पश्यतो विश्वामित्रस्य तर्कमात्रतो भगवानिति किंचिज्जानत इति ज्ञायते । न चेन्द्रस्य प्राणशब्दः सर्वशब्दाभिधेयत्वं च विद्यते । 'अजस्य नाभावध्येकमर्पितम्' ( ऋसं. १०।८२।६ ) 'यो देवानां नामधा एक एव' ( ऋसं. १०।८२।३ ) इति सर्वदेवाभिधानत्वमुक्तम् । इन्द्रे हि इन्द्रशब्दोऽपि न मुख्यतो वर्तते । परमैश्वर्याभावात् । इन्द्रशब्दोऽपि विष्णावेव वर्तते। स हि परमेश्वरः । 'यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः' ( तैब्रा. ३।७।९।३ ) 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्'( ऋसं. १।१६४। ४६ ) इत्यादिश्रुतेश्च । 'सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' ( ऋसं. १।१६४।३६ ) इत्यादिना विष्णुरेव हि तत्र प्रस्तुतः । 'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् । नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ॥' इति च श्रुतिः । 'यो देवानां नामधा एक एव' इत्यवधारणान्नान्यस्य सर्वनामत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव । श्रियो वायोरपि न नारायणादिनामवत्त्वम् । 'एको वासुदेवस्तत्सदृशपरौ न स्तः' इति हि श्रुतिः । 'एको नारायण आसीत्तत्समो वा अधिको वा नास्ति' इति च । 'येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ॥' ( नाउ. १।१ ) इत्युक्तस्य समुद्रशायिन एव नारायणस्य 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' ( नाउ. १।२ ) इति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव ।' अतस्तदत्रोन्यते इत्यपि न वक्तव्यम् । 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' 'न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप' ( ऋसं. ७।९९।१,२ ) इत्यादेश्च । 'नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा त्वम् ॥' ( ऋसं. ४।३०।१ ) इत्याद्यपि सर्वनामकत्वात्तस्यैव । 'किमेकं दैवतं लोके किंवाऽप्येकं परायणम्' इत्यादिप्रश्नस्यापि 'परमं यो महत्तेजः परमं यो महत्तपः । परमं यो महद्ब्रह्म परमं यः परायणम् । पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् । दैवतं देवतानां च भूतानां योऽव्ययः पिता ।

यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये । तस्य लोकप्रधानस्य जगन्नाथस्य भूपते । विष्णोर्नामसहस्रं मे' इत्येव भारते परिहाराच्च । 'मेऽन्नं दक्षिणम्' इत्युक्तत्वाच्च विष्णुरेवेति ज्ञायते । स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्याध्याये । 'दक्षिणाभिः सहैवैतन्मदधस्ताज्जगत्सदा । धन्याश्चर्योऽहमेवैको मित्रं मे दक्षिणा रमा । इत्यवादीद्धरिर्भूपा धन्योऽसीत्युदितो मया ॥' इति नारदवचनम् । न च बृहतीसहस्राभिमानिनीं देवीं विना चेतनमात्रस्य मुख्यमित्रत्वं युज्यते । 'मिनोति त्रायते चेति मित्रमित्यभिधीयते । तस्माद्योऽयं विजानाति स मित्रं तस्य नान्यथा ॥' इति भारते । उक्थायुत्वाच्च विष्णुरेवात्रोक्त इत्यवगम्यते । बृहतीसहस्रं ह्युक्थनामकं मुख्यतः । 'महाव्रतनियुक्तं यदृक्सहस्रं हरेः प्रियम् । तदुक्थमिति संप्रोक्तं तेनेयो विष्णुरेव हि । तस्मादुक्थायुरित्युक्त ऐश्वर्यादिन्द्र उच्यते । तस्मादुक्थायुरिन्द्रेति विष्णुर्यज्ञेषु चोच्यते ॥' इति गारुडे । विष्णुर्ह्युक्थायुरिन्द्र इत्युच्यते । यज्ञेष्वन्यः इन्द्रः पृथक् चोच्यते । 'यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः' इत्युक्त्वा 'तस्मै त्वा तेभ्यस्त्वा' इति भेदवचनाच्च । सत्य इति वायुः । 'सदिति प्राणः' इति श्रुतेः । 'सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः । साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ॥' इति शब्दनिर्णये । प्रियधाम्न उप समीपे गमनं नाम तद्धामप्राप्तिकारणभगवत्प्रसादप्राप्तिः । अन्यथा उपशब्दो व्यर्थः स्यात् । न च तदैव भगवतः प्रियं धाम विश्वामित्रेण प्राप्तम् । 'बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः । द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तःपुरस्य च । तथा स्वविषयं ज्ञानं विश्वामित्रे ददौ प्रभुः ॥' इति च गारुडे । न चेन्द्रादिभिरैक्यमत्रोच्यते । 'प्राणस्तथाऽनुगमात्' (ब्रसू. १।१।२८) इति च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्त्वा 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्' (ब्रसू. १।१। २९) इति वक्तुर्बृहतीसहस्रं शंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियते इति पक्षो निराकृतो हि भगवता सूत्रेषु । अध्यात्मसंबन्धशब्देन आवेशो विष्णोरिन्द्रे विवक्षितो भगवता । अन्येष्वन्तर्यामिरूपेण संबन्धोऽस्त्येव । अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः । अधिकात्मनः परमात्मनः संबन्धोऽध्यात्मसंबन्धः । नहि स्वात्मना स्वस्य संबन्धो भवति । यद्यध्यात्ममात्रं अत्रोच्यते इति विवक्षितं, तर्हि अध्यात्मभूमेत्येव स्यात्, संबन्धशब्दो व्यर्थः । तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः । 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्रसू. १।१।३०) इति शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरस्थितत्वात्सर्वनामाभिधेयत्वं चोक्तं 'अहं मनुरभवं सूर्यश्च' (बृउ. १।४।१०) इत्यादिवत् । नहि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र च 'अहं भूमिमददामार्याय' (ऋसं. ४।२६।२) इत्यादिना प्रवृत्तिरेवोच्यते । न च वामदेवेन मन्वादिकर्म क्रियते कदाऽपि । अतीतार्थश्चायं दृश्यते 'भूमिमददाम्' इत्यादिना । नहि पूर्वं वामदेवेन तानि कर्माणि कृतानि । भगवान्विष्णुर्हीन्द्राय भूमिमददात् । स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नवबोधसूरिः नियमनादिभिर्मनुसूर्यादिसर्वनामा भवति । यदि भेदस्य पूर्वमपि मिथ्यात्वमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वात् 'अहं मनुरभवम्' इत्यादिकं सर्वमनर्थकमेव भवति । 'जीवेश्वरभिदा चैव जीवभेदः परस्परम् । जडेश्वरभिदा चैव जडभेदस्तथैव च । जडजीवभिदा चैव सत्योऽयं भेदपञ्चकः । न कदाचिन्निवर्त्योऽयं मुक्तौ संसार एव च । य एतदन्यथा ब्रूयुस्ते हि यान्त्यधरं तमः ॥' इति भविष्यत्पर्वणि । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (भगी. १६।८) 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी' (भगी. १६।१४) 'एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः' (भगी. १६।९) 'आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥' (भगी. १६।२०) इत्यादि च । न च 'प्राणो वा अहमस्म्यृषे' इत्यादावहमस्म्यादिशब्दोऽस्मच्छाब्दार्थस्थः । 'एष तपन्नेवास्मि' इत्युपरितनस्य वैयर्थ्यात् । 'प्राणो ह्येष य एष तपति' इत्युक्तत्वात् । अतोऽहमस्मीत्यादि च भगवन्नामैव । न च जीवैक्यवचनमत्र प्रस्तुतम् । 'ता वा

एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव ' ( ऐआ. २।२।२ ) इति सर्वनामाभिधेयत्वं भगवत उक्त्वा तत्रैव प्रमाणत्वेन ' विश्वामित्रं ह्येतदहः' इत्याद्याख्यायिकोक्ता । तस्मात्सर्वान्तर्यामित्वात्सर्वगुणवत्त्वात्सर्वशक्तित्वाच्च सर्वनामवत्त्वमेव विष्णोरुच्यते, न तु सर्वस्वरूपत्वम् । उक्तं च भारते—' स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात् । सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः ॥ ' इति । ' पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ' ( ऋसं. १०।९०।२ ) इति पुरुषरूपेणैव इदं सर्वं व्याप्तं यद्भूतं यच्च भव्यम् । ' आतृणादाकरीषात्सर्वं भगवानिति मिथ्यादृष्टिरेव ' इति च श्रुतिः । ' हिरण्मयो ह वा अमुष्मिंल्लोके संभवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ' ' अमृतो ह वा अमुष्मिँल्लोके संभवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ' ' स एतेन प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्त्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ' इत्यादिना मुक्तानामपि भेदस्यैवोक्तेश्च । नहि भेदाभावे सर्वेभ्यो भूतेभ्यो ददृशे इति युज्यते । न चामुक्तैः सर्वैर्भूतैर्मुक्तो दृश्यते । एकत्वे तु ददृशे इत्येतावता पूर्यते, सर्वेभ्यो भूतेभ्य इति व्यर्थम् । न च तेषां पक्षे स्वयमपि स्वात्मानं पश्यति । कर्तृकर्मविरोध इति हि ते वदन्ति । अतः सर्वश्रुतिविरोध एव जीवेश्वरैक्याङ्गीकारे । न च कर्तृकर्मविरोधो नामास्तीत्यत्र किंचिन्मानम् । श्रुत्यनुभवसिद्धत्वाच्च स्वदर्शनादेः । न च तेषां पक्षे प्राज्ञेन सर्वज्ञेन परमात्मना सर्वकामावाप्तिर्नामाङ्गीक्रियते शरीरादुत्क्रान्तस्य ज्ञानिनः । तस्माद्वेदविरुद्धवादिन एव तेऽपि । न च शून्यवादिनः कश्चिद्विशेषो दृश्यते । नहि सर्वावाच्यं सर्वाज्ञेयं शून्यं चेति कश्चिद्विशेषः । केनापि शब्देनावाच्यस्य लक्षणायामपि प्रमाणं नास्ति । क्षीरमाधुर्यादयोऽपि तैरेव शब्दैरुच्यन्ते । ' विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम् । गुडस्य पनसादीनां निर्ह्रीरीत्यभिधीयते ॥ ' इति शब्दनिर्णये । न च सर्वगुणदोषक्रियाविनिर्मुक्तस्यास्तित्वमपि कुत्राचित् दृष्टम् । अतः शून्यवादिन एव तेऽपि । ' अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ' ( काउ. ६।१३ ) इत्यादिना प्रसादादिगुणाश्च भगवतो दृश्यन्ते । ' यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ' ( काउ. २।२५ ) इत्यादिकर्माणि च । ' यस्मिन्देवाः श्रिताः सर्वे ' ( काउ. ५।८, ६।१ ) इत्यादिगुणाश्च तत्रैवोक्ताः । ' अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृशे ॥ ' ( ऋसं. १०।७१।७ ) इति मुक्तानामपि तारतम्यं चोक्तम् । ' श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात्कर्णसंयुताः । अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गणाः । तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा । क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः । उपस्थिता ब्रह्मवनं केचिदश्वत्थमण्डलम् । ऐरे ह्रदे केचिदपि देवा एव सदा हरिम् । नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः । सागरादिस्थिता विष्णुं पश्यन्ति क्वचिदेव हि ॥ ' इति ब्रह्मसारे । ' यत्र ब्रह्मा पवमान छन्दस्यां वाचं वदन् । ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परि स्रव ॥ यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् । तस्मिन्मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परि स्रव ॥ यत्र राजा वैवस्वतो यत्रावरोधनं दिवः । यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः । लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ' ( ऋसं. ९।११३।६–९ ) । ' यत्र तत्परमं पदं विष्णोर्लोके महीयते । देवैः सुकृतकर्मभिस्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ' ( ऋसं. ( खिल. ) ३।१२।३ ) ' यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परि स्रव ॥ ' ( ऋसं. ९।११३।११ ) इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवो देव्या अवरोधभूतानां सर्वदेवीनां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते । मुक्ताश्चात्रोच्यन्ते इति प्रतीयते । अमृतं कृधीतिवचनात् । अमुक्तानां स्वेस्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽवस्थानं देवानाम् । 'मुक्तः प्रतिज्ञानात्' 'संकल्पादेव च तच्छ्रुतेः' 'जगद्व्यापारवर्जम्' ' भोगमात्रसाम्यलिङ्गाच्च ' ' अनावृत्तिः शब्दादनावृत्तिः शब्दात् ' ( ब्रसू. ४।४।२,८,१७,

२१, २३ ) इत्यादिमुक्तसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । 'ग्राव्णा सोमे महीयते' इति ब्रह्मणः अन्यमुक्तैः पूज्यत्वं च प्रतीयते । न च सूत्रेषु निश्चितार्थस्य औपचारिकत्वं वक्तुं युज्यते । निर्णयात्मकत्वात्तेषाम् । अतिप्रसङ्गश्च उपचारादिकल्पने । 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' ( भगी.१३।४) इति निश्चितानि ब्रह्मसूत्राणि । 'बहुनात्र किमुक्तेन यावत् श्वेतं न गच्छति । योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ॥' इत्यादित्यपुराणे । न च निर्णायकानि भगवद्वाक्यान्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि कल्प्यम् । न च भोगरहिता मुक्तिर्नाम अन्याऽस्ति इत्यत्र किंचिन्मानम् । 'भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः । तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते । विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः । न तु विष्णुगुणान्सर्वे भुञ्जते ते कदाचन । बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन । विष्णोर्देहाद्बहिश्चापि निर्गच्छन्ति यथेष्टतः ॥' इति स्कान्दे । 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' (भगी. १४।२) इति भगवद्वचनम् । तस्मान्मुक्तैरपीज्यमानः सर्वस्माद्भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुणसंपूर्णो नारायणः सर्ववेदादिषूच्यते इति सिद्धम् । मध्व.

**तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य यानि व्यञ्जनानि तच्छरीरम् । यो घोषः स आत्मा । य ऊष्माणः स प्राणः । एतद्ध स्म वै तद्विद्वान्वसिष्ठो वसिष्ठो बभूव । तत एतन्नामधेयं लेभे । एतदु हैवेन्द्रो विश्वामित्राय प्रोवाच । एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच । तस्मात्स तेन बन्धुना यज्ञेषु हूयते ॥**

यथा तृचाशीतिष्वन्नत्वदर्शनमुक्तं प्राणस्य, एवं बृहतीसहस्रविषये व्यञ्जनादिभिः शरीरादिसंपद्विशेषार्थं तद्वा इत्याद्यारभ्यते । तद्वा इदं बृहतीसहस्रमिति । तद्बृहतीसहस्रं महाव्रतब्राह्मणे संपादितं वैशब्देन स्मारयति । तदिदं बृहतीसहस्रमिह वक्ष्यमाणाभिः कल्पनाभिः संपादयिषितं बुद्धौ संनिहितमुच्यते । तस्य बृहतीसहस्रस्य शस्त्रभूतस्य अक्षराणां यानि व्यञ्जनानि स्वरव्यञ्जकत्वात् कादीनि, तानि बृहतीसहस्रात्मन इन्द्रस्य तच्छरीरं शरीरमिव । रूपजात्यादयो यथा शरीरे व्यज्यन्ते एवं स्वरादयः कादिषु । तस्माच्छरीरावयवत्वेन तानि विभज्य कल्प्यन्ते । तत्र यो घोषो गद्यादिषु व्यज्यमानो मध्यमत्वसामान्यादात्मा, शरीरावयवानामिव मध्यमं शरीरम् । य ऊष्माणः शषसादिषु व्यज्यमाना विसर्जनीयश्च, साक्षात्प्राणरूपत्वात् त इन्द्रस्य प्राणः । तदेतद्बृहतीसहस्रदर्शनं एवं विद्वान्वसिष्ठो बभूव ह स्म वै किल इति स्तुतिदर्शनस्य वसिष्ठत्वगुणयोगादेव तत एतन्नामधेयं लेभे लब्धवान्वसिष्ठः, वसिष्ठ इति प्रथितो लोके । एतदेव च दर्शनं उ हैव इन्द्रो विश्वामित्राय प्रोवाच । तथा एतदु हैवेन्द्रो भरद्वाजाय प्रोवाच । महतो महद्भिर्महतायासेन प्राप्तं महते प्रयोजनाय इति दर्शनं स्तौति । देवासुरोदधिमथनोद्भूतामृतवदिन्द्रो विश्वामित्रायैतद्दर्शनं प्रोवाच इत्येतस्यार्थस्याविष्करणायेयं प्रसिद्धिः प्रदर्श्यते स्तुत्यर्थमेव । यस्मादिन्द्रस्य विश्वामित्रस्य च विद्यासंप्रदानग्रहणनिमित्तः संबन्ध आसीत् तस्मादद्यत्वेऽपि स इन्द्रस्तेन बन्धुना बन्धनेन संबन्धेन यज्ञेषु सुब्रह्मण्यायां हूयते आहूयते 'कौशिक ब्राह्मण' इति । शंकर.

**तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति । व्यञ्जनैरेव रात्रीराप्नुवन्ति । स्वरैरहानि । तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात्प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति । य एवं वेद ॥**

तद्वा इदमित्यादि । बृहतीसहस्रस्य यथोक्तविशेषणानुवादः उत्तरविशेषणसंबन्धार्थः । तस्यैतस्य बृहतीसहस्रस्य यथोक्तविशेषणस्य षट्त्रिंशतं सहस्राण्यक्षराणि गण्यमानानि भवन्ति । षट्त्रिंशदक्षरा बृहती । सा तावत्सहस्रगुणिता अक्षरशः षट्त्रिंशत्सहस्रा प्रसिद्धैव ।

(१) ऐआ. २।२।४; ब्रशंकर. भास्कर. ३।३।३७; रामानुज. १।१।१ ( पृ. १७ ), ३।३।३७; ब्रमध्व. ३।१।३१; श्रीकर. वल्लभ. विज्ञान. ३।३।३७.

तावन्त्येवाक्षरैस्तुल्यसंख्यातान्येव पुरुषायुषस्य शतसंवत्सरस्याह्नां सहस्राणि भवन्ति। शतं वर्षाणि पुरुषायुष इति चोक्तम्। तत्राक्षराणि स्वरव्यञ्जनभेदेन द्विधा विभज्यन्ते पुरुषायुषाहोरात्रसंख्यातुल्यत्वाय। तत्र व्यञ्जनैरेव रात्रीराप्नुवन्ति शतसंवत्सरस्य संख्यासामान्यादव्यक्तत्वसामान्याच्च व्यञ्जनानां रात्रीणां च। स्वरैरहानि व्यक्तत्वसामान्यात्संख्यायाश्च। तत्रैवं सति बृहतीसहस्रसंपत्त्या षट्त्रिंशत्सहस्राण्यग्नयोऽर्काश्रिता भवन्ति। सहस्रसंख्यायां च सर्वसंख्याया अन्तर्भावात्प्राण इव सर्वस्य जगतः सर्वं संपन्नं भवति। बृहती च प्राणः साक्षात्। प्राणश्च सर्वमित्युक्तं वक्ष्यमाणं च। तद्वा इदमित्यादि पूर्ववत्। तस्यैतस्य बृहतीसहस्रस्यैवं संपन्नस्य प्रज्ञामयः प्रज्ञयाऽऽत्मभूतया नित्यमवियुक्तः प्राण इत्यभिप्रायः। यथा च कौषीतकिनां 'प्राणोऽस्मि प्रज्ञात्मा' 'यो वै प्राणः सा प्रज्ञा या च प्रज्ञा स प्राणः' (कौउ. ३।२, ३) इति च विज्ञायते। देवतामयः अग्न्यादिमयः। प्राणस्य सर्वात्मत्वादेव ब्रह्ममयो वेदमयः। तथा चोक्तम्—'ऋच (अक्षरे परमे)' इत्यादि। अमृतमयः अमरणप्रायः स्वेनैव प्राणरूपेण। उक्तं च 'अमृतैषा देवता' इति। एते चत्वार आत्मानो बृहतीसहस्रस्य संपन्नस्य। यस्त्वेवं बृहतीसहस्रसंपादनमुक्तं वक्ष्यमाणविशेषणं वेद, स एतांश्चतुरः प्रज्ञादिमयान् इहैवात्मत्वेनोपगम्य प्रज्ञादिमयः संभूय शरीरपतनस्य परस्तादपि सर्वा देवताः स्वात्मत्वेनाप्येति। 'देवो भूत्वा देवानप्येति' (बृउ. ४।१।२) इति हि वाजसनेयके। शंकर.

प्रज्ञात्मा प्राण एव देहाभिमानी मण्डलाभिमानी च पुरुषः

**तद्योऽहं सोऽसौ। योऽसौ सोऽहम्। तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्चेति। एतदु हैवोपेक्षेतोपेक्षेत ॥ ४ ॥**

**इति श्रीमदैतरेयद्वितीयारण्यके द्वितीयोऽध्यायः ॥**

(१) तत्तद्दर्शनोपसंहारोऽयमुच्यते। योऽहं देहे शरीरे प्रज्ञात्मा प्राणोऽध्यात्मं सोऽसावादित्यो मण्डलाभिमानी, नान्यः। यश्चासावादित्ये स एवाहं, नान्यः। तथा चोक्तं 'एष इमं लोकमभ्यार्चत्' इत्यादिना। तदेतत्सर्वं प्राणादित्यात्मैकत्वदर्शनमुक्तं ऋषिणा मन्त्रेणापि कथितम्। ('चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥' ऋसं. १।११५।१)। चित्रं चायनीयम्। किं तत्। अनीकं मुखं द्वारमित्येतत्। केषां तन्मुखमिति उच्यते— देवानां मित्रस्य वरुणस्याग्नेः। सर्वेषां हि देवानां प्रदर्शनार्थं मित्रवरुणाग्नीनां ग्रहणम्। सर्वासां हि देवतानां द्वारभूतः सविता, सर्वात्मत्वात्। तस्मिन् दृष्टे सर्वा देवता दृष्टा भवन्ति, तदव्यतिरेकात्सर्वदेवतानाम्। तच्च उदगात् उद्गतं उदितं मां पश्येति ब्रुवदिव प्रतिपुरुषम्। किंच, चक्षुः चष्टे पश्यत्यनेनेति सर्वस्य। तेन हि सर्वो लोकः पश्यति। यदि नोदियात्सविता, सर्वं जगदन्धमभविष्यत्। किंच, आ अप्राः आपूरितवान् द्यावापृथिवी अन्तरिक्षं च त्रीन् लोकान् स्वेनैवात्मना। कोऽसौ। सूर्यः, स्वीरणाद्वसरश्मिप्रज्ञाप्राणानां सूर्यः। स चात्मा सर्वप्राणिनां प्राणो जीवः जगतो जङ्गमस्य तस्थुषः स्थितवतः स्थावरस्य चेति। एतन्मन्त्रप्रकाशितप्राणादित्यात्मैकत्वं बृहतीसहस्रात्मरूपं यथासंपादितमात्मभावेनोपेत्य उपेक्षेत उपेक्षेत। प्राकृतदर्शनानन्तरितं निवातप्रदीपसमं तैलधारावच्चाविच्छिन्नं दर्शनं कुर्यादा प्राणस्य विमोचनादित्यर्थः। द्विर्वचनं उक्तवक्ष्यमाणबृहतीसहस्रसंपदुपसंहारप्रदर्शनार्थम्। शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयद्वितीयारण्यकभाष्ये द्वितीयोऽध्यायः ॥

(२) यावतीभिर्ऋग्भिः शंसिताभिः षट्त्रिंशत्सहस्राण्यक्षराणि भवन्ति। यस्मात्कस्मादपि छन्दसस्तावत्यः शंसनीयास्तदा संपादितं बृहतीसहस्रं भवति। तत्र या व्यञ्जनाभिमानिदेवता सैव सर्वप्राणिनां शरीराभिमानिदेवता स्वायम्भुवो मनुः। घोषाभिमानिदेवता सर्वजीवाभिमानी ब्रह्मा। ऊष्माभिमानी वायुः। 'व्यञ-

नानां शरीरस्य चाभिमानी मनुः स्मृतः। घोत्राणां सर्वजीवानामभिमानी चतुर्मुखः। ऊष्माभिमानी वायुश्च प्रतिपाद्यो जनार्दनः। एतेषामधिपं विष्णुं बृहत्युक्थस्य देवताम्। उपास्यैव वसिष्ठोऽभूद्वसिष्ठः शक्र एव च। एतां विद्यां कौशिकाय भरद्वाजाय चादरात्। एतद्विद्याबलेनैव विद्याधीशेन बन्धुना। यज्ञेष्वाहूयते नित्यमिन्द्रो विष्णुप्रसादतः। षट्त्रिंशद्रूपवान्विष्णुर्व्यञ्जनेषु च संस्थितः। तान्येव विष्णुरूपाणि रात्रीणामधिदैवताः। एकैकं च सहस्रं तद्व्यञ्जनेषु च रात्रिषु। रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा। षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि। तान्येवाह्नां दैवतानि रूपाणि परमात्मनः। द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः। शताब्दानामहोरात्रदैवतान्युत्तमानि च। बृहतीसहस्रवर्णानामपि ध्यात्वाऽखिलान्यपि। शतवर्षंहरिध्यानफलमाप्नोति पूरुषः। एवं ज्ञात्वाऽपि संपाद्य बृहतीनां सहस्रकम्। ज्ञानान्नारायणस्यैव प्रकृष्टज्ञानसंततेः। स एव मे मयो विष्णुः प्रकृष्टज्ञानरूपकः। प्राधान्यं मयशब्दोऽयं वक्ति विष्णोः सदैव हि। प्रधानोऽस्य हरिर्यस्मात्प्रज्ञारूपोऽधिदेवता। ब्रह्मामृतं च तेनायं ब्रह्मादिमय उच्यते। सर्वोत्तमस्वरूपत्वाद्विष्णुरुक्तः स देवता। ब्रह्मपूर्णगुणत्वाच्च नित्यत्वप्रदमृतं तथा। एतादृशं च यो विष्णुं प्रधानं वेत्ति सर्वदा। प्रज्ञादिभिर्गुणैः स्वस्मात्परेभ्यश्च सदाऽधिकम्। प्रज्ञादेवब्रह्मामृतमयः स परिकीर्तितः। प्रज्ञादिमय एवं स भूत्वा देवान् क्रमेण च। एति मारुतपर्यन्तान्मारुतेन च केशवम्। संपादनाच्च विद्याया अस्याः परत एव च। द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः। बृहतीसहस्रसंस्थानि स्वरव्यञ्जनभेदतः। तान्येव पुरुषस्थानि यस्मात्पुरुषसंस्थितम्। बृहतीसहस्रं तच्छंस्यं व्यज्यते न श्रुते नरम्। द्वासप्ततिसहस्राणि तान्येवाहर्निशासु च। विष्णुरूपाणि सूर्येऽपि त्वहोरात्रे हि सूर्यगम्। तस्माद्योऽयमहंनामा सदाऽहेयत्वहेतुतः। स एवासौ सूर्यसंस्थः साक्षान्नारायणः प्रभुः। योऽसौ सूर्यगतो विष्णुः सोऽहेयो भास्करादिभिः। एवं मनुष्यजीवेषु सूर्यादिषु च संस्थितः। एक एव परो विष्णुरिति जीवसमीपगम्। ईक्षेन्नारायणं देवं सर्वजीवेश्वरेश्वरम्॥' इत्यैतरेयसंहितायाम्। संपन्नस्य परस्तादेवानन्तरमेव। न पुनः कर्मान्तरेण शरीरारम्भ एवंविदो भवति। प्रज्ञामयो देवतामय इत्यादिषु पृथक्पृथङ्मयशब्दोऽनिरुद्धादिचतुर्मूर्तीनामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति दर्शयितुम्। 'अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः। प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः। अमं करोति यच्छास्त्रमृतं स्वस्मिन्पुनः पुनः। संकर्षणोऽमृतं तस्माद्वासुदेवस्तु बृंहणात्। जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः। एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः॥' इत्यादि चातुरात्म्ये। संभूयेत्यत्र समित्युपसर्गाद्बृहतीसहस्रसंपादनानन्तरं भगवदाधिक्यं पुनराधिक्येन ज्ञायते इत्युक्तं भवति। भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति। 'द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात्। आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः। प्राप्नोति देवताश्चैव केशवान्ताः क्रमेण तु। योग्या अस्याश्च विद्याया देवा ऋषय एव च॥' इत्यादि सत्तत्त्वे। बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि पुरुषैरहेयत्वादहंनामकानि तान्येव सूर्ये स्थितानि। यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादहंनामकानि। एतदेवोक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीपे ईक्षेत। नात्र जीवेश्वराभेदो विवक्षितः। उप समीपे ईक्षेतेति समीपे दर्शनवचनात्। न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम्। न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित्। उक्तं च भगवता व्यासेन—'नानर्थकः स्वरो वाऽपि वर्णो वा कुत्रचिद्भवेत्। पदं वाक्यं कुतश्च स्याच्चाल्पार्थमपि कुत्रचित्। उच्चाराद्यर्थमपि वा नास्ति किंचित्स्वरादिकम्। महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा॥' इति। सुकरं च सर्वपदानामनर्थकत्वकल्पनम्। यैश्च वाक्यैरर्थवत्त्वं प्रतीयते तेषामप्यनर्थकत्वमेव स्यात् विशेषाभावात्। न च मानुषवाक्येन वेदपदानामानर्थक्यं कल्प्यम्। जीवेश्वरैक्याङ्गीकारे योऽहं सोऽसावित्येव पूर्यते, पुनर्योऽसौ सोऽहमिति व्यर्थम्। न ह्यस्य तेनैक्ये तस्यानेन भेदशङ्का भवति। अस्य तस्येति भेदाङ्गीकारे नाभेदो मुख्यः। किं तु तदधीनत्वमेवान्यस्य भवति। स्नेहविशेषो वा चैत्रो मैत्रो मैत्रश्चैत्र इतिवत्। तत्र ह्युभयस्नेहापेक्षया पुनर्वचनं युज्यते। अभ्या-

सत्वे ह्येकप्रकारेण प्रयोगो दृष्टः। अत्र हि प्रयोगद्वैविध्यं दृश्यते। 'एकप्रकारा बहुशो वागभ्यास इतीरितः। अर्थान्तरार्था द्विविधा प्रयुक्तेति हि निर्णयः ॥' इति गारुडे। अहंशब्दस्याहेयत्वाङ्गीकारे नराहेयत्वं सुराहेयत्वं चोच्यते इति न वैयर्थ्यम्। 'अः इति ब्रह्म, तत्रागतमहमिति' 'न वा अहमिमं विजानाति' 'तस्योपनिषदहम्' इत्यादौ विष्णोरेवाहेयत्वेनाहंनामकत्वप्रसिद्धेः। अहंशब्दस्य अस्मच्छब्दार्थत्वे अहमिमं न जानातीति न युज्यते। 'तस्य भूरिति शिरो भुव इति बाहू' इत्यादिना अक्षिसंस्थो भगवानेव ह्यहंशब्दोदितः। नहि जीवस्याक्षिणि पृथक् शिरोबाह्वादिकं विद्यते। हृदि स्थितमेव हि तस्य स्वरूपम्। जागरितेऽप्यक्ष्यादिषु विशेषसंनिहितं भवति दीपप्रकाशवत्। 'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि' 'गुणाद्वा लोकवत्' (ब्रसू. २।३।२५,२६) इति च सूत्रात्। 'आदित्ये हिरण्मयः पुरुषस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादि सूर्ये स्थितस्य विष्णोः रूपमुक्त्वा अक्षिस्थितस्यापि 'तस्यैतस्य तदेव रूपम्' इत्यादिकथनाच्च। 'स एष एवैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे' इत्यादिलोकाधिपत्यकथनाच्च। नहि कश्चिद्भिक्षुकः पातालाद्यधिपतिरित्यत्र किंचिन्मानम्। तस्माद्भगवानेवाहेयत्वादहंनामा। 'चक्षुर्मित्रस्य वरुणस्याग्नेः, जगतस्तस्थुषश्च आत्मा' (ऋसं. १।११५।१) इत्यादि जीवेभ्यो भेददर्शनाच्च। 'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य संततो भावस्तस्मादात्मेति भण्यते ॥' इति भारते। देवता अप्येति प्राप्नोतीत्येव चार्थः। लयश्चेद्देवतास्वप्येतीति स्यात्। न च विनाशः पुरुषार्थः। मयट्शब्दस्य भगवत्प्राधान्यार्थत्वानङ्गीकारे संभूय देवता अप्येतीति ल्यप् न युज्यते। उपासनायास्तु संपन्नस्य परस्तादित्युक्तत्वात्पूर्वमेव सिद्धिः। 'सर्वस्माद्भिन्नमीशेशं जीवाभेदेन यः स्मरेत्। स यात्यन्धं तमो घोरं नित्यातिशयदुःखदम्। सर्वोत्तमं तु यो विष्णुं भिन्नं जानाति सर्वतः। नित्यानन्दमसौ याति वासुदेवप्रसादतः॥' इति चैतरेयसंहितायाम्। अतः सर्वव्यतिरिक्तः सर्वोत्तमः सर्वगुणपरिपूर्णो नारायण इति सिद्धम्। 'सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः। अध्यायान्ते द्विरुक्तिः स्यात्पूर्वोक्तस्यावधारणे ॥' इति शब्दनिर्णये। मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महैतरेयभाष्ये द्वितीयप्रघट्टके
द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः

सर्वात्मा प्राणः पञ्चभूतरूपोक्थरूपः
अत्ता अन्नं च

[1]यो ह वा आत्मानं पञ्चविधमुक्थं वेद। यस्मादिदं सर्वमुत्तिष्ठति। स संप्रतिवित्। पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधम्। एतस्माद्धीदं सर्वमुत्तिष्ठति। एतमेवाप्येति। अयनं ह वै समानानां भवति य एवं वेद। तस्मिन्योऽन्नं चान्नादं च वेद। अहास्मिन्नन्नादो जायते। भवत्यस्यान्नम्। आपश्च पृथिवी चान्नम्। एतन्मयानि ह्यन्नानि भवन्ति। ज्योतिश्च वायुश्चान्नादम्। एताभ्यां हीदं सर्वमन्नमत्ति। आवपनमाकाशः। आकाशे हीदं सर्वं समोप्यते। आवपनं ह वै समानानां भवति य एवं वेद। तस्मिन्योऽन्नं चान्नादं च वेद। अहास्मिन्नन्नादो जायते। भवत्यस्यान्नम्। ओषधिवनस्पतयोऽन्नम्। प्राणभृतोऽन्नादम्। ओषधिवनस्पतीन् हि प्राणभृतोऽदन्ति। तेषां य उभयतोदन्ताः पुरुषस्यानु विधां विहितास्तेऽन्नादाः। अन्नमितरे पशवः। तस्मात्त इतरान्पशूनधीव चरन्ति। अधीव ह्यन्नेऽन्नादो भवति। अधीव ह समानानां जायते य एवं वेद ॥ १ ॥

(१) 'यो ह वा' इत्यादि उक्थस्य पाञ्चविध्यगुणविशेषसंबन्धार्थम्। 'उक्थमुक्थं' इत्यत आरभ्य उक्थस्य प्राणस्यान्नाद्यलोककालदेवताछन्दोवेदगोद्यनेकगुणसंबन्ध उक्तः। तस्यैव सर्वात्मनः पाञ्चविध्यादिगुणविशेषसंबन्धप्रदर्शनार्थं 'यो ह वा' इत्यादिग्रन्थरूपमारभ्यते। यो ह वा आत्मानमिति। यः ह वै कश्चिदात्मानं स्वकार्यकरणसंघातरूपं पञ्चविधं पञ्च-

(१) ऐआ. २।३।१.

प्रकारमुक्थं वेद अहमस्मीति विद्यादिति विधिरनुवर्तते । एवमत्र पाञ्चविध्यगुणविशेषसंबन्धमात्रमिह वेदेत्युच्यते । यो वेद स किम् । संप्रतिवित् सम्यग्दर्शीत्यर्थः । सम्यग्दर्शनं हि सर्वत्र सर्वपुरुषार्थसाधनकारणं, न विपर्ययः, इत्यागोपाङ्गनादिसिद्धं, अतः प्रलोभनार्थं स संप्रतिविदित्याह । पञ्चविधस्योक्थस्वप्रदर्शनार्थं विशेषणम्—यस्मात्पञ्चविधादुक्थात्सर्वमिदं स्थावरं जङ्गमं चोत्तिष्ठति । तदुक्थं यो वेद स संप्रतिविदिति प्रलोभ्याभिमुखीभूतायाह— पृथिवी वायुराकाश आपो ज्योतींषीत्येष भूतानां संघातः प्राणिनां प्रत्यात्मभूतत्वादात्मा च सः, उक्थं च तत्, इत्यात्मोक्थं पञ्चविधम्। उक्थस्यैव हेतुत्वप्रदर्शनार्थं—एतस्माद्धीदमित्यादि । न केवलमुत्पत्तिरेव एतस्मात्, विनाशकालेऽप्येतमेव भूतसंघातमप्येति अपिगच्छति एतस्मिन्नेव प्रलीयते इत्यर्थः। एवमुत्पत्तिस्थितिप्रलयैरात्मभूतोऽयनं सर्वस्य प्राणिजातस्यैष पञ्चविधो भूतसंघात इत्येवं यो वेद सः अयनं ह वै समानानां तुल्यजातीयानां संबन्धिनां भवति । पञ्चविधेऽप्युक्थे तस्मिन् योऽन्नं चान्नादं च वेद तस्यैतत्फलम् — अस्मिन्नुक्थेऽन्नादो जायतेऽह दीप्ताग्निर्जायते एवेत्यर्थः। आमयावित्ववर्जित इत्येतत् । अन्यथा किं स्याद्विद्याफलम् । सर्वो हि लोकोऽन्नादो भवत्येव । अन्नादत्वमप्यनर्थकमेव स्याद्यद्यनामयाविनोऽन्नं न स्यात् इत्यत आह—भवत्यस्यान्नमिति । इच्छात इत्यभिप्रायः। फलेन प्रलोभ्याह पूर्ववत् इदं तदन्नमन्नादं चेति— आपश्च पृथिवी चान्नं, अपां पृथिव्याश्च संयोगे व्रीहियवादीन्यन्नानि भवन्ति, अतः प्रसिद्धमेतदिति । हिशब्देन हेत्वर्थतां द्योतयन्नैतन्मयानि पृथिव्यब्विकाराणि ह्यन्नानि भवन्तीत्याह । ज्योतिश्च वायुश्चान्नादम् । वायुना हि संयुक्तं ज्योतिर्दीप्यते, दीप्तं हि ज्योतिरन्नमत्तुं समर्थं भवतीत्याह— एताभ्यां हि वायुज्योतिर्भ्यां, हिशब्दोऽवधारणार्थः, एवेदं सर्वं प्राणिजातमन्नमत्ति, इदं वा सर्वमन्नमेताभ्यामत्ति । तत्र अब्भूम्योरन्नत्वेन वायुज्योतिषोरत्त्वेन विनियोग उक्तः, नाकाशस्य, इत्यत इदमुच्यते— आवपनं आ उप्यतेऽस्मिन् आधीयते इत्यावपनमाकाशः। तत्प्रसिद्धमाधारत्वमाकाशस्येत्याह हिशब्देन — आकाशे हीदं सर्वं समोप्यत इति । सर्वस्य ह्यत्तुराद्यस्य चाकाशं (आधारः)। 'आकाशे वै सूर्याचन्द्रमसौ' इति श्रुत्यन्तरात् । आकाशस्यावपनगुणविज्ञानफलमिदमुच्यते —आवपनं आश्रयो ह वै समानानां भवति य एवं वेद । भूतविषयेऽन्नान्नात्तृत्वमुक्तम् । भूतविकारे इदानीमुच्यते प्राणिजाते । तस्मिन्योऽन्नं चान्नादं चेत्याद्युक्तार्थम् । तत्र ओषधिवनस्पतय इति सर्वं स्थावरं अन्नमित्यभिप्रायः । चक्षुरादिप्राणव्यक्तिं बिभ्रतीति प्राणभृतः । सर्वे जङ्गमाः प्राणभृतः । ते बहिःसंज्ञत्वादन्नमत्तीत्यन्नादं, अन्तःसंज्ञत्वात्तु स्थावरा अन्नम् । प्रसिद्धं ह्येतदोषधिवनस्पतीन् प्राणिनोऽदन्ति कृष्यादिनोत्पाद्य । तेषामन्नादानामपि मध्ये ये उभयतोदन्ता अश्वादयः । तेषां च विशेषणं—पुरुषस्यानुविधां पुरुषस्यानुप्रकारतां विहिताः पुरुषस्यानुवर्तित्वेन विहिता इत्यर्थः। ते अन्नादाः । अन्नमितरे आरण्यादयः पशवः । यस्माच्च पुरुषानुवर्तिनोऽन्नादाः, तस्मात्ते इतरानारण्यादीन् अधीव उपरीव पूज्यमाना रक्ष्यमाणाश्चरन्ति वर्तन्ते । प्रसिद्धं चैतत् अधीव उपर्येव, इवशब्दोऽवधारणार्थः, हि यस्मादन्नेऽन्नादो भवति । अधीव ह समानानां जायते य एवं वेदेति पूर्ववत् । शांकर.

( २ ) 'योऽसौ नारायणो देवः परमात्मा सनातनः । नित्याततगुणत्वात्स आत्मेत्युक्तः सदा श्रुतौ । नारायणादिरूपेण पञ्चधाऽवस्थितः सदा । सर्वस्योत्थापकत्वात्स उक्थमित्यभिधीयते । बृहतीसहस्ररूपे च स उक्थे पञ्चधा स्थितः । पञ्चभेदं हि तच्छस्त्रं तृचाशीतित्रयं च यत् । पूर्वापरं तृचाशीत्या इति पञ्चात्मकं हि तत् । प्रथमे पञ्चकाद्भागे स्थितो नारायणः स्वयम् । ऋक्त्रयाशीतिके पूर्वे गायत्रीछन्दआत्मके । वासुदेवः स्थितो नित्यमृगशीतित्रये तथा । द्वितीये बृहतीछन्दस्यसौ संकर्षणः स्थितः। यस्यावेशबलेनैव जीवः संकर्षणोऽपरः । पृथिवीं बिभर्ति सततं तत्प्रसादात्तवैभवः । तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः । प्रद्युम्नरूपी सततं स्थितो यस्यैव संनिधेः । उक्थस्यैवान्त्यभागे तु सोऽनिरुद्धो हरिः स्थितः । कामपुत्रोऽनिरुद्धाख्यां यदावेशेन लब्धवान् । एवं पञ्चात्मकं विष्णुं बृहत्युक्थस्य देवताम् । यो वेद सम्यग्वेत्ता स तानि रूपाणि वै हरेः । स्थितानि पञ्चभूतेषु पृथिव्याद्यभिधानि च । तदावेशात्पृथिव्यादि नाम

भूतेषु पञ्चसु। पृथुत्वात्पृथिवीनामा भूमौ नारायणः स्थितः। बलज्ञानस्वरूपत्वाद्वायुनामा स एव च। वायौ संकर्षणो नित्यं स्थित आकाशनामकः। व्याप्तत्वाद्वासुदेवस्तु सदाकाशे स्थितः प्रभुः। अनिरुद्धस्तथैवाप्सु बहुरूपो व्यवस्थितः। अन्नामा पालनान्नित्यं प्रद्युम्नो ज्योतिषि स्थितः। ज्योतिर्नामा द्योतनाच्च बहुरूपः पृथक्पृथक्। यद्यप्यस्य हरेः सर्वरूपाण्यप्यखिलैर्गुणैः। पूर्णान्यथापि चैकैकरूपेषु स पृथग्गुणैः। व्यवहारान्पृथग्देवः करोतीव हि लीलया। तस्मात्पृथगिवास्येति नाम विष्णोः परात्मनः। सर्वत्र सर्वनाम्नोऽपि व्यवहारार्थमीर्यते। एतस्माद्धि हरेर्नित्यं जगदुत्तिष्ठति प्रभोः। मुक्तौ लये च तं याति स च सर्वाश्रयः प्रभुः। य एवं वेत्ति तं विष्णुमुपास्ते चापरोक्षतः। स मुक्तः समजातीनामाश्रयश्च भविष्यति। स्वजातीनामुत्तमत्वपदयोग्या हि ये सुराः। ब्रह्मेन्द्राद्यास्ते हि योग्याः साक्षादस्मिन्नुपासने। अन्येषां ज्ञानमात्रेण योग्यमाधिक्यमाप्यते। संकर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ। भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः। नारायणानिरुद्धौ तौ भोग्यवस्तुषु संस्थितौ। तर्पकौ सर्वलोकानां तस्माद्भोग्यौ न चर्व्यतः। अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः। एवं पञ्चात्मकं विष्णुं य उपास्ते सदैव तु। अवकाशप्रदः सोऽपि स्वजातीनां भविष्यति। भोक्ता चाप्यायकश्चैव तस्य विष्णोः प्रसादतः। ब्रह्मेन्द्राद्याः स्वजातीशपदयोग्या अमुष्य च। योग्या उपासनस्य स्युस्तदन्ये ज्ञानमात्रके। संकर्षणश्च प्रद्युम्नो जङ्गमेषु व्यवस्थितौ। नारायणानिरुद्धौ तु स्थावरान्तर्गतौ प्रभू। तत्राप्याकाशगो नित्यं वासुदेवो निरञ्जनः। प्राणानां भरणान्नित्यं प्राणभृन्नाम तद्धरेः। न ह्यन्यः प्राणभर्ताऽस्ति तमृते पुरुषोत्तमम्। ओषणाच्च निधानाच्च स एवौषधिनामकः। वननीयपतित्वाच्च स एव हि वनस्पतिः। अन्ने स्थित्वा तृप्तिदत्वं तस्याद्यत्वमपीष्यते। पुरुषस्य हरेर्ये तु सदाकारेण संस्थिताः। देवगन्धर्वमर्त्याद्यास्तेषु संकर्षणो हरिः। प्रद्युम्नश्च स्थितो नित्यं पुरुषाकृतिरेव तु। तौ भोक्तारौ च भोग्यानां भोजकावखिलस्य च। नारायणानिरुद्धौ तु तथान्यपशुषु स्थितौ। वृषभाश्वादिरूपेण तृप्तिदावखिलस्य च। वाहनोपानहादीनामारोढारो नरादयः। यतः संकर्षणश्चैव प्रद्युम्नस्तेषु संस्थितौ। ततस्तयोर्हि संचार उपरीव भविष्यति। आकाशगो वासुदेवः पञ्चमोऽत्राप्युपास्यते। वाहनादियुतो मुक्तौ भवेदेतदुपासकः॥' इत्यैतरेयसंहितायाम्। आत्मशब्दाच्च न भूतमात्रमत्रोच्यते। न च मुख्यार्थे परित्यज्य उपचारार्थोऽङ्गीकर्तव्यो विरोधाभावे। सर्वनामवत्त्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र। वप नीरोमकरणावकाशप्रदानबीजवर्धनेष्विति च धातुः। तस्मिन्पञ्चके योऽन्नमन्नादं च वेद सोऽस्मिन् स्वजातियूथे विशेषेणान्नाद आजायतेह। तस्मिन् वेद अस्मिन्नाजायते इति पृथक्पृथक्पुनःपुनर्विशेषणादुपासकस्य स्वजातिसंनिधानाच्च स्वजाताविति ज्ञायते। 'क्षीराब्धिशयनं विष्णोः रूपं यत्पुरुषाभिधम्। संकर्षणश्च प्रद्युम्नस्तदाकारौ नृषु स्थितौ। नारायणानिरुद्धौ तु पश्वाकारौ पशुस्थितौ॥' इति सत्तत्त्वे। गुणवैशेष्याभावेन वाहनादिषु चरणमात्रादधीव चरन्तीत्यादाविवशब्दः।

मध्व.

आत्मा प्राणरूपः ओषधिवनस्पतिपशुपुरुषेषु तारतम्येन आविर्भूतः पुरुषे एव प्रज्ञानेन संपन्नतमः उत्कृष्टः

**तस्य य आत्मानमाविस्तरां वेद। अश्नुते हाविर्भूयः। ओषधिवनस्पतयो यच्च किंच प्राणभृत्स आत्मानमाविस्तरां वेद। ओषधिवनस्पतिषु हि रसो दृश्यते। चित्तं प्राणभृत्सु। प्राणभृत्सु त्वेवाविस्तरामात्मा। तेषु हि रसोऽपि दृश्यते। न चित्तमितरेषु। पुरुषे त्वेवाविस्तरामात्मा। स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति। विज्ञातं पश्यति। वेद श्वस्तनम्। वेद लोकालोकौ। मर्त्येनामृतमीप्सति। एवं संपन्नः। अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम्। न विज्ञातं वदन्ति। न विज्ञातं पश्यन्ति। न विदुः श्वस्तनम्। न लोकालोकौ। त एतावन्तो भवन्ति। यथाप्रज्ञं हि संभवाः॥ २॥**

(१) यस्मात् स्थावरत्वादारभ्य उपर्युपरितया अत्तृत्वं प्रस्तुतं तत्पुरुषावसानमेवोक्तं, न ऋषिदेवतादिषु उपर्युपरिभावेऽपि, तत्किंनिमित्तमित्युच्यते। तद्विधानादेव कर्तव्यताप्राप्तावपि फलेन प्रलोभ्यमानः सुतरां प्रव-

(१) ऐआ. २।३।२; ब्रशंकर. १।१।१३.

तैते इति फलेन प्रलोभयन्नाह— तस्य य आत्मानमित्यादिना । अथवा पुरुषं प्रत्येवायमेव महान्प्रजापतिरहमुक्थमस्मीति विद्यादिति ज्ञानकर्मकर्तव्यताविधिः, नेतरान्पशून्प्रति, न च ऋष्यादीन्प्रति, तत्किंनिमित्तमित्युच्यते । तस्यान्नात्तृत्वसमुदायस्यात्मानं आविः प्रकाशः, प्रकाशादपि प्रकाशतरमाविस्तरामात्मानं यो वेद तस्येदं फलं प्रलोभनायाह— अश्नुते व्याप्नोति ह व्याप्नोत्येव आविर्भूयः बहुतरम् । यस्तु जगतः स्रष्टा सोऽव्याकृते नामरूपे व्याकुर्वन्पञ्चभूतानि सर्वारम्भसमर्थान्युत्पाद्य भौतिकं च स्थावरजङ्गमन्नात्तृत्वविभागार्थं, तदेव प्राविशत्, प्रविश्याविरभवदात्मप्रकाशनाय । तथा च मन्त्रवर्णः— 'रूपं रूपम्' (ऋसं. ६।४७।१८) इत्यादिः । तत्र स्थावराद्यारभ्योपर्युपरि आविस्तरत्वमात्मनः । यथायथा आविस्तरत्वं तथातथाऽत्तृत्वमपि । कथमाविस्तरत्वमित्युच्यते—ओषधिवनस्पतयो यच्च किंच प्राणभृत् तत्रानुप्रविश्याविर्भूतश्चात्मेति यो वेद स आत्मानमाविस्तरां वेद । ओषधिवनस्पातिषु दर्शनाद्यभावात् नाविरात्मेत्याशङ्क्य हेतुमाह — हि यस्मादोषधिवनस्पतिषु रसो दृश्यते । यत्र च रसस्तत्र चित्तमनुमीयते । यत्र चित्तं यावन्मात्रं तत्र तावदाविरात्मा बहिःसंज्ञाभावेऽपि अन्तःसंज्ञत्वेन । तस्मादोषधिवनस्पतिष्वात्मन आविष्ट्वे न संशयः । चित्तं प्राणभृत्स्वधिकमाविस्तरहेतुः रसश्च, न चित्तमितरेषु स्थावरेषु । तस्मात् प्राणभृत्सु त्वेवाविस्तरामात्मा यस्मात्तेषु हि रसोऽपि दृश्यते । यद्यपि रसचित्तयोः स्थावरेष्वपि भावस्तथापि बहिश्चित्तादर्शनान्न चित्तमितरेष्वित्याह । प्राणभृत्स्वपि पुरुषे त्वेवाविस्तरामात्मा । तत्र हेतुरुच्यते — स हि पुरुषो यस्मात्तत्प्रकृष्टं ज्ञानं तेन संपन्नानामपि प्राणभृतां संपन्नतमः अतिशयेन संपन्नः । कथमतिशयेन संपन्न इत्युच्यते — यत्पूर्वं विज्ञातं तद्वदति इदमहमज्ञासिषमिति । तथैव विज्ञातं पश्यति । न केवलमतीतस्मरणमेव, भविष्यदपि श्वो म इदं भविष्यतीति वेद श्वस्तनम् । किंच, वेद लोकालोकौ । लोको दर्शनादिविषयः प्राप्तव्यः, तद्विपरीतः अलोकः, तौ च जानाति । किंच, मर्त्येन विनाशिना कर्मज्ञानसाधनेन अमृतं नित्यं प्राप्तुमीप्सति इच्छति । एवं प्रज्ञानेनातिशयेन संपन्नः पशुत्वेऽपि पुरुषः । अथ इतरेषां पुरुषादन्येषां पशूनामशनापिपासे एवाभि प्रति विज्ञानं भवति, न तु विज्ञातवदनादि तेषाम् । यस्मादेवं तस्मात्ते पशव एतावन्त एतावन्मात्राविर्भूतात्मान एव भवन्ति, न पुरुषवदन्नादाः, नापि देहान्तरफलेप्सवः । यस्माद्यथाप्रज्ञं हि यथाप्रज्ञानरूपमेव संभवाः संभवनानि उत्पत्तयः प्राणिनां, तस्मादेतावन्त एव ते भवन्तीति युक्तम् । पुरुषस्य प्रज्ञानातिशययोगात्सर्वफलार्थित्वाच्च तमेवाधिकरोति शास्त्रं कर्मज्ञानयोरिति युक्तम् । 'सुकृतं बतेति पुरुषो वाव सुकृतम्' इति वक्ष्यति ।

शंकर.

(२) 'आविर्भावं तारतम्याद्यो वेद परमात्मनः । स तस्यैव विशेषेण प्रीतियोगाद्भविष्यति । स्थावरं जङ्गमं चैव भूयस्त्वेनाश्नुते हरिः । आविर्भूतस्तेषु सदा सम्यक्स्वात्मानमेव च । तारतम्यात् संनिहितं सर्वभूतेषु केशवः । वेत्त्येक एव विष्णोर्यद्विशेषावेशनं सदा । जङ्गमेषु च वृक्षेषु नैव तादृक् शिलादिषु । तस्माद्वृक्षादिषु रसश्चित्तं चलनवत्तु च । दृश्यते न शिलाद्येषु संनिधिर्न हि तादृशी । शिलाद्येषु स्थितो विष्णुर्भारदार्ढ्यादिकारणम् । नैव चित्तादिकंस्यातो वृक्षाद्या उत्तमास्ततः । विशेषोऽयं पदार्थानां न तु विष्णोः कथंचन । यत्र विष्णुर्गुणाधिक्यं दर्शयेद्रस्तु तद्वरम् । गुणपूर्णो हि सर्वत्र स्वयं विष्णुः सनातनः । वृक्षेभ्योऽप्यधिकं विष्णुर्जङ्गमेषु प्रकाशितः । तेभ्योऽपि पुरुषे विष्णुर्गुणाधिक्यप्रकाशकः ॥' इत्यादि च । य आत्मानं परमात्मानमाविस्तरां आविर्भावतारतम्येन वेद स तस्य विष्णोरेव । सर्वेषां तदीयत्वेऽपि प्रियत्वात्तदीयत्वविशेषणम् । ओषधिवनस्पतयो यच्च किंच प्राणभृत्तत्सर्वं शिलादिभ्यो भूयस्त्वेन तेष्वाविर्भूतोऽश्नुते भगवान् । स एव च नारायणः सम्यक्स्वात्मानमाविस्तरां वेद । 'अन चेष्टायाम्' इति धातोश्चेष्टावत्त्वमेव प्राणभृत्त्वं पश्वादीनाम् । ज्ञानानुसारेण ह्युत्पत्तयः संभवाः ।

मध्व.

पुरुषः पञ्चात्मकः सर्वलोकातिगः पञ्चप्राणयुतः पञ्चात्मकयज्ञसंबन्धी

स[१] एष पुरुषः समुद्रः सर्वं लोकमति । यद्ध किंचाश्नुतेऽत्येनं मन्यते । यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते । यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत । स एष पुरुषः पञ्चविधः । तस्य यदुष्णं तज्ज्योतिः । यानि खानि स आकाशः । अथ यल्लोहितं श्लेष्मा रेतस्ता आपः । यच्छरीरं सा पृथिवी । यः प्राणः स वायुः । स एष वायुः पञ्चविधः । प्राणोऽपानो व्यान उदानः समानः । ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति । प्राणस्य ह्यन्वपायमेता अपियन्ति । स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः । स एष यज्ञः पञ्चविधः । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः । स एष यज्ञानां संपन्नतमो यत्सोमः । एतस्मिन् ह्येताः पञ्च विधा अधिगम्यन्ते । यत्प्राक्सवनेभ्यः सैका विधा । त्रीणि सवनानि । यदूर्ध्वं सा पञ्चमी ॥ ३ ॥

(१) इतश्च पुरुष एव ज्ञानकर्मानुष्ठाने समर्थः । स हि सर्वान्कामानुपायैर्व्याप्नुवन्नतिशेते । तत्कथमित्युच्यते— स एष पुरुषः समुद्रः, समुद्र इवानन्तत्वात् । ' कामं समुद्रमाविश ' ( तैब्रा. २।२।५।६ ) इति मन्त्रलिङ्गात् समुद्र इवानन्तः कामः । तमप्येष पुरुषः कामी उपायैर्व्याप्नुवन्नतिशेते यस्मात्तस्मात्समुद्र इवानन्तत्वात्पुरुषः समुद्रः । तमेतमर्थं प्रसिद्धं दर्शयन्नाह—सर्वं लोकं कामयितव्यं अति अतिक्रम्य वर्तते । प्रसिद्धं चैतद्यत्क्षेत्रं धनं वा यत्किंच अश्नुते व्याप्नोति, यच्च तद्व्याप्तं स्वीकृतं धनं राज्यादि, ततोऽप्ययमतिशेते । यस्मादन्यमपि प्रार्थयते, तस्मात् अति एनं स्वीकृतादधिकतरमेव एनं मन्यते लोकः । यदि पृथिवीराज्यं प्राप्यान्तरिक्षलोकमश्नुते व्याप्नोति केनचिदुपायेन, ततोऽपि अति एवैनं मन्यते, इच्छाया अपरिसमाप्तत्वात् । तथा यद्यमुं लोकं तृतीयमपि वशीकरोति अश्नुवीत प्राप्नुयात् कथंचन, ततोऽपीच्छाया अपरिसमाप्तत्वादतोऽप्यधिकतरं प्राप्तुं योग्य इत्येवैनं मन्यते लोकः । एवमेव यावत्कामा अपरिसमाप्ताः भूतभौतिकविषयास्तावदिच्छाऽप्यस्य असमाप्तैव, तेनासौ समुद्रः पुरुषः । कानि पुनस्तानि भूतानि, येषु कामाः सर्वे परिसमाप्ताः, यान्ययं कामयमान उपायैरात्मभावमापादयति, तानीमानि पञ्च भूतानि पञ्चविधोक्थशब्देन प्रस्तुतानि अन्नान्नादविभागेन परिणतानि । तैरात्मभावपरिणतैः स एष पुरुषः पञ्चात्मकत्वेन विभज्यमानः पञ्चविधो भवति । तत्कथमित्युच्यते । तस्य पुरुषस्य यदुष्णं तज्ज्योतिः अग्निः । देहे यानि खानि सुषिराणि तान्याकाशः । अथ यल्लोहितं श्लेष्मा रेतः ता आपः द्रवात्मकत्वात् अब्विकाराण्येव तानि । यच्छरीरं काठिन्यात्सा पृथिवी । यः प्राणः स वायुः । प्राणस्य प्रसिद्धं वायुस्वाभाव्यम् । एवं पञ्चविधः पुरुषः । तन्मयाः सर्वे कामाः । कस्मात्प्रतिपुरुषमात्मभूता अपि नाप्यन्ते । उपायानभिज्ञत्वात्पुरुषस्य । कः पुनः स उपायः । ज्ञानं कर्म च । किमात्मकं तदुभयमित्युच्यते— वाय्वात्मकमिति । तत्प्रदर्शयन्नाह— तत्र पुरुष एवोक्थमिति यत् प्रपदाभ्यां प्रापद्यत ब्रह्म, यच्च तत्प्रापद्यत, तस्याप्रविभज्यैव उक्तस्योभयस्य बाह्याभ्यन्तरभेदेन शरीरप्राणात्मतया प्रविभागः कथ्यते । तत्र शरीरप्रविभागस्य पञ्चभूतात्मकत्वेन पञ्चविधत्वमुक्तम् । इदानीं तदभ्यन्तरस्य प्राणस्य पाञ्चविध्यमुच्यते—स एष वायुः पञ्चविधः सर्वज्ञानकर्मणामाश्रयभूतः सर्वपुरुषाणामात्मत्वेन पञ्चधा निविष्टत्वात्पञ्चविधः । कथम् । प्राणः प्रणयनान्मुखनासिकावृत्तिः आहृदयस्थानः । अपानोऽपनयनान्मूत्रपुरीषादेरपसर्पणहेतुश्च नाभिस्थानोऽधोवृत्तिः । व्यानो व्यापनकर्मा प्राणापानयोः संधिर्व्यापनः शरीरस्य सर्वशरीरस्थानः । उदानः ऊर्ध्ववृत्तिरुत्कर्षहेतुः आपादतलमस्तकस्थान ऊर्ध्वारोहणादिकर्मा । समानः समं नयनादशितपीतादीनां उदरस्थानोऽन्नपक्ता । एवं पञ्चविधः सर्वक्रियाहेतुः । किंच, याश्च ताः सर्वज्ञानहेतुभूताः चक्षुः श्रोत्रं मनो, वागित्येताः । चक्षुरादिचतुष्टयग्रहणं सर्वकरणोपलक्षणार्थम् । स्वविषयक्रीडनात् द्योतनाच्च

(१) ऐआा. २।३।३; ब्रशांकर. २।३।४०, २।४।९, ३।३।४३; भास्कर. २।४।९, ३।३।४३; मध्व. रिक्षलोक (रिक्षं लोक); वल्लभ. २।४।९ स एष वायुः (एष वायुः); विज्ञान. २।४।१०.

देवताः प्राणापानयोरेव निविष्टाः । प्राणापानवृत्तिर्जीवनं, तदनुवृत्तय इत्यर्थः । प्राणस्य ह्यन्वपायं अपायं अपगमनं अन्विलेतत्, एता देवताश्चक्षुराद्या अपियन्ति प्राणमेवापिगच्छन्ति । तदेतद्दर्शितं प्राणसंवादे । कथं पुनरस्य प्राणस्य ज्ञानकर्महेतुत्वमित्युच्यते—स एष वाचो मन्त्रोच्चारणादिव्याप्रुतायाः चित्तस्य चान्तःकरणस्य चोदनाद्यर्थालोचनव्याप्रुतस्य उत्तरोत्तरिक्रमः उत्तरोत्तरक्रमणं उत्तरोत्तरव्यापारमात्रो यद्यज्ञः यो यज्ञ इत्यर्थः। तस्मात् प्राणतन्त्रवाकूचित्तव्यापाररूपत्वात्प्राणहेतुस्तदुच्यते । स एष यज्ञः पञ्चविधः प्राणकार्यत्वात्पञ्चविधः । कथं पञ्चप्रकारत्वमित्युच्यते—अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः । प्रकृतीनां पञ्चत्वात्सर्वो यज्ञः पञ्चविधः । सहस्रसंवत्सरसत्रान्त एतद्विकार एवेत्यत्रैवान्तर्भवति । स एष सोमोऽग्निहोत्रादीनां यज्ञानां संपन्नानामपि सतां संपन्नोऽतिशयेन, यस्माद्यास्ताः पञ्च विधा अपि सोमेऽधिगम्यन्ते । तस्मिन्कथम् । यत्प्राक् पूर्वं प्रातःसवनादिभ्यो दीक्षणीयादिकर्मजातं सा एका विधा । त्रीणि सवनानि तिस्रो विधाः । यदूर्ध्वं सवनेभ्यः उदवसानीयान्तं सा पञ्चमी विधा । शंकर.

( २ ) योऽस्मिन्पुरुषे पश्वादिभ्य आधिक्येन संनिहितो भगवान्स एष पुरुषः समुद्रः समुद्रिक्तोऽन्येभ्यः। स जीवो यद्यपि भगवत्प्रसादात्सर्वलोकाधिपो भवति, सर्वलोकानतीत्य यत्किंचिदलौकिकं मोक्षाख्यमप्यश्नुते, तथापि तमेनमात्मशब्देन प्रस्तुतं विष्णुमत्येव मन्यते अधिकमेव मन्यते । स्वात्मनः सर्वस्माच्च मुक्तोऽपि न तेन साम्यं तद्भावं वा मन्यते । 'कृष्णो मुक्तैरिज्यते वीतमोहैः ' 'मुक्तानां परमा गतिः ' 'अमृतस्यैष सेतुः ' इत्यादिवाक्याच्च । यद्यपि देवलोकाधिपत्यं तद्योग्यस्य विष्णुर्ददाति, तदप्यश्नुवीतैव । बहु[illegible]गिकादिपरिवाररूपमशुचीदं पदमित्यादिबुद्ध्या नापह्नुवीत । एवं भगवन्तमतिमन्येतैव सर्वथा स्वतः सर्वस्माच्चाधिकमेव मन्येत । यद्यमुं लोकमश्नुते प्राप्नोति अश्नुवीत भुञ्जीत । पृथिवीलोकाधिपत्येऽपि विष्णोराधिक्यं सत्पुरुषो मन्यते इति प्रत्यक्षसिद्धत्वान्न पृथगुक्तम् । अतिशब्दाद्यद्ध किंचेति प्रथमोक्तो मोक्ष इति सिद्धम् । अन्तरिक्षप्राप्तेरल्पत्वान्मोक्षे स्वतःसिद्धत्वाच्चाति मन्यते इति सिद्धवचनमेव कृतम् । स्वर्गादिप्राप्तेरधिकैश्वर्याद्भगवत्समोऽहं, भगवत्स्वरूप इति वा मन्तुं प्राप्तिरस्तीत्यत्येवैनं मन्येतेति सावधारणविधिः । न च मन्यते इति काममात्रम् । मनु अवबोधने इति धातोः । न ह्यवबोध एव कामः । अन्यथा राज्यं जानन्नपि राज्यकाम इति स्यात् । न च मन्यते मन्येतेति द्विविधः प्रयोगस्तस्मिन्पक्षे युज्यते । न च सर्वलोकमतीत्याश्नतो मुक्तस्य मुक्तेरन्यत्र कामो विद्यते । सर्वलोकाधिकं च मुक्तिं विना नान्यत् । तस्मान्मुक्तैरमुक्तैरपि भगवान्सर्वोत्तमत्वेन चिन्त्य इति सिद्धम् । 'पुरुषस्थपञ्चभूतेषु पञ्चरूपो हरिः स्थितः । प्रद्युम्नादिस्वरूपेण ज्योतिरादौ पृथक्पृथक् । स एव च पुनर्वायौ पञ्चधाऽवस्थितः प्रभुः । प्राणादिरूपे वसति ह्यनिरुद्धादिरूपवान् । अनिरुद्धश्च प्रद्युम्नस्तथा संकर्षणः प्रभुः । वासुदेवो नारायणः पञ्चरूप इति क्रमात् । पञ्चरूपोऽपि भगवान्यस्माद्वायौ विशेषतः । स्थितस्तेन च खादिभ्यो वायुरेव विशिष्यते । अत एव पृथिव्यादिस्वरूपा मनआदयः । देवाः प्राणाश्रिता नित्यं गच्छन्ति प्राणमन्वपि । पृथिवीमयं मनस्तत्र शेषवीन्द्रशिवेन्द्रकाः । कामानिरुद्धौ देवगुरुमनोदेवाः सचन्द्रकाः । श्रोत्रमाकाशरूपं च मित्रधर्मजलाधिपाः । कुबेरश्च दिशां देवाः श्रोत्रदेवा इति श्रुताः । ज्योतीरूपं तथा चक्षुश्चक्षुर्देवो रविः स्मृतः । किंचित्तेजोयुता वाक्च विशेषेण त्वबात्मिका । उपचीयते ततः साद्भिस्तदभावे च शुष्यति । तृषितस्य हि वागेव पूर्वं मन्दा प्रवर्तते । वाग्देवते ततो वह्निरुमा चापि प्रकीर्तिते । चक्षुष्ट्वमग्नेः श्रोत्रत्वं चन्द्रस्यापि सहोच्यते । स्वाहाद्या अपि वाक्त्वं च पर्जन्यस्य मनःस्थितिः । द्वितीयमेतदास्थानं श्रुतिवाक्यप्रमाणतः । शेषवीन्द्रशिवादीनां मनआदिस्वरूपिणाम् । आश्रयो वायुरेवैकस्तस्य नारायणः स्वयम् । तस्माद्वायुवशानां हि वाक्चित्तादिस्वरूपिणाम् । देवानां क्रमवृत्तिभ्यो जाते यज्ञेऽपि केशवः । अग्निहोत्रादिके नित्यमनिरुद्धादिरूपकः । पञ्चधाऽवस्थितः सोमे पञ्चरूपो व्यवस्थितः । सवनत्रयात्पूर्वके च सवनत्रितये परे । अनिरुद्धादिरूपेण क्रमेणैव व्यवस्थितः । तमेतं परमं विष्णुं मुक्तोऽप्यत्येव मन्यते । अधिकं ह्येव तस्मात्तं मन्येतान्योऽपि सर्वदा ॥' इत्यादि च । पञ्चरूप-

भगवद्ध्यानार्थमेव चैतत्पञ्चविधत्वं सर्वत्रोक्तम् ।

मध्व.

[1]यो ह वै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूळ्हम् । स संप्रतिवित् । एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थम् । तदेतत्पञ्चविधम् । त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतः । गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतः । गायत्र्युष्णिग्बृहती त्रिष्टुब्द्विपदेति च्छन्दस्तः । शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति । पञ्चकृत्व उद्गायति । पञ्चकृत्वः प्रतिहरति । पञ्चकृत्व उपद्रवति । पञ्चकृत्वो निधनमुपयन्ति । तत्स्तोभसहस्रं भवति ॥

'स एष यज्ञः पञ्चविधः' इत्यादि यत्स्तुतिपरं वाक्यं 'पृथिव्यां नैमिषं' इत्यादि वाक्यं अन्यतीर्थस्तुतिपरं यद्वत्, तमिह स्तुतिपूर्वकमेवोपन्यस्यति—यो ह वै यज्ञे यज्ञमित्यादि । यः कश्चित् ह वै यज्ञे यज्ञमध्यूळ्हं अधिरूढं यथा हस्तिपृष्ठेऽधिरूढं राजानमिति, तद्वद्यज्ञे अध्यूळ्हं यज्ञश्रेष्ठतयाऽध्यूढं उपरिगतं, तथा अहन्यहरध्यूळ्हं, तथा देवेषु देवमध्यूळ्हं यो वेद । स किम् । संप्रतिविदित्युक्तार्थः । कः पुनरसावेवं महीयमान इत्युच्यते । एष वै यज्ञे सर्वस्मिन्सहस्रसंवत्सरसत्रान्ते कर्मणि श्रेष्ठतया हस्तिपृष्ठगतराजवदध्यूळ्हः । स एव च सर्वाहःसंपन्ने महाव्रतीयेऽहनि श्रेष्ठतयाऽहरध्यूळ्हम् । तथा देवेषु वागादिष्वग्न्यादिषु च श्रेष्ठतयाऽध्यूळ्हो देवः । कोऽसौ । यदेतन्महदुक्थं शस्त्रं प्राणसंस्तुतत्वात् । 'प्राण उक्थमित्येव विद्यात्' इति ह्युक्तम् । तदेतदुक्थं पञ्चविधम् । कारणानुविधायि हि कार्यम् । पञ्चविधं कारणम् । तत्र वाक्चित्तोत्तरोत्तरव्यापारनिष्पन्नयज्ञाधिरूढं हि तदित्युक्तम् । कथं पञ्चविधत्वमित्यत आह—त्रिवृत् पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतः । कतिपयानां मन्त्राणां समुदायस्य स्तोम इत्याख्या छान्दोग्ये सामान्येन । तत्र विशेषसंज्ञा त्रिवृदाद्या । त्रिवृच्छिरः, पञ्चदशं दक्षिणः पक्षः, सप्तदशमुत्तरः पक्षः, एकविंशं पुच्छं, पञ्चविंशमात्मा । यद्यपि क्रत्वात्मनोऽग्नेः शस्त्रप्राधान्येनोक्थसंज्ञस्य पाञ्चविध्यं प्रस्तुतं, तथापीहोक्थद्वारेण ऋग्यजुःसामात्मकं समस्तं कर्म संपिपादयिषितमिति स्तोमसामछन्दःस्तोभतोऽपि पाञ्चविध्यमुच्यते । सर्वोऽयमकारलक्षणाया वाचः परमो विकार इति हि वक्ष्यति । सर्वं च कर्म वाचश्चित्तस्य चोत्तरोत्तरविक्रियामात्रम् । तथा 'तस्य वाक्च मनश्च वर्तनी' इति चोक्तम् । वाङ्मनसे च नामरूपे तदाश्रयत्वात्कर्मणः, ताभ्यामेव वर्तन, अतोऽपि स्तोमसामादिना पाञ्चविध्यमुक्थस्य युक्तमेव । गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतः पाञ्चविध्यं पूर्ववच्छिरआदिक्रमेण । गायत्र्युष्णिग्बृहती त्रिष्टुब्द्विपदेति छन्दस्तः पाञ्चविध्यम् । शिरआदिरेव क्रमः । तथा चाह त्रिवृत्स्तोमादीनां क्रमदर्शनार्थं—शिरः दक्षिणः पक्षः उत्तरः पक्षः पुच्छं आत्मा इत्याख्यानं ब्राह्मणस्य चयनाकृत्याख्यानं, आकृतिवचनमित्यर्थः । किंच राजने साम्नि स्तोभसहस्रकल्पना या साऽपि पञ्चविधैव । तत्कथम् । पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति । उद्गातॄणां त्रयाणां एकैकस्य चतुर्षु व्यापारः । सर्वे पञ्चकृत्वो निधनमुपयन्ति, बहुवचनसामर्थ्यात् । तत्रैतत्पाञ्चविध्यं यथोक्तं स्तोभसहस्रं भवति । सर्वा चेयं कल्पना ब्राह्मणतः सूत्रतश्चान्वेष्टव्या ।

शंकर.

एवं होताः पञ्च विधा अनुशस्यन्ते । यत्प्राक् तृचाशीतिभ्यः सैका विधा । तिस्रस्तृचाशीतयः । यदूर्ध्वं सा पञ्चमी । तदेतत्सहस्रम् । तत्सर्वम् । तानि दश । दशेति वै सर्वम् । एतावती हि संख्या । दश दशतस्तच्छतम् । दश शतानि तत्सहस्रम् । तत्सर्वम् । तानि त्रीणि च्छन्दांसि भवन्ति । त्रेधा विहितं वा इदमन्नमशनं पानं खादः । तदेतैराप्नोति ॥ ४ ॥

(१) यथेयं कल्पना एवमेता अपि पञ्च विधा अनुशस्यन्ते होत्राऽपि बृहतीसहस्रे । कथम् । प्राक् तृचाशीतिभ्यः शस्यन्ते ऋचः सैका विधा । गायत्री बार्हत्यौष्णिहीति तिस्रस्तृचाशीतयस्तिस्रो विधाः । तृचाशीतिभ्यो यदूर्ध्वं शंसनं सा पञ्चमी विधा । एवं बृहतीसहस्रं शंसता पञ्च विधा एवानुशस्यन्ते । यदेतत्सहस्रं स्तोभतो बृहत्युक्थं च । तत्किम् ।

(१) ऐआ. २।३।४.

तत्सर्वं क्रियाकारकफलजातं नामरूपकर्मात्मकं द्वैतं संख्यासंख्येयत्वेन च द्विधा विभक्तं तत्सर्वं संपन्नं सहस्रम् । तस्मिन् हि सहस्रे सर्वसंख्याजातमन्तर्भवति, संख्याद्वारेण संख्येयं चान्तर्भवति, तस्मादेतत्सहस्रं, तत्सर्वम् । तानीति परामर्शभाजां प्रकृतानामभावात् वक्ष्यमाणानां च त्रयाणां छन्दसामशनपानखादानां चान्नप्रकाराणां व्यवहितत्वात्तत्परामर्शासंभवे प्रकृतसंख्यान्तर्गतदशशतसहस्राणि सर्वसंख्यापर्यवरूपाणि तानीति परामृश्यन्ते । तानि दशदशेत्येवं सर्वे व्याप्नुवन्ति, सर्वे भवतीत्यर्थः । वैशब्दः प्रसिद्धानुस्मारकः । प्रसिद्धं लोके दशदशेत्यावर्तमानायां संख्यायां सर्वसंख्यासंख्येयं व्याप्यते इत्याह — एतावती हि संख्येति । कथं पुनः तानीति परामृष्टैस्त्रिभिः संख्यारूपैः सर्वं व्याप्यते इत्येतमर्थं दर्शयन्ती आह श्रुतिः—एकादिकायाः संख्यायाश्चावर्तमानायाः प्रथमं पूर्वरूपं दश । दशसंख्यायाः पुनरावर्तमानायाः दशकृत्वो दशदशतो यद्द्वितीयं पूर्वरूपं तच्छतम् । सा च शतसंख्या दशावृत्ता दश शतानि तत्सहस्रम् । तत्प्रतिज्ञातं तत्सहस्रं तत्सर्वमिति । तस्य दशावृत्तिप्रकारैः सर्वव्याप्तिं दर्शयित्वा उपसंहरति— तत्सहस्रं तत्सर्वमिति यथाप्रतिज्ञातमेव । तानि त्रीणि छन्दांसि भवन्ति । यत्तद्बृहतीसहस्रं सर्वात्मकं दशशतसहस्रधा प्रविभक्तं त्रीणि छन्दांसि भवन्ति गायत्र्यादीनि, त्रिधा विभक्तत्वसामान्यात् । किंच त्रेधा विहितं बृहतीसहस्रात्मनेन्द्रेण प्राणेनाद्यमानमन्नमिदं प्रसिद्धं लोके । कथम् । अशनं ओदनादि, पानं पानीयादि, खादः लड्डुकादि । तच्चैतत्सर्वमन्नं दशशतसहस्रैर्गायत्र्यादितृचाशीतिप्रकारैरेतैराप्नोति, संख्यासामान्यात् । सर्वस्य चान्नत्वं दशसंख्यात्या विराट् संपद्यते ।

शंकर.

(२) 'यज्ञेषु यज्ञनामानं याज्यत्वात्पुरुषोत्तमम् । अविरुद्धं तथाहःसु चाहर्नामानमेव तु । अद्यत्वाद्धि देवेषु देवं सर्वोत्तमत्वतः । एवं च सर्वनामानं सर्वेषु स्थितमच्युतम् । स्तोमादिषु च यो वेद स सम्यग्विदिति श्रुतः । य एष उक्थनामाऽसौ सर्वोत्थापनको हरिः । महांश्च परिपूर्णत्वात्सहस्रबृहतीस्थितः । अहरह्नां स यज्ञानां यज्ञो देवाधिकोऽपि सः । अनिरुद्धादिरूपेण स विष्णुः पञ्चधा स्थितः । स्तोमसामचितिच्छन्दःशस्त्रेष्वपि पृथक्पृथक् । एकैकमेव तद्रूपमनिरुद्धादिपञ्चकम् । प्रस्तावादिष्वपि विभुः पञ्चधैव व्यवस्थितः । प्रस्तावादीन्पञ्चकृत्वस्तस्मादेव प्रकुर्वते । पञ्चरूपं तमेवैकं स्तोतुमेव पृथक्पृथक् । तत्र ये स्तोमशब्दाश्च संस्थिता बहुकोटयः । पृथक्पृथक्तेऽपि विष्णोः प्रादुर्भावान्प्रचक्षते । अनन्तरूपो हि हरिः शब्दोऽप्येष ह्यनन्तधा । विष्णोः सहस्रनाम्नस्तु यत्तद्रूपसहस्रकम् । बृहतीसहस्रमेतच्च तद्वक्ति हि पृथक्पृथक् । सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः । नामानि विष्णोरुच्यन्ते सहस्रमिति चाख्यया । अनन्तनामवचने त्वशक्तत्वात्सहस्रकम् । नाम्ना पृथगिदं प्रोक्तमनन्ततनुवाचकम् । विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये । आसीत्सहस्रमित्याख्या सहस्रं मुख्यतोऽमितम् । ब्रह्म यावत्तावती वागिति वेदप्रमाणतः । सहैवानन्तरूपैस्तु सरणेन सहस्रकम् । नाम्ना सह स्तुतेरेव रूपाणां वा सहस्रता । बृहतीसहस्रं चैतस्माद्रूपानन्ताभिधायकम् । पृथक् पृथग्घि नामार्था ऋच एताः प्रकीर्तिताः । सर्वनामात्मकं तस्मादृक्सहस्रमिदं हरेः । सर्वरूपाण्यतो विष्णोः संस्तुतान्यमुनैव हि । मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः । कृष्णबुद्धौ च कल्कीति रूपाणां दशकं हरेः । पञ्चभेदविभिन्नेन ह्यृक्सहस्रेण शस्यते । रूपाणां पञ्चकं पूर्वमपरं पञ्चकं हरेः । प्रस्तावाद्यैरनिघ्नैः स्तूयते सामभक्तिभिः । तानि रूपाण्यस्य दश सर्वरूपात्मकानि च । दश नामानि चास्यैव सर्वरूपाभिधान्यपि । पञ्चकं सामभक्तीनामृक्सहस्रं च तद्द्वयम् । स्तावकं सर्वरूपाणामत एव रमापतेः । दशेति सर्वनामैतत्प्रथितं मुख्यतः श्रुतौ । शंरूपं भगवन्तं यद्यादृव्यक्त्या समस्तशः । दशेत्यमितनाम्नां तदाख्या रूपेषु शं ददेः । सर्वनामार्थवचनात्पञ्चकद्वितयस्य च । अभूद्दशेति वै नाम तस्मादेतद्दशाखिलम् । दशैव मूलसंख्या च तद्भिदाः शतादयः । ऋक्सहस्रमिदं तस्मादनन्तगुणमच्युतम् । अनन्तशक्तिममितरूपनामानमेव च । वक्ति छन्दस्त्रयं चात्र तृचाशीतित्रयात्मकम् । अद्यनादित्रिकं तच्च भूत्वा विष्णुमुपैति च । सर्वच्छन्दोभिधश्चैव सर्वदेवाभिधस्तथा । सर्वमुन्यभिधश्चैव सर्ववस्त्वभिधो हरिः । अनन्तपूर्णगुणकस्तस्माज्ज्ञेयो रमापतिः । मुख्य-

तोऽस्यां च विद्यायां योग्य एकश्चतुर्मुखः। एकदेशपरिज्ञाने त्वन्ये योग्याः शिवादयः ॥' इति च। 'त्रिविधोऽह्यनिरुद्धोऽसावध्यात्मादिविभेदतः। अतस्त्रिवृदिति प्रोक्तस्तथा पञ्चदशात्मकः। प्रद्युम्नः पञ्चभूतेषु ह्यध्यात्मादिविभेदतः। लिङ्गसतदशस्थत्वात्तावान् संकर्षणः श्रुतः। सप्तधातुषु संस्थः सन्नध्यात्मादिविभेदतः। एकविंशो वासुदेवो मनआदिचतुष्टये। गुणत्रये च प्रकृतावध्यात्मादिविभेदतः। मूलरूपेण च सह पञ्चविंशात्मकः प्रभुः। नारायणस्त्वचिन्त्यात्मा स एकोऽपि ह्यनन्तधा। गायकानां त्राणतोऽसौ गायत्रमनिरुद्धकः। प्रद्युम्नो हि रथारूढस्तेन चोक्तो रथन्तरम्। बृहद्रूपो बृहन्नामा तथा संकर्षणः प्रभुः। भद्रं तु वासुदेवोऽसौ भद्रमोक्षप्रदो यतः। नारायणो राजनं स्याद्राजयत्येष मोक्षिणः। गायत्री त्वनिरुद्धोऽसौ त्रिकाले गीयते यतः। उष्णिगुष्णस्वरूपत्वात्प्रद्युम्नोऽग्न्यादिसंस्थितः। स्त्रीरूपो बृहतीनामा बृहत्संकर्षणः प्रभुः। वासुदेवस्तथा त्रिष्टुप् त्रिवेदैः स्तूयते यतः। नारायणस्तु स्त्रीरूपो द्विधैवासौ व्यवस्थितः। द्विपदेति ततो नाम सर्वच्छन्दोऽभिधा इमे। वनितातनवः प्रोक्ता मध्यं नारायणः प्रभुः। वासुदेवोऽस्य पुच्छं च वामदक्षौ च पक्षकौ। संकर्षणश्च प्रद्युम्नः क्रमादेव प्रकीर्तितौ। अनिरुद्धः शिरश्चैव तथैकोऽपि हि पञ्चधा। प्रस्तावनामाऽनिरुद्धो रक्षन् संस्तूयते यतः। सृजन् जगच्च रमया प्रद्युम्नस्तत्र गीयते। उद्गीथनामा तेनासौ जगदुद्गमनेन वा। संहारात्प्रतिहाराख्यस्तथा संकर्षणः प्रभुः। मोचयित्वा समीपं हि द्रावयेद्वासुदेवकः। तेनोपद्रवनामाऽसौ निधीयन्ते यतोऽखिलाः। मुक्ता नारायणे देवे तेनासौ निधनाभिधः॥' इत्यादि च। स्तूयमानत्वात्स्तोमः। समत्वात्साम। छन्द्यत्वात् छन्दः। मध्व.

बृहतीसहस्रसंपद्भिन्नाः संपदः

**तद्वा इदं बृहतीसहस्रं संपन्नम्। तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते। किमन्यत्सदन्यद्ब्रूयामेति। त्रिष्टुप्सहस्रमेके। जगतीसहस्रमेके। अनुष्टुप्सहस्रमेके। तदुक्तमृषिणा। अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषेति। वाचि वै तदैन्द्रं प्राणं न्यचायन्नित्येतत्तदुक्तं भवति। स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः। ईश्वरो ह तु पुराऽऽयुषः प्रैतोः। इति ह स्माह। अकृत्स्नो ह्येष आत्मा। यद्वागभि हि प्राणेन मनसेय्यमानो वाचा नानुभवति॥**

तद्वा इदं बृहतीसहस्रं संपन्नमिति पूर्ववदुत्तरसंबन्धार्थम्। तत्र बृहतीसहस्रं संपादयितव्यमित्येवं स्थिते बृहतीसहस्रपक्षस्तुत्यर्थं पक्षान्तरमुपन्यस्य निन्दति—तत् तत्र। हशब्दः पक्षान्तरद्योतनार्थः। एतत्सहस्रमेके शाखिनो नानाच्छन्दसामृचां व्यामिश्रमपि संपादयितव्यमिति प्रतिजानते। तत्र सहस्रसंपादने ह्यर्थे न छन्दोनियम इति मन्यन्ते। सहस्रसंपादने सर्वसंपद्भवतीति स्थितिः। किमन्यत् पक्षान्तरं सत् शोभनं प्रकृतादन्यत्। द्वितीयोऽन्यच्छब्दः सच्छब्देन संबध्यते। इतरच्छोभनतरमन्यत्। किं ब्रूयामेत्यर्थः। त्रिष्टुप्सहस्रमेके शाखिनः प्रतिजानते केवलम्। तथा जगतीसहस्रमेके। अनुष्टुप्सहस्रमेके। एते चत्वारः पक्षाः बृहतीसहस्रस्तुत्यर्थमुपन्यस्य अपविवदिषिताः। तत्रानुष्टुप्सहस्रसंपादनमृषिणा मन्त्रेणाप्युक्तम्। मन्त्रब्राह्मणबद्धत्वादनुष्टुप्पक्षं दृढतरं मन्यमानाः आहुः—'बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम्। अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषा॥' (ऋसं. १०।१२४।९)। बीभत्सूनां संबन्धं कर्तुमिच्छूनामपां दिव्यानां दिवि भवानाम्। द्युलोकस्था ह्यापः सर्वप्राणिबन्धनभूताः द्युलोकेनान्तरिक्षं पार्थिवं चेमं लोकं स्वेन वृष्ट्यात्मना संबद्धमिच्छन्त्यो मध्यमस्थानं मेघाश्रयमापद्यन्ते। तासामपां बीभत्सूनां सह युज्यमानं मेघभेदनं कुर्वन्तं इन्द्रं मध्यमस्थानं वाय्वात्मानं हंसं अध्वनो गमनात् सख्ये समानख्याने समानस्थाने तुल्याभिव्यक्त्याश्रये चरन्तं वायुभेदेन आहुः ब्रह्मवादिनः। अनुष्टुभं स्तनयित्नुलक्षणां वाचं अनु चर्चूर्यमाणं चञ्चूर्यमाणमित्यर्थः। चूरयन्तमिन्द्रं प्राणं निचिक्युः दृष्टवन्तः कवयो मेधाविनः मनीषा विवेकज्ञानेन। अत्र अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युरित्येतावदुदाहरणम्। अस्यार्थमाह तिरोहितो मन्त्राणामर्थ इति—अनुष्टुभमिति। 'वाग्वा अनुष्टुप्' (ऐब्रा. ५।२।१५) इति श्रुतेः वाचि वै स्तनयित्नुलक्षणायां तदैन्द्रं प्राणं निचिक्युः न्यचायन् इत्येतत्त-

(१) ऐब्रा. ३।३।५

दुक्तं भवतीत्यध्यात्ममपि वाचमीरयन्तमिन्द्रं निचिक्युरिति व्याख्येयम्। तदेवंविदः फलमुच्यते—स विद्वान् ईश्वरः समर्थः। किं निमित्तम्। यशस्वी ख्यातिमान्, कल्याणा शोभना कीर्तिर्यस्य सोऽयं कल्याणकीर्तिः। यशस्वी कल्याणकीर्तिश्च भवितोः भवितुं स ह ईश्वरः इति संबन्धः। किंच पुरा पूर्वं नियतायुषः प्रैतुं गन्तुमीश्वरो ह तु, वश्यमृत्युस्तु भवतीत्यर्थः। इत्येवमाह स्म अनुष्टुप्संपद्वादी। तस्मादनुष्टुप्सहस्रं प्रशस्तं एके मन्यन्ते। तन्न। तथा दण्डापूपिकान्यायेन अनुष्टुप्पक्षनिराकरणेन बृहतीवर्जमन्यपक्षा निराकृता वेदितव्या इत्याह—अकृत्स्नः असंपूर्णः हिं यस्मादेष इन्द्रः प्राण आत्मा। यत् यतो वाक् अभि हि वाचमनुष्टुभमभि प्रति लक्ष्यमाणो भवतीत्यर्थः। समस्तस्य हीन्द्रस्य दर्शनं प्रशस्तं, नाकृत्स्नस्य। वाचि प्राणस्याकृत्स्नत्वे हेतुमाह—प्राणेन केवलवाक्संयुक्तमात्रेण मनसा च ह्रस्यमानः अस्यमानः प्रेर्यमाणो वदनाय लौकिकः पुरुषो वाचा वक्तुं नानुभवति वदनक्रियां नानुभवतीत्यर्थः। यदा पुनः स्वात्मस्थेन स्वतन्त्रेण प्राणेन प्रेर्यमाणा वाक्, तया मनसा च अस्यमानो वदनक्रियामनुभवत्येव इति। ह्रस्यमान इष्यमाणो वा। नहि देवदत्तेन कृत्स्नेन यत्कार्यं, प्राणसंयुक्तयाऽप्यङ्गुल्या शक्यं तत्कर्तुम्।

शंकर.

बृहतीसंपदः अन्यसंपद्भ्यः गुणोत्कर्षः

**बृहतीमभि संपादयेत्। एष वै कृत्स्न आत्मा यद्बृहती। सोऽयमात्मा सर्वतः शरीरैः परिवृतः। तद्यथाऽयमात्मा सर्वतः शरीरैः परिवृतः। एवमेव बृहती सर्वतश्छन्दोभिः परिवृता। मध्यं ह्येषामङ्गानामात्मा। मध्यं छन्दसां बृहती। स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः। ईश्वरो ह तु पुराऽऽयुषः प्रैतोः। इति ह स्माह। कृत्स्नो ह्येष आत्मा यद्बृहती। तस्माद्बृहतीमेवाभि संपादयेत्॥५॥**

(१) बृहतीरूपः पुनः प्राणः कृत्स्नो भवतीत्याह—बृहतीमभि संपादयेत्। यस्मादेष वै कृत्स्न आत्मा यद्बृहती। येयं बृहती, प्राणसंस्तुता हि सा। प्राणश्च कृत्स्नः। किंचात्मत्वाच्च कृत्स्नत्वं बृहत्याः। कथमात्मत्वमित्युच्यते—सोऽयमात्मा शरीरपिण्डः सर्वतः शरीरैः शरीरावयवैर्हस्तादिभिरित्यर्थः। परिवृतः परिवेष्टितः। अवयवी मध्यमशरीरं प्रसिद्धो दृष्टान्तत्वेनोपादीयते—तद्यथाऽयमात्मा सर्वतः शरीरैः परिवृतः, एवमेव यथाऽयं दृष्टान्तः, सर्वतश्छन्दोभिः स्वावयवभूतैर्गायत्र्यादिभिः मध्ये भवन्ती परिवृता भवति बृहती। मध्यं हि यस्मादेषां हस्तादीनामङ्गानामात्मा मध्यमं शरीरं अवयवी प्रसिद्धः, तथा मध्यं छन्दसां गायत्र्यादीनां चतुर्थत्वाद्बृहती। त्रीणि गायत्र्यादीनि पूर्वाणि, त्रीणि पङ्क्त्यादीन्युत्तराणि, मध्ये भवन्ती स्वयमितराणि छन्दांसि व्याप्नुवन्ती आत्मसादृश्यादात्मैव भवति। तस्माद्युक्तं कृत्स्नत्वं बृहत्याः। अपि च प्राणश्चात्मा लोमादीनां बाह्यानां लोमादिसंस्तुतानां चोष्णिगादीनां छन्दसां आत्मा। 'प्राणो बृहती' इति ह्युक्तम्। आकाशमिव सर्वाणि भूतानि प्राणेन बृहत्या विष्टब्धानीति च। अत आत्मत्वात्कृत्स्ना बृहतीत्येवं यो वेद तस्यैतत्फलम्—स ह ईश्वरो यशस्वीत्याद्युक्तार्थम्। इति ह स्माह महिदास ऐतरेयः, विशेषदर्शनात्। कृत्स्नो ह्येष आत्मा यद्बृहती। तस्माद्बृहतीमेवाभिसंपादयेदित्युपसंहारवचनं निगमनस्थानीयम्। हेतूक्तेः परं निगमनं इति हि न्यायवित्समयः। शंकर.

(२) तदिदमुक्तप्रकारेणैव बृहतीसहस्रं संपन्नं भवति। तदेके नानाछन्दसां सहस्रं शंसितव्यमेव, बृहतीसहस्रसंपादनमविवक्षितमिति प्रतिजानते। केचित् त्रिष्टुप्सहस्रमेव शंसितव्यमिति। अनुष्टुप्सहस्रमेवेति वदन्तोऽनुष्टुप्प्रशंसात्मिकामृचं दर्शयन्ति। बीभत्सूनां जगद्भर्तुमिच्छूनां अपां सयुजं सहैव चरन्तं चाहुः। विष्णुं हंसस्वरूपिणं अनुष्टुभं चर्चूर्यमाणं पुनः पुनर्वदन्तं परमेश्वरं ददृशुश्च। 'मेघसंस्थं हंसरूपं विष्णुं परमेश्वरम्। विरिञ्चिशिवपूर्वेभ्यो नृसिंहानुष्टुभं पराम्। उच्चारयन्तमर्थांश्च व्याचक्षाणं समन्ततः। ददृशुर्मुनयो दिव्या आचार्यब्रह्मशर्वयोः। एवं वायुं च ददृशुस्तत्र हंसस्वरूपिणम्। शिवादिभ्यो व्याहरन्तं तामेवानुष्टुभं पराम्॥'

इत्यादि च। वागाख्यायामनुष्टुभ्युच्चार्यमाणायां हि मुनयो विष्णुं ददृशुः। अतो ब्रह्मादयोऽपि विष्णोः सकाशादनुष्टुबर्थं सर्वदा शृण्वन्तीति ज्ञायते। अतोऽनुष्टुबेव छन्दसां वरेति चोक्तं भवति। 'अनुष्टुभां सहस्रं तु

यः शंसीतात एव तु । भवितुं चेश्वरः स स्याद्भावो मुक्तिर्न चान्यथा । यशस्वी स प्रसिद्धः स्याच्छुभकीर्तिश्च सर्वदा । स्वच्छन्दमृत्युता च स्यात्तस्येत्याहैतरेयकः । महैतरेयो भगवांस्तत्रेत्याह रमापतिः । नानाछन्दःप्रशंसादिप्रमाणरहितत्वतः । परिहाराय चापूर्णमैतरेय मुने शृणु । त्वं तु मन्त्रमुदाहृत्य यस्मादेतदवोचथाः । तस्माद्वक्ष्याम्युत्तरं ते प्रियः शिष्योऽसि मे यतः । उमैव वागिति प्रोक्ता साऽनुष्टुबभिमानिनी । अकृत्स्ना सा ततो नैव ब्रह्मेत्युक्ता कथंचन । वागिन्द्रियाभिमानिन्यां न हि ब्रह्मवचः क्वचित् । वायुना प्राणरूपेण मनोरूपशिवेन च । अभ्यस्यमानोऽनुभवेत्पुमान्वाचा तु न क्वचित् । अभिमानी बृहत्यास्तु वायुरेव यतः प्रभुः । तस्मादेषा छन्दसां हि वरिष्ठा बृहती स्मृता । पूर्णो हि वायुर्देवानां तस्माद्ब्रह्मेति चोच्यते । माहात्म्याधिक्यतश्चैव बृहतीत्येव नाम तत् । अङ्गेभ्य एव संभूतान्यन्यच्छन्दांसि चाब्जजात् । मध्यात्तु बृहती जाता तस्मात्सा मध्यमुच्यते । पठ्यते तेन मध्ये सा छन्दसां प्रवरा सती । छन्दांस्यन्यान्यङ्गवत्स्युर्मध्यवद्बृहती परा । सप्त छन्दांसि चैवं हि प्रतिमा वैष्णवी मता । गायत्रीदेवतात्वं च लक्ष्म्या यत्राभिधीयते । बृहती देवता तत्र भगवान्पुरुषोत्तमः । आधिक्यं छन्दसां यत्र गायत्र्यास्तु विवक्षितम् । तत्र तत्पुत्रको वायुर्बृहती देवता मता । ऋचामाधिक्ययोगार्थं नाङ्गीकर्तव्यमत्र तत् । प्रधानत्वाद्बृहत्यास्तु जगत्याद्यं न युज्यते । संपादनाद्बृहत्यास्तु मुक्तो भवितुमीश्वरः । स्यात्प्रसिद्धः सुकीर्तिश्च छन्दो मृत्युर्गुणाधिकः । इति प्राह स्वयं विष्णुर्महिदासाभिधः प्रभुः ॥' इत्यादि च । 'इतोऽन्यत्सत्किमित्याहुर्नानाछन्दस्त्ववादिनः । अन्यत्सद्रूपमित्याहुस्त्रिष्टुब्वादिन एव ते'। ऐन्द्रं प्राणं परमेश्वरसहितं वायुम् । प्राणेन मनसा च । अभि इस्यमानः अभ्यस्यमानः । 'तृतीयोऽतिशये' इति सूत्रादकारस्येकारः । 'मथनान्मिथिलो जातः सहनात्सिंह उच्यते' । हत्वी दस्यूनित्यादिवच्च । अभ्यस्यमानः अभितः क्षिप्यमाणो विषयेषु बहुशः । कृत्स्न आत्मा कृत्स्नप्रतिमा विष्णोः । 'एकाऽपि प्रतिमा विष्णोर्बृहती छन्दसां वरा । अन्यच्छन्दोऽभिधा यत्स्यात्प्रतिमा मध्यमैव तत् ॥' इति च । एवं ब्रह्मादिभिः श्रूयमाणाऽनुष्टुब्रपि बृहत्या अङ्गमिति बृहत्या एवाऽऽधिक्यमुक्तं भवति । मध्व.

**तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभः । आत्तं वै भूयसा कनीयः ॥**

किंच बृहतीसहस्रसंपादने अयं चापरो लाभः अनुष्टुबपि वाक्संपादिता भवति । कथम् । तद्वा इद बृहतीसहस्रं संपन्नमित्यादि पूर्ववदुत्तरसंबन्धार्थम् । कथमनुष्टुप्संपन्ना भवतीत्युच्यते । तत्र बृहतीसहस्रस्य संपन्नस्यानुष्टुप्त्वमापद्यमानस्यैकादशशतान्यनुष्टुभां भवन्ति, पञ्चविंशतिश्च अनुष्टुभोऽभ्यधिका भवन्ति । यत्सहस्रादूर्ध्वं पञ्चविंशोत्तरशतमनुष्टुभां तत् बृहतीसहस्रे संपद्यमाने बृहतीसहस्रे एव अन्तर्भवति, तदुच्यते—आत्तं परिगृहीतं भूयसा महता कनीयः अल्पतरं भवतीति वै प्रसिद्धं सहस्रे शतं, शते दशादि नवतिपर्यन्तं, दशसु एकादि नवान्तमात्तं भवतीति । शंकर.

**तदुक्तमृषिणा । वाचमष्टापदीमहमिति[1] । अष्टौ हि चतुरक्षराणि भवन्ति । नवस्रक्तिमिति । बृहती संपद्यमाना । नवस्रक्त्यृतस्पृशमिति । सत्यं वै वागृचा स्पृष्टा । इन्द्रात्परि तन्वं मम इति । तद्यदे[1]वैतद्बृहतीसहस्रमनुष्टुप्संपन्नं भवति । तस्मात्तदैन्द्रात्प्राणाद्बृहत्यै वाचमनुष्टुभं तन्वं संनिर्मिमीते ॥**

तदेतद्वाचः संपादनं बृहतीसहस्रमुक्तमृषिणा मन्त्रेणापि । वाचमनुष्टुभमष्टापदीम् । सा ह्यनुष्टुप् चतुरक्षरत्वेन विभज्यमाना अष्टापदी भवति । तामष्टापदीं अहं ममे इति व्यवहितेन संबन्धो भवति । पुनश्चतुरक्षरप्रक्षेपेण सा वाक् बृहती संपद्यमाना नवस्रक्तिर्भवति । स्रक्तयः कोणाः । नव चतुरक्षराणि स्रक्तय इव वाचोऽनुष्टुभो भवन्ति । तेन वाचमष्टापदीमहं नवस्रक्तिं ऋतस्पृशं, यदा बृहती संपद्यमाना तदा ऋचा बृहत्या स्पृष्टा वाक् सत्यं संपद्यते, यथा रसेन स्पृष्टं लोहं सुवर्णत्वमापद्यते । ऋतं

---

(१) ऐआ. २।३।६.

१ मध्व. तद्यदेवै ( तद्यदैवै ).

सत्यं मूर्तामूर्ताख्यं प्राणस्तदा स्पृशति तां वाचमष्टापदीं नवस्रक्तिमृतस्पृशम्। किम्। इन्द्रात् प्राणबृहत्यात्मन एवोपादाय तस्यैवेन्द्रस्य तन्वं तनुं शरीरमहं परिममे अहं परिनिर्ममे निर्मितवान् परिकल्पितवानस्म्यहमित्यर्थः। वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्तीति व्याख्यातमेतत्। नवस्रक्तिमिति बृहती संपद्यमाना इति च व्याख्यातमेव। ननु ऋतस्पृशमित्येतस्मिन्पदे व्याख्येये किमर्थं व्याख्यातस्य पुनर्नवस्रक्तिपदस्य ग्रहणम्। एवं ह्यर्थं संबद्धतरं मन्यते ब्राह्मणम्। कथम्। नवस्रक्तित्वं बृहतीत्वं संपाद्यमानैव वाक् ऋतं प्राणं स्प्रष्टुं शक्नोति न केवला। यथा रसस्पृष्टं लोहं सुवर्णतां प्राप्तुं शक्नोति न केवलं, इत्यत आह—नवस्रक्त्यृतस्पृशमिति। अथवा नवस्रक्तिमित्यस्य पदस्य व्याख्यानं बृहती संपद्यमाना नवस्रक्तिर्भवतीति। यथा ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टेति। तथा व्याख्यातं इन्द्रात्परि तन्वं मम इति। तद्यदेवैतद्बृहतीसहस्रं आप्तं वै भूयसा कनीय इति न्यायेन अनुष्टुप्संपन्नं भवतीत्युक्तम्। तत्र यद्बृहतीसहस्रेऽन्तर्भूतं प्राणे इन्द्रे पञ्चविंशोत्तरं शतमनुष्टुभां; तत्तस्मादेव ऐन्द्रात्प्राणाद्बृहत्या अपादाय वाचमष्टापदीं नवस्रक्तिमृतस्पृशमनुष्टुभं तस्यैवेन्द्रस्य तन्वं शरीरं संनिर्मिमीते विद्वान्निर्मितवान्। कोऽसौ। योऽहंकारेणाहं निर्मम इत्यब्रवीत्तथा व्याख्यातम्।

शंकर.

**स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्। तदेतत्पञ्चविधं मितममितं स्वरः सत्यानृते इति। ऋग्गाथा कुम्ब्या तन्मितम्। यजुर्निगदो वृथा वाक्तदमितम्। सामाथो यः कश्च गेष्णः स स्वरः। ओमिति सत्यम्। नेत्यनृतम्॥**

इन्द्रस्य प्राणस्य शरीरत्वेन कल्पिता अनुष्टुप् या वाक् तस्या वाच एषः परमो विकारः प्रकृष्टः सारभूत इत्यर्थः। कः। यदेतन्महदुक्थम्। तथा च व्याख्यातं 'स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद्यज्ञः' इति यज्ञस्य वाग्विकारत्वम्। ततोऽप्यस्य परमत्वं 'एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थम्' इति। तदेतत्पञ्चविधं यदेतन्महदुक्थं यः सारिष्ठो वाग्विकारः। तस्योक्थस्य पञ्चविधत्वं 'बृहत्पञ्चदशं' इत्यादिना व्याख्यातं 'यदूर्ध्वं सा पञ्चमी' इत्येवमन्तेन विशेषतः। सामान्यतश्च सर्ववाग्व्याप्तिरूपेण वक्ष्यमाणेन पञ्चविधमेव। कथम्। मितं अमितं स्वरः सत्यानृते इति। मितादीनां स्वरूपं स्वयमेवाह श्रुतिः—ऋक् पादबद्धा 'अग्निमीळे' इत्याद्या। गाथा 'प्रातः प्रातः' इत्याद्या। कुम्ब्या 'य आचार्यं पर्युपासीनो बुद्धिमादत्ते धीरो धर्मनिष्ठः' इत्याद्या। तन्मितं, पादाक्षरशः परिमितत्वात्। एषा एका विधा। यजुः अनियताक्षरावसानं 'इषेत्वा' इत्यादि। निगदः 'तास्वध्वर्यो इन्द्राय सोमं' इत्यादि सर्वं ब्राह्मणम्। वृथा वाक् असंबद्धप्रलपितम्। तदनियतपादाक्षरावसानत्वान्न मीयते इत्यमितम्। साम पाञ्चभक्तिकं साप्तभक्तिकं वा। अथो अपि यः कश्चित् गेष्णः सामसंधिपर्वाख्यः, स स्वरः। सर्वस्य षड्जादेरत्रैवान्तर्भावः। ओमिति सत्यं ओमित्योंकारः सत्यं, सर्वात्मकत्वात्सर्ववाग्व्याप्तेः। न इति प्रतिषेधरूपनञ्लक्षणा वाक्। सा अनृतं, अभावोऽनृतम्। अभावे हि नञ् प्रयुज्यते। एवं पञ्चसु विधासु वर्णलक्षणायाः ध्वनिलक्षणायाश्च वाचोऽन्तर्भावः। तथा हि 'सर्वा वाचो वदन्ति' इति विज्ञायते महाव्रते। एवं पञ्चविधं महदुक्थम्। एषा विकारलक्षणा सर्वाऽपि वाक् द्विधा विभज्यतेऽर्थवशात्। द्विरूपं ह्यर्थजातं सच्च असच्च। सत् सत्यं प्राणादि कारणं, असत् अनृतं विकारजातं, तत्तदात्मव्यभिचारात्।

शंकर.

वाचः स्वरूपं, प्रणवः, अनृतोक्तिनिषेधः

**तदेतत्पुष्पं फलं वाचो यत्सत्यम्। स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः। पुष्पं हि फलं वाचः सत्यं वदति। अथैतन्मूलं वाचो यदनृतम्। तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तते। एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति। स शुष्यति स उद्वर्तते। तस्मादनृतं न वदेत्। दयेत त्वेनेन॥**

तदेतदोमिति यदुक्तं वाचो विकाररूपं तत्पुष्पं फलं याज्ञदेवते। कर्म च तत्फलं च देवतारूपं पुष्पफले वाङ्मयस्य वृक्षस्य परिकल्प्येते। वाङ्मयो हि वृक्षो मन्त्रचोदनादिलक्षणो यज्ञकर्मत्वमापद्यते यदा, तदा पुष्पवानिव भवति। यदा तद्याज्ञं कर्म देवतारूपं फलं

प्रयच्छति, तदा वाङ्मयो वृक्षः फलिष्यतीव। तच्चैतदुभयं सत्प्राणात्मत्वात्सत्यं तद्विपर्ययेण देवताध्यात्मे पुष्पफले। सोऽयमोंकारः सत्यं, याज्ञकर्म च ज्ञानं च समुच्चितं पुष्पफलरूपं, यच्च तस्य फलं देवताप्ययलक्षणमिति यो वेद, विदित्वा सत्यमोमिति वदति ध्यायति कर्म च करोति, स उभयं पुष्पं फलं च वदति सद्वाग्वृक्षस्य। किंच स ह ईश्वरो यशस्वी कल्याणकीर्तिर्भवितोरित्याद्युक्तार्थम्। अथान्यद्वाचो वाग्वृक्षस्य यदनृतं नेत्युक्तं तन्मूलम्। ततः किमित्याह—तत्र यथा लोके वृक्षस्तरुः आविर्मूलः प्रकाशमूल इत्येतत्, उद्धृतो यदा भवति वृक्षः, तदा प्रकटीकृतमूलः सन् शुष्यति शोषमुपैति, न केवलं शुष्यति, उद्वर्तते च विनश्यति च, एवमेव वाग्विकाररूपं वृक्षं आत्मानं आविर्मूलं करोति अनृतं वदन् नञ्रूपं नास्तीति वदन् प्रयुञ्जानः अनृतरूपस्य संसारवृक्षस्य मूलमविद्यालक्षणं तेन नेत्यनृतं वदता प्रकटीकृतं भवति। परमार्थतः सत्यं प्राणादिलक्षणं सर्वं, तद्विपर्ययात्स च तेनानृतवदनदोषेण शुष्यति नञ्वादी उद्वर्तते। यस्मात् एष दोषोऽनृतं वदतः, तस्मादनृतं न वदेत्। अनृतं हि वदन् सत्यं प्राणमात्मानमपह्नुवीत, अतो दयेत रक्षेत् अनृतवदनदोषत आत्मानम्। तुशब्दोऽवधारणार्थे। रक्षेदेवेत्यर्थः। कथम्। अ(ए)नेनानृतवदनेन, एतेन सत्यवदनेनैवेत्यर्थः।

शंकर.

**पराग्वा एतद्रिक्तमक्षरं यदेतदो३मिति। तद्यत्किचोमित्याह। अत्रैवास्मै तद्रिच्यते। स यत्सर्वमों कुर्याद्रिञ्च्यादात्मानम्[1]। स कामेभ्यो नालं स्यात्। अथैतत्पूर्णमभ्यात्मं यन्नेति। स यत्सर्वं नेति ब्रूयात्। पापिकाऽस्य कीर्तिर्जायेत। सैनं तत्रैव हन्यात्। तस्मात्काल एव दद्यात्काले न दद्यात्। तत्सत्यानृते मिथुनीकरोति। तयोर्मिथुनात्प्रजायते। भूयान्भवति। यो वै तां वाचं वेद यस्या एष विकारः। स संप्रतिवित्। अकारो वै सर्वा वाक्। सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति। तस्यै यदुपांशु स प्राणः। अथ यदुच्चैस्तच्छरीरम्। तस्मात्तत्तिर इव। तिर इव ह्यशरीरम्। अशरीरो हि प्राणः। अथ यदुच्चैस्तच्छरीरम्। तस्मात्तदाविः। आविर्हि शरीरम्॥ ६॥**

(१) पराक्, परं ब्रह्म अञ्चति गच्छतीति पराक् एतद्रिक्तं शुद्धमक्षरम्। किं तत्। यदेतदोमिति, सर्ववाग्व्याप्तेः। सर्वं च परं ब्रह्म सर्वात्मिकया वाचा ओमित्यनया अभिधीयते। तस्मात्परागेतद्रिक्तं चाक्षरमोंकारः। यस्मादेवं तत् तस्माद्यत्किंच वस्तु गृहक्षेत्रादिलक्षणं कामगर्तात्मनः अविद्याकल्पितस्य पूरणाय, तच्च इदमोमित्यनुजानाति यथाभूतब्रह्मणो रूपं प्रतिपद्यते। सर्वमहत्त्वात्सर्वानुज्ञं परं ब्रह्म। तथैवोमिति सत्यमेवानुजानतः अत्रैव अस्मिन्नेव काले अस्मै ओमित्यनुज्ञां कृतवते तत् गृहक्षेत्रादिलक्षणं कामात्मगर्तपूरणं सत् रिच्यते नावादेः पूरणमिवोदकादि, स्वात्मपूर्णभावात्पृथग्भवति। यावदनुजानाति वस्त्वोमिति यः स तावता रिच्यते। स यः कश्चिदात्मनः आपूरणार्थं वस्तु सर्वमों कुर्यात् ओमित्यनुजानीयात्, सर्वस्वेनात्मनः पूरणेन रिञ्च्यात् रिक्ततामापादयेत्, आत्मानं निःस्वं कुर्यादित्यर्थः। तस्मात्स्वात्मकामपूरणसर्ववस्तुविरेकात्स पुरुषः ओमिति प्रतिपत्त्या कामेभ्यो नालं न पर्याप्तः स्यात्। प्रसिद्धं हि लोके अपहृतसर्वस्वः स्वेन रिक्तो बुभुक्षितो भोजनकामायापि नालमिति। यस्मात्सर्वस्वेन रिञ्च्यादात्मानं, अथैतत्पूर्णमभ्यात्मं कामगर्तात्माभिमुख्येन अविद्याकल्पितासदात्मकम्। किं तत्। यन्नेति अनृतं नञ्रूपम्। तद्धि कामगर्तात्मनो वस्तुपूर्णतापरिपालनरूपम्। तत्रैवं सति बाह्यवस्तुना पूर्णः स यः कश्चित् यत् प्रार्थितं केनचित् कालेऽपि प्राप्ते नेत्यात्मनः पूरण(र्ण)त्वं परिपालयंस्तत्सर्वं नेति ब्रूयादनृतं आत्मनो रेचकभयात्, पापिका अस्य नेत्यनृतं ब्रुवतः कीर्तिर्जायते लुब्धः खल्वसौ प्राप्तेऽपि काले न ददाति आत्मंभरिः पापात्मा, इत्याद्या। सा पुनः पापिका कीर्तिः एनं नेत्यनृतवादिनं तत्रैव तस्मिन्नेव क्षणे उत्थिता भवन्ती हन्यात् विनाशयेत्। 'आविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते' इत्युक्तम्। यस्मान्न केवलेन सत्येन, नापि केवलेनानृतेन संसारस्थितिः। किं तर्हि। व्यामिश्राभ्यां सत्यानृताभ्याम्। यथा वृक्षो मूलच्छायाभ्यां युक्तः

[1] मध्व. द्रिञ्च्यात् (द्रिच्यात्).

शश्वद्वर्धते तद्वत् । तस्मात्संसारस्थितिमनुवर्तयन्काले एव दद्यात्, प्राप्तकाले न दद्यात्सर्वमेव । सर्वविरेके ह्युक्तो दोषः 'स कामेभ्यो नालं' इत्यादौ, एवं 'पापिकाऽस्य कीर्तिर्जायेत' इत्यादि । तत्र 'गुणान्समीक्ष्य यथाशक्ति देयं' इत्यादिस्मृतेः । तत् 'तत्र एवं सति सत्यानृते मिथुनीकरोति इतरेतरसंयुक्तत्वमापादयति । तयोः सत्यानृतयोः स्वात्मभूतयोर्मिथुनात् मूलपरिरक्षणादिव वृक्षस्य प्रजायते इत्यस्यार्थे (?) । भूयान्भवति वर्धते पुत्रपौत्रपश्वादिभिरित्यर्थः । वाग्विकारसत्यानृतगतो विशेषः प्रसङ्गागत एष उक्तः । अधुना प्रकृतमेवावलम्ब्याह—यदुक्तं 'स वा एष वाचः परमो विकारः' इति, तस्या वाचः परमो विकार उक्तः 'यदेतन्महदुक्थम्'। यो वै कश्चित्तां वाचं वेद । काम् । यस्या वाच एष विकार उक्तः । स संप्रतिवित्, संसारस्य मूलपरिज्ञानात् । वाग्विकारो हि कर्ममूलश्च संसारः, तस्मात्स्यात्संप्रतिवित् । यद्येवं, काऽसौ वागित्युच्यते—अकार इति सर्वेषां स्वराणां सामान्यं आकाशकल्पं, यमाहुः स्फोट इति केचित् । तद्बुद्धिस्थः सोऽकारः सर्वा वाक् या काचिच्छ्रोत्रविषया । सा पुनरेकरूपा आकाशकल्पा सती कथं बह्वी अनेका नानारूपा भिन्नरूपा भवतीत्युच्यते—सैषैका स्पर्शोष्मभिः, स्पर्शाश्चोष्माणस्ते च स्थानकरणधर्माः सन्तः तस्या वाचो व्यञ्जका भवन्ति, अतस्तैः स्पर्शोष्मभिर्व्यज्यमाना बह्वी अनेका नानारूपा भिन्नरूपा च विलक्षणोपाधिराकाशवदेव भवति महच्छिद्रं सूक्ष्मच्छिद्रमिति यद्वत् । एवं हि 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' इत्येतद्विलक्षणं ह्यशब्दं परं ब्रह्मेति । तस्यै तस्या वाचो यदुपांशु स्थानकरणवशात्स प्राणः प्राणस्य रूपम् । अथ यदुच्चैर्वाचो रूपं तच्छरीरम् । तस्मादुपांशु रूपं वाचो यत् तत्तिर इव तिरोभूतमिव । अन्यदपि लोके तिर इव ह्यशरीरं वाय्वभ्रादि । अशरीरो हि प्राणः । 'स यश्चायमशरीरः प्रज्ञात्मा' (ऐआ. ३।२।३) इति वचनात् । तस्मादुपांशुप्राणयोः सामान्यात् तस्या यदुपांशु स प्राणः । अथ यदुच्चैर्वाचस्तच्छरीरं इति यदुक्तं वक्तुम् (?) । तस्माच्छरीरत्वाद्धेतोस्तदुच्चैर्घोषं आविः प्रकाशभूतं वाचो रूपम् । आविर्हि शरीरं, प्रकाशमेव हि लोके शरीरं प्रसिद्धम् । शंकर.

(२) बृहतीसंपादने अनुष्टुप्शंसनमात्रात्पञ्चविंशोत्तरशतानुष्टुबाधिक्यं च भवति । अत आधिक्याद्बृहतीसंपादनमेव वरम् । तस्यात्रैवान्तर्भावात् । जगत्यादिकं त्वधिकत्वेऽपि बृहतीवन्माहात्म्याभावादेवोपेक्ष्यते । 'वाचमष्टापदीमहं' इत्यनुष्टुभो बृहतीसंपादनवचनाच्च । अष्ट चतुरक्षराण्यनुष्टुप् । तस्या एव बृहतीसंपादने नव सूक्तयो भवन्ति । ऋचा वाक् ऋग्रूपेण वाक् ऋतं स्पृष्टा सत्यरूपं विष्णुं स्पृष्टा भवति । इन्द्रस्य परमेश्वरस्य विष्णोः संबन्धी नितरां प्रियत्वात् यः प्राणदेवता वायुः तस्य प्रतिमारूपमिदं बृहतीसहस्रम् । स च वायुर्विष्णोर्मुख्यप्रतिमा । तस्माद्विष्णोरेव प्रतिमा बृहतीसहस्रम् । तस्मात्तस्यैव बृहतीसहस्रत्वेन संपन्नस्य पञ्चविंशोत्तरैकादशशतानुष्टुप्त्वेन संपादने बृहतीदैवतप्राणरूपाद्वायोरनुष्टुब्देवताया वाग्रूपाया उमाया उत्पत्तिः संस्मृता भवत्येवं जानतः । ततश्चोमाया अपि भगवत्प्रतिमात्वाद्विष्णुप्रतिमास्थापक एव भवत्येतत्सर्वं सम्यग्ध्यायन् । विष्णुरेव बृहत्याः प्राणस्याधिष्ठातृदेवता प्रतिमाधिष्ठितदेवतावत् । तस्माद्बृहत्याः सकाशादनुष्टुप्संपादने तस्यैव विष्णोः प्रतिमान्तरं तस्मादेव निर्मितं भवति । अत एव 'इन्द्रात्परि तन्वं मम' इत्युक्तम् । बृहतीस्थविष्णोर्बलादेव तत्संपद्यते । स हि तस्याः षट्त्रिंशदक्षरादित्वमपि नियमयति तत्प्रसादाद्वायुश्च । वायुरेव यद्भगवन्नियतो नियमयति, तस्मात् 'इन्द्रात्परि' इत्यस्य ऐन्द्रात्प्राणादिति व्याख्या कृता । 'यावत्सहस्रं बृहती तावच्छंसेदनुष्टुभा । छन्दसा वा तदन्येषां बृहतीत्वं स्मरेत्ततः । तेन सर्वगतो विष्णुः सर्वस्मादधिकोऽर्चितः । भवेदेवं जानतस्तु कृता च प्रतिमा भवेत् । तथा वायोरपि कृता वायुर्हि प्रतिमा हरेः । तस्माद्वायुकृतं सर्वं क्रियते विष्णुनैव हि । बृहतीसहस्रं संपन्नमेकादशशतं पुनः । अनुष्टुभां स्मरेत्पञ्चविंशोत्तरमुदारधीः । तेन वायोरुमोत्पत्तिः सम्यग्ज्ञानात्स्मृता भवेत् । ततो द्वितीयप्रतिमा विष्णोरेव कृता भवेत् । विष्णुनाऽनुप्रविष्टौ यदुमा वायुश्च तद्वशौ ॥' इत्यादि च । सूक्तयो विभागाः । 'सूक्तिरंशो विभागश्च विदलं चेति कथ्यते'

इति शब्दनिर्णये। स वा एष वाचः परमो विकारः। अकाराख्यवाग्विकारेषूत्तमो बृहतीसहस्राख्यः। 'अकारः प्रथमं नाम विष्णोः सर्वगुणान्ब्रुवन्। सर्वदोषविरुद्धत्वाद्गुणानामन्यतामपि। विष्णोर्वदति जीवेभ्यो जडेभ्यश्चैव सर्वदा। अभावं चैव दोषाणां सर्वेषां केशवे वदेत्। सम्यग्वक्तृत्वतस्तस्मादकारो मुख्यनाम हि। तदर्थानेकदेशेन शब्दाः सर्वेऽपि चोचिरे। व्याख्याव्याख्येयरूपत्वं विकारत्वमिहोदितम्। विकारत्वं च नान्यत्स्यान्नित्या वेदा यतोऽखिलाः। वाचकेषु तथा विष्णोः सहस्रबृहतीमयम्। उक्थमुत्तममुद्दिष्टं व्याख्याऽकारस्य सा परा। अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिनः। एषां परममुख्यं तत्तदेतत्पञ्चधा स्थितम्। व्याख्यानमेवाऽकारस्य सहैवोक्थेन सर्वशः। मितामिते स्वरः सत्यमनृतं चेति पञ्चधा। तस्मादकार एवायं सर्ववागात्मकः श्रुतः। तस्यैव व्यक्तिरूपोऽयं सर्ववेदादिविस्तरः। तस्मात्सर्वगुणान्विष्णोरकारो वक्ति यत्प्रभोः। तद्व्यक्तयोऽपि शब्दा ये सर्वे विष्णुगुणब्रुवाः। अकारस्य तथोपांशोरभिमानी तु मारुतः। देहेन्द्रियान्तःकरणनाम्नोऽस्य द्विविधस्य च। स्थूलसूक्ष्मशरीरस्य सर्वेषामभिमानिनी। भारत्युच्चोदितस्यापि ह्यकारस्याभिमानिनी। तस्मादुच्चादुपांशुर्हि जपादिषु फलाधिकः। वायुः पतिर्हि भारत्या उपांशोर्देवता ततः। अकारस्य विकारोऽयमोंकार इति कथ्यते। अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः। अकारेणैव तत्सर्वमुक्तमाधिक्यवक्तृतः। अधिकोच्चस्वरूपोऽसौ माता चाधिक एव हि। एकार्थत्वादकारोऽसौ नकारत्वमुपागतः। दीर्घीभूतः पुनस्तेनैवाकारेण सह स्थितः। अभाववाच्यकारस्य ह्यर्थो रेफः क्षयं वदन्। सोऽप्यकारेण सहितो दीर्घत्वं समुपागतः। अभाववाच्यकारः स एकार्थाद्गत्यभावयोः। यकारत्वं गतस्तस्मान्नो रेफस्योत्तरत्वतः। णत्वं गतो ह्यकारोऽसौ नो विरुद्धार्थवाचकः। अन्यत्वात्सर्वजीवेभ्यो जडेभ्यश्च सदैव हि। सर्वदोषोज्झितत्वाच्च सर्वतोऽप्यधिकत्वतः। निरासनाच्च दोषाणां स्वभक्तेभ्यः समन्ततः। सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः। नारायण इति प्रोक्तो ह्यकारार्थोऽयमेव हि। तस्मादकारबीजेयं विष्णोर्नारायणाभिधा। प्रणवश्च ततोऽकारः प्रधानं नाम चक्रिणः। अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम्। ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः। वर्तन्ते न त्वकारोऽयं वर्तते केशवं विना। नारायणादिनामानि नृणां नामक्रियास्वपि। विहितान्यकारो नैवायं विहितस्तमृते प्रभुम्। वायुर्ब्रह्मापि वाऽकारदेवते न तु नामिनौ। यथा वेदाभिधेयोऽन्यो वेदाख्या देवता परा। एवं नामाभिमानी तु वायुर्वाच्यो जनार्दनः। तस्माद इति नामैतद्विष्णोः केवलमेव हि। विशेषतोऽस्य व्याख्यानं बृहतीनां सहस्रकम्। तस्मात्प्रीतो भवेद्विष्णुः शंसनादस्य सर्वदा। तस्माद्यज्ञेऽपि वा शंसेदयज्ञेऽपि रहः पुमान्। ध्यात्वा नारायणं देवं विष्णोरन्नं हि तत्परम्॥' इत्यादि ब्रह्मसारे। परमविकारेण सह विकारमात्रस्यापि प्रस्तुतत्वात्तदेतत्पञ्चविधमिति परामर्शः। 'स्वराणां नियमो यत्र ह्यृचो नामैव ताः स्मृताः। अन्या मिताक्षरा यास्तु ता गाथाः परिकीर्तिताः। खण्डवाक्यानि कुम्भ्याः स्युरसमानि परस्परम्। यज्ञाङ्गं यजुरुद्दिष्टं निगदं वाक्यमात्रकम्॥' इत्यादि शब्दनिर्णये। अकारार्थत्वान्नकारस्य किंचिन्मूलमिव। तस्मान्मूलत्वादकारार्थोऽपि ज्ञेय एव। नायोग्यानां सम्यग्वाच्य इति स्वल्प एव प्रकाशितोऽस्माभिः। वाच उद्वर्तनाशक्तेः स्वयमेवोद्वर्तते। यद्धि देवतासु करोति तदात्मन्यापतति। तस्माद्द्रव्यदानं ज्ञानदानं वा काले पात्राद्यनुसारेणैव कुर्यात्। अकारस्य ओंकारता त्वकारलोपेनैव जातेति सत्यमोंकारः। अकारस्यादौ स्थितत्वेन च यथार्थरूपत्वात्। उकारादिविकारसहितत्वात्पुष्पफलात्मकश्च। अकारस्यार्थरूपः सन्नेव च भगवांस्तमेवोंकारो वक्ति। अतश्च सत्यमोंकारः। यमर्थमकारो वक्ति तमेव वक्तीति। नकारस्त्वच्छिरस्कत्वान्मूलभूतस्याकारस्यान्ते स्थितिरूपत्वादयथास्थितेरसत्यरूपः। तथाप्यकारस्य नकारस्य चैकार्थत्वान्मूलभूतश्च। तस्मादकारस्यैतद्बृथावागादिकमपि व्याख्यानम्। तस्मात् विजानतः सर्वमपि भगवन्नामैव। मध्व.

बृहतीसहस्रसंपद्विषय इन्द्रो भूताधिप आत्मा,
उभयलोकजन्मा, शरीरबीजमनवद्यम्

**तद्वा इदं बृहतीसहस्रं संपन्नम्। तद्यशः। स इन्द्रः। स भूतानामधिपतिः। स य एवमेतमिन्द्रं**

(१) ऐआ. २।३।७; मध्व. नमिमस्मा (नमस्मा) नेनाह (नेन ह) अमुनो (अमुना).

भूतानामधिपतिं वेद। विस्रसा हैवास्माल्लोकात्प्रैति। इति ह स्माह महिदास ऐतरेयः। प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति। तदाहुः। यदनेन रूपेणामुं लोकमभिसंभवती३। अथ केन रूपेणेमं लोकमाभवती३। तद्यदेतत्स्त्रियां लोहितं भवति। अग्नेस्तद्रूपम्। तस्मात्तस्मान्न बीभत्सेत। अथ यदेतत्पुरुषे रेतो भवति। आदित्यस्य तद्रूपम्। तस्मात्तस्मान्न बीभत्सेत। सोऽयमात्मेममात्मानममुष्मा आत्मने संप्रयच्छति। असावात्माऽमुमात्मानमिमस्मा आत्मने संप्रयच्छति। तावन्योन्यमभिसंभवतः। अनेनाह रूपेणामुं लोकमभिसंभवति। अमुनो रूपेणेमं लोकमाभवति॥ ७॥

(१) तत्र 'उक्थमुक्थं' इत्यारभ्य प्राणस्योक्थत्वं वागग्न्याद्यात्मकत्वं नामरूपात्मकत्वं च इत्याद्यनेकगुणवत्त्वं, तस्यैव प्राणस्य वाचश्चित्तस्य चोत्तरोत्तरविकारमात्रं सर्वं श्रौतं कर्म तत्फलं च पुष्पफलसंस्तुते इत्युक्त्वा तस्यामेव वाचि प्राणे चाशरीरे प्रज्ञात्मनि कारणे पुनरुपसंहृतं बृहतीसहस्रसंपादनपूर्वकं 'यो वै तां वाचं वेद' इत्यादिना। एवमयं विद्वान्बृहतीसहस्रसंपद्रूपं ज्ञानकर्ममयं रथमारुह्य प्राणं प्रज्ञात्मानं यथाऽतिक्रान्तश्रुतिप्रकाशितं 'तद्योऽहं सोऽसौ योऽसौ सोऽहं' इति आत्मत्वेनोपेत्य स्वमेव रूपं सर्वदेवताप्ययलक्षणं प्रतिपद्यते इत्युक्तम्। तस्यैव पुनरुपसंहारार्थमिदमुच्यते—तद्वा इदं बृहतीसहस्रमेव संपन्नमिति। यत्तत्फलरूपं संपन्नं परिनिष्पन्नं, एतत्कथमित्युच्यते—यमात्मानमापन्नो विद्वान्, तद्यशः। यश इत्यात्मनो नाम। आत्मा इत्यर्थः। 'तस्य नाम महद्यशः' (तैआ. १०।१।२) इति मन्त्रवर्णात्। किंच स इन्द्रः परमेश्वरः। अत एव स भूतानां स्थावरजङ्गमानामधिष्ठाय पालयिता अधिपतिः। एवमेवाधुनातनोऽपि। यः कश्चिदेवं यथोक्तमिन्द्रं एतमधिपतिं वेद अहमस्मि सर्वभूतात्मा सर्वभूतानां वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिः, आकाशकल्पे मयि सर्वं जगन्नामरूपकर्मात्मकमाहितमिति, स विद्वान् विस्रसा विस्रम्भेणैव अनाशङ्कयैवेत्यर्थः, अस्माल्लोकाच्छरीरात् प्रैति म्रियते इत्याह स्म महिदास ऐतरेयः। एवंविदुषः सर्वात्मभावं फलं प्रति संशयो न भवतीत्यभिप्रायः। तथा प्रेत्य इन्द्रो हिरण्यगर्भो भूत्वा एषु लोकेषु सर्वप्राणिकर्मफलभूतेषु आत्मभावेनैव राजति दीप्यते। तत् तत्र आहुः ब्रह्मवादिनः। यद्ययं पुरुषः सर्व एवेन्द्रः परमार्थतः अनेन स्वेनेन्द्ररूपेण प्रज्ञात्मना अमुं लोकमधिदैवलक्षणं अभिसंभवती३। यत्स्वरूपं विज्ञाननिमित्तं तस्माद्भवितव्यं तेन येन केनचिन्निमित्तेन इमं लोकमत्यन्तनिकृष्टं अनेकसहस्रानर्थपातमायाति, आगत्याऽऽत्मत्वेन भवति प्रतिपद्यते, तत्केन खल्विति विचारयन्तः पृच्छन्ति—अथ केन रूपेणेति। तत्र श्रुतिराह आचार्यभूता प्रतिवचनं—अविद्याकामकर्मबीजं तदिति। तदाह— तत्र यल्लोहितं स्त्रियामार्तवं ऋतुकालेऽविद्याकामखजमथनोद्भूतं भवति अग्नेस्तद्भवति। लोहितो ह्यग्निः प्रसिद्धः। तस्मादाग्नेयत्वात् लोहितस्य तस्माल्लोहितादमेध्यबुध्या न बीभत्सेत घृणां न कुर्यात्, ऋतौ भार्यां गच्छेत्। अथ पुनर्यत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं, शुक्लत्वसामान्यात्। यत् आदित्यस्य रूपं तस्माद्धेतोः शुक्रादमेध्यमिति कृत्वा न बीभत्सेत। स्वभावतो नैव बीभत्सा, तथापि शुचेः कार्यदोषदर्शिनः पक्षे प्राप्ता निवार्यते न बीभत्सेतेति। सोऽयं पृथिव्यग्न्यात्मा इममात्मानं मातृजं स्वं पार्थिवमाग्नेयं च त्वङ्मांसरुधिरात्मकं अमुष्मै पित्रात्मभूताय द्यवादित्यात्मने संप्रयच्छति ददाति यदा भार्या भर्तारमृतुकाले संगच्छति। तथा असावपि द्यवादित्यात्मा स्वरूपं स्नावास्थिमज्जात्मकं अमुमात्मानं पितृजं शुक्ररूपेण इमस्मै पृथिव्यग्न्यात्मने संप्रयच्छति। तौ द्यावापृथिव्यात्मानौ अधिष्ठातृभ्यामग्न्यादित्याभ्यां सहभूतौ अन्योन्यमितरेतरमभिसंभवतो मिथुनीभवतः। यत्तत्पृष्टं केन रूपेणेमं लोकमाभवतीति, तद्व्याख्याय उपसंजिहीर्षन्नाह—अनेनैव पृथिव्यग्निरूपेण मातृजेन पितृजं रूपं द्यवादित्यात्मानममुं लोकमभिसंयुज्यते। अमुना द्यादित्यात्मना रूपेण पितृजेन त्रयेणेमं लोकं पार्थिवमाग्नेयं पिण्डमाभवति शुक्रादिक्रमेणाऽऽगत्य भवति। कोऽसौ। इन्द्रः सर्वभूतात्मा। अविद्याकामकर्मखजनिर्मथनोद्भूतशुक्रशोणितमयं शरीरमुपचयापचयधर्मकमशनायापिपासाशोकमोहजरामृत्य्विल्याद्यनेकोपद्रवालयं षाट्कौशिकं प्रतिपद्यते इत्यर्थः। स यदा शास्त्र-

चार्योपदिष्टमैन्द्रमशरीरं स्वं प्रज्ञात्मानं वेत्ति, तदा अनेनैव स्वरूपेण प्रेत्येन्द्रो भूत्वा एषु लोकेषु राजति इत्युक्तम्। शंकर.

( २ ) विद्यान्तरोपदेशार्थे तद्वा इदं बृहतीसहस्रं इति पुनः पुनः परामर्शः। तदिदं बृहतीसहस्रं तद्यशः तस्य नारायणस्य यशः। यस्य नारायणस्यैतद्यशः, स भगवानिवेन्द्रनामा। स हि यत्प्रथमत इन्द्रो बभूव स्वेच्छया यज्ञनामा, तस्मात्तमेव वेदा इन्द्रशब्देन वदन्ति मुख्यतः। इदि परमैश्वर्ये इति धातोश्च। तस्यैव हि परमैश्वर्यम्। अन्येषां तु द्वादशानां तेन दत्तमेवेन्द्रत्वं, न तु मुख्यतः। अतो विष्णावेवेन्द्रशब्दं प्रयुङ्क्ते श्रुतिः —'मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्रमिन्दो पवमान विष्णुम्' ( ऋसं. ९।९०।५ ) इति। न च इन्द्रं विष्णुं चेति पृथगन्वयः क्रियते। तदा वरुणादिषु पृथक्पृथङ्मत्सिशब्ददर्शनादत्रापि पृथङ्मत्सिशब्दो दृश्यते। न हि सर्वेषां पृथङ्मत्सिशब्ददर्शने एकस्यैवान्यथात्वं युज्यते। न चात्र द्वित्वगमकं चकारादिकं विद्यते। तस्मात् 'प्रातर्भगं पूषणं ब्रह्मणस्पतिं' ( ऋसं. ७।४१।१ ) इत्याद्यपि एकस्यैव विष्णोर्विशेषणम्। यत्र चैवंभूतेष्वेकत्वे विरोधो दृश्यते, तत्र तेनैव विरोधेन द्वित्वं भवति। अन्यथैकत्वमेव। 'यो देवानां नामधा एक एव' ( ऋसं. १०।८२।३ ) इति चोक्तम्। बहुरूपत्वाद्बहुवचनं च विष्णोरेव युज्यते। तस्मान्मुख्यतो विष्णावेव इन्द्रादिशब्दाः, अन्येषामुपचारतः। 'मत्सि महामिन्द्रमिन्दो मदाय' ( ऋसं. ९।९०।५ ) इत्यन्येन्द्रस्य पृथगुक्तेश्च 'मत्सीन्द्रमिन्दो पवमान' इति पूर्वोक्त इन्द्रो विष्णुरेवेति सिद्धम्। महत्त्वं च तस्य अदितिपुत्रत्वेऽग्रजत्वमात्रं, न तु सामर्थ्यतः। मह पूजायामिति धातोः। पूज्यो ह्यग्रजो भवति। 'आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः। वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत्॥' ( ऋसं. १।१५६।५ ) इतीन्द्रस्य परमं दैवं जनको यज्ञभागादिप्रदाता विष्णुरेव हि श्रूयते। इन्द्रश्च यजमानः। तस्मात्तत्प्रसादादवताराग्रजत्वमेव तस्य महत्त्वम्। अन्येन्द्रो हि 'अहं प्रथमः पिबेयमहं प्रथमः पिबेयम्' इति वायुना विवदमान आजौ पराजितो वायुं प्रसादयित्वा चतुर्थे वायुना सह ग्रहमाप। विष्णोस्तु 'क्रतुं सचन्त मारुतस्य वेधसः' ( ऋसं. १।१५६।४ ) इति वायोरपि विधातृत्वं श्रूयते। डुधाञ् धारणपोषणयोरिति धातोर्विशेषेण धारणपोषणकर्ता हि वेधाः। तस्माद्भगवत एवैतत् यशो बृहदुक्थादिकम्। 'ऋक्सहस्रात्मकं विष्णोर्यश इन्द्राभिधस्य हि। इन्द्रो हि प्रथमो विष्णुर्यज्ञनामा जगत्पतिः। तत्प्रसादादथेन्द्रत्वं द्वादशान्ये प्रपेदिरे। पुरंदरस्त्वेक एव वासुदेवप्रसादतः। द्विवारमिन्द्रतामाप तस्माद्द्वादश ते परे। अग्रजत्वाददित्यां तु महेन्द्रो नाम चाभवत्। महाव्रतं कर्म कृत्वा चैव नाम्ना महेन्द्रकः। महत्त्वं मुख्यतो विष्णोर्न ह्यन्यस्य कदाचन। एवं यो वेद तं विष्णुं विस्रस्तो बन्धतोऽखिलात्। अस्माल्लोकाद्धरेर्लोकमेति नास्त्यत्र संशयः। इत्याह भगवान् विष्णुर्महिदासस्य रूपकः। श्वेतद्वीपादिकान् प्राप्य स इन्द्राख्यो हरिः स्वयम्। महिदासाभिधो भूत्वा लोकेष्वेषु विराजति। तत्र पृच्छन्ति केचित्तु यद्येष भगवान्हरिः। महिदासादिरूपेण भूमिष्ठो रमते प्रभुः। तदा यदा स्त्रिया विष्णू रमते नित्यसत्सुखः। कया स्त्रिया रतिं कुर्यान्न ह्यन्यरतिरच्युतः। स्त्रीरूपे तत्स्वयं स्वस्मिन्रमतेऽसावितीदृशम्। वाच्यं तत्र च भूमिष्ठरूपेण तु दिवि स्थितम्। स्त्रीरूपं किमसौ गच्छेदथ यद्येवमत्र च। स्त्रीरूपं पृथिवीसंस्थं केन रूपेण संव्रजेत्। न ह्यन्यगम्यो भगवान् स्त्रीरूपोऽपि जनार्दनः। इति पृष्टः स्वशिष्यैः स महिदासोऽवदद्धरिः। स्त्रीषु यल्लोहितं लोके तत्राग्निस्थो जनार्दनः। स्त्रीरूपः सोऽग्निनामैव ज्वलज्ज्वालासमप्रभः। तस्माद्विष्णोः संनिधानाद्भर्ता भार्या शरीरगात्। न बीभत्सेतैव रक्तात्तथा पुंरेतसि स्थितः। आदित्ये संस्थितो विष्णुरादेरादित्यनामकः। तस्मान्न रेतसो भार्या बीभत्सेत पतिस्थितात्। पुंरूपो भगवान्विष्णू रेतसिस्थो द्युमत्प्रभः। तस्माद्यद्भूमिगं विष्णोः स्त्रीरूपं तत्स्वयं हरिः। प्रादुर्भावगतो द्याद्दिविस्थितपुमात्मनः। सूर्यगस्य तथा पुंसो रेतसिस्थस्य चात्मनः। देवीषु यल्लोहितगं स्त्रीरूपं परमात्मनः। तत्स सूर्यगतो विष्णुः पुंरेतःस्थस्य चात्मनः। दद्याद्भूमिगतस्यैव रूपद्वयमिदं ततः। परस्परं संभवति विष्णोर्नित्यसुखात्मकम्। प्रादुर्भावस्थितं रूपं यच्च भूमौ पुमात्मकम्। विष्णो-

स्तदपि देवीषु स्थितः स्त्रीरूपकात्मना । एवमन्योऽन्यतो विष्णू रतः स्वस्मिन्न चान्यतः । रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना । रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः । रमया रमणं तस्माद्रमाया रतिपात्रता । नैवास्या रतिदातृत्वं विष्णोर्न ह्यन्यतो रतिः ॥' इत्यादि च । स एव महिदास इन्द्रनामा प्राप्येमं लोकमत्र भूत्वा प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्य एषु लोकेषु राजति । नात्र प्रेत्यशब्दो मरणवाची, किंतु 'प्रेतां यज्ञस्य शंभुवा' ( ऋसं. २।४१।१९ ) इत्यादिवत्प्राप्तिवाच्येव । न हि मृतः पुनरेषु लोकेष्वेव राजति । न च यशोमात्रराजनेन स्वस्य राजनं भवति, भिन्नपदार्थत्वात्, 'यद्वा एति च प्रैति च' इत्यादौ प्राप्त्यर्थेऽपि वेदेषु प्रसिद्धत्वाच्च । 'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदितम्' इति स्कान्दे । यदनेन रूपेण अमुं लोकमभिसंभवति । अनेन महिदासादिरूपेणामुं लोकं दिविष्ठं स्वरूपम् । लोक्यते इति स्वरूपवाची लोकशब्दः, 'आत्मानमेव लोकमुपासीत' इतिवत् । यच्छब्दः किंशब्दार्थे । अनेन रूपेण तद्रूपमभिसंभवति किम् । उभयोरपि परिहारदर्शनादस्यापि प्रश्नत्वमवगम्यते 'यतश्चोदेति सूर्यः' इत्यादिवत् । रङ्गस्तु प्रश्नविषयस्य दुरवगमत्वं प्रकाशयति । 'दुर्गमे प्रश्नविषये प्रश्नो रङ्गयुतो भवेत्' इति शब्दनिर्णये । केन रूपेणेमं लोकमाभवति । केन स्वरूपेण भूमिष्ठेनात्मन एव स्त्रीरूपेण विष्णुः संबध्यते । सोऽयं महिदासादिप्रादुर्भावरूपः इदं भूमिष्ठस्त्रीरूपं लोहितगतं च स्वकीयमेव रूपममुष्मै दिविष्ठाय स्वपुरुषरूपाय प्रयच्छति . देवरेतःस्थिताय च । देवी लोहितस्थितमात्मनः स्त्रीरूपं महिदासादिरूपेभ्यो मानुषरेतःस्थितरूपेभ्यश्च दिविष्ठैश्च विष्ण्वादिस्वरूपैः प्रयच्छति च । तानि भूमिष्ठत्वेन दिविष्ठत्वेन द्विविधत्वात्तौ इत्युच्यन्ते । अग्नेस्तद्रूपं अग्निनाम्नो विष्णोः प्रतिमा, तत्संनिधानात् । एवमादित्यनाम्नो विष्णोः । न ह्यग्न्यादिस्वरूपमेवं लोहितादि । न च लौकिकस्त्रीपुरुषसंबन्धमात्रमत्रोच्यते, अप्रस्तुतत्वात्तस्य । भगवानेव ह्यत्र प्रस्तुतः । असावात्मेत्यात्मशब्दाच्च भगवानेवेति ज्ञायते । 'आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । गुणपूर्त्यभिधायी स नान्यस्य गुणपूर्णता । अमुख्यात्मान एवातो ब्रह्माद्याः सर्व एव हि ॥' इत्यादि च ब्रह्माण्डे । 'यदक्षरं पञ्चविधं समेति' 'सत्यस्य सत्यमनु यत्र युज्यते' इत्यादिना उक्तार्थविषयोदाहृतैः श्लोकैरपि भगवत एव स्वरूपाणां परस्परयोगस्य उक्तत्वात् । गायत्र्युष्णिग्बृहतीत्यादिना भगवत एव पञ्चविधस्य स्त्रीरूपस्य महिदासादिपञ्चपुंरूपाणां च प्रस्तुतत्वाच्च । मध्व.

बृहतीसहस्रसंपद्विषयः पञ्चात्मकः पुरुषः अक्षराविष्टः, सर्वदेवात्मा, ज्ञानेन पापमुक्त्यर्हः, स्त्रीपुंभेदशून्यः, प्राणरूपः, देवरथाधिष्ठाता

तत्रैते श्लोकाः: —

**यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत्संवहन्ति ।**
**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥**
**यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत्संवहन्ति ।**
**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ॥**

तत्रैतस्मिन्नर्थे वक्ष्यमाणाः श्लोकाः पादसंहननात् मन्त्रा भवन्ति । यदक्षरं न क्षरतीति प्राणाख्यं ब्रह्म पञ्चविधं पृथिव्यादिपञ्चात्मकं भौतिकं शरीरं समेति पूर्वोक्तन्यायेन संगच्छति । तत्पञ्चविधं विशिनष्टि—युजो युज्यन्ते इतीन्द्रियाणि युक्ताः रथे इवाश्वाः ( शरीरं यत् १ ) संवहन्ति दिग्देशान्तरेभ्यो यच्छरीरम् । सत्यस्य मूर्तामूर्तात्मनः प्राणस्य सत्यं परमात्मा क्षेत्रज्ञभूतः अनु प्राणप्रवेशमनु यत्र युज्यते संयुज्यते । प्राणप्रवेशादात्माऽपि परः प्रविष्ट इव पश्यन् शृण्वन्मन्वानो विजानन् विज्ञानक्रियाव्यापारारूढो यस्मिन् शरीरे लक्ष्यते इत्यर्थः । तत्र तस्मिन्नेव शरीरे प्राणेन देवा वागाद्यभिमानिनोऽग्न्यादयः सर्वे सह एकं भवन्ति अभिन्नरूपतां व्रजन्ति स्वापमरणध्यानकालेषु । पुनस्तत एव अग्नेर्विस्फुलिङ्गा इव प्रविभज्यन्ते प्रबोधकाले । यत् अक्षरं प्राणाख्यं अक्षरात् स्वस्मादात्मन एति

(१) ऐआ. २।३।८.

आगच्छति इन्द्रियैर्युक्तं शरीरम् । व्याख्यातमन्यत् ।
शंकर.

**यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।**
**तद्वियूया कवयो अन्वविन्दन्नामायत्ता समतृप्यञ्छ्रुतेऽधि ॥**
**यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।**
**तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ॥**

यद्वाच ओमिति पुष्पफलरूपं वाङ्मयस्य वृक्षस्य, यच्च नेति मूलरूपं, यच्चास्या अकारात्मिकाया वाचः क्रूरं छिन्धि भिन्धि इत्यादिलक्षणं, यदु चोल्बणिष्णु अत्युल्बणमाक्रोशादि, तत्सर्वं वियूया वियूय परित्यज्य अनित्यस्थानकरणादिधर्मजनितमपोह्य कवयो मेधाविनः अन्वविन्दन् अनुलब्धवन्तः, प्राणमिति वाक्यशेषः । कथम् । तामेव सविशेषां वाचं आलम्ब्य शनैस्तस्माद्विशेषापोहक्रमेण केवलायामकारलक्षणायामाकाशकल्पायां वाचि नाम्नि आयत्ताः नामायत्ताः, नामात्मभावं गता इत्येतत् । एवं नामायत्ता अनुलब्धारः ऐन्द्रं स्वप्रज्ञात्मानमाकाशशरीरं समतृप्यन् तृप्तवन्तः समन्ततः. शृते पक्के विज्ञाने अधि ऐश्वर्यभावेन । यस्मिन्नामा नामायत्ताः समतृप्यन् शृतेऽधि तत्र तस्मिन्निन्द्रे प्रज्ञानात्मनि देवा वागादयोऽग्न्यादयश्च सर्वे युजो युक्ता भवन्ति तदात्मनैव, पृथगर्थान्तरत्वेन न सन्तीत्यर्थः । 'एतमग्नावध्वर्यवः' इत्यादिश्रुतेः । यथा अतिक्रान्ताः कवयो येन ब्रह्मणा मार्गेण स्वं प्रज्ञात्मानं अनुलब्ध्वा समतृप्यन्, तथा अधुनातनोऽपि विद्वान् तेनैव मार्गेण नामायत्तः सन् पाप्मानं अविद्यासङ्गकृतमनर्थरूपं अपहत्य विधूय ब्रह्मणा आत्मभूतेन स्वर्गं लोकं अप्येति ऐन्द्रं हिरण्यगर्भमात्मानं प्रतिपद्यते इत्यर्थः । शंकर.

**नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्रीपुमान्ब्रुवन् ।**
**पुमांसं न ब्रुवन्नेनं वदन्वदति कश्चन ॥**

**अः इति ब्रह्म । तत्राऽऽगतमहमिति । तद्वा इदं बृहतीसहस्रं संपन्नम् । तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति । जीवाक्षरेणैव जीवाहराप्नोति । जीवाह्ना जीवाक्षरमिति । अनकाममारोऽथ देवरथः । तस्य वागुद्धिः । श्रोत्रे पक्षसी । चक्षुषी युक्ते । मनः संग्रहीता । तदयं प्राणोऽधितिष्ठति ॥**

यं स्वर्गं लोकमात्मानं विद्वान्प्रतिपद्यते, तमेनमात्मानं स्त्रीशरीरसंबन्धिनं स्त्रीशब्देन वदन्नपि न वदति कश्चन कश्चिदपि । तथा नपुंसकदेहसंबन्धिनं न स्त्री नापि पुमान् नपुंसकोऽयमिति ब्रुवन्नप्येनं नपुंसकशब्देन न वदत्येव । तथा पुंदेहसंबन्धित्वात्पुमानयमिति वदन् न वदत्येव कश्चन । न हि देहधर्मैः सर्वैः स्वस्य देहस्यस्यापि कदाचिदपि संबन्ध इत्यर्थः । केन पुनरसौ शब्देनाभिधीयते इत्युच्यते—अकारात्मिका या वाक् यथोक्ता, तयैव वाचा अ इत्युच्यते ब्रह्म । विसर्जनीयो निर्देशार्थः । तत्र तस्मिन्नाम्नि अकारात्मिकायां वाचि आगतं संयुक्तं स्वगृहे प्राप्त इवातिथिः अहं अहंप्रत्ययवेद्यं सर्वस्य । तथा चोक्तं 'अहमुक्थमस्मीति विद्यात्' इति । अहंशब्दः अकारपूर्वत्वादकार एव । तथा चोक्तं 'अकारो वै सर्वा वाक्' इति । सर्वं च ब्रह्म । तस्मात् अ इत्येवं ब्रह्मोच्यते, न केनचिच्छब्दान्तरेण । तत् प्रस्तुतं बृहतीसहस्रं इदमेवंप्रकारं संपन्नम् । यदेतत्स्वर्गलोकाप्ययफलमुक्तं, तत् बृहतीसहस्रोक्तात्मविज्ञानकृतमेव, नान्यनिमित्तं, इत्येतमर्थं दर्शयन्नाह उक्तमेवार्थम्—तस्य वा एतस्येत्यादि । कथं पुनस्तद्विज्ञानकृतमेवेदं फलमित्युच्यते—जीवाक्षरेणैव । सर्वप्राणिजीवनहेतुत्वात् अशरीरः प्राणः प्रज्ञात्मा जीवः 'शारीरः' इति वचनात् । तथा 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति च कौषीतकिनाम् । तस्मात्प्राणो जीवः सर्वजन्तूनाम् । तस्याभिधानं नामाक्षरं अकाराख्यम् । उक्तं .हि 'अ इति ब्रह्म' इति । तेन जीवाक्षरेणैव महदुक्थाकारविकृतेन यस्मिन्नहनि महाव्रतीये सर्ववाग्रूपेण स जीवः स्तूयते, 'सर्वात्मा सर्वा वाचो वदन्ति' इति हि विज्ञायते, तेन जीवाक्षरेण अकारेण जीवाहर्महाव्रताख्यं कृत्वात्मानमाप्नोति । स एव हि तथा सर्वाभिर्वाग्भिः स्तूयते कृत्वात्मभूतः स्वात्मभूताभिरेव । स एवंविद्वान्

1 मध्व. द्वियूया कवयो अन्व ( द्वियूम कवयोऽन्व ).

जीवाक्षरेणैव जीवाद्दः क्रतुं आप्त्वा तेन जीवाह्ना कृत्वात्मना पुनरात्मन्येव विधूय सर्वान्विशेषान् अकारात्मानं जीवाक्षरमाप्नोति। एवं स्वात्मप्राप्तो विज्ञानमयोऽयं रथः, तं परिकल्पयन्नाह—अनकाममारः, मरणं मारः, कामतो म्रियते इति काममारः, न काममारः अकाममारः, अयं तु तद्विपरीतः अनकाममारः, अर्थात्काममार एव। अथेत्यनर्थको निपातः। देवरथो वागग्न्यादियुक्तो रथो देवरथः। कथम्। तस्य रथस्य वाक् उद्धिः, ऊर्ध्वं धीयतेऽस्मिन्सर्वं भारजातमित्युद्धिः। चुबुकसंबन्धेन वागुद्धिः, संकोचसामान्यात्। श्रोत्रे पक्षसी रथचक्रे, अभितोऽवस्थानसामान्याच्छन्दसंबन्धाद्वा। चक्षुषी रथयुक्ते अश्वौ इत्यर्थः। ताभ्यां हि नीयते रथः। मार्गदर्शनहेतुत्वात् मनः संग्रहीता सारथिः। तत्रायं प्राणो जीवोऽधितिष्ठति। स ही रथी, ईश्वरत्वात्। शंकर.

तदुक्तमृषिणा—

आ तेन यातं मनसो जवीयसा।
निमिषश्चिज्जवीयसेति जवीयसेति ॥ ८ ॥

इति श्रीमदैतरेयद्वितीयारण्यके तृतीयोऽध्यायः॥

(१) तदेतद्देवरथकल्पनारूपं ऋषिणाऽप्युक्तम्। 'आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना। यस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः॥' (ऋसं. १०।३९।१२)। आ तेन रथेन यातं आयातं आगच्छतम्। किंविशिष्टेन। मनसो जवीयसा वेगवत्तरेण। तस्यैव विशेषणं—रथं यं वां युवाभ्यामर्थाय ऋभवो देववर्धकिनो देवाश्चक्रुः कृतवन्तः हे अश्विना, तेनायातमित्यर्थः। पुनरपि रथस्यैव विशेषणं—यस्य रथस्य योगे योजने दुहिता दिवो द्युलोकस्य उषाः जायते। किंच उभे अहनी, रात्र्यहनी इत्यर्थः। 'अहश्च कृष्णमहरर्जुनं च' इति मन्त्रवर्णात् रात्रिरप्यहरेवोच्यते। सुदिने शोभनदिने प्रजानां सुखचेष्टासुखस्वपनहेतुत्वात् भविष्यतो विवस्वतः, विवस्वत्कृतत्वात्तयोः। किंच अन्योऽपि मन्त्रो रथप्रकाशकः—'निमिषश्चिज्जवीयसा रथेनाऽऽयातमश्विना। अन्ति षद्भूतु वामवः॥' (ऋसं. ८।७३।२)। निमिषश्चित् निमिष इव, चिन्निपातस्य उपमार्थत्वात्। जवीयसा रथेन आयातं आगच्छतं हे अश्विना। अन्तिके समीपे सद्भूतु भवतु अस्माकं वां युवयोरश्विनोः अवः अवनं रक्षणं अस्मत्पुत्रपौत्रादीनाम्। तेन अस्मद्यज्ञं अस्मदनुग्रहायैव निमिषश्चिज्जवीयसा रथेन आयातम्। द्विर्वचनमुक्तप्रस्तावपरिसमाप्तिदर्शनार्थमिति। शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयद्वितीयारण्यकभाष्ये तृतीयोऽध्यायः॥

(२) यत् नारायणादिरूपेण पञ्चविधमक्षरं परं ब्रह्म, तत् स्वस्मिन्नेव स्त्रीपुंरूपेण समेति। युजो देवाः अश्वरूपेण रथे युक्ताः सन्तो यन्नारायणाख्यं परं ब्रह्म अभिसंवहन्ति, तदेतत्सत्यस्य सत्यं नारायणाख्यं ब्रह्म यत्र अनुयुज्यते यस्मिन् स्वरूपे एव स्त्रीपुंरूपेण युज्यते, तत्र तस्मिन्नेव परे ब्रह्मणि नारायणाख्ये सर्वदेवा एकीभवन्ति मुक्ताः सन्तो मिलिता भवन्ति। नायमेकीभावो नाम स्वरूपैक्यं, किंतु एकस्थाने वासः अत्यनुकूलचित्तता च। 'एकीभूय नृपाः सर्वे ववृषुः पाण्डवं शरैः। एकीभूता तु सा सेना पाण्डवानभ्यवर्तत॥' इत्यादिवत्। न च एकीभावशब्दः स्वरूपैकत्वविषये प्रयुज्यमानः कुत्रचिद्दृष्टः। एकः पुरुषोऽपि यदा द्विधा भूत्वा एकीभवतीत्युच्यते, तदाऽपि स्थानैक्यमेव, स्वरूपैक्यस्य पूर्वमेव सिद्धत्वात्। न चाज्ञाते एकत्वे पुनर्ज्ञाते ऐक्यं प्राप्त इति प्रयोगो दृश्यते, किंतु ज्ञात इत्येव प्रयुज्यते। तस्मात् भावसहित एकशब्दो न स्वरूपवाची। न हि पूर्वं भिन्नस्य पश्चात्स्वरूपैक्यं भवति, किंतु संसर्ग एव भवति। तस्मादत्रापि संसर्ग एव विवक्षितः। 'यदक्षरं पञ्चविधं समेति' इत्युक्तस्य 'सत्यस्य सत्यमनु यत्र युज्यते' इति परामर्शं कृत्वा 'तत्र देवाः सर्व एकं भवन्ति' इत्युच्यते, तस्मान्न पुनरुक्तिः। यस्मादक्षरान्नारायणात् स स्वयमेव भगवान्प्रादुर्भावरूपी स्त्रीपुंरूपेण युक्त आगच्छति। तात्पर्यार्थं तस्यैवार्थस्य पुनरभ्यासः। वियूय विचार्य नामायत्तान्येव नामार्थभूतान्येव विष्णोर्माहात्म्यादीन्यन्वविन्दन्। ततश्चाधिकं समतृप्यन्। शृते परिपक्वे सति ज्ञाने। यस्मिन्विष्णौ नामानि ज्ञात्वा

तस्मिन् ज्ञाने परिपक्के समतृप्यन्, तस्मिन्नेव देवाः सर्वयुजो भवन्ति इत्यवधारणार्थे पुनर्वचनम् । सर्वयुजो भवन्ति मनोवाक्कर्मभिस्तत्रैव युक्ता भवन्ति । ‘ अर्थतः कठिनं क्रूरमुल्बणं श्रवणाप्रियम् ’ इति शब्दनिर्णये। अस्त्रीपुमान्ब्रुवन् अस्त्रीपुमांसं ब्रुवन्, ‘ सतसु प्रथमा ’ इति सूत्रात् । ‘ स्वातन्त्र्ये विभक्तिव्यत्ययः ’ इति च । स्वतन्त्रो हि भगवान्, तत्प्रेरित एव तं वदतीत्यभिप्रायः । वदन्वदति वदन्नेव वदति । वदन्नेव न वदति । भवत्येव हि भगवान्स्त्रीरूपः पुंरूपश्च । तस्माद्वदत्येव । अप्रसिद्धत्वान्न वदति च । ‘ स्त्रीरूपश्चैव पुंरूपो यस्मान्नारायणः स्थितः । पुमान् स्त्री चेति वाच्योऽतो वैलक्षण्यान्न चोच्यते । विष्णोर्नपुंसकाकारो नैवास्ति क्वचन प्रभोः । तथाऽप्यरागाकृष्टत्वात्तच्छब्दैरपि कथ्यते ॥ ’ इति गारुडे । ‘ नारायणादिरूपेण पञ्चधैव हरिः स्थितः । तन्नामभिश्च स्त्रीरूपैः समेति स्वैः स केशवः । यत्स्यन्दनं वहन्त्येते देवा भार्यासमन्विताः । अधिदैवे तथाऽध्यात्मे जीवदेहात्मकं रथम् । स सूर्यः सूर्यभार्या च चक्षुर्द्वयसमाश्रितौ । वहतोऽश्वात्मकौ देहं नारायणरथात्मकम् । सोमश्च रोहिणी चैव दक्षवामश्रुतिस्थितौ । उभयोः पक्षयोः स्थित्वा वहतोऽश्वात्मकौ तयोः । उद्धारणार्थमेतेषामुमा वाचि समास्थिता । नागाकारैव रश्मित्वमगमद्वैष्णवे रथे । मनःस्थितः शिवश्चात्र मनोनामा महाबलः । अभवत्सारथिर्विष्णोर्विष्णुर्वायुश्च तं रथम् । प्रकृष्टानन्दरूपत्वात्प्राणाख्यावधितिष्ठतः । तावेव चाश्विनामानौ हयास्यौ जगदीश्वरौ ॥ ’ इत्यादि गारुडे । ‘ तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ’ ( बृउ. २।१।२० ) इति च श्रुतिः । ‘ सर्वसाधुगुणत्वात्तु वायुः सत्य इतीर्यते । तस्यापि सत्यतादाता साधुपूर्णगुणो हरिः । सत्यस्य सत्य एतस्मात्स्त्रीपुंरूपः स केशवः । यस्मिन्स्वात्मनि युक्तः स रमते स्त्रीपुमात्मना । मुनिगन्धर्वपित्राद्यैर्न तत्प्राप्यं कथंचन । आप्नुवन्ति सुराः सर्वे तद्रूपं जाज्वलत्सदा । अर्धनारीपुमाकारं तस्य वामस्थितानि च । स्त्रीरूपाणि तु सर्वाणि विष्णोरत्यद्भुतानि च । विष्णोर्यानि तु पुंरूपाण्यास्थितान्यस्य दक्षिणे । तान्यस्यैव तु रूपाणि युज्यन्तेऽत्र परस्परम् । एष नारायणो देवो अर्धनारीपुमात्मकः । सर्वे देवाः सभार्याश्च तं प्राप्य पुरुषोत्तमम् । एकीभावस्वभार्याभिरर्धनारीपुमात्मना । प्राप्यैवोपासते विष्णुं मुक्ताः संसारसागरात् । मोदन्ते च रमन्ते च विभागं चेच्छयाऽऽप्नुयुः । बहुधा च भवन्त्येते स्त्रीपुमात्मपृथक्त्वतः । प्रसादाद्वासुदेवस्य भागैः स्त्रीपुंस्वरूपिणः । तेनैव नियता नित्यं तद्वशास्तत्परायणाः । रमन्ते नान्यगम्योऽसौ देशो विष्णोः परात्मनः । स्त्रीपुंरूपेण युक्तं तद्विष्ण्वाख्यं परमक्षरम् । अक्षरादेव परमात्पुंसो नारायणाभिधात् । आगच्छन्ति तदेते च देवा भार्यासमन्विताः । वहन्त्यश्वादिरूपेण रथस्थं परमं वपुः । तत्सर्वदेवैः प्राप्यं च नान्यैः कथमपि क्वचित् । मितादिपञ्चरूपं यद्वाक्यं लोकेऽथ वा श्रुतौ । नारायणस्य नामैतदिति जानन्ति देवताः । मनोवाक्कर्मभिस्तस्माद्योगमाप्स्यन्ति तत्र ते । सर्वशब्दान्हरौ नेतुं कस्य देवानृते बलम् । वायवन्तास्तारतम्येन विष्णुनामार्थवेदिनः । सम्यग्वेत्ता मारुतोऽत्र तस्मान्मुक्तेभ्य एव च । सुरेभ्योऽधिकमानन्दं नित्यं भुङ्क्ते हरेरनु ॥ ’ इत्याद्यर्धनारीनारायणतन्त्रे । एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वा अकारो विशेषतो नारायणवाचक इत्याह——अ इति ब्रह्मेति । ‘ इतिशब्दोऽभिधानान्ते यत्र वै शेषिकं हि तत् । नाम स्यादिति मे साक्षान्निर्णयः समुदाहृतः ॥ ’ इति शब्दनिर्णये । तत्राऽऽगतमहमिति । यस्माद इत्ययं शब्दः प्रस्तुतस्याभावं विरोधिनमन्यं च वदति, तस्मात्प्रत्यक्षत्वाज्जीवजडात्मकस्य जगत एवानुक्तावपि प्रस्तुतरूपत्वात्तदन्यस्तद्विरोधी तत्र दृश्यमानदोषवर्जितश्चाकारशब्दार्थ इति सिध्यति । मनसि प्रस्तुतत्वादवचनेऽपि प्रस्तुतमेवेदं सर्वम् । दृष्टसंबन्धित्वाददृष्टं सर्वमपि प्रस्तुतं भवति । भगवांस्तु अ इति पृथग्विवक्षितत्वादेव न प्रस्तुतसमुदाये । न च शून्यस्याशब्दार्थता । शून्याङ्गीकारे ह्यकारस्याभावताख्य एवार्थ इति सिध्यति । विष्णोरङ्गीकारे त्वभावताऽन्यता विरोधिता इति त्रयोऽप्यर्थाः सम्यगेव सिध्यन्ति । तस्मादकारस्य भगवानेव मुख्यार्थः, न शून्यं, एकदेशत्वात् । तस्मादमुख्यार्थत्वादन्ययुक्तेनैवाकारेणाभाव इति तदुच्यते, न तु अ इत्येव केनचित्क्वचित् । न च तथा प्रयोगोऽस्ति । तस्मात्पारतन्त्र्याल्पगुणत्वादिसर्ववस्तुस्वभावविरुद्धस्वभावं स्वतन्त्रं

पूर्णगुणं सर्वजीवजडेभ्यः अन्यदज्ञानदुःखाल्पत्वपारतन्त्र्योत्पत्तिनाशादिसर्वदोषविवर्जितं ब्रह्मैव अशब्दार्थः । पूर्णं हि ब्रह्मशब्दस्यार्थः । न च दोषयुक्तस्य पूर्णता । न च जीवजडाद्यपूर्णवस्त्वभिन्नस्य पूर्णत्वं भवति । तस्मादकारशब्दार्थ एव ब्रह्मशब्दार्थः । तदेतदुक्तं 'अः इति ब्रह्म' इति । अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम् । 'विवृत्तावपि सर्गः स्यात्संहितायां च यत्र हि । समानोत्तमहीनत्वमुच्यते वस्तुनोऽञ्जसा ॥' इति शब्दनिर्णये । अः इति ब्रह्म पूर्णं वस्तूच्यते । तत्राऽऽगतमहमिति । तत्राकारस्य पूर्णवाचित्वे अहमेव सोऽकारवाच्य इत्याह महिदासरूपो भगवान्नारायणः । अहमेक एव परिपूर्णः, अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति । मुक्तेभ्यः प्रलये लीनेभ्यश्च सर्ववस्तुभ्यः सदा विभिन्न एव भगवानिति दर्शयितुं च अः इति पृथग्वचनम् । तच्चोक्तं वाक्यनिर्णये—'मुक्ता अपि न विष्णुत्वं यान्ति तत्समतामपि । आधिक्यं कुत एव स्यान्मुक्तानां मुक्तिदातृतः । कुत एव प्रलीनानां प्रलये तु तदात्मता । ब्रह्मशर्वेन्द्रपूर्वाणां मुक्तावपि न विष्णुता । यदा तदा तु संसारे क्व तद्रूपत्वमिष्यते । अन्योऽसौ सर्वतो विष्णुः स्वातन्त्र्याद्गुणपूर्तितः । सर्ववस्तुस्वभावस्य विरुद्धोरुस्वभावकः । पारतन्त्र्याल्पताज्ञानजनिनाशादिवर्जितः । अकारेण ततो विष्णुः संहितायां पदात्मना । बह्वृचोपनिषत्प्रोक्तस्तेनैव परमात्मना । महिदासावतारेण सोऽहमेवंविधस्त्विति । मत्तोऽन्यो न हि पूर्णोऽस्ति यतोऽकारश्च पूर्णताम् । वक्ति तस्मादकारोऽयं मामेव वदति स्फुटम् । नाभाववाच्यकारः स्यादर्थत्रययुतो यतः । एकार्थात्मा ह्यभावस्तु निषेधैकस्वरूपतः । एकदेशस्वरूपत्वान्नाकारेणैव भण्यते । किं त्वभाव इति त्वेव तेनाकारोदितो हरिः ॥' इति । न च निषेधस्वरूपे विरुद्धता च अन्यता च अस्ति, इत्येतावता पूर्णार्थता भवति, तदाऽर्थत्रयकल्पनस्य वैयर्थ्यात् । उक्तं हि शब्दनिर्णये— 'विरुद्धतानिषेधान्यभावयुक्ते हि केवलः । अकारो वर्तते तेषामेकार्थात्मन्यभावके । वर्तते भाव इत्येव न त्व इत्येव केवलः ॥' इति । तस्मान्नारायण एवाकारवाच्य इति सिद्धम् । 'यतोऽकारः सदा विष्णोर्वाचकत्वेन संस्थितः । तस्माद्वर्णत्रयात्माऽयं प्रणवोऽपि त्रयात्मकम् । हरिमेव सदा वक्ति नैवान्यं कंचन क्वचित् । सृष्टिकर्ता ब्रह्मनामा योऽसृजच्चतुराननम् । अन्तर्यामी विरिञ्चस्य सोऽकारार्थो जनार्दनः । वैकुण्ठलोक आस्ते स द्वितीयवपुषा हरिः । उकारवाच्यः स विभुर्नृसिंहो रुद्रनामकः । रौद्रत्वात्स शिवस्यापि स्रष्टा संहारकारकः । अन्तर्यामी शिवस्यापि मकारार्थः प्रकीर्तितः । एवं त्रियात्मकं विष्णुं प्रणवोऽयं त्रियात्मकः । एवं पृथगिवाचष्टे बिन्दुर्वक्त्यनिरुद्धकम् । प्रद्युम्नाद्यान्नादपूर्वाः सर्वान्नारायणात्मकान् । पद्मनाभादिका एव मूर्तीर्नारायणोत्तराः । प्रणवोऽयं वदत्यष्टौ तस्मान्नान्याभिधायकः ॥' इति तत्त्वसारे । 'षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु । स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु । सूर्यरूपेषु रूपाणि पुमाकाराणि सर्वशः । एतैः पुरुषगै रूपैर्बृहत्युक्थव्यवस्थितैः । कदाचिद्भगवान्विष्णुः पुमाकाराणि तानि च । कृत्वा सूर्यगतान्येव स्त्रीरूपाणि विधाय च । तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च । स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः । पुंरूपप्रमदारूपस्वरूपै रमते स्वयम् । एकीकृत्य च तान्येव द्विरूपो रमते तथा । स एव रमते मायां स्थित्वाऽऽत्मस्त्रीतनौ हरिः । प्राणस्योत्पत्तिकामः सन्ननेच्छामारनामकः ॥' इत्यर्धनारीनारायणतन्त्रे । वायोरुत्पत्तिकामो मायां रमायां रमते इति अनकाममारः । जीवस्थितेनाक्षरगेनाक्षरनाम्ना स्वरूपेण जीवाख्यसूर्यस्थितमहराख्यं स्वरूपमाप्नोति, तेन चाक्षराख्यं स्वरूपमाप्नोति । 'यदक्षरादक्षरमेति युक्तं' इत्यस्य व्याख्यानरूपत्वाच्चैतदवसीयते । पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं रूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वाच्च स्त्रीत्वं पुंस्त्वं च प्रतीयते विष्णोः । न च नपुंसकरूपं भगवतः कुत्रचिदुक्तम् । प्रसिद्धमेव च रूपद्वयम् । अतो नपुंसके वदन्नपि न वदतीति न तद्वदनुषज्यते । नपुंसके प्रमाणाभावादेव लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानित्यपि वदन्निति भवति । 'स्त्रीपुंरूपद्वयं विष्णोर्न तृतीयं कथंचन । साक्षान्नपुंसकस्तस्मान्मुक्तिभागी न तु क्वचित् ॥' इति ब्रह्माण्डे । न च रक्ष इति नपुंसकशब्दमात्रेण रावणादयो नपुंसका भवन्ति ।

भवतीति पदाभावादनकाममार इति भगवन्नामैवेति ज्ञायते । 'ऋष ज्ञान इति ह्यस्माद्धातोः सर्वज्ञ एकराट् । वेदद्रष्टा परम ऋषिर्हयास्यः पुरुषोत्तमः । मन्त्राणां प्रथमो द्रष्टा सर्वेषां यत एव तु । ऋषिणोक्तमिति प्राहुर्मन्त्रोक्तं ब्राह्मणान्यतः । तत्प्रसादाद्धि तपसा पश्चान्मन्त्रान् प्रपेदिरे । ब्रह्माद्या ब्राह्मणं पश्चात्तैर्दृष्टमृषिभिः पृथक् । मन्त्राश्चोपनिषच्चैव नाकृत्वा सुमहत्तपः । प्रथमं यद्धयास्येन दृष्टं केनचिदीक्ष्यते । विना पृथक्तपो दृश्येद्ब्राह्मणं मुनिभिर्यतः । मन्त्राश्चोपनिषच्चैव ब्राह्मणादुत्तमास्ततः । तत्राप्युपनिषच्छ्रेष्ठा युक्तावस्थाऽधिगम्यते ॥ ' इत्यादि प्रमाणविवेके । तेन रथेनाध्यात्मं शरीराख्येनाधिदैवं रथरूपेण । ऋभव इत्यत्र देवानां साधारणं नाम । 'आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि । सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि ॥' इति शब्दनिर्णये । 'निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह । अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनामकः । सम्यग्योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् । देहाख्यस्य रथस्यैव तदा नारायणात्प्रभोः । विविधं वासवत्वात्तु विवस्वन्नामकाच्छुभम् । संसारवारकं ज्ञानं दिवो दुहितृनामकम् । विष्णुतत्त्वापरोक्षाख्यमहनी द्वे च शोभने । ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे । जायन्ते देवतास्त्वेषां भारती वायुरेव च । जीवन्मुक्तेश्च मुक्तेश्च दाता रूपद्वयी प्रभुः । सर्वस्त्रीणामुत्तमत्वाद्द्यौर्नामा श्रीरुदाहृता । दुहिताऽस्या भारती तु नित्याऽहेयस्वरूपतः । अहरित्युच्यते वायुर्ज्ञानात्मत्वात्तथैव च । अधिदैवे रथेऽप्येते विष्णोर्लक्ष्म्यां प्रजज्ञिरे । रथेन तेन देवेशौ विष्णुवायू जगत्पती । आयातमिति देवौ तौ प्रार्थयेद्यज्ञकर्मणि । अन्यथाऽप्यर्थयेदेतौ ज्ञानेच्छुः पुरुषः सदा । जपन्मन्त्रद्वयं नित्यमातेन निमिषस्तथा । रक्षणं वां समीपे स्यान्ममेत्यध्यात्ममेव च । हयास्यत्वाच्चाश्विनौ तावित्याह परमा श्रुतिः । ऐन्द्राग्नेयादिकाश्चैवं सर्वे मन्त्रा हरिं परम् । वदन्ति मुख्यतो नान्यं सर्वनामानमच्युतम् । अथवा वायुदेवस्थं पृथक्संस्थं च केशवम् । मन्त्रो द्विवचनो वक्ति तथा बहुवचःस्वपि ॥ ' इत्याद्यैतरेयसंहितायाम् । सुखं ददत इति सुदिने । विवस्वतो विष्णोः सकाशाद्दिवो दुहिता भारती च जायन्ते । अहनी इति द्विवचनेन द्वित्वे सिद्धेऽप्युभे इति वचनमध्यात्माधिदैवतयोरुभयोरपि वचनार्थम् । न च सूर्यरथोऽत्र वर्ण्यते । न चाहोरात्रे अहनी इत्युच्येते । सूर्यस्याश्विनामाभावात् सप्ताश्वत्वाच्च तद्रथस्य । चतुरश्वत्वं चात्रोच्यते । श्रोत्रे पक्षसी चक्षुषी युक्ते इत्यध्यात्मसंबन्धाच्च । न च रात्रौ सुदिनमिति प्रयोगो दृष्टः । असुदिनस्यापि तत एव जातत्वाद्व्यर्थविशेषणता च । अस्मिन्पक्षे तु लौकिकाहर्व्यावृत्त्यर्थं सुदिने इति युज्यते । जीवन्मुक्तिश्च मुक्तिश्च हि मुख्ये सुदिने । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते' ( बृउ. १।४।१५ ) इति ज्ञानावस्थायां मुक्तौ भोगबाहुल्यकारणत्वात्साऽपि मुक्तिवत्सुदिनम् । न हि मुक्तावाधिक्यार्जनमस्ति । ' न हीयते यत्र गत्वा यत्र गत्वा न वर्धते ' इति वचनात् । अतो ज्ञानोत्पत्तिसमनन्तरमेव मुक्तौ न पुनरार्जनमस्तीति किंचित्कालं ज्ञानित्वेनावस्थानमपि सुदिनमेव । ज्ञानात्पूर्वं तु पतनसंशयादेव न सुदिनम् । न चाश्विरथो वर्ण्यते । न ह्यश्विरथयोगादहनी जायेते । एकरासभयुक्तो हि तद्रथः, ' तद्रासभो नासत्या सहस्रम् ' ( ऋसं. १।११६।२ ) इति वचनात् । न च विवस्वच्छब्दोऽश्विनोर्विद्यते । ' यो देवानां नामधा एक एव ' इति विष्णोः सर्वनामानि प्रसिद्धानि च । ' युजो युक्ता अभि यत्संवहन्ति ' इत्यादिना तस्यैव प्रस्तावाच्च । अतो विष्णुरेव मुख्यतः सर्वनामोक्त इति सिद्धम् । मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीय-
प्रघट्टके तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः

आत्मतः चतुर्लोकानां विश्वपुरुषस्य देवतानां च सृष्टिः

*** आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचन मिषत् । स ईक्षत लोकान्नु सृजा इति ॥ १ ॥**

( १ ) परिसमाप्तं कर्म सहापरब्रह्मविषयविज्ञानेन । सैषा कर्मणो ज्ञानसहितस्य परा गतिरुक्थविज्ञानद्वारेणोपसंहृता । एतत्सत्यं ब्रह्म प्राणाख्यं, एष एको देवः, एतस्यैव प्राणस्य सर्वे देवा विभूतयः, एतस्य प्राणस्याऽऽत्मभावं गच्छन् देवता अप्येति इत्युक्तम् । सोऽयं देवताप्ययलक्षणः परः पुरुषार्थः, एष मोक्षः, स चायं यथोक्तेन ज्ञानकर्मसमुच्चयसाधनेन प्राप्तव्यः, नातः परमस्ति, इत्येके प्रतिपन्नाः, तान्निराचिकीर्षुरुत्तरं केवलात्मज्ञानविधानार्थं आत्मा वा इदमित्याद्याह ।

आत्मेति । आत्मा आप्नोतेरत्तेरततेर्वा परः सर्वज्ञः सर्वशक्तिरशनायादिसर्वसंसारधर्मवर्जितो नित्यशुद्धबुद्धमुक्तस्वभावोऽजरोऽमरोऽमृतोऽभयोऽद्वयो वा इदं यदुक्तं नामरूपकर्मभेदभिन्नं जगत्, आत्मैव एकोऽग्रे जगतः सृष्टेः प्रागासीत् । किं नेदानीं स एवैकः । न । कथं तर्ह्यासीदित्युच्यते—यद्यपीदानीं स एवैकस्तथाऽप्यस्ति विशेषः । प्रागुत्पत्तेरव्याकृतनामरूपभेदमात्मभूतमात्मैकशब्दप्रत्ययगोचरं जगदिदानीं व्याकृतनामरूपभेदत्वादनेकशब्दप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोचरं चेति विशेषः । यथा सलिलात्पृथक्फेननामरूपव्याकरणात्प्राक्सलिलैकशब्दप्रत्ययगोचरमेव फेनं यदा सलिलात्पृथङ्नामरूपभेदेन व्याकृतं भवति, तदा सलिलं फेनं चेत्यनेकशब्दप्रत्ययभाक् सलिलमेवेति चैकशब्दप्रत्ययभाक्च फेनं भवति, तद्वत् । नान्यत्किंचन न किंचिदपि मिषत् निमिषत् व्यापारवदितरद्वा । यथा सांख्यानामनात्मपक्षपाति स्वतन्त्रं प्रधानं, यथा च काणादानामणवः, न तद्वदिहान्यदात्मनः किंचिदपि वस्तु विद्यते । किं तर्हि, आत्मैवैक आसीदित्यभिप्रायः । स सर्वज्ञस्वाभाव्यादात्मा एकः सन् ईक्षत लोकान्नु सृजा इति । ननु प्रागुत्पत्तेरकार्यकरणत्वात्कथमीक्षितवान् । नायं दोषः । सर्वज्ञस्वाभाव्यात् । तथा च मन्त्रवर्णः—'अपाणिपादो जवनो ग्रहीता' इत्यादिः । केनाभिप्रायेणेत्याह—लोकान् अम्भःप्रभृतीन् प्राणिकर्मफलोपभोगस्थानभूतान्नु सृजै सृजे अहमिति ।

शंकर.

( २ ) 'एको नारायणस्त्वासीत्प्रलये रमया सह । नित्याततगुणत्वात्स आत्मेति श्रुतिसूदितः । इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा । अग्र्य एव समस्तेशस्तद्वशत्वाद्रमाऽपि सा । विद्यमानाऽपि नाग्रस्था गुणैरूना ततो यतः । न ब्रह्मा न शिवश्चासीन्नैवान्यच्च मिषत्क्वचित् । सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः । असुप्ताः श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् । अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् । नारायणो न चान्योऽस्ति पूर्णोन्मीलगुणात्मकः । पराधीनेन वित्तेन भुञ्जन्नपि हि भिक्षुकः । वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि । मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथंचन । सर्वदाऽप्येक एवायं स्वतन्त्रो नापरः क्वचित् । कालस्यत्वं वक्तुमस्य प्रलये स्थितिरुच्यते । स ऐच्छद्भगवान्विष्णुः स्रष्टुं लोकाभिमानिनः । लोकाभिधानवद्देवान् जडलोकांश्च शाश्वतः ॥'

---

* लोके बाहुल्येन 'ऐतरेयोपनिषत्' इति प्रसिद्धः षट्खण्डात्मको भाग इत उत्तरमारभ्यते ।

रामानुजमतीयमैतरेयोपनिषद्भाष्यं न लब्धम् ।

(१) **ऐआ.** २।४।१।१; **ब्रशंकर.** १।१।४,५, २।१।१६, ३।३।१६; **भास्कर.** १।१।४, १।४।१४, ३।३।१६,१७ ईक्षत ( ऐक्षत ); **रामानुज.** १।१।१ ( पृ. २०, ५२, ६१ ), १।१।४ ( पृ. १४७ ), १।१।५, ११, २१, २३, १।४।२०, २।१।८, २।१।१५ ( पृ. ४४६ ), २।१।२६, २।४।१, ३।३।१६, ४।४।१७ भास्करवत्; **निंबार्क.** ३।३।१६; **ब्रमध्व.** २।३।६; **श्रीकंठ.** १।४।१४; **श्रीकर.** १।१।१ ( पृ. १९, २६ ), १।१।२ ( पृ. ३२ ), १।१।३ ( पृ. ३७ ), १।१।५ ( पृ. ५३ ), १।१।११, १।१।१३ ( पृ. ६१ ), १।१।२३, १।३।७, १।४।१४, २।१।७, ८, १६, ३५, २।४।१, ३।२।३०, ३।३।१६, ४।४।६, ९, १३, १७; **वल्लभ.** १।१।४, ५ भास्करवत्; **विज्ञान.** १।१।४ (पृ. ९६), १।१।७ (पृ. १४१), ३।३।२; **बलदेव.** १।१।६, १।३।३०, १।४।२३, ३।३।१७.

**स इमांल्लोकानसृजताम्भो मरीचीर्मरमापः। अदोऽम्भः परेण दिवम्। द्यौः प्रतिष्ठा। अन्तरिक्षं मरीचयः। पृथिवी मरः। या अधस्तात्ता आपः॥ २॥**

(१) एवमीक्षित्वा आलोच्य स आत्मा इमांल्लोकानसृजत सृष्टवान्। यथेह बुद्धिमांस्तक्षादिः एवंप्रकारान् प्रासादादीन् सृजे इतीक्षित्वा ईक्षानन्तरं प्रासादादीन् सृजति, तद्वत्। कांल्लोकानसृजतेत्याह—अम्भो मरीचीर्मरमाप इति। आकाशादिक्रमेणाण्डमुत्पाद्य अम्भःप्रभृतींल्लोकानसृजत। तत्राम्भःप्रभृतीन्स्वयमेव व्याचष्टे श्रुतिः—अदस्तदम्भःशब्दवाच्यो लोकः परेण दिवं द्युलोकात्परेण परस्तात्। सोऽम्भःशब्दवाच्यः, अम्भोभरणात्। द्यौः प्रतिष्ठा आश्रयः तस्याम्भसो लोकस्य। द्युलोकादधस्तादन्तरिक्षं यत् तन्मरीचयः। एकोऽप्यनेकस्थानभेदत्वाद्बहुवचनभाक् मरीचय इति। मरीचिभिर्वा रश्मिभिः संबन्धात्। पृथिवी मरः म्रियन्तेऽस्मिन्भूतानीति। या अधस्तात्पृथिव्यास्ता आप उच्यन्ते आप्नोतेर्लोकाः। यद्यपि पञ्चभूतात्मकत्वं लोकानां, तथाप्यब्बाहुल्यात् अब्नामभिरेवाम्भो मरीचीर्मरमाप इत्युच्यन्ते।

शंकर.

(२) 'स लोकेभ्यः पूर्वतनानबाख्यान्महदादिकान्। ब्रह्मशर्वादिकान्सृष्ट्वा जडैः सह जनार्दनः। दिवमाकाशमुर्वीं च ससृजेऽथ द्विसप्तकान्॥' मध्व.

**स ईक्षतेमे नु लोकाः। लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत्॥ ३॥**

(१) सर्वप्राणिकर्मफलोपादानाधिष्ठानभूतान् चतुरो लोकान् सृष्ट्वा स ईश्वरः पुनरेवेक्षत—इमे नु अम्भःप्रभृतयो मया सृष्टा लोकाः परिपालयितृवर्जिताः विनश्येयुः, तस्मादेषां रक्षणार्थं लोकपालान् लोकानां पालयितॄन्नु सृजै सृजेऽहमिति। एवमीक्षित्वा सोऽद्भ्य एव अप्प्रधानेभ्य एव पञ्चभूतेभ्यः, येभ्योऽम्भःप्रभृतीन् सृष्टवान् तेभ्य एवेत्यर्थः, पुरुषं पुरुषाकारं शिरःपाण्यादिमन्तं समुद्धृत्य अद्भ्यः समुपादाय मृत्पिण्डमिव कुलालः पृथिव्याः, अमूर्छयत् मूर्छितवान् संपिण्डितवान् स्वावयवसंयोजनेनेत्यर्थः। शंकर.

(२) 'इति सृष्ट्वा स लोकांस्तु पुनस्तानेव लोकपान्। अण्डान्तः स्रष्टुमैच्छच्च तेषां पूज्यत्वसिद्धये। अब्नामकेभ्यस्तेभ्यश्च पूर्वसृष्टेभ्य एव च। सर्वजीवाधिकत्वात्तु ब्रह्माणं पुरुषाभिधम्। अंशेनोद्धृत्य रुद्राद्यैः सह चैनमयोजयत्। तथैवाचेतनानां च भागानुद्धृत्य पिण्डवत्। चेतनाचेतनं राशिमेकरथं विदधे प्रभुः॥'

मध्व.

**तमभ्यतपत्। तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डम्। मुखाद्वाक्। वाचोऽग्निः। नासिके निरभिद्येताम्। नासिकाभ्यां प्राणः। प्राणाद्वायुः। अक्षिणी निरभिद्येताम्। अक्षीभ्यां चक्षुः। चक्षुष आदित्यः। कर्णौ निरभिद्येताम्। कर्णाभ्यां श्रोत्रम्। श्रोत्राद्दिशः। त्वङ्निरभिद्यत। त्वचो लोमानि। लोमभ्य ओषधिवनस्पतयः। हृदयं निरभिद्यत। हृदयान्मनः। मनसश्चन्द्रमाः। नाभिर्निरभिद्यत। नाभ्या अपानः। अपानान्मृत्युः। शिश्नं निरभिद्यत। शिश्नाद्रेतः। रेतस आपः॥४॥ ॥१॥**

(१) तं पिण्डं पुरुषविधमुद्दिश्याभ्यतपत् तदभिध्यानं संकल्पं कृतवानित्यर्थः। 'यस्य ज्ञानमयं तपः' इत्यादिश्रुतेः। तस्याभितप्तस्य ईश्वरसंकल्पेन तपसा अभितप्तस्य पिण्डस्य मुखं निरभिद्यत मुखाकारं सुषिरमजायत, यथा पक्षिणोऽण्डं निर्भिद्यते, एवम्। तस्मान्निर्भिन्नान्मुखाद्वाक् करणमिन्द्रियं निरवर्तत। तदधिष्ठाताऽग्निस्ततो वाचो लोकपालः। तथा नासिके निरभिद्येताम्। नासिकाभ्यां प्राणः, प्राणाद्वायुरिति सर्वत्राधिष्ठानं करणं देवता च त्रयं क्रमेण निर्भिन्नमिति। अक्षिणी, कर्णौ, त्वक्, हृदयमन्तःकरणाधिष्ठानं, मनः अन्तःकरणं, नाभिः सर्वप्राणबन्धनस्थानम्। अपानसंयुक्तत्वादपान इति पाय्विन्द्रियमुच्यते। तस्मात् तस्याधिष्ठात्री देवता मृत्युः। यथा अन्यत्र तथा शिश्नं निरभिद्यत प्रजननेन्द्रियस्थानम्। इन्द्रियं रेतः, रेतोविसर्गार्थत्वात्सह रेतसोच्यते। रेतस आप इति। शंकर.

---

(१) ऐआ. २।४।१।२; ब्रशंकर. १।४।१४, ३।३।१६; भास्कर. १।४।१४; रामानुज. १।१।५, ११, २३, ४।४।१७; श्रीकर. १।४।१४, ४।४।१७.

(२) ऐआ. २।४।१।३.

(१) ऐआ २।४।१।४; मध्व. अक्षीभ्यां (अक्षिभ्यां).

(२) 'पुनरैच्छज्जगन्नाथस्तस्याङ्गोत्पत्तिमच्युतः । अण्डवन्मुखमस्यासीत्प्रथमं तु शिरोभिधम् । भिन्नमास्यं पुनस्तस्य विष्णोरेवेच्छया प्रभोः । तत्र वाङ्नामकं रूपं वह्नेरासीत्पुरातनम् । तस्यैवाथ द्वितीयं च यदग्निरिति गीयते । तथैव नासिकातोऽभून्मुख्यवायोः सुतो मरुत् । प्राणो वायुरिति द्वेधा चक्षुषोऽभूत्तथा रविः । द्विरूप एव कर्णाभ्यां मित्रधर्माऽऽप्यवित्तपाः । दिग्देवता द्विरूपेण बभूवुः सर्व एव च । हृदयाद्गरुडानन्तशिवचन्द्राः पृथक्पृथक् । मनोबुद्ध्यभिमानास्ते तन्नामानश्च जज्ञिरे । त्वचश्च रोमनामानो वृक्षनामान एव च । द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः । हस्ताभ्यां द्विविधः शक्रः पद्भ्यां तत्सूनुरेव च । यज्ञस्त्वजनि पायोश्च यमो निर्ऋतिरेव च । रेतोऽन्नामा द्विरूपस्तु शिव एव च गुह्यतः । अपानो मृत्युरिति च मुख्यो नाभेश्च मारुतः ॥'

मध्व.

मनुष्यरूपपुरुषः अग्न्यादिदेवतासंवलितः

**[१]ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन् । तमशनापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति ॥ १ ॥**

(१) ता एता अग्न्यादयो देवताः लोकपालत्वेन संकल्प्य सृष्टा ईश्वरेणास्मिन्संसारार्णवे संसारसमुद्रे महति अविद्याकामकर्मप्रभवदुःखोदके तीव्ररोगजरामृत्युमहाग्राहे अनादौ अनन्ते अपारे निरालम्बे विषयेन्द्रियजनितसुखलवलक्षणविश्रामे पञ्चेन्द्रियार्थतृष्णमारुतविक्षोभोत्थितानर्थशतमहोर्मौ महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोद्भूतमहारवे सत्यार्जवदानदयाहिंसाशमदमधृत्यात्मगुणपाथेयपूर्णज्ञानोडुपे सत्सङ्गसर्वत्यागमार्गे मोक्षतीरे एतस्मिन्महत्यर्णवे प्रापतन् पतितवत्यः । तस्मादग्न्यादिदेवताप्ययलक्षणाऽपि या गतिर्व्याख्याता ज्ञानकर्मसमुच्चयानुष्ठानफलभूता, साऽपि नालं संसारदुःखोपशमायेत्ययं विवक्षितोऽर्थोऽत्र । यत एवं तस्मादेवं विदित्वा परं ब्रह्म आत्मा आत्मनः सर्वभूतानां च, यो वक्ष्यमाणविशेषणः प्रकृतश्च जगदुत्पत्तिस्थितिसंहारहेतुत्वेन, सर्वसंसारदुःखोपशमनाय वेदितव्यः । तस्मात् एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यं यदेतत्परब्रह्मात्मज्ञानं, 'नान्यः पन्था विद्यतेऽयनाय' इति मन्त्रवर्णात् । तं स्थानककरणदेवतोत्पत्तिबीजभूतं पुरुषं प्रथमोत्पादितं पिण्डमात्मानमशनायापिपासाभ्यामन्ववार्जत् अनुगमितवान् संयोजितवानित्यर्थः । तस्य कारणभूतस्याशनायादिदोषवत्त्वात्तत्कार्यभूतानामपि देवतानामशनायादिमत्त्वम् । तास्ततोऽशनायापिपासाभ्यां पीड्यमाना एनं पितामहं स्रष्टारमब्रुवन् उक्तवत्यः । आयतनमधिष्ठानं नः अस्मभ्यं प्रजानीहि विधत्स्व, यस्मिन्नायतने प्रतिष्ठिताः समर्थाः सत्योऽन्नमदाम भक्षयाम इति ।

शंकर.

(२) 'एवं रूपद्वयेनापि स्तुवन्तो विष्णुमव्ययम् । दिव्याम्बराः कुण्डलिनः प्राविशन्नुदकार्णवम् । तदाशनापिपासाख्यं द्विरूपं मारुतं पुनः । तस्मिन्देवसमूहे तु विष्णुः प्रावेशयत्प्रभुः । तेऽब्रुवन्देहि नो वासं यत्र चान्नमदामहे ॥'

मध्व.

**[१]ताभ्यो गामानयत् । ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत् । ता अब्रुवन्न वै नोऽयमलमिति ॥ २ ॥**

(१) एवमुक्त ईश्वरस्ताभ्यो देवताभ्यो गां गवाकृतिविशिष्टं पिण्डं ताभ्य एवाद्भ्यः पूर्ववत्पिण्डं समुद्धृत्य मूर्छयित्वा आनयत् दर्शितवान् । ताः पुनर्गवाकृतिं दृष्ट्वाऽब्रुवन् । न वै नोऽस्मदर्थमधिष्ठानायान्नमत्तुमयं पिण्डोऽलं न वै । अलं पर्याप्तः । अत्तुं न योग्य इत्यर्थः । गवि प्रत्याख्याते ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति पूर्ववत् ।

शंकर.

(२) 'गोरूपमेभ्यो ब्रह्माणं ददौ नारायणः प्रभुः । तत्र प्रविश्य ते देवा नालमित्यब्रुवन्पुनः । अश्वरूपं विरिञ्चं च पुनरेवाददात्प्रभुः । तद्रूपेऽपि प्रविश्यैव नालमित्यब्रुवन्पुनः ॥'

मध्व.

**[१]ताभ्यः पुरुषमानयत् । ता अब्रुवन्सुकृतं बतेति । पुरुषो वाव सुकृतम् । ता अब्रवीद्यथायतनं प्रविशतेति ॥ ३ ॥**

---

(१) ऐआ. २।४।२।१; बलदेव. २।१।५.

(१) ऐआ. २।४।२।२.

(१) ऐआ. २।४।२।३.

(१) सर्वप्रत्याख्याने ताभ्यः पुरुषमानयत्स्वयोनिभूतम्। ताः स्वयोनिपुरुषं दृष्ट्वा अखिन्नाः सत्यः सुकृतं शोभनं कृतमिदमधिष्ठानं बतेत्यब्रुवन्। तस्मात्पुरुषो वाव पुरुष एव सुकृतं, सर्वपुण्यकर्महेतुत्वात्। स्वयं वा स्वेनैवाऽऽत्मना स्वमायाभिः कृतत्वात्सुकृतमुच्यते। ता देवता ईश्वरोऽब्रवीदिष्टमासामिदमधिष्ठानमिति मत्वा। सर्वे हि स्वयोनिषु रमन्ते। अतो यथायतनं यस्य यद्वदनादिक्रियायोग्यमायतनं तत्प्रविशतेति।

शंकर.

(२) 'पूर्वसृष्टं पुमाकारं ब्रह्मणोऽदात्पुनर्हरिः। तद्दृष्ट्वैवालमित्यूचुर्विशतेति स चाब्रवीत्॥'

मध्व.

**अग्निर्वाग्भूत्वा मुखं प्राविशत्। वायुः प्राणो भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्। दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्। ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्। चन्द्रमा मनो भूत्वा हृदयं प्राविशत्। मृत्युरपानो भूत्वा नाभिं प्राविशत्। आपो रेतो भूत्वा शिश्नं प्राविशन्॥ ४॥**

(१) तथाऽस्तु इत्यनुज्ञां प्रतिलभ्य ईश्वरस्य नगर्यामिव बलाधिकृतादयः, अग्निर्वागभिमानी वागेव भूत्वा स्वां योनिं मुखं प्राविशत्। तथोक्तार्थमन्यत्। वायुर्नासिके, आदित्योऽक्षिणी, दिशः कर्णौ, ओषधिवनस्पतयस्त्वचं, चन्द्रमा हृदयं, मृत्युर्नाभिं, आपः शिश्नं प्राविशन्। शंकर.

(२) 'ज्योतिराद्यधिष्ठानं तु तदामननात्'—ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति, आहोस्वित् देवताधिष्ठिताः प्रभवन्तीति विचार्यते। तत्र प्राप्तं तावत् यथा स्वकार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति। इत्येवं प्राप्ते इदमुच्यते—ज्योतिराद्यधिष्ठानं त्विति। तुशब्देन पूर्वपक्षो व्यावर्त्यते। ज्योतिरादिभिः अग्न्याद्यभिमानिनीभिर्देवताभिः अधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तते इति प्रतिजानीते। हेतुं च व्याचष्टे—तदामननादिति। तथा ह्यामनन्ति—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादि। अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनोऽधिष्ठातृत्वमङ्गीकृत्योच्यते। न हि देवतासंबन्धं प्रत्याख्याय अग्नेर्वाचि मुखे वा कश्चिद्विशेषसंबन्धो दृश्यते। तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' इत्येवमाद्यपि योजयितव्यम्।

ब्रशंकर. २।४।१४

(३) 'विविशुश्च यथोत्पन्नाः सर्वे देवाश्चतुर्मुखम्'।

मध्व.

(४) अयमर्थः— 'योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः। यस्तत्रोभयविच्छेदः (उभयोराध्यात्मिकाधिदैविकयोर्विच्छेदो द्वैधीभावो यस्मात्स उभयविच्छेदः। —भाष्यप्रकाशः) स स्मृतो ह्याधिभौतिकः, इत्याध्यात्मिकादीनां स्वरूपम्। वागादयश्चाणुरूपा नित्याः। तत्र यदि त्रैविध्यं न कल्प्येत तदा एकस्मिन्नेव शरीरे उपक्षीणं शरीरान्तरे न भवेत्। कल्प्यमाने तु अग्निर्देवतारूपोऽनेकरूपभवनसमर्थो वाग्रूपो भूत्वा सर्वत्र प्रविष्ट इति संगच्छते। ते चाग्न्यादयश्चेतनाः भगवदंशास्तिरोहितानन्दाः सामर्थ्ययुक्ता इति कार्यवशादवगम्यते। वल्लभ. २।४।१४

(५) वाग्भूत्वेति भवनं च प्रवेशेनाविभागः, 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति श्रुत्यनुसारात्। स च प्रवेशो न भेदं विना संभवतीति भावः।

विज्ञान. २।१।५

**तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति। ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति। तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः॥ ५॥ ॥ २॥**

(१) एवं लब्धाधिष्ठानासु देवतासु निरधिष्ठाने सत्यौ अशनायापिपासे तमीश्वरमब्रूतां उक्तवत्यौ आवाभ्यामधिष्ठानमभिप्रजानीहि चिन्तय विधत्स्वेत्यर्थः। स

---

(१) ऐआ. २।४।२।४; ब्रशंकर. २।१।५, २।४।१४, ३।३।४३; भास्कर. २।१।५, २।४।१४; रामानुज. २।१।५; निंबार्क. २।१।५, २।४।१४; श्रीकंठ. २।१।५, २।४।१३; श्रीकर. २।१।५, २।४।१२, वल्लभ. २।१।५, २।४।१४; विज्ञान. २।१।५; बलदेव. २।१।५, २।४।१४.

(१) ऐआ. २।४।२।५.

ईश्वर एवमुक्तस्ते अशनायापिपासे अब्रवीत् । न हि युवयोर्भावरूपत्वाच्चेतनावद्वस्त्वनाश्रित्य अन्नात्तृत्वं संभवति । तस्मादेतास्वेवाग्न्याद्यासु वां युवां देवतासु अध्यात्माधिदेवतासु आभजामि वृत्तिसंविभागेनानुगृह्णामि । एतासु भागिन्यौ यद्देवत्यो यो भागो हविरादिलक्षणः स्यात्तस्यास्तेनैव भागेन भागिन्यौ भागवत्यौ वां करोमीति । सृष्ट्यादावीश्वर एवं व्यदधाद्यस्मात्, तस्मादिदानीमपि यस्यै कस्यै च देवतायै अर्थाय हविर्गृह्यते चरुपुरोडाशादिलक्षणं, भागिन्यावेव भागवत्यावेवास्यां देवतायामशनायापिपासे भवतः । शंकर.

( २ ) ' अशनापिपासामानी तु द्विरूपो मारुतोऽवदत् । कुर्वाशामावयोश्चैव यथा त्वच्छासनानुगौ । नित्यं भवावेति हरिः सर्वत्र प्रविशेत्यमुम् । आह तस्माद्देवतानां सर्वासां भागभुङ्मरुत् । एक एव प्राणनामा नाभिस्थोऽपि स एव तु । अशना पिपासाऽपानश्च मृत्युश्चेति चतुर्विधः । एक एव महान्वायुः सर्वदेवेषु संस्थितः ॥' मध्व.

अन्नसृष्टिः लोकलोकपालार्थं, अपानस्यैवान्नग्रहणसामर्थ्यम्

**स ईक्षत । इमे नु लोकाश्च लोकपालाश्च । अन्नमेभ्यः सृजा इति ॥ सोऽपोऽभ्यतपत् । ताभ्योऽभितप्ताभ्यो मूर्तिरजायत । या वै सा मूर्तिरजायतान्नं वै तत् ॥ तदेनत्सृष्टं पराङत्यजिघांसत् । तद्वाचाऽजिघृक्षत् । तन्नाशक्नोद्वाचा ग्रहीतुम् । स यद्धैनद्वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ॥ १–३ ॥**

( १ ) स एवमीश्वर ईक्षत । कथम् । इमे नु लोकाश्च लोकपालाश्च मया सृष्टा अशनायापिपासाभ्यां च संयोजिताः । अतो नैषां स्थितिरन्नमन्तरेण । तस्मादन्नमेभ्यो लोकपालेभ्यः सृजै सृजे इति । एवं हि लोके ईश्वराणामनुग्रहे निग्रहे च स्वातन्त्र्यं दृष्टं स्वेषु, तद्वन्महेश्वरस्यापि सर्वेश्वरत्वात्सर्वान्प्रति निग्रहे चानुग्रहे च स्वातन्त्र्यमेव । स ईश्वरोऽन्नं सिसृक्षुस्ता एव पूर्वोक्ता अप उद्दिश्याभ्यतपत् । ताभ्योऽभितप्ताभ्य उपादानभूताभ्यो मूर्तिर्घनरूपं धारणसमर्थं चराचरलक्षणमजायत उत्पन्नम् । अन्नं वै तन्मूर्तिरूपं या वै सा मूर्तिरजायत । तदेनदन्नं लोकलोकपालानामर्थेऽभिमुखे सृष्टं तद्यथा मूषकादिर्मार्जारादिगोचरे सन् मम मृत्युरन्नाद इति मत्वा परागञ्चतीति पराङ् सत् अत्तृनतीत्य अजिघांसत् अतिगन्तुमैच्छत् पलायितुं प्रारभतेत्यर्थः । तदन्नाभिप्रायं मत्वा स लोकलोकपालसंघातः कार्यकरणलक्षणः पिण्डः प्रथमजत्वादन्यांश्चान्नादानपश्यन् तदन्नं वाचा वदनव्यापारेण अजिघृक्षत् ग्रहीतुमैच्छत् । तदन्नं नाशक्नोत् न समर्थोऽभवत् वाचा वदनक्रियया ग्रहीतुं उपादातुम् । स प्रथमजः शरीरी यत् यदि हैनद्वाचा अग्रहैष्यत् गृहीतवान् स्यात्, सर्वोऽपि लोकस्तत्कार्यभूतत्वादन्नमभिव्याहृत्य हैवान्नमत्रप्स्यत् तृप्तोऽभविष्यत् । न चैतदस्ति । अतो नाशक्नोद्वाचा ग्रहीतुमित्यवगच्छामः पूर्वजोऽपि । समानमुत्तरम् । शंकर.

( २ ) ' पुनरैच्छत्केशवोऽसावन्नमेभ्यः सृजा इति । अबाख्या देवताः पूर्वं सृष्टा ब्रह्मादिकाः पुनः । ददर्श सुविशालाभ्यां नेत्राभ्यां पुष्करेक्षणः । तद्दर्शनात्तदिच्छातस्तासां देहोऽभवत्पृथक् । सर्वासामपि देहैकदेशेभ्यो मिलितं शुभम् । सर्वैरधिष्ठितं चैव विरिञ्चेन विशेषतः । दिव्यावयवसंपन्नमेकमेव सुलोचनम् । भोग्यभोक्त्रात्मना नास्ति तस्य दुःखं कथंचन । ते हि देवाः स्वयंभोग्याः स्वयंभोक्तार एव च । क्रीडन्ते मोदिनो नित्यं तथाप्यन्नात्मकस्त्वसौ । क्रीडयाऽपाक्रमत्किंचित्तं तदाऽसौ चतुर्मुखः । अत्तुं वागादिभिः सर्वैरैच्छच्चाप्यशकत्तदा । जानन्नपि क्रीडयैव तारतम्यं प्रकाशयन् । एवं चकार ब्रह्मा स काशानं लोककर्तरि । क्षुत्पिपासादयश्चैव देवानां भोगसाधकाः । न तु पीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः ॥ ' मध्व.

**तत्प्राणेनाजिघृक्षत् । तन्नाशक्नोत्प्राणेन ग्रहीतुम् । स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ॥ तच्चक्षुषाऽजिघृक्षत् । तन्नाशक्नोच्चक्षुषा ग्रहीतुम् । स यद्धैनच्चक्षुषाऽग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत् ॥ तच्छ्रोत्रेणाजिघृक्षत् ।**

---

(१) ऐआ. २।४।३।१–३; मध्व. चाऽग्रहैष्य (चाऽग्रहीष्य).

(१) ऐआ. २।४।३।४–१०; मध्व. ग्रहैष्य ( ग्रहीष्य ) सैषो ( स एषो ).

**तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् । स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ॥ तत्त्वचाऽजिघृक्षत् । तन्नाशक्नोत्त्वचा ग्रहीतुम् । स यद्धैनत्त्वचाऽग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ॥ तन्मनसाऽजिघृक्षत् । तन्नाशक्नोन्मनसा ग्रहीतुम् । स यद्धैनन्मनसाऽग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत् ॥ तच्छिश्नेनाजिघृक्षत् । तन्नाशक्नोच्छिश्नेन ग्रहीतुम् । स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् ॥ तदपानेनाजिघृक्षत् । तदावयत् । सैषोऽन्नस्य ग्रहो यद्वायुः । अन्नायुर्वा एष यद्वायुः ॥ ४-१० ॥**

(१) तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेन तेन तेन करणव्यापारेणान्नं ग्रहीतुमशक्नुवन् पश्चादपानेन वायुना मुखच्छिद्रेण तदन्नमजिघृक्षत् । तदावयत् तदन्नमेवं जग्राह अशितवान् । तेन स एषोऽपानवायुरन्नस्य ग्रहः अन्नग्राहक इत्येतत्, यद्वायुः यो वायुः । अन्नायुः अन्नबन्धनः अन्नजीवनो वै प्रसिद्धं स एष यो वायुः । शंकर.

(२) 'अन्नमूर्ति ततो ब्रह्मा प्रधानेनैव वायुना । अपानाख्येनात्तुमैच्छत्तदेवाशकदाशु सः । तस्माल्लोकैक एवासौ सर्वस्यान्नस्य मारुतः । तत्प्रसादात्परेऽश्नन्ति किंचित्किंचिन्न चाखिलम् । आयूरूपोऽखिलानां च देवानां वायुरेव हि । अन्नदेवस्य चाऽऽयुः स तस्माद्देवोत्तमो मरुत् । आयुःशब्दो ज्ञानवाची गतिवाची च यत्ततः । चेष्टामोक्षज्ञानदाता सुराणां मारुतस्ततः । अन्योन्यगुणदातृत्वात्समानौ ब्रह्ममारुतौ । तस्मान्मोक्षे सुखे ज्ञाने विष्णुभक्त्यादिकेष्वपि । सर्वेभ्यश्चाधिकौ तौ हि तयोर्विष्णुः परः सदा ॥' मध्व.

अहमादिष्टस्य आत्मनः शरीरप्रवेशः, तस्यैव परोक्षं नाम इन्द्र इति

**स[१] ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाऽभिव्याहृतं, यदि प्राणेनाभिप्राणितं, यदि चक्षुषा दृष्टं, यदि श्रोत्रेण श्रुतं, यदि त्वचा स्पृष्टं, यदि मनसा ध्यातं, यद्यप्यपानेनाभ्यपानितं, यदि शिश्नेन विसृष्टं, अथ कोऽहमिति ॥ ११ ॥**

(१) ऐआ. २।४।३।११; अशंकर. ३।३।१७.

(१) स एवं लोकलोकपालसंघातस्थितिं अन्ननिमित्तां कृत्वा पुरपौरतत्पालयितृस्थितिसमां स्वामीव ईक्षत कथं नु केन प्रकारेणेति वितर्कयन्निदं मदृते मामन्तरेण पुरस्वामिनं, यदिदं कार्यकरणसंघातकार्यं वक्ष्यमाणं कथं नु खलु मामन्तरेण स्यात्परार्थं सत् । यदि वाचाऽभिव्याहृतमित्यादि केवलमेव वाग्व्यवहरणादि, तन्निरर्थकं न कथंचन भवेद्बलिस्तुत्यादिवत् । पौरबन्द्यादिभिः प्रयुज्यमानं स्वाम्यर्थं सत् तत् स्वामिनमन्तरेण असत्येव स्वामिनि, तद्वत् । तस्मान्मया परेण स्वामिनाऽधिष्ठात्रा कृताकृतफलसाक्षिभूतेन भोक्त्रा भवितव्यं पुरस्येव राज्ञा । यदि नामैतत्संहतकार्यस्य परार्थत्वं परार्थिनं मां चेतनमन्तरेण भवेत्पुरपौरकार्यमिव तत्स्वामिनं, अथ कोऽहं किंस्वरूपः कस्य वा स्वामी । यद्यहं कार्यकरणसंघातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेय राजेव पुरमाविश्याधिकृतपुरुषकृताकृतावेक्षणं, न कश्चिन्मामयं सन्नेवंरूपश्चेत्यधिगच्छेद्विचारयेत् । विपर्यये तु योऽयं वागाद्यभिव्याहृतादीदमिति वेद, स सन् वेदनरूपश्चेत्यधिगन्तव्योऽहं स्यां, यदर्थमिदं संहतानां वागादीनामभिव्याहृतादि, यथा स्तम्भकुड्यादीनां प्रासादादिसंहतानां स्वावयवैरसंहतपरार्थत्वं, तद्वदिति । एवमीक्षित्वाऽतः कतरेण प्रपद्या इति । प्रपदं च मूर्धा चास्य संघातस्य प्रवेशमार्गौ । अनयोः कतरेण मार्गेणेदं कार्यकरणसंघातलक्षणं पुरं प्रपद्ये प्रपद्येयेति । शंकर.

(२) 'देवतानां प्रवेशात्तु पूर्वमेव जनार्दनः । इत्थमैक्षत देवेशो ब्रह्माद्या यदि मां विना । क्रियादिषु समर्थाः स्युर्न मे विष्णवभिधा भवेत् । सर्वचेष्टयितृत्वाच्च विशिष्टबलतस्तथा । विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् । स्वतन्त्रत्वे ततः सर्वे मद्वशा एव नान्यथा । तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुना ॥' मध्व.

**स[१] एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वाः । तदेतन्नान्दनम् । तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति ॥ १२ ॥**

(१) ऐआ. २।४।३।१२; अशंकर. ३।३।१७; अमध्व. १।१।३१.

(१) एवमीक्षित्वा न तावन्मद्भृत्यस्य प्राणस्य मम सर्वार्थाधिकृतस्य प्रवेशमार्गेण प्रपदाभ्यामधः प्रपद्ये। किं तर्हि। पारिशेष्यादस्य मूर्धानं विदार्य प्रपद्ये इति लोक इवेक्षितकारी स स्रष्टा ईश्वरः एतमेव मूर्धसीमानं केशविभागावसानं विदार्य छिद्रं कृत्वा एतया द्वारा मार्गेण इमं लोकं कार्यकरणसंघातं प्रापद्यत प्रविवेश। सेयं हि प्रसिद्धा द्वाः, मूर्ध्नि तैलादिधारणकाले तद्रसादिसंवेदनात्। सैषा विदृतिर्विदारितत्वाद्विदृतिर्नाम प्रसिद्धा द्वाः। इतराणि तु श्रोत्रादिद्वाराणि भृत्यादिस्थानीयसाधारणमार्गत्वान्न समृद्धीनि नाऽऽनन्दहेतूनि। इदं तु द्वारं परमेश्वरस्यैव केवलस्येति तदेतन्नान्दनं नन्दनमेव नान्दनमिति। दैर्घ्यं छान्दसम्। नन्दत्यनेन द्वारेण गत्वा परस्मिन्ब्रह्मणीति। तस्यैवं सृष्ट्वा प्रविष्टस्य जीवेनाऽऽत्मना राज्ञ इव पुरं त्रय आवसथाः, जागरितकाले इन्द्रियस्थानं दक्षिणं चक्षुः, स्वप्नकालेऽन्तर्मनः, सुषुप्तिकाले हृदयाकाश इत्येतत्। वक्ष्यमाणा वा त्रय आवसथाः पितृशरीरं, मातृगर्भाशयः, स्वं च शरीरमिति। त्रयः स्वप्ना जाग्रत्स्वप्नसुषुप्त्याख्याः। ननु जागरितं प्रबोधरूपत्वान्न स्वप्नः। नैवम्। स्वप्न एव। कथम्। परमार्थस्वात्मप्रबोधाभावात् स्वप्नवदसद्वस्तुदर्शनाच्च। अयमेवाऽऽवसथश्चक्षुर्दक्षिणं प्रथमः। मनोऽन्तरं द्वितीयः। हृदयाकाशस्तृतीयः। अयमावसथ इत्युक्तानुकीर्तनमेव। तेषु ह्ययमावसथेषु पर्यायेणाऽऽत्मभावेन वर्तमानोऽविद्यया दीर्घकालं गाढं प्रसुप्तः स्वाभाविक्या न प्रबुध्यते अनेकशतसहस्रानर्थसंनिपातजदुःखमुद्गराभिघातानुभवैरपि। शंकर.

(२) 'इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः। मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः। अग्न्यादयस्ततः पश्चात्प्रविष्टास्तन्नियोजिताः। प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश सः। बिभर्ति देहं तेनैव मूर्धाविष्टेन चेष्टयन्। नारायणो वासुदेव इति द्वेधा व्यवस्थितः। मूर्धाविष्टो वासुदेवस्तस्य चावसथात्रयः। अक्षि कण्ठो हृदित्येवं त एव स्वप्ननामकाः। आप्नोत्यत्र स्वयं विष्णुरतः स्वप्नाः प्रकीर्तिताः। अनिरुद्धादिरूपेण त्रिधा तेषु व्यवस्थितः। दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः। सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थितः। तस्यामेव ब्रह्मनाड्यां स्थितो नारायणः प्रभुः॥' मध्व.

**स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषदिति। स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३॥ १३॥**

(१) स जातः शरीरे प्रविष्टो जीवात्मना भूतानि अभिव्यैख्यत् व्याकरोत्। स कदाचित्परमकारुणिकेन आचार्येण आत्मज्ञानप्रबोधकृच्छब्दिकायां वेदान्तमहावाक्यभेर्यां तत्कर्णमूले ताड्यमानायां एतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरि शयानमात्मानं ब्रह्म बृहत् ततमं तकारेणैकेन लुप्तेन तततमं व्याप्ततमं परिपूर्णमाकाशवत्प्रत्यबुध्यत अपश्यत्। कथम्। इदं ब्रह्म ममाऽऽत्मनः स्वरूपमदर्शं दृष्टवानस्मि। अहो इति विचारणार्था प्लुतिः पूर्वम्।

शंकर.

[ इह अस्मिन् शरीरे अन्यं व्यतिरिक्तमात्मानं वावदिषत् किं इति काक्वा नोक्तवानित्यर्थः। न ज्ञातवान् इत्यपि द्रष्टव्यम्। इतिशब्दो यस्मादित्यर्थे, यस्मादेवं तस्मादभिव्यैख्यदिति। अध्यारोपप्रकरणसमाप्त्यर्थो वा। इदं वाक्यं भाष्यकारैः स्पष्टत्वादुपेक्षितं लेखकदोषात्पतितं वा। —आनन्दगिरि—टीका. ]

(२) 'स एव भगवान् विष्णुः प्रादुर्भावात्मना पुनः। जातो मत्स्यादिरूपेण सर्वभूतेषु चाविशत्। असुराणां निहन्तारं ज्ञानादिगुणदं तथा। चेष्टाप्रदं च भूतेषु न मदन्यं वदन्त्यपि। इति मत्वा जगन्नाथो दैत्यनिग्रहणेच्छया। ज्ञानदानार्थमपि तु प्रादुर्भूतो भुवि प्रभुः। तथा जीवेषु सर्वेषु प्रविष्टः प्रेरणेच्छया। को ह्यन्यस्तमृते विष्णुमेतत्कर्म करिष्यति। स सर्वगुणसंपूर्णं सर्वगं नित्यमव्ययम्। एतदेवस्वरूपं स त्वपश्यदवतारगम्। तस्मात्सर्वावताराश्च सर्वजीवेषु संस्थिताः। प्रादुर्भावाः सर्वगुणैः पूर्णा एव सदा स्थिताः। पश्यन्ति च तथा नित्यं निर्दोषोरुस्वसंविदा॥'

मध्व.

---

(१) ऐआ. २।४।३।१३; अशंकर. ३।३।१७; मध्व. व्यैख्यत्कि ( व्यख्यत्कि ); अमध्व. ५।१।३१.

तस्मादिदन्द्रो नाम । इदन्द्रो ह वै नाम । तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ १४ ॥

इति श्रीमदैतरेयद्वितीयारण्यके चतुर्थोऽध्यायः ॥

(१) यस्मादिदमित्येवं यत्साक्षादपरोक्षाद्ब्रह्म सर्वान्तरमपश्यदपरोक्षेण, तस्मादिदं पश्यतीति इदन्द्रो नाम परमात्मा । इदन्द्रो ह वै नाम प्रसिद्धो लोके ईश्वरः । तमेवमिदन्द्रं सन्तमिन्द्र इति परोक्षेण परोक्षाभिधानेन आचक्षते ब्रह्मविदः संव्यवहारार्थं पूज्यतमत्वात्प्रत्यक्षनामग्रहणभयात् । तथा हि परोक्षप्रियाः परोक्षनामग्रहणप्रिया इव हि एव हि यस्माद्देवाः, किमु सर्वदेवानामपि देवो महेश्वरः । द्विर्वचनं प्रकृताध्यायपरिसमाप्त्यर्थम् ।

* अस्मिंश्चतुर्थेऽध्याये एष वाक्यार्थः— जगदुत्पत्तिस्थितिप्रलयकृदसंसारी सर्वज्ञः सर्वशक्तिः सर्ववित् सर्वमिदं जगत् स्वतोऽन्यत् वस्त्वन्तरमनुपादायैव आकाशादिक्रमेण सृष्ट्वा स्वात्मप्रबोधनार्थं सर्वाणि च प्राणादिमच्छरीराणि स्वयं प्रविवेश, प्रविश्य च स्वमात्मानं यथाभूतं इदं ब्रह्मास्मीति साक्षात्प्रत्यबुध्यत, तस्मात्स एव सर्वशरीरेषु एक एव आत्मा नान्य इति । अन्योऽपि सम आत्मा ब्रह्मास्मीत्येवं विद्यादिति । 'आत्मा वा इदमेक एवाग्र आसीत्' इति, 'ब्रह्म ततमम्' इति च उक्तं अन्यत्र च । सर्वगतस्य सर्वात्मनो वालाग्रमात्रमपि अप्रविष्टं नास्तीति कथं सीमानं विदार्य प्रापद्यत पिपीलिकेव सुषिरम् । ननु अत्यल्पमिदं चोद्यं, बहु चात्र चोदितव्यम् । अकरणः सन् ईक्षिता अनुपादाय किंचित् लोकान् असृजत, अद्भ्यः पुरुषं समुद्धृत्य अमूर्छयत्, तस्याभिध्यानात् मुखादि निर्भिन्नं, मुखादिभ्यश्च अग्न्यादयो लोकपालाः, तेषां च अशनायापिपासादिसंयोजनं, तदायतनप्रार्थनं, तदर्थं गवादिप्रदर्शनं, तेषां यथायतनप्रवेशनं, सृष्टस्यान्नस्य पलायनं, वागादिभिस्तज्जिघृक्षा, एतत्सर्वं सीमाविदारणप्रवेशसममेव । अस्तु तर्हि सर्वमेवेदमनुपपन्नम् । न । अत्र आत्मावबोधार्थमात्रस्य विवक्षितत्वात् सर्वोऽयमर्थवाद इत्यदोषः । मायाविवद्वा महामायावी देवः सर्वज्ञः सर्वशक्तिः सर्वमेतच्चकार, सुखावबोधनप्रतिपत्त्यर्थं लोकवदाख्यायिकादिप्रपञ्चः, इति युक्ततरः पक्षः । न हि सृष्ट्याख्यायिकादिपरिज्ञानात् किंचित्फलमिष्यते । ऐकात्म्यस्वरूपपरिज्ञानात्तु अमृतत्वं फलं सर्वोपनिषत्प्रसिद्धम् । स्मृतिषु च गीताद्यासु 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' इत्यादि । शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयद्वितीयारण्यकभाष्ये चतुर्थोऽध्यायः ॥

* एतदादिर्विस्तृतो ग्रन्थः सर्वेषु पुस्तकेषु पञ्चमाध्यायोपक्रमत्वेन मुद्रितोऽस्ति । अस्माभिस्तु 'अस्मिंश्चतुर्थेऽध्याये' इति निर्देशात् अर्थानुगमाच्च चतुर्थाध्यायशेषत्वमस्य स्वीकृत्य तत्रत्यः कश्चिद्भागोऽत्र संगृहीतः ।

(१) ऐआ. २।४।३।१४.

(२) गुणपूर्णस्वरूपस्य त्वापरोक्ष्येण दर्शनात् । सर्वदैव ह्यसौ विष्णुरिदन्द्रो नामतो मतः । ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते । जानन्ति न स्वतस्तेन नेदन्द्रास्ते प्रकीर्तिताः । रमाऽपि तत्प्रसादेन जानाति किमुतापरे । अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः । रमाजशङ्करेन्द्राद्यास्तेनानिन्द्राः क्रमेण ते । पापैरज्ञाततां देवा मानयन्ति सदात्मनः । हर्षेण तेन विष्णुः स इन्द्र इत्यभिशब्द्यते । नेदन्द्रताऽसुरादीनां ज्ञायेतेति श्रुतिर्हरिम् । इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम् ॥ ' इत्याद्यैतरेयसंहितायाम् ।

* आततगुणत्वादात्मा नारायणः । ब्रह्म पन्थाः सत्यं कर्मेति तस्यैव पञ्चरात्रप्रसिद्धैरेव नामभिरारब्धत्वाच्च । 'मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः । अनिरुद्धतनुश्चैव तत्र ह्यमितचेष्टतः । कर्माभासा जीवसंघाः सत्यं प्रद्युम्ननामकः । संकर्षणो हरिः पन्था ब्रह्मोक्तो वासुदेवकः ॥' इत्यादि नामनिर्णये । 'मत्सीन्द्रमिन्दो पवमान विष्णुम्' इत्यादिश्रुतौ तस्मिन्नेव प्रसिद्धस्येन्द्रशब्दस्यात्र बहुशोऽभ्यासाच्च । अकारस्य च विष्णावेव प्रसिद्धस्यात्राप्यभ्यासात् । 'तस्य यथा कप्यासं

* प्रमाणवचनैर्व्याख्यातस्य चतुर्थाध्यायस्य 'आततगुणत्वात्' इत्यादि स्ववचनैर्व्याख्यानम् ।

ुण्डरीकमेवमक्षिणी' इति सूर्यमण्डले पुण्डरीका-ात्वेन निर्दिष्टस्यात्रापि 'य एष तपति' इत्यादिना ब्हुशोऽभ्यासाच्च । सूर्यो हि 'हिरण्याक्षः ावेता देव आगात्' इति पिङ्गलाक्षः प्रसिद्धः । 'विरू-ाक्षः शिवः सूर्यः सुराचार्यो विनायकः । पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ॥' इति च स्कान्दे । 'यो देवानां नामधा एक एव' 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' 'यमिन्द्रमाहुर्वरुणं यमाहुः' 'चन्द्रसूर्यादयः शब्दा विष्णावेव हि मुख्यतः । उपचारात्तदन्येषां विष्णुनैव कृताः पुरा ॥' इत्यादिना तस्यैव सर्वनामवत्त्वाच्च । 'णकारो बलं षकारः प्राण आत्मा' इत्यादिना अन्तेऽपि विष्णुशब्दव्याख्यानेनोपसंहा-राच्च । 'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् । न वर्तन्ते तदन्यत्र शुङ्गिबेरेऽग्निशब्दवत् ॥' इति च पाद्मे । 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' 'एको नारायण आसीन्न ब्रह्मा नेशानः' 'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्करः' इत्यादिश्रुतिभ्यश्च । अग्रशब्दो गुणाधिक्यवाची । इदं रमाब्रह्मशिवादिकं सर्वं जगदपेक्ष्य आत्मैवाग्रे विष्णुरेवाग्र्यः सर्वगुणैरित्यर्थः । तत्र हेतुस्तदन्यत्किंचिन्न मिषदासीत् । सर्वस्याप्युन्मेषणं नासीदित्यर्थः । स्वत उन्मेषणं कस्यापि नास्ति । अस्ति-शब्दवदासीच्छब्दोऽपि सर्वकालसाधारणः । भगवत्प्रसादा-देव सर्वदा सर्वे किंचिदुन्मिषति । स्वातन्त्र्येण पूर्णोन्मेषो विष्णुरेव । 'उन्मेषो गुणसंपूर्तेरुद्रिक्तानुभवः स्मृतः । तदेव मिषणं नाम सद्रूपं मिनुते यतः । मिषच्च नान्य-द्विष्णोर्हि किमुतोन्मिषदिष्यते । उच्चैर्मिषन्हि भगवा-न्सर्वदैव जनार्दनः ॥' इति च सत्तत्त्वे । 'नास्ति नारा-यणसमं न भूतं न भविष्यति' इति च भारते । सर्व-जीवानां रमायाश्च प्रलयेऽपि विद्यमानत्वादेव नाग्र इति कालापेक्षया । तदधीनमिषत्वादन्येषामग्र्यः स एवेत्याशयः । तदधीनत्वमेव तेषां सृष्ट्यादिना दर्शयति । स्थूलशरीरस्य पूर्वाभावस्तत एवार्थतः सिध्यति । 'प्रल-येऽप्यखिलं देवी रमा विष्णुप्रसादतः । जानाति नित्य-ज्ञानेन मुक्ता ध्यानस्थिता लये ॥' इति च सत्तत्त्वे । ब्रह्मा-दीनां शरीरान्तरस्यापि प्रलयेऽनुक्तेरेवाभावः सिध्यति । 'आत्मा ब्रह्माऽग्र इत्यादि गुणाग्र्यत्वं हरेर्वदेत् । कालज्यैष्ठ्यं न यस्मात्तत्सृष्ट्युक्तेरेव सिध्यति ॥' इति वाक्यनिर्णये । गुणाग्र्यतायामेव कालज्यैष्ठ्यस्या-प्यन्तर्भावाच्च । अं विष्णुं बिभर्तीत्यम्भो विष्णुलोकः दिवः परे महरादयश्च । दिव्यपि भगवान् प्रतितिष्ठतीति प्रतिष्ठा । तेषु सर्वेषु प्रत्यक्षतश्चरति विष्णुस्तस्मादम्भ इत्युच्यते । दिवः परे द्यौश्चाम्भोनामका इत्यर्थः । सूर्यमरीचीनां तत्र विशेषेण विततत्वादन्तरिक्षं मरीचयः, मरीचीनामयनात् । पृथिव्यां क्षिप्रं मरन्तीति पृथिवी मरः । 'भूतेभ्योऽनन्तरं सृष्ट्वा विष्णुः सुरान् पुरा प्रभुः । लोकभेदांश्च चक्रेऽत्र पश्चाद्ब्रह्मा विशेषतः । सम्यक्चकार लोकांस्तांल्लोककर्ता ततः स च ॥' इति ब्रह्मवैवर्ते । या अधस्तात्पूर्वमेव सृष्टा देवतास्ता आप इत्युच्यन्ते । 'आप इत्यापः' इति पूर्वं भगवदङ्गसृष्टानामेवाप्-शब्देनोक्तेः । 'अयं पितैते पुत्राः' इति च । 'अहं मां देवेभ्यो वेद ओमदेवान्वेद' इति च । 'ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ । शिवस्तद्दयिता शक्रकामौ तद्दयितादयः । सर्वे सुराः क्रमेणैव विष्णोर्जाता अबा-ख्यकाः । ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः । हीनाः शतगुणेनैव क्रमेणानेन ते मताः । तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च । विशेषतस्तु मुक्तानां सर्व-संसारबन्धनात् । क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभो-गिनाम् । न विशेषो ब्रह्मवाय्वोरधिकाराविभेदतः । न शेषशिवयोश्चैव तत्पत्नीनां च सर्वशः । सुपर्णशेषयोश्चैव साम्यं सर्वगुणेष्वपि । साम्यमेवैतयोः पत्न्योः साम्यं शक्रमनोजयोः । एते तु महदादीनां सर्वेऽपि ह्यभिमानिनः । पूर्वस्य प्रतिबिम्बश्च चरमस्तत्सुतस्तथा । तद्वशाश्चाखिला विष्णोर्न विष्णुः कस्यचिद्वशे । महदादिमानिनश्चैते जातास्तैः सह सर्वशः । एते लोका इति प्रोक्ता लोकानाम-भिमानिनः । त एव लोकपालाश्च यदा पश्चात्प्रज-ज्ञिरे । पश्चाज्जातैर्हि रूपैस्तैर्लोकस्थान् पालयन्त्यलम् ॥' इत्यादि तत्त्वसारे । अमूर्छयत् मूर्तमकरोत् । अग्निर्वाग्भू-त्वेत्यादिना पश्चादैक्यप्रतीतेरेकस्यैव रूपद्वयं तदिति प्रतीयते । प्रजानीहि प्रकर्षेणानुजानीहि । अन्नदेवता च सर्वदेवतायुक्तो विरिञ्च एव । ग्रसनं चैतस्मिन्प्रवेश एव, न तु पीडा तस्य । एक एव हि ब्रह्मा भोक्तृभोज्यत्वेन स्थितो भोज्यरूपेणैकीभूयातितरां मुमोदेत्यर्थः । देवानामु-

पद्रवाभावाद्भोक्तृत्वशक्तियोजनमेवाशनापिपासाभ्यामन्ववार्जनम् । वायुरेव च भोक्तृत्वशक्तिरूपः । यदि वागादीनामेवाभिव्याहरणादिशक्तिः स्यान्मां विना, तर्हि विष्णुत्वं न मम स्यात् । तस्मात्कोऽहं भवानीत्याक्षेपः । विशेषेण प्राणयति सर्वान्सर्वेभ्यो विशिष्टबलश्चेति हि विष्णुः । 'णकारो बलं षकारः प्राण आत्मा' इति व्याख्यानात् । तस्मान्मत्प्रेरिता एवैते अभिव्याहारादिशक्ता इत्यभिप्रायः । पूर्णानन्दस्वरूपत्वान्नन्दनो भगवान् । प्रादुर्भावरूपेण जातोऽपि भगवान् सर्वभूतान्यभितः सर्वकालेषु विशेषेण पश्यत्येव । इह भूतेषु मत्तोऽन्यं प्रवर्तकं वदेत् किमित्याक्षेपः । अहमेव स्वतन्त्रः परिपूर्णगुण इति कृष्णराघवादिसर्वावताररूपोऽपि सर्वदाऽनुभवत्येव । ' नायं दशरथाज्जातो न चापि वसुदेवतः। क्वास्याज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभोः । प्रादुर्भूतश्चिदानन्दशरीरे राघवः स्वयम् । स्तम्भाद्वा नरदेहाद्वा नैवास्य प्राकृती तनुः । दैत्यानां मोहनार्थाय सोऽज्ञानाद्यं प्रकाशयेत् । पूर्णचित्सुखरूपोऽपि सदा सर्वावतारगः ।।' इत्यादि स्कान्दे । एतमेव पुरुषं व्यासकृष्णकपिलराघवादिरूपं ततममपश्यत् । ततमं तततमं परिपूर्णतमं ब्रह्मापश्यत् इदं मे रूपमदर्शमेवाहमिति । रङ्गस्त्ववधारणे । 'रङ्गोऽवधारणे चैव संवादे च प्रयुज्यते ' इति पदविवेके । अपश्यदित्यत्र नातीतकालत्वं विवक्षितं, अभिव्यैख्यदित्यभिशब्दस्यानुषङ्गात् । अपश्यत्पश्यतीति चैककालसंबन्धं विना वक्तुमशक्यत्वात्तथा प्रयोगः । ' प्रयोग एककालीनः सर्वकालेऽनुषज्यते । ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ॥ ' इत्यादि सत्तत्त्वे । परोक्षप्रिया इत्येव सुराणां सम्यग्दर्शनेन पतनं देवानां प्रियं, तथाप्यपरोक्षदर्शिन्येव प्रीतिं कुर्वन्तीति इवशब्दः । मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्मद्दैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः

आत्मनो जन्मत्रयम्

**पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतः । तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतमात्मन्येवाऽऽत्मानं बिभर्ति । तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति । तदस्य प्रथमं जन्म ॥ १ ॥**

( १ ) यावदयमेवं यथोक्तमिममात्मानं न वेत्ति, तावदयं बाह्यानित्यदृष्टिलक्षणमुपाधिमात्मत्वेनोपेत्य अविद्यया उपाधिधर्मानात्मनो मन्यमानो ब्रह्मादिस्तम्बपर्यन्तेषु देवतिर्यङ्नरस्थानेषु पुनःपुनरावर्तमानः अविद्याकामकर्मवशात्संसरति । स एवं संसरन् उपात्तदेहेन्द्रियसंघातं त्यजति । त्यक्त्वा अन्यमुपादत्ते । पुनःपुनरेवमेव नदीस्रोतोवज्जन्ममरणप्रबन्धाविच्छेदेन वर्तमानः काभिरवस्थाभिर्वर्तते इत्येतमर्थं दर्शयन्ती आह श्रुतिर्वैराग्यहेतोः— अयमेवाविद्याकामकर्माभिमानवान्यज्ञादिकर्म कृत्वा अस्माल्लोकाद्धूमादिक्रमेण चन्द्रमसं प्राप्य क्षीणकर्मा वृष्ट्यादिक्रमेणेमं लोकं प्राप्य अन्नभूतः पुरुषाग्नौ हुतः तस्मिन्पुरुषे ह वा अयं संसारी रसादिक्रमेणाऽऽदितः प्रथमतो रेतोरूपेण गर्भो भवतीत्येतदाह—यदेतत्पुरुषे रेतः तेन रूपेणेति। तच्चैतद्रेतोऽन्नमयस्य पिण्डस्य सर्वेभ्योऽङ्गेभ्यः अवयवेभ्यः रसादिलक्षणेभ्यः तेजः साररूपं शरीरस्य संभूतं परिनिष्पन्नं तत्पुरुषस्य आत्मभूतत्वादात्मा, तमात्मानं रेतोरूपेण गर्भीभूतमात्मन्येव स्वशरीरे एवाऽऽत्मानं बिभर्ति धारयति । तद्रेतो यदा यस्मिन्काले भार्या ऋतुमती, तस्यां योषाग्नौ स्त्रियां सिञ्चत्युपगच्छन् । अथ तदा एनत् एतद्रेतः आत्मनो गर्भभूतं जनयति पिता । तदस्य पुरुषस्य स्थानान्निर्गमनं रेतःसेककाले रेतोरूपेण अस्य संसारिणः प्रथमं जन्म प्रथमावस्थाभिव्यक्तिः । तदेतदुक्तं पुरस्तात् ' असावात्माऽमुमात्मानम् ' इत्यादिना । शंकर.

( २ ) ' अयं नारायणो देवः पुरुषे प्रथमं विशेत् । अन्नस्थोऽन्नेन सहितस्तस्मिन्रेतस्त्वमागते । तस्मिन् स्थितं स्वरूपं स पुरुषस्थो बिभर्त्यजः । तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः । स्त्रियां सिञ्चति तस्यैव

---

(१) ऐआ. २।५।१।१.

स्थानान्तरगतेः प्रभोः । प्रथमं जन्म विष्णोस्तु— ’ ।

मध्व.

**तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा। तस्मादेनां न हिनस्ति । साऽस्यैतमात्मानमत्र गतं भावयति ॥ २ ॥**

( १ ) तद्रेतो यस्यां स्त्रियां सिक्तं सत् तस्या आत्मभूयं आत्माव्यतिरेकतां यथा पितुः, एवं गच्छति प्राप्नोति यथा स्वमङ्गं स्तनादि, तथा तद्वदेव । तस्माद्धेतोरेनां मातरं स गर्भो न हिनस्ति पिटकादिवत् । यस्मात्स्तनादिस्वाङ्गवदात्मभूयं गतं, तस्मान्न हिनस्ति न बाधते इत्यर्थः । सा अन्तर्वत्नी एतमस्य भर्तुरात्मानं अत्र आत्मन उदरे गतं प्रविष्टं बुद्ध्वा भावयति वर्धयति परिपालयति गर्भविरुद्धाशनादिपरिहारं अनुकूलाशनाद्युपयोगं च कुर्वती । शंकर.

( २ ) ‘ — स तस्या अङ्गवत्प्रभुः । नैनां हिनस्त्यानुकूल्यात्सा पुत्रं भावयत्यथ । पुत्रस्य भावना सैव तद्गत्वाद्धरिभावना ॥ ’ मध्व.

**सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति । सोऽग्र एव कुमारं जन्मनोऽग्रेऽधि भावयति । स यत्कुमारं जन्मनोऽग्रेऽधि भावयत्यात्मानमेव तद्भावयत्येषां लोकानां संतत्यै । एवं संतता हीमे लोकाः । तदस्य द्वितीयं जन्म ॥ ३ ॥**

( १ ) सा भावयित्री वर्धयित्री भर्तुरात्मनो गर्भभूतस्य भावयितव्या रक्षयितव्या च भर्त्रा भवति । न ह्युपकारप्रत्युपकारमन्तरेण लोके कस्यचित्केनचित्संबन्ध उपपद्यते । तं गर्भं स्त्री यथोक्तेन गर्भधारणविधानेन बिभर्ति धारयति । अग्रे प्राग्जन्मनः स पिता अग्रे एव पूर्वमेव जातमात्रं जन्मनोऽधि ऊर्ध्वं जन्मनः जातं कुमारं जातकर्मादिना पिता भावयति । स पिता यत् यस्मात्कुमारं जन्मनोऽधि ऊर्ध्वं अग्रे जातमात्रमेव जातकर्मादिना यद्भावयति, तदात्मानमेव भावयति । पितुरात्मैव हि पुत्ररूपेण जायते । तथा ह्युक्तं — ‘ पतिर्जायां प्रविशति ’ इत्यादि । तत्किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयतीति । उच्यते — एषां लोकानां संतत्यै अविच्छेदायेत्यर्थः । विच्छिद्येरन् हीमे लोकाः पुत्रोत्पादनादि यदि न कुर्युः केचन । एवं पुत्रोत्पादनादिकर्माविच्छेदेनैव संतताः प्रबन्धरूपेण वर्तन्ते हि यस्मादिमे लोकाः, तस्मात्तदविच्छेदाय तत्कर्तव्यं, न मोक्षायेत्यर्थः । तदस्य संसारिणः कुमाररूपेण मातुरुदरात् यत् निर्गमनं, तद्रेतोरूपापेक्षया द्वितीयं जन्म द्वितीयावस्थाभिव्यक्तिः ।

शंकर.

(२) ‘ संभावितव्या सा चैव भर्त्रा पुत्रश्च सादरम् । संभावनं कुमारस्य जानतः केशवे भवेत् । तस्येत्यर्पणमात्रेण पूजितो हि भवेद्धरिः’ । पुत्रस्थस्य हरेः पूजां कुर्वतः पृथिवीस्थितिः । स्वर्गस्थस्यापि भवति पुत्रपुण्यं यतोऽखिलम् । अत्यल्पपुण्यभाक्स स्यान्नार्चयेत्केशवं यदि । पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि ॥ ’ मध्व.

**[१] सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म ॥ ४ ॥**

( १ ) अस्य पितुः सोऽयं पुत्रात्मा पुण्येभ्यः शास्त्रोक्तेभ्यः कर्मभ्यः कर्मनिष्पादनार्थं प्रतिधीयते पितुः स्थाने पित्रा यत्कर्तव्यं तत्करणाय प्रतिनिधीयते इत्यर्थः । तथा च संप्रत्तिविद्यायां वाजसनेयके पित्राऽनुशिष्टः ‘ अहं ब्रह्माहं यज्ञः ’ इत्यादि प्रतिपद्यते इति । अथ अनन्तरं पुत्रे निवेश्याऽऽत्मनो भारं अस्य पुत्रस्येतरोऽयं यः पित्रात्मा कृतकृत्यः कर्तव्याहणत्रयाद्विमुक्तः कृतकर्तव्य इत्यर्थः, वयोगतो गतवया जीर्णः सन् प्रैति म्रियते । स इतोऽस्मात्प्रयन्नेव शरीरं परित्यजन्नेव तृणजलूकावद्देहान्तरमुपाददानः कर्मचितं, पुनर्जायते । तदस्य मृत्वा प्रतिपत्तव्यं यत् तत्तृतीयं जन्म । ननु संसरतः पितुः सकाशाद्रेतोरूपेण प्रथमं जन्म, तस्यैव कुमाररूपेण मातुर्द्वितीयं जन्मोक्तं, तस्यैव तृतीये जन्मनि वक्तव्ये प्रेतस्य पितुर्यज्जन्म तत्तृतीयमिति कथमुच्यते । नैष दोषः, पितापुत्रयोरैकात्म्यस्य विवक्षितत्वात् । सोऽपि पुत्रः स्वपुत्रे भारं निधाय इतः प्रयन्नेव पुनर्जायते यथा

(१) ऐआ. २।५।१।२.
(२) ऐआ. २।५।१।३.

(१) ऐआ. २।५।१।४.

पिता । तदन्यत्रोक्तमितरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः, पितापुत्रयोरेकात्मकत्वात् । शंकर.

(२) 'एतद्रूपं निधायैव जीवार्थे धर्मकर्तवे । पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः । पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः ॥' मध्व.

**तदुक्तमृषिणा— गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति । गर्भ एवैतच्छयानो वामदेव एवमुवाच ॥ ५ ॥**

एवं संसरन् अवस्थाभिव्यक्तित्रयेण जन्ममरणप्रबन्धारूढः सर्वो लोकः संसारसमुद्रे निपतितः कथंचिद्यथाश्रुत्युक्तमात्मानं विजानाति यस्यां कस्यांचिदवस्थायां, तदैव मुक्तसर्वसंसारबन्धनः कृतकृत्यो भवतीत्येतद्वस्तु, तत् ऋषिणा मन्त्रेणाप्युक्तमित्याह—गर्भे नु मातुर्गर्भाशये एव सन् । नु इति वितर्के । अनेकजन्मान्तरभावनापरिपाकवशादेषां देवानां वागग्न्यादीनां जनिमानि जन्मानि विश्वा विश्वानि सर्वाणि अन्ववेदमहं अहो अनुबुद्धवानस्मीत्यर्थः । शतं अनेका बह्व्यो मा मां पुर आयसीः आयस्यः लोहमय्य इव अभेद्यानि शरीराणीत्यभिप्रायः, अरक्षन् रक्षितवत्यः । संसारपाशनिर्गमनादधोऽधः श्येन इव जालं भित्त्वा जवसा आत्मज्ञानकृतसामर्थ्येन निरदीयं निर्गतोऽस्मि । अहो गर्भे एव शयानो वामदेव ऋषिरेवमुवाचैतत् । शंकर.

**स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ ६ ॥ ॥ १ ॥**

**इति श्रीमदैतरेयद्वितीयारण्यके पञ्चमोऽध्यायः ॥**

(१) स वामदेव ऋषिर्यथोक्तमात्मानमेवं विद्वान् अस्माच्छरीरभेदात् शरीरस्य अविद्यापरिकल्पितस्य आयसवदनिर्भेद्यस्य जननमरणाद्यनेकानर्थशताविष्टशरीरप्रबन्धनस्य परात्मज्ञानामृतोपयोगजनितवीर्यकृतभेदात् शरीरोत्पत्तिबीजाविद्यानिमित्तोपमर्दहेतोः शरीरविनाशादित्यर्थः । ऊर्ध्वः परमात्मभूतः सन् अधोभावात्संसारादुत्क्रम्य ज्ञानावद्योतितामलसर्वात्मभावमापन्नः सन् अमुष्मिन्यथोक्ते अजरेऽमरेऽमृतेऽभये सर्वज्ञेऽपूर्वेऽनपरेऽनन्तेऽबाह्ये प्रज्ञानामृतैकरसे स्वर्गे लोके स्वस्मिन्नात्मनि स्वे स्वरूपे अमृतः समभवत् आत्मज्ञानेन पूर्वमाप्तकामतया जीवन्नेव सर्वान्कामानाप्त्वेत्यर्थः । द्विर्वचनं सफलस्य सोदाहरणस्याऽऽत्मज्ञानस्य परिसमाप्तिप्रदर्शनार्थम् । शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयद्वितीयारण्यकभाष्ये पञ्चमोऽध्यायः ॥

(२) 'अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम् । सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम् । नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम् । यो वेद देहबन्धात्स विमुक्तो नित्यमुत्तमान् । भोगान् भुङ्क्ते यथायोग्यमिति वेदानुशासनम् ॥' इत्यैतरेयसंहितायाम् ।

नात्र जीवोत्पत्तिमात्रमुच्यते । न हि जीवोत्पत्तिमात्रपरिज्ञानादमृतत्वं भवति । ज्ञातमेव सर्वैः पितापुत्रसंबन्धमात्रं पश्वादिभिरपि । 'गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा' इत्युक्तार्थे उदाहृतमन्त्रे देवजन्मकथनाच्च । विष्णुर्हि परमो देवः । तेनैव सह सर्वेऽपि देवा जीवदेहजनने जायन्ते इव । शरीरप्राप्तिरेव हि जन्मान्येषामपि । अयमेव विशेषो देवानां दुःखाभोगः स्वातन्त्र्यं च विष्णोः । 'आत्मन्येवात्मानं बिभर्ति' 'आत्मानमेव तद्भावयति' इत्याद्यात्मशब्दश्च मुख्यतो विष्णावेव युज्यते । 'णकारो बलं षकारः प्राण आत्मा' इति विष्णुशब्दार्थैकदेशवाचित्वाच्चात्मशब्दस्य । 'एतया द्वारा प्रापद्यत' इति तस्यैव शरीरप्रवेशस्य प्रस्तुतत्वाच्च । जीवशरीरं परित्यज्यान्यत्र गमनमात्रं विष्णोरप्यस्तीति प्रतीत्युक्तेऽप्यविरोधः । कृष्णराघवादिस्वरूपमेव ह्यसौ न परित्यजति । 'कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहवदेव च । लोकानां दर्शयामास स्वरूपसदृशाकृतिम् । येन रूपेण कंसादीञ्जघ्ने तद्रूपमेव हि । पूज्यतेऽद्यापि शर्वाद्यैर्निर्मितान्या शवाकृतिः । स्वर्गारोहणकाले तु जनास्तेनैव मोहिताः । यत्तद्रूपं निजं विष्णोर्दृष्टं सर्वजनैर्भुवि ।

(१) ऐआ. २।५।१।५.
(२) ऐआ. २।५।१।६; भास्कर. ४।३।१३.

अद्यापि तद्देवलोके पूज्यते सर्वदैवतैः ॥' इत्यादि स्कान्दे। 'प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम्। आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनम् ॥' इति च भागवते। 'प्रेतां यज्ञस्य शंभुवा' इत्यादिवत्प्रकृष्टगतिवाच्येवायं शब्दः। प्रकृष्टगतित्वादेव च मरणेऽपि प्रयुज्यते। एषामवेदमहमित्यत्रापि जीवभेद एवोक्तः। अन्यथा मम जनिमानीत्येवोच्येत। व्यर्थता चैषामित्यादिविशेषणानाम्। अवेदमित्यनेनैव स्वस्य सिद्धत्वात् अहमित्यपि अहेयत्वेनेति क्रियाविशेषणम्। जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामित्यर्थः। तस्मादहं मनुरित्यादावप्यहेयगुणं भगवन्तमेवाहंशब्दो वक्ति। सर्वान्तरत्वात्तस्मिन्नेवाभवमित्युत्तमपुरुषशब्दोऽपि सर्वो वर्तते। 'अहेयत्वादहं विष्णुः स तु सर्वान्तरत्वतः। अस्म्यस्मीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः ॥' इति ब्रह्मवैवर्ते। न च मूढव्यवहार एव वेदनिर्णयाय भवति, किंतु सर्वेषामनुभवो युक्तयश्च वाक्यान्तरं च निर्णयकारणम्। तस्मात्सर्वजीवादिभ्योऽन्यः सर्वोत्तमो विष्णुरेवात्रोक्तः। 'न वेदेषु पदं किंचिद्वर्णो वा व्यर्थ इष्यते। यथायोग्यं चार्थभेद ऊह्यः सर्वत्र वेदिभिः ॥' इति शब्दनिर्णये। 'शब्दा रेतोऽन्नमित्याद्या अपि तत्र गतं हरिम्। वदन्त्यविष्णुवाची हि न शब्दः क्वचिदिष्यते ॥' इति च। भावयति संभावयति। सोऽग्र एव सोऽग्न्यो विष्णुरेव। पुत्रसंभावनमपि तत्रस्थं विष्णुं संभावयामीति तत्तस्यैव भवति। एवं भावयतामेवैष पन्था उरुगाय इत्याद्यपि। 'तं पश्यन्ति पशवः' इत्याद्यपि दिव्यपश्वादीनामेव। अन्येषां स्वभावप्रवृत्तिः। ता एव देवताः शतं पुर आयसीर्जानिन्यो विशेषतः। अय पय गताविति धातोः। मानुषानपेक्ष्य पूर्णत्वात्पुरः। विष्णुर्मुख्यत एव पूर्णः। न च शरीरैर्जीवो रक्षितः। मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः। शं अस्य विद्यते इति शी विष्णुः, पूर्णानन्दत्वात्। स एव ज्ञानरूपत्वात् यश्च इति श्यः। सोऽस्य जीवस्य इन इति श्येनः। विष्णुं स्वामिनं ज्ञात्वेत्यर्थः। निरदीयं निष्क्रम्यातीतोऽस्मि गर्भवासम्। स्वरानन्दो विष्णुरत्र ग इति स्वर्गलोको विष्णुलोकः। अमृतः सन् सर्वान्कामानाप्त्वा तानेव सर्वान्कामान्समभवत् अनुभवति। अपेक्षितवस्तुस्वीकार आप्तिः। संभवो भोगः। 'तां समभवत्ततो मनुष्या अजायन्त' इत्यादिवत्। मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः। मुख्य एव चार्थः स्वीकार्यः। अमुक्तानां विष्णुलोकगानामपि न सर्वकामावाप्तिः, जयविजयादीनामप्रियदर्शनात्। अतोऽमृतः सन् सर्वान्कामानाप्त्वेत्यर्थः। 'मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेप्सतः। सर्वानपि निरातङ्कः सर्वदा च हरेर्वशः ॥' इति सत्तत्त्वे। मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः

आत्मा विश्वस्वरूपो विज्ञानं ब्रह्म

**'कोऽयमात्मेति वयमुपास्महे। कतरः स आत्मा ॥ १ ॥**

(१) ब्रह्मविद्यासाधनकृतसर्वात्मभावफलावाप्तिं वामदेवाद्याचार्यपरम्परया श्रुत्या अवद्योत्यमानां ब्रह्मवित्परिषदि अत्यन्तप्रसिद्धामुपलभमाना मुमुक्षवो ब्राह्मणा अधुनातना ब्रह्म जिज्ञासवोऽनित्यात्साध्यसाधनलक्षणात्संसारादाजीवभावाद्व्याविवृत्सवो विचारयन्तोऽन्योन्यं पृच्छन्ति—कोऽयमात्मेति। कथं, यमात्मानं अयमात्मेति साक्षाद्वयमुपास्महे कः स आत्मेति। यं चाऽऽत्मानं अयमात्मेति साक्षादुपासीनो वामदेवोऽमृतः समभवत्, तमेव वयमप्युपास्महे, को नु खलु स आत्मेति। एवं जिज्ञासापूर्वमन्योन्यं पृच्छतां अतिक्रान्तविशेषविषयश्रुतिसंस्कारजनिता स्मृतिरजायत—'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं' 'स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत' एतमेव पुरुषं, अत्र द्वे ब्रह्मणी इतरेतरप्रातिकूल्येन प्रतिपन्ने इति। ते चास्य पिण्डस्य आत्मभूते। तयोरन्यतर आत्मा उपास्यो भवितुमर्हति। योऽत्रोपास्यः कः स आत्मेति विशेषनिर्धारणार्थं पुनरन्योन्यं पप्रच्छुः विचारयन्तः। शंकर.

(१) ऐआ. २।६।१।१.

( २ ) 'अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः। इत्यपृच्छद्रमा देवी महिदासं जनार्दनम्। आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति । उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः ॥'

मध्व.

[१]येन वा पश्यति, येन वा शृणोति, येन वा गन्धानाजिघ्रति, येन वा वाचं व्याकरोति, येन वा स्वादु चास्वादु च विजानाति । यदेतद्धृदयं मनश्चैतत् । संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ॥ २ ॥

( १ ) पुनस्तेषां विचारयतां विशेषविचारणास्पदविषया मतिरभूत् । कथम्। द्वे वस्तुनी अस्मिन् पिण्डे उपलभ्येते, अनेकभेदभिन्नेन करणेन येनोपलभते, यश्चैक उपलभते, करणान्तरोपलब्धविषयस्मृतिप्रतिसंधानात् । तत्र न तावद्येनोपलभते स आत्मा भवितुमर्हति । केन पुनरुपलभते इति । उच्यते— येन वा चक्षुर्भूतेन रूपं पश्यति, येन वा शृणोति श्रोत्रभूतेन शब्दं, येन वा घ्राणभूतेन गन्धानाजिघ्रति, येन वा वाक्करणभूतेन वाचं नामात्मिकां व्याकरोति गौरश्व इत्येवमाद्यां साध्वसाध्विति च, येन वा जिह्वाभूतेन स्वादु चास्वादु च विजानातीति । किं पुनस्तदेकमनेकधा भिन्नं करणमिति, उच्यते—यदुक्तं पुरस्तात् 'प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसा सृष्टा आपश्च वरुणश्च हृदयान्मनो मनसश्चन्द्रमाः', तदेवैतद्धृदयं मनश्चैकमेतदनेकधा । एतेनान्तःकरणेनैकेन चक्षुर्भूतेन रूपं पश्यति, श्रोत्रभूतेन शृणोति, घ्राणभूतेन जिघ्रति, वाग्भूतेन वदति, जिह्वाभूतेन रसयति, स्वेनैव विकल्पनारूपेण मनसा विकल्पयति, हृदयरूपेणाध्यवस्यति । तस्मात्सर्वकरणविषयव्यापारकमेकमिदं करणं सर्वोपलब्ध्यर्थमुपलब्धुः । तथा च कौषीतकिनां 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति, प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति' इत्यादि । वाजसनेयके च 'मनसा ह्येव पश्यति मनसा शृणोति' 'हृदयेन हि रूपाणि जानाति' इत्यादि । तस्मात् हृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्वं प्रसिद्धम्। तदात्मकश्च प्राणः । 'यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः' इति ब्राह्मणम् । करणसंहतिरूपश्च प्राण इत्यवोचाम प्राणसंवादादौ । तस्माद्यत्प्रपदाभ्यां प्रापद्यत ब्रह्म, तत् उपलब्धुरुपलब्धिकरणत्वेन गुणभूतत्वान्नैव तद्वस्तु ब्रह्म उपास्य आत्मा भवितुमर्हति । पारिशेष्याद्यस्योपलब्धुरुपलब्ध्यर्था एतस्य हृदयस्य मनोरूपस्य करणस्य वृत्तयो वक्ष्यमाणाः, स उपलब्धा उपास्य आत्मा नो भवितुमर्हतीति निश्चयं कृतवन्तः । तदन्तःकरणोपाधिस्थस्य उपलब्धुः प्रज्ञानरूपस्य ब्रह्मणः उपलब्ध्यर्था या अन्तःकरणवृत्तयो बाह्यान्तर्वर्तिविषयविषयास्ता इमा उच्यन्ते—संज्ञानं संज्ञप्तिः चेतनभावः । आज्ञानं आज्ञप्तिः ईश्वरभावः । विज्ञानं कलादिपरिज्ञानम्। प्रज्ञानं प्रज्ञप्तिः प्रज्ञता । मेधा ग्रन्थधारणसामर्थ्यम्। दृष्टिः इन्द्रियद्वारा सर्वविषयोपलब्धिः । धृतिः धारणं अवसन्नानां शरीरेन्द्रियाणां ययोत्तम्भनं भवति । धृत्या शरीरमुद्वहन्तीति हि वदन्ति । मतिर्मननम् । मनीषा तत्र स्वातन्त्र्यम्। जूतिः चेतसो रुजादिदुःखित्वभावः। स्मृतिः स्मरणम्। संकल्पः शुक्लकृष्णादिभावेन संकल्पनं रूपादीनाम्। क्रतुः अध्यवसायः। असुः प्राणनादिजीवनक्रियानिमित्ता वृत्तिः । कामः असंनिहितविषयाकाङ्क्षा तृष्णा । वशः स्त्रीव्यतिकराद्यभिलाषः । इत्येवमाद्या अन्तःकरणवृत्तयः प्रज्ञप्तिमात्रस्योपलब्धुः उपलब्ध्यर्थत्वात् शुद्धप्रज्ञानरूपस्य ब्रह्मण उपाधिभूताः तदुपाधिजनितगुणनामधेयानि *भवन्ति संज्ञानादीनि सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति, न स्वतः साक्षात् । तथा चोक्तं—'प्राणन्नेव प्राणो नाम भवति' इत्यादि ।

शंकर.

( २ ) 'येन जीवो दर्शनादीन्प्रेरितः कुरुते सदा । यो विष्णुर्हृदयमिति हृद्गतत्वात्प्रकीर्तितः । मन्तृत्वान्मन इत्येव यच्च ज्ञानस्वरूपतः । एतत्संनिहितत्वाच्च पूर्णत्वादेति कीर्तितः। इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः। गुणानामुच्चयो यस्मात्स च इत्येव शब्दितः । सम्यग्ज्ञानस्वरूपत्वात्संज्ञानमिति कीर्तितः । आततज्ञानरूप-

(१) ऐआ. २।६।१।२; मध्व. कामो वश (कामोऽवश).

* अत्रन्तमेतत् ।

त्वादाज्ञानं भगवान् हरिः । विविधज्ञानरूपत्वाद्विज्ञानमिति कीर्तितः । प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यते । अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः । धृतिर्धारणरूपत्वान्मतिर्मांसु ततत्वतः । मनुनाम्नामजादीनां मनीषेशो यतो हरिः । सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते । सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः । समं रमत इत्येव स्मृतिर्नाम जनार्दनः । सर्वस्य क्लृप्तिकर्तृत्वात्संकल्प इति गीयते । क्रतुः स सर्वकर्तृत्वादसुरप्यसनाद्धरिः । अमेयानन्दरूपत्वात्काम इत्यभिधीयते । अवशः स स्वतन्त्रत्वात्त्रयोविंशतिनामकम् । यो वेदैवं हरिं सम्यङ्मुच्यतेऽखिलसंसृतेः ॥' मध्व.

**एष ब्रह्म । एष इन्द्रः । एष प्रजापतिः । एते सर्वे देवाः । इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किंचेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरम् । सर्वं तत्प्रज्ञानेत्रम् । प्रज्ञाने प्रतिष्ठितम् । प्रज्ञानेत्रो लोकः । प्रज्ञा प्रतिष्ठा । प्रज्ञानं ब्रह्म ॥ ३ ॥**

(१) स एष प्रज्ञानरूप आत्मा ब्रह्म अपरं सर्वशरीरस्थप्राणः प्रज्ञात्मा अन्तःकरणोपाधिष्वनुप्रविष्टो जलभेदगतसूर्यप्रतिबिम्बवद्धिरण्यगर्भः प्राणः प्रज्ञात्मा । एष एवेन्द्रो गुणात्, देवराजो वा । एष प्रजापतिर्यः प्रथमजः शरीरी । यतो मुखादिनिर्भेदद्वारेण अग्न्यादयो लोकपाला जाताः, स प्रजापतिरेष एव । येऽन्येतेऽग्न्यादयः सर्वे देवाः, एष एव । इमानि च सर्वशरीरोपादानभूतानि पञ्च पृथिव्यादीनि महाभूतानि अन्नान्नादत्वलक्षणान्येतानि । किंचेमानि च क्षुद्रमिश्राणि क्षुद्रैरल्पकैर्मिश्राणि । इवशब्दोऽनर्थकः । सर्पादीनि बीजानि कारणानि इतराणि चेतराणि च द्वैराश्येन निर्दिश्यमानानि । कानि तानि । उच्यन्ते । अण्डजानि पक्ष्यादीनि । जारुजानि जरायुजानि मनुष्यादीनि । स्वेदजानि यूकादीनि । उद्भिज्जानि च वृक्षादीनि । अश्वा गावः पुरुषा हस्तिनः अन्यच्च यत्किंचेदं प्राणिजातम् । किं तत् । जङ्गमं यच्चलति पद्भ्यां गच्छति । यच्च पतत्रि आकाशेन पतनशीलम् । यच्च स्थावरं अचलम् । सर्वं तदशेषतः प्रज्ञानेत्रम् । प्रज्ञप्तिः प्रज्ञा, तच्च ब्रह्मैव । नीयते अनेनेति नेत्रम् । प्रज्ञा नेत्रं यस्य तदिदं प्रज्ञानेत्रम् । प्रज्ञाने ब्रह्मणि उत्पत्तिस्थितिलयकालेषु प्रतिष्ठितं, प्रज्ञाश्रयमित्यर्थः । प्रज्ञानेत्रो लोकः, पूर्ववत् । प्रज्ञाचक्षुर्वा सर्व एव लोकः । प्रज्ञा प्रतिष्ठा सर्वस्य जगतः । तस्मात्प्रज्ञानं ब्रह्म । तदेतत्प्रत्यस्तमितसर्वोपाधिविशेषं सत् निरञ्जनं निर्मलं निष्क्रियं शान्तमेकमद्वयं नेति नेतीति सर्वविशेषापोहसंवेद्यं सर्वशब्दप्रत्ययागोचरं तदत्यन्तविशुद्धप्रज्ञोपाधिसंबन्धेन सर्वज्ञमीश्वरं सर्वसाधारणाव्याकृतजगद्बीजप्रवर्तकं नियन्तृत्वादन्तर्यामिसंज्ञं भवति । तदेव व्याकृतजगद्बीजभूतबुद्ध्यात्माभिमानलक्षणं हिरण्यगर्भसंज्ञं भवति । तदेवान्तरण्डोद्भूतप्रथमशरीरोपाधिमत् विराट्प्रजापतिसंज्ञं भवति । तदुद्भूताग्न्याद्युपाधिमत् देवतासंज्ञं भवति । तथा विशेषशरीरोपाधिष्वपि ब्रह्मादिस्तम्बपर्यन्तेषु तत्तन्नामरूपलाभो ब्रह्मणः । तदेवैकं सर्वोपाधिभेदभिन्नं सर्वैः प्राणिभिस्तार्किकैश्च सर्वप्रकारेण ज्ञायते विकल्प्यते च अनेकधा । 'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥' इत्याद्या स्मृतिः । शंकर.

(२) 'ब्रह्मा शिवश्च शक्रश्च देवाश्चान्ये समस्तशः । तथैव पञ्चभूतानि पुण्यपापविमिश्रिताः । क्षुद्रात्मानस्तु ये मर्त्या इतरे असुरा अपि । सर्वं जगदिदं विष्णोर्वशे तिष्ठति सर्वदा । तेनैव नीयते नित्यं तस्मिन्नेव प्रतिष्ठितम् । मुक्ता येऽलोकनामानो नीयन्ते तेऽपि विष्णुना । स्वयं चानन्यनिष्ठत्वात्प्रतिष्ठेत्यभिधीयते । देशतः कालतश्चैव गुणतश्चातिपूर्तितः । विष्णोर्ब्रह्मेति नामैतन्मुख्यतोऽन्यत्र न कचित् ॥' मध्व.

(३) *'यः सर्वज्ञः सर्ववित्' इति 'प्रज्ञानं ब्रह्म' इत्यादिश्रुतिषु तस्य सर्वज्ञत्वप्रज्ञानत्वादिधर्मोपदेशात् न जीववदज्ञत्वादिधर्मत्वप्रसङ्गः । १।१।१

(१) ऐआ. २।६।१।३; मध्व. नेत्रो लोकः ( नेत्रोऽलोकः); श्रीकर. १।१।१ ( पृ. ५ ), ३।२।३०, ३।४।१, ४।१।३, ४।२।५, ४।३।७.

* अत्र 'प्रज्ञानं ब्रह्म' इत्येकस्यैव वाक्यस्य प्रथमभाष्यखण्डे 'यः सर्वज्ञः' इत्यादिना समानयोगक्षेम-

'प्रज्ञानं ब्रह्म' 'अहं ब्रह्मास्मि' 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' 'यथा नद्यः स्यन्दमानाः समुद्रे' इत्यादिना सर्ववेदान्तेषु मुमुक्षूणां ब्रह्मोपासकानां परशिवब्रह्मात्मकत्वोपदेशात् । श्रीकर. ४।२। ५

स एतेन प्रज्ञेनाऽऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत् समभवत् ॥ ४ ॥ ॥ १ ॥

इति श्रीमदैतरेयद्वितीयारण्यके षष्ठोऽध्यायः ॥

(१) स वामदेवः अन्यो वा एवं यथोक्तं ब्रह्म वेद, प्रज्ञेनाऽऽत्मना, येनैव प्रज्ञेनाऽऽत्मना पूर्वे विद्वांसोऽमृता अभूवन्, तथा अयमपि विद्वानेतेनैव प्रज्ञेनाऽऽत्मना अस्माल्लोकादुत्क्रम्येत्यादि व्याख्यातम् । अस्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवदित्योमिति । शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयद्वितीयारण्यकभाष्ये षष्ठोऽध्यायः ॥

(२) 'सोऽलोकनामा मुक्तस्तु चितिमात्रस्वरूपतः । प्रकृष्टज्ञानरूपस्य प्रसादात्परमात्मनः । अस्माद्देहात्समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम् । अमृतः सन् विष्णुलोके भोगान्संप्राप्य पुष्कलान् । भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम् ॥' इत्याद्यैतरेयसंहितायाम् ।

जानन्त्याऽपि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च कोऽयमात्मेति पृष्टः स भगवानाह—कतरः स आत्मेति । कतरः आनन्दतमः । 'यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरतमौ' इति शब्दनिर्णये । यत्प्रेरणादयं जीवो दर्शनादीन्करोति च, रमाब्रह्मादीनामपि तत्प्रेरितत्वात् । सर्वेषां दर्शनादिकारणत्वमेकैकमपि तस्य लक्षणं भविष्यतीति वाशब्दः सर्वत्रानुषज्यते । प्रजापतिः शिवः, लिङ्गाभिमानित्वात् । 'प्रजापतिः शिवः शेषो लिङ्गमित्यभिधीयते । लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ॥' इति शैवपुराणे । 'सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः । वाक्यं शिवस्य तच्छ्रुत्वा शक्रो नेत्याह सत्वरः ॥' इति भारते । क्षुद्रमिश्राणीव बीजानि शाल्यादिबीजवत् । भिन्नस्वभावा ब्रह्मादयः सर्वजीवाः । 'ब्रह्माद्याः सर्व एवैते जीवा भिन्नस्वभावकाः । यथा शाल्यादिबीजानि भिन्नवीर्याणि सर्वशः ॥' इति सत्तत्त्वे । प्रथमेतराणीतिशब्दो मानुषाणां, द्वितीयो सुरादीनाम् । प्रज्ञानेत्रोऽलोक इति अलोकशब्देन मुक्तसमुदाय उच्यते । ब्रह्मादिस्थावरान्तस्य लोकस्य सर्वं तत्प्रज्ञानेत्रमिति विष्णवधीनत्वस्य पूर्वमेवोक्तत्वात्पुनः प्रज्ञानेत्रोऽलोक इति मुक्तविषयमेव । मुक्तो ह्यलोक्यत्वादलोकः । अण्डजानि चेत्याद्युक्त्वा पुनरश्वा गाव इत्यादि देवादीनां मनआदेरेव जातानामपि स्वीकारार्थम् । अण्डजत्वाद्युत्पत्तिप्रकारोऽपि विष्णवधीन इति ज्ञापयितुं तत्कथनम् । 'तथाऽश्मानस्तृणकाष्ठाश्च सर्वे दिष्टक्षये स्वां प्रकृतिं भजन्ते' इति भारतवचनादश्मादीनामपि प्राणित्वात्तत्स्वीकारार्थं प्राणीति । गमनपतनस्थिरत्वादयोऽपि भावा विष्णवधीना इति ज्ञापयितुं जङ्गममित्यादिवचनम् । स एतेनैत्यलोकशब्दोक्तो मुक्तः परामृश्यते । सकलकर्मबन्धमुक्त्यनन्तरं हि शरीरादुत्क्रामति । प्रकृष्टज्ञानरूपेण विष्णुना प्रेरितः प्रज्ञेनाऽऽत्मनैवोत्क्रम्य तेनैव सर्वान्कामानाप्त्वा तेनैव सर्वान् कामान् स भुङ्क्ते इति सर्वत्रानुषज्यते । प्रज्ञानेत्रोऽलोक इत्युक्ते कथं प्रज्ञानेत्रो मुक्त इत्याकाङ्क्षायां तस्यैव व्याख्यानं स एतेन प्रज्ञेनाऽऽत्मनेत्यादि । अनुक्तविशेषाणामपि भगवदधीनत्वज्ञापनार्थं प्रज्ञानेत्रोऽलोक इति सामान्यवचनम् । 'अनारब्धफलानां च प्रारब्धानां च सर्वशः । कर्मणां दाह एवायं मुक्तिरित्यभिधीयते । स तु मुक्तस्ततो देहादुद्गच्छति परात्मना । प्रेरितो विष्णुलोकं च प्राप्य भोगानवाप्य च । भुङ्क्ते विष्णुप्रसादेन नाविष्णोरवशः क्वचित् । विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिलाः ॥' इति ब्रह्माण्डे । ब्रह्मेन्द्रादिशब्दा विष्णावेव मुख्यत इति तद्व्यावृत्त्या जीवानां स्वीकारार्थं

त्वेन तत्पदार्थशोधकता आस्थिता, द्वितीयभाष्यखण्डे च 'तत्त्वमसि' इत्यादिसाजात्येन जीवपरैक्यपरता स्वीकृता । अन्येष्वपि स्थलेषु जीवपरैक्यपरत्वाभ्युपगम एव स्पष्टं प्रकाश्यते ।

(१) ऐआ. २।६।१।

एषइत्यादिशब्दः । स हि भगवान् स्वनेतृकोऽपि नानुग्राह्यः । अनुग्राह्यत्वं हि ब्रह्मादीनामत्र विवक्षितम् । 'नेयताऽनुग्राह्यताऽपि न सा विष्णोः स्वतोऽपि तु' इति शब्दतत्त्वे । मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रपाठके षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः

अध्येतुः इष्टं सद्गुणरूपं श्रेयः

**वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान्संदधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारमवतु वक्तारम् ॥ १ ॥**

इति श्रीमदैतरेयद्वितीयारण्यके सप्तमोऽध्यायः ॥

*( १ ) षष्ठे तत्त्वविद्यां परिसमाप्य सप्तमे शान्तिकरं मन्त्रं पठति । यथोक्ततत्त्वविद्याप्रतिपादकग्रन्थपाठे प्रवृत्ता मदीया वाक् सर्वदा मनसि प्रतिष्ठिता मनसा यद्यच्छब्दजातं विवक्षितं तदेव पठति । मनश्च मदीयं वाचि प्रतिष्ठितम् । यद्यद्विद्याप्रतिपादकत्वेन वक्तव्यं शब्दजातमस्ति, तदेव मनसा विवक्ष्यते । एवमन्योन्यानुगृहीते वाङ्मनसे विद्यार्थं ग्रन्थं साकल्येन अवधारयितुं शक्नुतः । मनसः सावधानत्वाभावे वागिन्द्रियं सुप्तोन्मत्तप्रलापादिवत् यत्किंचिदसंगतं ब्रूयात् । तथा च वाचः पाटवाभावे सति गद्गदरूपया वाचा विवक्षितं सर्वं यथावन्नोच्चार्यते । अतः तयोरन्योन्यानुकूल्यमस्तु इत्येवं प्राथ्यते । आविःशब्देन स्वप्रकाशं ब्रह्मचैतन्यमुच्यते । प्रज्ञानशब्देन व्यवहृतत्वात् तस्य आविर्भूतरूपत्वम् । तथाविध हे आत्मन्, मे मदर्थं आवीरेधि अविद्यावरणापनयनेन प्रकटीभव । हे वाङ्मनसे, मे मदर्थं वेदस्य यथोक्ततत्त्वविद्याप्रतिपादकस्य ग्रन्थस्य आणी स्थः आनयनसमर्थे भवतम् । मे श्रुतं मया श्रोत्रेणावगतं ग्रन्थतदर्थजातं मा प्रहासीः मा परित्यजतु, विस्मृतं मा भूदित्यर्थः । अनेनाधीतेन ग्रन्थेन विस्मरणरहितेन अहोरात्रान् संदधामि संयोजयामि । अहनि रात्रौ च आलस्यं परित्यज्य निरन्तरं पठामीत्यर्थः । अस्मिन् पठिते ग्रन्थे ऋतं परमार्थभूतं वस्तु वदिष्यामि । विपरीतार्थवदनं कदाचिदपि मा भूदित्यर्थः । ऋतं मानसं, सत्यं वाचिकं, मनसा वस्तुतत्त्वं विचार्य वाचा वदिष्यामीत्यर्थः । तत् मया वक्ष्यमाणं ब्रह्मतत्त्वं मां शिष्यं अवतु सम्यग्बोधेन पालयतु । तथा तद्ब्रह्मतत्त्वं वक्तारं आचार्यं अवतु बोधकत्वसामर्थ्यप्रदानेन पालयतु । पुनरपि अवतु मामित्याद्युक्तिः फलविषया । पूर्वं साधनकाले शिष्याचार्ययोः पालनं प्रार्थितम् । इदानीं फलकालेऽपि प्रार्थ्यते । तत्र शिष्यस्य अविद्यातत्कार्यनिवृत्तिः फलम् । आचार्यस्य तु तादृशशिष्यदर्शनेन विद्यासंप्रदायप्रवृत्तिप्रयुक्तः परितोषः फलम् । अनेन मन्त्रपाठेन विद्योत्पत्तेः पुरा विद्याप्रतिबन्धका विघ्नाः परिह्रियन्ते । विद्योत्पत्तेरूर्ध्वं असंभावनाविपरीतभावनोत्पादका विघ्नाः परिह्रियन्ते । अवतु वक्तारमित्यभ्यासः अध्यायपरिसमाप्त्यर्थः द्वितीयारण्यकसमाप्त्यर्थश्च ।

इति श्रीमत्सायणीये वेदार्थप्रकाशे द्वितीयारण्यके सप्तमोऽध्यायः ॥

( २ ) वाङ्मे मनसि प्रतिष्ठिता अवबोधरूपे विष्णौ प्रतिष्ठिता । स च विष्णुर्मे वाचि स्थितः । 'यदेतद्धृदयं मनश्च' इति विष्णुनामधेयेषूक्तत्वात् । आविरावीर्म एधि हे विष्णो, ममाविराविर्भव । आणीस्थित आण्यां स्थित विष्णो इति संबोधनम् । 'आधारः सर्ववेदानां वेदाणी प्राण उच्यते । तस्मिन्स्थितो हरिर्नित्यमाणीस्थ इति गीयते ॥' इति शब्दतत्त्वे । आविरावीरिति दैर्घ्यमतिशयार्थे, 'आधिक्येऽधिकम्' इति सूत्रात् । अणशब्दस्य गतिवाचित्वाचलं आणमुच्यते । तस्य धारणेन तद्वान् आणी, स्थापक इत्यर्थः । मे श्रुतं मा

---

* श्रीमच्छंकराचार्यैरव्याख्यातत्वात् सायणभाष्यमत्र गृहीतम् ।

(१) ऐआ. २।७।१; मध्व. आणी स्थः ( आणीस्थ ).

प्रहासीः मम विद्यागोचर एव सर्वदा भव, विस्मृतो मा भव । हे विष्णो, अनेन त्वद्विषयेणैवाधीतेन अहोरात्रान् संदधामि सर्वाहोरात्रेष्वपि त्वद्विषयाध्ययनमेव करोमीत्यर्थः । ऋतं यथावदवगतं त्वां वदिष्यामि । सत्यं साधुगुणैस्ततं सर्वनियन्तारं च । तद्विष्ण्वाख्यं ब्रह्म मामवत्विति तस्यैव विष्णोः परोक्षत्वेनैव प्रार्थनम् । 'वाङ्म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम् । अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः ॥ ' इति च ।

मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके सप्तमोऽध्यायः ॥

## इति द्वितीयारण्यकं समाप्तम् ॥

---

# तृतीयारण्यकम्

## प्रथमोऽध्यायः

अधिदैवतोपासनाविषयः विश्वात्मिका संहिता

**अथातः संहिताया उपनिषत् । पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेयः । आकाशः संहितेत्यस्य माक्षव्यो वेदयांचक्रे । स ह्याविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति । समाने वै तत्परिहृतो मेन इत्यागस्त्यः । समानं ह्येतद्भवति वायुश्चाकाशश्चेति । इत्यधिदैवतम् ॥**

अथातः संहिताया उपनिषदित्याद्या संहितोपनिषत् । तस्याः संक्षेपतो विवरणं करिष्यामो मन्दमध्यमबुद्धीनामपि तदर्थाभिव्यक्तिः स्यादिति । तदर्थविज्ञानेन प्रयोजनं च वक्ष्यति—'संधीयते प्रजया पशुभिः' इत्यादि । परमात्मविज्ञाने च मोक्षसाधनेऽधिकृतत्वम् । तथा च स्मृतिः—'द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥' इति । क्रमोपपत्तेश्च शब्दविषयविज्ञानपूर्वकं हि तदर्थविषयं विज्ञानम् । अत्र च वेदाध्ययनं कर्मार्थमतिक्रान्तं, कर्मसंबन्धिन्यश्चोपनिषदः । अथ अनन्तरं अकर्माङ्गसंबन्धिनी संहिताविषया केवलपुरुषार्थसाधना, तत्प्रसङ्गेन कर्माङ्गविषया च काचन महाव्रतादिसंबन्धिनी उपनिषदिह प्रस्तुता वेदितव्येति वाक्यशेषः । उपनिपूर्वस्य सदेर्विशरणगत्यवसादनार्थस्य क्विबन्तस्य रूपं उपनिषदिति । उपनिषद्विज्ञानं चेदं तात्पर्येणोपनिषण्णाः ये, तेषां वाक्कायमनोभिर्बुद्धेरनर्थप्रतिपत्तिहेतुभूताया विशरणादुपनिषत्, वक्ष्यमाणफलप्रापयितृत्वाच्चोपनिषत्, संसारबीजाविद्यावसादनाच्चोपनिषत् । यतश्चैवं विशिष्टफला, तस्मादिह प्रस्तुता संहिताया उपनिषद्वेदितव्यैवेत्यर्थः । संहिताया उपनिषत् । संहितासंबन्धिनी हि सा । अतः संहिताया उपनिषत् । संहिताविषयं विज्ञानमित्यर्थः । तत्कथमित्युच्यते—पृथिवी पूर्वरूपम् । आद्यं प्रथमं पूर्वं इत्यनर्थान्तरम् । पूर्वं च तद्रूपं च पूर्वरूपम् । रूपवतोऽन्यस्य प्रकृतस्यासंभवात् संहितायाः पूर्वरूपं पृथिवीति गम्यते । तथा संहितायाः द्यौरुत्तररूपम् । संहितायास्त्वक्षरे एव पूर्वोत्तरे रूपे । वक्ष्यति हि—'पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपम्' इति । तयोश्च पृथिवीदृष्टिः द्युदृष्टिश्च कर्तव्या । संहितारूपयोरक्षरयोरितरेतरप्राप्तिर्या सा संहिता, तस्यां वायुदृष्टिः कार्या, इत्यतो वायुः संहितेत्याह । पूर्वोत्तररूपसंहितानां पृथिवीद्युवायुत्वं केनचित्सामान्येन दृष्ट्यर्थं यत् यथाभूतं विधीयते, तत् तथाभूतमेव । सर्वथाऽपि पृथिव्यादि-

(१) ऐआ. ३।१।१; अमर्ष. २।४।५; बज्रभ. २।४।४.

दृष्टिं कुर्वतस्तु तत्फलप्राप्तिः स्यात् शास्त्रप्रामाण्यात् । वायुना हि पूर्वोत्तरे अक्षरे संधीयेते । वायुरेव च आकाशनादकञ्चुकः सन् पूर्वोत्तराक्षररूपसंश्लेषमापद्यमानः संहिता भवति इति मण्डूकस्यापत्यं माण्डूकेयः ऋषिर्मन्यते संहिताविदाचार्यः । आकाशगुणविशेषभूतयोः पूर्वोत्तररूपाक्षरयोः प्राप्तिः संहिता, इत्यतो जात्यन्तरभूतस्य वायोः संहितात्वमयुक्तं, आकाशस्य तु स्वगुणव्यापकत्वात्संहितात्वं स्यात्, इत्यस्य माक्षव्यो नाम आचार्यो वेदयांचक्रे ज्ञातवान् अस्य संहितारूपवस्तुनः । मक्षोरपत्यं माक्षव्यः । आकाशस्यैव तु संहितात्वं युक्ततरमिति वेदयांचक्रे । किंच अस्मत्पक्षे स ह वायुरपि अविपरिहृत आकाशे एवान्तर्भावादपरित्यक्तः इत्येवं मेने विज्ञातवान् । वायुःसंहितापक्षे तु आकाशस्याग्रहणात् केवलस्यैव वायोः संहितात्वमपुष्कलम् । अतो न मे मम अस्य मण्डूकस्य पुत्रेण न समगात् न संगतं दर्शनमित्यर्थः । अगस्त्यपुत्रस्त्वाचार्यः आगस्त्यो मेने— समाने तुल्ये एवैते संहिते वाय्वाकाशाख्ये, तत् तस्मात् आकाशग्रहणेनाग्रहणात् परिहृतः परित्यक्त एव वायुः । समानं तुल्यसामर्थ्यं हि यस्मात् एतत् उभयं वायुश्चाऽऽकाशश्च भवति । अतो नान्यतरग्रहणेन अन्यतरग्रहणमिति वायुः संहिता आकाशो वा संहितेति विकल्पेन दर्शनं कर्तव्यमिति आगस्त्यमतम् । इति एवं देवताविषयसंहितादर्शनमधिदैवतमुक्तं इति उक्तोपसंहार उत्तरार्थः ।

शंकर.

अध्यात्मोपासनाविषयः वाङ्मनःप्राणानां संहिता

**अथाध्यात्मम् । वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः । अथ हास्य पुत्र आह ज्येष्ठः । मनः पूर्वरूपम् । वागुत्तररूपम् । मनसा वा अग्रे संकल्पयति । अथ वाचा व्याहरति । तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपम् । प्राणस्त्वेव संहितेति समानमेनयोरत्र पितुश्च पुत्रस्य च । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति । इति नु माण्डूकेयानाम् ॥ १ ॥**

(१) अथेदानीमध्यात्मविषयं संहितादर्शनम् । वक्ष्याम इति वाक्यशेषः । तत्कथमित्युच्यते । वाक् पूर्वरूपं संहितायाः इत्यादि पूर्ववत् । वागिति शब्दोच्चारणे व्यापृतं करणम् । मनः संकल्पविकल्पात्मकमक्षराद्यालोचने व्यापृतमन्तःकरणम् । प्राणः संहितेति । पूर्वोत्तररूपयोरक्षरयोः संधाने व्यापृतो मुख्यो वायुः प्राण इत्युच्यते । शूरवीरो माण्डूकेयो मन्यते । अथ ह इति वाक्योपन्यासार्थः । अस्य शूरवीरस्य पुत्रो ज्येष्ठ आह । किमाह इति उच्यते — पितुर्दर्शनविपर्ययेण मनः पूर्वरूपं वागुत्तररूपमिति । हेतुं चात्राह---मनसा । वैशब्दः प्रसिद्धस्मारकः । अग्रे पूर्वं संहितामध्येष्यामीमामिति संकल्पयति । अथ अनन्तरं पश्चाद्वाचा व्याहरति उच्चारयति अधीते । यस्मादेवं तस्मात् मन एव पूर्वरूपं वागुत्तररूपं, न विपरीतं भवितुमर्हति । पूर्वस्य हि पूर्वरूपत्वं युक्तं, प्राथम्यसामान्यात् । प्राणस्त्वेव संहितेति समानं तुल्यं दर्शनं एनयोरत्र अस्मिन् संहिताविषये पितुश्च पुत्रस्य च । पूर्वोत्तररूपयोरेव न समानं दर्शनम् । तदेतत्संहितादर्शनं स्तूयते श्रद्धोत्पत्तये—यथा हि अश्वयुक्तो रथः अश्वरथः । स विशेष्यते — प्रष्टिवाहन इति । प्रष्टी पार्श्वयुजौ अश्वौ वाहनं यस्मिन् रथे युक्तौ, स प्रष्टिवाहनो रथः । स च अभिप्रेतं देशं अनायासेन आशु प्रापयति । तथा प्रष्टिवाहनाश्वरथतुल्यः स एष मनोवाक्प्राणैः संहतः संहितादर्शनलक्षणो रथः प्रजादिलक्षणं फलमाशु गमयतीति श्रद्धामुत्पादयति श्रोतुः । किं पुनरस्य दर्शनस्य फलमित्याह—स यः कश्चिदेवं यथोक्तामेतां संहितां मनोवाक्प्राणविषयामुपनिषदं वेद उपास्ते अनवरतं निरूपयति, संधीयते स विद्वान् । केनेत्याह— प्रजया पुत्रपौत्रादिलक्षणया, पशुभिः गोमहिष्यश्वादिभिः, यशसा ख्यात्या, ब्रह्मवर्चसेन वृत्तस्वाध्यायविज्ञाननिमित्तेन तेजसा च दृष्टफलेन, अदृष्टेन च स्वर्गेण लोकेन संहितारूपविदिति । किंच सर्वमायुः अस्मिन् लोके एति । सर्वमायुः वर्षशतम् । अपमृत्युना वा न म्रियते इति । इति नु माण्डूकेयानां संहितादर्शनमुक्तम् ।

शंकर.

(२) 'विष्णुनाम्नि षकारस्य णकारस्य च संहिताम् । विष्णोस्तु बहुरूपाणां वाचिकामृषयो विदुः । तौ च

वर्णौ हरेः सम्यक्स्वरूपप्रतिपादकौ । बहुधैव स्थितस्यास्य सदैवैकस्वरूपिणः । विष्णुनामार्थरूपत्वाद्वेदानामपि सर्वशः । अन्येषामपि शब्दानां संहिता विष्णुवाचिकाः । तद्वाचकास्तथा वर्णाः सर्वे लौकिकवैदिकाः । पृथिवीनामकं रूपं पृथुत्वात्पृथिवीस्थितम् । देवता पूर्ववर्णस्य पूर्वरूपं तदुच्यते । देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम् । दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते । वेदकत्वाच्चायनत्वाद्रूपं यद्वायुनामकम् । विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम् । संहितानामकं तच्च रूपद्वयसहस्थितेः । वर्णद्वयं विकारं च षकारं केचिदब्रुवन् । षकारं मध्यमत्रैव णकारं केचिदुत्तरम् । पृथक्करणमेवैषां वर्णयोर्मध्यमुच्यते । उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम् । षकारं च णकारं च वर्णौ पूर्वोत्तरावपि । व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते । सर्वेऽप्येत उपादेयाः पक्षा निर्दोषका यतः ॥' इत्याद्यैतरेयसंहितायाम् । आकाशस्थः आकाशनामा भगवान्वर्णयोर्मध्यदेवतेति माक्षव्यः । उभयरूपसंहितत्वात् संहितानामकः । स माण्डूकेयः तेन माक्षव्येणापरिहृतः स्वपक्ष इति मेने । मे मदीयेन मदुपासितेनास्य आकाशस्य पुत्रेण वायुना न समगादसौ माक्षव्यः, वायुस्थविष्ण्वनुपासनात् । यद्यप्याकाशस्थो भगवान् संहितानामको भवति, तथापि न वायुस्थस्यासंहितात्वं भवतीत्यपरिहृतत्वम् । परिहृतो माण्डूकेयपक्ष इत्यहं मेने इत्यागस्त्यः, आकाशे विष्णूपासनस्याधिकफलत्वात् । पिता ह्याकाशो वायोः । भगवतः स्वपक्षः समत्वमेव वाय्वाकाशयोरिति । आकाशस्य पितृत्वात् वायोर्बलाधिकत्वाच्च उभयोरुपासनास्थानत्वे साम्यम् । तस्मादुभावपि ग्राह्यौ । त्वगिन्द्रियदेवतात्वेनाऽऽकाशात् पूर्वमेव वायोः सात्त्विकाहंकारजत्वात् वायोराकाशाद्गुणाधिकत्वम् । तथाऽप्यत्राऽऽकाशस्य पितृत्वं व्याप्तिश्चाधिकेत्युपासनायां साम्यम् । अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यमेव । अन्यत्र तु पुत्रपक्ष एव बलीयान्, युक्तिमत्त्वात् । 'मनोवाक्प्राणनामाऽसौ मनआदिषु संस्थितेः । विष्णुस्तस्य रथो देह इन्द्रियाश्वः प्रकीर्तितः ॥' इति च । 'प्रष्टिः स प्रच्छनीयत्वात् परमात्मा जनार्दनः । वक्तृत्वाच्चैव वाङ्नामा मनो मन्तृत्वहेतुतः ॥' इति च । 'प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव' (बृउ. १।४।७) इति च श्रुतिः । मुक्तिरेव स्वर्गलोकः, 'अमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वा' (ऐआ.२।६।१) इति प्रस्तुतत्वात् । 'मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा । नित्यायुषा च युक्तः स्यात्संहितारूपविद्धरेः ॥' इति च । प्रकृष्टत्वेन जननात्प्रजेति ज्ञानम् । पान्ति शंसाधनाश्चेति पशवो वेदाः । परब्रह्मणो विष्णोर्वरणादेव सम्यक् चायितं स्वरूपं तेजः ब्रह्मवर्चसम् । लौकिकप्रजादिकमपि तदिच्छतां यथायोग्यं भवति । माण्डूकेयैर्ऋषिभिरुपासिता एता विद्याः ।

मध्व.

(३) 'तत्पूर्वकत्वाद्वाचः'—'तस्मान्मन एव पूर्वरूपं वागुत्तररूपम्' इति मनःपूर्वकत्वाद्वाचो न अनुत्पत्तिः । वागिन्द्रियस्य नित्यत्वं श्रुतिसंनिधियोग्यता । 'उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चन' इति वायुप्रोक्ते । ब्रमध्व. २।४।५

(४) 'तत्पूर्वकत्वाद्वाचः'—'मनः पूर्वरूपं वागुत्तररूपम्' इति । 'तस्य यजुरेव शिरः' इति । तथा च वेदानां स्वतः उत्पत्त्यभावात् तत्पूर्वमनसः कथमुत्पत्तिः । वल्लभ. २।४।४

[ पूर्वया श्रुत्या मनोवाचोः पूर्वोत्तरभावे, अन्यया च मनोमयस्य वेदात्मकत्वे बोधिते मनोवाचोर्वृत्तिभेदादेव भेदः, न तु स्वरूपतः इति सिद्धौ निःश्वसितश्रुत्या 'वाचा विरूपनित्यया' इति श्रुत्या च वेदानां निःश्वसितरूपतया नित्यतया च स्वरूपत उत्पत्त्यभावात् उद्गममात्रमेव । तथा सति तत्पूर्वरूपस्य मनसः कथमुत्पत्तिः संभवति । तस्मान्न तस्याप्युत्पत्तिः, किंतु उद्गममात्रमेव । अतस्तयोर्नित्यत्वसिद्धिरित्यर्थः । नन्वेवं भगवन्मनोवाचोर्नित्यत्वे जैवानां कथं नित्यत्वसिद्धिः, इति चेत् । उच्यते । तद्व्याप्तत्वात् सिद्धिरिति । भाष्यप्रकाशः ]

शाकल्यप्रोक्ता अधिदैवताध्यात्मिकसंहिता

अथ शाकल्यस्य । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वृष्टिः संधिः । पर्जन्यः संधाता । तदु-

(१) ऐआ. ३।१।२.

**तापि यत्रैतद्बलवदनूद्गृह्णन्त्संदधदहोरात्रे वर्षति । द्यावापृथिव्यौ समधातामित्युताप्याहुः । इती न्वधिदैवतम् ॥**

अथेदानीं शाकल्यस्य संहिताचार्यस्य दर्शनं स्तूयते—पृथिवी पूर्वरूपं द्यौरुत्तररूपमिति पूर्ववत् । वृष्टिर्वर्षणं संधिः संहिता । वृष्ट्या हि द्यावापृथिवी संश्लिष्टे इव भवतः । पूर्वोत्तराक्षरयोः संहितायां वृष्टिदर्शनं कर्तव्यम् । तथा पर्जन्यो वृष्टिकर्ता वर्षणक्रियया संधाता । पर्जन्य इन्द्रः वृष्ट्युपकरणाभिमानी देवतात्मा वा अन्यः संहितारूपयोः संधाता इत्येवं पश्येत् । वृष्टिपर्जन्ययोः संहितासंधात्रोः सामान्यप्रसिद्धिमपि लौकिकीं दर्शयति श्रुतिः—तदेतदुतापि सामान्यमत्राप्यस्ति प्रसिद्धम् । कथम् । यत्र यस्मिन् काले बलवद्वेगातिशययुक्तं अनूद्गृह्णन् अनुपसंहरन् संदधत् संधानं कुर्वन् नैरन्तर्येण अहोरात्रे वर्षति । यत्रैतन्नैरन्तर्येणाहोरात्रयोर्वर्षणं भवति, तत्रैवं वक्तारो भवन्ति लौकिकाः । द्यावापृथिव्यौ समधातां संश्लिष्टे इव भवतः इत्येवमाहुः । उतापि एतत्सामान्यादुपपन्नतरमिदं संहितादर्शनमित्यभिप्रायः । इती नु एवं तु इत्यर्थः । अधिदैवतं देवताविषयं संहितादर्शनं शाकल्यस्योक्तम् ।

शंकर.

**अथाध्यात्मम् । पुरुषो ह वा अयं सर्वे आन्दम् । द्वे विदले भवत इत्याहुः । तस्येदमेव पृथिव्या रूपम् । इदं दिवः । तत्रायमन्तरेणाकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाऽऽकाशः । तस्मिन्हस्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तः । यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि । यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुः । यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयम् । यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेतः । एवमु ह स्म सर्वलोकमात्मानमनुविधायाऽऽह । इदमेव पृथिव्या रूपम् । इदं दिवः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥ २ ॥**

(१) अथेदानीमध्यात्ममुच्यते । पुरुषः अयं शिरःपाण्यादिमान् प्रसिद्धः ह वै सर्वः आन्दं आण्डं अण्डमित्यर्थः । कथमिति उच्यते— यथाऽधिदैवतमण्डस्य द्यावापृथिवी द्वे विदले कपाले भवतः, एवमिह अध्यात्मपुरुषस्यापि अण्डस्थानीयस्य द्वे विदले भवतः इत्याहुर्ब्रह्मवादिनः । अधरोष्ठेन सह शरीरार्धं एकं विदलम् । उत्तरेणापरं विदलम् । तस्य पुरुषाण्डस्य इदमेव अधरोष्ठोपलक्षितं विदलं पृथिव्या रूपं, अधरत्वसामान्यात् । उत्तरोष्ठोपलक्षितं विदलमिदं दिवो रूपं, ऊर्ध्वत्वसामान्यात् । एवमण्डकपालसामान्यं पुरुषस्य परिकल्प्य अन्यदप्याह—तत्र अस्मिन्पुरुषे अन्तरेण मध्ये अयमाकाशो भवति, यथाऽधिदैवं द्यावापृथिव्योरन्तरेण मध्ये आकाशो भवति, तथाऽध्यात्ममित्यभिप्रायः । तस्मिन्नस्मिन्नध्यात्माकाशे प्राण आयत्तः आश्रितः, यथा अमुष्मिन्नाकाशे अन्तरिक्षे वायुरायत्तस्तथा । यथा चाधिदैवमाण्डे अमून्यादित्यविद्युदग्न्याख्यानि त्रीणि ज्योतींष्यायत्तानि, एवमिमानि पुरुषे अण्डे त्रीणि ज्योतींषि चक्षुर्हृदयरेतांसि । तत्र विभागः क्रियते केन कस्य सामान्यमिति—यथाऽसौ दिवि आदित्यः, एवमिदं शिरसि चक्षुः । यथाऽसावन्तरिक्षे विद्युत्, एवमिदमात्मनि शरीरे हृदयं बुद्धिः, प्रकाशवृत्तिबहुत्वसामान्यात् । यथाऽयमग्निः पृथिव्यामेवमुपस्थे रेतः, प्रकाशाधारत्वसामान्यात् । एवमु ह स्म इति उक्तन्यायेनेत्येतत् । सर्वलोकमात्मानं एवं स्वकार्यकरणसंघातं सर्वलोकत्वेन अनुविधाय परिकल्प्य आह उक्तवान् शाकल्यः अभिनयेन—अधरोष्ठभागमात्मनो विदलमिदं पृथिव्या रूपं, इदमूर्ध्वं दिव इति । अथेदानीं विद्याफलमुच्यते । स य एवमेतामित्यादि पूर्ववत् ।

शंकर.

(२) ' वराहो वामनः सिंह इति रूपत्रयं हरेः । पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम् । माण्डूकेयैर्हि शाकल्यो वासुदेवादिरूपिणम् । तेषु चोच्चारके चैव स्थितमाह चतुर्विधम् । भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितम् । उर्व्यादीनां चतुर्णां च देह एव स्थितिं पुनः । अधरार्धस्य चोर्व्याश्च साम्यमन्यस्य वै दिवा । वाचो वृष्ट्यैव साम्यं च पर्जन्येनैव चाऽऽत्मनः । तेषां तेषु स्थितिं चैव विष्णोश्च चतुरात्मनः । आकाशस्यान्तराकाशे नृसिंहस्यात्र संस्थितिम् । वायोः प्राणात्मतां चैव तत्र दाशरथेः स्थितिम् । सूर्यविद्युद्धुताशानां दृग्हृद्रेतःसु

च स्थितिम्। कपिलस्य च हंसस्य जामदग्न्यस्य तेषु च। स्थितिं वदति विद्येयमपि मोक्षप्रदायिनी॥' इत्यादि च। वर्षणाद्वृष्टिः। परं जनयतीति पर्जन्यनामा विष्णुः। संधिनोतीति संधिः। धिनु पुष्टाविति धातुः। सम्यक् धारणात्संधाता। वर्षणमेव द्यावापृथिव्योः संधानम्। पर्जन्यस्थो भगवांस्तु तत्कर्ता। मध्व.

पदक्रमाध्ययनम्

**अथातो निर्भुजप्रवादाः। पृथिव्यायतनं निर्भुजम्। दिव्यायतनं प्रतृण्णम्। अन्तरिक्षायतनमुभयमन्तरेण। अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेत्। अच्योष्टाऽवराभ्यां स्थानाभ्यामित्येनं ब्रूयात्। अथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेत्। अच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयात्। यस्त्वेवोभयमन्तरेणाऽऽह तस्य नास्त्युपवादः। यद्धि संधिं विवर्तयति तन्निर्भुजस्य रूपम्। अथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य अग्र उ एव। उभयमन्तरेणोभयं व्याप्तं भवति। अन्नाद्यकामो निर्भुजं ब्रूयात्। स्वर्गकामः प्रतृण्णम्। उभयकाम उभयमन्तरेण॥**

अथेदानीं प्रासङ्गिकमिदं पदक्रमविषयमपि दर्शनं पुरुषार्थकरं इत्यत आह—निर्भुजप्रवादाः। निर्भुजं संहिता, तद्विषयं प्रवदनं येषां ते निर्भुजप्रवादाः। आहुरित्यध्याहार्यम्। किमिति उच्यते। पृथिव्यायतनं, पृथिवी आयतनं आश्रयो यस्य तदिदं पृथिव्यायतनं निर्भुजम्। दिवि भवं दिव्यं आयतनं यस्य तद्दिव्यायतनम्। किं तत्। प्रतृण्णं पदमित्यर्थः। तथा अन्तरिक्षमायतनं यस्य तदिदमन्तरिक्षायतनम्। किं तत्। उभयं, क्रम इत्यर्थः। तच्च अन्तरेण निर्भुजप्रतृण्णयोर्मध्ये, उभयात्मकत्वात्। द्वयोर्हि पदयोः संहिता, प्रतिपदं च विच्छेदः, इत्युभयत्वं, अतो मध्ये निर्भुजप्रतृण्णयोः। अथैवंसति कश्चिदेनं निर्भुजविदं पृथिवी संहितेति ब्रुवन्तं, निर्भुजं संहितामधीयानमित्यर्थः। किम्। उपवदेत् उपेत्य वदेत् संहिताध्ययने दोषमुद्भावयेत् कश्चित्। यदिशब्द इह योज्यः, तमुपवदितारं यदीक्षे(च्छे)त् प्रतिशपेदिति। कथमिति उच्यते। अच्योष्टा च्युतोऽसि अवराभ्यां पृथिव्यन्तरिक्षाभ्यां स्थानाभ्यां, यस्मादुभयस्थानात्मिका हि संहिता दूषिता त्वयेति एवं ब्रूयात् तत् तथा। अथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेत् अच्योष्टा उत्तराभ्यामन्तरिक्षद्युस्थानाभ्यामित्यादि पूर्ववत्सर्वम्। यस्तु पुनरुभयं निर्भुजं प्रतृण्णं चान्तरेण मध्ये क्रममाह अधीते, तस्य नास्त्येवोपवादः। यस्मान्निर्भुजे न संभावितं तत्प्रतृण्णतया संभावयति, यच्च प्रतृण्णे न तन्निर्भुजत्वेन, तस्मादुभयात्मकः क्रमः। कथमुभयात्मकत्वं क्रमस्येत्याह—(यत्) यत्र हि यस्मात् पूर्वोत्तररूपयोः संधिं संहितां विस्पष्टं वर्तयति अक्षरे संश्लेषयतीत्यर्थः। तन्निर्भुजस्य संहिताया रूपम्। अथ पुनः शुद्धे केवले अक्षरे पूर्वोत्तररूपे असंश्लिष्टे अभिव्याहरति उच्चारयति तत्प्रतृण्णस्य रूपमित्यनुवर्तते। अग्र उ एव प्रथममेव संहितायाः। तत्पदपूर्विका हि संहिता। एवमुभयात्मकत्वात् पदं संहितां च उभयमन्तरेण मध्ये सता क्रमेण व्याप्तं भवति, अतो नास्त्युपवादः क्रमाध्येतुः। निर्भुजस्य पृथिव्यायतनज्ञोऽयं अन्नाद्यकामो यदि, निर्भुजं ब्रूयात् संहितामधीयीत, अतः पृथिव्यायतनत्वात् अन्नाद्यं यत् तदस्य प्रभूतं भवति। प्रतृण्णस्य दिव्यायतनज्ञः स्वर्गकामश्चेत् प्रतृण्णं पदमधीयीत। अन्नाद्यस्वर्गकामश्चेत् उभयं क्रममधीयीत अन्तरिक्षायतनज्ञः क्रमस्य।

शंकर.

**अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्। पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात्। अथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेत्। दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयात्। अथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेत्। अन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात्। यथा तु कथा च ब्रुवन् वाऽब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात्। न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात्। अतिद्युम्न एव ब्राह्मणं ब्रूयात्। नातिद्युम्ने चन ब्राह्मणं ब्रूयात्। नमो अस्तु ब्राह्मणेभ्यः। इति ह स्माह शूरवीरो माण्डूकेयः॥ ३॥**

(१) ऐआ. ३।१।३; मध्व. च्योष्टाऽवरा (च्योष्टा ऽवरा) अच्योष्टा (अंच्योष्टा).

(१) अथ यद्येनमन्नाद्यार्थं निर्भुजं ब्रुवन्तं परः कश्चिच्छत्रुः कामप्राप्तिविघातकः उपवदेत्, ततोऽध्येतुः समाधिरेषः। कामोऽनर्थकः स्यात् तं यदि द्विष्यात्। पृथिवीं देवतां परां उपवदनदोषेण आरः अभिगतवानसि, पृथिवीदेवतात्मकं हि निर्भुजं, अतः सैव हि पृथिवीदेवता त्वा त्वां उपवदनेन आत्मनो दोषेण संयोजयितारं रिष्यति हिनस्ति इत्येवमेनं ब्रूयात्। तथैव स्वर्गकामं प्रतृण्णमित्यादि पूर्ववत्। तथैवोभयं क्रमं अन्नाद्यस्वर्गोभयकामं सन्तं ब्रुवन्तमित्यादि। अथेदानीं निर्भुजादिज्ञानं स्तौति—यथा तु कथा च यथाकथंचन अवस्थितं शत्रुं ब्रुवन् ब्रुवन्तं उपवदनं कुर्वन्तं वेति द्वितीयैव द्रष्टव्या। तथा अब्रुवन्तं (उपवदनं) अकुर्वन्तं वा निर्भुजादिदर्शनवित् ब्रूयात् शपेत्, यत्तेनोक्तमभ्याशं समीपं क्षिप्रमेव तत्तथा स्यात् तथैव भवेत्। यत एवं, न त्वेवान्यत् कुशलाद्धिताद्विपरीतं अन्यद्ब्राह्मणं न ब्रूयात् धनस्य यशसो वा प्राप्तिविघातं चेन्न कुर्याद्ब्राह्मणः। तथा शत्रुमपि ब्राह्मणं कुशलादन्यन्न त्वेव ब्रूयादित्यर्थः। यदि च ब्रूयात् अतिद्युम्न एव, द्युम्नं धनं यशो वा, तत्प्राप्तिविघातः अतिद्युम्नं, द्युम्नात्यय इत्यर्थः। ब्राह्मणं ब्रूयात् शापरूपं अकुशलम्। अप्रियः परधनस्य परयशसो वा प्राप्तिविघातकृत्, स हि आततायी, तद्विषयाकुशलवदनेऽपि न प्रत्यवायाशङ्केत्यभिप्रायः। एकेषां अतिद्युम्ने चन। चनशब्दः अप्यर्थे। धनात्ययविशेषेऽपि ब्राह्मणं न ब्रूयात्। नम एवास्तु ब्राह्मणेभ्यः। इत्येवमाह स्म किल शूरवीरो नाम माण्डूकेय आचार्यः।

शंकर.

(२) 'पृथिवीस्थो वराहस्तु संहिता देवतोदिता। दिविष्ठो वामनश्चैव संप्रोक्तः पददेवता। नृसिंहस्त्वन्तरिक्षस्थो भगवान् क्रमदेवता। स्वाध्यायमेवं ध्यात्वा यः करोत्युपवदेन्न तम्। तस्यापवदिता याति त्रैलोक्यादध एव हि। नाशमाप्नोति निरये तस्मादपवदेन्न तम्। गच्छस्यध इति ब्रूयादन्यं ब्राह्मणतस्तथा। ब्रह्मप्राप्तेर्हि योग्यो यो ब्राह्मणः स न चेतरः॥' इति च। भञ्जनवर्जितत्वान्निर्भुजं संहिता। तृण च्छेदने इति धातोः प्रतृणं(ण्णं) पदम्। उभयमन्तरेण क्रमः। निर्भुजमूलत्वात्पदादीनां तद्विषयप्रवादा अपि निर्भुजप्रवादा इत्येवोच्यन्ते। पृथिवीस्थितपृथिवीनामकविष्णवायतनं पृथिव्यायतनमित्यादि। अवराभ्यां पृथिव्यन्तरिक्षाभ्यां च्युतोऽसीति। उत्तराभ्यामन्तरिक्षद्युभ्याम्। 'क्रमस्वाध्यायकृद्यस्तं विशेषेण न निन्दयेत्। लोकत्रयादपि भ्रष्टो यस्मात्तन्निन्दको भवेत्॥' इति च। तस्मादतिदुष्टत्वात् तन्निन्दको नास्त्येवेत्युक्तं तस्य नास्त्युपवाद इति। 'तं कृष्णं पुण्डरीकाक्ष को नु युध्येत बुद्धिमान्' इत्यादिवत्। उपवदेदित्युक्तो मनुष्यमात्रः। पर उपवदेदित्यसुरः, सर्वशत्रुत्वात्। 'अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते। ब्रूयाल्लोकच्युतोऽसीति निन्दितो सुरसर्गगैः। नाशयिष्यति विष्णुस्त्वामन्धे तमसि पातयेत्। इति ब्रूयान्न तु ब्रूयाद्देवस्वर्गात्मकं क्वचित्॥' इति च। 'षणयोः संधिकरणात्संहिताध्ययनं भवेत्। विपूणुस्त्विवति यो ब्रूयात्पदाध्यायी भवेत सः। संध्युक्तिश्च विभागश्च द्वयं व्यात्तं क्रमेण तु। तस्माद्द्विधाऽपि वचनात्क्रमाध्यायी भवेत सः। भोगवृद्धिं च यो मोक्ष इच्छेद्द्विष्णव इत्यसौ। मोक्षकामो विषणवे द्वयकामो द्वयं वदेत्। विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः। सर्ववेदस्थिता मोक्षतद्भोगद्वयसाधकाः। तज्ज्ञानामेव नान्येषामिति वेदानुशासनम्। संहिताद्या ब्रुवन्वाऽपि य एवंविन्नचाब्रुवन्। परिवादं ब्रुवन्तं वा नब्रुवन्तमथापि वा। यद्वदेत्तत्तथैव स्यात्क्षिप्रमेव न संशयः॥' इति च। अम्र एव अन्यमेवोभयमन्तरेण। 'द्युम्नो द्युतिस्वरूपत्वाद्विष्णुरेव प्रकीर्तितः। योऽतिक्रामति तस्याऽऽज्ञामतिद्युम्नः प्रकीर्तितः। मोक्षयोग्योऽपि यस्त्वेवमतिद्युम्नो भवेत् पुमान्। लोकच्युतोऽसीत्येवं तं ब्रूयान्नाऽऽज्ञास्थितं क्वचित्। लोकच्युतो भवेत्येनमपि नैव वदेत् क्वचित्। च्युतोऽसीति तु शिक्षार्थं ब्रूयान्नैवान्यथा क्वचित्॥' इति च।

मध्व.

शापवचनम्

**अथातोऽनुव्याहाराः। प्राणो वंश इति विद्यात्। स य एनं प्राणं वंशमुपवदेत्। शक्नुवन् चेन्मन्येत। प्राणं वंशं समधाश्म्। प्राणं मा वंशं संदधतं न शक्नोषीत्याह। प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्। अथ चेदशक्नुवन्तं मन्येत। प्राणं वंशं समधि-**

(१) ऐआ. ३।१।४.

त्सिषन्तं नाशकः संधातुम्। प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्। यथा तु कथा च ब्रुवन् वाऽब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात्। न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात्। अतिद्युम्न एव ब्राह्मणं ब्रूयात्। नातिद्युम्ने चन ब्राह्मणं ब्रूयात्। नमो अस्तु ब्राह्मणेभ्यः। इति ह स्माऽऽह शूरवीरो माण्डूकेयः ॥ ४ ॥

(१) अथाधुना अकुशलाभिव्याहरणे ब्राह्मणं प्रति दोषः प्राप्तः, प्रतिषिद्धत्वात् अकुशलाभिव्याहरणस्य अकर्तव्यताप्राप्तौ पुनः स्तूयते प्राणविज्ञानस्तुतये। यत्प्रतिषिद्धा( द्धत्वा ? )नुष्ठानेन दोषप्राप्तिः इत्यतः तस्मात् अथ अनन्तरं अकुशलाभिव्याहारकर्तव्यतया प्राणविज्ञानं स्तौति। परस्यानिष्टोक्तिमनु व्याहरणं अनुव्याहाराः। ते च कीदृग्विज्ञानवता प्रयोक्तव्या इत्युच्यते। प्राणो मुख्यः शरीरेन्द्रियसंघातस्य गृहस्येव धारणात् वंश इव वंशः। वक्ष्यति च वंशसाधर्म्यं—'तद्यथा शालावंशे' (ऐआ. ३।२।१ ) इत्यादि। इत्येवं वंशस्थानीयं सर्वस्य धारयितारं प्राणमात्मानं संहितां विद्यादिति संबन्धः। तत्रैनमेवंविदं प्राणवंशं प्राणोऽस्म्यहं वंशवत् सर्वस्य धारण इत्येवं व्यवस्थितं स यः कश्चिदुपवदेत् अशक्तिदोषख्यापनेन, शक्नुवन् शक्नुवानोऽस्म्यहं इत्यात्मानं चेद्यदि मन्येत संहिताकरणेन प्राणं वंशं संधातुमिति, अथेदानीं परं प्रत्यनुव्याहरणमिदमुच्यते विदुषः। कथम्। प्राणं वंशं समधाः३ संधानेन धारितवानस्मि। तमेवंभूतं मां प्राणं वंशं संदधतं संधारणं कुर्वन्तं न शक्नोषीत्याह भवान्, अतस्त्वां प्राणो वंशो देहस्य धारयिता हास्यति, ततस्त्वं मरिष्यसि धारणवंशभङ्गेनेव शाला, इत्येवं ब्रूयात् अविचारयन् ब्राह्मणं अब्राह्मणं वा। अथ चेदात्मानं प्राणवंशधारणं कर्तुमशक्नुवन्तं मन्येत जानीयात् अपरिपक्वविज्ञानः सन्, तदैवं परस्योक्तिमनु व्याहारः— प्राणं वंशं समधित्सिषन्तं संधारणं कर्तुमिच्छन्तं भवानाह मां नाशकः संधातुं इति, अतः प्राणस्त्वा वंशो हास्यति इत्येवं ब्रूयात्। यथा तु कथा चेत्यादि पूर्ववत् व्याख्येयम्। शंकर.

(२) भगवदुपासकस्य यस्मिन्कस्मिंश्चिद्विषये दोष उक्ते तं प्रत्युक्तिप्रकारः पूर्वं दर्शितः। अनुव्याहारशब्देन भगवदुपासनाविषये एवास्याशक्त्यादिकं वदतः प्रत्युक्तिरुच्यते। निर्भुजं वदन्तमित्यादि त्ववस्थामात्रदर्शनम्। आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्यत्वादनुव्याहारः। 'सर्वाधारत्वतो वंश इत्युपासीत यो हरिम्। वायुं च मुक्तिमाप्नोति य एवं तदुपासकम्। निन्देत विष्णुविज्ञानविशेषे तं वदेत सः। विष्णुना वंशभूतेन वायुना सहितं तथा। न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ। ज्ञानसामर्थ्यवानित्थं ब्रूयाद्देवादिरुत्तमः। अन्यो गन्धर्वपित्रादिरल्पज्ञानबलो हि यः। स ब्रूयाद्विष्णुवायुभ्यां संधिमिच्छन्तमेव माम्। संधातुं नाशको यस्माद्धास्यतस्त्वामतो हि तौ॥' इति च। स य एनं प्राणं वंशमुपवदेत् प्राणं प्रत्येनमुपासकमुपवदेत् प्राणस्य विष्णोः प्रियत्वं तव न प्राप्स्यतीति। नाशकः संधातुं मया सह संधानं कर्तुं नाशकः मम प्रीतिं कर्तुं नाशकः। 'तद्भक्तभक्तेष्वपि यो न कुर्यात्प्रीतिमञ्जसा। विष्णुर्जहाति तं पापमिह चामुत्र च प्रभुः॥' इति च भारते। मध्व.

पदक्रमाध्येतुः कर्तव्या उपासना संहिताविषयिणी

अथ खल्वाहुर्निर्भुजवक्त्राः। पूर्वमक्षरं पूर्वरूपम्। उत्तरमुत्तररूपम्। योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति। स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन। सर्वमायुरेति। अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माऽऽह ह्रस्वो माण्डूकेयः। पूर्वमेवाक्षरं पूर्वरूपम्। उत्तरमुत्तररूपम्। योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण। येन संधिं विवर्तयति। येन स्वरास्वरं विजानाति। येन मात्राऽमात्रां विभजते। सा संहितेति। स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन। सर्वमायुरेति॥

अथेदानीं सर्वसंहितोपनिषद्दर्शनविषये साधारणमिदमुपन्यस्यते। अनुक्ते हि विषये दर्शनस्य किंविषयं दर्शनं पृथिवी पूर्वरूपमित्यादि न ज्ञायेत, अतः खलु दर्शनविषयज्ञानाय पूर्वोत्तराद्युपन्यासः। अत्राहुः संहिताविदो निर्भुजवक्त्राः संहितावक्तारः। निर्भुजं वा

(१) ऐआ. ३।१।५.

वक्त्रे येषां ते निर्भुजवक्त्राः । नित्यं संहितापरा एवेत्यर्थः । ते किमाहुरिति उच्यते—पूर्वमक्षरं संहितायाः पूर्वरूपं, उत्तरमुत्तररूपं, यस्त्वनयोः पूर्वोत्तररूपयोरन्तरेण मध्येऽवकाशः सा संहिता इति । अवकाशस्त्वाकाशो वायुर्वा । पूर्वमक्षरं पृथिवी, उत्तरमक्षरं द्यौः, इत्येवं पश्यतः आदावेवोक्तं फलमिहानूद्यते—स य इत्यादि । अक्षरावकाशविज्ञानमात्रं तु सर्वेषामध्येतॄणामस्तीति स य एवमेतां संहितां वेदेति फलवचनमन्यथाऽनर्थकं स्यात् । तस्मात्तदेव फलमिहानूद्यते, नापूर्वम् । अस्यामेव तु संहितायां कंचिद्विशेषमवकाशे पश्यन्नाह ह्रस्वो माण्डूकेयः—अथ वयं ब्रूम इति । विशेषं विजानन् निर्भुजवक्त्रा इति प्रकृतसंहिताचार्यान्संबोधयन् इत्येवं आह स्म । पूर्वमेवाक्षरमित्यादि यथोक्तार्थमेव । अवकाशे त्वयं विशेषः— येनावकाशेनाध्येता श्रोता च संधिं संहितां विशेषेण मनसा वर्तयति जानाति, येन च स्वरास्वरविभागं, मात्राऽमात्रे च विभजते, सा संहिता, नावकाशमात्रमेव । इतरत्सर्वं पूर्ववत् ।

शंकर.

**अथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रः । अक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन् यथावर्णमाह । तद्याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण संधिविज्ञपनी साम तद्भवति । सामैवाहं संहितां मन्य इति । तदप्येतदृषिणोक्तम् । बृहस्पते न परः साम्नो विदुरिति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥ ५ ॥**

( १ ) ह्रस्वस्य माण्डूकेयस्यास्य पुत्रो मध्यमः प्रतिबोध्याः पुत्रः प्रातीबोधीपुत्रः तत्रैवं विशेषं दर्शयन्नाह । कः पुनरसौ विशेष इति उच्यते—पूर्वोत्तररूपे अक्षरे संहितायाः खल्विमे अविकर्षन् विश्लेषतया अनेकीकरणमकुर्वन् यथावर्णं वर्णयाथात्म्यमपरित्यजन्नाह । तत्रैवं याऽसौ मात्रा कालपरिमाणं पूर्वोत्तररूपयोर्मध्ये संधिविज्ञपनी यया परिमाण(भूत)या संधिर्ज्ञायते इत्यर्थः । सा च मात्रा साम समत्वं तद्भवति । सामैव समत्वमेव संहितां अहं मन्ये इति । यथावर्णोच्चारणकाले यत्समत्वं तदेव संहिता इतीमं पक्षं मन्त्रेण समर्पयति—मा न इत्यादिना । 'मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥' ( ऋसं. २।२३।१६ ) । मा दा इत्यध्याहार्यम् । नः अस्मान् इति मन्त्रदृक् विद्यारूपमात्मानमाह । स्तेनेभ्यः शिष्येभ्यः । के ते इति उच्यते—ये अभि द्रुहस्पदे आचार्यस्य अभिद्रोहस्थाने ये वर्तन्ते तेभ्यः स्तेनेभ्यो मा दाः मा देहीति प्रार्थयति । ते च स्तैन्यनिश्चयेन आचार्यं गमयितुं मायया अभिमुखीकरणाय शीलं येषां ते निरामिणः । रिपवः पापात्मानः । अन्नेषु भोग्येषु, इष्टार्थेष्वेवेत्यर्थः । जागृधुः अभिकाङ्क्षां कुर्वन्ति ये तेभ्यो बृहस्पते इति संबन्धः । केभ्यः पुनर्दातव्यमित्याह — देवानां यत्प्रयोजनं यागादि तदेव आ ओहते वितर्कयन्ति हृदि चिन्तयन्ति नित्यम् । किंच वि व्रयः संभजनकर्तारश्च, न च साम्नः समत्वादार्जवात् परः श्रेयोहेतुः अस्तीति विदुः । एभ्य एव अस्मान् देहीत्यर्थः । स य एतामित्यादि पूर्ववदनुवाद एव सर्वत्र । शंकर.

( २ ) 'पूर्ववर्णस्थितं यत्तद्रूपं पूर्वाक्षराभिधम् । वराहाख्यं हरेरन्यवर्णगं वामनाभिधम् । उत्तराक्षरसंज्ञं च वर्णयोरन्तरस्थितम् । अवनात् काशनाच्चैतदवकाशाभिधं हरेः । नृसिंहरूपमित्याहुर्निर्भुजास्यास्तथाऽवदत् । ह्रस्वो येनाक्षरोच्चारो मात्रासंधिस्वरात्मकः । व्यासरूपो हरिः साक्षात्संहितानामकस्त्विति । तत्पुत्रो मध्यमः प्राह सामोच्चारणकारणः । सामनामा वासुदेवः संहितानामवानिति ॥' इति च । मापयति त्रायति चेति मात्रा भगवान् । यथोच्चारितवर्णयोर्मध्यस्थितश्च । 'मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः' ( ऋसं. २।२३।१६ ) 'येषां नैतन्नापरं किंचनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् । अथो शमेनोपरता मनुष्या ये धार्मिणो ब्रूहि तेभ्यः सदा नः ॥' 'आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः' ( ऋसं. २।२३।१६ ) । अभि द्रुहस्पदे अभितो द्रोहस्य नित्यानिरतिशयदुःखस्यान्धतमसस्य योग्याः । 'ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः । शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः ।

कामक्रोधाभिभूतत्वादहंकारवशं गताः । याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः । ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः । वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते । तेषां तमःशरीराणां तम एव परायणम् ॥' इति मोक्षधर्मे भगवद्वचनात् एवंविधा एव स्तेनाः अभिद्रुहस्पदस्थाश्च । निरामिणः रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपताज्ञानेन नीचताविदः । त एव रिपवश्च तस्य । 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥' (भ. गी. ९।११, १२) इत्यादिवचनात् असुरादयः । अन्नेषु जागृधुः भोगमात्रगृध्नवः । येषामेतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः । ईशितव्ये विद्यमाने हीश्वरो भवतीति । न चापरं किंचित्परमापेक्षया ह्यपरमिति । किं तर्हि, किंचनैकं किमप्येकमेव वस्त्वस्ति, न परमपरं चेति तेषां पक्षः । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः । प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥' 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी' (भ. गी. १६।८,९,१४) इत्यादिवचनात् । ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो । 'अथ हेममासन्यं प्राणमूचुः' 'एष उ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म तस्या एष पतिः तस्मादु ब्रह्मणस्पतिः' (बृउ. १।३।७,२१) इत्यादिश्रुतेः एतादृशेभ्यो मा ब्रूहि । शमेन विष्णुनिष्ठया उप समीपे तस्मिन्नेव रताः । साम्नो विष्णोः परं किमपि न विदुः । तदेव देवानां त्रयः । सर्वदेवानां परतमं विष्ण्वाख्यं ब्रह्म हृदा व्योहृते । वासुदेवादिरूपेण वरं नियामकं चेति त्रयः । तेभ्यो ब्रूहि । 'वायुं विद्याः समासाद्य सर्वासां पतिमूचिरे । स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च ॥' इति च । 'सामनाम्ना श्रुतिर्यस्माद्विष्णुमाह ततः प्रियम् । तन्नाम विष्णोरिह तु संहितार्थे वदेद्यतः ॥' इति च । सामनाम्नः संहिताशब्दार्थत्वात् विष्णोस्तस्य नाम्नः श्रुतिसिद्धत्वात् च सामनाम्नो वासुदेवरूपसमाख्यासु पञ्चरात्रे पठितत्वाच्च तद्रूपं संहितानामकमिति युक्तं इत्यभिप्रायः । मध्व.

[यद्यपि द्वितीयाष्टके षष्ठेऽध्याये 'मा नः स्तेनेभ्यो... साम्नो विदुः' इत्येव पठ्यते, न तु 'येषां नैतत्' इत्यादि, तथाप्युपवेदगतसूक्ते 'येषां नैतत्' इत्यादेः पठितत्वादर्थानुगुण्याय तस्यात्रोदाहरणं बोध्यम् । तदुक्तमृग्भाष्ये 'मा नः स्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः' इति । श्रीनिवासीया]

बृहद्रथन्तरयोरुपासना वाक्प्राणसंहिताविषयिणी तारुक्ष्यर्षिकृता

**[1]बृहद्रथन्तरयो रूपेण संहिता संधीयत इति तार्क्ष्यः । वाग्वै रथन्तरस्य रूपम् । प्राणो बृहतः । उभाभ्यामु खलु संहिता संधीयते वाचा च प्राणेन च । एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्यः । एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्यः ॥**

अथेदानीं संहिताविषयं दर्शनान्तरमुच्यते वाक्प्राणयोः समुच्चयरूपेण । संहितायाः पूर्वरूपं वाक् मन उत्तररूपं प्राणः संहितेति भेदेन केवलस्य संहितात्वमुक्तं प्राणस्य । इह तु वाचा समुच्चितस्य संहितात्वमुच्यते । तत्रोभयसमुच्चितसंहितास्तुत्यर्थमिदमाह—'बृहद्रथन्तरयो रूपेणेति । प्रसिद्धं हि महत्त्वं बृहद्रथन्तरयोरुक्तम्—'बृहद्रथन्तराभ्यामिदमेव युक्तं यद्भूतं भविष्यच्चापि सर्वम्' इत्यादि । प्रसिद्धमहत्त्वेन च स्तुतिर्युक्ता, यथा त्वमिन्द्रस्त्वं विष्णुरिति, तद्वत् । बृहद्रथन्तरयो रूपेण वाक्प्राणाख्येन संहिता संधीयते इति तरुक्षस्यापत्यं तारुक्ष्य आचार्यो मन्यते । तत्र किं कस्य रूपमित्युच्यते—वाग्वै रथन्तरस्य रूपं, अग्निसंबन्धात् । वाचोऽग्निर्देवता । रथन्तरं चाग्निसंस्तुतं साम 'अग्निर्वै रथन्तरम्' इति । प्राणो बृहतः साम्नो रूपम् । बृहत्प्राणयोरादित्यत्वश्रुतेः प्राणस्य बृहत्त्वसिद्धिः । महत्त्वशब्दसंबन्धाद्वा बृहत्त्वं प्राणस्य । बृहत्त्वात् बृहच्छब्दश्च प्रयुज्यते साम्नि । उभाभ्यां वाक्प्राणाभ्यां बृहद्रथन्तररूपाभ्यां उ खलु संहिता संधीयते इति संहिता-

(१) ऐआ. ३।१।६.

महत्त्वं गमयति श्रोतुः श्रद्धार्थं, वज्रवैदूर्यमणिप्रोतं हिरण्मयं सूत्रमिति यद्वत् । वाचा च प्राणेन च । न हि तौ वाक्प्राणौ प्रत्याख्याय काचिच्छब्दप्रवृत्तिः । पुनः प्रस्तौति —एतस्यां वाक्प्राणसंहिताविषयायां ह स्म उपनिषदि, (तत्) ग्रहणनिमित्तमित्येतत्, संवत्सरं गाः रक्षयते तारुक्ष्यः । न केवलं प्रासङ्गिकमिति किंचिदाचार्यसकाशात् ज्ञानान्तरमुपात्तम् । किं तर्हि । एतस्यामुपनिषन्मात्रायां ह स्म किल संवत्सरं संवत्सरकालमात्रं गाः आचार्यस्य रक्षयते रक्षितवान् तारुक्ष्यः । शंकर.

**तदप्येतदृषिणोक्तम् । रथन्तरमा जभारा[1] वसिष्ठः । भरद्वाजो बृहदाचक्रे अग्नेरिति ॥ स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥**

तदेतत्संहितादर्शनं बृहद्रथन्तररूपमिति ऋषिणा मन्त्रेणाऽप्युक्तम् । तत्र बृहद्रथन्तरयोः स्तुत्यर्थमृचौ आनीते रथन्तरमा जभारेत्यादि । 'प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् । धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ अविन्दन्ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् । धातुर्द्युतानात्सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः ॥' (ऋसं. १०।१८१।१,२) । प्रथश्च नाम यस्य सप्रथश्च नाम यस्य घर्मश्च नाम यस्य इति चशब्दात् । सापेक्षत्वात् अविन्दन्निति द्वितीयमन्त्रगतेन पदेन संबन्धः । 'घर्ममभरन्' (ऋसं. १०।१८१।३) इति वा अन्यमन्त्रगतेन । मन्त्रान्तरगतपदस्य मन्त्रान्तरगतपदान्तरापेक्षत्वं एतत् घर्मे एवैकस्मिन् विनियोगे लिङ्गम् । आनुष्टुभस्य अनुष्टुप्छन्दोवन्मन्त्रसंस्तुतस्य हविषो हविः राज्ञोऽपि राजा इति यद्वत् । यत् रथन्तराख्यं साम वसिष्ठ ऋषिः आ जभारा आजहार आहृतवानित्यर्थः । वर्णव्यत्ययेन । कस्यचिन्महतः कर्मणः सिद्धये अङ्गत्वेन तथा इमे प्रथादयो घर्ममभरन् । किंनिमित्तं घर्माख्यं कर्म निष्पादितवन्तः इत्याह—धातुः, धाता सर्वस्य विधाता धातृनामा वा देवताविशेषः । धातुर्निमित्तं परिणामे (?) । किंविशिष्टो धाता इत्याह—द्युतानात् द्योतमानात् सवितुश्च सर्वस्य प्रसवितुः तन्नाम्नो वा अन्यस्मात् विष्णोः व्यापनशीलात् आसूर्यात् यावन्तो देवाः तन्निमित्तमित्यर्थः । न केवलं रथन्तरवदेव, बृहद्वच्चेति द्वितीयेन मन्त्रेण प्रदर्श्यते । अविन्दन् दृष्टवन्तः ते प्रथादयः अतिहितं अतिशयेन हितं स्थितम् । अथवा, निहितं अपिहितं गुहा गुहायां बुद्धौ । गुहायामिव वा धनाद्य पिहितं यत् दुर्विज्ञेयं यदासीत् तदविन्दन्नित्येतत् । किमविन्दन्नित्युच्यते— यज्ञस्य धाम तेजः वीर्यं सारं परमं प्रकृष्टं घर्माख्यम् । धातुर्द्युतानादिति अग्नेश्चेति पूर्ववत् । भरद्वाज ऋषिः बृहत्साम आचक्रे प्रयुक्तवान् कर्मसिद्धयेऽङ्गत्वेन । स य एतामित्यादि पूर्ववदुक्तार्थम् । शंकर.

[1] मध्व. जभारा (जभार).

कौण्ठरव्यकृता अवरपराख्योपासना संहिताविषयिणी

**वाक्प्राणेन संहितेति कौण्ठरव्यः । प्राणः पवमानेन । पवमानो विश्वैर्देवैः । विश्वे देवाः स्वर्गेण लोकेन । स्वर्गो लोको ब्रह्मणा । सैषाऽवरपरा संहिता । स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषा संहिता । स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदभिव्याहार्षन्नेव विद्यात् । दिवं संहिताऽगमत् । विदुषां देवानामेवं भविष्यतीति शश्वत्तथा स्यात् । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥**

अथेदानीं कुण्ठरवस्यापत्यं कौण्ठरव्य आचार्यः संहितामिमां वेदयते— यथा पूर्वपूर्वमक्षरमुत्तरोत्तरेण संहितं, तथा वाक् प्राणेन संहिता संधिता आश्लिष्टेति । प्राणवियुक्ताया वाचोऽनुपपत्तेः । प्राणश्चाध्यात्मिको बाह्येन पवमानेन वायुना संहितः । स पवमानो विश्वैर्देवैः संहितः, विश्वेषां देवानां वाय्वात्मकत्वात् । विश्वे देवाः स्वर्गेण लोकेन संहिताः, तदालयत्वात् । स्वर्गो लोको ब्रह्मणा वेदेन । वेदविहितानुष्ठानाद्धि स्वर्गो लोकः प्राप्यते । ननु ब्रह्मशब्देन हिरण्यगर्भः परं वा इह कथं नोच्यते इति गम्यते । परं तावन्नोच्यते, अप्रकरणात् । नापि हिरण्यगर्भः, फलत्वेनाश्रवणात् । यदि हिरण्यगर्भो ब्रह्मशब्दः स्यात् , फलश्रुतौ ब्रह्मणा संधीयते इत्यवक्ष्यत् ।

न चैवमवोचत् । तस्माद्ब्रह्मशब्देन वेद एवोच्यते । श्लिष्टं चाक्षरं स्वर्गलोकसाधनं, विधायकत्वाद्वेदस्य । सैषा यथोक्ता अवरपरा, अवरा च परा च अवरेण च परेण च संहिता तस्मादवरपरा संहिता । स यो हैतामवरपरां संहितां वेद उपास्ते स एवं हैव प्रजादिस्वर्गान्तेन फलेन उत्तरोत्तरेण संधीयते । यथैषा संहिता एवमेवेत्यर्थः । किंच स एवं संहिताविद्यावित् परेण वोपसृतः प्रयुक्तः चोदित इत्येतत् । स्वेन वाऽर्थेन, स्वप्रयोजनप्रयुक्त एवेत्यर्थः । तदभिव्याहरेत् उच्चारयेत् संहितां तदभिव्याहार्षन् उच्चारयन्नेव विद्यात् जानीयात् । कथं, इयं मयोच्चार्यमाणा संहिता दिवं स्वर्गलोकं अगमत् गतवती । उक्तं हि ' स्वर्गो लोको ब्रह्मणा ' इति । यस्मादेव स्वर्गेण लोकेन संधिता संहितेत्येवं विद्वान् , तस्माद्यथोक्तं फलं विदुषां संहितादर्शनवतां देवानां, त एव हि देवा एवं विद्वांसः, तेषामेव भविष्यतीति शश्वत् नित्यं आपेक्षिकमित्येतत् , तथा तथैव स्यात् , न शङ्का कर्तव्येत्यर्थः । स य इत्याद्युक्तार्थम् । ध्रुवफलत्वदर्शनेन संहिताविज्ञानस्तुतिप्रसङ्गागतमिदं पुनर्वचनं, न फलान्तरम् । शंकर.

पञ्चालचण्डकृता संहितोपासना प्राधान्येन वाग्विषयिणी

**वाक् संहितेति पञ्चालचण्डः । वाचा वै वेदाः संधीयन्ते । वाचा छन्दांसि । वाचा मित्राणि संदधति । वाचा सर्वाणि भूतानि । अथो वागेवेदं सर्वमिति । तद्यत्रैतदधीते[1] वा भाषते वा वाचि तदा प्राणो भवति । वाक्तदा प्राणं रेळ्हि । अथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति । प्राणस्तदा वाचं रेळ्हि । तावन्योऽन्यं रीळ्हः । वाग्वै माता । प्राणः पुत्रः ॥**

वाक्प्राणेन संहितेति वाक्प्राणयोर्भेदेन संहितात्वमुक्तं, इतरेतरान्तर्भावात् वागेकैव संहितेति पञ्चालचण्ड आचार्यो मन्यते । कथमित्याह—वाचा वै वेदाः संधीयन्ते इत्यादि ऋज्वर्थम् । वागेवेदं सर्वं, तस्मात् वागेव संहिता । ननु वाचोऽप्यतिशयवान्प्राणः, वाचोऽपि प्राणयुक्तत्वात् । बाढम् । तथापि संहिताव्यापारकाले वाच उत्कर्षदर्शनात् प्राणस्य च स्वव्यापारस्थस्यैवोत्कर्षदर्शनात् वाच एव संहितात्वं युक्तं इत्येतद्दर्शयन्नाह—तत् यत्र यस्मिन् काले । तदेतदिति क्रियाविशेषणम् । अधीते स्वाध्यायादि, भाषते वा लौकिकशब्दं, वाचि शब्दव्यापारे एव तदा तस्मिन्काले प्राणो भवति प्राणवृत्तिर्भवतीत्यर्थः । न नासिकया प्राणनं स्वव्यापारं कुर्वन् दृश्यते । वाक् तदा प्राणं रेळ्हि, वाचा लीढ इव स्वरूपेण तदा प्राणो न गृह्यते इति वाक् तदा प्राणं रेळ्हीत्युच्यते । यथा ग्रस्तः पिण्डः पुरुषेण । यत्पुनः प्राणस्य प्राधान्यं, वाचो गुणभावः, संहिताकालादन्यत्रैव, न शब्दकाले । कथमित्युच्यते—अथ पुनर्यत्र तूष्णीं वा भवति स्वपिति वा शब्दोच्चारणमकुर्वन् , प्राणे तदा वाग्भवति । ( संहितोच्चारणे ? ) प्राणस्तदैव वाचं रेळ्हि, न शब्दोच्चारणकाले प्राणस्य प्राधान्यम् । तस्मात् वागेव संहिता इति पञ्चालचण्डः । प्रासङ्गिकमिदं पूर्वोत्तरानुपयोगि । तावन्योऽन्यं रीळ्हः । इतरेतरानुप्रवेशवचनं कौषीतकिनां प्रातर्दनाग्निहोत्रसूचनार्थम् । इहापि वक्ष्यति—' वाचि हि प्राणं जुह्वमः प्राणे वा वाचम् ' ( ऐआ. ३।२।६ ) इति । यदा शब्दव्यापारादुपरमते वाक् तदा प्राणं प्रसूता इव भवतीति वाग्वै मातेत्युच्यते । प्राणश्च वाक्प्रसूत इव तदा स्वव्यापारस्थः प्रकटीभवतीति वाचः पुत्रः प्राणः । पुत्रं प्रति माता गुणभूता, पुत्रश्च प्रधानः इत्यर्थः । शंकर.

**तदप्येतदृषिणोक्तम् । एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥**

प्राण एवेदं सर्वं इत्येतद्युक्ततरं पक्षं मन्यमानः ऋचाऽपि दर्शयन्नाह—तदप्येतदृषिणोक्तम् । एतस्मिन् प्राणदर्शने व्यवस्थित ऋषिः अनेन मन्त्रेण अपश्यं इत्यात्मानं श्लाघयन्नाह— ( ' एकः सुपर्णः ' ऋसं. १०।११४।४ ) एक एव न द्वितीयः संपन्नोऽस्य सुपर्णः शोभनपतनः सुगतिरित्येतत् । सः किम् । समुद्रं सर्वप्राणिहृदयाकाशं 'अन्तः समुद्र' इति दर्शनात् , अन्त-

[1] मध्व. दधीते वा ( दधीते ).

रिक्षं वा । 'स उत्तरस्मादधरं समुद्रं' इति मन्त्रवर्णात् अन्तरिक्षं समुद्रशब्दवाच्यं, संमोदन्तेऽस्मिन्भूतानीति । आविवेश । स एव सुपर्णः वाय्वात्मा देवः इदं सर्वं प्राणिजातमनुप्रविश्य प्राणभूतः सर्वं विश्वं द्रष्टव्यं भुवनं वि चष्टे विविधं चष्टे पश्यति । तं अहं देवं आत्मानं पाकेन परिपक्वेन मनसा ज्ञानेन अपश्यं दृष्टवानस्मि अन्तितः अन्तिके स्वहृदये । अहो, तं च एतं माता वाक् रेळ्हि ग्रसति आस्वादयति वत्समिव गौः । स च उ रेळ्हि मातरं वाचं प्राणः वत्स इव मातरं गाम् । ब्राह्मणेन मन्त्रान्त्यपादेन च प्रातर्दनमग्निहोत्रं सूचितम् । स य एवमित्यादि पूर्ववत् ।

शंकर.

अदितिनाम्नी उपासनाविषयभूता प्रजापतिसंहिता

**अथातः प्रजापतिसंहिता । जाया पूर्वरूपम् । पतिरुत्तररूपम् । पुत्रः संधिः । प्रजननं संधानम् । सैषाऽदितिः संहिता । अदितिर्हीदं सर्वं यदिदं किंच पिता च माता च पुत्रश्च प्रजननं च । तदप्येतदृषिणोक्तम् । अदितिर्माता स पिता स पुत्र इति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति सर्वमायुरेति ॥ ६ ॥**

**इति श्रीमदैतरेयतृतीयारण्यके प्रथमोऽध्यायः ॥**

अथ अनन्तरं प्रजापतिविषया संहिता फलवती, अतः सोच्यते । कथम् । जाया संहितायाः पूर्वरूपमित्यादि ऋज्वर्थम् । सैषा अदितिः अदनात् अदीनत्वाद्वा । साक्षात्प्रजापतिरूपैव सर्वात्मिका संहिता । कथमित्याह—यस्माद्धि अदितिः इदं सर्वं समस्तम् । किं पुनस्तत्सर्वम् । यदिदं किंच यत्किंचिदिदं पिता च माता चेत्यादि । प्रजननान्तस्यैव ग्रहणं सर्वस्योपलक्षणार्थम् । तदप्येतदृषिणोक्तम्—'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥' (ऋसं. १।८९।१०) । अदितिर्द्यौः स एव पिता पुत्रश्च । विश्वे देवा अदितिः पञ्च जनाः गन्धर्वाः पितरो देवा असुरा रक्षांसि, निषादान्ता वा वर्णाः । किंच अदितिरेव जातं उत्पन्नं जनित्वं च जनयितव्यं च, जनिष्यदित्यर्थः । वर्तमानमर्थप्राप्तं गृहीतमेव, उभयग्रहणात् । सर्वात्मिका हीयं संहिता, अदितिरूपत्वात् । स य एतामित्याद्युक्तार्थम् । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् । शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयतृतीयारण्यकभाष्ये प्रथमोऽध्यायः ॥

(२) 'देवता पूर्ववर्णस्य लक्ष्मीरेव प्रकीर्तिता । नारायणस्तूत्तरस्य तौ वाक्प्राणाभिधौ मतौ । मध्यस्थः संहितानामा सोऽर्धनारीपुमात्मकः । वेदात्मकत्वाद्वाङ्नाम्नी लक्ष्मीरेव प्रकीर्तिता । प्राणनामा प्रणेतृत्वात्साक्षान्नारायणः स्वयम् । रमित्यानन्द उद्दिष्टः संभोग्यं थमुदाहृतम् । विष्णुभोग्या रतितरा लक्ष्मीरेव रथन्तरम् । नारायणो बृहत्त्वात्तु बृहन्नामा प्रकीर्तितः । रथन्तरस्य बृहतो देवते चैव तावुभौ । वाक्प्राणसंस्थितौ चैव ताभ्यामेव हि संधितम् । लक्ष्मीनारायणं रूपं संहितानामकं शुभम् । एतां विद्यामवाप्तुं हि वत्सरं गा अरक्षत । तार्क्ष्य एतावन्मात्रं च समुद्दिश्य न चापरम् । संहितादेवता बह्व्य इति कुण्ठरवात्मजः । द्वयं द्वयं देवतानां मिलितं हरिशर्ववत् । संहितानामकं तत्र वर्णमध्यस्य देवता । तयोरेकं देवतयोः परमन्यत्तथाऽवरम् । अवरस्य परस्यापि संयोगात्संहिता तु सा । प्रोक्ताऽवरपरेत्येव वाक्प्राणाख्यौ रमाच्युतौ । संहितैका तथैवान्या केशवो वायुसंयुतः । वायुः स पवमानाख्यो देवताश्चाखिला अपि । तृतीया संहिता प्रोक्ता देवतास्ताः सशंकराः । चतुर्थी संहिता प्रोक्ता शंकरो ब्रह्मणा सह । पञ्चमी संहिता चैव संहिता मोक्षदा इमाः । प्रथमायां द्वितीयायां विष्णुरेव परो मतः । तृतीयायां वायुरेव चतुर्थ्यां सर्वदेवताः । विरिञ्च एव पञ्चम्यामवरा इतरे ततः । प्रथमायां संहितायामवरो वामभागगः । द्वितीयायां तु परमस्तृतीयायां तथाऽवरः । चतुर्थ्यां परमश्चैव पञ्चम्यां वामगोऽवरः । अवरायाः परान्ता यदेताः सर्वाश्च संहिताः । ततोऽवरपराः प्रोक्ता

नैवोक्तास्ताः परावराः । अभिमानी द्युलोकस्य शिवः सर्वस्य लोकनात् । द्योतनाच्च यदि ब्रूयान्मन्त्रमेतमथापि वा । आत्मार्थेऽथ परार्थे वा चिन्तयेदेवमञ्जसा । विद्वांसो देवता यस्मात्सम्यक्तेन महत्फलम् । तेषामेव हरिश्चैव संहितारूपकः प्रभुः । अगमद्देवलोकं हि कर्तुं देवेष्वनुग्रहम् । इति चिन्तयतस्तेषां प्रसादात्फलमञ्जसा । पञ्चालचण्डो वाचं तु ब्रह्माणीं हि सरस्वतीम् । मन्यतेऽस्याः पुत्रवच्च देवं नारायणं प्रभुम् । वेदैर्हि व्यज्यते विष्णुः सा च वेदाभिमानिनी । प्राणस्थो भगवान्विष्णुः प्राणनामा प्रणेतृतः । ब्रह्मणोऽपि पिता नित्यं भगवान् पुरुषोत्तमः । उपचर्यते पुत्र इति वेदैर्यद्व्यज्यते हरिः । सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि । प्रजापत्याख्यशर्वेण प्रोक्ताऽन्या संहिताऽपि हि । विष्णुरेवादितिर्नाम सर्वस्यात्ता यतः प्रभुः । स एव पितृसंस्थस्तु पातृत्वात्पितृनामकः । देवतोत्तरवर्णस्य मातृस्थो मातृनामकः । माननात्पूर्ववर्णस्य देवतेति प्रकीर्तितः । पोषकत्वात्संधिनामा वर्णयोरन्तरस्थितः । स एव पुत्रसंस्थश्च पुत्रनामा जनार्दनः । त्राणात्पूतित एवासौ वर्णसंधानकर्मणि । संधाननामा संधानकर्तृत्वात्पुरुषोत्तमः । प्रजातिकर्मसंस्थश्च स एव प्रजनाभिधः । जनकत्वात्परो विष्णुरेवं विष्णुर्हि संहिता । वासुदेवादिरूपेण चतुर्धैवं व्यवस्थितः । स एव दिवि संस्थश्च द्युनामा क्रीडनात्प्रभुः । अन्तरेवेक्षणाच्चैव सोऽन्तरिक्षोऽन्तरिक्षगः । पृथिवी पृथिवीस्थश्च प्रथितत्वाज्जनार्दनः । मुख्यार्थत्वात्सर्वनाम्नां सर्वदेवाभिधो हरिः । विश्वे देवा इति प्रोक्तो बहुधा तेषु संस्थितः । ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः । गां धारयंश्च गन्धर्वो गन्धर्वेषु व्यवस्थितः । माननान्मानुषो नाम मानुषेषु स्थितो हरिः । पालनात्पितृनामाऽसौ पितृष्वेव व्यवस्थितः । रतेः प्राणेऽसुराख्यश्च सोऽसुरेषु व्यवस्थितः । एवं पञ्चजनेषु स्थो हरिः पञ्चजनाभिधः । जातनामा जातसंस्थः प्रादुर्भूतगुणत्वतः । जनिक्रियास्थितश्चासौ जनित्वमिति गीयते । जनिं यस्मात्तवयति तवनं हि प्रकाशनम् ॥' इति च । 'प्रथश्च सप्रथश्चैव राजानौ मत्स्यदेशजौ । यापयामासतुर्विष्णोर्हविर्नाम्नो रोचिर्मखे । अनुष्टुब्देवता यस्तु नृसिंहो जगतोऽस्य च । स्वमुखे हवनादेव हविरित्यभिधीयते । तस्मिन्यज्ञे वसिष्ठस्तु चतूरूपाज्जनार्दनात् । आजहार श्रियं देवीं रथन्तरवराभिधाम् । चतुर्मूर्तिः स्तुतस्तेन प्रेषयामास तां श्रियम् । सा चास्मै प्रददौ विद्यां प्रददौ च पुनर्हरिम् । धातेत्युक्तोऽनिरुद्धस्तु प्रद्युम्नस्तु द्युनामकः । वासुदेवः प्रसविता सर्वस्य प्रसवाद्विभुः । संकर्षणो विष्णुनामा प्रणेतृत्वाद्बलादपि । चतूरूपं परं विष्णुं राजानौ प्रथसप्रथौ । भरद्वाजो वसिष्ठश्च ध्यात्वाऽविन्दत्परात्परम् । यजनीयो यजुर्नामा विष्णुः संकर्षणाभिधः । जीवानां स्कन्दनादेव स्कन्नः प्रद्युम्न उच्यते । प्रथमो वासुदेवस्तु देवयानोऽनिरुद्धकः । प्राप्यो देवैर्यतो नित्यमनिरुद्धाभिधो हरिः । तस्मादेवं चतुर्मूर्तेः स्तुतिसंतोषिताद्धरेः । आजहार भरद्वाजो रूपं नारायणाभिधम् । तद्बृहन्नामकं विष्णोश्चातुरात्म्यात्समुद्गतम् । भरद्वाजमुपागम्य प्रादान्मोक्षवरं परम् । चतुर्मूर्तिः स भगवानग्निरित्यभिधीयते । अग्र्यत्वात्सर्वभूतानामेवं चत्वार एव ते । अविन्दंस्तं चतुर्मूर्तिं साक्षान्नारायणं प्रभुम् । गुहायां संस्थितमपि ह्यतीव हितमस्य च । सर्वज्ञत्वाद्यज्ञनाम्नो विष्णोस्तेजः परं हि तत् । तस्मादेव चतुर्मूर्तेः सूरिप्राप्यत्वहेतुतः । सूर्यनाम्नोऽहरन् घर्मनामानं तं नृसिंहकम् । घर्षणात्सर्वलोकस्य नृसिंहो घर्म उच्यते । निर्गत्य स चतुर्मूर्तेर्विप्रक्षत्राभिसंस्तुतात् । प्रथादीनां चतुर्णां च पुरुषार्थचतुष्टयम् । दत्त्वा जगाम भगवान् स्वकीयां तनुमेव च । वसिष्ठाच्च भरद्वाजाद्धोत्रध्वर्यौ नृपौ तु तौ । यथेष्टसिद्धिं संप्राप्तौ सम्यगिष्टाज्जनार्दनात् ॥' इत्याद्यृग्वेदसंहितायाम् । यस्य प्रथ इति नाम स च हविर्नाम्नो विष्णोर्हविर्यत् अयत् । अटो लोपेनान्तर्णीतणिच्त्वेन अयापयदित्यर्थः । एवं सप्रथ इति यस्य नामाऽसौ हविर्यदिति पृथक् संबन्धः । आ चक्रे आकारयामास । 'अविन्दन्ते' 'तेऽविन्दन्' (ऋसं. १०।१८१।२, ३) इत्यध्यात्माधिदैवतयोरुभयत्रापि भगवन्तं अविन्दन्नित्यर्थः । 'देवयानं गुहा यत्' इति वचनात् । 'चतुःशिखण्डां तु रमां द्विरूपो भगवान् हरिः । परमानन्दरूपत्वात् सुपर्ण इति नामकः । रमयामास तस्यां च निषण्णः

सर्वदेव सः । एक एव च विष्णुः स प्रविष्टः क्षीरसागरम् । सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा । परिपक्केन मनसाऽपश्यमित्याह तं त्वजः । मातेव व्यञ्जकत्वात् तं प्राणस्थं वाक् सरस्वती । लिहते लिह्यत इव प्राणस्थेन तु सा सदा । स्वयं तु भगवान् विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि । नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि च ॥' इत्यादि च । मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये तृतीयप्रपञ्चके प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः

संहिताक्षरविषयं अहःसंमितं प्रजापत्युपासनम्

प्राणो वंश इति स्थविरः शाकल्यः । तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः । तस्यैतस्याऽऽत्मनः प्राण ऊष्मरूपम् । अस्थीनि स्पर्शरूपम् । मज्जानः स्वररूपम् । मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्था रूपम् । इति ह स्माह ह्रस्वो माण्डूकेयः । त्रयं त्वेव न एतत्प्रोक्तम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टि शतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद । अह्नां सायुज्यं सरूपतां सलोकतामश्नुते । पुत्री पशुमान् भवति । सर्वमायुरेति ॥ १ ॥

(१) अथेदानीमहःसंमितं प्रजापतिदर्शनं संहिताक्षरविषयं वक्तव्यमित्यारभ्यते, संहितापदक्रमविषयदर्शनस्योक्तत्वात् युक्तं तत्संबन्ध्यक्षरविषयमपि दर्शनं वक्तुं इति । अनुव्याहारप्रसङ्गेन 'प्राणो वंश इति विद्यात्' ( ऐआ. ३।१।४ ) इत्युपन्यस्तं, तदिहावसरप्राप्तमनिर्णीतमित्याह—प्राणो वंश इति स्थविरः शाकल्यः । युवाऽप्यन्यः शाकल्योऽस्तीत्यत आह—स्थविर इति । शकलस्यापत्यं शाकल्यः संहिताचार्यः प्राणो वंश इति एवं मेने । तद्वंशसाधर्म्यमुपपाद्यते—तद्यथा लोके शालाया वंशः शालावंशः, तस्मिन् शालावंशे गृहधारणार्थे सर्वे अन्ये उपवंशाः समाहिताः स्युः भवेयुः, एवमस्मिन् मुख्ये प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरमिति सर्वोऽयं कार्यकरणात्मा समाहितः । सर्वं हि शरीरादि प्राणेनैव ध्रियते । योऽयं कार्यकरणसंघातलक्षण आत्मा, तस्यैतस्यात्मनः संहिताक्षराणां ये ऊष्माणः शषसहाः, तत् प्राणस्य रूपमध्यात्मम् । तथा अस्थीनि, स्पृष्टकरणाः स्पर्शाः कादयः, तेषां रूपमस्थीनि । अस्थ्नामन्तरो मज्जानः, ते स्वररूपं अकारादिस्वरूपमित्येतत् । मांसं लोहितं इत्येतदन्यदात्मनश्चतुर्थं प्राणादित्रयमपेक्ष्य अन्तःस्थानां यरलवादीनां रूपमित्याह ह्रस्वो माण्डूकेयः । स्वयं तु शाकल्यः त्रयं त्वेव नः अस्माकमिति एतत् । किं तत् । यत्प्रोक्तं कथितम् । तस्यैतस्य त्रयस्य अस्थ्नां मज्ज्ञां पर्वणामिति । एतस्यैव त्रयस्य रूपं नार्थान्तरं मांसादि । पर्वणां संग्रहणात्पर्वग्रहणेन प्राणो गृह्यते, प्रकृतत्वात् । अस्मिन् पक्षे अन्तःस्थाः स्पर्शेऽन्तर्भवन्ति इति मन्यते । चतुर्थं हि रूपं कल्प्यमानमहःसंमानातिरेकात् निरर्थकं मन्यते शाकल्यः । कथम् । यस्मात् इतः एकस्मात्पुरुषार्धात् त्रीणि शतानीति व्यवहितेन संबन्धः । षष्टि चास्थ्नां मज्ज्ञां पर्वणां च । तथा इतः इतरस्मादप्यर्धात् त्रीणि शतानि षष्टिश्च । तानि सर्वाणि समस्तानि सप्त शतानि विंशतिश्च भवन्ति । तथा संवत्सरस्य तावन्त एवाहोरात्राः । एवं स एष कार्यकरणसंघात आत्मा आध्यात्मिकोऽहःसंमानः । अह्नां संख्यारूपं मानं यत् तदेवास्य मानं इत्यहःसंमानः, अहःसंख्यासंमित इत्यर्थः । तं विशिनष्टि अन्यत्र प्रसङ्गो मा भूदिति चक्षुर्मयत्वादिना । चक्षुर्मयः चक्षुःप्रायः । सर्वशरीरगतचक्षुर्भिः पश्यति सर्वात्म-

---

(१) ऐआ. ३।२।१; मध्व. न्तस्था रूप ( न्तस्थरूप ).

त्वात्प्राणरूपेण, तेन चक्षुर्मयः। तथा सर्वत्र श्रोत्रमयः छन्दोमयः। छन्दोमयत्वमुक्तं 'प्राण ऊष्मरूपं' इत्यादिना। सर्वमेव हि छन्दो वेदः एतदेव यदुत ऊष्माणः स्पर्शाः स्वराश्च। स यः कश्चिदेवं यथोक्तमेतमहःसंमानं संवत्सरं प्रजापतिं कालात्मकं चक्षुर्मयाद्युक्तलक्षणं वेद, आत्मानं कार्यकरणसंघातं त्रिधा प्राणास्थिमज्जारूपेण प्रविभक्तं संहिताया ऊष्मस्पर्शस्वररूपिणं च परिकल्प्य दक्षिणोत्तरार्धतः अस्थ्यादीनां सप्त शतानि विंशतिश्चेति संवत्सराहोरात्रसंख्यातुल्यत्वेन संवत्सरं प्रजापतिं कालात्मानं च सर्वप्राण्यात्मानं चक्षुरादिमयमात्मानं अहमस्मीत्युपास्ते इत्यर्थः। तस्यैतत्फलं—अह्नां संवत्सरात्मन इत्येतत्। सायुज्यं ऐकात्म्यं सयुग्भावं, सरूपतां मन्दभावनामपेक्ष्य समानरूपतां भिन्नदेहत्वे, सलोकतां वा समानलोकतां मदन्तरां भावनामपेक्ष्य अश्नुते व्याप्नोति। पुत्री इत्यादि ऋज्वर्थम्।

शंकर.

(२) 'गृहस्याच्छादनादीनां मध्यवंशो यथाऽऽश्रयः। तथेन्द्रियाभिमान्यादिदेवानां वायुराश्रयः। तेषु सर्वेषु भगवान् बहुरूपो हरिः स्थितः। विष्णुनामाक्षरेष्वेवमन्येष्वपि तदर्थतः। प्राणनामाऽपि भगवान्प्राणस्थश्चोष्मसु स्थितः। ऊष्मनामा समर्थत्वात्स एव भगवान् हरिः। पूर्णत्वादात्मनामाऽसौ प्रतिमात्वादमुष्य तु। संघात आत्मशब्दोक्तो ह्यस्थिरश्चास्थिनामकः। अस्थिस्थितो हरिः स्पर्शसंस्थितः स्पर्शनामकः। स्पर्शहेतुत्वतः स्पर्शनामा स भगवान् हरिः। मज्जासु स्थः स मज्जाख्यो मदं जनयतीति ह। स एव स्वरसंस्थश्च स्वराख्यः स्वरतेः प्रभुः। प्रमाणं सारयेद्यस्मान्मांसाख्यो मांससंस्थितः। लोहिताख्यो रक्तवर्णो लोहितस्थो जनार्दनः। अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः। तत एव विभक्तानि संख्या तेषां पृथङ्न तत्। तस्मात्सप्त शतान्येव देहे विंशच्च तस्य हि। रूपाणि विष्णोर्भागे तु षष्ट्युत्तरशतत्रयम्। तान्येव विष्णो रूपाणि वत्सराहःसु सर्वशः। अहर्नामा च भगवानहार्यत्वात्प्रकीर्तितः। अहोभिः समसंख्यानि यस्मादध्यात्मगानि तु। रूपाणि विष्णोस्तेनायमहःसंमान उच्यते। पूर्णदर्शनशक्तित्वाच्चक्षुर्मय उदीरितः। तादृक्श्रवणशक्तित्वात्तथा श्रोत्रमयः स्मृतः। छन्दोमयः सत्यकामो मन्तृवक्तृबलात्मकः। एवंविद्वांस्तस्य रूपाण्याप्नोति ज्ञानपुत्रवान्। पीयमानं शमाप्नोति प्राप्याहर्नामकं हरिम्॥'

मध्व.

**अथ कौण्ठरव्यः। त्रीणि षष्टि शतान्यक्षराणाम्। त्रीणि षष्टि शतान्यूष्मणाम्। त्रीणि षष्टि शतानि संधीनाम्। यान्यक्षराण्यवोचामाहानि तानि। यानूष्मणोऽवोचाम रात्रयस्ताः। यान्त्संधीनवोचामाहोरात्राणां ते संधयः। इत्यधिदैवतम्। अथाध्यात्मम्। यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मम्। यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्मम्। एष ह वै संप्रति प्राणो यन्मज्जा। एतद्रेतः। न ह वा ऋते प्राणाद्रेतः सिच्यते। यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेत्। न संभवेत्। यान्त्संधीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम्॥**

अथेदानीं कौण्ठरव्यः अस्मिन्नेव संहितादर्शने विशेषं दर्शयन्नाह। कथम्। त्रीणि षष्टि शतान्यक्षराणां अकारादीनां, त्रीणि षष्टि शतान्यूष्मणां व्यञ्जनानां, त्रीणि षष्टि शतानि संधीनां, स्वराणां व्यञ्जनानां च संयोगास्तावन्त्येव। यान्यक्षराण्यवोचाम अहानि तानि, स्वराणामह्नां च व्यक्तत्वसामान्यात्। संवत्सरस्य त्रीणि षष्टि शतान्येव अहानि भवन्ति। स्वराः तथा। यान् ऊष्मणः अवोचाम रात्रयस्ताः, व्यञ्जनानां रात्रीणां च अव्यक्तत्वसामान्यात्। यान् संधीनवोचाम अक्षराणां स्वराणां च ते संधयः, अहोरात्राणां संधित्वसामान्यात्। इत्येतदधिदैवतं देवताविषयं संहितासंपद्दर्शनम्। अथ अनन्तरं अध्यात्ममुच्यते। यान्यक्षराण्यधिदैवतं अहानीत्यवोचाम अध्यात्मं तान्यस्थीनि। यानूष्मणोऽधिदैवतं रात्रय इत्यवोचाम अध्यात्मं मज्जानस्ते। एष ह वै यन्मज्जा स संप्रति प्राणः अञ्जसा, साक्षात्प्राण इत्यर्थः। कथं मज्ज्ञः प्राणत्वमित्युच्यते। एतद्रेतः योऽयं मज्जा। न ह वै ऋते विना प्राणाद्रेतः न सिच्यते। यद्यपि वै ऋते प्राणात् रेतः सिच्येत, व्याध्याद्युपहतस्य मन्दप्राणस्य रागवशात् विनाऽपि

(१) ऐआ. ३।२।२.

प्राणबलेन यदि सिच्येत, तत्सिक्तमपि योनौ पूयेत् विनश्येत्, न गर्भभावेन संभवेत्। मज्जातो रेतः सिच्यते प्राणबलवता। तस्मान्मज्जा प्राणः। मज्जप्राणयोरेकत्वमध्यात्ममुक्तम्। अथेदानीं प्रकृतमनुवर्तते। यान् स्वरव्यञ्जनानां संधीन् अहोरात्राणां संधय इत्यधिदैवतमवोचाम, पर्वाणि तान्यक्षराणामध्यात्ममत्र।

शंकर.

**तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति पञ्चैतञ्चत्वारिंशच्छतानि पञ्चैतस्तदशीतिसहस्रं भवति। अशीतिसहस्रं वा अर्कैलिनः। बृहतीरहरभिसंपादयन्ति। स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा। स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद। अक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते। पुत्री पशुमान् भवति। सर्वमायुरेति॥ २॥**

(१) तस्यैतस्य त्रयस्य। केषां त्रयस्येत्युच्यते—अस्थ्नां मज्ज्ञां पर्वणामित्येतेषां त्रयस्येत्यर्थः। तदेतत्संख्यया संकलिते शरीरे द्विधा प्रविभज्य प्रदर्श्यते। पूर्ववत् पञ्च शतानीति व्यवहितेन संबन्धः। चत्वारिंशच्च इतः शरीरार्धात्प्रविभज्य गण्यमानानामस्थ्यादीनां भवन्ति। तथा इतरस्मादप्यर्धात् पञ्च शतानि चत्वारिंशच्च। तच्चैतदुभयमशीत्यधिकं सहस्रं भवति। अनया च अशीतिसहस्रसंख्यया संवत्सरात्मानमादित्यमाप्नोति। कथम्। अशीतिसहस्रं वै प्रसिद्धा अर्कैलिनः संवत्सरस्य कालात्मनोऽवयवाः। अहानि त्रीणि षष्टि शतानि, तावत्य एव रात्रयः संधयश्चाहोरात्राणां, ते चाशीतिसहस्रं भवन्ति संख्यया। अर्कः आदित्यः कालनिर्माता। तस्मिन् लीयन्ते इत्यर्कैलिनः। एवं संख्यासामान्येन आदित्यमाप्नोति। किं च ता एता अहोरात्रसंधयो बृहतीः बृहत्यो महत्यः सर्वमहः मानुष्यादिकमभिसंपादयन्ति। न ह्यहोरात्राद्यनिष्पाद्यः कश्चित्कालविशेषोऽस्ति। एकाहद्व्यहाद्युपलक्षितं वा सर्वं कर्म अहःशब्दवाच्यं, महाव्रतीयं वा यदहःकर्म। अर्कैलिनः रश्मयः इष्टकाः ऋचो वा। अक्षरसंख्यया समं मानं यस्य क्रियते इत्यक्षरसंमानः। स एष संवत्सरात्मा प्रजापतिः पूर्वोक्त एव। चक्षुर्मय इत्याद्युक्तार्थम्।

शंकर.

(२) 'एवमुक्तप्रकारेण तस्य ह्यक्षरनामकम्। अशीत्युत्तरसाहस्ररूपं वर्णेषु संस्थितम्। विष्णुनाम्नोऽथ वाऽन्येषु पञ्चाशत्संख्यकेष्वपि। तावत्संख्यानि देहेषु पृथङ्मज्जाऽस्थिपर्वसु। रूपाणि विष्णोस्तावन्ति चेष्टकानि पृथक्पृथक्। अर्कस्थितबृहत्याख्यरूपाण्यह्नां च सर्वशः। संपादकानि तान्येव तान्यक्षरमितानि च। अस्थ्यादिस्थितरूपाणि तान्युपास्य विमुच्यते॥' इति च। तस्यैतस्यात्मनः तस्य शरीराख्यस्यात्मनो य आत्मा आदानादिकर्ता तस्य परमात्मन एतस्यास्थ्नां मज्ज्ञां पर्वणां मिलितानामपि विंशोत्तरसत्रशतत्वोक्तेस्तत्र विष्णुरूपाण्येवोच्यन्ते इति सिद्धम्। अस्थ्यादीन्येव चेदशीत्युत्तरसहस्राणि सन्ति हि वि ष् णु ष्णुरित्येतानि विष्णुनामगानि ऊष्माक्षरसंधिनामकानि तद्गतभगवद्रूपाणि मुख्यतस्तन्नामकानि। 'अहार्यत्वादहर्नामा रात्रिनामा रतिप्रदः। संधानात्संधिनामाऽसौ स्वयं नारायणः प्रभुः। संध्यूष्माक्षरगाण्यस्य विष्णो रूपाणि सर्वशः। संध्यारात्रिदिवाख्यानि साशीतिकसहस्रकम्। तान्येवास्थिषु मज्जासु पर्वस्वपि च सर्वशः। परज्ञानात्तु पर्वाणि विष्णो रूपाणि तानि हि। अस्थानान्मदनाच्चैव ह्यस्थिमज्जाभिधानि च। व्यक्तिर्मज्जासु तस्यैव प्राणो मज्जासु संस्थितः। मज्जैव रेतो भवति रेतसि स्थो विशेषतः। प्राणस्तेन हि तद्रेतो युक्तं प्राणेन सर्वदा। यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत्क्वचित्। विशेषप्राणसंबन्धवर्जितान्यत एव हि। न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि। विशेषेण स्थितः प्राणः प्राणे चैव विशेषतः। स्थितो नारायणो देवस्तस्मान्मज्जासु च स्थितः॥' इति च। मज्जास्वधिकसंनिधानज्ञापनार्थमिदं वचनम्। अशीत्युत्तरसहस्रवर्णानामभावाच्च तत्स्थविष्णुरूपाण्येव तत्संख्यानीति सिद्धम्। अर्के निलीनत्वेन अदृश्यत्वेन स्थिता भगवत्प्रादुर्भावा अर्कैलिनः। त एव शरीरे स्थित्वा सहस्रं बृहतीः संपादयन्ति। वाक्प्रेरकत्वाद्विष्णुनामार्थवत्त्वादेव च बृहतीसहस्रस्य तद्देवताश्चैतान्येवाशीत्युत्तरसहस्ररूपाणि एतान्येव अहःप्रवर्तकानि च।

अहःशब्देन यज्ञो दिवसश्च उभावप्यभिप्रेतौ । ' यज्ञानां दिवसानां च साशीतिकसहस्रकैः । विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा । बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः ॥' इति च । मध्व.

पुरुषचतुष्टयं, सर्वात्मा अहःसंमानः अक्षरसंमानश्च प्रजापतिः संवत्सरसंमाभत्वेनोपासनाविषयः

**चत्वारः पुरुषा इति बाध्वः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा । तस्य योऽयमशरीरः प्रज्ञात्मा स रसः । छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव । तस्यैतस्याकारो रसः । वेदपुरुष इति यमवोचाम येन वेदान् वेद ऋग्वेदं यजुर्वेदं सामवेदम् । तस्यैतस्य ब्रह्मा रसः । तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत् ॥**

अथोदानीं योऽहःसंमानः अक्षरसंमानश्च प्रजापतिः स सर्वात्मना पिण्डीकृत्य संवत्सरस्य संमानः संपादयितव्य इत्यारम्भः । अत्र हि सर्वसंहितासंपादनफलं संहितायाः सर्वात्मानुविधानतया संपादयिष्यति । चत्वारः पुरुषा इति बाध्वः । समस्तं जगत् साध्यात्माधिदैवतं चतुर्धा प्रविभज्य इह व्यवस्थितं स्वमात्मानं समस्तं संहितारूपं मन्यमानो बध्वस्यापत्यं बाध्वः ऋषिर्विद्वान् चत्वारः पुरुषाः, नातोऽतिरिक्तं किंचिदित्याह । के ते इति उच्यन्ते—शरीरपुरुषः छन्दःपुरुषः वेदपुरुषः महापुरुष इति । तानेतान् यथोपन्यस्तान् स्वयमेव व्याचष्टे श्रुतिः ऋषिरूपा— शरीरपुरुष इति यमवोचाम उक्तवन्तो वयमिति व्याचिख्यासया आह । योऽसौ शरीरपुरुषः सोऽयमेव । देह एव दैहिकोऽन्नरसमयो बाह्यो भूतात्मेत्यर्थः । तस्य च देहात्मनोऽन्नरसमयस्य पिण्डस्य योऽभ्यन्तरः अयमशरीरः, ततोऽन्यस्य शरीरस्य अभावादशरीरः । कोऽसौ । प्रज्ञात्मा प्रज्ञा प्रज्ञायते अनयेति बुद्धिः, सैवात्मा यस्य प्राणस्य सोऽयं प्रज्ञात्मा प्राण इन्द्रः । ' प्राणोऽस्मि प्रज्ञात्मा ' ( कौउ.३।२ ) इति हि विज्ञायते कौषीतकिनाम् । स देहात्मनो रस इव रसो यथा वृक्षस्य, प्राणापाये देहस्य शोषोपपत्तेः वृक्षस्येव । तेन हि रसभूतेन प्राज्ञेन प्राणात्मना सर्वलोको जीवति । छन्दःपुरुष इति यमवोचामेति पूर्ववत् । कः पुनरसौ छन्दःपुरुष इत्याह —अक्षरसमाम्नाय एव । अक्षराणां वर्णानां समाम्नायः अभ्यासः संहतिरित्यर्थः । अग्निमीळ इत्यादिः, नान्यः । तस्यैतस्य गायत्र्यादिच्छन्दोरूपप्रविभक्तस्य अक्षरसमाम्नायस्य छन्दःपुरुषस्य अकारो रसः । तथा चोक्तम्—' अकारो वै सर्वा वाक् ' ( ऐआ. २।३।६ ) इत्यादि । यथा हि रसेन वृक्षो व्याप्तः तथा अकारेण रसभूतेन सर्वा वाक् व्याप्ता । वेदपुरुष इति यमवोचाम येन वेदान् वेद । मनोबुद्धी एकीकृत्यायं निर्देशः येन वेदान्वेदेति । तदृग्वेदाद्यर्थविभागविज्ञाने कारणम् । मनोवृत्तय एव च अक्षरसमाम्नायोपाधिविशिष्टा ऋग्वेदादयः । तन्मनोरूपं सर्ववेदात्मानं हिरण्यगर्भं आत्मत्वेन गतो ब्रह्मा ऋत्विक्, स तस्यैतस्य वेदपुरुषस्य रसः । स हि मनसा त्रयीविहितं सर्वर्त्विजां कर्म रसेन इव प्रतिसंदधाति, तस्मात्स मनसो वेदपुरुषस्य रसः इत्युच्यते । यस्माद्वेदात्मानं सर्वविज्ञानसमाहाररूपमनोलक्षणमात्मानं आत्मत्वेन गतो ब्रह्मनिष्ठो वेदात्मैव साक्षात् , तस्मात् ब्रह्माणं ब्रह्मिष्ठमृत्विजं वृणीत कुर्वीत । तस्य ब्रह्मणो विशेषणम् —यो यज्ञस्य समस्तस्यैव उल्बणं, न्यूनमधिकमयथाकृतं च उल्बणमुच्यते । तद्यः पश्येत् , द्रष्टुं समर्थ इत्यर्थः । स हि तत् रसेनेव स्ववीर्येण समीकरोति, न त्वेकविद्यः । शंकर.

**महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्यां* भावयन्नन्यानि । तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् । तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति । तदप्येतदृषिणोक्तम् । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं**

(१) ऐआ. ३।२।३; अशंकर. १।१।२५, ३।३।४; अमध्व. १।२।१, ३।२।११.

* ' न्यैक्या भावयन् ' इत्यत्र ' न्येत्याभावयन् ' इति पाठः शंकरभाष्यतः स्पष्टं प्रतीयते ।

१ मध्व. न्यैक्या ( न्यैक्यानि ).

**सूर्यं आत्मा जगतस्तस्थुषश्चेति । एतामनुविधं संहितां संधीयमानां मन्य इति ह स्माह बाध्वः ॥**

महापुरुष इति यमवोचाम । कः( यः ?) पुनः सः, उच्यते—संवत्सर एव कालात्मा, सर्वजगज्जनिस्थितिलयहेतुत्वात् महत्त्वात्तस्य । स हि संवत्सरः कालात्मा अहोरात्रादिभिः परिवर्तमानः आयूंषि क्षपयन् प्रध्वंसयन् अवस्रंसयन् विनाशयन् एति गच्छति, कानिचिदन्यानि भूतानि, आभावयन् जनयन् वर्धयंश्च एति अन्यानि । तस्यैतस्य महापुरुषस्य संवत्सरस्यात्मनः असावादित्यो रसः, तन्निर्वर्त्यत्वात्कालस्य । स हि आदित्यः सर्वकालं व्याप्नोति रस इव वृक्षं, यथा वा दैहिकमात्मानं अशरीरः प्रज्ञात्मा । यस्मात् स हि आदित्यः कालनिर्मातृत्वात्सर्वभूतजनिस्थितिलयहेतुत्वात् सर्वेषामात्मा, अतः स यः पूर्वोक्तो दैहिकस्यात्मनो रसः अशरीरः प्रज्ञात्मा, यश्चासावादित्योऽधिदैवमण्डलाभिमानी, एतदुभयमेकमेव नार्थान्तरभूतं, अधिकरणभेदेन भिन्नमिव प्रत्यवभासमानं इत्येवं विद्यात् विजानीयात् । नदीस्रोतोवत् अविच्छिन्नप्रत्ययं तद्विजातीयैः प्रत्ययान्तरैरनन्तरितं धारयेत् आ तादात्म्याभिमानप्रत्ययोत्पत्तेः इत्येतद्वेदनशब्दार्थः । स हि तं ततो दृढीभवन् संतत्यन्तरकारणं प्रत्ययान्तरं विवर्तयन् यथाभूतवस्तुविषयत्वात् सर्वात्मभावं फलमुपजनयितुं एवं सति समर्थो भवति, नान्यथा सकृत्प्रयुक्तमात्र एव । तथा चोक्तम्—'तं तमेवैति कौन्तेय सदा तद्भावभावितः' ( भ. गी. ८।६ ) इति । तस्य आदित्यस्य सार्वात्म्यहेतुमाह—यस्मात्स हि सर्वात्मा, तस्मात् पुरुषंपुरुषं प्रति मां प्रति मां प्रति इत्येवं दूरव्यवहितमपि पुरुषं प्रत्यादित्यो भवति । तदेतत्सर्वप्राणादित्यात्मैकत्वदर्शनमुक्तं ऋषिणा मन्त्रेणापि । कथम् । चित्रं चायनीयं दर्शनीयम् । किं तत् । अनीकं मुखं, द्वारमित्येतत् । केषां तत् मुखमित्युच्यते—देवानां मित्रस्य वरुणस्य अग्नेः । सर्वेषां देवानां प्रदर्शनार्थे मित्रवरुणादीनां ग्रहणम् । सर्वासां हि देवतानां द्वारभूतः सविता, सर्वात्मत्वात् । तस्मिन् दृष्टे सर्वा देवता दृष्टा भवन्ति, तद्व्यतिरेकात्सर्वदेवतानां हि । तच्च उदगात् उद्गतं उदितं मां पश्येति ब्रुवदिव प्रतिपुरुषम् । किंच चक्षुः चष्टे पश्यत्यनेनेति सर्वस्य । तेन हि सर्वो लोकः पश्यति । यदि नोदियात्सविता सर्वं जगदन्धमभविष्यत् । आ अप्राः आपूरितवान् द्यावापृथिवी अन्तरिक्षं च त्रीन् लोकान् स्वेनैवात्मना । कोऽसौ । सूर्यः स्वीकरणाद्रसरश्मिप्रज्ञाप्राणानां सूर्यः । स च आत्मा सर्वप्राणिनां प्राणो जीवः जगतो जङ्गमस्य तस्थुषः स्थितवतः स्थावरस्य चेत्येतन्मन्त्रप्रकाशितं प्राणादित्यात्मैकत्वं इत्युक्तार्थदृढीकरणम् । इत्येवमेतां प्रकृतां संहितां संधीयमानां अनु विधीयते इत्यनुविधः सूर्यः आत्मा संहितावत्सर्वसंतानात् । स हि जगत्सर्वं आत्मत्वेन संतनोति, अतोऽसौ एतां संहितां अनु विधीयते । तामेतां संहितां अनु विधीयमानं अनुविधं सूर्यमात्मानं सर्वसंहितारूपं आत्मत्वेन मन्ये इत्याह स्म बाध्वः, एवमुक्तवान् किल अयमेव हि सर्वात्मा सर्वकर्माङ्गभूतत्वेन उपास्य इति ।

शंकर.

सर्वैः सर्वत्रैवोपास्यः ब्रह्मसंज्ञित आत्मा

**एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्याम् । एतं दिवि । एतं वायौ । एतमाकाशे । एतमप्सु । एतमोषधीषु । एतं वनस्पतिषु । एतं चन्द्रमसि । एतं नक्षत्रेषु । एतं सर्वेषु भूतेषु । एतमेव ब्रह्मेत्याचक्षते । स एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ॥ ३ ॥**

(१) तं एतमेव । हि इति प्रसिद्धावद्योतनार्थोऽयम् । यथोक्तमात्मानं नार्थान्तरभूतं केचित् बह्वृचाः शास्त्रकोविदाः महत्युक्थे शास्त्रे महदुक्थोपलक्षिते महाव्रतक्रतावित्यर्थः । तथा एतमेव अग्नौ सर्वप्रकारेऽपि चयनकर्मणि अध्वर्यवः एतमेव चिन्वन्ति उपासते च । अध्वर्यूणां हि तत्र कौशलम् । तथा एतमेव महाव्रते क्रतौ विशेषतश्छन्दोगाः स्तुवन्ति उपासते च । न केवलं कर्माङ्गत्वेनैवोपास्यः, किं तर्हि, सर्वात्मत्वेन च ।

कथमित्युच्यते—एतं अस्यां पृथिव्यां अभिमानिनं पृथिव्यहमस्मि सर्वस्य धारयिता इत्येवं स्थितमाचक्षते ब्रह्मविदः इति वक्ष्यमाणेन संबन्धः । तथा दिवि एतं दिव्यभिमानिनं, वायौ एतं वाय्वभिमानिनं, आकाशे एतं आकाशाभिमानिनं, अप्सु एतमभिमानिनं, ओषधीषु एतमभिमानिनं, तथा वनस्पतिषु एतं, चन्द्रमसि एतं, नक्षत्रेष्वेतं, किं बहुना, सर्वेषु भूतेषु जङ्गमेषु स्थावरेषु च एतमेवाभिमानिनं सर्वात्मानं हिरण्यगर्भं प्राणं प्रज्ञात्मानमेतं ब्रह्मेत्याचक्षते कथयन्ति ब्रह्मविदः । स एष संहितात्मा संवत्सरसंमानः संवत्सरेण संमानमस्य इति संवत्सरसंमानः । कोऽसौ । यः पूर्वोक्तः अहरक्षरसंमानत्वेन । स एवायं पुञ्जीकृत्य उक्तः सर्वात्मा संवत्सरात्मत्वेन नान्यः इत्येतद्दर्शयति—चक्षुर्मय इत्यादिना । तमेनं एवंविधं एकमेतदिति विद्यात् इति प्रकरणार्थः पूर्वोक्त एव । स य एवमेतं संवत्सरसंमानमित्यादि वक्ष्यमाणार्थम् । अन्यथा दुग्धदोहा इत्याद्यपवादो निर्विषयः स्यात् ।

शंकर.

(२) 'दर्शयति च'—दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात् 'सर्वे वेदा यत्पदमामनन्ति' (काठ. २।१५) इति । तथा 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इति च ।

ब्रशंकर. ३।३।४

(३) 'संसारबाधितैः प्राप्यो बाध्यो वायुरुदाहृतः । स हि मोक्षप्रदो विष्णोराज्ञया स उवाच ह । सर्वदेहाभिमानी तु शारीरपुरुषः शिवः । सर्ववर्णाभिमानी च शेषोऽसौ छान्दसः पुमान् । सर्ववेदाभिमान्येव गरुडो वेदपुरुषः । संवत्सराभिमानी तु ब्रह्मैव हि महापुमान् । सारः शिवस्यानिरुद्धनामा देहस्थितो हरिः । अइत्याक्रियते यस्माद्वासुदेवो ह्यकारकः । शेषस्य सारः स विभुर्ब्रह्माख्यो ज्ञानबृंहणात् । संकर्षणाख्यस्तु हरिः सारः स गरुडस्य च । ब्रह्मत्विक्संस्थितश्चासौ तस्माद्ब्रह्मिष्ठमेव हि । कुर्याद्ब्रह्मर्त्विजं तस्मिन्विशेषेण स्थितो हरिः । ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः । स आदित्यसंस्थश्च स ह्यादिर्जगतो विभुः । ततश्च सर्वभूतेषु जीवानां विनियामकः । स एवादित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः । स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः । संकर्षणो वासुदेव इत्येकः स चतुर्विधः । प्रतिपूरुषमेतस्मात्स्थितो विष्णुर्नियामकः । आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रतिप्रति । स चेतनतमत्वाद्धि चित्रमित्यभिधीयते । मुख्यत्वात्सर्वदेवानामननादीशितृत्वतः । कर्तृत्वादथ नीकं (अनीकं?) स उदैत्सूर्यस्थितो हरिः । ज्ञानदत्वाच्च देवानां चक्षुरेतेन दर्शनात् । आपूरयत्सर्वलोकान् प्रकाशेन जनार्दनः । आदानात्सर्वजीवानामत्तृत्वात्प्रलयेऽपि च । आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च । एवं चतुर्विधो विष्णुः संहितादेवता यदा । ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम् । प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः । तदा तु संहितां सम्यक् मन्येऽहं संधितामिति । आह वायुरिमं विष्णुं बृहत्युक्थस्य देवताम् । महाव्रताख्यस्तोत्रस्य चेष्टकानां च देवताम् । एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम् । संवसद्रतिदातृत्वाद्ब्रह्मा संवत्सराभिधः । नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः । अनन्तमूर्तिर्ब्रह्माऽसावनन्तजगदास्थितः । नियामकस्तस्य विष्णुस्तावद्रूपेषु संस्थितः । तत्संवत्सरसंमानः स विष्णुः परमेश्वरः ॥'

मध्व.

(४) 'ब्रह्म ततमम्' इति सर्वगतत्वमुक्तं विष्णोः । तच्च 'तस्यैतस्यासावादित्यो रसः' इत्यादिना आदित्यस्य प्रतीयते इत्यतोऽब्रवीत्—'सर्वत्र प्रसिद्धोपदेशात्' । 'स यश्चायमशरीरः प्रज्ञात्मा' इत्यादिना सर्वत्रोच्यमानो नारायण एव । 'तदेव ब्रह्म परमं कवीनाम्' 'परमं यो महद्ब्रह्म' 'वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत् । स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः ॥' इति तस्मिन्नेव प्रसिद्धब्रह्मशब्दोपदेशात् ।

१।२।१

स्थानापेक्षया परमात्मनो भेदात् अनुग्राह्यानुग्राहकभाव इत्यत आह—'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' । स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् । 'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' इति श्रुतिः । 'एकरूपः परो विष्णुः सर्वत्रापि न संशयः । ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते ॥' इति

मात्स्ये । 'प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ' इति च भागवते ।

अमध्व. ३।२।११

उक्तोपासनकर्तुः कश्चिन्निषेधः

**दुग्धदोहा अस्य वेदा भवन्ति । न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थानमिति । तदप्येतदृषिणोक्तम् । यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थामिति । न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थानमित्येतत्तदुक्तं भवति । तस्मादेवंविद्वान्न परस्मा अग्निं चिनुयात् । न परस्मै महाव्रतेन स्तुवीत । न परस्मा एतदहः शंसेत् । कामं पित्रे वाऽऽचार्याय वा शंसेत् । आत्मन एवास्य तत् कृतं भवति ॥**

दुग्धदोहा इत्याद्यपवादः पूर्वविषयः प्रासङ्गिक उच्यते । यस्त्वेवं अक्षरादिसमानं विद्वान् अध्वर्युरुद्गाता होता वा पितुराचार्याच्च अन्यस्मै महाव्रते अग्निं चिनुयात् , महाव्रतेन वा स्तुवीत, शंसेद्वा बृहतीसहस्रं, तं प्रति एषोऽपवादः । दुग्धदोहाः, दोहो वीर्यं दुग्धं अपनीतं येषां वेदानां ते इमे दुग्धदोहाः निर्वीर्याः अस्य अध्वर्योरुद्गातुर्होतुर्वा भवन्ति । निर्वीर्या वेदाः संपद्यन्ते कर्मविषया इत्यर्थः । किंच तस्य एवमयुक्तकारिणः अनूक्ते अदृष्टार्थे स्वाध्यायाध्ययनेऽपि भागः फलं नास्ति । जपस्वाध्यायाद्यपि निष्फलं संपद्यते इत्यर्थः । अपि च न वेद सुकृतस्य पुण्यकृतस्य पन्थानं न विजानाति । अन्यदपि पुण्यकृतं कर्म निर्वीर्यं भवतीत्यर्थः । यदेतत् ब्राह्मणोक्तमपवदनं तदेतदृषिणाऽप्युक्तम् । ( ऋसं.१०।७१।६ ) । यः अध्वर्य्वादिः तित्याज त्यक्तवान् सचिविदम् । सहभूतः सन् सर्वदा आत्मना सर्वं वेत्तीति सचिवित्, यथा राज्ञः । तं सचिविदं सखायं समानं ख्यानं समानेऽन्तःकरणे ख्यानं प्रथमं दर्शनमस्येति सखायः सखेव वा नियोगात् , तं सखायं स्वात्मानं त्यक्तवान् । परार्थे चयनेन स्तवनेन शंसनेन वाऽपि स्वाध्यायेऽपि भागः फलं नास्ति, किमुत तद्विहितकर्मणि । यत्किंचित् शृणोति धर्मशास्त्रादि तदपि अलकं वृथैव शृणोति । श्रुतमपि निष्फलं संपद्यते इत्यर्थः । किंच ' न हि प्रवेद सुकृतस्य पन्थां ' इत्यस्य संक्षेपेण अर्थमाह ब्राह्मणम्—पन्थां पन्थानं, इत्येतत् तदुक्तं भवतीति । तस्माद्यथोक्तं अयं आत्मानं विद्वानध्वर्युः परस्मै अग्निं न चिनुयात् । तथा उद्गाता महाव्रतेन न स्तुवीत । वचनप्रतिषेधोऽपि तथैव । तथा होता नैतदहः शंसेत् महाव्रतीयेऽहनि । यस्मात् उक्तोऽपवादः । कामं यदिच्छेत् पित्रे वा आचार्याय वा शंसेत् । तथापि अकरणे न दोषः । सचिवित्त्यागदोषः पित्राचार्यविषयेऽपि प्राप्तः इत्यत आह— आत्मन एव आत्मार्थमेव तत् पित्राचार्ययोः शंसनं कृतं भवति । तथा स्तवनं चयनं च । प्रासङ्गिकोऽयमपवाद उक्तः ।

शंकर.

(१) ऐआ. ३।२।४; अशंकर. २।१।१४, ३।२।४; रामानुज. ३।२।६; मध्व. पन्थानमिति । तदप्येत (पन्थामिति । तदप्येत ); अमध्व. १।२।२, १८, १।३।४२, २।१।२३; श्रीकर. ३।२।६; बलदेव. ३।२।४.

अरिष्टदर्शनानि

**स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विहीयेते । चन्द्रमा इवादित्यो दृश्यते । न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठा । व्यस्तः पायुः । काककुलायगन्धिकमस्य शिरो वायति । संपरेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत् करणीयं मन्येत तत्कुर्वीत । यदन्ति यच्च दूरक इति सप्त जपेत् । आदित्प्रत्नस्य रेतस इत्येका । यत्र ब्रह्मा पवमानेति षट् । उद्वयं तमसस्परीत्येका । अथापि यत्र च्छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत । छिद्रां वा छायां पश्येत् । तदप्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येत् । विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयाताम् । तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत । तद्यथा बदरकाणि संपतन्तीव दृश्यन्ते ।**

१ मध्व. वादित्य एक ( वादित्ये एक ).

तानि यदा न पश्येत् । तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णौ उपशृणुयात् । स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिः । तं यदा न शृणुयात् । तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा । अमेघे वा विद्युतं पश्येत् । मेघे वा विद्युतं न पश्येत् । महामेघे वा मरीचीरिव पश्येत । तदप्येवमेव विद्यात् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत । तदप्येवमेव विद्यात् । इति प्रत्यक्षदर्शनानि ॥

अथ इदानीं अकर्माङ्गसंबन्ध्यात्मज्ञानार्थमुत्तर आरम्भः । अनन्तसंसारबीजाविद्यानिवृत्तिनिमित्तो हि परः पुरुषार्थः । सा च अविद्या न अत्यन्तनिवृत्ता इत्यतः परमात्मविज्ञानेन निवर्तयितव्येति । तत्र यद्यपि यथोक्तात्मवित्कर्मकृच्च, तथापि वक्ष्यमाणं परमात्मानमविज्ञाय म्रियते यदि ततो महती विनष्टिः, अप्राप्तपुरुषार्थत्वात् । अतो यावत्परमात्मवित् तावत् आत्मनो जीवन रक्षणीयम् । तद्विच्छेदसूचनारिष्टदर्शने च इदं करणीयं अस्योपदेष्टव्यं इत्यरिष्टदर्शनान्याह — स यश्चायमशरीरः प्रज्ञात्मा यश्चासौ आदित्यः एकमेतदित्यवोचाम । यद्युक्तं ततः किमित्युच्यते—तौ यत्र विहीयेते, तौ प्रज्ञात्मादित्यपुरुषौ यत्र यस्मिन्काले विहीयेते विगच्छेयाताम् । कदा पुनस्तयोर्वियोग इत्याह—चन्द्रमा इव आदित्यो दृश्यते, न रश्मयः प्रादुर्भवन्ति, तदा वियोगस्तयोः इत्यभिप्रायः । तदेतन्मरणसूचनं अरिष्टदर्शनम् । अस्य तदा सम्यक् परा इतः संपरेतः परलोकं प्रति गतो मुमूर्षुः अस्यात्मा चिरमिव दीर्घमिव न जीविष्यतीति विद्यात् इति प्रत्यरिष्टदर्शनं संबध्यते । स च अरिष्टदृक् यत्करणीयं कर्तव्यं मन्येत तत्कुर्वीतेति । किंच लोहिनी द्यौर्भवति यथा माञ्जिष्ठा मञ्जिष्ठाकारा मुमूर्षोः । व्यस्तं चास्य पायुः गुदद्वारं न संकोचयितुं शक्यम् । शिरश्चास्य काककुलायस्येव गन्धवत् वायति । शिरसोऽस्य काककुलायस्येव गन्ध उत्तिष्ठतीत्यर्थः । अरिष्टदर्शने किं करणीयमित्याह— 'यदन्ति यच्च दूरके' ( ऋसं. १।६७।२१ ) इति एतं मन्त्रम् जपेत् । 'आदित्प्रत्नस्य रेतसः' ( ऋसं. ८।६।३० ) इत्येका ऋक् । ऋज्वर्थम् । अथान्यदरिष्टदर्शनम् । यत्र छिद्र इवादित्यो दृश्यते । तद्विशेषणम् — रथनाभि(रिव) छिद्रवानिव आदित्योऽभिख्यायेत, आत्मनो वा छायां छिद्रां पश्येत् तदपि तत्रापि एवमेव यथोक्तं सर्वं विद्यात् एकैकस्मिन्नरिष्टदर्शने । अथापि आदर्शे वा उदके वा यत्र स्वच्छत्वात् प्रतिबिम्बोदयः खड्गादौ, जिह्मशिरसं कुटिलशिरसं वक्रशिरसं अशिरसं वा आत्मानं प्रतिबिम्बभूतं पश्येत् । विपर्यस्ते अधोमुखे वा कन्याके परेषामक्षिणि पूर्वोक्ते वा आदर्शादौ दृश्येयातां जिह्मेन वा वक्रेण वा तत्रापि पूर्वोक्तमेव करणीयम् । अथापि अपिधायाक्षिणी स्वाङ्गुलिभ्यामवष्टभ्य उपेक्षेत दिदृक्षेत, तद्यथा बटरकाणि गोनिःसृतबालपिण्डसदृशानि संपतन्तीव निर्गच्छन्तीव अक्षिभ्यां दृश्येते, तानि यदा न पश्येत् । अथापि अपिधाय कर्णौ उपशृणुयात् अङ्गुलिभ्यामवष्टभ्य कर्णौ घोषं शुश्रूषेत् । कीदृशमित्युच्यते — स एष घोषः अग्नेरिव प्रज्वलतो बहिः श्रूयते, रथस्येव आगच्छतः उपब्दिः उपनिर्घोषः, तं यदा न शृणुयात् शुश्रूषुः समाहितचित्तोऽपि । यत्र नील इवाग्निर्दृश्यते । नीलवर्णविशेषणम् — यथा मयूरग्रीवा इति । अमेघे वा विद्युतं पश्येत् , मेघे वा घनीभूते अनेकैरुपलभ्यमानां विद्युतं न पश्येत् , महामेघे वा सर्वतो व्याप्तेषु मेघेषु अप्रकाशे अन्येषां मरीचीरिव आदित्यरश्मीनिव प्रकाशं पश्येत् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत । तदप्येवमेव विद्यात् करणीयादि सर्वं यथा प्रथमेऽरिष्टदर्शने । इत्येतानि प्रत्यक्षारिष्टदर्शनानि ।

शंकर.

स्वप्नारिष्टदर्शनानि

अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति । वराह एनं हन्ति । मर्कट एनमास्कन्दयति । आशु वायुरेनं प्रवहति । सुवर्णं खादित्वाऽपगिरति । मध्वश्नाति । बिसानि भक्षयति । एकपुण्डरीकं धारयति । खरैर्वराहैर्युक्तैर्याति । कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति । स यद्येतेषां किंचित्पश्येत् । उपोष्य पायसं स्थालीपाकं श्रपयित्वा

**रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात् ॥**

अथेदानीं स्वप्नाः स्वप्ने अरिष्टदर्शनान्युच्यन्ते— पुरुषं कृष्णं वर्णतः। तस्यैव विशेषणं कृष्णदन्तं स्वप्ने पश्यति। किंच स एनं हन्ति स्वप्नदृशम्। एतावदरिष्टदर्शनम्। किंच वराह एनं हन्ति। अथापि मर्कट एनमास्कन्दयति शरीरं प्ररोहति। अथापि आशु वायुरेनं प्रवहति। आशु शीघ्रम्। सुवर्णं खादित्वा अपगिरति वमति पुनः। मध्वश्नाति। बिसानि पद्मादीनां नालानि भक्षयति। एकपुण्डरीकं पद्मं, रक्तमिति संप्रदायः, धारयति। खरैर्वराहैर्वा रथैर्युक्तैर्याति। अथापि कृष्णां धेनुं कृष्णवत्सां नलदमाली रक्तकुसुमग्रथितस्रग्वी सन् दक्षिणामुखो व्राजयति धेनुम्। स यद्येतेषामरिष्टदर्शनानां स्वप्ने किंचिदेकमपि पश्येत्तत्र इदं करणीयमुच्यते— उपोष्यैकरात्रं पायसं पयसि चरुं स्थालीपाकं स्थालीपाकविधानेन श्रपयित्वा रात्रीसूक्तेन आवापस्थाने प्रत्यृचं प्रधानाहुतीर्हुत्वा अन्येन अन्नेन गृहसिद्धेन ब्राह्मणान् त्र्यवरान् भोजयित्वा यथाशक्ति चरुं स्वयं प्राश्नीयात् हुतशेषम्।

शंकर.

आत्मज्ञानविधिः

**स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ॥ ४ ॥**

(१) अथेदानीं यत्फलं जीवितं तदिहात्मज्ञानं प्रस्तूयते- स यः आत्मा अतः अस्मात्कार्यकरणसमुदायात् एकैकस्मात् वागादेः प्रविभज्य असिकोशवत् अश्रुतः केनचित्, तथा मनसः प्रविभज्य केनचित् अमतः असंकल्पितः, अगतः अप्राप्तः यथा अमूर्तं मूर्तेन, अदृष्टः चक्षुषा, अविज्ञातः बुद्ध्या। यस्मादेवं तस्मात् अनादिष्टः केनचिदपि असौ इदमिति। कुतः पुनः अश्रुतत्वादिधर्मवत्त्वमात्मनः, कथं वा अश्रुतत्वादिधर्मवत्त्वे तद्विज्ञानमित्युच्यते—स हि श्रोता श्रवणक्रियाया निर्वर्तयिता। यस्मात् श्रोता एव श्रवणक्रियया श्रोतव्यस्य शब्दस्य कर्मभूतस्य व्याप्ता, स चेत् श्रवणक्रियया व्याप्येत श्रोता न स्यात्, श्रोतुरभावे च इतराणि कारकाणि न स्वव्यापाराय उत्सहेरन्, तस्मात् अश्रुतः। तद्विज्ञाने च तदेव श्रोतृत्वं लिङ्गम्। न हि श्रोतारमन्तरेण श्रवणक्रिया। तथा मन्ता मननक्रियायाः कर्ता। द्रष्टा दृष्टिक्रियायाः ( कर्ता। आदेशक्रिया ) कर्तृत्वात् आदेष्टा। स हि वाचा करणभूतया सर्वमादिशति। घोष्टा घोषयिता ताल्वादिव्यतिरेकेणापि स्तनयित्न्वादिरूपेण शब्दकर्तेत्यर्थः। तथा विज्ञाता बुद्ध्या। न केवलं सामान्यविज्ञातृत्वमेव, प्रकर्षेण च सूक्ष्मव्यवहितादीनां ज्ञाता प्रज्ञाता। सत्येवं श्रोतृत्वादिलिङ्गैः सर्वप्रकारेण केनचिदपि अविषयीकृतः सर्वानन्यत्वात् सर्वेषां भूतानां ब्रह्मादीनां अन्तरपुरुषः। अन्तरः अभ्यन्तरश्चासौ पुरुषश्च सर्वपूरणात् अन्तरपुरुषः। समः निर्विशेषः, सर्वदा सर्वभूतेषु निर्विकारत्वात्। आत्मा स्वं तत्त्वं सर्वजन्तूनामित्येवं विद्यात् विजानीयात्। अहमेव च पर आत्मा सर्वसंसारधर्मवर्जितः, न मत्तोऽन्यत्किंचिदिति जानीयात् इति वाक्यार्थः।

शंकर.

(२) 'य एनं वक्ष्यत्ययोग्येभ्यो योऽथ चैनं महाव्रते। कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथ वा। महाव्रतेन स्तोत्रेण स्तुवीतैनमथापि वा। महाव्रते चितिं वाऽपि कुर्याच्चास्य फलं श्रुतेः। सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति। प्रत्यक्षज्ञानिनोऽप्येतदानन्दह्रासकृद्भवेत्। प्रत्यक्षज्ञानिनो मोक्षो न कथंचिद्धि हीयते। आचार्यमेव तं विद्याद्गुणैर्यः स्वात्मनोऽधिकः। गुणाधिकस्य तेनैव शंसनादि न दुष्यति। अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपि वा। प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम्। अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत्। योग्या अस्याश्च विद्याया देवा ऋषय एव च। एकदेशज्ञानयोग्या मानुषा उत्तमा यदि। कर्मसंचयवेत्तारं त्यजेन्नारायणं हि यः। प्रीत्यैकदेशसंस्थत्वात्सखायमिति चोदितम्। न विद्यायाः फलं तस्य श्रुतं च नरकावहम्। नैव प्राप्नोति सुकृतं संत्यागात्परमात्मनः। मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम्। तत्समं वाऽधिकं वाऽपि ब्रूयादैक्यमथापि वा। ऐश्वर्यादिगुणानां वा ह्रासं नास्तित्वमेव वा। तत्प्रसादं विना मोक्षं ब्रूयाद्वा कस्यचित् क्वचित्। ऐक्यं वा ब्रह्मशर्वादे-

र्मुक्तावैक्यमथापि वा । व्यत्यासं चावताराणां जीवाभेदममुष्य वा । भेदज्ञानं तद्गुणानां तेन वाऽथ मिथोऽपि वा । तथैव तत्क्रियाणां च तद्रूपाणामथापि वा । असाम्यदर्शनं वाऽपि तद्गुणानां परस्परम् । देहदेहिविभेदं च तस्मिन्नवयवेषु वा । परस्परं भेददृष्टिस्तेन वा कुत्रचित् क्वचित् । दोषसंसर्गमस्यापि स्वतः परत एव वा । अज्ञानतो ज्ञानतो वा निर्देहत्वममुष्य च । तद्देहस्य प्राकृतत्वमचिदानन्ददेहताम् । प्रादुर्भावेष्वपि विभोर्देहत्यागोद्भवादिकम् । अज्ञानदुःखासामर्थ्यपारवश्यादिकं तथा । अतद्वशत्वं कस्यापि कदाचित्कचिदप्युत । परिमाणं बलादेर्वा तस्य विष्णोर्महात्मनः । भेदाभेददृशिर्वाऽस्य जीवैर्वा स्वगुणादिभिः । तर्कैस्तस्यापलापो वा तत्र रक्तेन चेतसा । त्यागानामेवमुक्तानां तर्काद्यैः साधनं तथा । अचिन्त्यविभवेऽप्यस्मिन्नसंभवनिरूपणम् । स एव मुख्यतस्त्यागो वासुदेवस्य कीर्तितः । रमाब्रह्मादिकानां च तारतम्यानभिज्ञता । संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम् । अस्मृतिर्वासुदेवस्य तद्भक्तानां च निन्दनम् । द्वितीय एष त्यागस्तु विष्णोरेव प्रकीर्तितः । निषिद्धकर्मकरणं विहितस्य च वर्जनम् । त्यागस्तृतीयो हि हरेश्चतुर्थोऽयोग्यपूरुषे । उपदेशः केशवस्य यथाशास्त्रोदितक्रमात् । आचार्यपित्रोरन्यत्र तथैव च महाव्रते । हौत्रौद्गात्राध्वर्यवाणि त्याग एवं चतुर्विधः । त्यागद्वयात्तु प्रथमात्प्राप्यतेऽन्धं तमः क्रमात् । तृतीयान्निरयप्राप्तिश्चतुर्थात्र दिवं व्रजेत् । उपदिष्टेऽपि यस्तत्त्वे संशयं कुरुते पुमान् । सोऽन्धं तमो व्रजेदन्यो निरयायैव गच्छति । स एव भगवान्विष्णुरेतैर्दोषैर्विना यदि । ज्ञायते मुक्तिदः साक्षान्नात्र कार्या विचारणा । यदि ज्ञानं नातिपक्वं सरागं च मनो भवेत् । तदा स्वर्गादिलोकाप्तिः संशयश्चेत्कचित् क्वचित् । आवृत्तिरेव संसारे यावन्निःसंशयो भवेत् । पुनरावृत्तिहीनं तु तमोऽन्धं मुक्तिरेव च । पूर्वं तु निःसुखं तत्र निर्दुःखं चापरं मतम् । निःशेषगुणहीनं च पूर्वं निर्दोषकं परम् । विमिश्रगतयस्त्वन्याः पुनरावृत्तिसंयुताः । असुरा देवता मर्त्या योग्या एतेषु च क्रमात् । न तेषां संकरोऽस्ति यथायोग्या हि तद्गतिः । मानुषेषूत्तमा सृतिभागिनः । नियमोऽयं नान्यथा स्यादच्छिद्रत्वं यथा भवेत् । दोषेऽथ वा गुणे वाऽपि तदा दैत्याः सुरा अपि । स्वां स्वां गतिं समायान्ति तावत्संसारभागिनः । अच्छिद्रत्वं नैव सर्वैः कदाचित्प्राप्यते यतः । सृष्टिस्थितिलयादीनां नोच्छेदस्तेन कुत्रचित् । तस्माद्दोषान् प्रहायैव विष्णुं सर्वोत्तमोत्तमम् । जानीयात्तेन मुक्तिः स्यादपरोक्षदृशेरनु । सूर्यमण्डलगो विष्णुर्देहे चक्षुषि संस्थितः । अनिरुद्धश्च हृदये न च भेदोऽनयोः क्वचित् । अन्येषामपि रूपाणामिति विद्याद्विचक्षणः । द्विरूपः स यदा विष्णुरपगच्छति देहतः । तदैव दुर्निमित्तानि जायन्ते नान्यदा क्वचित् । तस्मात्तेषां दर्शने तु कर्तव्यं पारलौकिकम् । सर्वमेव जपेच्चैव यदन्तीत्यादिका ऋचः । ऋग्भिः षड्भिर्वायुरेव पवमानादिनामकः । स्तूयते सोऽङ्गनेतृत्वादग्निरित्यभिधीयते । परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः । वायुः पुनाति यल्लोकान् सविता तेन कथ्यते । पवित्रं नाम साक्षात्तत्परं ब्रह्म जनार्दनः । प्रसादयित्वा तं विष्णुं तेन लोकान्पुनात्यसुः । ज्ञानाख्यप्रसवेनापि स्वयं वायुः पुनात्ययम् । प्राणाग्नेरर्चिषो देहे विततास्तेषु केशवः । अर्चिष्मान्विततो नित्यं वायुस्तेन पुनात्ययम् । यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः । मोचयित्वैव संसाराद्विष्णोर्लोके कृधीति च । आदित्प्रत्नस्येति विष्णुः स्तुत्यो वैकुण्ठलोकगः । आदित्यमण्डलस्थश्च साक्षान्नारायणः प्रभुः । उद्वयन्त्विति मन्त्रेण स्तुत्यो वायोरपीश्वरः । अपमृत्युभयं तस्य यदन्तीत्यृग्जपाद्व्रजेत् । कालमृत्युर्यदि भवेत्तथा जन्मादिकं भयम् । अन्याभिः कर्मभिः पूतो यत्र ब्रह्मेति वैष्णवम् । लोकं व्रजेत्तथाऽन्याभ्यां विष्णुर्मोक्षसुखप्रदः । इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च । सोमः सौम्यस्वरूपत्वात्पवमानश्च पावनात् । विष्णुः पुरातनत्वात्तु प्रत्नो रेतो महारतिः । देवत्रा देव एवासौ सर्वदेवेश्वरो यतः । सूर्यश्च सूरिभिः प्राप्यो नित्यानन्दो रमापतिः । देशतः कालतश्चैव गुणतश्चापि पूर्तितः । अत इत्युच्यते विष्णुः संततो ह्यत उच्यते । तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा । अत इत्युच्यते विष्णुः सम्यक् श्रुत्याद्यशक्यतः । पूर्णत्वाद्भगवान्विष्णुरश्रुतत्वादिनोदितः । अन्तःस्थः सर्वजीवानां

मकः। इति विद्यात्परं विष्णुं मुच्यते तेन संसृतेः॥' इत्यादि च। शरीरपुरुषादीनां प्राप्यत्वात्तदुपास्यत्वात्तेषां नियामकत्वेन तेभ्योऽप्युत्तमत्वेन तेषु स्थितत्वाच्च तेषां सार इत्युच्यते भगवान्। यदीं एव अलकं अरकं यत्किंचिच्छृणोति तत्सर्वमरतिरूपान्धतमःप्राप्तिकारणमेव तस्य भवति। तस्य हि सर्वरत्यभावो रतिविरुद्धदुःखं च पूर्णम्। परस्मै शंसनमात्रादरतिरेव, इत्यतः प्रस्तुते चतुर्थत्यागे तु 'न तस्य वाग्यपि भागो अस्ति' 'न हि प्रवेद सुकृतस्य पन्थाम्' इति दोषद्वयमेवेत्यवधारयति। न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानं इत्येतत्तदुक्तं भवतीति। अलकं शृणोतीति त्यागद्वयस्य मुख्यतस्तृतीयस्यापि नरकं शृणोतीति किंचिद्भवति। तौ यदैवास्माच्छरीराद्विहीयेते तदैवैतानि निमित्तानि पश्यन्तीति नियमः। न च तदा पश्यत्येवेति। वासेन रमयतीति वासरं विष्णुर्ज्योतिः। 'यत्र ब्रह्मा वेदवाक्यं व्याचक्षाणो मखैर्यजन्। सोमेन च सुतेनेशमास्ते लोके हरेर्हि सः॥' इति स्कान्दे। ग्राव्णा सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्यानन्दं जनयन् स्वरानन्दरूपो विष्णुः। दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः द्यौर्नाम वायुपत्नी। 'अजनयो मरुतो वक्षणाभ्यो दिव आ वक्षणाभ्यः' इत्यादेः। यह्वतीः स्यन्दमानाः। 'सर्वेष्टद जगत्प्राण मामादाय परिप्लव। यत्रासौ भगवान्विष्णुस्त्वं हि मोक्षप्रदः सदा॥' इति च। 'इन्दुरिष्टप्रदत्वाद्यो वायुरादाय गच्छति। इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा॥' इति च। 'अनन्यहेतुकं साक्षाद्भगवद्भक्तिरूपकम्। सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः। प्रमोदस्तद्विशेषोऽथो मुत्रामाऽत्यल्पभोगतः॥' इत्यृग्वेदसंहितायाम्। तमसः सकाशात् उद्गता वयं उत्तरं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तस्तमेव देवत्रा देवं देवविषयेऽपि देवमगन्म। तदेव ज्योतिष्ट्वेन उत्तरत्वेन च पश्यन्त इति दर्शने इत्थंभावविधानार्थं पूर्वम्। तथैवासौ भगवानुत्तमज्योतिः। न राजादिष्विवाविद्यमानभक्तिमात्रमिदमिति ज्ञापयितुं 'अगन्म ज्योतिरुत्तमम्' इति पुनर्वचनम्। 'अर्चिषोऽश्या वर्तुलास्तु नाम्ना बदरकाः स्मृताः' इति शब्दनिर्णये। 'बृहत्तमं मधु यदि सहापूपं प्रभक्षयेत्। स्वप्ने तस्याचिरान्मृत्यू रक्ताब्जे वा शिरोधृते॥' इति ब्रह्माण्डे। 'राज्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता। पायसेन हरेन्मृत्युं रात्रिसूक्तादकालिकम्। यदि कालिकमृत्युः स्यात्पदं सा परमं नयेत्। सहैव विष्णुना भक्तं विष्णोस्तद्देदिनं तथा। रतिदत्वात्परो विष्णुर्मुख्यतो रात्रिरुच्यते। तदाश्रयत्वाद्दुर्गाऽपि रात्रिरित्यभिधीयते। स्त्रीरूपः स परो विष्णुः पायसेष्टो हि मोक्षदः। तस्मादुभौ सहैवेज्यौ भक्त्या दुःस्वप्नदर्शने। बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्श ह। आयन्सर्वेषु लोकेषु धृतास्तेनैव हि श्रियः। नीचानुच्चांश्च जीवान्स ब्रह्मादीनुर्वपूरयत्। ज्ञानेन बाधतेऽज्ञानं स्वसारं स्वं तथाऽकरोत्। उषआख्यं शुक्लवर्णं प्रमदारूपमेव च। तमश्चापाकरोत्येव तदा सूर्यादिषु स्थितः। स नः स्वामी यदुदरे यमनाद्यामनामके। अविक्ष्महि वयं सर्वे वृक्षे यद्वत्पतत्रिणः। श्येनाख्यास्तु सुखीनत्वादासमन्तात्सुरोत्तमाः। पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिनः। ग्रामाख्या बहुलत्वात्तु दैव्या एव प्रकीर्तिताः। अर्थिनस्तु कृतार्थत्वान्मुक्ता एव श्रुताः श्रुतौ। ऊरीकृत्य प्रमाणत्वादूर्म्यः स भगवान् हरिः। वृकास्तेनैव निर्याप्या वृकाः क्रूरत्वतोऽसुराः। तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः। ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः। विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः। कृष्णं व्यक्तं तमोऽज्ञानमज्ञानां पेशलं (हि) तत्। तद्यातयत्यृणमिव भगवान् पुरुषोत्तमः। स एव चोषाः कथितः प्रकाशत्वाज्जनार्दनः। जयिनः स्तोममिव च ब्राह्मणाय यथा च गाः। उपाकरं तथा स्तोमं तवाहं तद्गृणीष्व च। द्यौरिति ज्ञानमुद्दिष्टं तद्व्यङ्ग्यत्वाज्जनार्दनः। दुहिता दिव इत्युक्त एवमर्थेन पूज्यते। रात्रीसूक्तेन भगवान् साक्षान्नारायणः प्रभुः। तत्संनिधानाद्दुर्गाया एषोऽर्थ उपचारतः। एवं स्तुतस्तथैवेष्टो भगवान्मोक्षदो भवेत्। यदन्तीत्याद्यृचः सर्वा अपि दुःस्वप्नदर्शने। जप्या एव विशेषोऽयं होमो दुःस्वप्नदर्शने। परोक्षज्ञानिनो विष्णुरापरोक्ष्यं व्रजेत् त्वरन्। अपरोक्षदृशः प्रीतः सुखाधिक्यं करोत्यजः। मुक्तस्य द्विविधैस्तस्माज्जपो योगश्च सर्वथा। कर्तव्यो न्यासिभी रात्रीसूक्तं जप्यं त्रिधोऽज्ञसा॥' इत्यैतरेयसंहितायाम्। मध्व

( ३ ) शुभाशुभफलप्राप्तिव्यपदेशात् न स्वप्नस्य मिथ्यात्वम् । अत एव प्रपञ्चस्यापि सत्यत्वमर्थात् सिद्धम् । श्रीकर. ३।२।६

वाग्विषयिणी उपासना

अथ खल्वियं सर्वस्यै वाच उपनिषत् । सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषदः । इमां त्वेवाऽऽचक्षते । पृथिव्या रूपं स्पर्शाः । अन्तरिक्षस्योष्माणः । दिवः स्वराः । अग्ने रूपं स्पर्शाः । वायोरूष्माणः । आदित्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शाः । यजुर्वेदस्योष्माणः । सामवेदस्य स्वराः । चक्षुषो रूपं स्पर्शाः । श्रोत्रस्योष्माणः । मनसः स्वराः । प्राणस्य रूपं स्पर्शाः । अपानस्योष्माणः । व्यानस्य स्वराः ॥

प्राणादित्यैकत्वप्रसङ्गेन अरिष्टदर्शनमुक्तं मरणसूचकं ‘ तौ यत्र विहीयेते ’ इत्यादि । मरणे च अमुख्यात्मविदः अकृतार्थतेति प्रासङ्गिकं मुख्यात्मविज्ञानमुक्तं संक्षेपतः । अस्य विस्तारो ब्राह्मणोपनिषदि भविष्यति । ( ऐआ. ३।२।६ ) । इह तु संहितोपनिषत्प्रकृता इति पुनः सैवानुवर्त्यते । पूर्वत्र संहिताविषयमेव दर्शनं अनेकविधमुक्तं विविधफलम् । अथेदानीं खलु सर्वस्यै सर्वस्या वाचः शब्दमात्रायाः लौकिक्या वैदिक्याश्च इयमुपनिषत्प्रस्तूयते । अधीयानो वा भाषमाणो वा इति च लिङ्गात् । याः काश्चन इमाः सर्वा ह्येवोपनिषदः प्रसिद्धाः सर्वस्या वाचः ताः । इमां त्वेवेह प्रस्तुतामाचक्षते संहितोपनिषद्विदः इतीयं प्रस्तूयते । सर्ववाग्व्याप्तेर्वा अस्याः । पृथिव्याः रूपं स्पर्शाः स्पृष्टकरणान्यक्षराणि कादीनि, स्पर्शसामान्यात् । अन्तरिक्षस्य स्वरूपमूष्माणः शषसहाः, कादिवत्स्पृष्टत्वाभावसामान्यात् । तथा दिवो रूपं स्वराः अकारादयः, प्रकाशसामान्यात् । किंच अग्ने रूपं स्पर्शाः, वायोरूष्माणः, आदित्यस्य स्वराः । पूर्ववदेव सामान्यम् । ऋग्वेदस्य रूपं स्पर्शाः, यजुर्वेदस्योष्माणः, सामवेदस्य स्वराः । अध्यात्ममपि चक्षुषः रूपं स्पर्शाः, श्रोत्रस्योष्माणः, मनसः स्वराः । स्वरमनसोः सर्वसंबन्धसामान्यमधिकम् । प्राणस्य रूपं स्पर्शाः, अपानस्योष्माणः, व्यानस्य स्वराः । यद्यपि सामान्यं सर्वत्र संपादयितुं शक्यं सत्त्वमात्रं, तथापि वचनादेव स्पर्शादीनां पृथिव्यादिभावो दृष्टो न सामान्यबलात्, इत्यतः सामान्यदर्शनेन यत्न आस्थीयते । एवं वाग्विषया उपनिषदुक्ता । शंकर.

उपासनाविषयभूता शरीररूपा दैवी वीणा, तदुपासकस्य जपविधिः

अथ खल्वियं दैवी वीणा भवति । तदनुकृतिरसौ मानुषी वीणा भवति । यथाऽस्याः शिर एवममुष्याः शिरः । यथाऽस्या उदरमेवममुष्या अम्भणम् । यथाऽस्यै जिह्वैवममुष्यै वादनम् । यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयः । यथाऽस्याः स्वरा एवममुष्याः स्वराः । यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शाः । यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती । यथा ह्येवेयं लोमशेन चर्मणाऽपिहिता भवत्येवमसौ लोमशेन चर्मणाऽपिहिता । लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति । स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति । भूमिप्राऽस्य कीर्तिर्भवति । यत्र क चार्या वाचो भाषन्ते विदुरेनं तत्र । अथातो वाग्रसः । यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत[1] तत्रैतामृचं जपेत् । ओष्ठापिधाना न कुलीदन्तैः परिवृता पविः । सर्वस्यै वाच ईशाना चारु मामिह वादयेत् । इति वाग्रसः ॥ ५ ॥

(१) अथ खलु इदानीं वाङ्निर्वर्तिका ( तंकदे ) दैवीवीणाविषयोपनिषत् सर्ववाग्व्याप्त्यर्थोच्यते । कारणेन हि कार्यं सर्वं व्याप्तं भवति । सर्ववाङ्निर्वर्तिका हीयं दैवी वीणा भवति । येयं शरीरलक्षणा सर्वदेवमयीव, अतो दैवी । तदनुकृतिः तस्याः देहरूपायाः दैव्या वीणाया अनुकृतिः अनुकरणमात्रं, इतरा मनुष्यप्रसिद्धा मानुषी वीणा लौकिकी भवति । कथं तदनुकृतित्वमित्युच्यते— यथा अस्याः दैव्याः वीणायाः शिरः, एवं अमुष्या मानुष्याः शिरः । यथा अस्याः उदरं, एवं अमुष्या अम्भणं पृथुत्वं, सुषिरत्व-

(१) ऐआ. ३।२।५.

१ मध्व. विरुरुचुषेत ( विरुरुचिषेत ).

सामान्यात् । यथा अस्याः दैव्याः जिह्वा, एवं अमुष्या वादनम् । वाद्यते मानुषी वीणा येन तत् वादनम् । यथा अस्याः अङ्गुलयः एवं अमुष्याः तन्त्रयः अङ्गुलयः, अङ्गुलिसामान्यात् । तन्त्रीणां मृदुतीव्रकरणार्थानि काष्ठानि तन्त्रयः । यथा अस्याः स्वराः उदात्तादयः षड्जादयो वा, एवं अमुष्याः स्वराः । यथा अस्याः स्पर्शनानि एवं अमुष्याः स्पर्शाः । यथा ह्येवेयं दैवी वीणा शब्दवती तर्द्मवती तर्ज(र्द)नवती च, एवमसौ शब्दवती तर्द्मवती । यथा ह्येवेय अध्यात्मवीणा लोमशेन चर्मणा स्वभावेनैव अपिहिता भवति, एवमसौ लोमशेन चर्मणा अपिहिता । इदानीं चर्मणा अपिधानं क्वचिदप्रसिद्धमित्याह—लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधतीति । स यः कश्चिदेतां दैवीं देवनिर्मितां यथोक्तां वीणां वेद तस्य एतत्फलमुच्यते—श्रुतवदनो भवति । श्रुतं वदनं वाक् प्रख्यातं अस्येति श्रुतवदनः । अथवा शुश्रूषितवाक् प्रियं वदन् इत्यर्थः । भूमिप्रा अस्य पृथिवीं पूरयति या सा अस्य कीर्तिर्भवति । यत्र क्व च यस्मिन्कस्मिंश्चिद्देशे आर्याः ब्राह्मणादयो वाचो भाषन्ते वाग्व्यवहारं कुर्वन्ति स्वाध्यायव्याख्यानादिलक्षणं, विदुरेव एनं तस्मिन्देशे । प्रख्यातयशा भवतीत्यर्थः । अथेदानीं दैवीविणाविदो यस्मात्सर्वरसानां स्वादुतमो वाग्रसः स पुरुषार्थं एष्टव्यः अतो वाग्रसः येन जपकर्मणा भवति तज्जपार्थो मन्त्रो वाग्रससाधनत्वात् वाग्रसः इत्यभिधीयते । यस्यां संसदि सभायां अधीयानो वा स्वगुणख्यापनाय, भाषमाणो वा अर्थसंयुक्तां वाचं न विरुरुचुषेत न विस्पष्टं स्वगुणैर्दीप्येत, तत्र स्वगुणदीप्तिं यदि कामयते तत्र एतामृचं जपेत् । ओष्ठापिधाना न ओष्ठाभ्यामपिहितेव । नशब्दः उपमार्थे । कुलीदन्तैः घनीभूतैः परिवृता सती पविः तीक्ष्णा, पविवदतिपट्वीत्यर्थः । सर्वस्यै सर्वस्याः शब्दरूपाया वाचः ईशाना स्वामिनी । जिह्वादिलक्षणा वाक् सर्वशब्दनिर्वर्तिका, अतो युक्तं तस्याः सर्वशब्दं प्रतीशितृत्वम् । तदभावे हि मूकत्वमुपलभ्यम् । सा चारु शोभनं मां दैवीं वीणां वादयेत् वादयतु इह अस्यां संसदि । वाचा वाद्यमानो वा अधीयानो भाषमाणो वा अत्यर्थं दीप्यते अयं तथेत्यभिप्रायः । अथवा नकारः प्रतिषेधार्थ एव । ओष्ठापिधाना कुलीदन्तैः परिवृता च सती न पविः न तीक्ष्णा न पट्वी मदीया वाक्, अतोऽहं प्रार्थये । सर्वस्यै वाच इत्यादि समानमन्यत् । इत्येष वाग्रसप्राप्तिसाधनो मन्त्रो वाग्रसशब्दवाच्योऽभिहितः । दैवीवीणायाः स्पर्शोष्मस्वराः सर्ववाग्रूपाः पृथिव्याद्यधिभूताधिदैवाध्यात्मचक्षुरादिस्वरूपा इत्येवं दर्शनं कर्तव्यं इत्येष वाक्यार्थः । फलं तु संधीयत इत्यादि सर्वत्र द्रष्टव्यम् । अत्रैव प्रासङ्गिको वाग्रसः । शंकर.

( २ ) अथ सर्ववाग्विषया विद्योच्यते । विष्णुनामार्थत्वात्सर्ववाचाम् । पूर्वोक्ता अपि सर्ववागुपनिषद एव । तथापि मुख्यत एव सर्ववाग्विषयत्वाद्वक्ष्यमाणामेव सर्वस्यै वाच उपनिषदिति सर्वेऽप्याचक्षते । 'पृथिव्यादिस्थितो विष्णुः पृथिव्याद्यभिधानवान् । स्पर्शादीनां देवताऽसौ क्रमेणैव प्रकीर्तितः । तस्य विष्णोरयं देहो वीणा साक्षात्प्रकीर्तिता । दैवी वीणा ततः सेयं लोकसिद्धा तु मानुषी । ब्रह्मादिदेहान्यो वेद विष्णोर्वीणेति भक्तितः । विद्यापूर्णसुखः स स्याद्भूमिपूरितकीर्तिमान् । विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत् । ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम् । ओष्ठापिधानेत्येषा ह्यृक्सारो वाचः प्रकीर्तितः । विष्णोर्हि वाचि संस्थस्यैवौष्ठावेतौ पिधानवत् । कुलीति चोक्तो भगवान् प्रलीनाशेषकुत्सितः । पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः । सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत् ॥' इति च । नेत्युपमार्थम् । ओष्ठावपिधानवदस्येति । न च विष्णोरन्या सर्वस्या वाच ईशाना । स हि मुख्यतः सर्वेश्वरः । तस्यैव प्रस्तुतत्वात् वक्ष्यमाणत्वाच्च । 'श्रियः पतिर्यज्ञपतिर्जगत्पतिर्गिरां पतिर्लोकपतिर्धरापतिः' ( २।४।२० ) इति भागवते । 'यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ्न वेद' (बृउ. ३।७।१७) इत्यादिश्रुतिश्च । स्त्रीलिङ्गत्वं देवतेत्यादिवदपि युज्यते । स्त्रीरूपत्वाच्च ।

मध्व.

स्विष्टकृत्संहिताविषयिणी उपासना, संहितोपनिषद्विद्याफलम्

**अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवो-**

(१) ऐआ. ३।२।६; ब्रशंकर. ३।४।९; भास्कर.

पोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्रंसत संवत्सरः । स च्छन्दोभिरात्मानं समदधात् । यच्छन्दोभिरात्मानं समदधात्तस्मात्संहिता । तस्यै वा एतस्यै संहितायै णकारो बलम् । षकारः प्राण आत्मा । स यो हैतौ णकारषकारावनुसंहितमृचो वेद । सबलां सप्राणां संहितां वेद । आयुष्यमिति विद्यात् । स यदि विचिकित्सेत् । सणकारं ब्रवाणी३ अणकाराँ३ इति । सणकारमेव ब्रूयात् । सषकारं ब्रवाणी३ अषकाराँ३ इति । सषकारमेव ब्रूयात् ॥

अथेदानीं न्यूनतातिरेकदोषसमीकरणायैव स्विष्टकृत्संहिताविषयमिदं दर्शनान्तरं विधित्सन्नर्थवादमाह — अस्मै पुत्राय शिष्याय वा एष कृष्णो नाम हरितस्यापत्यं हारितः एतत् वाचो विषयं ब्राह्मणं वाग्ब्राह्मणं, संहिताविषयमित्येतत् । इवशब्दोऽनर्थकः । उपोदाहरति ह । किं पुनस्तत् तेनोदाहृतं ब्राह्मणमित्युच्यते — प्रजापतिः प्रजानां पतिः पर ईश्वरः अन्यो वा कश्यपादिः प्रजाः स्थावरजङ्गमादिलक्षणाः सृष्ट्वा उत्पाद्य श्रान्तः सन् विविधं अस्रंसत व्यस्रंसत विस्रस्ताङ्गसंधिः संवृत्तः संवत्सरः संवत्सरमात्रं संवत्सरो वा प्रजापतिः । स प्रजापतिः विस्रस्तसंधिः मर्मप्रतिसंधानार्थं छन्दोभिः वेदैः आत्मानं समदधात् संधारितवानित्यर्थः । यत् यस्मात् छन्दोभिरात्मानं समदधात् तस्मात् संधारणात् संहिता उच्यते छन्दांसि । संहितानिर्वचनमेतत् । तस्यै तस्याः वै एतस्यै एतस्याः संहितायाः णकारो बलं, णकारेण बलवती संहिता । वायोर्हि प्राणस्य बलवतः कार्यं स्पर्शः । स्पृष्टकरणश्च णकारः । बलवच्च रूपं णकारस्य । षकारः प्राणः आत्मा । तथाचोक्तं—'य ऊष्माणः स प्राणः' इति । तेन षकारेण सप्राणा च संहिता । स यः कश्चित् ह एतौ संहितायाः बलप्राणोक्तौ णकारषकारौ अनुसंहितं संहितामनु यत्र यत्राक्षराणां संधानं तत्र तत्र बलप्राणभूतौ णकारषकारौ अनुगतौ । न हि बलप्राणावन्तरेण अक्षराणां संधानमुपपद्यते यथाङ्गानाम् । उक्तं ह्यर्थवादेन 'प्रजापतिर्व्यस्रंसत संवत्सरः' इति । स च बलवत्या संहितया छन्दोभूतया आत्मनोऽङ्गानि विस्रस्तानि पुनः संधाय बलवान् प्राणवान् आयुष्मांश्च संवृत्तः । एवमन्योऽपि अनुसंहितं ऋचो वेद सः सबलां सप्राणां चात्मस्वरूपभूतां संहितां वेद । यदहं सर्वां संहितामनुगतौ णकारषकारौ संहिताबलप्राणभूतौ वेद, तदेतद्विज्ञानं ममायुष्यमित्येव विद्यात् विजानीयात् । स एवंवित् संहिताऽध्येता यदि विचिकित्सेत् संशयीत अधीयानः । कथम् । सणकारं णकारयुक्तं संधानं, बलवदित्यर्थः । ब्रवाणी३ इति । प्लुतिर्विचिकित्सायाम् । अणकारं बलवर्जितमिति । तदेवं बलवदबलवत्संहिताविवक्षाविचिकित्सायां सणकारमेव बलवदेव संधानं कुर्यात् ब्रूयात् । एवं हि सति सर्वां संहितां अनु णकारोऽनुगतः स्यात् । न ह्यन्यथा णकारस्य स्वेनैव रूपेण सर्वसंहिताव्याप्तिरुपपद्यते । यदि णकारस्य वर्णस्यैव प्रयोगे विचिकित्सा इति, तथापि युक्तं चेत् ग्राह्यम् । तथा सषकारं सोष्मरूपं ब्रवाणी३, अषकारमित्यत्रापि सर्वं यथोक्तं योज्यम् ।

शंकर.

ते यद्वयमनुसंहितमृचोऽधीमहे । यच्च माण्डूकेयीयमध्यायं प्रब्रूमः । तेन नो णकारषकारावुपाप्तौ[1] । इति ह स्माह ह्रस्वो माण्डूकेयः । अथ यद्वयमनुसंहितमृचोऽधीमहे । यच्च माण्डूकेयीयमध्यायं प्रब्रूमः । तेन नो णकारषकारावुपाप्तौ । इति ह स्माह स्थविरः शाकल्यः । एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः[2] । किमर्था वयमध्येष्यामहे । किमर्था वयं यक्ष्यामहे । वाचि हि प्राणं जुहुमः । प्राणे वा वाचम् । यो ह्येव प्रभवः स एवाप्ययः । ता एताः संहिता नानन्तेवासिने प्रब्रूयात् । नासंवत्सरवासिने । नाप्रवक्त्रे । इत्याचार्या आचार्याः ॥ ६ ॥

इति श्रीमदैतरेयतृतीयारण्यके द्वितीयोऽध्यायः ॥

३।४।९; रामानुज., निंबार्क. ३।४।९; मध्व. हारितो (हारीतो); श्रीकण्ठ. ३।४।९; वल्लभ. ३।४।१०; विज्ञान. १।१।१ (पृ. ११, ३०), ३।४।१५.

१ मध्व. वुपाप्तौ (वुपात्तौ).
२ भास्कर. कावषेयाः (काव्षेयाः).

(१) ते वयं यत् अनुसंहितं बलप्राणयुक्ता ऋचोऽधीमहे, तेन बलप्राणयुक्तसंहिताध्ययनेन नः अस्माकं णकारषकारौ अनुसंहितं अविद्यमानौ अप्युपात्तौ प्राप्तौ, इत्येवमाह स्म ह्रस्वो माण्डूकेयः। यच्च माण्डूकेयीयमध्याय माण्डूकेयेन दृष्टमध्यायं माण्डूकेयीयं संहितारण्यकमेव। यदि वा अन्यत्प्रसिद्धं स्यात् भवतु। एवं माण्डूकेयीयमध्यायं प्रब्रूमः अधीमहे, तेन वा। तथैव च स्थविरः शाकल्य आचार्यो मन्यते। यदेतत्संहितोपनिषद्दर्शनं समाप्तं तेन विहितं स्तूयते। कथम्। एतत् यत् संहितायाः दर्शनमुक्तं तद्विद्वांसः सन्तः ऋषयः कवषस्यापत्यानि कावषेयाः तथा आहुः स्म ह। किमित्युच्यते — किमर्थाः किंप्रयोजनाः वयमध्येष्यामहे वाक्प्रलापायासं करिष्याम इत्यभिप्रायः। तथा किमर्था वा वयं यक्ष्यामहे यागं करिष्यामः। सर्वं हि अध्ययनयागादिकर्मफलं ज्ञानेनैव प्राप्तमस्माभिः। अतः सर्वं कर्म आयासमात्रमेव। किं पुनस्तज्ज्ञानं येन सर्वं कर्मफलं प्राप्यते इत्युच्यते — वाचि अधीयाना भाषमाणा वा यदा वयं, प्राणं तदा तस्यां वाचि जुहुमः। प्राणे वा केवलव्यापृते तूष्णींभूतेषु स्वपत्सु वा अस्मासु वाचं जुहुमः। अन्योन्योद्भवप्रलयौ वाक्प्राणौ पुरुषव्यवहारे तूष्णींभावे च। न च तच्छून्यः कालोऽस्ति। अतो हेतुं प्रसिद्धमाह — यो ह्येव हि यस्मात् यस्य प्रभवः उत्पत्तिः स एव तस्य प्रलयः अप्ययः। वाक्प्राणयोश्च सर्वदा इतरेतरोद्भवप्रलयत्वं यस्मात्, तस्माद्वाक्प्राणौ अन्योन्यस्मिन् जुहुमो वयम्। तस्मात् किं नो बाह्येनाग्निहोत्रादिना अनित्यद्रव्यसाध्येन कालपरिच्छिन्नेन कार्यमित्यभिप्रायः। समाप्ता संहितोपनिषत्।

अथेदानीं विद्यासंप्रदानविधिरुच्यते — ता एताः यथोक्ताः संहितोपनिषदः अनन्तेवासिने अशिष्याय अप्रवक्त्रे, शिष्येभ्यः अप्रतिपादकः अप्रवक्ता, अतश्च अन्तेवास्यपि सन् प्रवक्ता यो न भवति, तथा प्रवक्ताऽप्यन्तेवासी न भवति, न ब्रूयात्। अर्थात् यस्तु अन्तेवासी प्रवक्ता च तस्मै उपनिषदो वक्तव्याः। तथा असंवत्सरवासिने प्रवक्त्रे न ब्रूयात्। यस्तु शिष्यः संवत्सरवासी अप्रवक्ता स्यात् तदा सोऽपि श्रोतुमर्हति, तथा अन्तेवासी प्रवक्ता च असंवत्सरवासी। सर्वाणि च एकस्य विशेषणानि। अस्मिन्पक्षे अत्यन्तमायासेऽपि विद्याप्राप्तेर्गुरुतरो नियमः। प्रत्येकपक्षेऽपि संवत्सरवासिप्रवक्त्रोः अनन्तेवासित्वप्राप्तिः। अथ अनन्तेवासित्वविशेषणात्संवत्सरवासिनः अर्थप्राप्तं शिष्यत्वमिति, तथापि प्रवक्तुः अशिष्यस्यैव नित्याप्राप्तिः। तथा च स्मरणं —'यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा' इति। इत्येवं आचार्याः विद्याप्रवक्तारो मन्यन्ते। द्विर्वचनं तु अशेषोपनिषत्समाप्तिप्रदर्शनार्थम्।

शंकर.

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ ऐतरेयतृतीयारण्यकभाष्ये द्वितीयोऽध्यायः॥

(२) 'तुल्यं तु दर्शनम्' — यत्तूक्तमाचारदर्शनात् कर्मशेषो विद्येति, अत्र ब्रूमः। तुल्यमाचारदर्शनं अकर्मशेषत्वेऽपि विद्यायाः। तथा हि श्रुतिर्भवति —'एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे' 'एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे' (कौ. २।५) 'एत वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' (बृउ. ३।५।१) इत्येवंजातीयका। ब्रशंकर. ३।४।९

(३) 'किमर्था वयम्' इति संहिताविज्ञानस्तुत्यर्थं, न अध्ययनादित्यागविधानम्। सर्वथा ज्ञानस्य प्राधान्यमभिप्रेतम्। भास्कर. ३।४।९

(४) यदुक्तं ब्रह्मविदां कर्मानुष्ठानदर्शनाद्विद्या कर्माङ्गमिति, तन्न। विद्याया अनङ्गत्वेऽपि तुल्यं दर्शनम्। ब्रह्मविदां कर्मानुष्ठानदर्शनमनैकान्तिकमित्यर्थः। अननुष्ठानस्यापि दर्शनात्। दृश्यते हि ब्रह्मविदां कर्मत्यागः —'ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे' इत्यादौ। अतो ब्रह्मविदां कर्मत्यागदर्शनात् न विद्या कर्माङ्गम्। कथमिदमुपपद्यते ब्रह्मविदां कर्मानुष्ठानमननुष्ठानं च। फलाभिसंधिरहितस्य यज्ञादिकर्मणो ब्रह्मविद्याङ्गत्वात्

तथाविधस्य कर्मणोऽनुष्ठानदर्शनमुपपद्यते । वक्ष्यति च 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्रसू. ३।४।२६) इति । फलार्थस्य तस्यैव यज्ञादेः कर्मणो मोक्षैकफलब्रह्मविद्याविरोधित्वात् तस्यैव अननुष्ठानदर्शनं उपपन्नतरम् । विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते । * रामानुज. ३।४।९

(५) संवत्सर इति विशेषणाद्विरिञ्च एवात्र प्रजापतिः । 'ब्रह्मा विरिञ्चिः कतमः स्वयंभूः प्रजापतिः संवत्सरः' इत्यादिश्रुतेः । 'श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम् । तेनैव सम्यक्संधाय दार्ढ्यं देहस्य सोऽकरोत् । संधानात्संहितेत्युक्तो विष्णुरेव सनातनः । विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते । णइत्याक्रियमाणत्वाण्णकारोऽस्य बलं स्मृतम् । विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः । प्रणेतृताऽखिलस्यैव विष्णोरुक्ता तथाऽऽत्मता । आततत्वं सर्वगुणैर्देशतः कालतस्तथा । आत्मशब्दोदितं तच्च पशब्देनाभिधीयते । षइत्याक्रियमाणत्वं प्रणेतृत्वं च पूर्णता । विष्णोः षकार इत्युक्ता वीत्युक्तस्य विशिष्टता । अन्त्यस्थित उकारस्तु ताच्छील्यादि हरेर्वदेत् । एवं विशिष्टप्राणत्वमाततत्वं च सर्वतः । विशिष्टं च बलं विष्णोः सर्वस्माच्छीलमित्यपि । उदितं विष्णुशब्देन तस्मादृक्संहितामनु । वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु । विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः । स एव विष्णोर्बलवित्तथा प्राणत्वविद्भवेत् । स एवमुक्तः संसारान्नित्यायुष्मान्भविष्यति । संहितासहितत्वेन यदृचोऽधीमहे वयम् । वेदानन्यान्पुराणं वा तेन विष्णुपदोदितः । अवाप्तो भगवान् स्यान्नस्तन्नामार्थो यतोऽखिलः । इत्याहुर्ऋषयः सर्वे किमन्याध्ययनाद्भवेत् । यज्ञैर्वेत्यृषयोऽप्यन्ये कावषेया वदन्ति हि । मौनेन विष्णुशब्दार्थं ध्यायन्तो वाचमेव वा । जुहुमो विष्णुनामाख्यं जपन्तो मन्त्रमेव वा । नमस्कारसमायुक्तं जुहुमः प्राणमत्र हि । किमन्यैर्बहुभिः कार्यैरेतस्यैवाधिकत्वतः । एतदर्थानुसंधानपूर्वं वेदानथापि वा । अधीमहे यजामो वा नान्यथा तु कथंचन । एष एव हि सर्वेषां वेदानामर्थ ईरितः । विष्णुनामोदितो योऽर्थस्तद्व्याख्यान्यदृचोऽखिलम् । एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः । पूर्णस्वभावः सर्वेषां वचसामर्थ ईरितः । संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः । अन्यविद्यास्वशिष्यस्य न ब्रूयात्प्रथमं क्वचित् । व्याख्यानशक्तिहीनाय नैव ब्रूयात्कथंचन । वैष्णवाय सुवृत्ताय मेधाश्रद्धायुताय च । गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम् ॥' इति च । य एतेन णइतिशब्देन आक्रियमाणं विष्णोः पूर्णबलं षशब्देन आक्रियमाणं देशतः कालतो गुणतश्चाततत्वं च सर्वां संहितामनु तदर्थत्वेन वेद । अक्षरद्वयसंयोगरूपया संहितया एतदेव सर्वत्रोच्यत इति स संपूर्णबलं सर्वप्रणेतृत्वशक्त्यादियुक्तं विष्णुं वेद । अथेत्यादिका अपि संहितारूपा एव । पदवर्णयोः पृथगनभिव्याहारात् । तस्मात्सर्वशब्दा विष्णुनामव्याख्यानरूपा एव । यत् वयं संहितायुक्तत्वेन ऋचोऽधीमहे तेनास्माकं णशब्दषशब्दार्थरूपो विष्णुरुपात्तः । तद्व्याख्यानत्वात्सर्ववाचाम् । वि इत्युपसर्गत्वात् उकारस्य च ताच्छील्यार्थत्वात् उक्तार्थविशेषणरूपत्वेन प्रसिद्धत्वान्न पृथक् तयोर्व्याख्यानमत्र कृतम् । ऋच इति सर्ववाचामुपलक्षणम् । अतः सर्ववेदादिशब्दोदितः सर्वगुणपरिपूर्णो भगवान्नारायण इति सिद्धम् ।

सर्वैश्च वैदिकपदैरपि लोकशब्दैर्मेघाग्निवारिधितलादिभवैश्च सर्वैः । एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं नारायणो मम सदैव सुतुष्टिमेतु ॥ यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् । वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥ 'हनुशब्दो ज्ञानवाची हनुमान्मतिशब्दितः । रामस्य स्तुतरूपस्य वाचस्तेनानयन्त हि ॥ भूतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः । ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ॥ प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः । मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ॥ मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः । इति सूक्तगतं रूपत्रयमेतन्महात्मनः । यो वेद वेदवित्स स्यात्तत्त्वविच्चत्प्रसादतः ॥' इति च । 'साधको रामवाक्यानां तत्समीपगतः सदा । हनुमान्प्रथमो ज्ञेयो भीमस्तु बहुभुक्पितोः ॥ पूतनाक्षयकारी च द्वितीयस्तु तृतीयकः । पूर्णप्रज्ञस्तथा-

* श्रीकंठ. रामानुजवत् ।

ऽऽनन्दतीर्थनामा प्रकीर्तितः ॥ दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते । प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ॥ आसमन्तात्पतित्वे तु गूढं कलियुगे हरिम् । असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ॥ वदद्भिर्गूहितं सन्तं तृतीयोऽसुमेथायति । येन विष्णोस्तु वर्णाख्यान्गुणानशासिषुः परान् ॥ ईशानासः सूरयश्च निगूढा निर्गुणोक्तिभिः । त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः ॥ एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः । स्वयंभुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ॥' इति च । पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे । अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये तृतीयप्रपाठके द्वितीयोऽध्यायः ॥

(६) एवमन्यान्यपि वाक्यानि 'किमर्था वयं यक्ष्यामहे' 'अग्निहोत्रं न जुहवाञ्चक्रिरे' 'तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः । यदिदं वेदवचनं कुरु कर्म त्यजेति च ॥' इत्येवमादीनि विदुषां हिंसाविक्षेपादिदोषदुष्टबाह्यकर्मत्यागविधायकान्येव, न त्वावश्यकभिक्षादेरपि अन्तर्यागस्य नमस्कारजपादेर्वा प्रतिषेधकानि, कर्मत्यागस्य शमादिपालनाय 'गुणलोपो न गुणिनः' इति न्यायेन दृष्टार्थकत्वात् ।

विज्ञान. १।१।१

उदितः शुक्रियं दधे । तमहमात्मनि दधे । अनु मामैत्विन्द्रियम् । मयि श्रीर्मयि यशः । सर्वः सप्राणः सबलः । उत्तिष्ठाम्यनु श्रीः । उत्तिष्ठत्वनु माऽऽयन्तु देवताः । अदब्धं चक्षुरिषितं मनः । सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः ॥
तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतम् ॥
त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा ।
त्वं यज्ञेष्वीड्यः ॥
आवदंस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः ।
यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥
शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।
मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥

वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि । वेदस्य म आणी स्थः । श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान्संदधामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## इति तृतीयारण्यकम् ॥

## ऐतरेयोपनिषत् समाप्ता ।

# कौषीतक्युपनिषत्

## प्रथमोऽध्यायः

### ( पर्यङ्कोपासना )

वाङ्मनआदीनां ज्ञानसाधनानां देवतानां च ज्ञानानुकूल्यं प्रार्थनाविषयः

**वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् । आविराविर्मयोऽभूर्वेदसा । मत्साऽऽणीः । ऋतं मा मा हिंसीः । अनेनाधीतेनाहोरात्रात्संवसामि । अग्न इळा नम इळा नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः । नमो वोऽस्तु देवेभ्यः । शिवा नः शंतमा भव सुमृळीका सरस्वती । मा ते व्योम संदृशि । अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठः । दीक्षे मा मा हिंसीः ॥**

वाङ्मे मदीया मनसि प्रतिष्ठिता अस्तु । मनो मे वाचि प्रतिष्ठितमस्तु । अग्ने दीक्षे इति संबोधनम् । दीक्षा सरस्वती, वाग्दीक्षेति व्यवहारात् । सुमृळीका सरस्वती चास्तु । तथा सति सरस्वतीं वाग्देवीं प्रति वचनम् । मूर्तिश्रुतौ मयः मूर्तिमती शरीरिणी वेदसा ज्ञानेन लक्षिता त्वं आविराविरभूः । 'एत इति वै प्रजापतिर्देवानसृजत । असृग्रमिति मनुष्यान् ' इति वेदपदैर्देवादिसृष्टिवचनादधिष्ठात्री सरस्वती मूर्तिश्रुतौ आविर्भूतेत्युक्तम् । अनन्तरं मत् इति मत्तः सकाशात् सा त्वं आणीः शब्दात्मिका विस्तृता अभूः । अत ऋतं मा मा हिंसीः । अनेन वक्ष्यमाणेन अधीतेन अहोरात्रात्संवसामि एकीभावेन वसामि । अग्न्यादीन्नमस्यति— इळाशब्दः कृत्स्नार्थः । अग्ने प्रकृष्टं नमः । ऋषिभ्यो देवेभ्यश्च नमोऽस्तु । सरस्वती सुखा भव । तेन च व्योम शून्यं मा संदृशि । यथा सूर्यो ज्योतिषां श्रेष्ठो नान्यथा क्रियते तथा मनः अदब्धं निर्मलं चक्षुः इषिरं इष्टदर्शि दीक्षे मा मा हिंसीः मा अन्यथा कुरु ।

इति व्याख्योपेता शान्तिः समाप्ता ॥

आरुणिं श्वेतकेतुं च प्रति परलोकमार्गोपदेशोपक्रमः चित्रस्य गार्ग्यायणेः

*** [1] चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे । स ह पुत्रं श्वेतकेतुं प्रजिघाय याजयेति । तं हाऽऽसीनं पप्रच्छ गौतमस्य पुत्रास्ति संवृतं लोके यस्मिन्मा धास्यस्यन्यमुताहो वाध्वा तस्य मा लोके धास्यसीति । स होवाच नाहमेतद्वेद । हन्ताऽऽचार्यं पृच्छानीति ॥**

आनन्द आत्मा स्थिरजङ्गमानां
अस्त्यत्र चित्रस्तमहं प्रणम्य
कौषीतकिब्राह्मणगात्मविद्यां
पदावलोकात् प्रकटीकरोमि ॥

समधिगतमेतत् निघर्षणादीनां कर्मणां तैजसस्य द्रव्यस्य आदर्शादेः शुद्धिहेतुत्वम् । तथा च अग्निहोत्रादीनि अश्वमेधान्तानि कर्माणि तैजसस्यान्तःकरणस्य शुद्धिहेतवः । विविदिषासाधनत्वस्य श्रुतितोऽप्यवगमाच्च । अपि च स्वर्गादेः कर्मफलस्य सुखविशेषरूपत्वात् तस्य च अन्तःकरणप्रसादापरपर्यायत्वात् कर्मिभिरपि कर्मणामन्तःकरणशुद्धिहेतुत्वमङ्गीकृतं यतः, ततस्तानि महता संदर्भेण प्रथमतोऽभिधाय इदानीं ब्रह्मविद्यां वक्तुं लब्धावसरा श्रुतिः प्रववृते । तत्र 'चित्रो ह वै गार्ग्यायणिः' इत्यादिका 'य एवं

---

* कौषीतक्युपनिषदि पाठबहुत्वात् प्राचीनार्वाचीनटीकादिकृद्भिस्तेषामङ्गीकाराच्च टिप्पण्यादिगताः सर्वे पाठा अत्र संगृहीताः । तत्र आदर्शपुस्तकटिप्पणी ' आटि. ' इति, आनन्दाश्रममुद्रितशाङ्खायनारण्यकं ' क. ' इति, तद्गता टिप्पणी च ' कटि. ' इति संकेतिता । तत्र च कपुस्तकपाठभिन्ना एव पाठाः 'आटि. ' इत्यत्र संकलिताः । तदुभयभिन्ना एव च ' कटि. ' इत्यत्र ।

(१) कौउ. १।१; क. गार्ग्यायणिर्य ( गाङ्ग्यायनिर्य ) प्रजिघाय ( प्रजिगाय ) हाऽऽसीनं ( हाऽभ्यागतं ) पुत्रास्ति ( पुत्रोऽस्ति ) न्यमुताहो वाध्वा ( न्यतमो वाऽध्वा ).

वेद' इत्यन्ता चतुरध्यायी कौषीतकिब्राह्मणोपनिषत् । आद्येनाध्यायेन पर्यङ्कविद्यां सदक्षिणोत्तरमार्गान्तां, द्वितीयेन प्राणविद्यां तद्विदश्च बाह्याध्यात्मिकानि कर्माणि फलविशेषसिद्ध्ये, तृतीयचतुर्थाभ्यां च आत्मविद्यामाह । यद्यपि 'प्रतर्दनो ह' इत्यादिकमेव प्रथमतः पठनीयं, तथापि शुद्धमप्यन्तःकरणं निर्गुणे ब्रह्मणि अभयेऽपि प्रथमतो ब्रह्मस्वभावमजानत् भयमाप्नुयात्, गर्भस्थाप्रोषितपितृको युवेव सद्वृत्तस्थः प्रथमतः पितृदर्शने । ततोऽस्य भयनिरासार्थं उत्तरमार्गाप्यं एतल्लोकस्थराजादिवत् ब्रह्मलोकस्थं सगुणं ब्रह्म प्रथमतः उक्तवती । तत्र च 'स आगच्छत्यमितौजसं पर्यङ्कं स प्राणः' इति प्राणस्य पर्यङ्कत्वं प्रथमे अध्याये उक्तम् । तस्मिन्प्राणे भवति श्रोतॄणां जिज्ञासा किमयं श्वासमात्रः प्राणः आहोस्वित् विविधभूतिजुष्ट इति । अस्या जिज्ञासाया निवृत्त्यर्थं प्राणोपासनं द्वितीयेनाध्यायेन उपक्रान्तम् । तथा च लब्धावसरा उत्तरत्र ब्रह्मविद्यां उक्तवती इत्यदोषः । तत्र ब्रह्मविद्यायाः सगुणाया अपि महद्भिर्गौतमश्वेतकेत्वादिभिरपि अमानित्वादिगुणैर्गुरुमुखादेव अवगतिः कृता यतः, ततः अमानित्वादिगुणैः आधुनिकैरप्यधिकारिभिः सगुणा निर्गुणा च ब्रह्मविद्या अवगतव्या इत्येतदर्थमाख्यायिका ।

चित्रः चित्रनामकः कश्चित्त्रैवर्णिकः ह किल वै प्रसिद्धः श्रुतेस्तत्कालीनानां च, गार्ग्यस्य युवापत्यं गार्ग्यायणिः यक्ष्यमाणः कंचिज्ज्योतिष्टोमादिकं यागं करिष्यमाणः आरुणिं अरुणस्यापत्यं वव्रे सदस्यसप्तदशान्यतमऋत्विक्त्वेन वरणं चक्रे त्वं मे प्रधानभूतो यज्ञे याजयिता भवेति । स गार्ग्यायणिना चित्रेण वृतः आरुणिः ह प्रसिद्धः श्रुत्यन्तरे उद्दालकनामा पुत्रं, पितरं पाप्मनः पुन्नाम्नो नरकात्त्रायते इत्यौरसस्तनय इत्यर्थः । तं श्वेतकेतुं श्वेतकेतुनामानं प्रजिघाय प्रहितवान् । तत्प्रेषणमाह—याजय हे श्वेतकेतो, चित्रं यागं कारय इति अनेन प्रकारेण । तं चित्रगृहमागतं पित्रा प्रहितं श्वेतकेतुं ह प्रसिद्धं श्रुत्यन्तरे अभिमानिनं प्रवाहणादिभिः संवादकर्तारमासीनं चित्रदत्ते महत्यासने उपविष्टं पप्रच्छ प्रश्नं कृतवान् चित्रः । प्रश्नमाह—गौतमस्य पुत्र हे गौतमगोत्रीयस्यौरस, अस्ति विद्यते संवृतं सम्यगावृतं गुप्तं स्थानं बहिर्मुखैरज्ञातं आवृत्तिशून्यमित्यर्थः । लोकेऽस्मिन्स्थिरजङ्गमनिवासे यस्मिन् संवृते स्थाने मा मां प्रष्टारं शिष्यभूतं धास्यसि त्वं याजयिता गुरुर्भूत्वा स्थापयिष्यसि, तत्राप्यन्यं सर्वस्माज्जगतो भिन्नं, उत । सर्वजगदात्मभूतं मां धास्यसीत्येकः पक्षो बहिरेवावगन्तव्यः । अहो संबोधने । अन्यत्वपक्षे दोषं दर्शयितुं धारणे गतिमाह — बाध्वा बद्ध्वा काष्ठेनेव काष्ठं निःसंधिबन्धनं जतुरज्जुलोहादिभिरिव बद्ध्वा अन्यं मां धास्यसीत्यन्वयः । अन्यशब्दोऽयं तन्त्रेणोच्चारितो लिङ्गव्यत्यासेनावगन्तव्यः । ततः अस्ति संवृतं स्थानमन्यद्वा । अन्यस्थानपक्ष आह — तस्य तस्मिन्नसंवृते स्थाने मा मां राज्यादिवन्तं कंचित्कालं परतन्त्रफलभोक्तारमुक्तं लोके धास्यसि । व्याख्यातम् । इति अनेन प्रकारेण बुद्धिपरीक्षार्थं पितुः सपुत्रस्याभिमानपरिहारार्थं वा राजा पप्रच्छेत्यन्वयः । स गौतमपुत्रः श्वेतकेतुश्चित्रपृष्टः ह प्रसिद्धः उवाच उक्तवान् । श्वेतकेतूक्तिमाह—नाहमेतद्वेद । अहं श्वेतकेतुरेतत्त्वदुक्तं लोके संवृतमसंवृतं वा स्थानं, त्वामाधेयमन्यत्वेन अनन्यत्वेन वा, बद्ध्वा अबद्ध्वा वेति न जानामि । हन्त हर्षसंबोधने । त्वत्प्रश्ननिमित्तं ममाप्येतदवगतं भविष्यतीत्यर्थः । आचार्यं सर्वज्ञं सर्वशास्त्रार्थस्य ज्ञातारं अनुष्ठातारं आचारे स्थापयितारं च पितरं पृच्छानि प्रश्नं करवाणि । पितुर्गमनात्पूर्वं विस्मृतिर्मा भूत्, तत्र गत्वा प्रश्नं करिष्यामीत्यर्थः । इति अनेन प्रकारेण उवाचेत्यन्वयः ।

शंनन्द.

**स ह पितरमासाद्य पप्रच्छेति । इति माऽप्राक्षीत् । कथं प्रतिब्रवाणीति । स होवाचाहमप्येतन्न वेद । सदस्येव वयं स्वाध्यायमधीत्य हरामहे । यन्नः परे ददति । एह्युभौ गमिष्याव इति ॥**

स चित्रदेयोत्तरः श्वेतकेतुः ह प्रसिद्धः पितरं आचार्यमारुणिं जनकं आसाद्य संप्राप्य पप्रच्छ इति अनेन वक्ष्यमाणेन प्रकारेण प्रश्नं कृतवान् । तत्प्रश्नप्रकारमाह—इति माऽप्राक्षीत् मां श्वेतकेतुं गौतमस्येत्यादिना धास्यसीत्यन्तेन वाक्येन प्रश्नमकरोत् । कथं प्रतिब्रवाणि इति अस्य प्रश्नस्य केन प्रकारेण प्रत्युत्तरं वदामि इति

(१) क. ददति । एह्यु (सदस्ये ह्यु).

अनेन प्रकारेण पप्रच्छेत्यन्वयः । स पुत्रपृष्ट आरुणिः ह प्रसिद्धः उवाच उक्तवान्, अहमप्येतन्न वेद आचार्योऽप्यहमारुणिरेतच्चित्रपृष्टं न जानामि । सदस्येव चित्रस्य गार्ग्यायणेः सभायामेव, न त्वन्यत्र, वयं आरुणिश्वेतकेतुप्रभृतयः स्वाध्यायं अधीत्य एतदर्थप्रतिपादकं वेदभागं सार्थमधिगम्य चित्राद्गार्ग्यायणेः हरामहे अधिगच्छामः। यत् यस्मात् कारणात् नः अस्मभ्यं गौतमादिभ्योऽपरिहार्येभ्योऽप्यर्थोपक्रमेभ्यो याचकेभ्यः परे विद्याधनदातारो ददति प्रयच्छन्ति, तच्चित्रो न दास्यतीति शङ्का न करणीयेत्यर्थः। एहि आगच्छ, चित्रं प्रत्युभौ गमिष्यावः आवां यास्यावः इति अनेन प्रकारेणोवाचेत्यन्वयः।

शंनन्द.

स ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्रम उपायानीति । तं होवाच । ब्रह्मार्घोऽसि गौतम यो न मानमुपागाः । एहि व्येव त्वा ज्ञपयिष्यामीति ॥ १ ॥

स आरुणिः ह प्रसिद्धः समित्पाणिः गुरुदर्शनार्थं समिद्धस्तः चित्रं चित्रनामानं गार्ग्यायणिं गार्ग्यस्य युवापत्यं प्रतिचक्रम उपायानीति त्वां विशिष्टविद्याविदं चित्रं गुरुत्वेनोपागच्छामि प्राप्तोऽस्मीत्यनेन प्रकारेण प्रतिचक्रमे प्रतिचक्राम समीपं गतवान् । तं शिष्यत्वेनाऽऽत्मानं प्राप्तमारुणिं ह प्रसिद्धं उवाच उक्तवान् । चित्रोक्तिमाह—ब्रह्मार्घः ब्रह्मणो हिरण्यगर्भस्य परस्य ब्रह्मणो वा अर्घः अर्घ्यं पूजेति यावत् । तद्यस्य स ब्रह्मार्घः, ब्रह्मवन्माननीय इत्यर्थः। असि भवसि गौतम हे गौतमगोत्रीय। तत्र कारणमाह — यः वेदविदामग्रणीर्मद्गुरुभूतो याजकः सन् मया पुत्रद्वारेण पृष्टो न मानमुपागाः मां शिष्यभूतं प्रष्टुं समागतो भवान्, न तु किमनेन शिष्यभूतेन पृष्टेनेत्यभिमानं गतवान् । एहि आगच्छ, व्येव त्वा ज्ञपयिष्यमि त्वां गौतमं विज्ञापयिष्याम्येव स्पष्टं बोधयिष्यामि, न तु संदेहादिकं जनयिष्यामि । इति अनेन प्रकारेण प्रतिज्ञामकरोदिति शेषः ।

शंनन्द.

(१) क. गार्ग्यायणिं (गाङ्ग्यायनिं) उपाया (उपया) ब्रह्मार्घो (ब्रह्मार्हो).

परलोकगन्तुः चन्द्रमा द्वारं एतल्लोकागमनस्य ब्रह्मलोकप्राप्तेश्च

स होवाच । ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति । तेषां प्राणैः पूर्वपक्ष आप्यायते । तानपरपक्षे न प्रजनयति ॥

सः चित्रः कृतप्रतिज्ञः ह प्रसिद्धः उवाच उक्तवान् । प्रथमतो गुप्तं स्थानं भेददर्शिनां कर्मिणामाह—ये वै के च ये के च त्रैवर्णिकाः प्रसिद्धा अग्निहोत्रादिकर्मानुष्ठातारः । अस्मात् प्रत्यक्षात् लोकात् अवलोकनयोग्यात्त्रैवर्णिकदेहात् प्रयन्ति अपसर्पन्ति म्रियन्ते इत्यर्थः । चन्द्रमसमेव ते सर्वे गच्छन्ति ते विमुक्तदेहाः कर्मिणो निखिला धूमरात्रिकृष्णपक्षदक्षिणायनाकाशान् गत्वा अनन्तरं कर्मफलभूतं स्वर्गापरपर्यायं चन्द्रमण्डलं गच्छन्ति, न त्वादित्यादिकम् । तेषां स्वर्गिणां कर्मिणां प्राणैरिन्द्रियैः प्राणापानादिसहितैः पूर्वपक्षे शुक्लपक्षे आप्यायते आप्यायनं गतो भवति चन्द्रमाः राजभृत्यकरादिभिरिव राजा । तान् कर्मिणः प्राणान् अपरपक्षे कृष्णपक्षे न प्रजनयति नोत्पादयति । अयमर्थः—क्षीणभृत्यश्चै (वित्त इ) व राज्ञः(जा) परिवारान्न (णां न) जनयति द्रव्यलाभ ए(मे)वं चन्द्रः क्षीणः स्वर्गिणां तृप्तिम्।

शंनन्द.

एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः । तं यः प्रत्याह तमतिसृजते । अथ य एनं न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति ॥

एतत् उक्तं चन्द्रमण्डलं वै प्रसिद्धममृतरूपं स्वर्गस्य लोकस्य स्वर्गाख्यस्य स्थानस्य द्वारं गृहस्ये-

(१) कौउ. ११२; क. पक्षे न (पक्षेण); ब्रशंकर. २।३।१९, ३।१।१२; भास्कर. २।३।१९, ३।१।१२; रामानुज. २।३।२०, ३।१।१२, १७; निंबार्क. २।३।१९, ३।१।१२; श्रीकंठ. २।३।२०, ३।१।१२, ४।२।९; श्रीकर. २।३।१८, ३।१।१२, १८, २१, ४।२।९; वल्लभ. २।३।१९, ३।१।१२, १७ प्रयन्ति (प्रयान्ति); विज्ञान. २।३।१९, ३।१।१२, १३; बलदेव. ३।१।१२, १८, ४।२।९.

(२) क. यश्चन्द्रमाः (यच्चन्द्रमाः) य एनं न (यो न); श्रीकंठ. ४।२।९ (लोकस्य०).

वान्तःप्रवेशमार्गः। एतच्छब्दार्थमाह — यः प्रसिद्धः चन्द्रमाः इन्दुः। संवृतं स्थानं विवक्षुराह — तं चन्द्रमसं दक्षिणमार्गाख्यं यः अधिकारी अमानित्वादिगुणः प्रत्याह निराचष्टे अहमेतस्मिन्संततसंपाते न गमिष्यामीति, तं निराकृतचन्द्रमसं अतिसृजते चन्द्रमसमतीत्य विद्युदाद्यातिवाहिकेषु सृजते उत्पादयति। उपासनासंकल्पो ब्रह्मलोकं नयतीत्यर्थः। अथ पक्षान्तरे यः कर्मी स्वर्गाभिलाषवान् एनं चन्द्रमसं न प्रत्याह न निराचष्टे, गमिष्याम्यहं स्वर्गमिति संकल्पवानित्यर्थः। तं कामिनं स्वर्गनिवासं इह अस्मिँल्लोके रमणीयारमणीयचरणफलभूते वृष्टिर्भूत्वा कर्मफलोपभोगनियमोऽनुशयसहितो वर्षधाराभावं प्राप्य वर्षति मेघोदरेभ्यो नीरधाराभिः सहानुशयिनं मुञ्चति। शंनन्द.

स इह कीटो वा पतङ्गो वा शकुनिर्वा[1] शार्दूलो वा सिंहो वा मत्स्यो वा परश्वा वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यम्॥

स वृष्टिरूपेणाऽऽगतो भूलोकमनुशयी यदि कपूयचरणस्तदा दक्षिणोत्तरमार्गाद्भ्रष्टः इह अस्मिँल्लोके कीटो वा, कीटो वज्रसारसमानोऽल्पकायो जीवविशेषः। वाशब्दात्पिपीलिकादिः। पतङ्गो वा, पतङ्गो दीपतेजोविरोधी क्षुद्रो जीवः। वाशब्दात्खद्योतादिः शकुनिर्वा, शकुनिः पक्षी। वाशब्दाद्वानरादिः। शार्दूलो वा, शार्दूलो व्याघ्रः। वाशब्दात्सूकरादिः। सिंहो वा, सिंहो गजघातको जीवः। वाशब्दात्सरभादिः। मत्स्यो वा, मत्स्यो मीनः। वाशब्दान्मकरादिः। परश्वा वा, परश्वा दन्दशूकविशेषः। वाशब्दात् वृश्चिकादिः। यदा कपूयरमणीयोभयचरणस्तदा पुरुषो वा, पुरुषो नरः। वाशब्दान्नारी नपुंसकं च। पुरुषस्यापि रमणीयचरणबाहुल्ये ब्राह्मणत्वादिकमवगन्तव्यम्। एवं शुभाशुभचरणमभिधाय पुनः प्रकृतं कपूयचरणं संक्षेपेणाऽऽह—अन्यो वा उक्तेभ्योऽन्यो दुःखभागी जङ्गमः। वाशब्दात्स्थावरः। एतेषु पूर्वोक्तेषु कीटादिषु स्थानेषु पूर्वोक्तेषु देहेषु अनुशयवान् प्रत्याजायते स्वर्गात्प्रत्यागत्य समन्तादुत्पद्यते इत्यर्थः। उत्पत्तौ निमित्तमाह — यथाकर्म यादृशं शुभमशुभं व्यामिश्रं वा कर्म, यथाविद्यं यादृशी शास्त्रीयाऽशास्त्रीया व्यामिश्रा वा विद्या। विद्याकर्मानुसारेण शुभमशुभं व्यामिश्रं च शरीरं भवतीत्यर्थः। शंनन्द.

तमागतं पृच्छति कोऽसीति। तं प्रतिब्रूयात्॥

एवं कर्मणां गतिं स्वर्गनरकोभयात्मिकां वैराग्यार्थमुपदिश्य गुरुशिष्ययोः करणीयं विवक्षुः प्रथमतो गुरोः करणीयमाह — तं नरकादिव स्वर्गादपि विरक्तं विज्ञातनरकस्वर्गगतिं त्रिविधतापसंतप्तमानममानित्वादिगुणं शिष्यं आगतं शुभाशुभाभ्यां कर्मभ्यां स्वर्गात् भूलोकं प्राप्य अत्युत्कटेन पुण्येन केनचिदात्मानं प्रत्यागतं पृच्छति करुणारसपूर्णहृदयो वेदान्तार्थयाथात्म्यविद्गुरुलक्षणसंपन्नो गुरुः प्रश्नं करोति, पृच्छेदित्यर्थः। गुरोः प्रश्नमाह—कः प्रश्ने। शरीरेन्द्रियादिरूप आहोस्वित्तद्विलक्षणः असि भवसि। इति अनेन प्रकारेण पृच्छतीत्यन्वयः। तमेवं पृच्छन्तं स्वगुरुं शिष्यो गुरुप्रश्नानन्तरं प्रतिब्रूयात् प्रत्युत्तरं वदेत्। शंनन्द.

[1]विचक्षणादृतवो रेत आभृतं पञ्चदशात्प्रसूतात्पित्र्यवतः। तन्मा पुंसि कर्तर्येरयध्वम्। पुंसा कर्त्रा मातरिमा निषिक्त। स जाय उपजायमानो द्वादशत्रयोदश उपमासो द्वादशत्रयोदशेन पित्राऽऽसं तद्विदे प्रतितद्विदेऽहम्। तन्म ऋतवो अमर्त्यव आभरध्वम्॥

शिष्यो देहादिसंघातमात्मानमुररीकृत्याऽऽह—विचक्षणात् बहुविधभोगदानकुशलात् सूर्यसुषुम्नानाडीरूपाच्चन्द्रमस ऋतवः ऋतोर्वसन्ताद्यर्तुस्वरूपात्, न हि चन्द्रमसमन्तरेण, रेतः श्रद्धासोमवृष्ट्यन्नपरिणामरूपं शुक्रं आभृतं रेतःसिक्पुरुषाग्नौ देवैरन्नाहुतिप्रक्षेपेण स्थापितम्।

(१) क. शकुनिर्वा......परश्वा वा ( मत्स्यो वा शकुनिर्वा सिंहो वा वराहो वा परश्वा वा शार्दूलो वा ) वैतेषु (वा तेषु तेषु); श्रीकंठ. ४।२।९ परश्वा ( परस्वान्) प्रत्या ( प्रेत्या ).

(१) आटि. निषिक्त (सिषिक्त, शिषिक्त) दश उपमासो ( दशोपमासो ) तद्विदे प्रति (तद्विदेऽहं प्रति ) आभरध्वम् ( आरभध्वम् ); क. त्पित्र्य ( त्पित्र्या ) तन्मा ( तं मा ) निषिक्त ( निषिञ्च ) ( जाय उप० ) दश उपमासो ( दशो मासो ) अमर्त्यव ( मृत्यव ).

पञ्चदशात् पञ्चदशकलात्मकात्, शुक्लकृष्णपक्षहेतोरित्यर्थः। प्रसूतात् सायंप्रातरग्निहोत्राहुतिद्वयापूर्वापरपर्यायश्रद्धातः संजातात् सोमप्रकृतिविकाररूपाद्वा पित्र्यवतः पितृमतः पितृलोकस्वरूपादित्यर्थः। तत् उक्तं रेतः मा मां अप्स्वरूपं मयाऽनुशयिना सहितमित्यर्थः। पुंसि रेतःसिचि कर्तरि ग्राम्यधर्मानुष्ठातरि एरयध्वं समन्तान्नानाङ्गेषु वर्तमानमेकत्र हृदयप्रदेशे प्रेरयत प्रेरणं कुरुतेत्यर्थः। यद्यप्यत्र कर्ता कोऽपि न प्रतीयते प्रेरणे, तथाऽप्यर्थलाभात्पञ्चाग्निविद्यागता देवा एवावगन्तव्याः। पुंसा रेतःसिचा निमित्तभूतेन कर्त्रा ग्राम्यधर्मानुष्ठात्रा मातरि पञ्चमाग्निरूपायां योषिति मा मां रेतसा सहितमनुशयिनं निषिक्त सेचितवन्तो देवाः। स योषिति रेतोरूपेण सिक्तोऽनुशयी इह जाये जनने आविर्भावनिमित्तमित्यर्थः। उपजायमानः रेतःसेकमनु स्वकर्मसमीपे शरीरं गृह्णानो द्वादशत्रयोदशः द्वादशसंख्यया विशिष्टः स्वभावतः, कदाचित्त्रयोदशसंख्यया विशिष्टो द्वादशत्रयोदशः। उपमासः मासानां समीपे वर्तनं यस्य सोऽयमुपमासः संवत्सरः। संवत्सरकालोपलक्षितजीवनत्वादनुशय्यपि द्वादशत्रयोदश उपमास इत्यविरुद्धम्। द्वादशत्रयोदशेन उक्तरीत्या द्वादशत्रयोदशमासात्मकसंवत्सरोपलक्षितेन पित्रा रेतःसिचा जनकेन आसं तादात्म्यं गतोऽभूवं रेतःसेकात्प्राक् तद्विदे तस्य ब्रह्मणो ज्ञानार्थं सति भाग्ययोगे, वैपरीत्ये तु प्रतितद्विदे तद्वेदनस्य प्रतिकूलज्ञानार्थं अहं स्वर्गाद्भ्रष्टोऽनुशयी शास्त्रदृष्टिः। तत् तत्रैवं स्थिते तस्माद्वा मे मह्यं मदर्थमित्यर्थः। ऋतवः ऋतून् अनेककालं, आब्रह्मसाक्षात्कारं जीवनमित्यर्थः। अमर्त्यवे अमर्त्याय ब्रह्मज्ञानपरिपूर्तये आभरध्वं हे देवाः, समन्तात् धारयध्वम्। शंनन्द.

[1]तेन सत्येन तेन तपसा ऋतुरस्मि। आर्तवोऽस्मि। कोऽस्मि। त्वमस्मीति तमतिसृजते॥ २॥

(१) तेन विचक्षणादित्यादिनोक्तेन सत्येन यथार्थवचनेन तेन चन्द्रनिवासमारभ्य योनिनिर्गमनान्तेन तपसा क्लेशेन ऋतुः उक्तरीत्या संवत्सराद्यात्मको मर्त्य इत्यर्थः। अस्मि भवामि। आर्तवः ऋतुजः शुक्रशोणितशरीरात्मक इत्यर्थः। अस्मि भवामि। एवं ब्रुवाणं चेच्छिरःकम्पहस्तविधूननादिना निवारयसि, तर्हि कथय कः प्रश्ने, कार्यकारणविलक्षणः को नामाहं अस्मि भवामि। एवमुक्ते वक्ष्यमाणाध्यायद्वयोक्ते आत्मन्युपदिष्टे पुनः कोऽसीति पृष्टे शिष्य आह—त्वं ममोपदेष्टा प्राणप्रज्ञात्माऽवस्थात्रयातीतः सगुणत्वेन पर्यङ्के समासीनोऽस्मि भवामि। विचक्षणादृतोः पञ्चदशात्प्रसूतात्पितृमत आभृतं रेतो यत्तन्मां हे देवाः पुंसि कर्तरि प्रेरितवन्तः। ततः पुंसा कर्त्रा निमित्तेन मातर्यपि मां सेचितवन्तः। द्वादशत्रयोदशेन पित्रा ऐक्यं गत आसं संवत्सरो द्वादशत्रयोदश उपमासस्तद्विदे प्रतितद्विदे जाय उपजायमानो वर्त इति यतस्ततो मे अमर्त्याय ब्रह्मज्ञानपरिपूर्त्यर्थमृतुरूपायुराभरध्वम्। यस्मादेवं जानानो देवान् प्रार्थये तेन सत्येन तेन तपसा द्वा( च )र्तुरस्म्यार्तवोऽस्मीति संबन्धः। विचक्षणादित्यारभ्य आभरध्वमित्यन्तं हेत्वर्थमुपोद्घातनयेन, अतो न व्यधिकरणत्वशङ्काऽपि। प्रार्थनायामपि शब्दतो लभ्यमानानामृतूनां वा प्रार्थना। अस्मिन्पक्षे त्वेवं व्याख्येयो मन्त्रः—हे विचक्षणा हे ऋतवः, यतोऽहं ब्रह्मज्ञानार्थी तन्मे मां हे ऋतवो हे मर्त्यवो मृत्युहेतवः। समानमन्यद्देवपक्षेण। इति अनेन प्रकारेण प्रतिब्रूयादित्यन्वयः। तं विचक्षणादादित्वमस्मीत्यन्तं ब्रुवाणं नरकादिव चन्द्रमसोऽपि भीतं ब्रह्मविदं अतिसृजते संसारादतीत्योत्पादयति, ब्रह्मविद्यया विमोक्षयतीत्यर्थः। शंनन्द.

(२) 'विद्याकर्मणोरिति तु प्रकृतत्वात्'—तुशब्दस्तु शाखान्तरीयवाक्यप्रभवां अशेषगमनाशङ्कां उच्छिनत्ति। एवं सति अधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते ये वै केचिदधिकृता अस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति। * ब्रशंकर. ३।१।१७

(३) यदुक्तं वागादिविलयात् तस्य गत्यनुपपत्तिरिति तत्राह—'सूक्ष्मं प्रमाणतश्च तथोपलब्धेः'। शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते। अन्यथा

(१) आदि. कोऽस्मि+( कोऽसि ); क. तपसा (तपस ) कोऽस्मि ( कोऽसि ) त्वमस्मी ( त्वमसी ).

* भास्करादयः ब्रशंकरवत्।

गत्यनुपपत्त्या चन्द्रसंवादाद्यनुपपत्तेः। श्रूयते हि पर्यङ्कविद्यायां देवयाने पथि विदुषश्चन्द्रमसा संवादः — 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्युपक्रम्य 'एतद्वै स्वर्गस्य द्वारं यश्चन्द्रमाः। तं यः प्रत्याह तमतिसृजते। अथ य एनं न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति। स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान्वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रेत्याजायते यथाकर्म यथाविद्यम्। तमागतं पृच्छति कोऽसीति। तं प्रतिब्रूयात्' इत्यादि। अतः शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपन्ना।

श्रीकंठ. ४।२।९

(४) 'अनिष्टादिकारिणामपि च श्रुतम्' — 'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुतौ अनिष्टादिकारिणां चन्द्रलोकगमनं श्रुतमपि च स्वकर्मानुसारेण पापिनां नरकप्राप्तिरेव निर्णीयते।

तस्मात्तदुभयोरपि चन्द्रप्राप्तिसत्त्वेऽपि स्वकर्मानुसारेण दुष्कृती यमलोके तदाज्ञया नरके महाघोरदुःखमनुभूय तत्कर्मशेषेण कुत्सितयोनिं लभते इति सिद्धम्।

३।१।१२

केचिदत्र 'चन्द्रमसमेव ते सर्वे गच्छन्ति' इति वाक्ये सर्वे इत्यस्य संकोचमङ्गीकृत्य सुकृतिमात्रपरत्वं प्रसाध्य 'तद्य इत्थं विदुः' 'अथ य इमे ग्रामे इष्टापूर्ते' इत्यादिना देवयानस्य विद्याविषयत्वं, पितृयाणस्य पुण्यकर्मपरत्वं इति वदन्ति। तथापि नास्मन्मतविरोधः। तत्पक्षे संकोचासहिष्णुश्रुतिसंकोचपूर्वोक्तस्मृतिनिरवकाशत्वादिदोषप्रसङ्गश्च दुर्निवारः।

* श्रीकर. ३।१।१८

(५) तथा च अविशेषेण सर्वेषां अस्माल्लोकात्प्रयातानां चन्द्रलोकगमनं ततोऽवरोहश्च भवत्येव।

३।१।१२

तथा च सुकृतिनां भोगार्थं चन्द्रमस्यारोहः। दुष्कृतिनां च वृष्ट्यादिक्रमेण शरीरपरिग्रहमात्रार्थं चन्द्रमस्यारोह इति विभाग इति भावः। इह लोके एव योनेर्योन्यन्तरप्राप्तौ च न चन्द्रमसि गमनं, 'ये वै के ...... गच्छन्ति' इति प्रयाणविशेषणात्।

विज्ञान. ३।१।१३

* श्रीकर. ४।२।९ श्रीकंठवत्।

देवयानमार्गो ब्रह्मलोकप्रापकः

**स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति। स वायुलोकम्। स आदित्यलोकम्। स वरुणलोकम्। स इन्द्रलोकम्। स प्रजापतिलोकम्। स ब्रह्मलोकम्॥**

सगुणब्रह्मविदो देवयानमार्गमाह— सः सगुणब्रह्मवित् पर्यङ्काद्यन्यतमविद्यावान् प्राणप्रयाणसमये प्राज्ञेनाऽऽत्मनैकीभूतो हृदयाग्रप्रद्योतनेन प्रदर्शितसुषुम्नाद्वारः एतं वक्ष्यमाणं देवयानं, देवैरर्चिरादिभिरुह्यमानेनोपासकेन प्राप्यते इति देवयानः, तं पन्थानं मार्गं आपद्य सुषुम्नाद्वारा मूर्धानं भित्त्वा निर्गतः प्राप्य प्रथमं अग्निलोकं, अग्रे देवयानमार्गोपक्रमे सगुणब्रह्मविदो नयतीत्यग्निः, स चासौ लोकः प्रकाशश्चाग्निलोकः तं, आर्चिरभिमानिनीं देवतामित्यर्थः। आगच्छति प्राप्नोति। ततोऽहरापूर्यमाणपक्षोदगयनषण्मासंवत्सरदेवलोकाभिमानिनीर्देवता यथाक्रमेण प्राप्य अनन्तरं स प्राप्तदेवलोको वायुलोकं वायुदेवतां, आगच्छतीत्येतद्वक्ष्यमाणेष्वप्यनुषज्यते। सः वायुदत्तरथचक्रच्छिद्रोपममार्गो वायुलोकादनन्तरं आदित्यलोकं आदित्यदेवतां डम्बराकाशसमानमार्गदात्रीं चन्द्रमसः पूर्वभाविनीम्। सः आदित्यलोकात्प्राप्तचन्द्रविद्युल्लोको विद्युल्लोकादमानवेन पुरुषेण नीयमानो वरुणलोकं वरुणदेवताम्। सः अमानवेन पुरुषेण नीयमानो वरुणात् प्राप्तसहायको वरुणात्

(१) कौउ. १।३; क. (स आदित्यलोकम्०); **ब्रशांकर.** ३।३।२७, ४।३।१, २, ४ (स आदित्यलोकम्०); **भास्कर.** ३।३।२७, ४।३।१,२ एतं (एनं) (स आदित्यलोकम्०) (स प्रजापतिलोकम्०); **रामानुज.** ३।३।२७, ४।३।१, २,३ स आदित्यलोकम्। स वरुणलोकम् (स वरुणलोकं स आदित्यलोकं); **निंबार्क.** ४।३।२, ३ रामानुजवत्; **श्रीकंठ.** ३।३।२८, ४।३।३ रामानुजवत्; **श्रीकर.** ३।३।२७, २८, ४।३।१, २, ३, ४ रामानुजवत्; **वल्लभ.** ४।३।१, २, १४ एतं (एनं) (स आदित्यलोकम्०); **विज्ञान.** ४।३।१ ब्रशांकरवत्; **बलदेव.** ४।२।९, ४।३।१, २, ३.

अनन्तरं इन्द्रलोकं इन्द्रदेवताम् । सः प्राप्तेन्द्रसहायकस्ततः प्रजापतिलोकं प्रजापतिदेवतां विराड्रूपाम् । स: प्राप्तविराट्सहायकस्ततो ब्रह्मलोकं हिरण्यगर्भलोकं अमानवपुरुषैकगम्यम् । शंनन्द.

[१]तस्य ह वा एतस्य ब्रह्मलोकस्यारो ह्रदः । मुहूर्ता येष्टिहाः । विजरा नदी । इल्यो वृक्षः । सालज्यं संस्थानम् । अपराजितमायतनम् । इन्द्रप्रजापती द्वारगोपौ । विभुप्रमितम् । विचक्षणाऽऽसन्दी । अमितौजाः पर्यङ्कः । प्रिया च मानसी । प्रतिरूपा च चाक्षुषी । पुष्पाण्यावयतौ वै च जगानि । अम्बाश्चाम्बायवीश्चाप्सरसः । अम्बया नद्यः । तमित्थंविदा गच्छति ॥

तं ब्रह्मलोकं वर्णयति — तस्य अमानवपुरुषनयनेन प्राप्तस्य ह शास्त्रप्रसिद्धस्य वै ब्रह्मविद्भिः स्मर्यमाणस्य एतस्य प्रत्यक्षस्येव प्रकृतत्वेन ब्रह्मलोकस्य हिरण्यगर्भनिवासस्य आरो ह्रदः प्रथमं ब्रह्मलोकप्रवेशे ब्रह्मलोकमार्गनिरोधकः समुद्रशतसमानगाम्भीर्योऽजस्रनीलजलः अरिभिः कामक्रोधादिभिर्विरचितत्वेन आरेतिनामा ह्रदः । तस्येत्यादि वक्ष्यमाणेष्वप्यनुवर्तते । आरह्रदस्य परपारे वर्तमाना मुहूर्ताः घटिकाद्वयकालाभिमानिनो देवाः । तान्विशिनष्टि—येष्टिहाः । ये इष्टिं इष्टं ब्रह्मलोकानुकूलमुपासनं कामक्रोधादिप्रवृत्त्युत्पादनेन घ्नन्तीति येष्टिहाः । विजरा नदी, विगता जरा यस्याः दर्शनादिना सेयमुपासनक्रियैव तन्नाम्नी नदी । इल्यो वृक्षः, इला पृथिवी, तद्रूपत्वेन इल्येतिनामा तरुः । अयमन्यत्र 'अश्वत्थः सोमसवनः' इत्याख्यायते । सालज्यं संस्थानं, सालवृक्षसमाना ज्या धनुषां गुणा इव वस्तु यत्रोपतीरं तत्सालज्यम् । अनेकसुरसेव्यमानारामवापीकूपतटाकसरिदादिविविधजलपरिपूर्णमित्यर्थः । संस्थानं, अनेकजननिवासरूपं पत्तनमित्यर्थः । अपराजितमायतनं, न केनचित्पराजितमनेकसूर्यसमानत्वेनेत्यपराजितं ब्रह्मणो निवासस्थलम् । हिरण्यगर्भस्य राजमन्दिरमित्यर्थः । तस्मिन्नपराजितनाम्न्यायतने इन्द्रप्रजापती स्तनयित्नुयज्ञत्वेनोपलक्षितौ वाय्वाकाशाविन्द्रप्रजापतिनामानौ द्वारगोपौ द्वाररक्षकौ द्वास्थावित्यर्थः । विभुप्रमितं, अत्यन्तमप्यधिकमहङ्कारस्वरूपमहमित्येव सामान्येन प्रमितं विभुप्रमितं ब्रह्मणः सभास्थानमेतन्नाम । विचक्षणाऽऽसन्दी, विचक्षणा कुशला बुद्धिमहत्तत्त्वेत्यादिशब्दाभिधेयाऽऽसन्दी सभामध्यवेदिः । अमितौजाः पर्यङ्कः, अमितमपरिमितं प्राणसंवादादौ प्रसिद्धं ओजो बलं यस्य सोऽमितौजाः प्राणः पर्यङ्कः ब्रह्मण आसनभूतो मञ्चकः । प्रिया च मानसी, मनसः कारणभूता प्रकृतिर्मनोगताह्लादकारिणी भार्या । चकारस्तस्या अलङ्करणादिकमपि सैवेत्येतदर्थः । प्रतिरूपा च चाक्षुषी, चक्षुष्प्रकृतिभूता तैजसी प्रतिरूपा प्रतिच्छाया । चकारः प्रतिरूपालङ्करणादेरपि चाक्षुषीत्वसंग्रहार्थः । पुष्पाण्यावयतौ वै च जगानि, जगानि जगन्ति चतुर्विधानि भूतानि सलोकसंस्थानानि पुष्पाणि कुसुमानि वै प्रसिद्धानि पुष्पसमानधर्मत्वेन । न केवलं पुष्पाणि जगानि, किंतु आवयतौ च, आसमन्तात्तन्तुसंतानेन निष्पादितौ परावपि आच्छादनपरिधानरूपौ । अनयोरपि भूतैः संकोचविकासादिसामान्यमवगन्तव्यम् । अम्बाश्चाम्बायवीश्चाप्सरसः, अम्बा जगज्जनन्यः श्रुतयः । अम्बायवो न विद्यते अम्बः अभ्यधिकः अयवश्च न्यूनः यासां ता अम्बायवा बुद्धयः, अम्बायवा एव अम्बायव्यः श्रुतिबुद्धयः (१) । अप्सरसः साधारण्यो योषितः । चकारौ उभयोरपि प्रत्येकमप्सरस्त्वयोगार्थौ । अम्बया नद्यः, अम्बमम्बकं लोचनं ब्रह्मज्ञानं यान्तीत्यम्बया उपासनाः । नद्यो वारां प्रवाहधारिण्यः पुरायतनादिवासिलोकभोग्याः । तं उक्तं ब्रह्मलोकं आरो ह्रद इत्यादिना अम्बया नद्यः इत्यन्तेन, इत्थंवित् उक्तेन वक्ष्यमाणेन वा प्रकारेण पर्यङ्कस्थब्रह्मवित् आ गच्छति समन्तात्प्राप्नोति ।

शंनन्द.

[१]तं ब्रह्माऽऽहाभिधावत मम यशसा । विजरां वा अयं नदीं प्रापत् । न वा अयं जरयिष्यतीति ॥ २ ॥

(१) आदि. म्बायवीश्चा ( म्बायवाश्चा ); क. (ह०) येष्टिहाः ( यष्टिहाः ) सालज्यं ( साळज्जुं ) पुष्पाण्यावयतौ वै च जगानि ( पुष्पाण्यादायावयतौ(न्ति) वैराजगानि ); ...विभुप्र ( विभुः प्र ).

(१) क. ह्माऽऽहा ( ह्मा हा ).

( १ ) तं अमानवेन पुरुषेणाऽऽनीयमानमुद्दिश्य ब्रह्मा हिरण्यगर्भ आह ब्रूते स्वपरिचारकानप्सरसश्च । ब्रह्मोक्तिमाह— अभिधावत पर्यङ्कविद्याविदमभितः संमुखं धावत गच्छत मम यशसा मदीयकीर्त्या, ममार्हं संभारं स्वीकृत्य मत्प्रतिपत्त्या पूजां कुरुतेत्यर्थः । ननु भवानजरः, अयं भवतो विपरीतः, कथं भवतः पूजामर्हतीत्यत आह— विजरां जराहारिणीं सार्थनामधारिणीं वै प्रसिद्धामस्मदादीनां अयं पर्यङ्कविद्यावित् नदीं सिन्धुं प्रापत् अवाप्तः । न वै नैव अयं प्राप्तविजरो जरयिष्यति वयोहानिमवाप्स्यति इति अनेन प्रकारेण आहेत्यन्वयः । * शंनन्द.

( २ ) आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन 'देवलोकादादित्यमादित्याच्चन्द्रमसम्' ( बृउ. ६।२।१५ ) इति वाजसनेयकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहितात् वायोरुपरि निवेशः सिद्धः । × रामानुज. ४।३।३

( ३ ) 'दर्शनाच्च'—'स एतं देवयानं...... स ब्रह्मलोकम्' इति कौषीतकिश्रुतेरग्न्यादिलोकप्राप्तिवत् अविशेषेणैव प्रजापतिलोकप्राप्त्यनन्तरं ब्रह्मलोकप्राप्तिं दर्शयति । न हि तत्र ब्रह्मलोकशब्देन कार्यः स उच्यते इति वक्तुं शक्यम् । पार्थक्येन प्रजापतिलोकस्योक्तत्वात् । वल्लभ. ४।३।१४

ब्रह्मलोके ब्रह्मपर्यङ्काभिगमनम्

[1]**तं पञ्चशतान्यप्सरसां प्रतियन्ति । शतं चूर्णहस्ताः । शतं वासोहस्ताः । शतं फलहस्ताः । शतमाञ्जनहस्ताः । शतं माल्यहस्ताः । तं ब्रह्मालङ्कारेणालङ्कुर्वन्ति । स ब्रह्मालङ्कारेणालङ्कृतो ब्रह्म विद्वान् ब्रह्माभिप्रैति ॥**

एवं ब्रह्मण उक्त्यनन्तरमनेकब्रह्मसभास्थजनैः समं तं ब्रह्मलोकमागतं पर्यङ्कविद्याविदं पञ्च शतानि पञ्च संख्याकानि शतानि अप्सरसां रूपयौवनसंपन्नानां मनोरमाणां स्तनजघनभारवशीकृतमध्यदेशानां मदनमदमोमुह्यमानदिगन्तराणां साधारणस्त्रीणां प्रतियन्ति संमुखमागच्छन्ति तद्दर्शनलालसानाम् । संविभागेन संभारानाह—शतं शतसंख्याकाः चूर्णहस्ताः हरिद्राकेसरकुङ्कुमचूर्णकराः । शतं शतसंख्याकाः वासोहस्ताः विविधदुकूलकराः । शतं शतसंख्याकाः फलहस्ताः । शतं शतसंख्याकाः आञ्जनहस्ताः विविधाभरणहस्ताः । शतं शतसंख्याकाः माल्यहस्ताः । तं अनुत्तीर्णारहृदं प्राप्तब्रह्मलोकं ब्रह्मालङ्कारेणालङ्कुर्वन्ति हिरण्यगर्भयोग्येन मण्डनेन मण्डयन्ति । सः पर्यङ्कविद्यावित् अप्सरोभिः ब्रह्मालङ्कारेणालङ्कृतः, स्पष्टम् । ब्रह्म विद्वान् हिरण्यगर्भज्ञानवान् ब्रह्मैवाभिप्रैति हिरण्यगर्भरूपमेव सर्वतः प्राप्नोति, न त्वन्यत् ।

शंनन्द.

[1]**स आगच्छत्यारं ह्रदम् । तं मनसाऽत्येति । तमित्वा संप्रतिविदो मज्जन्ति । स आगच्छति मुहूर्तान् येष्टिहान् । तेऽस्मादपद्रवन्ति । स आगच्छति विजरां नदीम् । तां मनसैवात्येति ॥**

ब्रह्मप्राप्तौ क्रममाह—सः प्राप्तब्रह्मलोकः अप्सरोभिर्ब्रह्मालङ्कारेणालङ्कृतः ताभिः सभाजनैश्च आगच्छति प्राप्नोति आरं ह्रदं आरनामानं ह्रदम् । तं आरं ह्रदं मनसा नावाद्यनपेक्षः केवलेनान्तःकरणेन अत्येति अतीत्य गच्छति । युक्तं ह्येतत् । न ह्यारो ह्रदः कामक्रोधादिवृत्तिभेदः स्वातिक्रमणे मनोव्यतिरिक्तं साधनान्तरमपेक्षते । ये हि ब्रह्मविद्याशून्यास्तेषामनर्थमाह—तं आरं ह्रदं इत्वा केनचित्कर्मणा प्राप्य संप्रतिविदः आत्मनः

---

* शंकरादि छाउ. ४।१५।५ इत्यत्र द्रष्टव्यम् ।

× श्रीकंठश्रीकरौ रामानुजवत् ।

(१) कौउ. १।४; शाटि. प्रतियन्ति । .......माल्यहस्ताः । तं ( प्रतिधावन्ति । शतं ज्वालाहस्ताः । शतमाञ्जनहस्ताः । शतं चूर्णहस्ताः । शतं वासोहस्ताः । शतं फणहस्ताः । तं ); क. शतं चूर्ण.....माल्यहस्ताः । तं ( शतं फलहस्ताः । शतमाञ्जनहस्ताः । शतं माल्यहस्ताः । शतं वासोहस्ताः । शतं चूर्णहस्ताः । तं ); **शंकर.** ३।३।२६, २७; **भास्कर.** ३।३।२६, २७; **रामानुज.** ३।३।२६, २७, ४।१।१४; **निंबार्क.** ३।३।२७; **श्रीकंठ.** ३।३।२६, २७, २८; **श्रीकर.** ३।३।२६, २७, २८; **विज्ञान.** ३।३।२६; **बलदेव.** ४।१।१७.

( १ ) क. साऽत्येति ( साऽप्येति ) येष्टिहान् ( यष्टिहान् ) वात्येति ( वाप्येति ); **शंकर.** विजरां ( विरजां ); **भास्कर. रामानुज.** शंकरवत्; **निंबार्क.** विजरां ( विरजां ) सैवात्ये ( सात्ये ); **श्रीकंठ.** निंबार्कवत्; **श्रीकर.** शंकरवत्.

प्रतिकूलं वैषयिकं सुखं तत्सम्यक्त्वेन अनुकूलत्वेन जानन्तीति संप्रतिविदः, अज्ञा इत्यर्थः। मज्जन्ति भिन्ननौका इव समुद्रे पान्था अपुनरुद्धारं मग्ना भवन्ति। सः अतिक्रान्तारहृदः आगच्छति प्राप्नोति मुहूर्तान्येष्टिहान् येष्टिहेतिनामकान्मुहूर्तान्। ते मुहूर्ताः कामक्रोधादिवृत्त्युत्पादकाः अस्मात् मनसाऽतिक्रान्तारात् अपद्रवन्ति अपगच्छन्ति स्वप्राणपरीप्सवो हतहिरण्यकशिपोर्नृसिंहादिव विप्रचित्तिप्रभृतयः। सः स्वदर्शनेनापद्रावितमुहूर्तः आगच्छति प्राप्नोति विजरां नदीं विजरेतिनाम्नीं नदीम्। तां विजरां नदीं मनसैव साधनान्तरनिरपेक्षेणान्तःकरणेनैव अत्येति अतीत्य गच्छत्येव, न त्वारह्रदोत्तारवन्मुहूर्तादिद्रावणं किंचित्करोति। शंनन्द.

**तत्सुकृतदुष्कृते धुनुते। तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति। अप्रिया दुष्कृतम्। तद्यथा रथेन धावयन्रथचक्रे पर्यवेक्षते। एवमहोरात्रे पर्यवेक्षते। एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि। स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति॥ ४॥**

(१) ननु सुकृतमप्यस्ति सहायमस्य विजरोत्तारे इत्यत आह— तत् तत्र शरीरपरित्यागावसरे उपास्यमानब्रह्मसाक्षात्कारावसरे वा सुकृतदुष्कृते पुण्यपापे धुनुते अश्व इव रोमाणि कम्पनेन सुकृतदुष्कृतयोः परिपाकज्ञानेन परित्यजति। ननु सुकृतदुष्कृतयोः सतोः कथं परित्यागः इत्याशङ्क्य यथा अग्निना सतां काष्ठानां दाहस्तथेति परमं परिहारं परित्यज्य प्रसङ्गात् ब्रह्म विदुषि प्रीतिद्वेषयोः फलं विवक्षुर्ब्रह्मविद्यां स्तौति — तस्य ब्रह्म विदुषः शत्रुमित्रादिसमबुद्धेः प्रियाः प्रीतिं कुर्वाणा ज्ञातयः ज्ञात्युपलक्षिता मनुष्याः सुकृतं पुण्यं उपयन्ति प्राप्नुवन्ति विष्णोरिव प्रियाः। अप्रियाः ब्रह्म विदुषि विद्वेषं कुर्वाणाः दुष्कृतं पापं, उपयन्तीत्यनुवर्तते। नन्विदमतिचित्रं यो हि यत्करोति न स तत्प्राप्नोतीत्याशङ्क्य दृष्टान्तेन समाधानमाह — तत् तत्र कारयितुरलेपे यथा दृष्टान्तः। अयं दृष्टान्तः— रथेन निमित्तभूतेन कारणेन धावयन् भूमौ प्रेरयन् रथचक्रे रथाङ्गे पर्यवेक्षते भूमौ संयोगवियोगफलवती रथचक्रे समन्तादवलोकयते, न तु तत्फलं प्राप्नोति। एवं अनेन प्रकारेण अन्तःकरणशरीरादिकृतादृष्टनिमित्तं प्रवर्तमाने अहोरात्रे रात्र्यहनी पर्यवेक्षते समन्तादवलोकयति। एवं यथा रात्र्यहनी पर्यवेक्षते तथा सुकृतदुष्कृते पुण्यपापे। न केवलं ते एव किंतु सर्वाणि च द्वन्द्वानि छायातपशीतोष्णसुखदुःखादीनि निखिलान्यपि द्वन्द्वानि पर्यवेक्षते। न तु तत्फलभाग्भवति। न हीक्षितुः फलं, कलहादेर्द्रष्टुर्मध्यस्थस्य दुःखस्यादर्शनात्। स उपासक एष प्राप्तब्रह्मलोको ब्रह्मलोकप्राप्तेः पूर्वमेव विसुकृतो विदुष्कृतः अपगतपुण्योऽपगतपापो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति, व्याख्यातम्। शंनन्द.

(२) 'सांपराये तर्तव्याभावात्तथा ह्यन्ये'— देवयानेन पथा पर्यङ्कस्थं ब्रह्म अभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति— 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति' इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' इति। तत्किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यं आहोस्वित् आदावेव देहादपसर्पणे इति विचारणायां श्रुतिप्रामाण्यात् यथाश्रुति प्रतिपत्तिप्रसक्तौ पठति—सांपराय इति। सांपराये गमने एव देहादपसर्पणे इदं विद्यासामर्थ्यात् सुकृतदुष्कृतहानं भवतीति प्रतिजानीते। हेतुं च आचष्टे—तर्तव्याभावादिति। न हि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमस्ति, यदर्थं कतिचित्क्षणान् अक्षीणे ते कल्पेयाताम्। विद्याविरुद्धफलत्वाच्च विद्यासामर्थ्येन तयोः क्षयः। स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति। तस्मात्प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात् पठ्यते। तथा ह्यन्येऽपि शाखिनः ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति— 'अश्व इव रोमाणि विधूय पापम्' (छाउ. ८।१३।१)

(१) क. धुनुते (धुनुवाते) वेक्षते (वेक्षेत) क्षते। एवं सु (क्षेतैव सु) ब्रह्मैवाभि (ब्रह्माभि); शंकर. धुनुते (विधूनुते); रामानुज. धुनुते (विधूनुते, धूनुते); निंबार्क. धुनुते (विधुनुते); श्रीकंठ. श्रीकर. विज्ञान. [illegible]नुत.

इति, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ।

* ब्रशांकर. ३।३।२७

**स[1] आगच्छतील्यं वृक्षम् । तं ब्रह्मगन्धः प्रविशति । स आगच्छति साळज्यं संस्थानम् । तं ब्रह्मरसः प्रविशति । स आगच्छत्यपराजितमायतनम् । तं ब्रह्मतेजः प्रविशति । स आगच्छतीन्द्रप्रजापती द्वारगोपौ । तावस्मादपद्रवतः । स आगच्छति विभुप्रमितम् । तं ब्रह्मयशः प्रविशति । स आगच्छति विचक्षणामासन्दीम् । बृहद्रथन्तरे सामनी पूर्वौ पादौ । श्यैतनौधसे चापरौ । वैरूपवैराजे अनूच्ये । शाक्वररैवते तिरश्ची । सा प्रज्ञा । प्रज्ञया हि विपश्यति ॥**

सः उपासकः उत्तीर्णविजरः आगच्छति प्राप्नोति इल्यं वृक्षं इल्यनामानं वृक्षम् । तं प्राप्तेल्यवृक्षं ब्रह्मगन्धः अननुभूतपूर्वः सर्वसुरभिगन्धातिशायी ब्रह्मगन्धो येनाऽऽघ्रातेन ब्रह्मलोकव्यतिरिक्तलोकेषु सुगन्धेष्वपि दुर्गन्धबुद्धिर्भवति तादृशो विड्वराहाणामिव मनुष्यजन्मन्याघ्रातश्चम्पकादिगन्धो विड्गन्धे दुर्गन्धबुद्धिजनकः प्रविशति घ्राणद्वारेणान्तर्हृदयकमलमुकुलमागच्छति । सः आघ्रातब्रह्मगन्धः आगच्छति प्राप्नोति साळज्यं संस्थानं साळज्यनामकं पत्तनम् । तं प्राप्तसाळज्यं ब्रह्मरसः अनास्वादितपूर्वोऽन्यरसेहेयताबुद्धिजनको ब्रह्मलोक एव आसक्तिजनकोऽपूर्वो रसो रसनाद्वारेण प्रविशति, व्याख्यातम् । सः आस्वादितब्रह्मरसः आगच्छति प्राप्नोति अपराजितमायतनं अपराजितनामकं ब्रह्मगृहम् । तं प्राप्तापराजितं ब्रह्मतेजः अदृष्टपूर्वं सर्वतेजसां न्यक्कारकारकं ब्रह्मलोक एवाऽऽसक्तिकारकं चक्षुर्द्वारा प्रविशति, व्याख्यातम् । सः प्रविष्टब्रह्मतेजा आगच्छति प्राप्नोति इन्द्रप्रजापती द्वारगोपौ इन्द्रप्रजापतिनामानौ द्वाररक्षाकारकौ द्वारस्थौ। तौ इन्द्रप्रजापती द्वारस्थौ अस्मात् प्राप्तब्रह्मगन्धरसतेजसो ब्रह्मण एव दर्शनमात्रेण बद्धाञ्जली परित्यक्तासनौ द्वारप्रदेशात्सरभसं जय जयेति शब्दमुच्चारयन्तौ अपद्रवतः अपसरतः । सः अपद्रावितेन्द्रप्रजापतिः आगच्छति प्राप्नोति विभुप्रमितं विभुनामकं प्रमितं सभास्थलम् । तं प्राप्तविभुप्रमितं ब्रह्मयशः ब्रह्माहमस्मीति ब्रह्मकीर्तिरहंकारो मनसा द्वारेण प्रविशति, व्याख्यातम् । सः प्राप्तब्रह्मयशाः आगच्छति प्राप्नोति विचक्षणामासन्दीं विचक्षणेतिनामिकाम् ( सभामध्यवेदिम् ) । तस्या आसन्द्याः प्रकारमाह — बृहद्रथन्तरे सामनी अस्याः पूर्वौ पादौ । श्यैतनौधसे सामनी अस्या अपरौ पादौ। वैरूपवैराजे सामनी अस्या अनूच्ये दक्षिणोत्तरे अङ्गे । शाक्वररैवते सामनी अस्याः तिरश्ची पूर्वपश्चिमे( अङ्गे )। सा चतुरस्रा वेदी प्रज्ञा । सा विचक्षणाऽऽसन्दी प्रज्ञा महत्तत्त्वरूपिणी बुद्धिः । तत्राऽऽगतस्य फलमाह— प्रज्ञया हि विपश्यति । हि यस्माद्विचक्षणां प्राप्तस्तस्मात् प्रज्ञया आत्मबुद्ध्या विविधं विश्वं पश्यति ।

शंनन्द.

**स[1] आगच्छत्यमितौजसं पर्यङ्कम् । स प्राणः । तस्य भूतं च भविष्यच्च पूर्वौ पादौ । श्रीश्चेरा चापरौ । बृहद्रथन्तरे अनूच्ये । भद्रयज्ञायज्ञीये शीर्षण्ये । ऋचश्च सामानि च प्राचीनातानानि । यजूंषि तिरश्चीनानि । सोमांशव उपस्तरणम् । उद्गीथ उपश्रीः । श्रीरुपबर्हणम् । तस्मिन् ब्रह्माऽऽस्ते । तमित्थंवित्पादेनैवाग्र आरोहति ॥**

सः प्राप्तप्रज्ञः आगच्छति प्राप्नोति अमितौजसं पर्यङ्कं अमितौजोनामकं पर्यङ्कम् । स प्राणः पञ्चवृत्तिः सर्वेन्द्रियेभ्योऽभ्यधिकः क्रियाशक्तिः । तस्य अमितौजसः पर्यङ्कस्य भूतं च भविष्यच्च पूर्वौ पादौ मस्तकाधारगात्रस्याधस्ताद्वर्तमानौ प्राच्यां दिशि चरणौ अतीतं भावि च

* भास्करादीनि ब्रशांकरवत् । अन्यच्च ब्रशांकरादि मुउ. १।१।३ इत्यत्र द्रष्टव्यम् ।

(१) कौउ. १।५, आदर्शपुस्तके मूले टीकायां च 'विभुप्रमितं तं ब्रह्मतेजः' इति पाठो वर्तते । तत्र आदर्शपुस्तकटिप्पणीगतः 'ब्रह्मयशः' इति पाठो युक्तत्वात् स्वीकृतः ।; आटि. ( बृहद्रथन्तरे....तिरश्ची० ) धसे चापरौ+ ( पादौ ); क. साळज्यं ( साळुजुं ) तेजः ( यशः ) यशः ( तेजः ); रामानुज. निंबार्क. ४।३।९.

(१) आटि. नातानानि ( नातानं ); क. बृहद्रथन्तरे..... शीर्षण्ये ( भद्रयज्ञायज्ञिये शीर्षण्ये । बृहद्रथन्तरे अनूच्ये ) द्गीथ उपश्रीः ( द्गीथोऽपरश्च यः ).

विश्वम् । चकारौ एकैकस्यैकैकपादत्वार्थौ । श्रीश्चेरा चापरौ । इरा इला । पादगात्रस्याधस्ताद्वर्तमानौ पश्चिमायां दिश्यन्यौ चरणौ लक्ष्मीर्धरणी च । चकारौ पूर्ववत् । बृहद्रथन्तरे अनूच्ये दक्षिणोत्तरयोर्दीर्घे खट्वाङ्गे अनूच्यसंज्ञे बृहद्रथन्तरसामनी । भद्रयज्ञायज्ञीये शीर्षण्ये पूर्वपश्चिमयोर्ह्रस्वे खट्वाङ्गे पादाधारे शीर्षण्ये शीर्षपादस्थले भद्रयज्ञायज्ञीयसामनी । एवं कोष्ठचतुष्टये पादचतुष्टयेन निष्पन्ने पट्टिकामाह---ऋचश्च सामानि च प्राचीनातानानि । प्राक्प्रत्यगुपर्यधोभागेन वर्तमाना दीर्घाः पट्टिकाः प्राचीनातानानि तदृचश्च सामानि च । चकारौ ऋक्सामयोरधऊर्ध्वभागनियमार्थौ । यजूंषि तिरश्चीनानि यजुंषि प्रसिद्धानि दक्षिणोत्तरयोस्तिर्यक्पट्टिकारूपाणि । सोमांशव उपस्तरणं सोमकिरणाः सुकोमलकशिपुस्वरूपम् । उद्गीथ उपश्रीः । उद्गीथः सामभक्तिविशेषः । उपस्तरणस्योपरि आपादमस्तकं प्रक्षिप्यमाणं क्षीरगौरं मृदुतरं वस्त्रमुपश्रीः, श्रीरुपबर्हणं उच्छीर्षकं लक्ष्मीः । यद्यपीयं पादत्वेन पूर्वमुक्ता, तथाऽपि पूर्वा लौकिकी उत्तरा तु वैदिकीति विभागात्पुनरुक्तिर्न दोषः । तस्मिन् प्राणपर्यङ्के भूतं चेत्यारभ्य श्रीरुपबर्हणमित्यन्तेनोक्ते ब्रह्माऽऽस्ते हिरण्यगर्भस्वरूपं स्वतादात्म्येनोपास्यमानमुपविष्टं वर्तते । तं ब्रह्मणः आसनभूतं पर्यङ्कं उक्तं इत्थंवित् उक्तपर्यङ्कस्थेन ब्रह्मणा तादात्म्यवित् पादेनैव चरणेनैव, न तु पादावधस्तात्प्रक्षिप्य जघनकराद्यारोपणेन, अग्रे प्रथमतः आरोहति आरोहणं करोति । शंनन्द.

[1]तं ब्रह्मा पृच्छति कोऽसीति । तं प्रतिब्रूयात् ॥ ५ ॥

(१) तं पादेनैवोक्तपर्यङ्कमारोहन्तं प्रियं पुत्रमिव पिता ब्रह्मा पृच्छति हिरण्यगर्भो ब्रूते । ब्रह्मोक्तिमाह — कः प्रश्ने, असि भवसि इति अनेन प्रकारेण । श्रुतिः शिक्षयति—तं कोऽसीति ब्रुवाणं ब्रह्माणं प्रतिब्रूयात् प्रत्युत्तरं वदेत् । शंनन्द.

( २ ) 'सूक्ष्मं प्रमाणतश्च तथोपलब्धेः'— इतश्च विदुषोऽपि बन्धो नात्र विदग्धः, यतः सूक्ष्मं शरीरमनुवर्तते । कुत इदमवगम्यते । प्रमाणतस्तथोपलब्धेः । उपलभ्यते हि देवयानेन पथा गच्छतो विदुषः 'तं प्रतिब्रूयात्' 'सत्यं ब्रूयात्' इति चन्द्रमसा संवादवचनेन शरीरसद्भावः । अतः सूक्ष्मशरीरमनुवर्तते । अतश्च बन्धो न दग्धः । * रामानुज. ४।२।९

ऋतुरस्मि । आर्तवोऽस्मि । आकाशाद्योनेः संभूतो भायाः । एतत्संवत्सरस्य तेजो भूतस्य भूतस्य भूतस्य. भूतस्याऽऽत्मा । त्वमात्माऽसि । यस्त्वमसि सोऽहमस्मीति ॥

वक्तव्यं प्रत्युत्तरमाह — ऋतुरस्मि वसन्ताद्यृतुस्वरूपो भवामि । कालात्मकत्वे उपपत्तिमाह — आर्तवोऽस्मि ऋतुसंबन्धी भवामि, कालात्मकेन त्वया संबन्धात् । मम कालात्मनस्त्वया तादृशेनाभेदप्राप्तिर्यतः, ततः कालः कालसंबन्धी चाहं भवामीत्यर्थः । तर्हि किं यथा चन्द्रमसः समागतः ऋतुरार्तवश्च तथा, इत्याशङ्क्य नेत्याह — आकाशात् अव्याकृतात् योनेः उपादानकारणात् संभूतः उत्पन्नो भायाः स्वयंप्रकाशाद्ब्रह्मणः । अयमर्थः — न केवलं जडमुपादानकारणं, किंतु स्वयंप्रकाशं ब्रह्म शबलमिति । एतत्संवत्सरस्य तेजो भूतस्य भूतस्य भूतस्य भूतस्य । ननु कथं भाया आकाशाद्योनेः संभूतः, कथमृतुरार्तवश्चेत्यत आह — भूतस्य अतीतस्य भूतस्य यथार्थस्य कारणरूपस्य भूतस्य चतुर्विधचेतनाचेतनात्मकस्य भूतस्य पञ्चमहाभूतात्मकस्य । न हि संवत्सरमन्तरेण चतुर्विधानि भूतानि पञ्च भूतानि चोत्पद्यन्ते । संवत्सरस्य वसन्ताद्यनेकर्तुस्वरूपस्य एतत् संवत्सरप्रवर्तकमन्तर्बहिर्वर्तमानं तेजो दीप्तिस्वरूपं मद्बुद्धिप्रकाशकं आत्मा आत्मेतिप्रत्ययव्यवहारयोग्यं, संवत्सरस्य च तत्कार्यस्य च मयि स्वयंप्रकाशस्वरूपे अध्यस्तत्वात् । यदाऽपि एतत्संवत्सरस्यास्य तेजोभूतस्य तेजःस्वरूपस्य आदित्यादितेजसः प्रवर्तमानत्वात्, भूतस्य व्यवहारयोग्यस्य चेतनाचेतनात्मकप्रपञ्चस्य भूतस्य कारणस्य भूतस्य कार्यस्य आत्मा अधिष्ठानभूतः इति व्याख्येयं, तदाऽपि ऋतुत्वमार्तवत्वं चाविरुद्धं कालस्यापि कारणस्य समत्वात् ।

---

(१) आटि. ब्रह्मा पृच्छति ( ब्रह्माऽऽह ).

* निंबार्क. रामानुजवत् ।

(१) कौउ. १।६; क. भायाः । एतत् ( भार्यायै रेतः ) तेजो... स्याऽऽत्मा ( तेजोभूतस्य भूतस्याऽऽत्मा भूतस्य भूतस्य ) सोऽहमस्मीति (सोऽहमस्मि); रामानुज. निंबार्क. ४।२।९.

ननु कोऽयमात्मेत्यत आह — त्वं पर्यङ्कस्थो ब्रह्मा आत्माऽसि आत्मशब्दप्रत्ययभाग्भवसि । यद्येवं तर्हि किं तवेत्यत आह — यः प्रसिद्धः पर्यङ्कस्थस्त्वमसि ब्रह्मा मत्पुरतः स्थितोऽसि सः युष्मच्छब्दप्रत्ययालम्बन उक्तः अहमस्मि अस्मच्छब्दप्रत्ययालम्बनो भवामि । इति अनेन प्रकारेण प्रतिब्रूयादित्यन्वयः ।

शंनन्द.

ब्रह्मप्राप्तस्य सत्यात्मता, वेदात्मता, सर्वकरणद्वारा सर्वाप्तिश्च

तमाह कोऽहमस्मीति । सत्यमिति ब्रूयात् । किं तद्यत्सत्यमिति । यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सत् । अथ यद्देवाश्च प्राणाश्च तत्त्यम् । तदेतया वाचाऽभिव्याह्रियते सत्यमिति । एतावदिदं सर्वम् । इदं सर्वमसि । इत्येवैनं तदाऽऽह । + तदेतदृक्श्लोकेनाभ्युक्तम् ॥

तं एवं वदन्तमुपासकं आह ब्रूते पर्यङ्कस्थो ब्रह्मा । कः प्रश्ने, अहमस्मि, यस्त्वमात्माऽसीति भवतोक्तः स कोऽहं ब्रह्मा भवामि इति अनेन प्रकारेण ब्रह्मणा पुनः पृष्ट उपासको ब्रह्माणं प्रति सत्यं सत्यशब्दाभिधेयाधिष्ठानं इति ब्रूयात् अनेन प्रकारेण वदेत् । एवमुक्ते पुनर्ब्रह्मा पृच्छति — किं प्रश्ने, तत् भवतोक्तं यत् भवतः प्रसिद्धं सत्यं सत्यशब्दाभिधेयं इति अनेन प्रकारेण । ब्रह्मणा पृष्टः पुनः प्रत्युत्तरं ब्रूयात् — यत् प्रसिद्धं अन्यद्देवेभ्यश्च प्राणेभ्यश्च इन्द्रियाधिष्ठातृभ्योऽग्न्यादिभ्यः इन्द्रियेभ्यः सप्राणेभ्यो व्यतिरिक्तम् । चकारौ वाय्वाकाशाभ्यामप्यन्यदित्येतदर्थौ । तत् उक्तं इन्द्रियप्राणव्यतिरिक्तं सत् सच्छब्दालम्बनम् । अथ पक्षान्तरे, यत् प्रसिद्धं देवाश्च प्राणाश्च अग्न्यादयः इन्द्रियाणि सप्राणकानि । वाय्वाकाशौ च पूर्ववत् । तत् उक्तं देवादिकं त्यं त्यच्छब्दालम्बनम् । तत् उक्तं सचराचरं विश्वं एतया उक्तया सत्यरूपया वाचा वचनेन अभिव्याह्रियते सर्वत उच्यते । एतच्छब्दार्थमाह — सत्यमिति । सत्यं सत्यशब्दरूपम् । इति अनुकरणार्थः । एतावत् इयत्परिमाणमिदं प्रत्यक्षादिप्रमाणगम्यं सर्वं निखिलं जगत् । इदं सर्वमसि, इदं प्रत्यक्षादिप्रमाणगम्यं सर्वं निखिलं भूतभौतिकात्मकं जगद्ब्रह्मन्, त्वं भवसि । * इदानीं श्रुतिराह— इत्येवैनं तदाऽऽह, तदा तस्मिन्ब्रह्मणो मञ्चकसमीपागमनकाले इत्येव उक्तेनैव प्रकारेण, न त्वन्येन, एनं ब्रह्माणं आह उपासकः समागतो ब्रूते ।

शंनन्द.

यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति स विज्ञेय ऋषिर्ब्रह्ममयो महानिति । तमाह केन मे पौंस्यानि नामान्याप्नोषीति । प्राणेनेति ब्रूयात् । केन स्त्रीनामानीति । वाचेति । केन नपुंसकानीति । मनसेति । केन गन्धानिति । प्राणेनेत्येव ब्रूयात् । केन रूपाणीति । चक्षुषेति । केन शब्दानिति । श्रोत्रेणेति । केनान्नरसानिति । जिह्वयेति । केन कर्माणीति । हस्ताभ्यामिति । केन सुखदुःखे इति । शरीरेणेति । केनाऽऽनन्दं रतिं प्रजातिमिति । उपस्थेनेति । केनेत्या इति । पादाभ्यामिति । केन धियो विज्ञातव्यं कामानिति । प्रज्ञयेति ब्रूयात् ॥

तं उपासकं स्वात्मनः सर्वात्मत्वं ब्रुवाणं आह ब्रूते ब्रह्मा । केन करणभूतेन रूपेण वा मे मम ब्रह्मणः

---

+ 'तदेतत्' इत्यादेः 'यजूदरः' इत्यस्मिन्श्लोकस्य च व्याख्यानं त्रुटितम् ।

(१) आटि. (तदेत......भ्युक्तम्०) तदेतदृक्श्लोके (तच्छ्लोके); क. तदेतया (तदेकया) सर्वमसि (सर्वमस्मि); रामानुज. निंबार्क. सत्यमिति ब्रू (सत्यं ब्रू).

* अवतरणमिदं 'इदं सर्वमसि' इत्यतः पूर्वमादर्शपुस्तके मुद्रितमस्ति, तत् लेखकादिदोषादिति निश्चित्यात्र समाकृष्टम् ।

(१) कौउ. १।७; आटि. (यजूदरः.....महानिति०) पौंस्यानि (पौंस्तानि) प्राणेनेत्येव (घ्राणेनेति) प्राणेनेत्येव ब्रूयात् (प्राणेनेति); क. स विज्ञेय (विज्ञेय) पौंस्यानि (पौंस्नानि) केन स्त्रीनामा.... मनसेति (केन नपुंसकानीति । मनसेति । केन स्त्रीनामानीति । वाचेति ) प्राणेनेत्येव ब्रूयात् (घ्राणेनेति) प्रजाति (प्रजा) प्रज्ञयेति (प्रज्ञयैवेति); ब्रशांकर. ४।३।१; भास्कर. ३।३।३० यजूदरः सामशिरा (तमुवद्रुमदरः सामभ्यः) स विज्ञेय (विज्ञेय) प्रोषीति (प्रोतीति) केन स्त्रीनामा.... मनसेति (केन नपुंसकानीति । मनसेति । केन स्त्रीनामानीलि । वाचेति । ).

सर्वात्मनः पौंस्यानि पुंलिङ्गसंबन्धीनि नामानि नामधेयानि आप्नोषि प्राप्नोषि इति अनेन प्रकारेण ब्रह्मणा पृष्टे प्राणेन पञ्चवृत्त्यात्मकेन साधिदैविकेन करणेन रूपेण वा इति ब्रूयात् अनेन प्रकारेण प्रत्युत्तरं वदेदुपासकः। पुनर्ब्रह्मा पृच्छति—केन करणेन रूपेण वा स्त्रीनामानि स्त्रीलिङ्गनामधेयानि। आप्नोषीति अत्र वक्ष्यमाणेषु च अनुवर्तते। इति अनेन प्रकारेण पृष्टे, वाचा प्राणनिष्पाद्यया वर्णाभिव्यक्तिहेतुभूतया इति अनेन प्रकारेण, ब्रूयादित्यनुवर्तते अत्र वक्ष्यमाणेषु च। पुनः पृच्छति—केन करणेन रूपेण वा नपुंसकानि नपुंसकलिङ्गनामानि इति अनेन प्रकारेण पृष्टे उत्तरमाह— मनसा अन्तःकरणेन साधिदैविकेन इति अनेन प्रकारेण। पुनः पृच्छति—केन करणेन गन्धान् पृथिव्येकगुणान् इति अनेन प्रकारेण। उत्तरमाह—प्राणेन साधिदैविकेन इत्येव ब्रूयात् अनेनैव प्रकारेण वदेत्। ब्रूयादित्यनुवर्तते इत्येतदर्थं मध्ये त्र ग्रहणमन्तेऽपि ग्रहीष्यति। एवकारः प्राणशब्दस्य द्विरभिधानं कथं करणीयमितिशङ्कानिवारणार्थः। पुनः पृच्छति—केन करणेन रूपाणि तेजोऽबन्नगुणभूतानि इति अनेन प्रकारेण। उत्तरमाह—चक्षुषा नेत्रेण साधिदैविकेन करणेन इति अनेन प्रकारेण। केन स्पर्शान्, त्वचा, इति प्रश्नोत्तरे बहिरेवावगन्तव्ये। पुनः पृच्छति—केन करणेन शब्दान् ध्वनिवर्णपदवाक्यादिरूपान् इति अनेन प्रकारेण। उत्तरमाह—श्रोत्रेण शब्दोपलब्धिकरणेन साधिदैविकेन इति अनेन प्रकारेण। पुनः पृच्छति—केन करणेन अन्नरसान् अन्नस्यादनीयस्य लेह्यपेयचोष्यभोज्यस्य रसान् कटुकाम्ललवणतीक्ष्णकषायमधुररसान् इति अनेन प्रकारेण। उत्तरमाह — जिह्वया रसनेन्द्रियेण साधिदैविकेन इति अनेन प्रकारेण। पुनः पृच्छति—केन करणेन कर्माणि आदातव्यानि इति अनेन प्रकारेण। उत्तरमाह—हस्ताभ्यां हस्तद्वयरूपेण करणेन साधिदैविकेन इति अनेन प्रकारेण। पृच्छति—केन करणेन सुखदुःखे अनुकूलप्रतिकूलवेदनीये इति अनेन प्रकारेण। उत्तरमाह—शरीरेण स्थूलसूक्ष्माख्येन पुण्यापुण्यसहकृताज्ञानहेतुना देहेन इति अनेन प्रकारेण। पुनः पृच्छति—केन करणेन आनन्दं मैथुनाऽवसानसमुत्थं सुखं, रतिं मैथुनरागजं सुखं आमैथुनावसानं योषिदालिङ्गनमारभ्य, प्रजातिं प्रजाः कन्यासुतादिरूपाः इति अनेन प्रकारेण। उत्तरमाह —उपस्थेन उपस्थाख्येन करणेन स्त्रीपुंसलिङ्गभेदभिन्नेन साधिदैविकेन इति अनेन प्रकारेण। पुनः पृच्छति —केन करणेनेत्या गतीः इत्यनेन प्रकारेण। उत्तरमाह —पादाभ्यां पादद्वयाख्येन करणेन साधिदैविकेन इति अनेन प्रकारेण। पृच्छति—केन करणेन धियः बुद्धिवृत्तीः, विज्ञातव्यं धियां विषयज्ञानं, कामान् विविधेच्छापरपर्यायरूपान् इति अनेन प्रकारेण। उत्तरमाह— प्रज्ञया स्वयंप्रकाशेनाऽऽत्मबोधेन। यद्यपि सर्वमिदमनयैवाऽऽप्यते तथाऽपि वागादिकं नामाद्यवाप्तौ साक्षात्करणमस्ति व्यवधायकं, न त्वेवं बुद्ध्यादौ किंचिदस्ति। यद्यपि सुखदुःखे अपि प्रज्ञैकवेद्ये तथाऽपि मम पादे सुखं शिरसि च दुःखमित्यादिप्रत्ययानुसारेण शरीरेणेत्युक्तम्। यद्यपि नाममात्राप्तौ करणं वाक्, प्राणश्च जीवनमन्तरेण न करणं, मनश्च सर्वोपलब्धिसाधारणं करणं, तथाऽपि स्त्रीपुंसव्यक्तिवज्झटित्येव नपुंसकव्यक्तेर्बाह्यकरणैः प्रत्ययानुदयादस्ति नपुंसकाधिगमे मनसोऽभ्यधिको व्यापारो यतः, तत उक्तं मनसा नपुंसकानीति। प्राणस्य जीवनमन्तरेणाकरणस्यापि वाग्व्यापारसहकारित्वाद्वाक्प्राणौ नामाप्तौ करणं भवतः। स्थिते च करणत्वे, प्राणस्य पुरुषत्वाद्वाचः स्त्रीत्वाच्च वाक्प्राणयोर्विभागेन करणत्वमविरुद्धम्। प्रतर्दनाग्निहोत्रे च वाक्प्राणयोर्नामाप्तौ करणत्वमर्थाद्वक्ष्यति— 'यावद्वा' इत्यादिना। इति ब्रूयात्, व्याख्यातम्। शंनन्द.

**तमाह आपो वै खलु मे ह्यसावयं ते लोक इति। सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद॥ ७॥**

इति प्रथमोऽध्यायः॥

तं पादेन पर्यङ्कमारूढमुक्तोत्तरवादिनं आह पर्यङ्कस्थो ब्रह्मा ब्रूते। ब्रह्मोक्तिमाह — आपः अप्शब्दाभिधेया-

---

(१) क. आपो (यो) मे ह्यसावयं ते लोक इति (मे लोकोऽयं तेऽसाविति); शंकर. व्यष्टिस्तां (व्युष्टिस्तां) व्यष्टिं (व्युष्टिं); भास्कर. मे ह्यसावयं ते लोक इति (लोके यत्तेऽसाविति) व्यष्टिस्तां (व्युष्टिस्तां).

न्यप्रधानानि पञ्चीकृतपञ्चमहाभूतानि सभौतिकानि वै प्रसिद्धानि लोकवेदयोः खलु निश्चितं अनुपचरितमित्यर्थः। मे मम सर्वस्रष्टुर्हिरण्यगर्भस्य परब्रह्माभिन्नस्य, हि यस्मादापो मम तस्मात् असौ अम्मयो मदीयः अनेककोटियोजनविस्तीर्णः सर्वसुखभूमिः अयं प्रत्यक्षो मन्निवासः ते तव मदुपासकस्य मदभिन्नस्य लोकः ब्रह्मलोकः, यावन्मदीयं तावत्त्वदीयमित्यर्थः। इति अनेन प्रकारेण तमा- इत्यन्वयः। इदानीं उक्तोपासनस्य फलं संक्षेपेण श्रुतिराह — सा शास्त्रैकवेद्या आप इत्यादिना प्रकृता या प्रसिद्धा ब्रह्मविदां ब्रह्मणः पर्यङ्कस्थस्य हिरण्यगर्भस्य जितिः जयरूपा, सर्वनियन्तृत्वमित्यर्थः। या प्रसिद्धा व्यष्टिः व्याप्तिः, सर्वात्मकत्वमित्यर्थः। तां उक्तां जितिं जयरूपां जयति स्वाधीनां करोति। तां उक्तां व्यष्टिं व्याप्तिं व्यश्नुते व्याप्नोति। व्याप्तारमाह— यः प्रसिद्ध उपासकः एवं वेद उक्तेन प्रकारेण पर्यङ्कस्थं ब्रह्म उपास्ते। य एवं वेद, व्याख्यातम्। वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः।     शंनन्द.

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपाद-
शिष्यशंकरानन्दभगवतः कृतौ कौषीतकि-
ब्राह्मणोपनिषद्दीपिकायां
प्रथमोऽध्यायः॥

---

## द्वितीयोऽध्यायः

### ( प्राणोपासना )

प्राणस्य ब्रह्मत्वं, प्राणो ब्रह्मेत्युपासनाङ्गं व्रतमयाचनं
तद्व्रतफलं च

**प्राणो ब्रह्मेति ह स्माऽऽह कौषीतकिः। तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतम्। वाक्परिवेष्ट्री। चक्षुर्गोत्रम् *। श्रोत्रं संश्रावयितृ। तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति॥**

प्रथमेऽध्याये पर्यङ्कविद्या उक्ता। तत्र चोक्तं 'स आगच्छत्यमितौजसं पर्यङ्कं, स प्राणस्तस्य' इत्यादिना प्राणस्य महाप्रभावत्वम्। उपासकश्च मन्दमध्यमोत्तमभेदेन त्रिविधो भवति। तत्र यः सकृदुक्तं सोपपत्तिकं गृह्णाति स उत्तमः। यस्त्वनेकश उच्यमानमात्मानं गुरुं च संक्लेश्य गृह्णाति स मन्दः। यस्तु गुरूक्तं गृह्णन्स्वचित्तं निरोद्धुमशक्तः स तु मध्यमः। स तु गुरुणोक्तस्य वाऽन्यस्य वोपदेशेन चित्तस्थैर्यं विविधैर्वैदिकैरुपायैर्नेतव्य इति न्यायमाश्रयन्ती भगवती श्रुतिः प्राणोपासनं चित्तस्थैर्यकरमनेकफलकल्पद्रुमरूपं तद्विदश्च बाह्याध्यात्मिककर्माणि विविधफलानि वक्तुं द्वितीयाध्यायमारभते। तत्र प्राणो ब्रह्मेत्युपासनं विवक्षुः प्रसिद्धस्यर्षेर्मतमाह — प्राणः योऽयमास्येऽन्तः पञ्चवृत्तिः ब्रह्म सत्यज्ञानानन्दादिरूपं जगत्कारणं इति ह स्माऽऽह। ह ऐतिह्ये। स्म प्रसिद्धौ। इत्याह एवमुक्तवान् कौषीतकिः। कुत्सितं निन्द्यं हेयमित्यर्थः, सीतं सीतलं सांसारिकं सुखं यस्य स कुषीतः, कुषीत एव कुषीतकः, तस्यापत्यं कौषीतकिः। ननु ब्रह्म महाराजोपचारार्हं, प्राणश्च न तथा, इत्याशङ्क्य प्राणेऽपि महाराजचिह्नानि कानिचित्संपादयति — तस्य उक्तस्य ह प्रसिद्धस्य वै स्मर्यमाणस्य एतस्य प्रत्यक्षस्यैव मुखबिले वर्तमानस्य प्राणस्य पञ्चवृत्तेर्ब्रह्मणो ब्रह्माभिन्नस्य मनः संकल्पविकल्पात्मकमन्तःकरणं दूतं महाराजस्येव संधिविग्रहकारिभृत्यवद्वर्तमानम्। वाक् ताल्वादिस्थानस्थमिन्द्रियं परिवेष्ट्री परिवेषणस्य कर्त्री महाराजस्य विश्वसनीया योषिदिव। चक्षुः रूपोपलब्धिकरणमिन्द्रियं गोत्रं गोशब्दवाच्यानामिन्द्रियाणां रक्षकं महाराजस्येव गोर्भूमेः रक्षको मन्त्री।

---

(१) कौउ. २।१; आटि. वाक्परिवेष्ट्री.....संश्रावयितृ ( चक्षुर्गोप्तृ। श्रोत्रं संश्रावयितृ। वाक्परिवेष्ट्री। स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान्भवति। यश्चक्षुर्गोप्तृ गोप्तृमान्भवति। यः श्रोत्रं संश्रावयितृ संश्रावयितृमान्भवति। यो वाचं परिवेष्ट्रीं परिवेष्ट्रीमान्भवति।); क. ( ह वा०) वाक्परिवेष्ट्री.... संश्रावयितृ (चक्षुर्गोप्तृ। श्रोत्रं संश्रावयितृ। वाक्परिवेष्ट्री। स यो ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वेद दूतवान्भवति। यश्चक्षुर्गोप्तृ गोप्तृमान्भवति। यः श्रोत्रं संश्रावयितृ संश्रावयितृमान्भवति। यो वाचं परिवेष्टृ परिवेष्टृमान्भवीत।) ( सर्वां० ).

* 'गोप्तृ' इत्यादर्शपुस्तकपाठः। दीपिकानुगतत्वात्तु 'गोत्रम्' इत्यादर्शटिप्पणीगतः पाठः स्वीकृतः।

श्रोत्रं शब्दोपलब्धिकरणं संश्रावयितृ सम्यक् श्रवणकारकं प्रतीहाररूपम् । तस्मै वा एतस्मै प्राणाय ब्रह्मणे, कृतं व्याख्यानम् । हकारषष्ठयोरभावो विशेषः । अत्र चतुर्थी तु बलिशब्दयोगार्था । एता उक्ता मनआद्याः सर्वाः निखिलाः देवताः देवताशब्दवाच्याः अयाचमानाय इदं मह्यमाहरन्त्विति प्रार्थनामकुर्वाणाय बलिं गर्भदासा इव राज्ञः करं, अपेक्षितमर्थजातमित्यर्थः । हरन्ति आहरन्ति अर्पयन्तीत्यर्थः । शंनन्द.

**[1]तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद । तस्योपनिषन्न याचेदिति । तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति ॥**

तथो एव उ अपि तथैव, न त्वन्यथा, अस्मै प्राणोपासकाय सर्वाणि निखिलानि भूतानि स्थिरजङ्गमानि अयाचमानायैव इदं मे प्रयच्छन्त्विति प्रार्थनामकुर्वाणायैव, न तु कुर्वाणायापि, बलिं हरन्ति, व्याख्यातम् । अस्मै इति य उक्तस्तमाह — यः प्रसिद्धः उपासकः एवं वेद उक्तेन प्रकारेणोपास्ते । तस्य प्राणस्य ब्रह्मणो मनो दूतमित्यादिनोपासकस्य उपनिषत् रहस्यव्रतं न याचेत् प्राणात्ययेऽपि याच्ञां न कुर्यात् । इति उपनिषत्कथनसमाप्त्यर्थम् । अयाच्ञायां दृष्टान्तमाह—तत् तत्र अयाच्ञायां दृष्टान्तः । यथा दृष्टान्ते ग्रामं ब्राह्मणादिसमाकीर्णं देशविशेषं भिक्षित्वा भिक्षार्थं प्रतिगृहं गत्वा अलब्ध्वा एकमपि सिक्थमप्राप्य उपविशेत् ततो भिक्षाप्राप्तौ निराशः सन्नुपवेशनं कुर्यात्तदप्राप्तौ संजातक्रोध एवंसंकल्पवान् । भिक्षुकस्य संकल्पमाह — नाहमतो दत्तमश्नीयां अतः अनेन ग्रामेण मिलितेन अमिलितेन वा दत्तं समर्पितं नाश्नीयामहं भोजनं न करवाण्यहं भिक्षुकः इति अनेन प्रकारेण संकल्पः । शंनन्द.

**[2]ये एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इति । एष धर्मो याचितो भवति । अन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ १ ॥**

ये एव अदातृत्वेन प्रसिद्धा एव, न त्वन्ये, एनं स्वस्मादप्राप्तभिक्षं स्वेभ्यो विगतस्पृहं पुरस्तात् पूर्वमस्मात्संकल्पात् प्रत्याचक्षीरन् गच्छास्मत्तो न दास्याम इति निराकरणं कुर्युः, त एव प्रत्याख्यातार एव, न त्वन्ये, एनं अयाचकं तन्मुखावलोकनपराङ्मुखं उपमन्त्रयन्ते उपमन्त्रणं कुर्वन्ति, ददाम दानं करवाम ते तुभ्यं पूर्वमस्मत्प्रार्थकाय इदानीमपगताशाय इति अनेन प्रकारेण । एष प्रत्यक्षो दीनवक्त्रत्वादिलक्षणो धर्मो गुणविशेषः याचितः याचको याचकस्य भवति, स्पष्टम् । अन्यतस्त्वेव, तुशब्दः पक्षान्तरे, अन्यस्मान्निस्पृहः प्रसन्नवदनोऽन्य एव अयाच्ञायामेव, न तु याच्ञायां, यदि वर्तते तदैव एनमुपमन्त्रयन्ते ददाम त इति, व्याख्यातम् । एवं याच्ञाऽयाच्ञयोर्गुणदोषान् पर्यालोच्य न याचेदित्यर्थः । शंनन्द.

**[1]प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यः । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक्परस्ताच्चक्षुरारुन्धे । चक्षुः परस्ताच्छ्रोत्रमारुन्धे । श्रोत्रं परस्तान्मन आरुन्धे । मनः परस्तात्प्राण आरुन्धे । तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद । तस्योपनिषन्न याचेदिति । तद्यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति । य एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इति। एष धर्मो याचितो भवति । अन्यतस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ २ ॥**

यथा कौषीतकिस्तद्वत्पैङ्ग्यनामाऽप्यृषिरित्याह—प्राणो ब्रह्मेति ह स्माऽऽह पैङ्ग्यस्तस्य ह वा एतस्य प्राणस्य

(१) क. तथो एवा (एवं हैवा) मतो दत्त ( मतोऽदत्त).

(२) आटि. याचितो ( याचतो ) अन्यतस्त्वे (अन्यदास्त्वे ); क. य एवैनं...एष धर्मो ( त एवैनमुपमन्त्रयन्ते ये पुरस्तात्प्रत्याचक्षीरन् । एष धर्मो) अन्यतस्त्वे (अन्यदास्त्वे ).

(१) कौउ. २।२; आटि. रुन्धे । तस्मै ( रुन्ध्यते च । तस्मै ) याचितो ( याचतो ) अन्यतस्त्वे ( अन्यदास्त्वे ); क. ह वा ( वा ) रुन्धे ( रुन्धते ) (·सर्वा० ) तथो एवा ( एवं हैवा ) मतो दत्त ( मतोऽदत्त ) य एवैनं....एष धर्मो (· त एवैनमुपमन्त्रयन्ते ये पुरस्तात्प्रत्याचक्षीरन् । एष धर्मो ) अन्यतस्त्वे ( अन्यदास्त्वे ).

ब्रह्मणः । पैङ्ग्यनामा पैङ्ग्यगोत्रो वा, व्याख्यातमन्यत् । ननु मनोदूतत्वादिलक्षणेन ब्रह्मत्वं प्राणस्य यद्यपि, तथाऽपि अप्रत्यक्त्वादब्रह्मत्वमपि, इत्यत आह—वाक् वागिन्द्रियात् परस्तात् परतः चक्षुः चक्षुरिन्द्रियं आरुन्धे समन्तादावृत्य तिष्ठति । वाचश्चक्षुरान्तरं, उक्तिवद्दृष्टे प्रायेण विसंवादाभावात् । चक्षुः चक्षुरिन्द्रियात् परस्ताच्छ्रोत्रमारुन्धे । श्रोत्रं श्रवणेन्द्रियम् । व्याख्यातमन्यत् । चक्षुषा शुक्तिकां रजतवत्पश्यति, न त्वेवं श्रोत्रमविद्यमानं शृणोति । ततो युक्तं चक्षुष आन्तरत्वं श्रोत्रस्य । श्रोत्रं श्रोत्रेन्द्रियात् परस्तान्मनः संकल्पविकल्पात्मकमन्तःकरणं आरुन्धे, व्याख्यातम् । मनसः सावधानत्वे श्रोत्रेण श्रवणं, ततो युक्तं श्रोत्रादान्तरत्वं मनसः । मनो मनसः परस्तात् परतः आन्तरः प्राणः पञ्चवृत्तिः । प्राणबन्धनं हि मनः प्रसिद्धम् । आरुन्धे समन्तादावृत्य तिष्ठतीत्यवगम्यते पण्डितरूपैः । एवमान्तरत्वेन ब्रह्मत्वं युक्तम् । तस्मै वा इत्यादि व्याख्यातं पूर्ववत् ( वंम् ) । शंनन्द.

प्राणब्रह्मोपासकस्य धनकामस्य व्रतं एकधनावरोधनाख्यम्

**अथात एकधनावरोधनम् । यदेकधनमभिध्यायात्पौर्णमास्यां वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्योत्पूय दक्षिणं जान्वाच्य स्रुवेण वा चमसेन वा कंसेन वैता आज्याहुतीर्जुहोति ॥**

प्राणविदोऽर्थेच्छायां सत्यां कर्तव्यतामाह—अथ प्राणब्रह्मज्ञानानन्तरं अतः यस्मादिच्छा जाता एतस्मात्कारणात् एकधनावरोधनम् । एकधन इति प्राणस्य नामधेयम् । जगत्यस्मिन्नेक एव धनरूपः एकधनः, 'प्राणांस्तु सततं रक्षेद्दारैरपि धनैरपि' इति न्यायेन प्राणस्य परमधनत्वात् । तस्यावरोधनं एकत्र स्थापनं एकधनावरोधनम् । अयमर्थः— सत्यामर्थेच्छायामर्थाप्राप्तौ व्याक्षिप्तचेतसो न प्राणब्रह्मचिन्तनं, वक्ष्यमाणेनोपायेनार्थप्राप्तौ प्रसन्नचेतसः प्राणचिन्तनस्य संभवादिदमेकधनावरोधनं स्यात् । यत् यदि एकधनं प्राणं अभिध्यायात् सर्वतो ध्यानं कुर्यादर्थेप्सुः तदा अर्थावाप्त्यै इदं कुर्यादिति शेषः । अथवा एकधनं अनन्यलभ्यं धनं, तस्यावरोधनं प्राप्त्युपायः, तच्च नोचितम् । एवमपि यद्येकधनमभिध्यायात्प्राणोपासकः तदा पौर्णमास्यां वा अमावास्यायां वा । वाशब्दौ इच्छाविकल्पार्थौ । स्पष्टमन्यत् । शुद्धपक्षे वा शुक्लपक्षे । वा शब्दः कृष्णपक्षार्थः । तत्रापि पुण्ये धन्ये, आत्मनोऽनुकूले इत्यर्थः । नक्षत्रे अश्विन्यादौ शास्त्रविहिते । अग्निमुपसमाधाय अग्निं श्रौतं स्मार्तं वा स्वशाखोक्तक्रमेण कुण्डस्थण्डिलादौ प्रतिष्ठाप्य परिसमुह्य समन्तात्तृणादिकमपनीय परिस्तीर्य समन्ताद्दर्भानवकीर्य पर्युक्ष्य मन्त्रपूतेन वारिणा समन्तात्परिषिच्य उत्पूय आज्यं स्वगृह्योक्तप्रकारेणोत्पवनसंस्कारेण संस्कृत्य दक्षिणं जान्वाच्य दक्षिणं जानु अधो निपात्य स्रुवेण वा चमसेन वा कंसेन वा । स्रुवचमसौ प्रसिद्धौ याज्ञिकानाम् । कंसं कांस्यदर्व्यादिकम् । तेन करणेन । वात्रयं तु प्रातीच्छयोरनियतत्यर्थम् । एता वक्ष्यमाणा आज्याहुतीः आज्यविभागविशेषान् जुहोति जुहुयात् ।

शंनन्द.

**वाङ्नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । प्राणो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । चक्षुर्नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । श्रोत्रं नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । मनो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा । प्रज्ञा नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहेति । अथ धूमगन्धं प्रजिघ्रायाऽऽज्यलेपेनाङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्यार्थं ब्रुवीत । दूतं वा प्रहिणुयात् । लभते हैव ॥ ३ ॥**

(१) कौ॰. २।३; क. यदेक ( य एक ) नक्षत्रेऽग्नि (नक्षत्र एतेषामेकस्मिन्पर्वण्यग्नि ) ( उत्पूय॰ ) ( वा चमसेन वा कंसेन वैता॰ ).

(१) आदि. ऽवरोधिनी ( ऽवरोधनी ) लभते (लभेते); वरुन्धां ( वरुन्ध्यात् ) ( मनो नाम देवताऽवरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा॰ ) जिघ्राया (जिघ्राय) ब्रुवीत ( ब्रूयात् ).

होममन्त्रानाह—वाङ्नाम देवता वागभिधाना देवता अवरोधिनी उपासकाभीष्टार्थसंपादिका । सा उक्ता देवता मे मम प्राणोपासकस्य अर्थेच्छोः अमुष्मात् मदभीष्टार्थस्वामिनः सकाशात् इदं मदभीष्टमर्थजातं अवरुन्धां अवरोधनं कुरुतां, संपादयत्वित्यर्थः । तस्यै उक्तनाम्न्यै देवतायै स्वाहा होमाहुतिमतदर्थप्रधानां स्वीकरोतु स्वाहुतं स्वीकरोतु । प्राणो नाम प्राणाभिधाना । प्राणग्रहणं च तन्त्रेणावगन्तव्यम् । तेन घ्राणाभिधानेति ( घ्राणं नामेति ) मन्त्रान्तरमनुक्तमपि सिद्धं भवति । श्रोत्रं नाम श्रोत्राभिधाना । प्राणचक्षुःश्रोत्रमनःप्रज्ञामन्त्राः वाङ्मन्त्रवद्व्याख्येयाः । प्रज्ञाया ब्रह्मत्वं चोक्तम् । इति मन्त्रपरिसमाप्त्यर्थः । अथ होमानन्तरं धूमगन्धं होमधूमगन्धं प्रजिघ्राय प्रतिघ्राय आघ्राणं कृत्वा आज्यलेपेन होमावशिष्टाज्यलेपेन अङ्गान्यनु विमृज्य होमधूमघ्राणमनु सर्वगात्राण्युपलिप्य वाचंयमो मौनी अभिप्रव्रज्य होमप्रदेशात् यत्र क्वाप्यवस्थितं अर्थस्वामिनं गत्वा अर्थं स्वामीष्टमर्थं ब्रुवीत इदं मे त्वत्तो भूयादिति वदेत् । अर्थस्वामिनो दूरदेशावस्थाने दूतं वा प्रहिणुयात् स्वभृत्यसुतादिकं दूतं प्रेरयेत् । भृत्याद्यभावे वाचं वा इति बहिरेवावगन्तव्यम् । लभते हैव प्रसिद्धमर्थं स्वाभीष्टं स्वात्मदूतवाक्यानामन्यतमेन गतेन प्राप्नोत्येव, न तु न प्राप्नोति ।

शंनन्द.

प्राणब्रह्मोपासककर्तृकं वशीकरणरूपं दैवस्मराख्यं कर्म

अथातो दैवः स्मरः । यस्य प्रियो बुभूषेद्यस्यै वा एषां वै तेषामेव एकस्मिन्पर्वण्यग्निमुपसमाधायैतयैवाऽऽवृतैता आज्याहुतीर्जुहोति । वाचं ते मयि जुहोम्यसौ स्वाहा। प्राणं ते मयि जुहोम्यसौ स्वाहा । चक्षुस्ते मयि जुहोम्यसौ स्वाहा । श्रोत्रं ते मयि जुहोम्यसौ स्वाहा । मनस्ते मयि जुहोम्यसौ स्वाहा । प्रज्ञां ते मयि जुहोम्यसौ स्वाहेति । अथ धूमगन्धं प्रजिघ्रायाऽऽज्यलेपेनाङ्गान्यनु विमृज्य वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेत् । अपि वाताद्वा संभाषमाणस्तिष्ठेत् । प्रियो हैव भवति । स्मरन्ति हैवास्य ॥ ४ ॥

एवमर्थोपायमुक्त्वा वश्योपायमाहोपासकस्य—अथ प्राणब्रह्मज्ञानानन्तरं अतः यस्मादात्मनः प्रियस्येच्छा एतस्मात्कारणात् दैवो देवैर्वागादिभिः संपाद्यः स्मरः अभिलाषः, संपन्नो भवति यथा तथा कथ्यते इति शेषः । यस्य पुरुषस्य व्यक्तिविशेषस्य आत्मन्यनुरागशून्यस्य प्रियो बुभूषेत् प्राणवित् प्रियो भवितुमिच्छेत् । यस्यै यस्याः स्त्रियाः वै प्रसिद्धाया राजादिपत्न्याः, एषां प्रत्यक्षाणां राजादीनां श्रीमतां सर्वस्नेहशून्यानां वै प्रसिद्धानां, तेषामेव वागाद्यधिष्ठातॄणामग्न्यादीनां, न त्वन्येषाम् । अत्र वाशब्दाध्याहारेण योजनीयम् । यस्यै वा प्रियो बुभूषेदेषां वा प्रियो बुभूषेत्तेषामेव वा प्रियो बुभूषेत् । एकस्मिन् पर्वणि दर्शपूर्णमासयोरन्यतरस्मिन् शुक्लपक्षात्मके वा पुण्ये नक्षत्रे पर्वदिवसे अग्निमुपसमाधाय, व्याख्यातम् । एतयैव आवृता उक्तेनैव प्रकारेण परिसमुह्येत्यादिना एता वक्ष्यमाणसंख्याका आज्याहुतीर्जुहोति, व्याख्यातम् । वाचं वागिन्द्रियरूपां ते तव मयि प्रीतिं करिष्यतो मयि प्रीतिविषये तवाप्रीत्यौदासीन्ययोरन्यतरेन्धनसंदीप्तेऽग्नौ जुहोमि प्रक्षिपामि । असौ एतन्नामाऽहम् । अयं कामो वा मम संपन्नो भवतु । स्वाहा मदीया वाक् ममैतत्कामिन आज्याहुतेरनुज्ञां प्रयच्छतु । 'प्राणं ते मयि जुहोमि' इत्यादि 'प्रज्ञां ते' इत्यन्तप्राणचक्षुःश्रोत्रमनःप्रज्ञामन्त्रा वाङ्मन्त्रवद्व्याख्येयाः । इत्यथेत्यादि प्रव्रज्येत्यन्तं व्याख्यातम् । संस्पर्शं जिगमिषेत् स्वसाध्यस्य संस्पर्शं गन्तुमिच्छेत्, गच्छेदित्यर्थः । अथ स्वसाध्यस्य महाविभूत्यादिमत्त्वेन स्पर्शः कर्तुमशक्यस्तदा पक्षान्तरमाह—अपि वाताद्वा संभाषमाणस्तिष्ठेत् । अपिशब्दः पक्षान्तरे । साध्यस्य स्पर्शाभावे तेन सह वार्तां कुर्वंस्तिष्ठेत् । संभाषणस्यापि कर्तुमशक्यत्वे वाशब्दः पक्षान्तरमाह—वातात् तिष्ठेत् । स्वशरीरवायुसंस्पर्शो यथा भवति तथाऽवस्थानं कुर्यादित्यर्थः ।

(१) कौउ. २।४ 'हैवास्यात्' इत्यादर्शपुस्तकपाठस्थले 'हैवास्य' इति तट्टिप्पणीगतष्टीकानुगतः पाठः स्वीकृतः; आदि. एकस्मिन् ( एतस्मिन् ); क. दैवः स्मरः ( दैवस्मरः ) एषां वै तेषा ( येषां वा यासां वैतेषा ) ( अग्निमुपसमाधाय० ) जिघ्राया ( जिघाया ) अपि वाताद्वा संभाषमाणस्तिष्ठेत् ( अभिवाताद्वा तिष्ठेत्संभाषमाणः ) स्मरन्ति ( स्मरन्ते ).

अथवा वातात्संभाषमाणस्तिष्ठेत् स्वकीयाः शब्दा यथा वायुनाऽस्य कर्णरन्ध्रेऽवस्थानं कुर्वन्ति तथा कुर्यादित्यर्थः । * एवं कृते फलमाह—प्रियो हैव भवति । ह प्रसिद्धः सर्वत्र । स साध्यस्य प्रिय एव भवति, न त्वप्रियः । न केवलं प्रियत्वमात्रं स्वसंनिधौ, किंतु स्मरन्ति हैव अस्मिन् ग्रामान्तरादिगते ह प्रसिद्धा राजादयोऽस्य साध्याः अस्य स्मरन्त्येव, न तु विस्मरन्ति पित्रादेरिव पुत्रादयः । अयं च तान् सर्वान् हन्तुकामानिवाऽऽसक्तिशून्योऽस्मात्प्रक्षिपेद्यत्र क्वाप्यस्य विधेयाश्च भवन्तीत्यर्थः ।

शंनन्द.

प्राणब्रह्मोपासककर्तृकमान्तरमग्निहोत्रम्

**अथातः सांयमनं प्रातर्दनमान्तरमग्निहोत्रमिति चाऽऽचक्षते । यावद्वै पुरुषो भाषते न तावत्प्राणितुं शक्नोति । प्राणं तदा वाचि जुहोति । यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति । वाचं तदा प्राणे जुहोति ॥**

इदानीं प्राणोपासकस्याग्निहोत्रफलं विवक्षुराध्यात्मिकमग्निहोत्रमाह—अथ प्राणब्रह्मोपासनानन्तरं अतः यस्माद्ग्निहोत्रफलस्येच्छावान् बाह्यमग्निहोत्रमनुष्ठातुमशक्तः अनिच्छुर्वा अस्मात्कारणात् सांयमनं सम्यक् यमनं अहिंसादिकं यत्संबन्धि तत्सांयमनं प्रातर्दनं प्रतर्दनेन दैवोदासिनाऽनुष्ठितत्वेन तन्नामाङ्कितं प्रातर्दनं आन्तरमग्निहोत्रमिति चाऽऽचक्षते आन्तरं बाह्यसाधननिरपेक्षं अग्निहोत्रनामाङ्कितं कर्मेत्याचक्षते अनेन प्रकारेण कथयन्ति । चकारोऽग्निहोत्रान्तरत्वयोः प्रत्येकं मिलितयोरपि संज्ञात्वसमुच्चयार्थः । विद्वांसो यदान्तरमित्याचक्षते तदुक्तं वाक्प्राणयोरमितव्यापारकर्तृत्वमाह—यावत् यत्परिमाणं वै प्रसिद्धं पुरुषः पुरुषाकारशरीरधारी जन्तुः भाषते वाग्व्यापारं करोति न तावत्प्राणितुं शक्नोति, वाग्व्यापारपरिमाणं प्राणव्यापारं कर्तुं न शक्नोति । अथवा वाक्प्राणयोः समकालव्यापारं वारयति—यावदित्यादिना । अस्मिन् पक्षे यावत्तावच्छब्दौ कालपरौ व्याख्येयौ । प्राणं वाग्व्यापारे सति स्वव्यापारशून्यं वाचो न्यूनव्यापारं दधिपयःसमानं तदा तस्मिन्वाग्व्यापारकाले वाचि व्यापारवत्त्वेनाधिकायामग्निसमानायां जुहोति होमं करोति । वाक्समानधर्मत्वं प्राणस्य प्राणसमानधर्मत्वं वाचश्चाऽऽह—यावद्वै पुरुषः प्राणिति न तावद्भाषितुं शक्नोति, वाचं तदा प्राणे जुहोति । स्पष्टम् । प्रसिद्धं हि सर्वजनीनं वदन्न श्वसिति श्वसन्न ब्रूते चेति ।

शंनन्द.

**एते अनन्ते अमृताहुती जाग्रच्च स्वपंश्च संततमव्यवच्छिन्नं जुहोति । अथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो हि भवन्ति । एतद्ध वै पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रुः ॥ ५ ॥**

इदानीमग्निहोत्रमाह—एते वाक्प्राणरूपे उक्ते अनन्ते असंख्यातव्यापाराधारे परस्पराग्नौ प्रविशन्त्यावप्यक्षीणे वा अमृताहुती अन्तवद्धि म्रियते यतः अन्तशून्ये ततोऽमृतरूपे आहुती अमृतत्वफलहेतुत्वाद्वाऽमृताहुती जाग्रच्च स्वपंश्च जाग्रति स्वप्ने च । चकारौ जाग्रत्स्वप्नयोरितरेतरयोगार्थौ । संततं निरन्तरं आ गर्भनिर्गमनादोत्तरश्वासं अव्यवच्छिन्नं भोजनाच्छादनादिव्यवधानशून्यम् । न हि वाक्श्वसनयोरन्यतरेण शून्यः कालो जिवतः । जुहोति होमं करोति, होमबुद्धिं कुर्यादित्यर्थः । एतदग्निहोत्रं स्तोतुमन्यत् निन्दति — अथ पक्षान्तरे याः प्रसिद्धाः पयोदध्यादिद्रव्यसाध्या अन्याः वाक्प्राणाहुतिभ्यां व्यतिरिक्ताः आहुतयः आसेचनान्ता देवतामुद्दिश्य द्रव्यत्यागाः अन्तवत्यः स्वरूपेण फलतोऽपि नाशवत्यः । तत्र हेतुमाह — ताः वाक्प्राणाहुतिभ्यामन्यत्वेन प्रसिद्धाः कर्ममय्यः शरीरव्यापारसाध्याः कृतकाः फलतः स्वरूपतश्च हि यस्मात्तस्मादन्तवत्यो भवन्ति, स्पष्टम् । अस्याग्निहोत्रस्य ज्ञाने सर्वसङ्गपरित्यागलक्षणं संन्यासमाह — एतद्ध वै पूर्वे विद्वांसः । ह प्रसिद्धाः

* अवतरणमिदं 'संस्पर्शं जिगमिषेत्' इत्यतः प्राक् आदर्शपुस्तके मुद्रितम् । तत्तु प्रमादादिति मत्वाऽत्र समाकृष्टम् ।

(१) कौउ. २।५; क. सांयमनं ( संयमनं ) मिति चाऽऽच ( मित्याच ); कटि. प्रातर्दन ( प्रातर्दशन ); ब्रशंकर. ३।३।४९.

(१) क. अमृताहुती ( अमृते आहुती ) ( अव्यवच्छिन्नं० ) एतद्ध वै ( तद्ध स्मैतत् ); ब्रशंकर. अमृताहुती ( अमृते आहुती ) संततं ( सततं ) ( अव्यवच्छिन्नं० ).

वै स्मर्यमाणाः पूर्वे अतीताः एतद्विद्वांसः 'वाच्यग्नौ भाषणव्यापारवत्यां प्राण आज्यं निःश्वासोच्छ्वासव्यापारशून्यो हूयते, प्राणे चाग्नौ निःश्वासोच्छ्वासव्यापारवति वागाज्यं भाषणव्यापारशून्या हूयते' इत्येतज्ज्ञानवन्तः अग्निहोत्रं न जुहवांचक्रुः अग्निहोत्रहोमं न कृतवन्तः। सर्वसङ्गपरित्यागलक्षणं संन्यासं कृतवन्त इत्यर्थः। शंनन्द.

उक्थब्रह्मालम्बनान्युपासनानि श्रैष्ठ्यश्रीयशस्तेजस्कामस्य

**उक्थं ब्रह्मेति ह स्माऽऽह शुष्कभृङ्गारः। तदृगित्युपासीत। सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्चन्ते। तद्यजुरित्युपासीत। सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते। तत्सामेत्युपासीत। सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते॥**

'प्राणो वा उक्थम्' इति काण्वादिशाखासु उक्थशब्दस्य प्राणे प्रसिद्धत्वात्तां प्रसिद्धिं अनुरुन्धाना श्रुतिः प्राणमुक्थशब्देन निर्दिश्य तत्र ऋगादिदृष्टीर्विधातुमस्य ब्रह्मत्वे कौषीतकिपैङ्ग्यवच्छुष्कभृङ्गारसंमतिमाह—उक्थं उक्थशब्दाभिधेयः प्राणः ब्रह्मेति ह स्माऽऽह, व्याख्यातम्। शुष्कभृङ्गारः एतन्नामा मुनिः। तत् उक्थं ऋगिति ऋग्बुद्ध्या उपासीत यावत्प्राणः ऋगिति साक्षात्कारो भवति तावद्विजातीयप्रत्ययशून्यं सजातीयप्रत्ययप्रवाहं कुर्वीत। प्राणे ऋग्बुद्धौ कृतायां फलमाह—सर्वाणि निखिलानि ह प्रसिद्धानि अस्मै प्राणे उक्थे ऋग्बुद्धिकर्त्रे भूतानि स्थिरजङ्गमानि श्रैष्ठ्याय प्रशस्यतमत्वाय अभ्यर्चन्ते सर्वतः पूजां कुर्वन्ति। तद्यजुरित्युपासीत। सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते। तत्सामेत्युपासीत। सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते। ऋग्बुद्ध्या समत्वं यजुःसामबुद्ध्योः। युज्यन्ते उद्युक्तानि भवन्ति। संनमन्ते सम्यक्प्रह्वीभूतानि भवन्ति। अन्यत्कृतव्याख्यानम्। ऋग्यजुःसाम्नां च पादबद्धाविवक्षितच्छन्दस्कप्रगीतिमन्त्रात्मकानां प्रसिद्धत्वान्न ऋगादिपदव्याख्या कृता। शंनन्द.

(१) कौउ. २।६; क. भ्यर्चन्ते ( भ्यर्च्यन्ते ).

तच्छ्रीरित्युपासीत। तद्यश इत्युपासीत। तत्तेज इत्युपासीत। तद्यथैतच्छस्त्राणां श्रीमत्तमं यशस्वितमं तेजस्वितमं भवति। तथो एवैवं विद्वान्सर्वेषां भूतानां श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति॥

एवमेवाऽऽह—तच्छ्रीरित्युपासीत, तद्यश इत्युपासीत, तत्तेज इत्युपासीत। मनुष्यादेर्विभूतिः श्रीः। कीर्तिर्यशः। भास्वरं प्रकाशादिकारणं ज्योतिस्तेजः। व्याख्यातमन्यत्। श्रीयशस्तेजोबुद्धीनां सदृष्टान्तं फलमाह — तत् तत्र श्रीयशस्तेजोबुद्धिषु फले दृष्टान्तः। यथा दृष्टान्ते एतत् आकर्णपूर्णगुणनिरुद्धपृष्ठं पृथुतरसुवर्णपट्टिकावृतसर्वगात्रं पृथापुत्रसमधन्विकरस्थं वमद्वह्निमण्डलशरसमूहवृष्टिकरं धनुः शस्त्राणां खड्गपट्टिशतोमरशक्तिऋष्टिगदाभिन्दिपालचक्रक्षुरिकायमदंष्ट्रादीनां श्रीमत्तमं अतिशयेन विभूतिमत्। न ह्यन्यच्छस्त्रं धनुष्मतः सुभटस्य विभूतिदम्। 'धन्वी चेत्तुरगारूढो जयत्येकोऽपि मेदिनीम्' इति प्रसिद्धेः। यशस्वितमं अतिशयेन यशःसंपन्नम्। 'विशिखा इव राजन्ते धनुषः सगुणादिव। निर्गताः शस्त्रसंपाताः शूराणां लघुयोधिनाम्॥' इति प्रसिद्धेः। तेजस्वितमं अतिशयेन तेजःसंपन्नम्। यद्यपि लोहेषु शस्त्रेषु तेजस्वितमत्वं प्रसिद्धं तथाऽपि संप्रहारावसरे अन्यान्यपगतसौवर्णाद्यावरणानि भवन्ति, धनुस्तु तस्मिन्नप्यवसरे सुवर्णमणिरत्नादियुक्तमिति तेजस्वितमम्। धन्विनश्च श्रीयशस्तेजांसि प्रसिद्धानि पार्थादेः। भवति स्पष्टम्। तथो एव उ अपि तद्वदेव, न त्वन्यथा, एवं विद्वान् प्राणः श्रीयशस्तेजोबुद्धीनामालम्बनमिति जानन्, श्रीयशस्तेजोबुद्धिरुपासक इत्यर्थः। सर्वेषां भूतानां निखिलानां स्थिरजङ्गमानां मध्ये श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति। स्पष्टम्। शंनन्द.

त्रयीविद्यात्मा कर्ममयः

**तमेतमैष्टकं कर्ममयमात्मानमध्वर्युः संस्करोति।**

(१) क. ( तद्यश इत्युपासीत॰ ) ( शस्त्राणां॰ ) भवति....भूतानां ( इति शस्त्रेषु भवति। एवं हैव स सर्वेषु भूतेषु ) तमो भवति+ ( य एवं वेद ).

(२) क. तमेतमैष्टकं कर्ममयमात्मान ( तदेतदैष्टिकं

**तस्मिन्यजुर्मयं प्रवयति। यजुर्मय ऋङ्मयं होता। ऋङ्मये साममयमुद्गाता। स एष सर्वस्यै त्रयीविद्याया आत्मा। एष उ एवास्याऽऽत्मा। एतदात्मा भवति य एवं वेद ॥ ६ ॥**

इदानीं त्रयीविद्यानां कृतसंसारफलान्तर्वर्तिनामपि प्राणविज्ञानं मोक्षसाधनमित्याह — तं उक्थशब्दाभिधेयं ऋगादिबुद्ध्यालम्बनं प्राणं एतं मुखबिलान्तर्वर्तमानं प्रत्यक्षमिव ऐष्टकं इष्टकासंबन्धिरूपमैष्टकं कर्ममयं कर्मस्वरूपं आत्मानं अध्वर्युशब्दप्रत्ययालम्बनं अध्वर्युः ऋत्विग्विशेषः प्राणबुद्ध्या संस्करोति संस्कारं करोति योषितमिवाग्निबुद्ध्या। अयमर्थः — योऽयमिष्टकासु चितोऽग्निः कर्मसाधनः सोऽपि प्राणात्मक एव, प्राणस्य ऋगाद्यात्मकत्वात्। अयं च ऋगादिसाध्यकर्मनिष्पादकः अहं च, तत ऋगाद्यात्मकः सर्वात्मा प्राणोऽहमस्मि, अयमग्निश्च मदात्मकः इत्यात्मानं संस्करोतीति। तस्मिन् प्राणबुद्ध्या संस्कृतेऽग्न्यभिन्नात्मनि यजुर्मयं यजुःसाध्यं कर्मवितानं कुविन्द इव प्रवयति प्रकर्षेण कर्ममन्त्रतन्तुभिर्विस्तारयति। यजुर्मये यजुःसाध्ये कर्मविताने प्रवृत्ते सति आधारभूते वा ऋङ्मयं ऋक्साध्यं कर्मवितानं प्रवयति होता ऋत्विग्विशेषः। ऋङ्मये ऋक्साध्ये कर्मणि प्रवृत्ते सति आधारभूते वा साममयं सामसाध्यं कर्मवितानं प्रवयति उद्गाता ऋत्विग्विशेषः। सः अध्वर्युः संस्कारहेतुः प्राणः एषः मुखबिलान्तस्थः सर्वस्यै सर्वस्या निखिलायाः त्रयीविद्यायाः, त्रयी ऋग्यजुःसामरूपा, सैव विद्या, तस्याः आत्मा आप्त्यादेः कर्ता शरीरस्येव जीवः। उक्तेन प्रकारेणोक्तमात्मानं शृङ्गग्राहिकया आह — एष उ एव उ अपि मुखबिलान्तस्थ एव, न त्वन्यः। अस्याऽऽत्मा अस्या उक्तायास्त्रय्या विद्याया आत्मोक्तः। इदानीमेतज्ज्ञाने फलमाह — एतदात्मा भवति प्राणरूपो भवति, यः प्रसिद्धः कर्मणि ऋत्विग्यजमानादिः एवं प्राणबुद्ध्या संस्कृतेऽध्वर्युरूपाग्नौ यजुर्मयमध्वर्युः, यजुर्मये ऋङ्मयं होता, ऋङ्मये साममयमुद्गाता इति वेद जानाति स एतदात्मा भवतीत्यन्वयः।

शंनन्द.

पापनाशनसाधनमादित्योपासनम्

**अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति। यज्ञोपवीतं कृत्वाऽप आचम्य त्रिरुदपात्रं प्रसिच्योद्यन्तमादित्यमुपतिष्ठेत। वर्गोऽसि पाप्मानं मे वृङ्धीति। एतयैवाऽऽवृता मध्ये सन्तम्। उद्वर्गोऽसि पाप्मानं म उद्वृङ्धीति। एतयैवाऽऽवृताऽस्तं यन्तम्। संवर्गोऽसि पाप्मानं मे संवृङ्धीति। यदहोरात्राभ्यां पापं करोति सं तद्वृङ्क्ते ॥ ७ ॥**

प्राणो ब्रह्मेति कौषीतकिपैङ्ग्यशुष्कभृङ्गारमतैः सोपपत्तिकैरुक्तं, तत्र च ऋगादिदृष्टयः। स हि प्राणो बाह्य आध्यात्मिकश्च। बाह्य आधिदैविकः पुत्रादिरूपश्च। आधिदैविकरूत्वादित्यः। स चाग्नीषोमात्मकः। तत्र आधिदैविकं प्राणमुररीकृत्य फलविशेषसिद्ध्यर्थं प्रथमतः कानिचिदुपासनान्याह — अथ प्राणो ब्रह्मेतिकथनानन्तरम्। अतः यस्मात्फलान्तरस्यापीच्छा उपासकस्य अस्मात्कारणात् सर्वजितः, स्ववर्णाश्रमाचारैर्निखिलांस्त्रैवर्णिकान् जयतीति सर्वजित्, तस्य कौषीतकेः कुषीतकस्यापत्यस्य त्रीणि त्रिसंख्याकानि उपासनानि आधिदैविकस्य प्राणस्य ज्ञानानि भवन्ति वर्तन्ते। कौषीतकिदृष्टानि कथयिष्यामीत्यर्थः। यज्ञोपवीतं कृत्वा यज्ञोपवीतं विधाय। यद्यपि त्रैवर्णिकत्वेनैव यज्ञोपवीतं प्राप्तं, तथाऽप्यपसव्यादिविकारनिवारणार्थमिदं वचनम्। अप आचम्य, स्पष्टम्। अपामाचमनमपि यज्ञोपवीतवत्प्राप्तं, तथाऽपि त्वरादिनिमित्तनिवारणार्थमवगन्तव्यम्। तेनोभयत्र नियमः सिद्धो भवति। त्रिः त्रिवारं उदपात्रं सौवर्णं राजतं ताम्रं वा चषकं प्रसिच्य शुद्धैः स्वच्छैर्जलैः प्रकर्षेण सेचनं विधाय उद्यन्तं उदयं गच्छन्तं आदित्यं अदिति-

---

कर्म यमात्मान) स एष सर्वस्यै त्रयीविद्याया ( [ साममये ] स एष त्रय्यै विद्याया) एवास्याऽऽत्मा। एतदात्मा ( एवैतदिन्द्रस्यात्मा ).

(१) कौउ. २।७; क. यज्ञोपवीतं....मुपतिष्ठेत ( सर्वजिद्ध स्म कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते यज्ञोपवीतं धृत्वोदक [ आदि. कृत्वोदक ] मानीय त्रिः प्रसिच्योदकपात्रं [ आदि. च्योदपात्रं ] ) संवृङ्धीति। + ( तद्यदहोरात्राभ्यां पापं करोति सं [ आदि. पापमकरोत्सं ] तद्वृङ्क्ते तथो एवैवं विद्वानेतयैवाऽऽवृताऽऽदित्यमुपतिष्ठते )

पुत्रं भास्करं उपतिष्ठेत जानुभ्यामवनिं गत्वा ससंभारनीरपूर्णचषकमुद्धृत्य समन्त्रमुपस्थानं कुर्यात् । मन्त्रमाह —वर्गः, सर्वमिदं जगदात्मबोधेन तृणवद्वृङ्क्ते परित्यजतीति वर्गः, असि भवसि । पाप्मानं कृतमागामि च पापं फलस्वरूपेणैव मे मम समन्त्रकेणार्घ्येणाऽऽदित्यमुपस्थातुः वृङ्धि वर्जय विनाशयेत्यर्थः । इति मन्त्रसमाप्तौ । एतयैव उक्तयैव यज्ञोपवीतमित्यादिना, न त्वन्यथा, आवृता प्रकारेण मध्ये सन्तं मध्याह्ने वर्तमानमादित्यमुपतिष्ठेत । उपस्थानमन्त्रमाह—उद्वर्गोऽसि पाप्मानं म उद्वृङ्धीति । उद् उत्कर्षार्थः । अतिशयेन नाशयेत्यर्थः । व्याख्यातमन्यत् । एतयैवाऽऽवृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्धीति । अस्तं यन्तं अस्तं गच्छन्तं उपतिष्ठेत समित्यादिमन्त्रेण । सं सम्यगर्थः । व्याख्यातमन्यत् । एवं त्रिवारमादित्यस्यार्घ्यं कुर्वतः फलमाह—यत् प्रसिद्धं दृष्टं दुःखफलं अहोरात्राभ्यां अहनि रात्रौ च पापं करोति, स्पष्टम् । सं तद्वृङ्क्ते तदशास्त्रीयं कर्म फलतः संवृङ्क्ते सम्यक्परित्यजति, पापफलं न प्राप्नोतीत्यर्थः । एकमिदमुपासनं कर्मात्मकम् । शंनन्द.

आयुःप्रजासमृद्धिकामस्योपासनं चन्द्रमसः

[१]अथ मासि मास्यमावास्यायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता । हरिततृणाभ्यां वाक्प्रत्यस्यति । यत्ते सुसीमं हृदयमधि चन्द्रमसि श्रितम् । तेनामृतत्वस्येशाने माऽहं पौत्रमघं रुदमिति । न हास्मात्पूर्वाः प्रजाः प्रैति । इति नु जातपुत्रस्य । अथाजातपुत्रस्य । आप्यायस्व समेतु ते ( ऋसं. १।९१।१६ ), सं ते पयांसि समु यन्तु वाजाः ( ऋसं. १।९१।१८ ), यमादित्या अंशुमाप्याययन्ती ( तैसं. २।४।१४।१ ) त्येतास्तिस्र ऋचो जपित्वा । माऽस्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठाः । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः । तस्य प्राणेन प्रजया पशुभिराप्यायस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्ते । इति दक्षिणं बाहुमन्वावर्तते ॥ ८ ॥

इदानीं द्वितीयमाह — अथ पूर्वस्मात्कर्मरूपादुपासनात्प्रकृतादर्थादग्निरूपादादित्यादनन्तरं कर्मरूपमुपासनान्तरमादित्यस्य बाह्यप्राणस्य सुषुम्नानाडीरूपसोमात्मकम् । मासि मासि प्रतिमासं, अभ्यासबलादासंवत्सरमिति निश्चीयते । अमावास्यायां अमाख्यरश्मौ सोमस्य निवासदिवसे पश्चाच्चन्द्रमसं आदित्यस्य पश्चिमे भागे सुषुम्नाख्ये रश्मौ वर्तमानं सोमं दृश्यमानं शास्त्रतोऽवलोक्यमानं उपतिष्ठेत वर्गोद्वर्गसंवर्गमन्त्रैरुदये मध्याह्नेऽस्तमये चोपस्थानं कुर्यात् एतयैव यज्ञोपवीतमित्यादिकयैव, न त्वन्यया, आवृता प्रकारेण । तत्र विशेषमाह — हरिततृणाभ्यां अशुष्काभ्यां द्वाभ्यां दूर्वाङ्कुराभ्यां सह अर्घ्यानन्तरं वाक् वाचं ' यत्ते ' इत्यादिमन्त्ररूपां प्रत्यस्यति चन्द्रमसं प्रति अस्यति क्षिपति क्षिपेदित्यर्थः । वाचं मन्त्ररूपामाह — यत् प्रसिद्धं योषितां स्तनमण्डलाधारं ते तव सोमात्मिकायाः प्रकृतेः सुसीमं शोभनमर्यादावत् आदित्यात्मकपुरुषस्यैकदेशरूपं हृदयं हृदयपद्माकारं पश्चच्छिद्रमधोमुखं मांसखण्डं हृत् , तदयति गच्छति यदानन्दात्मस्वरूपं तद्धृदयम् । अधि चन्द्रमसि श्रितं चन्द्रमण्डलं स्तनाकारमधिकृत्य श्रितं वर्तमानम् । तेन उक्तेन चन्द्रमण्डलस्थेन हृदयेन हेतुना अमृतत्वस्य आनन्दरतिप्रजातिरूपस्य निरतिशयानन्दाभिव्यक्तिहेतुत्वेन च निरपेक्षस्य मोक्षस्य ईशाने हे नियन्त्रि, माऽहं पौत्रमघं रुदं अहं ' सोमात्मिका स्त्री, अग्न्यात्मकः पुमान् ' इति ज्ञानवान् अघं पापं निरुपमदुःखकरं पुत्रसंबन्धि पुत्रस्य प्रागभावप्रध्वंसाभ्यां शारीरव्याध्यादिना संतत्याद्यभावेन च कृतं पौत्रं मा रुदं रोदनं मा कुर्याम् । तवेशानायाः प्रसादत इति शेषः । इति मन्त्रपरिसमाप्त्यर्थः । न हास्मात्पूर्वाः प्रजाः प्रैति । अस्मादुक्तप्रकारिणो ह प्रसिद्धादुपासकात्पूर्वाः प्रथमतः एतन्मरणमन्तरेणेत्यर्थः । प्रजाः पुत्रादिरूपाः न प्रैति न प्रयन्ति

---

(१) कौउ. २।८; आदि. हरित…हृदयमधि ( हरिततृणे वा प्रत्यस्यति । यन्मे सुसीमं तद्धृदयं दिवि ) राप्याययस्वेति ( राप्यायस्वेति ); क. वास्यायां + ( वृत्तायां ) हरित… हृदयमधि ( हरिततृणे वा प्रत्यस्य यन्मे सुसमिद्धृदयं दिवि ) तेनामृत… पौत्रमघं ( मन्येऽहं मां तद्विद्वांसं माऽहं पुत्र्यमघं ) न हास्मात् ( न ह्यस्मात् ) ( नु ) स्वेति दैवी ( स्वेत्यैन्द्री ).

न म्रियन्ते। इति नु एवं खल्वयं प्रकार इत्यर्थः। जातपुत्रस्य उत्पन्नसुतस्य, न त्वनुत्पन्नसुतस्य। अथ जातपुत्रस्योपासनकथनानन्तरं अजातपुत्रस्य अनुत्पन्नतनयस्य, उपासनप्रकारः कथ्यते इति शेषः। अजातपुत्रो जातपुत्रवत्सर्वं तन्त्रं संपाद्य हरिततृणे स्वीकृत्य यान्मन्त्रान् जपेत्तानाह — आप्यायस्व आप्यायनं गच्छ। समेतु सम्यग्गच्छतु। ते तव त्वयीत्यर्थः। अयमृक्पादः श्रुत्या प्रतीकत्वेन पठितः। एतावृक्पादौ परिशिष्टौ — 'विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे'। विश्वतः सर्वतः अग्निरूपात्पुरुषगात्रात् सोम हे सोम स्त्रीरूप, वृष्ण्यं वृष्णः पुरुषस्य हेतुभूतं शुक्रमाग्नेयं तेजो वाजस्य अन्नस्य संगथे संगते भव। अयमर्थः — पुत्रोत्पत्तिद्वारा पितॄणां पिण्डाद्यन्नदो भवेति। प्रजासंपत्त्या त्वदीयं वृष्ण्यमाप्यानं विश्वतः समेतु मह्यं विश्वतो वाजस्य संगमाय भवेति वाऽर्थः। इदानीं मन्त्रान्तरप्रतीकभूतं पादान्तरमाह — सं ते पयांसि समु यन्तु वाजा इति। ते तव सोमात्मिकायाः प्रकृतेः संपयांसि सम्यक्क्षीराणि स्तनेन्दुमेघमण्डलस्थानि समु यन्तु वाजा उ अपि वाजा वाजिनः अन्नोपजीविनस्तनयान् संयन्तु सम्यग्गच्छन्तु। इदमपि प्रतीकत्वेन पठितं श्रुत्या। शिष्टं पादत्रयम् — 'संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व'। संवृष्ण्यानि सम्यक्पुरुषोपकारीणि। अभिमातिषाहो वैरिसाहः पुत्रप्रवृद्ध्या क्षीराणि वैरिणामभिभवकारीणीत्यर्थः। हे सोम, अमृताय अमृतत्वाय पुत्रोत्पत्त्यर्थमित्यर्थः। आप्यायमानः स्वेन आग्नेयेन च तेजसा आप्यायनं आह्लादनं गच्छन् दिवि स्वर्गे श्रवांस्युत्तमानि श्रवणयोग्यानि यशांसि प्रौढानि धिष्व धत्स्व। तृतीयमन्त्रस्य प्रतीकं पादमाह — यं तृतीयं प्रसिद्धं सर्वोत्पत्तिकारणं आदित्याः अग्न्यात्मकाः पुमांसः अंशुं सूर्यस्य सौषुम्नं किरणं सोमं स्त्रीरूपं आप्याययन्ति आह्लादयन्ति। अस्य मन्त्रस्यापठितं श्रुत्या पादत्रयं— 'यमक्षितमक्षितयः पिबन्ति। तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः'। यं सोमं राजानं सूर्ये प्रकृतिरूपं सुषुम्नानाडीरूपेण अक्षितं अक्षीणं अक्षितयः क्षयशून्या आदित्यादयः पुरुषाः पतिपुत्रत्वादिना वर्तमानाः पिबन्ति लावण्यदुग्धादिरूपेण पानं कुर्वन्ति। तेनांशुनाऽक्षितरूपेण सुषुम्नानाम्नेत्यर्थः। नः अस्मान् सोमस्योपासकान् भुवनस्य गोपाः लोकस्य रक्षकः प्रजापतिर्बृहस्पतिर्वरुणो राजा च आप्याययन्तु आनन्दयन्तु। इति मन्त्रत्रयप्रतीकपादत्रयपरिसमाप्त्यर्थः। एताः उक्तपादत्रयाद्याः तिस्रः त्रिसंख्याका ऋचः पादबद्धान् मन्त्रान् जपित्वा वाचनिकं जपं विधाय। अनेन वक्ष्यमाणेन मन्त्रेण सोमाभिमुखं दक्षिणं हस्तं निःसारयेदित्याह — माऽस्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठाः, अस्माकं सोमोपासकानां मुखबिलान्तःसंचारिणा वायुना प्राणेन, पुत्रादिरूपया प्रजया, गवादिरूपैः पशुभिः, अस्मत् प्राणप्रजापश्वभावेनेत्यर्थः। माऽऽप्याययिष्ठाः अस्मच्छत्रूनानन्दं मा नयेथाः। किन्तु यः प्रसिद्धोऽस्मद्द्वेषी अस्मान् सोमोपासकान् द्वेष्टि द्वेषं करोति, यं च कृतापकारमकृतोपकारं वा प्रसिद्धं प्रतिकूलम्। चकारोऽस्मासु द्वेपिणोऽस्य च समुच्चयार्थः। वयं सोमोपासकाः द्विष्मः द्वेषं कुर्मः। तस्य अस्मदज्ञातस्य वैरिणः प्राणेन प्रजया पशुभिः, व्याख्यातम्। आप्याययस्व अस्मानानन्दय इति एवमेतन्मन्त्रार्थरूपां दैवीं देवेन भवता संपाद्यां आवृतं संचरणक्रियां आवर्ते समन्ताद्वर्तनं कुर्वे। आदित्यस्य अग्नीषोमात्मकस्य आवृतं संचरणक्रियामन्वावर्ते भवतः सोमस्य प्रसादमनु आवर्तनं कुर्वे। इति मन्त्रपरिसमाप्त्यर्थः। एतैर्मन्त्रैरित्यर्थः। दक्षिणं बाहुं दक्षिणं भुजं पूर्वं सोमाभिमुखं नीतं अन्वावर्तते मन्त्रपाठमनु निःसारयति। शंनन्द.

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवाऽऽवृता। सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि प्रजापतिः। ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि। तेन मुखेन मामन्नादं कुरु। राजा त एकं मुखं तेन मुखेन विशोऽत्सि। तेन मुखेन मामन्नादं कुरु। श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि। तेन मुखेन

---

(१) कौउ. २।९; क. त्वयि पञ्चमं मुखं ( त्वै...पञ्चमुखं ) रवक्षेष्ठाः ( रपक्षेष्ठाः ) रवक्षीयस्वेति ( रपक्षीयस्वेति ).

मामन्नादं कुरु। अग्निष्ट एकं मुखं तेन मुखेनेमं लोकमत्सि। तेन मुखेन मामन्नादं कुरु। त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि। तेन मुखेन मामन्नादं कुरु। माऽस्माकं प्राणेन प्रजया पशुभिरवक्षेष्ठाः। योऽस्मान्द्वेष्टि। यं च वयं द्विष्मः। तस्य प्राणेन प्रजया पशुभिरवक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्ते। इति दक्षिणं बाहुमन्वावर्तते ॥ ९ ॥

उपासनद्वयमुक्त्वा तृतीयमुपासनं पुनः सोमस्याऽऽह —अथ अमावास्योपासनात्प्रकृतात् उपासनान्तरं, कथ्यते इति शेषः। पौर्णमास्यां पञ्चदश्यां षोडशकलचन्द्रसहितायां पुरस्ताच्चन्द्रमसं दृश्यमानं स्वस्याभिमुखेन प्रत्यहं षोडशकलं सोमं उपतिष्ठेत एतयैवाऽऽवृता, पूर्ववद्व्याख्येयम्। उपस्थानमन्त्रमाह —सोमः उमया विश्वप्रकृत्या सह वर्तमानः प्रियदर्शनः सोमो वा राजा दीप्तिमान् असि भवसि। विचक्षणः सर्वलौकिकवैदिककार्यकुशलः पञ्चमुखः पञ्चवदनः असि भवसि प्रजापतिः प्रजानां स्थिरजङ्गमानां पालयिता। पञ्चापि मुखानि विभागेन प्रार्थयते —ब्राह्मणः द्विजोत्तमः ते तव सोमस्य एकं मुखं एकं वदनं, तेन मुखेन उक्तेन वदनेन राज्ञः राजजातीयान् क्षत्रियान् अत्सि भक्षयसि। तेन मुखेन उक्तेन वदनेन मां सोमोपासकं अन्नादं कुरु, स्पष्टम्। राजा त एकं मुखं तेन मुखेन विशोऽत्सि। तेन मुखेन मामन्नादं कुरु। श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि। तेन मुखेन मामन्नादं कुरु। अग्निष्ट एकं मुखं तेन मुखेनेमं लोकमत्सि। तेन मुखेन मामन्नादं कुरु। त्वयि पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि। तेन मुखेन मामन्नादं कुरु। राजा मूर्धाभिषिक्तः क्षत्रियः। विशो वैश्यप्रधानाः प्रजाः। श्येनः पक्षिमांसाशी क्रूरः पक्षी। पक्षिणः कपोतादीन् विहङ्गमान्। अग्निर्दाहपाकप्रकाशहेतुः प्रसिद्धः कृशानुः। इमं लोकं प्रत्यक्षादिप्रमाणगम्यमवाय्वाकाशं विश्वम्। त्वयि सोमे राजनि पञ्चमं ब्राह्मणराजन्यश्येनाग्न्यपेक्षया पञ्चसंख्यापूरणम्। सर्वाणि भूतानि निखिलानि स्थिरजङ्गमानि। शेषं ब्राह्मणपर्यायवद्राजश्येनाग्निसोमपर्यायेषु व्याख्येयम्। माऽस्माकं प्राणेन प्रजया पशुभिरवक्षेष्ठाः योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरवक्षीयस्वेति दैवीमावृतमावर्त आदित्यस्याऽऽवृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते। अवक्षेष्ठाः अस्मद्बन्धूनामवक्षयं मा कार्षीः। अवक्षीयस्व अस्मद्वैरिबन्धूनवक्षयं नय। अन्यत्पूर्ववद्व्याख्येयम्। अथवा आप्यायनावक्षयौ भाविशुक्लकृष्णपक्षापेक्षया चन्द्रनिष्ठौ व्याख्येयौ। तथा चैकेनैव पक्षेण स्वात्मनो वृद्धिर्वैरिणो नाशश्चेति फलप्राप्तिरर्थादुक्ता भवति। शंनन्द.

उक्तसोमोपासनाङ्गं जायापुत्राभिमर्शनम्

अथ संवेश्यञ्जायायै हृदयमभिमृशेत्। यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ। मन्येऽहं मां तद्विद्वांसं तेन माऽहं पौत्रमघं रुदमिति। न हास्मात्पूर्वाः प्रजाः प्रैतीति ॥ १० ॥

अथ एवं सोमप्रार्थनानन्तरं संवेश्यन् भार्यया सह सम्यगानन्दरतिप्रजात्यर्थं वेशयन् उपवेशनं करिष्यन् जायायै जायायाः हृदयं स्तनमण्डलाधारदेशं अभिमृशेत् वक्ष्यमाणेन मन्त्रेण सर्वतः स्पृशेत्। मन्त्रमाह—यत् प्रसिद्धं शरीरान्तरकारणं सुखं ते तव सोमरूपायाः स्त्रियाः सुसीमे हे शोभनगात्रे, हे सुसीमन् इति वा। अथवा सप्तम्यन्तमिदं हृदयविशेषणम्। शोभना सीमा पुरुषस्य केदाररूपा यस्य तत्सुसीमं, तस्मिन् हृदये हृदयपुण्डरीकाख्ये आनन्दात्मनिवासे हितं (निहितं) चन्द्रमण्डले इवामृतं, अन्तः मध्ये प्रजापतौ प्रजापालके। अथवा प्रजापतौ प्रजापतिना स्रष्ट्रा मयेत्यर्थः। मन्येऽहं मां तद्विद्वांसम्। अहं सोमोपासकस्तव पतिः तत् उक्तं प्रजापतिना निहितं मां सोमोपासकं विद्वांसं समस्तशास्त्रार्थविदं मन्ये अवगच्छामि। तेन सत्येन माऽहं पौत्रमघं रुदमिति, न हास्मात्पूर्वाः प्रजाः प्रैतीति, व्याख्यातम्। शंनन्द.

अथ प्रोष्याऽऽयन्पुत्रस्य मूर्धानमभिमृशेत्।

(१) कौउ. २।१०; क. संवेश्यञ्जा (संवेश्य जा) सुसीमे हृदये हित (सुशीमे हृदयं श्रित) मन्येऽहं.....न हास्मात् (तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं निगा इति। न ह्यस्याः).

(२) कौउ. २।११; आदि. गृह्णाति। येन (गृह्णात्यथैनं परिगृह्णाति। येन) परिगृह्णाम्यसौ....व्यथिष्ठाः (परि-

**अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा त्वं पुत्र माऽऽविथ स जीव शरदः शतमसौ । इति नामास्य गृह्णाति । अश्मा भव परशुर्भव हिरण्यमस्तृतं भव । तेजो वै पुत्र नामासि स जीव शरदः शतमसौ । इति नामास्य गृह्णाति । येन प्रजापतिः प्रजाः पर्यगृह्णादरिष्टयै तेन त्वा परिगृह्णाम्यसौ । इति नामास्य गृह्णाति । अथास्य दक्षिणे कर्णे जपति । अस्मै प्रयन्धि मघवन्नृजीषिन्निति ( ऋसं. ३।३६। १० 'अस्मे' ) । इन्द्र श्रेष्ठानि द्रविणानि धेहीति (ऋसं. २।२१।६) सव्ये । मा च्छित्था मा व्यथिष्ठाः शतं शरद आयुषो जीव पुत्र ते नाम्ना मूर्धानमवजिघ्राम्यसौ । इति त्रिर्मूर्धानमवजिघ्रेत् । गवां त्वा हिंकारेणाभि हिं करोमि । इति त्रिर्मूर्धानमभि हिं कुर्यात् ॥ ११ ॥**

इदानीं सपुत्रस्य सोमोपासकस्य पुनः कृत्यान्तरमाह—अथ उक्तसोमोपासनानन्तरं प्रोष्य ग्रामान्तरं देशान्तरं वा गत्वा आयन् आगच्छन्, आगतः सन्नित्यर्थः । पुत्रस्य पितुर्दुःखनिवारकस्य बाह्यप्राणस्य मूर्धानं मस्तकं अभिमृशेत् करेण संस्पृशेत् । संस्पर्शमन्त्रमाह—अङ्गादङ्गात् गात्राद्गात्रात्, शिरःपाण्यादिभ्यः सर्वेभ्यो गात्रेभ्य इत्यर्थः । संभवसि निर्गच्छसि । हृदयादधिजायसे सर्वेभ्यो गात्रेभ्यो निर्गतो हृदयादधिकं प्रकटीभवसि । आत्मा मत्स्वरूपः पुत्र हे पुत्र, त्वं पुन्नाम्नो निरयात् मा मां आविथ मम रक्षणं कृतवान् । सः मम रक्षकः जीव प्राणान् धारय शरदः शतं शतसंवत्सरान् असौ एतन्नामा, इति अनेन मन्त्रेण नामास्य गृह्णाति अस्य पुत्रस्य नामग्रहणं करोति पिता । नामग्रहणे पुनर्मन्त्रान्तरमाह—अश्मा भव पाषाणो भव, रोगैरनुपद्रुतो वज्रसारशरीरो भवेत्यर्थः । परशुर्भव कुठारवद्वैरिवृक्षच्छेदकरो भव । हिरण्यमस्तृतं भव, अस्तृतं आस्तृतं सर्वतः परिस्तृतं, कनकवत्सर्वप्रजाप्रियो भव । तेजो वै पुत्र नामासि, वै प्रसिद्धं सर्वगात्रसारभूतं यत्तेजः संसारवृक्षबीजं तन्नाम त्वमसि भवसि हे पुत्र । स जीव शरदः शतमसौ इति नामास्य गृह्णाति, व्याख्यातम् । तृतीयवारनामग्रहणे तृतीयं मन्त्रमाह— येन प्रसिद्धेन स्वयंप्रकाशेन तेजसा प्रजापतिः प्रजानां पालको धाता प्रजाः स्वसंतानभूताः स्थिरजङ्गमाख्याः पर्यगृह्णात् सर्वतः स्वीकृतवान् अरिष्टयै प्रजानामविनाशार्थं, तेन प्रजापतिप्रजाग्रहणेन तेजसा त्वा त्वां पुत्रं परिगृह्णामि सर्वतः स्वीकरोमि असौ । इति नामास्य गृह्णाति, व्याख्यातम् । अथास्य दक्षिणे कर्णे पिता जपति 'अस्मै प्रयन्धि मघवन्नृजीषिन्' इति । 'इन्द्र श्रेष्ठानि द्रविणानि धेहि' इति पुत्रस्य सव्ये कर्णे पिता जपति । इदानीं मूर्ध्न आघ्राणे मन्त्रमाह—मा च्छित्थाः मत्संतानच्छेदं मा कार्षीः । मा व्यथिष्ठाः शरीरेन्द्रियमनोभिर्व्यथां मा गाः । शतं शरद आयुषो जीव, शतं संवत्सरान् जीवेत्यर्थः । पुत्र हे पुत्र, ते नाम्ना तव पुत्रस्याभिधानेन देवदत्तादिलक्षणेन मूर्धानं मस्तकं अवजिघ्रामि आघ्राणं करोमि असौ एतन्नामाऽहं तव पिता । इति अनेन मन्त्रेण त्रिः त्रिवारं मूर्धानमवजिघ्रेत् मूर्ध्न आघ्राणं कुर्यात् । इदानीं हिंकारमन्त्रमाह—गवां कामधेन्वादीनां सवत्सानां घटोध्नीनां त्वा त्वां पुत्रं हिंकारेण, वत्साकारणार्थं गोभिः क्रियमाणः स्वरो हिंकारः, तेन अभि हिं करोमि सर्वतो हिंकारेण आकारयामि । इति अनेन मन्त्रेण त्रिः त्रिवारं मूर्धानं अभि हिं कुर्यात् सर्वतो मूर्ध्नि हिमिति शब्दं कुर्यात् ।

शंनन्द.

दैवः परिमरः प्राणो वायुश्च ब्रह्म

**[1]अथातो दैवः परिमरः । एतद्वै ब्रह्म दीप्यते**

---

गृह्णाम्यसाविति मा च्छेत्स्या मां व्यतिष्ठाः ) च्छित्था ( छेत्ता, छेत्था ) त्रिर्मूर्धानमव ( त्रिरव ); क. मभिमृशेत् ( मभिजिघ्रेत् ) त्वं पुत्र माऽऽविथ ( वै पुत्रनामासि ) शतमसौ । इति ( शतमिति ) गृह्णाति ( दधाति ) तेजो वै पुत्र नामासि ( वेदो वै पुत्रनामाऽसि ) गृह्णाति । येन ( गृह्णात्यथैनत्परिगृह्णाति । येन ) गृह्णादरि ( गृह्णात्तदरि ) परिगृह्णाम्यसौ.....अथास्य ( परिगृह्णाम्यसावित्यथास्य ) अस्मै ( अस्मे ) च्छित्था ( भेत्था ) जीव पुत्र ( जीवस्व पुत्र ) मवजिघ्राम्यसौ.....मवजिघ्रेत् ( मभिजिघ्रामि । इति त्रिरस्य मूर्धानमभिजिघ्रेत् ) णाभि हिं ( णाभिहिं ) त्रिर्मूर्धानमाभि हिं कुर्यात् ( त्रिरस्य मूर्धानमभिहिं कुर्यात् ).

(१) कौउ. २।१२; क. तस्य वायुमेव ( तस्या दिश एव ).

**यदग्निर्ज्वलति । अथैतन्म्रियते यन्न ज्वलति । तस्याऽऽदित्यमेव तेजो गच्छति । वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यदादित्यो दृश्यते । अथैतन्म्रियते यन्न दृश्यते । तस्य चन्द्रमसमेव तेजो गच्छति । वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यते । अथैतन्म्रियते यन्न दृश्यते । तस्य विद्युतमेव तेजो गच्छति । वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योतते । अथैतन्म्रियते यन्न विद्योतते । तस्य वायुमेव तेजो गच्छति । वायुं प्राणः ॥**

एवं कौषीतकेस्त्रीण्युपासनान्युक्त्वा प्रकृतं प्राणस्य ब्रह्मत्वं संवर्गविद्यारूपेणान्तर्हितं विवक्षुः फलान्तराय नामान्तरमाह—अथ प्राणस्य ब्रह्मत्वकथनानन्तरं अतः यस्मात्स्ववैरिणो मरणस्येच्छा अस्मात्कारणात् दैवः देवानामग्निवागादीनां संबन्धी दैवः परिमरः प्राणं परितो म्रियन्तेऽग्न्याद्या वागाद्याश्चेति प्राणो ब्रह्मरूपः परिमरः, कथ्यते इति शेषः । एतत् प्रत्यक्षं वै प्रसिद्धं ब्रह्म प्राणोपाधिकं सत्यज्ञानादिरूपं दीप्यते प्रकाशते, यत् यदा अग्निः दाहपाकप्रकाशहेतुः कृशानुः ज्वलति दीप्तिमान् भवति । अथ तदा एतदुक्तं ब्रह्म म्रियते प्राणं मुञ्चति, यन्न ज्वलति यदा अग्निर्दीप्तिमान्न भवति । तस्य दीप्तिशून्यस्य अग्नेः आदित्यमेव भास्करमेव, न त्वन्यं, तेजो गच्छति दीप्तिः प्राप्नोति । वायुं आधिदैविकं प्राणं वातं प्राणः प्रकर्षेण चेष्टाहेतुर्वातो गच्छति । एतद्वै ब्रह्म दीप्यते यत्, पूर्ववद्व्याख्येयम् । आदित्यो दृश्यते भास्करो नयनपथमागच्छति । अथैतन्म्रियते यत्, पूर्ववद्व्याख्येयम् । न दृश्यते नयनाभ्यां न निरीक्ष्यते । तस्य अदृष्टस्य आदित्यस्य चन्द्रमसमेव सोममेव, न त्वन्यं, तेजो गच्छति । वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यते । अथैतन्म्रियते यन्न दृश्यते । तस्य विद्युतमेव तेजो गच्छति वायुं प्राणः । चन्द्रमाः सोमः । तस्य चन्द्रमसः । विद्युतमेव सौदामिनीमेव, न त्वन्यत् । अन्यत्पूर्ववद्व्याख्येयम् । एतद्वै ब्रह्म दीप्यते यत् विद्युत् सौदामिनी विद्योतते विद्योतनं कुरुते, दृश्यते इत्यर्थः । अथैतन्म्रियते यन्न विद्योतते । तस्य वायुमेव तेजो गच्छति वायुं प्राणः । न विद्योतते न दृश्यते । तस्य विद्युद्रूपस्य तेजःप्राणौ वायुमेवाधिगच्छतः । अन्यत्पूर्ववद्व्याख्येयम् ।

शंनन्द.

**ता[1] वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ मृता न मृच्छन्ते । तस्मादेव उ पुनरुदीरते । इत्यधिदैवतम् । अथाध्यात्मम् ॥ १२ ॥**

ता उक्ता वै प्रसिद्धा एता अग्न्यादित्यचन्द्रमोविद्युद्रूपाः सर्वाः निखिलाः देवताः देवताशब्दाभिधेयाः वायुमेव वातं प्राणमेव, न त्वन्यं, प्रविश्य प्रवेशनं कृत्वा वायौ आधिदैविके प्राणे मृताः अस्तं गताः न मृच्छन्ते न विनश्यन्ति वायुतादात्म्येन । तस्मादेव उ अपि तत एव वायोः, न त्वन्यस्मात्, पुनरुदीरते भूयः उदयमागच्छन्ति । इति अनेन प्रकारेण अधिदैवतं देवतामधिकृत्योक्तमधिदैवतम् । अथ अधिदैवतकथनानन्तरं अध्यात्मं आत्मानमधिकृत्य उक्तमध्यात्मम् ।

शंनन्द.

**एतद्वै[2] ब्रह्म दीप्यते यद्वाचा वदति । अथैतन्म्रियते यन्न वदति । तस्य चक्षुरेव तेजो गच्छति । प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यति । अथैतन्म्रियते यन्न पश्यति । तस्य श्रोत्रमेव तेजो गच्छति । प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते यच्छ्रोत्रेण शृणोति । अथैतन्म्रियते यन्न शृणोति । तस्य मन एव तेजो गच्छति । प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायति । अथैतन्म्रियते यन्न ध्यायति । तस्य प्राणमेव तेजो गच्छति । प्राणं प्राणः । ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे मृता न मृच्छन्ते । तस्मादेव उ पुनरुदीरते । तद्यदि ह वा एवं विद्वांस उभौ पर्वतावभिप्रवर्तेयातां तुस्तूर्षमाणौ दक्षिणश्चोत्तरश्च**

---

(१) आदि. मृता ( सृप्ता, मृत्वा ) मृच्छन्ते ( मूर्छन्ते ); क. मृता न मृच्छन्ते ( मृत्वाऽन्नमृच्छन्ते ) ( उ० ).

(२) कौड. २।१३; आदि. मृता ( मृत्वा ) मृच्छन्ते ( मूर्छन्ते ) प्रवर्तेया ( प्रवर्तया ); क. मृता न मृच्छन्ते ( मृत्वाऽन्नमृच्छन्ते ) ( उ० ) तद्यदि ह ( तद्यदिह ) विद्वांस उभौ ( विद्वांसमुभौ ) तुस्तूर्ष... स्तृण्वीयाताम् ( दक्षिणश्चोत्तरश्च तुस्तूर्षमाणौ न हैनं स्तृण्वीयाताम् ) स एनं ( स एवैनं ) ( सर्वे० ).

**न हैवैनं स्तृण्वीयाताम्। अथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त एनं सर्वे परिम्रियन्ते ॥ १३॥**

वाचा चक्षुषा श्रोत्रेण मनसा चेन्द्रियेण वदनमवलोकनं श्रवणं ध्यानं च यथाक्रमेण कुरुते चेद्दीपनं, न चेन्मरणम्। अग्नेर्वाक्, आदित्यस्य चक्षुः, चन्द्रमसः श्रोत्रं, विद्युतो मनः, वायोः प्राणः, इत्यत्र विशेषः। अन्यत्पूर्ववद्व्याख्येयम्। दैवपरिमरज्ञानस्य फलमाह—तत् तस्मिन्दैवे परिमरे ज्ञाते यदि पक्षान्तरे, असंभावितमिदं, अथ कथंचिदिच्छा भवेत्, ह प्रसिद्धाः वै स्मर्यमाणाः एवं विद्वांसः उक्तेन प्रकारेण दैवपरिमरज्ञानवन्तः उभौ द्वौ पर्वतौ गिरी अभिप्रवर्तेयातां अभिप्रवर्तयेरन् सर्वतः प्रवृत्तिं द्वन्द्वयुद्धैरिवोत्पतनाधोभूमिप्रवेशादिकं कारयेयुः। तौ च पर्वतौ किमल्पौ एक देशस्थौ च, इत्याशङ्क्य नेत्याह—तुस्तूर्षमाणौ दक्षिणश्चोत्तरश्च आस्तरणं कुर्वाणौ दक्षिण एकस्तादृशश्चोत्तरः। चकारौ दक्षिणोत्तरयोस्तुस्तूर्षमाणपदसंबन्धार्थौ। अयमर्थः— उत्तरकुर्वादिदेशस्थ एकः अपरश्च भारतखण्डादिस्थः। उभावपि भास्करगतिनिरोधकौ, पृथिवीं पादपीडनेन पातालं नयन्तौ, विश्वावकाशं स्वदेहेन ग्रसन्ताविति। न हैवैनं स्तृण्वीयातां, एनं एतान्विदुषः ह प्रसिद्धं नैव स्तृण्वीयातां नैव हिंस्यातां अतिक्रमणं नैव कुर्वीयातां, यदुक्तमेभिस्तदेव कुर्वीयातामित्यर्थः। अथ एवं सफलदैवपरिमरज्ञानानन्तरं ये दैवपरिमरज्ञानशून्या गतभाग्याः एनं दैवपरिमरज्ञानवन्तं द्विषन्ति असहिष्णवोऽपकारान् कुर्वन्तो न बहु मन्यन्ते, यांश्च प्रसिद्धान् गतभाग्यान्। चकारः पूर्वेषामपि समुच्चयार्थः। स्वयं दैवपरिमरज्ञानवान् द्वेष्टि न सहते कुतश्चिदभाग्ययोगात् त एनं सर्वे परिम्रियन्ते, एनं दैवपरिमरज्ञानवन्तं ते एतस्मिन्द्वेषिणः एतस्य द्वेष्याश्च सर्वे निखिलाः, सपुत्रपशुबान्धवा इत्यर्थः। परिम्रियन्ते सर्वतो निधनं गच्छन्ति। शंनन्द.

प्राणः प्रज्ञात्मा सर्वेषु देवेषु श्रेष्ठः

**अथातो निःश्रेयसादानम्। सर्वा ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुः। तद्दारुभूतं शिश्ये ॥**

अथ परिमरगुणोपासनानन्तरं अतः यस्मात्फलान्तरापेक्षा अस्मात्कारणात् निःश्रेयसादानं, निःश्रेयसं सर्वस्मादुत्कर्षरूपो गुणो मोक्षविशेषः, तद्गुणविशिष्टस्य प्राणस्याऽऽदानं स्वीकारः, क्रियते इति शेषः। तत्र प्राणो निःश्रेयसमिति नाविचार्य स्नेहादिना स्वीकृतं, किंतु महता संघर्षेण विचारितं, एतदर्थमाख्यायिकामाह — सर्वाः निखिलाः ह किल वै प्रसिद्धाः देवताः देवताशब्दवाच्या वागाद्याः अहंश्रेयसे अहंवादेन आत्मनः श्रेयः अधिक्यं, तदर्थं विवदमानाः मामन्तरेण का भवत्य इति स्वव्यतिरिक्ताः परास्तिरस्कुर्वत्यः इत्यर्थः। स्वयं निश्चयं कर्तुमशक्ताः प्रजापतिं पितरमेत्योचुर्भगवन् को न श्रेष्ठः इति। स हि प्राणे श्रैष्ठ्यं जानन्नपि स्वसुतानां दुःखं दातुमशक्तः अमुमुपायं प्रत्यपद्यत। यस्मिन् व उत्क्रान्ते इदं शरीरं पापिष्ठं शवसमानं भविष्यति स वः श्रेष्ठः इत्युक्ते तथैव स्वश्रैष्ठ्यनिर्धारणार्थं क्रमेणोत्क्रमणं कृतवत्य इत्याह—अस्मात् प्रत्यक्षात् शरीरात् मनुष्यादिदेहात् उच्चक्रमुः वागादयः क्रमेणोत्क्रमणं चक्रुः। तत् स्थूलशरीरं वागादीनां प्रत्येकमुत्क्रमणे वदनादिव्यापारमकुर्वत्स्थितं यदा पुनर्मुख्यप्राण उत्क्रान्तस्तदा दारुभूतं चिताकाष्ठसमानमस्पृश्यं सर्वव्यापारशून्यं शिश्ये शयनं कृतवत्। शंनन्द.

**अथैतद्वाक् प्रविवेश। तद्वाचा वदच्छिश्य एव। अथैतच्चक्षुः प्रविवेश। तद्वाचा वदच्चक्षुषा पश्यच्छिश्य एव। अथैतच्छ्रोत्रं प्रविवेश। तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिश्य एव। अथैतन्मनः**

---

(१) कौ. २।१४; क. सर्वा (एता) तद्दारुभूतं शिश्ये (तद्वाक् पपात शुष्कं दारुभूतं शिश्ये); अशंकर. २।१।५, ३।३।१० सर्वा (एता); भास्कर. २।१।५ सर्वा (एता); रामानुज. श्रीकर. बलदेव. २।१।५.

(१) क. अथैत (अथैन) द्वाचा वद (द्वाचाऽवद) क्षुषा पश्य (क्षुषाऽपश्य) नसा ध्याय (नसाऽध्याय) ते देवाः (ता वा एताः सर्वा देवताः) सहैतैः (सहैवैतैः) ल्लोकादु (च्छरीरादु); अशंकर. ते देवाः (ता वा एताः सर्वा देवताः); भास्कर. ते देवाः प्राणे निःश्रेयसं विदित्वा (ता वा एता देवताः प्राणो निःश्रेयो विदित्वा).

प्रविवेश। तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिश्य एव। अथैतत्प्राणः प्रविवेश। तत्तत एव समुत्तस्थौ। ते देवाः प्राणे निःश्रेयसं विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः सर्वैरस्माल्लोकादुच्चक्रमुः॥

एवं व्यतिरेकेण निश्चये संपन्नेऽपि अतिस्पर्धावशादन्वयमन्तरेण निश्चयमनधिगच्छन्तः अन्वयमप्यनुष्ठितवन्त इत्याह--अथ शरीरस्य दारुभूतस्य शयनानन्तरं एतत् शरीरं वाक् वागिन्द्रियं प्रविवेश प्रवेशं कृतवत्। तत् शरीरं वाचा वागिन्द्रियेण वदत् वाग्व्यापारं कुर्वत् शिश्ये एव शयन कृतवदेव, न तूत्थितवत्। वाक्प्रवेशानन्तरं चक्षुरिन्द्रियं प्रविष्टम्। ततश्च अवलोकनं वदनं चाभूत्। अनन्तरं श्रोत्रेन्द्रियं प्रविष्टम्। ततश्च श्रवणावलोकनवदनान्यभूवन्। अनन्तरं मनः प्रविष्टम्। ततश्च ध्यानश्रवणावलोकनवदनान्यासन्। न तु शरीरमुत्थितवत्, इत्येतत्पर्यायत्रयेणाऽऽह--अथैतच्चक्षुः प्रविवेश, तद्वाचा वददिति। स्पष्टम्। अथ वाक्चक्षुःश्रोत्रमनःप्रवेशानन्तरं एतत् शरीरं वदत्पश्यच्छृण्वद्ध्यायत् प्राणः मुखबिलान्तर्वर्ती पञ्चवृत्तिर्वायुविशेषः प्रविवेश प्रवेशं कृतवान्। तत् शरीरं तत एव तस्मात् प्राणप्रवेशादेव, न त्वन्यस्मात्, समुत्तस्थौ सम्यगुत्थानं कृतवत्। ते वागादयः परित्यक्ताभिमानाः देवाः देवशब्दाभिधेयाः प्राणे शरीरोत्थापनहेतौ प्रकृष्टचेष्टा-ति निःश्रेयसं सर्वेभ्यो वागादिभ्य उत्कर्षं विदित्वा ाणमेव प्रकृष्टचेष्टावन्तं, न त्वन्यं, प्रज्ञात्मानं प्रज्ञानो भूम्न उपाधिभूतं संप्रसादम्। अथवा प्राणे ति प्रज्ञाया दर्शनात् असति चादर्शनात्प्राणस्य ज्ञात्मत्वमविरुद्धमभिहितं प्राणमेव प्रज्ञात्मानमिति। नभिसंभूय सर्वतः संभवनं प्राप्तिं कृत्वा सहैतैः र्वैरेतैः प्राणापानव्यानोदानसमानैर्निखिलैः सह, यथा ाणवृत्तिभेदा आध्यात्मिकपरिच्छेदशून्यास्तद्वद्वागादयोऽपीत्यर्थः। अस्मात् प्रत्यक्षात् लोकात् तदनुरूपाच्छरीरात्, चक्षुराद्यभिमानादित्यर्थः। उच्चक्रमुः उत्क्रमणं चक्रुः।

शंनन्द.

[१]ते वायुप्रतिष्ठा आकाशात्मानः स्वरीयुः। तथो एवैवं विद्वान् सर्वेषां भूतानां प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः सर्वैरस्माच्छरीरादुत्क्रामति। स वायुप्रतिष्ठ आकाशात्मा स्वरेति। स तद्भवति यत्रैते देवाः। तत्प्राप्य तदमृतो भवति यदमृता देवाः॥ १४॥

(१) ते परित्यक्ततदभिमाना वागादयः वायुप्रतिष्ठाः, वायौ आधिदैविके प्राणे प्रतिष्ठा प्राणो निःश्रेयसमिति ज्ञानमाश्रयो येषां ते वायुप्रतिष्ठाः, आकाशात्मानः आकाशवत्सर्वगत आत्मा येषां ते आकाशात्मानः, स्वरीयुः स्वः स्वर्गं अग्न्यादिस्वरूपं ईयुः ययुः गतवन्त इत्यर्थः। तथो एव, उ अपि तद्वदेव यथा देवाः, न त्वन्यथा। एवं विद्वान् उक्तेन प्रकारेण प्राणे निःश्रेयसं जानन् सर्वेषां भूतानां निखिलानां स्थिरजङ्गमानां प्राणमेव प्रज्ञात्मानमभिसंभूय सहैतैः सर्वैरस्मात्, व्याख्यातम्। शरीरात् शरीराभिमानात् उत्क्रामति उत्तिष्ठति, शरीराभिमानं परित्यजतीत्यर्थः। स वायुप्रतिष्ठ आकाशात्मा स्वरेति। व्याख्यातम्। उपासकस्यैकत्वादेकवचनं विशेषः। स्वः स्वर्गं प्राणं, ब्रह्मज्ञानोत्पादनद्वारा आनन्दात्मानं वा एति गच्छति। स्वरेतीत्येतद्व्याकरोति — सः उपासकः तद्भवति उक्तं प्राणस्वरूपं भवति। तच्छब्दार्थमाह — यत्र यस्मिन् प्राणस्वरूपे एते देवाः एते वागादयोऽग्न्याद्यात्मका देवशब्दाभिधेयाः। ननु वागादीनामग्न्याद्यातिलक्षणममृतत्वं जातं तत्प्राप्तौ, उपासकस्य पुनस्तत्प्राप्तौ किं स्यादित्यत आह तत् प्राणस्वरूपं प्राप्य अवाप्य तदमृतः, तत् सर्वपरिच्छेदशून्यं अमृतत्वं यस्य सोऽयं तदमृतः भवति, स्पष्टम्। यदमृताः, यत् प्रसिद्धं सर्वपरिच्छेद-

(१) **आटि.** वायुप्रतिष्ठा ( वायुप्रविष्टा ) विद्वान्+( प्राणे निःश्रेयसं विदित्वा ) वायुप्रतिष्ठ ( वायुप्रविष्ट ); क. विद्वान् + ( प्राणे निःश्रेयसं विदित्वा ) ( सर्वेषां भूतानां० ) तद्भवति ( तद्गच्छति ) तदमृतो.....देवाः ( यदमृता देवास्तदमृतो भवति य एवं वेद ); **शंकर.** तथो एवैवं विद्वान् ( तथो य एवं विद्वान् प्राणे निःश्रेयसं विदित्वा ) 'तथो' इत्यत्र 'अथो' इति पुस्तकेषु मुद्रितं, तथापि कल्पतरुपरिमलावनुसृत्य 'तथो' इत्येव पाठः.

शून्यं अमृतत्वं येषां ते यदमृता देवाः वागाद्याः ।

शंनन्द.

( २ ) मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते, न भूतेन्द्रियमात्रम् ।

अपि च कौषीतकिनः प्राणसंवादे करणमात्राऽऽशङ्काविनिवृत्तये अधिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंषन्ति—'एता ह वै देवता......' इति, 'ता वा एताः सर्वा देवता......' इति च ।

२।१।५

'सर्वाभेदादन्यत्रेमे'—वाजिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्योपास्यत्वमुक्तम् । वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः । ते च गुणाः प्राणे पुनः प्रत्यर्पिताः — 'यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसि' ( बृउ. ६।१।१४ ) इत्यादिना । अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां प्राणसंवादेषु 'अथातो निःश्रेयसादानम्' 'एता ह वै देवता अहंश्रेयसे विवदमानाः' इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तं, न त्विमे वसिष्ठत्वादयोऽपि गुणा उक्ताः । तत्र संशयः— किमिमे वसिष्ठत्वादयो गुणाः क्वचिदुक्ता अन्यत्राप्यस्येरन्, उत नास्येरन् इति । तत्र प्राप्तं तावत् नास्येरन् इति । कुतः । एवंशब्दप्रयोगात् । 'तथो य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा' इति हि तत्र तत्र एवंशब्देन वेद्यं वस्तु निवेद्यते । एवंशब्दश्च संनिहितावलम्बनो न शाखान्तरपरिपठितमेवंजातीयकं गुणजातं शक्नोति निवेदयितुम् । तस्मात् स्वप्रकरणस्थैरेव गुणैर्निराकाङ्क्षत्वमिति । एवं प्राप्ते प्रत्याह—अस्येरन्निमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि । कुतः । सर्वाभेदात् । सर्वत्रैव तदेवैकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते, प्राणसंवादादिसारूप्यात् । अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र नास्येरन् । ननु एवंशब्दः तत्र तत्र भेदेन एवंजातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम् । अत्रोच्यते — यद्यपि कौषीतकिब्राह्मणगतेन एवंशब्देन वाजसनेयिब्राह्मणगतं गुणजातमसंशब्दितं, असंनिहितत्वात्, तथाऽपि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेन एवंशब्देन तत् संशब्दितं, इति न परशाखागतमपि अभिन्नविज्ञानावरुद्धं गुणजातं स्वशाखागताद्विशिष्यते । न च एवं सति श्रुतहानिरश्रुतकल्पना वा भवति । एकस्यामपि हि शाखायां श्रुता गुणाः श्रुता एव सर्वत्र भवन्ति, गुणवतो भेदाभावात् । न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरं गतस्तद्देश्यैरविभावितशौर्यादिगुणोऽपि अतद्गुणो भवति । यथा च तत्र परिचयविशेषात् देशान्तरगतेऽपि देवदत्तगुणा विभाव्यन्ते, एवमभियोगविशेषात् शाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽप्यस्येरन् । तस्मात् एकप्रधानसंबद्धा धर्मा एकत्राप्युच्यमाना सर्वत्रैवोपसंहर्तव्या इति ।

* ब्रशंकर. ३।३।१०

पितापुत्रसंबन्धि संप्रत्तिकर्म

**अथातः पितापुत्रीयं संप्रदानमिति चाऽऽचक्षते । पिता पुत्रं प्रेष्यन्नाह्वयति । नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्रमुपनिधायाहतेन वाससा संप्रच्छन्नः स्वयं श्येत एत्य पुत्र उपरिष्टादभिनिपद्यत इन्द्रियैरस्येन्द्रियाणि संस्पृश्य । अपि वाऽस्याभिमुखत एवाऽऽसीत ॥**

इदानीं प्राणविदः संप्रत्तिकर्माऽऽह — अथ प्राणोपासनानन्तरं अतः यस्मान्मरणमवश्यंभावि अस्मात्कारणात् पितापुत्रीयं पित्रा पुत्राय दीयमानं पितापुत्रीयं संप्रदानं सम्यक्प्रदीयते इति संप्रदानं, संप्रत्तिकर्मेत्यर्थः । इति चाऽऽचक्षते अनेनैव प्रकारेण कथयन्ति । पिता पुत्रं प्रेष्यन्, कुतश्चिन्निमित्तान्मरिष्यामीति निश्चित्येत्यर्थः । पिता जनकः पुत्रमौरसं तनयं आह्वयति आकारयति संप्रत्तिकर्मार्थम् । आकारणे इतिकर्तव्यतामाह— नवैस्तृणैः नवीनैः कुशादिभिस्तृणैः अगारं संस्तीर्य गृहमाच्छाद्य अग्निमुपसमाधाय तस्मिन्गृहे श्रौतं स्मार्तं वाऽग्निं संस्थाप्य अग्नेरुत्तरतः पूर्वतो वा [illegible] त्रमुपनिधाय नीरपूर्णं कलशं व्रीहिपूर्णपात्रसं[illegible] द्वाचा वद ( [illegible] ) नसा ध्याय ( नसा- अहतेन वाससा संप्रच्छन्नः न[illegible] : सर्वा देवताः ) सहैतैः

* भास्करादयः ब्रशंकरवत् ।

(१) कौउ. २।१५; क. स्वयं श्येत ( पिता शेत ) इन्द्रियैरस्येन्द्रि ( इन्द्रियैरिन्द्रि ) वाऽस्याभिमुखत एवाऽऽसीत ( वाऽस्मा आसीनायाभिमुखायैव संप्रदध्यात् )

श्येतः श्वेतः, सितमाल्याम्बरधर इत्यर्थः। एत्य आगत्य, आह्वयतीत्यन्वयः । पुत्रे आगते तनये उपरिष्टात् उपरिभागे अभिनिपद्यते सर्वतो नितरां प्राप्नोति। अभिनिपदने इतिकर्तव्यतामाह — इन्द्रियैः चक्षुरादिभिः स्वकीयैः अस्य पुत्रस्य इन्द्रियाणि चक्षुरादीनि संस्पृश्य सम्यक्स्पर्शनं विधाय, अभिनिपद्यते इत्यन्वयः । पक्षान्तरमाह — अपि वा अथवा अस्य पुत्रस्य अभिमुखत एव संमुखत एव, न त्वन्यथा, उपरिपतनस्य लोकगर्हितत्वादित्यर्थः। आसीत उपविशेत्।

शंनन्द.

अथास्मै संप्रयच्छति। वाचं मे त्वयि दधानीति पिता। वाचं ते मयि दध इति पुत्रः। प्राणं मे त्वयि दधानीति पिता। प्राणं ते मयि दध इति पुत्रः। चक्षुर्मे त्वयि दधानीति पिता। चक्षुस्ते मयि दध इति पुत्रः। श्रोत्रं मे त्वयि दधानीति पिता। श्रोत्रं ते मयि दध इति पुत्रः। अन्नरसान्मे त्वयि दधानीति पिता। अन्नरसांस्ते मयि दध इति पुत्रः। कर्माणि मे त्वयि दधानीति पिता। कर्माणि ते मयि दध इति पुत्रः। सुखदुःखे मे त्वयि दधानीति पिता। सुखदुःखे ते मयि दध इति पुत्रः। आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता। आनन्दं रतिं प्रजातिं ते मयि दध इति पुत्रः। इत्या मे त्वयि दधानीति पिता। इत्यास्ते मयि दध इति पुत्रः। धियो विज्ञातव्यं कामान्मे त्वयि दधानीति पिता। धियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्रः ॥

अथ अनन्तरं अस्मै पुत्राय संप्रयच्छति सम्यक् प्रयच्छेत्, वक्ष्यमाणेन विधिना स्ववागादीन् दद्यात् इत्यर्थः । वाचं वागिन्द्रियं मे मम पितुर्मुमूर्षोः त्वयि पुत्रे ममाऽऽनृण्यस्य विधातरि दधानि धारयाणि इति अनेन प्रकारेण पिता जनकः, आहेति शेषः । एवं पित्रोक्ते वाचं वागिन्द्रियं ते तव पितुः मयि पुत्रे दधे धारये इति अनेन प्रकारेण पुत्रः तनयः, आहेति शेषः । प्राणं घ्राणं मुख्यं च प्राणम्। चक्षुःश्रोत्रे स्पष्टे। अन्नरसान् मधुरादीन्। पूर्वं करणग्रहणं, इत आरभ्य विषयग्रहणं उभयत्र करणविषययोः समर्पणार्थम्। कर्माणि आदर्तव्यानि। सुखदुःखे शरीरोपभोग्ये । आनन्दं रतिं प्रजातिं, मैथुनस्यावसाने आनन्दः, ततः प्राप्तिः, ततः प्रजातिः पुत्राद्या । इत्याः गतीः । धियः अन्तःकरणवृत्तीः । विज्ञातव्यं तासां विषयः । कामान् इच्छाविशेषान् । अन्यत् नवस्वपि पर्यायेषु वाक्पर्यायवद्व्याख्येयम् ।

शंनन्द.

अथ दक्षिणावृत्प्राङुपनिष्क्रामति । तं पिताऽनुमन्त्रयते यशो ब्रह्मवर्चसमन्नाद्यं कीर्तिस्त्वा जुषतामिति । अथेतरः सव्यमंसमन्ववेक्षते । पाणिनाऽन्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाल्लोकान् कामानाप्नुहीति। स यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्। परि वा व्रजेत्। यद्यु वै प्रेयाद्यदेवैनं समापयति। तथा समापयितव्यो भवति तथा समापयितव्यो भवति ॥ १५ ॥

इति द्वितीयोऽध्यायः ॥

अथ अनन्तरं दक्षिणावृत् पितुः प्रदक्षिणप्रकारेण प्राङ् प्राच्यां दिशि उपनिष्क्रामति पितुः समीपदेशान्निर्गच्छति। तं पुत्रं पिता जनकः अनुमन्त्रयते पश्चात्संबोध्य ब्रूते। अनुमन्त्रणवाक्यमाह—यशः लौकिकी बन्धुजनादिभ्यः कीर्तिः, ब्रह्मवर्चसं ब्रह्मतेजः, अन्नाद्यं अन्नं च तदाद्यं च अन्नाद्यं, कीर्तिः शास्त्रीयं यशः त्वा त्वां पुत्रं जुषतां सेवतां इति अनेन प्रकारेण, अनुमन्त्रयते इत्यन्वयः। अथ एतदनुमन्त्रणानन्तरं इतरः पुत्रः सव्यं वामं अंसं बाहुमूलं स्वस्य अन्ववेक्षते पश्चादवलोकयते।

(१) क. इत्या मे ( इत्यां मे ) इत्यास्ते ( इत्यां ते ) धियो.....पुत्रः ( मनो मे त्वयि दधानीति पिता । मनस्ते मयि दध इति पुत्रः। प्रज्ञां मे त्वयि दधानीति पिता। प्रज्ञां ते मयि दध इति पुत्रः । यद्यु वा उपाभिगदः स्यात्समासेनैव ब्रूयात्। प्राणान् मे त्वयि दधानीति पिता। प्राणांस्ते मयि दध इति पुत्रः ).

(१) आटि. प्रेयाद्यदे ( प्रेयात्तदे ) प्रेयाद्यदेवैनं ( प्रेयात्तथैनं ); क. वृत्प्राङुप ( वृदुप ) ( अन्नाद्यं० ) मंसमन्ववेक्षते ( मन्वंसमभ्यवेक्षते ) यदेवैनं समापयति ( त्तथैवैनं समापयेयुः ) तथा ( यथा ); कटि. मंसमन्ववेक्षते ( मन्वंसमभ्यवेक्षेत ).

अवलोकनप्रकारमाह — पाणिना करेण अन्तर्धाय व्यवधाय, वसनान्तेन वा, वाशब्दः पूर्वेण सहेच्छाविकल्पार्थः। प्रच्छाद्य आच्छाद्य पितरं प्रत्याह — स्वर्गांल्लोकान् निरतिशयप्रीतिजनकान् देशविशेषान् कामान् कमनीयान् तत्र स्थितान् भोगान् वा आप्नुहि प्राप्नुहि इति अनेन प्रकारेण, ब्रूयादित्यनुषङ्गः। एवं पुत्रेण कृते स पिता यदि कथंचित् अगदः स्यात् नीरोगो भवेत्, पुत्रस्य तनयस्य ऐश्वर्ये विभूतौ पिता जनको वसेत् निवासं कुर्यात्, प्रवासिवद्गृहकार्ये किमपि नानुसंदध्यादित्यर्थः। परि वा व्रजेत्। वाशब्दः पक्षान्तरार्थः। यदि वैराग्यं तदा परिव्रजेत् सर्वसङ्गपरित्यागं कुर्यादित्यर्थः। यद्यु वै अपि कथंचित् प्रसिद्धं प्रेयात् परलोकं गच्छेत्, यदेव प्रसिद्धमेव वागादिकं, न त्वन्यत्, एनं पुत्रं प्रति समापयति सम्यक् प्रापयति। तथा तद्वदेव समापयितव्यो भवति सम्यक्प्रापणीयो भवति। सर्वैः कामैरिति शेषः। तथा समापयितव्यो भवति, व्याख्यातम्। वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः।

शंनन्द.

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य शंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः

( इन्द्रो ब्रह्म )

सर्वपापापहं सत्यरूपेन्द्रज्ञानं मनुष्यस्य हिततमो वरः

* प्रतर्दनो ह दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च। तं हेन्द्र उवाच। प्रतर्दन वरं ते ददानीति। स होवाच प्रतर्दनः। त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति। तं हेन्द्र उवाच। न वै वरोऽवरस्मै वृणीते। त्वमेव वृणीष्वेति। एवमवरो वै किल म इति होवाच प्रतर्दनः। अथो खल्विन्द्रः सत्यादेव नेयाय। सत्यं हीन्द्रः ॥

यस्मा हेतोः पर्यङ्कोपासना प्राणोपासना च विविधगुणा उक्ता तां ब्रह्मविद्यां विवक्षुस्तस्यामास्तिक्यं जनयितुं प्रतर्दनं काश्यं देवेभ्योऽप्यधिकबलं लक्ष्म्यादिमन्तं ब्रह्मविद्यार्थिनं शिष्यं, देवराजं च सत्यपाशनिबद्धं मनुष्येषु ब्रह्मविद्यां वक्तुमनिच्छन्तमपि गुरुं संपाद्याऽऽख्यायिकामाह — प्रतर्दनः प्रकर्षेण तर्दयति भर्त्सयति अभिभवति स्वशत्रूनिति सार्थकनामा प्रतर्दनः ह किल दैवोदासिः दिवोदासस्य काशिराजस्य पुत्रो दैवोदासिः इन्द्रस्य देवराजस्य परमैश्वर्यसंपन्नस्य प्रियं धाम प्रियं स्थानं, स्वर्गमिति यावत्। उपजगाम प्राप्तवान्। तत्प्राप्तौ कारणमाह— युद्धेन च पौरुषेण च समरयज्ञेन अनेकभटपश्वाहुतिदीप्यमानशस्त्राग्निना पुरुषसंबन्धिनोत्साहेन च, स्वर्गमर्मपरिज्ञानेनेत्यर्थः। चकारौ उभयोरपि कारणत्वसमुच्चयार्थौ। तं समरशौण्डमुत्साहिनं स्वर्गमागतं प्रतर्दनं ह किल इन्द्रः युद्धपौरुषाभ्यां परितोषं प्राप्तो देवराजः उवाच उक्तवान्। इन्द्रोक्तिमाह — प्रतर्दन हे प्रतर्दन, वरं अभिलषितमर्थं ते तुभ्यं प्रतर्दनाय मत्परितोषकारिणे ददानि प्रयच्छानीत्यर्थः। इति अनेन प्रकारेण उवाचेत्यन्वयः। सः इन्द्रेणोक्तः ह किल

---

* एतदध्यायगतवाक्यविषयको ब्रह्मसूत्रभाष्यसंदर्भ उत्तरस्मिन्वाक्ये द्रष्टव्यः। छाउ. ४।१।१ इति च द्रष्टव्यम्।

(१) कौष. ३।१; आदि. ददानीति ( ददामीति ) मे वृणीष्व ( मे वरं वृणीष्व ) वरोऽवरस्मै ( वरं परः परस्मै ) वै किल ( वै तर्हि किल ); क. ह दैवो ( ह वै दैवो ) ते ददानीति ( वृणीष्वेति ) मे वृणीष्व ( वृणीष्व ) एवमवरो ( अवरो ) म इति ( मेति ); ब्रशंकर. १।१।२८, २९, ३०, ३।४।२३ ह दैवो ( ह वै दैवो ) ते ददानीति ( वृणीष्वेति ); भास्कर. १।१।२८ मे वृणीष्व ( मे वरं वृणीष्व ) शेषं ब्रशंकरवत्; रामानुज. १।१।२९, ३०, ३१, ३२, ३।४।२३ भास्करवत्; निंबार्क. १।१।३०, ३१, ३२; श्रीकंठ. १।१।३०, ३२, ३।४।२३ ह दैवो (ह वै दैवो); श्रीकर. १।१।२९, ३०, ३१, ३२, १।३।२५, २६, ३।४।२३ ह दैवो ( ह वै दैवो ) युद्धेन च ( युद्धेन ) मे वृणीष्व ( वरं वृणीष्व ); वल्लभ. १।१।२७, ३।४।२२ ह दैवो ( ह वै दैवो ); विज्ञान. १।१।२९; बलदेव. १।१।२८, ३।४।२३.

उवाच प्रतर्दनः, स्पष्टम् । प्रतर्दनोक्तिमाह—त्वमेव मत्पुरतः स्थितो हिताहितज्ञो देवराजः, न त्वन्यः, मे मह्यं प्रतर्दनाय, हितार्थिने मदर्थमित्यर्थः । वृणीष्व हितमिष्टमात्मने च प्रार्थयस्व । प्रार्थ्यमानवरमाह— यं प्रसिद्धमभीष्टमर्थं त्वं सर्वज्ञो देवराजः मनुष्याय अज्ञानान्तरवर्तिने अनेकशुभाशुभव्यामिश्रफलदावाग्निसंतप्तगात्राय मनुष्यजातियुजे हिततमं अतिशयेन हितं, नातःपरं हितमित्यर्थः । मन्यसे निश्चिनोषि इति अनेन प्रकारेण । तं इन्द्रं प्रत्येवंवादिनं प्रतर्दनं ह किल इन्द्रो देवराजः ब्रह्मविद्याज्ञानावृतदृष्टिना अयाचितं परोक्त्या तर्हि किल निश्चितं दातुमशक्तः उवाच उक्तवान् लौकिकं नयम् । इन्द्रोक्तिमाह—न वै वरोऽवरस्मै वृणीते । वै प्रसिद्धं अवरस्मै अन्यार्थं वरः वरं न वृणीते अन्यो न प्रार्थयते । यत एवं अतः स्वार्थं वरं त्वमेव वृणीष्वेति । स्पष्टम् । एवं इन्द्रेणोक्तः अवरः वरं ददानीति प्रतिज्ञाय भवता निर्दिष्टोऽर्थः अदत्तः, स्यादिति शेषः । वै प्रसिद्धो मनुष्याय मे मह्यं हिताहितज्ञानशून्याय, इति होवाच प्रतर्दनः किल एवमुक्तवान् प्रतर्दनो देवराजानं स्वार्थो वरोऽयमिति । अथो अथ प्रतर्दनवाक्यानन्तरं खलु निश्चितं इन्द्रः सत्यवादिनामग्रगण्यो देवराजः सत्यात् वरं ते ददानीति स्वप्रतिज्ञाताद्यर्थवचनात् एव नेयाय नापजगामैव । प्रतर्दनार्थं वरदाताऽपि स्वयं स्वस्मै वरं याचितवान्, न तु लौकिकं नयमङ्गीचकारेत्यर्थः । सत्यादनपगमने कारणमाह—सत्यं हीन्द्रः । सत्यं यथार्थस्वरूपं यत्किंचिद्वागर्थस्वरूपम् । इन्द्रो देवराजः हि यस्मात्, तस्मान्नेयायेत्यन्वयार्थः ।

शंनन्द.

**स होवाच । मामेव विजानीहि । एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात् ॥**

सः सत्यपाशनिबद्धः इन्द्रः ह किल उवाच उक्तवान् । प्रतर्दनार्थमात्मानं वरं याचितवानित्यर्थः । अद्वैतोपक्रमे इन्द्रोक्तिमाह—मामेव अस्मत्प्रत्यये व्यवहारयोग्यमानन्दात्मानमेव, न त्वन्यं, विजानीहि अवगच्छ साक्षात्कुर्वित्यर्थः । एतदेव मज्ज्ञानमेव, न त्वन्यत्, अहं भवते वरस्य दाता याचिता च मनुष्याय हिततमं, व्याख्यातम् । मन्ये निश्चिन्वे । एतच्छब्दार्थमाह— यत् प्रसिद्धं वेदान्तेषु 'ब्रह्मविदाप्नोति परम्' इत्यादिना, मां उक्तमानन्दात्मानं विजानीयात् साक्षात्कुर्यादित्यर्थः । यन्मां विजानीयादेतदेव हिततमं मन्ये इत्यन्वयः ।

शंनन्द.

**[1]त्रिशीर्षाणं त्वाष्ट्रमहनम् । अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम् । बह्वीः संधा अतिक्रम्य दिवि प्रह्लादीयानतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां कालखाञ्जान् । तस्य मे तत्र नलोम च मा मीयते ॥**

ननु किं त्वद्विज्ञानेन, तव अन्यस्माद्यदि कश्चनातिशयो भवेत् तर्हि तद्धिततमं, न त्वन्यथा, इति शङ्कायां अद्वैतज्ञानं गुरुमातृवधप्रमुखपापोन्मूलकमित्याह— त्रिशीर्षाणं त्रिशीर्षं त्वाष्ट्रं त्वष्टुरपत्यं विश्वरूपं अहनं निपातितवान् । अरुन्मुखान्, रुत् शब्दः वेदाध्ययनं, तेन उपनिषदर्थविचारो ब्रह्ममीमांसापरपर्यायो लक्ष्यते । स येषां मुखे नास्ति तेऽरुन्मुखाः, तान् यतीन् प्रयत्नवतश्चतुर्थाश्रमिणः सालावृकेभ्यः, सालावृकाणामपत्यानि सालावृकाः, सालावृकेया इति यावत् । तेभ्यः, आरण्यश्वभ्य इत्यर्थः । प्रायच्छं प्रकर्षेण वज्रेण शतधा विभज्य दत्तवान् । अद्यापि च तेषां मस्तकविपाकाः करीरा दृश्यन्ते । बह्वीः भूयसीः स्वरूपतः संख्यातश्च, संधाः संधीनित्यर्थः । अतिक्रम्य त्यक्त्वा दिवि स्वर्गे प्रह्लादीयान् प्रह्लादिनः प्रह्लादेन नित्यसंबन्धिनः, अनेककोटिसंख्याकान् महामायान्

(१) क. स होवाच । ( तं हेन्द्र उवाच । ) यन्मां ( यो मां ).

(१) आटि. प्रह्लादीया ( प्रह्लादादीया ) कालखाञ्जान् ( कालकश्यान् ); क. महनम् ( महनत् ) अरुन्मुखान् ( अरुर्मुखान् ) प्रायच्छम् ( प्रायच्छन् ) प्रह्लादीयानतृण ( प्रह्लादीयामनृण ) पौलोमा ( पौलामा ) कालखाञ्जान् ( कालखञ्जान् ) नलोम च मा मीयते ( न लोम च नामीयत ); कटि. नतृण ( ननृण ); ब्रशंकर. सालावृकेभ्यः ( शालावृकेभ्यः ) नलोम च मा मीयते ( लोम च न मीयते ); रामानुज. ब्रशंकरवत्; निंबार्क. महनम् ( महन् ); विज्ञान. सालावृकेभ्यः ( शालावृकेभ्यः ) नलोम च मा मीयते ( लोमापि न मीयते ).

अनेकच्छिद्रघातिनोऽसुरान् प्रह्लादपरिचारकानित्यर्थः । अतृणं हिंसितवान् अहं आत्मज्ञानी इन्द्रः तुभ्यं वरस्य दाता । अन्तरिक्षे भुवर्लोके पौलोमान् पुलोमसंबन्धिनः असुरविशेषान् । बह्वीः संधा अतिक्रम्यातृणमित्यनुवर्तते, वक्ष्यमाणे च । पृथिव्यां भूलोके च कालखाञ्जान् कालखञ्जसंबन्धिनः असुरान् भूयसां परस्परसंबन्धस्यावश्यंभावित्वात् कालखञ्जा एव कालखाञ्जाः, तान्। ननु किं प्रकृते, इत्यत आह — तस्य गुरुब्राह्मणवधस्य कर्तुः संन्यासिनां च श्वभ्यो दातुः लोकत्रयेऽपि यज्ञादिसंपन्नमहामायासुरसंघस्योपसंहर्तुः आत्मज्ञानिनोऽन्येन मनसाऽपि कर्तुमशक्यं कुर्वतो मे मम इन्द्रस्य तवोपदेशकस्य तत्र तस्मिन्नतिक्रूरे कर्मणि क्रियमाणे ब्रह्मवधादिलक्षणे नलोम च मा मीयते, नलोमापि, अल्पोऽपि केश इत्यर्थः । मा मीयते न हिंस्यते उक्तेन केनचित्कर्मणा । अधिकारिशरीरवानिति त्रैलोक्यस्थापनायेदं कृतवानहमिति हृदयम् । शंनन्द.

**स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते । न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया । नास्य पापं चन चक्रुषो मुखान्नीलं वेतीति ॥ १ ॥**

नन्वेतद्भवत एव, न त्वस्मदादेरित्यत आह— सः मदन्यो मज्ज्ञानी प्रसिद्धः यः यः कश्चिद्देवो मनुष्यो वा मां आनन्दात्मानमिन्द्रं विजानीयात् अहमिन्द्रोऽस्मीति साक्षात्कुर्यात्, नास्य केन च कर्मणा लोको मीयते, अस्य मामानन्दात्मानं साक्षात्कुर्वतः केन च वक्ष्यमाणेन भ्रूणहत्यादिना कर्मणा पातकेन शास्त्रनिषिद्धेन व्यापारेण लोकः कृतस्य करिष्यमाणस्य च सुकृतस्य फलं उदर्के न मीयते न हिंस्यते । हिंसकानि कर्माण्येव दर्शयन्नाह —न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया । मातापितरौ प्रसिद्धौ । तयोर्वधो लोकद्वयभ्रंशहेतुः प्रत्येकं प्रसिद्धः । स्तेयं सुवर्णपरिमितसुवर्णस्य ततोऽप्यधिकस्य वा स्वामिनः परोक्षमादानं, तेन । भ्रूणः वेदस्य वेदयोर्वेदानां वा अधिगमेन अध्ययनेन सह वर्तमानो द्विजोत्तम इत्यर्थः । तस्य मनसा वाचा कर्मणा वाऽपराधशून्यस्य स्वहस्तादिना वधो भ्रूणहत्या, तया । कर्मसामान्यस्य विशेषोऽयमिति दर्शयितुं पर्यायचतुष्टयेऽपि नकारचतुष्टयम् । नास्य पापं चन चक्रुषो मुखान्नीलं वेतीति । किं बहुना, अस्य मदात्मज्ञानिनः पापं चन चक्रुषः पापमपि कर्तुमिच्छोः मुखात् वदनात् नीलं मुखकान्तिस्वरूपं नीलं नीलिमाश्रयस्वरूपं वा मुखात्कण्ठजिह्वावदनान्न वेति न व्येति नापगच्छति । इतिशब्दः प्रकृतब्रह्मज्ञानस्तुतिपरिसमाप्त्यर्थः ।

शंनन्द.

प्राणः प्रज्ञात्मा इन्द्रः 'आयुरमृतम्' इत्युपास्यः

**स होवाच । प्राणोऽस्मि प्रज्ञात्मा । तं मामायुरमृतमित्युपास्स्व ॥**

एवं ब्रह्मज्ञानं स्तुत्वा आत्मनो ब्रह्मणः स्वरूपं विवक्षुः स इन्द्रः ह किल उवाच उक्तवान् । प्राणः प्राणशब्दाभिधेयः प्राणोपाधिको वा अस्मि भवामि प्रज्ञात्मा बुद्धिवृत्तिप्रतिफलितः प्रज्ञानैकस्वभावः । तं प्राणप्रज्ञात्मस्वरूपं मां आनन्दात्मानमिन्द्रं आयुः सर्वप्राणिनां जीवनकारणं प्राणापानव्यतिरिक्तं प्राणापानयोराश्रयभूतं, अमृतं मरणशून्यं, षड्भावविकारशून्यमित्यर्थः । इति प्राणः प्रज्ञात्मा इन्द्रः आयुरमृतमस्मीत्यनेन रूपेण उपास्स्व यावदात्मसाक्षात्कारं विजातीयप्रत्ययशून्यसजातीयप्रत्ययप्रवाहं कुरु ।

शंनन्द.

---

(१) क. विजानीयान्नास्य ( वेद न ह वै तस्य ) न मातृवधेन.....हत्यया ( न स्तेयेन न भ्रूणहत्यया न मातृवधेन न पितृवधेन ) चक्रुषो ( चकुषो ) नीलं ( नीले ); अशंकर. विजानीयान्नास्य ( वेद न ह वै तस्य ) न मातृवधेन.....हत्यया ( न स्तेयेन न भ्रूणहत्यया...... ); श्रीकर. विजानीयान्नास्य ( वेद न ह वै तस्य ).

(१) कौउ. ३।२; अशंकर. १।१।२८, २९, ३०, ३१, १।३।८, ३।४।२४; भास्कर. १।१।२८—३१; रामानुज. १।१।२९—३२; निंबार्क. १।१।२९; श्रीकंठ. १।१।२९, ३१, ३२, ३।२।२४; श्रीकर. १।१।२९, ३०, ३१, ३२, १।३।८, ३।२।२४ मित्युपास्स्व ( मुपास्स्व ); वल्लभ. १।१।२७, २८ प्राणोऽस्मि प्रज्ञात्मा । तं ( प्राणो वा अहमस्मि प्रज्ञात्मानं ); विज्ञान. १।१।२८, २९, ३०, ३१ मित्युपास्स्व ( मुपास्स्व ); बलदेव. १।१।२८, ३०.

(१) उक्तं हेतुं विवृणोति---एकैकं रूपरसादिकम्। सर्वाण्येव निखिलान्येकैकमेवेत्यनेन संबध्यते। स्पष्टमन्यत्। एतानि वागादीनि करणानि प्रज्ञापयन्ति प्रकर्षेण निष्पादयन्ति। एकैकमेव प्रज्ञापयन्तीत्युक्ते शृङ्गग्राहिकयाऽऽह ---वाचं वदन्तीं वागिन्द्रियं स्वव्यापारं कुर्वत् सर्वे प्राणाः निखिलानीन्द्रियाणि राजानमिव वदन्तं सर्वे समागताः, अनु वदन्ति पश्चाद्वदनोपलक्षितं स्वं स्वं व्यापारं कुर्वन्ति अनुमोदन्ते वा, न त्वेकहेलया व्यापारं कुर्वन्तीत्यर्थः। यथा वाचो व्यापारे इतरेषां स्वव्यापाराद्रुपरमः तथा चक्षुःश्रोत्रमनःप्राणानां व्यापारेऽपीत्याह पर्यायचतुष्टयेन---चक्षुः पश्यत्सर्वे...... प्राणा अनु प्राणन्ति। स्पष्टम्। अनेन अनेकावधानान्येककाले सूच्यग्रेण शतपत्रसहस्रपत्रवेधनवदस्पष्टविभिन्नकालानि व्याख्येयानि। इतिः प्रतर्दनप्रश्नपरिसमाप्त्यर्थः। प्रतर्दनप्रश्नस्येन्द्रोऽङ्गीकारेणैवोत्तरमुक्तवानित्याह---एवमु इत्थमेव एकहेलया न सर्वे प्राणाः स्वस्वव्यापारवन्तः ह प्रसिद्धं सर्वजनीनानुभवेन एतत् एकहेलया सर्वेन्द्रियाणां स्वस्वव्यापाराकरणं, इति ह एवं किल इन्द्र उवाच। स्पष्टम्। ननु सर्वेषां तवोपाधित्वे समाने कः पक्षपातस्तव प्राणोऽस्मीत्यभिमाने इत्यत आह---अस्ति त्वेव। तुशब्दः शङ्कानिराकरणार्थः। प्राणो हि मम निःश्रेयसात्मन उपाधिर्निःश्रेयसरूपः। प्रसिद्धं तस्य निःश्रेयसं प्राणसंवादादौ। न च तदासीद्भविष्यति वा, किं त्वस्त्येव वर्तत एव, न तु कदाचिन्न वर्तते। प्राणानां प्राणस्य पञ्चवृत्तीनां निःश्रेयसं शरीरधारणोच्छ्वसनादिकम्। इतिः निःश्रेयसवर्तमानत्वप्रतिज्ञापरिसमाप्त्यर्थः।

शंनन्द.

(२) 'प्राणस्तथाऽनुगमात्' — अस्ति कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिका 'प्रतर्दनो ह वै दैवोदासि......' इत्यारभ्याऽऽम्नाता। तस्यां श्रूयते — 'स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति। तथा उत्तरत्रापि 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति। तथा 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि। अन्ते च 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्यादि। तत्र संशयः — किमिह प्राणशब्देन वायुमात्रमभिधीयते, उत देवतात्मा, उत जीवः, अथवा परं ब्रह्म इति। ननु 'अत एव प्राणः' (ब्रसू. १।१।२३) इत्यत्र वर्णितं प्राणशब्दस्य ब्रह्मपरत्वम्। इहापि च ब्रह्मलिङ्गमस्ति 'आनन्दोऽजरोऽमृतः' इत्यादि। कथमिह पुनः संशयः संभवति। अनेकलिङ्गदर्शनादिति ब्रूमः। न केवलमिह ब्रह्मलिङ्गमेवोपलभ्यते। सन्ति हीतरलिङ्गान्यपि। 'मामेव विजानीहि' इतीन्द्रस्य वचनं देवतात्मलिङ्गम्। 'इदं शरीरं परिगृह्योत्थापयति' इति प्राणलिङ्गम्। 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि जीवलिङ्गम्। अत उपपन्नः संशयः। तत्र प्रसिद्धेर्वायुः प्राण इति प्राप्ते उच्यते — प्राणशब्दं ब्रह्म विज्ञेयम्। कुतः। तथाऽनुगमात्। तथा हि — पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादनपर उपलभ्यते। उपक्रमे तावत् 'वरं वृणीष्व' इतीन्द्रेणोक्तः प्रतर्दनः परमं पुरुषार्थं वरमुपचिक्षेप — 'त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। न हि अन्यत्र परमात्मज्ञानात् हिततमप्राप्तिरस्ति। 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेउ. ३।८) इत्यादिश्रुतिभ्यः। तथा 'स यो मां वेद न ह वै तस्य केन चन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया' इत्यादि च ब्रह्मपरिग्रहे घटते। ब्रह्मविज्ञानेन हि सर्वकर्मक्षयः प्रसिद्धः 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मुउ. २।२।८) इत्याद्यासु श्रुतिषु। प्रज्ञात्मत्वं च ब्रह्मपक्षे एवोपपद्यते। न ह्यचेतनस्य वायोः प्रज्ञात्मत्वं संभवति। तथा उपसंहारेऽपि 'आनन्दोऽजरोऽमृतः' इत्यानन्दत्वादीनि न ब्रह्मणोऽन्यत्र सम्यक् संभवन्ति। 'स न साधुना कर्मणा भूयान्भवति नो एवासाधुना कर्मणा कनीयानेष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते' इति, 'एष लोकाधिपतिरेष लोकेशः' इति च सर्वमेतत्

परस्मिन्ब्रह्मण्याश्रीयमाणे अनुगन्तुं शक्यते, न मुख्ये प्राणे। तस्मात् प्राणो ब्रह्म। १।१।२८

'न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्' — यदुक्तं प्राणो ब्रह्मेति तदाक्षिप्यते। न परं ब्रह्म प्राणशब्दम्। कस्मात्। वक्तुरात्मोपदेशात्। वक्ता हि इन्द्रो नाम कश्चिद्विग्रहवान् देवताविशेषः स्वमात्मानं प्रतर्दनायाऽऽचचक्षे— 'मामेव विजानीहि' इत्युपक्रम्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्यहंकारवादेन। स एव वक्तुरात्मत्वेनोपदिश्यमानः प्राणः कथं ब्रह्म स्यात्। न हि ब्रह्मणो वक्तृत्वं संभवति। 'अवागमनाः' (बृउ. ३।८।८) इत्यादिश्रुतिभ्यः। तथा विग्रहसंबन्धिभिरेव ब्रह्मण्यसंभवद्भिर्धर्मैरात्मानं तुष्टाव— 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छम्' इत्येवमादिभिः। प्राणत्वं चेन्द्रस्य बलवत्त्वादुपपद्यते। 'प्राणो वै बलम्' (बृउ. ५।१४।४) इति हि विज्ञायते। बलस्य चेन्द्रो देवता प्रसिद्धा। या च काचिद्बलकृतिः इन्द्रकर्मैव तदिति हि वदन्ति। प्रज्ञात्मत्वमपि अप्रतिहतज्ञानत्वाद्देवतात्मनः संभवति। अप्रतिहतज्ञाना देवता इति हि वदन्ति। निश्चिते चैवं देवतात्मोपदेशे हिततमत्वादिवचनानि यथासंभवं तद्विषयाण्येव योजयितव्यानि। तस्मात् वक्तुरिन्द्रस्यात्मोपदेशात् न प्राणो ब्रह्मेत्याक्षिप्य प्रतिसमाधीयते— अध्यात्मसंबन्धभूमा ह्यस्मिन्निति। अध्यात्मसंबन्धः प्रत्यगात्मसंबन्धः, तस्य भूमा बाहुल्यं अस्मिन्नध्याये उपलभ्यते। 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति प्राणस्यैव प्रज्ञात्मनः प्रत्यग्भूतस्य आयुष्प्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति, न देवताविशेषस्य पराचीनस्य। तथा अस्तित्वे च प्राणानां निःश्रेयसमिति अध्यात्ममेवेन्द्रियाश्रयं प्राणं दर्शयति। तथा 'प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इति। 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इति चोपक्रम्य 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः। स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इति विषयेन्द्रियव्यवहारारनाभिभूतं प्रत्यगात्मानमेवोपसंहरति। 'स म आत्मेति विद्यात्' इति चोपसंहारः प्रत्यगात्मपरिग्रहे साधुः, न पराचीनपरिग्रहे। 'अयमात्मा ब्रह्म सर्वानुभूः' (बृउ. २।५।१९) इति च श्रुत्यन्तरम्। तस्मादध्यात्मसंबन्धबाहुल्यात् ब्रह्मोपदेश एवायं, न देवतात्मोपदेशः। १।१।२९

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' — कथं तर्हि वक्तुरात्मोपदेशः। इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेन अहमेव परं ब्रह्म इत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन् उपदिशति स्म — 'मामेव विजानीहि' इति। यथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' इति, तद्वत्। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' (बृउ. १।४।१०) इति श्रुतेः। यत्पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत् परिहर्तव्यम्। अत्रोच्यते। न त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासः यस्मादेवंकर्माऽहं तस्मान्मां विजानीहि इति। कथं तर्हि। विज्ञानस्तुत्यर्थत्वेन। यत्कारणं त्वाष्ट्रवधादीनि साहसान्युपन्यस्य परेण विज्ञानस्तुतिमनुसंदधाति— 'तस्य मे तत्र लोम च न मीयते। स यो मां वेद न ह वै तस्य केन च कर्मणा लोको मीयते' इत्यादिना। एतदुक्तं भवति— यस्मादीदृशान्यपि क्रूराणि कर्माणि कृतवतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते, स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्मणा लोको हिंस्यते इति। विज्ञेयं तु ब्रह्मैव 'प्राणोऽस्मि प्रज्ञात्मा' इति वक्ष्यमाणम्। तस्मात् ब्रह्मवाक्यमेतत्। १।१।३०

'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' — यद्यपि अध्यात्मसंबन्धभूमदर्शनान्न पराचीनस्य देवतात्मन उपदेशः तथाऽपि न ब्रह्मवाक्यं भवितुमर्हति। कुतः। जीवलिङ्गात् मुख्यप्राणलिङ्गाच्च। जीवस्य तावदस्मिन्वाक्ये विस्पष्टं लिङ्गमुपलभ्यते — 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इत्यादि। अत्र हि वागादिभिः करणैर्व्यापृतस्य कार्यकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते। तथा मुख्यप्राणलिङ्गमपि — 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं

रिगृह्योत्थापयति ' इति । शरीरधारणं च मुख्यप्राणस्य धर्मः प्राणसंवादे वागादीन् प्राणान्प्रकृत्य ' तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि ' ( प्रउ. २।३ ) इति श्रवणात् । ये तु 'इमं शरीरं परिगृह्य' इति पठन्ति, तेषामिमं जीवमिन्द्रियग्रामं वा परिगृह्य शरीरमुत्थापयतीति व्याख्येयम् । प्रज्ञात्मत्वमपि जीवे तावच्चेतनत्वादुपपन्नम् । मुख्येऽपि प्राणे प्रज्ञासाधनप्राणान्तराश्रयत्वादुपपन्नमेव । जीवमुख्यप्राणपरिग्रहे च प्राणप्रज्ञात्मनोः सहवृत्तित्वेनाभेदनिर्देशः स्वरूपेण च भेदनिर्देश इत्युभयथा निर्देश उपपद्यते ' यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः । सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः ' इति । ब्रह्मपरिग्रहे तु किं कस्माद्भिद्येत । तस्मादिह जीवमुख्यप्राणयोरन्यतरः उभौ वा प्रतीयेयातां, न ब्रह्म, इति चेत् । नैतदेवं, उपासात्रैविध्यात् । एवं सति त्रिविधमुपासनं प्रसज्येत जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । न चैतदेकस्मिन्वाक्ये अभ्युपगन्तुं युक्तम् । उपक्रमोपसंहाराभ्यां हि वाक्यैकत्वमवगम्यते । ' मामेव विजानीहि ' इत्युपक्रम्य ' प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व ' इत्युक्त्वा अन्ते ' स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः ' इत्येकरूपौ उपक्रमोपसंहारौ दृश्येते । तत्र अर्थैकत्वं युक्तमाश्रयितुम् । न च ब्रह्मलिङ्गमन्यपरत्वेन परिणेतुं शक्यम् । दशानां भूतमात्राणां प्रज्ञामात्राणां च ब्रह्मणोऽन्यत्र अर्पणानुपपत्तेः । आश्रितत्वाच्च अन्यत्रापि ब्रह्मलिङ्गवशात्प्राणशब्दस्य ब्रह्मणि प्रवृत्तेः । इहापि च हिततमोपन्यासादिब्रह्मलिङ्गयोगात् ब्रह्मोपदेश एवायमिति गम्यते । यत्तु मुख्यप्राणलिङ्गं दर्शितं ' इदं शरीरं परिगृह्योत्थापयति ' इति । तदसत् । प्राणव्यापारस्यापि परमात्मायत्तत्वात् परमात्मन्युपचरितुं शक्यत्वात् । ' न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ' ( काउ. २।५।५ ) इति श्रुतेः । यदपि ' न वाचं विजिज्ञासीत वक्तारं विद्यात् ' इत्यादि जीवलिङ्गं दर्शितं, तदपि न ब्रह्मपक्षं निवारयति । न हि जीवो नाम अत्यन्तभिन्नो ब्रह्मणः, ' तत्त्वमसि ' ' अहं ब्रह्मास्मि ' इत्यादिश्रुतिभ्यः । बुद्ध्याद्युपाधिकृतं तु विशेषमाश्रित्य ब्रह्मैव सन् जीवः कर्ता भोक्ता चेत्युच्यते । तस्योपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं ' न वाचं विजिज्ञासीत वक्तारं विद्यात् ' इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते । ' यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ' ( केउ. १।४ ) इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्यापृतस्यैवात्मनो ब्रह्मत्वं दर्शयति । यत्पुनरेतदुक्तं ' सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः ' इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादे नोपपद्यते इति, नैष दोषः । ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः । उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेदः इत्यतः ' प्राण एव प्रज्ञात्मा ' इत्येकीकरणमविरुद्धम् । + अथवा ' नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ' इत्यस्यायमन्योऽर्थः — न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते । कथम् । उपासात्रैविध्यात् । त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च । तत्र ' आयुरमृतमित्युपास्स्व । आयुः प्राणः ' इति, ' इदं शरीरं परिगृह्योत्थापयति ' इति, ' तस्मादेतदेवोक्थमुपासीत' इति च प्राणधर्मः । अथ ' यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः ' इत्युपक्रम्य ' वागेवास्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा ' ' प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति ' इत्यादिः प्रज्ञाधर्मः । ' ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम् । यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः । यद्धि प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः । न ह्यन्यतरतो रूपं किंचन सिध्येत् । नो एतन्नाना । तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्राण एव प्रज्ञात्मा ' इत्यादिर्ब्रह्मधर्मः । तस्माद्ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम् । अन्यत्रापि ' मनोमयः प्राणशरीरः ' ( छाउ. ३।१४।२ ) इत्यादौ उपाधिधर्मेण ब्रह्मण उपासनमाश्रितम् । इहापि तद्युज्यते,

( ४ ) 'प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात्' — अविच्छिन्नानुध्यानसंराधनेन येषां ब्रह्म प्रकाशते तेषां तेन ब्रह्मदर्शनेन विषयीकरणे तज्ज्ञानानन्दादेर्जगदैश्वर्यस्य च वैशेष्यं नास्ति । तथा हि दृश्यते 'अहं मनुरभवं सूर्यश्च' 'तं मामायुरमृतमित्युपास्स्व' इत्यादिषु ब्रह्मोपासकानां तेन भावनैक्येन तदसाधारणगुणप्राप्तिः । 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इत्यादिषु हि कृष्णादीनां तदैक्यभावनया तदैश्वर्यप्रकाशनं दृश्यते, ब्रह्मभावनाभ्यासेन च विश्वामित्रागस्त्यादीनां स्वर्गान्तरकरणजलधिकवलनादिसामर्थ्यं, लोके च मन्त्रिणां गरुडभावनया गरुडासाधारणधर्मप्राप्तिः । तस्मात् ब्रह्माहन्तायाः प्रौढभावे सति ब्रह्मासाधारणधर्मांशवैशिष्ट्यं उपासकानामसाधारणमित्यनवद्यम् । * श्रीकंठ. ३।२।२४

( ५ ) प्राणशब्देन परशिवकलाधिष्ठितस्थूलशरीरावच्छिन्नबाह्यप्राणलिङ्गमेवोपदिश्यते, न सर्वव्यापकपूर्णब्रह्मपरत्वम् । उत्तरवाक्ये 'यावदस्मिन् शरीरे प्राणो वसति तावदायुः' इति आयुःसामानाधिकरण्यव्यपदेशात् । १।१।२९

'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतम्' इति, 'यावदस्मिन् शरीरे प्राणो वसति तावदायुः' इति, 'प्राणो वै बलम्' इत्यादिवाक्येषु स्थूलशरीरावच्छिन्नपरिच्छिन्नजीवमुख्यप्राणलिङ्गस्यैवात्रोपदेशात् जगदुभयकारणसर्वव्यापकपरशिवोपासनं नेति चेन्न । इष्टापत्तेः । कुतः । उपासनात्रैविध्यात् इष्टप्राणभावसंज्ञकपरशिवब्रह्मोपासनात्रैविध्यस्याङ्गीकृतत्वात् । इह अस्मिन्वाक्ये तद्योगात् । उपासनात्रयस्य स्थूलारुन्धतीन्यायेन प्रत्यगभिन्नपरिपूर्णषट्स्थलपरशिवसाक्षात्कारसाधनत्वेन आश्रितत्वात्, उपयुक्तत्वादित्यर्थः। उपक्रमवाक्ये 'प्राणोऽस्मि०' इत्यादिना स्थूलशरीरावच्छिन्नमुख्येष्टलिङ्गधर्मबाहुल्यादिष्टलिङ्गोपासनं, मध्ये 'एष एव साधु कर्म कारयति' इति सर्वकर्मकारयितृत्वादिप्राणलिङ्गधर्मबाहुल्यात्प्राणलिङ्गोपासनं, उपसंहारे 'रथस्यारेषु नेमिरर्पिता०' इत्यादिना भावलिङ्गधर्मभूयस्त्वाद्भावलिङ्गोपासनं च विधीयते । परमशिवादन्यपरत्वे पूर्वापरमध्यवाक्यपरामर्शविरोधप्रसङ्गः । तस्मान्नान्यार्थो युक्तः । अत्र केचित् उपासात्रैविध्यात् इत्यत्र प्राणजीवनिर्विशेषब्रह्मोपासनापरत्वमिति वदन्ति । ......तथाऽपि जीवप्राणनिर्विशेषोपासनात्रैविध्यमत्र न घटते, सविशेषब्रह्मप्रकरणत्वात् । ......किंच 'नोपास्यौ प्रकृतिजीवौ' इत्यादौ जीवाद्युपासनस्य निरस्तत्वात्, निर्विशेषब्रह्मणः उपासनाऽसंभवात् सविशेषपरशिवब्रह्मोपासनपरमेव त्रिविधोपासनमिति निर्णीयते । ......'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' (केउ.१।४) 'एष एव साधु कर्म कारयति' इत्यादौ वागादिव्यावृत्तशरीरस्य ब्रह्माधीनत्वेन धारणार्चनार्पणात्मकोपासनार्हत्वेन सकलाभीष्टप्रदायकत्वेन च जीवमुख्यत्वं स्वेष्टलिङ्गस्यैव विधीयते । जीवमुख्येष्टशब्दयोर्घटकुम्भकलशशब्दादिवत्पर्यायत्वम् ।

श्रीकर. १।१।३२

( ६ ) अत्र 'शास्त्रदृष्ट्या' इत्याद्युक्तसूत्रे जीवब्रह्मणोराकाशवदखण्डता आचार्यसंमता न भवतीत्यवधारणीयम् । अखण्डत्वे हि जीवधर्मोऽपि ब्रह्मधर्म एवेत्युपासाद्वैविध्यमेव स्यात्, तथा पूर्वपक्षोऽपि जीवलिङ्गेन न स्यात्, यदीन्द्रस्य 'मामुपास्स्व' इत्युक्तिः 'शास्त्रदृष्ट्या' इत्यादिसूत्रेण अखण्डतया समाहिता स्यात् तदा तुल्यन्यायतया इतरस्य जीवधर्मस्यापि समाधाने सिद्धे पुनर्जीवलिङ्गानुदयादिति । * विज्ञान १।१।३१

वागादिभ्यः प्राणः श्रेयान्, स उक्थमित्युपास्यः, प्राणप्रज्ञयोरेकता

[1]जीवति वागपेतः । मूकान्हि पश्यामः । जीवति चक्षुरपेतः । अन्धान्हि पश्यामः । जीवति श्रोत्रापेतः । बधिरान्हि पश्यामः । जीवति

* रामानुजवत् ।

* शेषं ब्रशंकरवत् । उपासात्रैविध्यं वृत्तिकारानुसारि ।

(१) कौउ. ३।३; ब्रशंकर. १।१।१०, २३, २८, २९, ३१, १।३।३०; भास्कर. १।१।१०, २८, २९, ३१; रामानुज. १।१।१०, ३२, १।२।१; निंबार्क. १।१।३२; श्रीकर. १।१।१०, ११, २४, २९, ३२, १।३।३०, २।४।९, ३।३।११, ३।४।२८; वल्लभ. १।१।३०; विज्ञान १।१।२८, २।४।११, ३।३।३७; बलदेव. १।१।२८, ३० २।३।२९.

मनोपेतः । बालान्हि पश्यामः । जीवति बाहुच्छिन्नः । जीवत्यूरुच्छिन्न इति । एवं हि पश्याम इति ॥

जीवति वागपेतः ...... बालान्हि पश्यामः । स्पष्टम् । वाक्चक्षुःश्रोत्रमनोभिरपेतः रहितो जीवतीति प्रतिज्ञा । अत्र हेतुः मूकान्धबधिराणां च दर्शनम् । अयमर्थः — इन्द्रियाणां कार्यैकगम्यत्वात्कार्याभावे तदभाव इति च । जीवति बाहुच्छिन्नः । जीवत्यूरुच्छिन्नः । स्पष्टम् । पर्यायद्वयेन हस्तपादरहितस्य जीवनमुच्यते । इतिः प्रकृतपर्यायपरिसमाप्त्यर्थः । एकहेलयोभयत्र हेतुमाह — एवं हि पश्यामः । हि यस्मात् एवं छिन्नहस्तपादानां जीवनं पश्यामः अवलोकयामः । न च दृष्टेऽनुपपन्नं नामेत्यर्थः । इति अनेन प्रकारेण अङ्गीकृत्य इति हेन्द्र उवाचेत्यन्वयः । अथवा आद्य इतिशब्दोऽङ्गीकारार्थः अन्यस्तु प्रकारार्थ इति ।

शंनन्द.

अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति । तस्मादेतदेवोक्थमुपासीत[1] ॥

एतन्निःश्रेयसमस्त्येवेत्यस्मिन्नर्थे उपपत्तिर्मृग्येत्याह — अथ यस्मात् खलु निश्चितं, सर्वप्रत्यक्षमिति यावत् । प्राण एव प्रज्ञात्मा क्रियाशक्त्युपाधिक एव ज्ञानशक्त्युपाधिकः, न त्वन्यः, इदं प्रत्यक्षं शरीरं देहं परिगृह्य अहं ममेति वा स्वीकृत्य उत्थापयति शयनासनादिभ्य ऊर्ध्वं नयति । इदानीं प्रसङ्गादुपासनान्तरं श्रुत्यन्तरप्रसिद्धं प्राणे स्मारयति । तस्मात् यत इदं शरीरमुत्थापयति प्राणस्ततः एतदेव उत्थापनहेतुभूतमेव, नान्यत्, उक्थं उक्थशब्दाभिधेयं उपासीत, व्याख्यातम् ।

शंनन्द.

यो वै प्राणः सा प्रज्ञा । या वा प्रज्ञा स प्राणः । सह ह्येतावस्मिन् शरीरे वसतः । सहोत्क्रामतः[2] ॥

(१) आटि. मुपासीत + ( सैषा प्राणे सर्वाप्तिः ); क. मुपासीत + ( इति सैषा प्राणे सर्वाप्तिः ); ब्रशंकर. इमं शरीरं परिगृह्य इत्यपि पाठः.

(२) आटि. सहोत्का ( सहोत्क ); क ( सह ह्येता .... त्कामतः० ).



ननु यदि प्राण उक्थत्वेनोपास्यः तर्हि पञ्चवृत्तिमात्रं विवक्षितं न परमात्मा इत्यत आह — यो वै प्राणः य एवात्र प्राणशब्दाभिधेयः सा प्रसिद्धा प्रज्ञा सर्वबोधसाक्षिणी संवित् । या वा या वै प्रज्ञा उक्ता सः प्रसिद्धः प्राणः प्राणोपाधिकः परमात्मा । ननु कस्मादेतदेकमेव तवोपाधिभूतमित्यत आह — सह मिलित्वा हि यस्मात् एतौ प्रज्ञाप्राणौ अस्मिन् शरीरे । स्पष्टम् । वसतः निवासं कुरुतः । जीवेन सह मिलित्वा उत्क्रामतः अस्माच्छरीरादुत्क्रमणं कुरुतः मरणे । पाठान्तरे यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः ( तस्य ) इति ।

शंनन्द.

वागादीनां सुषुप्तौ मृत्युकाले च प्राणेऽप्ययः

तस्यैषैव दृष्टिः । एतद्विज्ञानम् । यत्रैतत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यति । अथास्मिन्प्राण एवैकधा भवति । तदैनं वाक्सर्वैर्नामभिः सहाप्येति । चक्षुः सर्वैं रूपैः सहाप्येति । श्रोत्रं सर्वैः शब्दैः सहाप्येति । मनः सर्वैर्ध्यानैः[1] सहाप्येति ॥

तस्य प्राणोपाधिकस्य एषैव इत्थमेव वक्ष्यमाणा दृष्टिः दर्शनापरपर्याया अवगतिः । अस्यामवस्थायां प्राणशब्दाभिधेयोऽवगन्तव्य इत्यर्थः । एषैव दृष्टिरिति व्याकरोति — एतद्विज्ञानम् । यदेतत्सुषुप्तं तदेवाऽऽत्मनः प्राणत्वविज्ञप्तिकारणम् । एतच्छब्दार्थमाह—यत्र यस्यामवस्थायां एतत् सर्वविशेषबोधशून्यं यथा स्यात्तथा पुरुषः वस्तुतः परिपूर्णोऽपि पुरिशयः सुप्तः शयनमधिगतः स्वप्नं जाग्रद्वासनारूपं पदार्थजातं न कंचन पश्यति कमपि नावलोकयति, अथ तदा स्वप्नावलोकनकाले अस्मिन् मुख्यादिसंचारिणि तिरस्कृतज्ञानशक्तौ प्राणे एव क्रियाशक्तावेव, न त्वन्यत्र, एकधा भवति एकत्वं गच्छति । प्राणोपाधिकः प्राणशब्दार्हः पुरुषो भवतीत्यर्थः । ननु तदा वागादीनि करणानि क्व यान्तीत्यत आह—तदा तस्मिन् प्राणे

(१) आटि ध्यानैः ( ध्यातैः ); क. तदैनं ( तदेनं ); ब्रशंकर. यत्रैतत्पुरुषः सुप्तः ( यदा सुप्तः ); रामानुज. यत्रैतत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यति ( यदा सुषुप्तः स्वप्नं न कथंचन पश्यति ); श्रीकर. यत्रैतत्पुरुषः सुप्तः ( यदा सुप्तः ).

एकधाभवनकाले एनं प्राणोपाधिकमात्मानम्। वाक्चक्षुः-श्रोत्रमनांसि सविषयाणि लयं गच्छन्तीति पर्यायचतुष्टयेनाऽऽह — वाक्सर्वैर्नामभिः .... सर्वैर्ध्यानैः सहाप्येति। स्पष्टम्। शंनन्द.

स यदा प्रतिबुध्यते। यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते। प्राणेभ्यो देवाः। देवेभ्यो लोकाः॥

ननु प्राणे लीनानां तेषां समुद्रे इव सरितां कुतः पुनरुत्पत्तिरित्यत आह — सः प्राणोपाधिकः पुरुषः यदा यस्मिन्काले प्रतिबुध्यते जागरणं गच्छति। जागरणावसरे एतस्मादुत्पत्तौ दृष्टान्तमाह — यथा दृष्टान्ते अग्नेः जातवेदसः ज्वलतः जाज्वल्यमानात् सर्वा दिशो विस्फुलिङ्गाः क्षुद्रा अग्निकणाः विप्रतिष्ठेरन् विविधासु दिक्षु निर्गच्छन्ति, एवमेव अनेनैव प्रकारेण, न त्वन्यथा, एतस्मात् प्राणोपाधिकात् आत्मनः आनन्दात्मनः प्राणाः वागादयः यथायतनं यस्य यादृशं स्थानं जिह्वादि तदुद्दिश्य विप्रतिष्ठन्ते विविधं निर्गच्छन्ति। प्राणेभ्यो देवा अग्न्यादयः विप्रतिष्ठन्ते। एतदनुवर्ततेऽत्र वक्ष्यमाणे च। देवेभ्यः अग्न्यादिभ्यः लोकाः नामादयो विषयाः। शंनन्द.

तस्यैषैव सिद्धिः। एतद्विज्ञानम्। यत्रैतत्पुरुष आर्तो मरिष्यन्नाबल्यं न्येत्य संमोहं न्येति। तदाहुः। उदक्रमीच्चित्तम्। न शृणोति। न पश्यति। न वाचा वदति। न ध्यायति (इति)। अथास्मिन् प्राण एवैकधा भवति। तदेनं वाक्सर्वैर्नामभिः सहाप्येति। चक्षुः सर्वैः रूपैः सहाप्येति। श्रोत्रं सर्वैः शब्दैः सहाप्येति। मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते। प्राणेभ्यो देवाः। देवेभ्यो लोकाः॥ ३॥

(१) जीवतः प्राणोपाधिकत्वमुक्त्वा मरणेऽपि प्राणोपाधिकत्वमाह— तस्य प्राणोपाधिकस्य एषैव मरणावस्थारूपैव, न त्वन्या, सिद्धिः प्रसिद्धिः प्राणत्वे। एषैव सिद्धिरिति व्याकरोति — एतत् मरणं सर्वप्रत्यक्षं विज्ञानं विज्ञायते अनेनेति विज्ञानं, प्रमाणमिति यावत्। एतच्छब्दोक्तं मरणमाह — यत्र यस्यामवस्थायां एतत्पुरुषः अयं पुमान् प्रत्यक्षो मनुष्यत्वाद्यभिमानी आर्तः जराव्याध्यादीनां वश्यत्वं प्राप्तः मरिष्यन् मरणं करिष्यन्, आसन्नमरण इत्यर्थः। आबल्यं, अबलस्य दुर्बलस्य भावः आबल्यं, हस्तपादाद्यवश्यत्वमित्यर्थः। न्येत्य नितरामागत्य संमोहं बन्ध्वाद्यपरिज्ञानलक्षणं न्येति नितरामागच्छति। तदाहुः समीपस्थाः कथयन्ति। समीपस्थोक्तिमाह—उदक्रमीत् उत्क्रमणमकरोत् चित्तं मनः। चित्तोत्क्रमणे लिङ्गान्याहुः—न शृणोति...न ध्यायति। स्पष्टम्। इति अनेन प्रकारेणाऽऽहुरित्यन्वयः। अथास्मिन्प्राण ... देवेभ्यो लोकाः। अथ तदा अस्मिन् मरणकाले। प्रतिबुध्यते उत्पद्यते शरीरान्तरग्रहणं करोति, तस्मिन्नपि शरीरे मोहाद्विमुक्तो भवतीत्यर्थः। व्याख्यातमन्यत्। शंनन्द.

(२) ननु सहापि विषयैरिन्द्रियाणां स्वापप्रबोधयोः प्राणे अप्ययं प्राणाच्च प्रभवं शृणुमः— 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदेनं वाक्सर्वैर्नामभिः सहाप्येति' इति। तत्रापि तल्लिङ्गात्प्राणशब्दं ब्रह्मैव। ब्रशंकर. १।१।२३

(३) नन्वेवं चक्षुरादिभिः सह पाठेन प्राणस्य आहंकारिकत्वमपि स्यात्। तथा च करणजन्यत्वेन ज्येष्ठत्वश्रेष्ठत्वहानिः, इत्याशङ्क्याऽऽह — 'अकरणत्वाच्च न दोषस्तथा हि दर्शयति'। चशब्दात् अभूतत्वाच्च इत्यवगन्तव्यम्। तथा च अकरणत्वात्

---

(१) क. देवेभ्यो लोकाः + ( स एष प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति। तस्मादेतदेवोक्थमुपासीतेति। सैषा प्राणे सर्वाप्तिः। यो वै प्राणः सा प्रज्ञा। या वा प्रज्ञा स प्राणः ); भास्कर. दात्मनः प्राणा ( दात्मनः सर्वे प्राणा ); रामानुज. एतस्मादात्मनः ( तस्माद्वा एतस्मादात्मनः ); श्रीकर. भास्करवत्.

(२) आदि. ध्यानैः ( ध्यातैः ); क. नाबल्यं नेत्य संमोहं न्येति। तदाहुः ( नाबल्यमेत्य संमोहमेति। तमाहुः ) ( स यदा प्रतिबुध्यते ... देवेभ्यो लोकाः० ).

अभूतत्वाच्च नाहंकारजन्य इति न ज्येष्ठत्वश्रेष्ठत्वयोर्हानिरित्यर्थः ।

करणं हि परिच्छिन्नविषयकमेव राजादीनां दृश्यते, अमात्यत्वमेव तु अपरिच्छिन्नविषयकमिति प्राणस्य च बुद्ध्यादिसकलसंघातधारणादिलक्षणोऽसाधारणो व्यापार इति मन्तव्यं, 'प्राण एव प्रज्ञात्मेदं०' इति श्रुतेः। नन्वेवं प्राणस्य किं कारणमिति चेत्, प्रकृतिरेव। महत्तत्त्वं ह्येकमेव प्रकृतेरुत्पद्यमानं ज्ञानक्रियाशक्तिभ्यां बुद्धिप्राणशब्दाभ्यामभिलप्यते इति स्मृतिष्ववधारितं, 'यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः' इत्यादिश्रुतिषु च । अत एव महत्तत्त्वसृष्टेः पृथक् प्राणसृष्टिः श्रुतिस्मृतिषु प्रायशो न श्रूयते । आचार्यस्तु नित्यत्वादिशङ्कानिरासार्थं मनस इव प्राणस्यापि वृत्तिभेदेन पृथगुत्पत्तिमुक्तवान् । अत एव सांख्यशास्त्रं — 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' इति । अस्यार्थः— सामान्यं सर्वकार्यसाधारणं यत्करणं महत्तत्त्वं, तस्यैव वृत्तिभेदा प्राणापानादयः पञ्च । ते च वायुदेवताकत्वात् वायुतुल्यसंचाराद्वा वायव इति।

२।४।११

इतरद्वस्तु इतरेण श्रुतयः सर्वा विशिंषन्ति। यथा 'यो वै प्राणः सा प्रज्ञा' 'सह ह्येतावस्मिन्०' इति ।

विज्ञान. ३।३।३७

शरीरादुत्क्रमणं प्राणस्य वागादिभिः सह

**स[1] यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति । वागस्मात्सर्वाणि नामान्यभिविसृजते । वाचा सर्वाणि नामान्याप्नोति । प्राणोऽस्मात्सर्वान्गन्धानभिविसृजते । प्राणेन सर्वान्गन्धानाप्नोति । चक्षुरस्मात्सर्वाणि रूपाण्यभिविसृजते । चक्षुषा सर्वाणि रूपाण्याप्नोति । श्रोत्रमस्मात्सर्वान् शब्दानभिविसृजते । श्रोत्रेण सर्वान् शब्दानाप्नोति । मनोऽस्मात्सर्वाणि ध्यानान्यभिविसृजते । मनसा सर्वाणि ध्यानान्याप्नोति । सैषा प्राणे सर्वाप्तिः । यो वै प्राणः सा प्रज्ञा । या वा प्रज्ञा स प्राणः । सह ह्येतावस्मिन् शरीरे वसतः । सहोत्क्रामतः । अथ खलु यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः ॥ ४ ॥**

एवं मरणकाले मूर्छामिन्द्रियाणां लयमभिधाय शरीरादुत्क्रमणे तस्मिन्नेव लये विशेषमाह—सः मुमूर्षुः यदा यस्मिन्काले अस्मात् प्रत्यक्षात् शरीरात् शीर्णावयवाद्देहात् उत्क्रामति ऊर्ध्वं गच्छति सहैवैतैः सर्वैरुत्क्रामति । वाक् वागिन्द्रियं अस्मात् स्वामिनः सर्वाणि निखिलानि नामानि स्वविषयभूतानि अभिविसृजते सर्वतः परित्यजति, स्वविषयव्यापारात्सर्वथोपरमं प्राप्य पुनर्भोगं न प्रयच्छतीत्यर्थः। ननु यदि वाक् नामान्यभिविसृजतेऽस्मात्, तर्ह्यन्येन तत्प्राप्तिरस्त्वित्यत आह — वाचा सर्वाणि नामान्याप्नोति । स्पष्टम् । अथवा नाम्नां परित्यागं चेद्वाक् करोति, तथा च स्वयं प्राणे विलीना स्वविषयरहिता स्यादित्यत आह — वाचेत्यादि । अयमर्थः — न वाङ्मात्रं प्रलीयते प्राणे, किंतु प्राणो वाचा सह सर्वाणि नामान्याप्नोति, वाङ्न स्वविषयरहिता प्राणे प्रलीयते इति । यथा वाक् तथा प्राणचक्षुःश्रोत्रमनांसीति पर्यायचतुष्टयेनाऽऽह—प्राणोऽस्मात् ... ध्यानान्याप्नोति । वाक्पर्यायवत्प्राणचक्षुःश्रोत्रमनःपर्यायाः सविषया व्याख्येयाः । सा प्रसिद्धा एषा स यदेत्यादिनोक्ता प्राणे प्राणोपाधिके आत्मनि सर्वाप्तिः विषयेन्द्रियादिलक्षणस्य सर्वस्य प्राप्तिः। न चायं प्राणः पञ्चवृत्तिमात्रं, किंतु क्रियाज्ञानशक्त्युपाधिक आत्मेत्येतमुक्तमर्थं स्मारयति — यो वै प्राणः ... सहोत्क्रामतः । व्याख्यातम् । ननु प्राणे

---

(१) कौउ. ३।४; आटि. प्राणोऽस्मात्० चक्षुरस्मात्० श्रोत्रमस्मात् ( चक्षुरस्मात्० प्राणोऽस्मात्० श्रोत्रमस्मात् ) प्राणोऽस्मात्सर्वान् ( प्राण एवास्मिन्सर्वान् ) श्रोत्रमस्मात्सर्वान् ( श्रोत्रमेवास्मिन्सर्वान् ) त्क्रामतः + ( इति ) भूतान्येकं ( भूतान्येकी ); क. वागस्मात् ( वागेवास्मिन् ) विसृजते ( विसृज्यन्ते ) प्राणोऽस्मात्सर्वान्गन्धानभि ( प्राण एवास्मिन्सर्वे गन्धा अभि ) चक्षुरस्मात् ( चक्षुरेवास्मिन् ) श्रोत्रमस्मात्सर्वान् शब्दानभि ( श्रोत्रमेवास्मिन्सर्वे शब्दा अभि ) मनोऽस्मात्सर्वाणि ध्यानान्यभि ( मन एवास्मिन् सर्वाणि ध्यातान्यभि ) ध्यानान्या ( ध्यातान्या ) ( सैषा प्राणे ... स प्राणः० ) ( खलु० ) भवन्ति + ( इति ); ब्रशांकर. १।१।३१, २।३।१९ ( खलु० ) भूतान्येकं ( भूतान्येकी ); विज्ञान. २।३।१९; बलदेव. १।१।२८.

सर्वेषां भूतानामेकीभाव उक्तः, न तु प्रज्ञायां, तत्कथं प्राणप्रज्ञयोः सर्वात्मनैक्यमित्याशङ्क्य प्रज्ञाया अपि प्राणवत्सार्वात्म्यकथनायाऽऽह — अथ प्राणस्य सार्वात्म्यकथनानन्तरं खलु निश्चितं यथा येन प्रकारेण अस्यै प्रज्ञायै अस्यां प्रज्ञायां ज्ञानशक्तौ चैतन्ये साक्षिण्यां सर्वाणि भूतानि निखिलानि वागादीनि सविषयाणि स्थिरजङ्गमशब्दाभिधेयानि एकं भवन्ति प्राणवदेकधा भवन्ति, तत् तथा व्याख्यास्यामः विस्पष्टमासमन्तात्प्रकथयिष्यामः। शंनन्द.

वाक्प्राण(घ्राण)चक्षुःश्रोत्रजिह्वाहस्तशरीरोपस्थपादप्रज्ञाः (मनांसि) प्रज्ञामात्राः, नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दरतिप्रजातीत्याधीविज्ञातव्यकामाः भूतमात्राः, भूतमात्राभिः प्रज्ञामात्राः संगता अव्यभिचारेण प्रज्ञामात्राश्च प्रज्ञया, प्रज्ञामात्राणां भूतमात्राणां चैक्यं प्राणे, प्रज्ञात्मा प्राणः सर्वप्रेरकः विजिज्ञास्यः अमृतः सर्वनाभिः कर्मासंस्पृष्टः

**वागेवास्या एकमङ्गमदूळ्हम्। तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा। प्राण एवास्या एकमङ्गमदूळ्हम्। तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा। चक्षुरेवास्या एकमङ्गमदूळ्हम्। तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा। श्रोत्रमेवास्या एकमङ्गमदूळ्हम्। तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा। जिह्वैवास्या एकमङ्गमदूळ्हम्। तस्या अन्नरसः परस्तात्प्रतिविहिता भूतमात्रा। हस्तावेवास्या एकमङ्गमदूळ्हम्। तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा। शरीरमेवास्या एकमङ्गमदूळ्हम्। तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रा। उपस्थ एवास्या एकमङ्गमदूळ्हम्। तस्याऽऽनन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा। पादावेवास्या एकमङ्गमदूळ्हम्। तयोरित्याः परस्तात्प्रतिविहिता भूतमात्रा। प्रज्ञैवास्या एकमङ्गमदूळ्हम्। तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा॥ ५॥**

एकभावं प्रतिज्ञाय प्रथमतः प्रज्ञाया विभागमाह — वागेव वागिन्द्रियमेव प्रसिद्ध, न त्वन्यत्, अस्याः प्रज्ञायाः एकमङ्गं एकं भागं गौरिवैकस्तनं अदूळ्हं अदूदुहत्, स्वाधीनं कृतवतीत्यर्थः। तस्यै तस्याः दुग्धैकभागप्रज्ञाया वाचः नाम वक्तव्यं शब्दजातं परस्तात् विषयत्वेन परस्मिन्बहिर्देशे प्रतिविहिता विनिर्मिता भूतमात्रा भूतभागः। मीयते इति मात्रा। तस्या विषयत्वेन प्रतिविहिता भूतमात्रा (वा) नामेत्यन्वयः। यथा वाक् प्रज्ञाया एकमङ्गमदूदुहत्, यथा च तस्याः परस्तात्प्रतिविहिता भूतमात्रा नाम, एवं प्राणचक्षुःश्रोत्ररसनहस्तशरीरोपस्थपादबुद्धिस्थसंविदः एकैकमङ्गमदूदुहन्, आसां यथाक्रमं परस्तात्प्रतिविहिता भूतमात्रा गन्धरूपशब्दान्नरसकर्मसुखदुःखानन्दरतिप्रजातीत्या(दि)धीविज्ञातव्यकामाः इति पर्यायनवकेनाऽऽह — प्राण एवास्या ......... भूतमात्रा। वाक्पर्यायवच्चक्षुरादयो नवापि पर्याया व्याख्येयाः। शंनन्द.

**प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति। प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान् गन्धानाप्नोति। प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति। प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति। प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति। प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति। प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति। प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं**

---

(१) कौउ. ३।५; शांटि. मदूळ्हम् (मदूदुहत्); क. मदूळ्हम् (मुदूळ्हम्) प्राण (घ्राण) रित्याः (रित्या) प्रज्ञैवास्या (मन एवास्या) तस्यै धियो विज्ञातव्यं कामाः (तस्य धीः कामाः); ब्रशंकर. १।१।३१ मदूळ्हम् (मदूदुहत्); बलदेव. १।१।२८.

(१) कौउ. ३।६; क. प्रज्ञयैव...कामानाप्नोति (प्रज्ञया मनः समारुह्य मनसा सर्वाणि ध्यातान्याप्नोति); ब्रशंकर. २।३।२८, २९; निंबार्क. २।३।२७ शरीरं समारुह्य (शरीरमारुह्य); वल्लभ. २।३।२८; बलदेव. १।१।२८, २।३।२५.

रतिं प्रजातिमाप्नोति । प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति । प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥

(१) एवं प्रज्ञाया विभागमुक्त्वा इदानीमविभागमाह — प्रज्ञया वाचा दुग्धया उक्तया संविदा वाचं वागिन्द्रियं समारुह्य सम्यक् तादात्म्यलक्षणेन संबन्धेन आरोहणं कृत्वा, अहं वागस्मीत्यभिमानं प्राप्येत्यर्थः । वाचा उक्तप्रज्ञाऽभिन्नेन उक्तेनेन्द्रियेण सर्वाणि निखिलानि नामानि वक्तव्यानि आप्नोति वाच्यधिरूढा प्रज्ञा प्राप्नोति । अयमर्थः— न प्रज्ञामन्तरेण उक्तविषयप्राप्तिः, ततः यत् यद्विना न भवति नोपलभ्यते वा तत्तदात्मकं, यथा तन्तून्विना अनुपलभ्यमानः पटः तन्त्वात्मकः, शुक्तिकामन्तरेण वा अनुपलभ्यमानं रजतं शुक्त्यात्मकं, तथा च उक्तेन्द्रियमन्तरेण अविद्यमानोऽनुपलभ्यमानो विषय उक्तेन्द्रियात्मकः । उक्तं च 'इन्द्रियं प्रज्ञामन्तरेणानुपलभ्यमानं प्रज्ञात्मकं' इति । यथा वाङ्नामनी प्रज्ञाया भेदरहिते, एवं घ्राणगन्धौ चक्षूरूपे श्रोत्रशब्दौ जिह्वान्नरसौ हस्तकर्माणि शरीरसुखदुःखान्युपस्थानन्दरतिप्रजातयः पादगतयः प्रज्ञाधीविज्ञातव्यकामाश्चेत्याह—प्रज्ञया प्राणं समारुह्य...धियो विज्ञातव्यं कामानाप्नोति । वाक्पर्यायवन्नवकमपि व्याख्येयम् । शंनन्द.

( २ ) 'पृथगुपदेशात्'—'प्रज्ञया शरीरं समारुह्य' इति च आत्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशात् चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते । ( पूर्वपक्षः ) २।३।२८

तथा 'प्रज्ञया शरीरं समारुह्य' इत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैव उपाधिभूतया जीवः शरीरं समारुह्य इत्येवं योजयितव्यम् । व्यपदेशमात्रं वा शिलापुत्रकस्य शरीरमित्यादिवत् । न ह्यत्र गुणगुणिविभागोऽपि विद्यते इत्युक्तम् । ब्रशंकर. २।३।२९

( ३ ) जीवतज्ज्ञानयोर्ज्ञानत्वाविशेषेऽपि धर्मधर्मिभावो युक्त एव । कुतः । 'प्रज्ञया शरीरमारुह्य' इत्यादिपृथगुपदेशात् । * निंबार्क. २।३।२७

* वल्लभ. निंबार्कवत् ।

न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतन्नाम प्राज्ञासिषमिति । न हि प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतं गन्धं प्राज्ञासिषमिति । न हि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतद्रूपं प्राज्ञासिषमिति । न हि प्रज्ञापेतं श्रोत्रं शब्दं कंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतं शब्दं प्राज्ञासिषमिति । न हि प्रज्ञापेता जिह्वाऽन्नरसं कंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतमन्नरसं प्राज्ञासिषमिति । न हि प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञापयेताम् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतत्कर्म प्राज्ञासिषमिति । न हि प्रज्ञापेतं शरीरं सुखं दुःखं किंचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतत्सुखं दुःखं प्राज्ञासिषमिति । न हि प्रज्ञापेत उपस्थ आनन्दं रतिं प्रजातिं कांचन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतमानन्दं न रतिं न प्रजातिं प्राज्ञासिषमिति । न हि प्रज्ञापेतौ पादावित्यां कांचन प्रज्ञापयेताम् । अन्यत्र मे मनोऽभूदित्याह । नाहमेतामित्यां प्राज्ञासिषमिति । न हि प्रज्ञापेता धीः काचन सिध्येत् । न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

ननु किं प्रज्ञया, यावता वागादिभिरेव स्वः स्वोऽर्थोऽवगम्यते इत्याशङ्क्य वागादीनां प्रज्ञया रहितानां सत्यपि स्वार्थसंबन्धे न तदवगमहेतुत्वमिति सर्वजनीनानुभवेनाऽऽह—न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापयेत् । हि यस्मात् प्रज्ञारहितं वागिन्द्रियं किमपि वक्तव्यं स्वं परं नावगमयेत् । प्रज्ञारहिता वाक् स्वव्य-

(१) कौउ. ३।७; क. प्रज्ञापयेत् ( प्रज्ञपयेत् ) प्रज्ञापयेताम् ( प्रज्ञपयेताम् ) मे मनोऽभूदित्याह । नाहमेतत्कर्म प्राज्ञासिषमिति ( नौ मनोऽभूदित्याहतुः । नाऽऽवामेतत्कर्म प्राज्ञासिष्वेति ) सुखं दुःखं ( न सुखं न दुःखं ) नाहमेतत्सुखं दुःखं ( नाहमेतं न सुखं न दुःखं ) रतिं प्रजातिं ( न रतिं न प्रजातिं ) मे मनोऽभूदित्याह । नाहमेतामित्यां प्राज्ञासिषमिति ( नौ मनोऽभूदित्याहतुः । नाऽऽवामेतामित्यां प्राज्ञासिष्वेति ); बलदेव. १।१।२८.

व्यापारं न कुरुते, कुर्वत्यपि अविवक्षितार्थमसंबद्धार्थं वा कुर्यादित्यर्थः। ननु प्रज्ञारहिता वाङ्न प्रज्ञापयेदित्यस्मिन्नर्थे किं प्रमाणमित्याशङ्क्य सर्वजनीनमनुभवमभिनयेन प्रमाणयति—अन्यत्र विषयान्तरे मे मम इन्द्रियस्वामिनः मनः अन्तःकरणधीवृत्तिजनकं प्रज्ञासाक्षि अभूत् अभवत् इत्याह एवं ब्रूते। मनसोऽन्यत्रावस्थाने किं स्यादित्यत आह—नाहमेतन्नाम प्राज्ञासिषमिति। अहं इन्द्रियस्वामी एतत् त्वया कथ्यमानं नाम वक्तव्यं, अस्येन्द्रियस्य विषय इत्यर्थः। न प्राज्ञासिषं न प्रकर्षेण ज्ञातवान्। उक्तमपि विशदं अस्पष्टवर्णं विक्षिप्तार्थं तद्विपरीतं वा। इति अनेन प्रकारेण आहेत्यनुषङ्गः। अयमर्थः —परज्ञानाज्ञानयोरप्रत्यक्षत्वेऽपि परस्य तद्वचनेन लिङ्गेनानुमातुं शक्येते। तथा च। प्रज्ञारहितमुक्तमिन्द्रियं न स्वव्यापारकरमिति। यथा वाक् तथा प्राणचक्षुःश्रोत्रजिह्वाहस्तशरीरोपस्थपादप्रज्ञा इति पर्यायनवकेनाऽऽह — न हि प्रज्ञापेतः ...... प्राज्ञासिषमिति। वाक्पर्यायवत्पर्यायाष्टकं व्याख्येयम्। विज्ञातव्यकामयोर्बुद्धिमन्तरेणानुपलम्भस्य सर्वजनीनत्वाद्धियमेवोररीकृत्याऽऽह — न हि प्रज्ञापेता धीः काचन सिध्येत्। काऽपि विज्ञातव्यकामादिभेदभिन्ना धीः अन्तःकरणवृत्तिः प्रज्ञापेता असाक्षिका न सिध्येत् न प्रजायेत, नावगम्यते इत्यर्थः। ननु मिथोऽपेक्षावतामिन्द्रियतद्विषयमानप्रज्ञानां तुल्यत्वात्कथं प्राणोपाधिका प्रज्ञैवोपास्येति नियमोऽस्तीत्याशङ्क्य प्रज्ञायामेवान्येषां कल्पितत्वमाह — न प्रज्ञातव्यं प्रज्ञायेत। प्रज्ञातव्यं धियो विषयः न प्रज्ञायेत न च गम्यते योग्यानुपलब्ध्या बुद्धेरभाव इत्यर्थः। शंनन्द.

**[१] न वाचं विजिज्ञासीत। वक्तारं विद्यात्। न गन्धं विजिज्ञासीत। घ्रातारं विद्यात्। न रूपं विजिज्ञासीत। रूपविद्यं विद्यात्। न शब्दं विजिज्ञासीत। श्रोतारं विद्यात्। नान्नरसं विजिज्ञासीत। अन्नरसस्य विज्ञातारं विद्यात्। न कर्म विजिज्ञासीत। कर्तारं विद्यात्। न सुखदुःखे विजिज्ञासीत। सुखदुःखयोर्विज्ञातारं विद्यात्। नाऽऽनन्दं न रतिं न प्रजातिं विजिज्ञासीत। आनन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यात्। नेत्यां विजिज्ञासीत। एतारं विद्यात्। न मनो विजिज्ञासीत। मन्तारं विद्यात्॥**

इन्द्रियैः सह प्रज्ञाया अभेदश्चेत्तर्हि 'तं मामायुरमृतमित्युपास्स्व' इत्यत्र वाचनिकया रीत्या वागेवोपास्या स्यात् इत्यत आह—न वाचं विजिज्ञासीत। वागिन्द्रियमुपास्स्वेत्येवं न विजिज्ञासीत न विचारयेत्, नावगच्छेदित्यर्थः। तर्हि किमवगम्यमित्यत आह—वक्तारं वागिन्द्रियप्रेरकमानन्दात्मानं सर्वकरणवृत्तिसाक्षिणमित्यर्थः। विद्यात् प्राणोऽस्मि प्रज्ञात्मा वक्ताऽऽयुरमृतमित्यवगच्छेत्। अथ वा प्राणोऽस्मि प्रज्ञात्मा वक्तेत्येवावगच्छेत्। अत्रैवाऽऽयुरमृतत्वयोरन्तर्भावात्। अत एव प्राणप्रश्ने सत्रप्राणो मुख्य इति प्राणे तावपीत्यङ्गीकृत्य सह ह्येतावित्याद्युक्तम्। अथवा वागादिभ्यः प्राणो मुख्य इति प्राणे ब्रह्मामृतत्वोपासनं समर्पितं, अधुना वक्तर्यात्मनि प्राणस्यापि प्राणे ब्रह्मामृतत्वबुद्धिरुपदिश्यते इति रहस्यम्। पूर्वं 'न वाचं विजिज्ञासीत' इति करणनिषेधः कृतः, अन्ते च 'न मनो विजिज्ञासीत', इति तस्यैव निषेधं करिष्यति, तेनाऽऽद्यन्ताभ्यामिन्द्रियानिषेधः सर्वेन्द्रियोपलक्षणार्थम्। मध्ये पर्यायाष्टकेन विषयं निषिध्यति पूर्वोत्तरयोः करणस्येवेतरविषयनिषेधोपलक्षणार्थम्। न चात्रानेकश इन्द्रियप्राये शरीरस्य पाठाच्छरीरमपीन्द्रियमिति मन्तव्यं, करणस्येव विषयोपलब्धेर्विवक्षितत्वात्तस्य च भोगायतनेऽपि

(१) **कौड.** ३।८; **आटि.** रूपविद्यं (रूपविदं); **क.** रूपविद्यं (द्रष्टारं); **ब्रशंकर.** १।१।२८, २९, ३१, २।१।३४, २।३।४१, ३।२।४१; **भास्कर.** १।१।२८, २९, ३१, २।१।३४, २।३।४१, ३।२।४१; **रामानुज.** १।१।१ (पृ. १२), १।१।२९, ३०, ३२, २।१।४, २।३।४१; **निंबार्क.** १।१।३२; **ब्रमध्व.** २।१।३६, ३।२।९, ४१; **श्रीकंठ.** १।१।२९, ३०, ३१, ३।२।३७; **श्रीकर.** १।१।१, ४, २४, २९, ३०, ३२, १।२।२, २।१।६, ३५, २।३।३८, ३९, ४९, ३।१।१, १४, ३।२।३७, ३।३।११, ३।४।१; **वल्लभ.** १।१।११, २७, २८, ३०, २।१।३४, ३।२।४१, ३।३।२९; **विज्ञान.** १।१।१, २ (पृ. ३९, ५८), २८, २९, ३०, ३१, २।१।३४, २।३।४१, ३।३।४, ४।१।३, ४।२।१६, ४।४।२२; **बलदेव.** १।१।२८, ३०, २।१।३४, २।३।४६, ४९, ३।२।४१.

शरीरे यथाकथंचित्संपादयितुं सुशकत्वात् । अथैवमपि प्रायपाठस्याऽऽग्रहस्तर्हि शरीरशब्देन त्वगिन्द्रियमस्तु । न चैवं सुखदुःखयोर्विषयत्वं विरुध्यते, ताभ्यामुपलक्षितस्य तज्जनकस्य स्पर्शस्यैव कल्पयितुं शक्यत्वात् । एवं च शरीरेऽपि प्रायपाठो न बाधितो भवेत् । पर्यायाष्टकेन विषयं निषिध्य तत्तद्विषयिण एवाऽऽत्मनो वेद्यत्वमाह— न गन्धं ... एतारं विद्यात् । रूपविद्यं रूपविदम् । एतारं गन्तारम् । स्पष्टमन्यत् । आदाविन्द्रियं निषिध्येन्द्रियस्वामिनो यथा ज्ञातव्यत्वमुक्तं तथाऽन्तेऽप्याह— न मनो विजिज्ञासीत, मन्तारं विद्यात् । वाक्पर्यायवद्व्याख्येयम् । शंनन्द.

ता वा एता दशैव भूतमात्रा अधिप्रज्ञम् । दश प्रज्ञामात्रा अधिभूतम् । यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः । यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः । न ह्यन्यतरतो रूपं किंचन सिध्येत् । नो एतन्नाना ॥

एवं सर्वेन्द्रियविषयसाक्षिणो ज्ञानमभिधाय प्रसङ्गात्सर्वानर्थमूलं संसारचक्रमिन्द्रियविषयाभ्यामितरेतरसापेक्षाभ्यां प्रवर्तते, अन्यतराभावे च न प्रवर्तत इत्यभिप्रायवानाह—ताः प्रकृताः संसारचक्रस्य मूलभूताः वै प्रसिद्धाः एताः प्रत्यक्षा अनुमेयाश्च दशैव दशसंख्याका एव, न त्वधिकाः, शरीरस्य सुखदुःखयोः स्पर्शस्य चावान्तरभावेन मनसश्च सर्वेन्द्रियेषु मन्तृत्वेन च भूतमात्रा वक्तव्याद्या विषयाः अधिप्रज्ञं, प्रज्ञानि इन्द्रियाणि अधिकृत्य वर्तन्ते इत्यधिप्रज्ञम् । दश दशसंख्याकाः प्रज्ञामात्राः वागादीनीन्द्रियाणि अधिभूतम् । स्पष्टम् । यत् यदि हि प्रसिद्धाः भूतमात्राः नामादिरूपाः न स्युः न भवेयुः तर्हि न प्रज्ञामात्राः स्युः । न निर्विषयमिन्द्रियं भवति । यद्वा पक्षान्तरे प्रज्ञामात्राः उक्तानीन्द्रियाणि न स्युः न भवेयुः, न भूतमात्राः उक्ता भूतमात्राः स्युः न भवेयुः । तत्र हेतुमाह — अन्यतरतः एकस्मात्प्रज्ञामात्राभूतमात्रयोर्मध्ये हि यस्मात् किंचन किमपि रूपं विषयः इन्द्रियं न सिध्येत् । अयमर्थः — न हि विषयो विषयेण इन्द्रियं वेन्द्रियेणावगम्यते, किंत्विन्द्रियेण विषयो विषयेणेन्द्रियमिति । ननु यदि विषयेन्द्रियमितरेतरसापेक्षं, तर्ह्यस्य परस्परं निमित्तत्वात्प्रज्ञाया अपि तन्निमित्तं विभेदः स्यात्, तथा च 'यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति' इति प्रतिज्ञा व्याहता स्यादित्यत आह — नो एतन्नाना । एतत्प्रज्ञामात्राभूतमात्रारूपं नाना भेदवत् नो । शंनन्द.

तद्यथा रथस्यारेषु नेमिरर्पितः[1] । नाभावरा अर्पिताः । एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः । प्रज्ञामात्राः प्राणे अर्पिताः । स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः । न साधुना कर्मणा भूयान् । नो एवासाधुना कनीयान् ॥

नानात्वाभावं प्रतिज्ञाय तत्र दृष्टान्तमाह — तत् तत्र यथा दृष्टान्ते रथस्य रथचक्रस्य अरेषु नाभिप्रतिष्ठितेषु तीक्ष्णाग्रेषु काष्ठेषु नेमिः अरेभ्यो बहिर्देशवर्ति वर्तुलं काष्ठं अर्पितः अरेषु वर्तते इत्यर्थः । नाभौ अन्तःकाष्ठे अक्षाधारच्छिद्रवति वर्तुले अराः दीर्घाणि तीक्ष्णानि काष्ठानि अर्पिताः प्रतिष्ठिताः । एवमेव तद्वदेव, न त्वन्यथा, एताः उपलभ्यमानाः भूतमात्राः विषया नेमिस्थानीयाः प्रज्ञामात्रासु इन्द्रियेष्वरस्थानीयेषु अर्पिताः प्रतिष्ठिताः । प्रज्ञामात्राः इन्द्रियाण्यरभूतानि प्राणे मुखनासिकासंचारिणि नाभिस्थानीये अर्पिताः प्रतिष्ठिताः । सः प्राणोपाधिकः एष प्राण एव प्रज्ञात्मा धीवृत्तौ प्रतिफलितः प्राज्ञ उपाधिविरहे प्रज्ञया नित्यया स्वयंप्रकाशयाऽवियुक्त आत्मा व्यापको व्यवहारावस्थायामस्मत्प्रत्यये व्यवहारयोग्यः, आनन्दः सुखैकस्वभावः, अजरः जरारहितः, अमृतः मरणरहितः, स्वयंप्रकाशविज्ञानानन्दात्मस्वरूपः सर्वविक्रियाशून्य इत्यर्थः । ननु एवंरूपस्यापि साध्वसाधुकर्मभ्यामाधिक्यन्यूनते स्यातां समुद्रस्येवोदयास्तमया-

(१) ब्रशंकर. यद्वा प्रज्ञा ( यद्धि प्रज्ञा ).

(१) क. रर्पितः ( रर्पिता )त्माऽऽनन्दो ( त्माऽनन्तो ) भूयान् + ( भवति ); ब्रशंकर. रर्पितः ( रर्पिता ) न साधुना ( स न साधुना ) भूयान् + ( भवति ) एवासाधुना + ( कर्मणा ); भास्कर. रर्पितः ( रर्पिता ) न साधुना ( स न साधुना ); रामानुज. रर्पितः ( रर्पिता ); श्रीकंठ. वल्लभ. रामानुजवत्; विज्ञान. रर्पितः ( रर्पिता ) प्रज्ञामात्राः प्राणे अर्पिताः ( प्रज्ञामात्राश्च प्राणेष्वर्पिताः )ऽमृतः ( ऽमरः ).

भ्यामित्यत आह——न साधुना कर्मणा भूयान् । साधुना शास्त्रविहितेन कर्मणा पुण्यरूपेण न भूयान्नाधिकः, भवतीति शेषः । नो एव नैव असाधुना शास्त्रप्रतिषिद्धेन कर्मणा कनीयान् कनिष्ठः न्यून इत्यर्थः । भवतीति शेषः । अयमर्थः ——विक्रियावतो ह्यतिशयो दृष्टः समुद्रादेः, न तु विपरीतस्य, गगने अदर्शनादिति । शंनन्द.

प्रज्ञात्मा प्राणः साध्वसाधुकर्मकारयिता लोकाधिपतिः आत्मेति ज्ञातव्यः

**एष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवैनमसाधु कर्म कारयति तं यमधो निनीषते । एष लोकपालः । एष लोकाधिपतिः । एष सर्वेशः । स म आत्मेति विद्यात्स म आत्मेति विद्यात् ॥ ८ ॥**

इति तृतीयोऽध्यायः ॥

( १ ) साध्वसाधुकर्मणी आत्मानं न स्पृशत इत्यस्मिन्नर्थे हेतुमाह — एष ह्येव । हि यस्मादेष एव प्राणप्रज्ञोपाधिक एव, न त्वन्यः, एनं शरीराद्यात्मत्वाभिमानिनं साधु कर्म शास्त्रविहितं कर्म धर्मरूपं कारयति अयस्कान्तवच्छरीरे आविष्टः स्वयं निर्व्यापारस्तच्छरीराभिमानिनं विविधान् व्यापारान् कारयति तं एनं प्रकृतं वक्ष्यमाणं, यं प्रसिद्धं स्वर्गार्थिनं एभ्यः प्रत्यक्षेभ्यो लोकेभ्यः उन्निनीषते ऊर्ध्वं नेतुमिच्छतीत्यर्थः । एष उ एव यथोक्त एव, न त्वन्यः, एनं शरीराद्यभिमानिनं असाधु शास्त्रनिषिद्धं कर्म पातकं कारयति अनिच्छन्तमपि अनुष्ठापयति तं प्रियसुखमप्यनर्थार्थिनं, यं प्रसिद्धं पातकिनं एभ्यः प्रत्यक्षेभ्यो लोकेभ्यो मनुष्यादिनिवासेभ्यः अधो निनीषते अधो नेतुमिच्छतीत्यर्थः । साध्वसाधुकर्मकारयितृत्वं स्वर्गनरकनयनार्थमित्युक्तं, तदप्यस्य शरीरोपाधिरहितस्य चिन्मात्रस्य नियन्तृत्वशक्तिमात्रोपहितस्यान्तर्यामिणः प्रक्रान्तत्वादुपपन्नमित्याह——एषः स्वर्गनरकयोर्नेता लोकपालः लोकानां साधूनां सुखेन असाधूनां दुःखेन च पालको रक्षको लोकपालः । तथा च लोकपालत्वं मन्व्यादिवत् स्यादित्यत आह——एष उक्तो लोकपालः लोकाधिपतिः लोकानां रक्षकः । पित्रादिवदधिष्ठाय पालयतीति लोकाधिपतिः । तथाऽपि संकुचितमैश्वर्यमस्य स्याद्राजादिवदित्यत आह—— एषः उक्तो लोकाधिपतिः सर्वेशः सर्वस्य निखिलस्य भूतभौतिकस्य ईशो नियन्ता सर्वेशः । सः उक्तः सर्वेशत्वादिगुणः मे मम इन्द्रस्य वक्तुः आत्मा अस्मत्प्रत्यये व्यवहारयोग्यः मामेव विजानीहीति मयोक्त आत्मा स्वरूपं इति विद्यात् एवं जानीयात् । स म आत्मेति विद्यात् । व्याख्यातम् । वाक्याभ्यासोऽध्यायपरिसमाप्त्यर्थः । शंनन्द.

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य शंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां तृतीयोऽध्यायः ॥

( २ ) ' वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति '—— ईश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति । कथं पुनरवगम्यते सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीते इति । तथा हि दर्शयति श्रुतिः——' एष ह्येव साधु... यमधो निनीषते ' इति । ' पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन ' ( बृउ. ३।२।१३ ) इति च । २।१।३४

' परात्तु तच्छ्रुतेः' ——यदिदमविद्यावस्थायां उपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितं तत्किमनपेक्ष्येश्वरं भवति, आहोस्विदीश्वरापेक्षमिति भवति विचारणा । तत्र प्राप्तं तावत् नेश्वरमपेक्षते जीवः कर्तृत्वे इति । कस्मात् । अपेक्षाप्रयोजनाभावात् । अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति, तस्य किमीश्वरः करिष्यति ।

---

(१) क. ह्येवैनं ( ह्येव ) एवैनमसाधु ( एवासाधु ) सर्वेशः ( लोकेशः ); ब्रशंकर. क.वत्; भास्कर. ( एष सर्वेशः० ) शेषं क.वत्; रामानुज. ह्येवैनं ( एव ) उन्निनीषते ( उन्निनीषति ) उ एवैनमसाधु ( एवासाधु ) निनीषते ( निनीषति ) सर्वेशः ( सर्वेश्वरः ); ब्रमध्व. ह्येवैनं ( ह्येव ) एवैनमसाधु ( एवासाधु ); श्रीकंठ. ह्येवैनं ( ह्येव ) उ एवैनमसाधु ( एवासाधु ); वल्लभ. ह्येवैनं ( उ एव ) उन्निनीषते ( उन्निनीषति ) निनीषते ( निनीषति ) सर्वेशः ( लोकेशः ); विज्ञान. ह्येवैनं ( ह्येव ).

न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियासु अनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति । क्लेशात्मकेन च कर्तृत्वेन जन्तून् संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम् । ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्रसू. २।१।३४) इत्युक्तम् । सत्यमुक्तं, सति त्वीश्वरस्य सापेक्षत्वसंभवे । सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोः । तयोश्च सद्भावः सति जीवस्य कर्तृत्वे । तदेव चेत्कर्तृत्वमीश्वरापेक्षं स्यात्, किंविषयमीश्वरस्य सापेक्षत्वमुच्येत । अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत । तस्मात् स्वत एवास्य कर्तृत्वमिति । एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते — परादिति । अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जीवस्य अविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात् सर्वभूताधिवासात् साक्षिणश्चेतयितुरीश्वरात् तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिः भवितुमर्हति । कुतः । तच्छ्रुतेः । यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धं, तथाऽपि सर्वास्वेव प्रवृत्तिषु ईश्वरो हेतुकर्तेति श्रुतेरवसीयते । तथा हि श्रुतिर्भवति — 'एष ह्येव ...... यमधो निनीषते' इति, 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' (शब्रा. १४।५।८।३०) इति चैवंजातीयका ।

'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' —नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातां अकृताभ्यागमश्च जीवस्येति । नेत्युच्यते । तुशब्दश्चोदितदोषव्यावर्तनार्थः । कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणः तदपेक्ष एवैनमीश्वरः कारयति । अतश्चैते चोदिता दोषा न प्रसज्यन्ते । जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजेत्पर्जन्यवदीश्वरो निमित्तत्वमात्रेण । यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां च असाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः । न ह्यसति पर्जन्ये रसपुष्पफलपलाशादिवैषम्यं तेषां जायते, नाप्यसत्सु स्वस्वबीजेषु । एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते । ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते । नैष दोषः । परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः, कुर्वन्तं हि तमीश्वरः कारयति । अपि च पूर्वप्रयत्नमपेक्ष्य इदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयत्, इत्यनादित्वात्संसारस्येत्यनवद्यम् । कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति । विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्याह । एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य च अवैयर्थ्यं भवति । अन्यथा तदनर्थकं स्यात् । ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत, अत्यन्तपरतन्त्रत्वाज्जीवस्य । तथा विहितकारिणमप्यनर्थेन संसृजेत् प्रतिषिद्धकारिणमप्यर्थेन । ततश्च प्रामाण्यं वेदस्यास्तमियात् । ईश्वरस्य च अत्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं, तथा देशकालनिमित्तानां पूर्वोक्तदोषप्रसङ्गश्च इत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति । २।३।४१, ४२

'पूर्वं तु बादरायणो हेतुव्यपदेशात्' — बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात्कर्मणः अपूर्वाद्वा केवलात्फलं इत्ययं पक्षस्तुशब्देन व्यावर्त्यते । कर्मापेक्षात् अपूर्वापेक्षाद्वा यथा तथा अस्त्वीश्वरात्फलमिति सिद्धान्तः । कुतः । हेतुव्यपदेशात् । धर्माधर्मयोरपि हि कारयितृत्वेन ईश्वरो हेतुर्व्यपदिश्यते फलस्य च दातृत्वेन— 'एष ह्येव साधु....यमधो निनीषते' इति । स्मर्यते चायमर्थो भगवद्गीतासु—'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हि तान् ॥' (भ. गी. ७।२१, २२) इति । सर्ववेदान्तेषु च ईश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते । तदेव च ईश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजति । विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते । ×ब्रशंकर. ३।२।४१

(३) सर्वासु क्रियासु पुरुषेण कृतं प्रयत्नं उद्योगं अपेक्ष्य अन्तर्यामी परमात्मा तदनुमतिप्रदानेन

---

× भास्कर. विज्ञान. ब्रशंकरवत् ।

प्रवर्तयति। परमात्मानुमतिमन्तरेणास्य प्रवृत्तिर्नोपपद्यते इत्यर्थः।

नन्वेवं 'एष ह्येव साधु...यमधो निनीषति' इत्युन्निनीषया अधोनिनीषया च स्वयमेव साध्वसाधुनी कर्मणी कारयतीति तन्नोपपद्यते। उच्यते। एतन्न सर्वसाधारणम्। यस्तु अतिमात्रपरमपुरुषानुकूल्ये व्यवस्थितः प्रवर्तते, तमनुगृह्णन् भगवान् स्वयमेव स्वप्राप्त्युपायेष्वतिकल्याणेषु कर्मस्वेव रुचिं जनयति। यश्चातिमात्रप्रातिकूल्ये व्यवस्थितः प्रवर्तते, तं स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु कर्मसु रुचिं जनयति। रामानुज. २।३।४१

(४) 'न कर्माविभागादिति चेन्नानादित्वात्' — यदपेक्षयाऽसौ फलं ददाति न तत्कर्म, 'एष ह्येव साधु ...... यमधो निनीषते' इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेन्न। तस्यापि पूर्वकर्मकारणमित्यनादित्वात्कर्मणः। भविष्यत्पुराणे च — 'पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा। अनादित्वात्कर्मणश्च न विरोधः कथंचन॥' इति।

२।१।३६

न च केषांचित्स्वप्नादिकर्ता, न तु सर्वेषामिति, 'एष ह्येव साधु कर्म कारयति' इति कर्मण्यवधारणात्। ३।२।९

'धर्मं जैमिनिरत एव' — यतः फलं तदेव कर्म ईश्वराद्भवति, 'एष ह्येव साधु कर्म कारयति' इति श्रुतेरिति जैमिनिः।

ब्रमध्व. ३।२।४१

(५) ननु 'एष एव साधु कर्म कारयति०' इत्यादिश्रुतिषु परमेश्वरस्यैव जीवनियामकत्वश्रवणान्न किंचिज्जीवकर्तव्यम्। तस्मात्तस्य वैषम्यनैर्घृण्यदोषः संभवतीति चेत्तदयुक्तम्। जीवानां परमेश्वरवत्सर्वकर्तृत्वसर्वज्ञत्वाद्यभावेऽपि चेतनत्वात् किंचिज्ज्ञत्वं किंचित्कर्तृत्वं च स्वेच्छया संभवति। अतः स्वेच्छाकृतकर्मानुभूतिर्जीवानामनिवार्या।

* श्रीकर. २।१।३५

(६) 'एष उ एव साधु०' इत्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्वकाले एव एतस्मै जीवाय एतत्कर्म कारयित्वा एतत्फलं दास्ये इति विचारितवानिति तथैव भवति। * वल्लभ. ३।३।२९

* शेषं रामानुजवत्।

इति तृतीयोऽध्यायः॥

---

## चतुर्थोऽध्यायः

(आत्मा ब्रह्म)

आदित्यचन्द्रविद्युत्स्तनयित्न्वाकाशवाय्वग्न्यप्सु आदर्शप्रतिश्रुत्काशब्दछायाशरीरप्रज्ञादक्षिणाक्षिसव्याक्षिषु च क्रमेण बृहत्सोमौ तेजःशब्दात्मानौ पूर्णब्रह्मेन्द्रवैकुण्ठविषासहयो नामात्मप्रतिरूपानपगासु मृत्युप्रजापत्यात्मयमाः विकल्पेन नामाग्निज्योतिःसत्यविद्युत्तेजआत्मानश्च पुरुषाः न ब्रह्म

**अथ गार्ग्यो ह वै बालाकिरनूचानः संस्पृष्ट आस। सोऽवसदुशीनरेषु। स वसन्मत्स्येषु कुरुपञ्चालेषु काशिविदेहेष्विति। स हाजातशत्रुं काश्यमेत्योवाच। ब्रह्म ते ब्रवाणीति। तं होवाचाजातशत्रुः। सहस्रं दद्मस्त इत्येतस्यां वाचि। जनको जनक इति वा उ जना धावन्तीति॥ १॥**

पूर्वाध्याये पूर्वं प्रायेण प्राणोपाधिक आत्मा उक्तः, तत्र च भवति कस्यचिद्विभ्रमः प्राण एव चैतन्यविशिष्ट आनन्दादिगुणक आत्मेति, तद्भ्रमनिवारणार्थं प्राणात्सुषुप्तावस्थादपगतबाह्यचैतन्यात्परं चेतनमानन्दादिरूपमात्मानं विवक्षुः पूर्वोत्तरपक्षाभ्यां ब्रह्मविद्याया अमानित्वादिगुणान् अन्तरेणातिदुर्लभत्वं दर्शयितुमाख्यायिकामाह — अथ इत्यधिकारार्थः। गार्ग्यो गर्गगोत्रीय एतन्नामा

* शेषं ब्रशंकरवत्।

(१) कौउ. ४।१; आदि. अथ गार्ग्यो ह वै (अथ ह गार्ग्यो वै) पञ्चालेषु (पाञ्चालेषु) काशिवि (काशीवि) दद्मस्त इत्येतस्यां (दद्म एतस्यां); क. अथ गार्ग्यो ह वै (अथ ह वै गार्ग्यो) मेत्योवाच (मात्रज्योवाच) दद्मस्त (ददि त); ब्रशांकर. १।४।१६; भास्कर. रामानुज. निंबार्क. श्रीकंठ. श्रीकर. १।४।१६.

ह वै किल प्रसिद्धो दृप्तत्वेन श्रुत्यन्तरे बालाकिः बालाकस्यापत्यं अनूचानः आचार्ये वदन्तमनु स्वयमप्युच्चारयतीत्यनूचानः, अधीतवेद इत्यर्थः। संस्पृष्टः सम्यक्स्पृष्टः, सर्वत्र प्रथितकीर्तिरित्यर्थः। आस बभूव। सः प्रकृतो गार्ग्यः अवसत् निवासमकरोत् उशीनरेषु उशीनरसंज्ञकेषु देशेषु। सः वसन् संचरन्, स्वकीर्तिकामः सर्वत्र पर्यटन्नित्यर्थः। मत्स्येषु मत्स्यसंज्ञकेषु। अवसदित्येतत् (अत्र) वक्ष्यमाणवाक्यद्वये चानुवर्तते। कुरुपञ्चालेषु कुरुसंज्ञकेषु देशेषु पञ्चालसंज्ञकेषु काशिविदेहेषु काश्युपलक्षितेषु विदेहसंज्ञकेषु इति एवप्रकारेष्वन्येष्वपि त्रैवर्गिकनिवासदेशेष्ववसदित्यर्थः। सः नानादेशनिवासी प्रथितकीर्तिर्गर्वाढ्यो गार्ग्यः ह किल अजातशत्रुं, न विद्यते जातः उत्पन्नः यदपेक्षया शत्रुः शात्रवः स्वस्य स्वेन वा सर्वत्र समबुद्धेः सोऽयं सार्थकनामधारी अजातशत्रुः, तं काश्यं काशिदेशाधिपतिं एत्य कदाचित्सभागतं प्राप्य। उवाच उक्तवान्। गार्ग्योक्तिमाह— ब्रह्म अनुपचरितब्रह्मशब्दाभिधेयं ते तुभ्यं अजातशत्रवे ब्रवाणि यदि भवतोऽपेक्षा तदा वदानि इति अनेन प्रकारेण उवाचेत्यन्वयः। तं एवं वदन्तं, गार्ग्यं ह किल उवाच उक्तवान् अजातशत्रुः अजातशत्रुनामा राजा। अजातशत्रूक्तिमाह — सहस्रं गवां सहस्रं दद्मः, वयं राजानोऽल्पेऽपि कार्ये प्रभूतं प्रयच्छामः, किमुत त्वादृशानामित्यर्थः। ते तुभ्यं ब्राह्मणाय ब्रह्मविदे दानपात्राय। नेयं ब्रह्मविद्याया दक्षिणा किंतु इत्येतस्यां इदानीमुक्तायां वाचि ब्रह्म ते ब्रवाणीत्येवंरूपवाङ्मात्रनिमित्तम्। जनकः एतन्नामा मिथिलेश्वरः ब्रह्मविद्यायाः ससाधनाया दाता, जनकः स एव ब्रह्मविद्यायाः प्रतिग्रहीता इति अनेन प्रकारेण तं ज्ञात्वा अत्यर्थं वै प्रसिद्धाः उ अपि जनाः त्रैवर्णिकाः धावन्ति गच्छन्ति। अयमर्थः—ब्रह्मविद्याया यो दाता वक्ताऽपि चेत्येवं वदन्तो जना मिथिलेश्वरमेत्य गच्छन्ति। अपि मां तादृशं ततोऽप्यधिकं वा न जानन्ति, इति अनेन प्रकारेण उवाचेत्यन्वयः। शंनन्द.

**स[1] होवाच बालाकिः। य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः। मा मैतस्मिन्संवादयिष्ठाः। बृहन्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति॥ २॥**

सः उक्तः ह किल उवाच उक्तवान् बालाकिः बालाकस्यापत्यम्। य एव प्रसिद्ध एव, न त्वन्यः, एषः मादृशस्य प्रत्यक्षः आदित्ये आदित्यमण्डले पुरुषः पुरुषाकारश्चेतनः तमेव उक्तस्थानस्थमेव, न त्वन्यं, अहं गार्ग्यो ब्रह्मवित् उपासे विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेण ब्रह्मेति साक्षात्कुर्वे, इति अनेन प्रकारेण उवाचेत्यन्वयः। तं एवं ब्रुवाणं गार्ग्यं ह किल उवाच उक्तवान् अजातशत्रुः एतन्नामा हस्तसंज्ञया निवारयन् मा मा, आबाधायां द्विर्वचनम्। एतस्मिन् उक्तपुरुषे, उक्तपुरुषोपदेशनिमित्तमित्यर्थः। आवयोर्ज्ञाने समाने सति संवादयिष्ठाः त्वं गुरुरहं शिष्य इति गुरुशिष्योक्तिरूपं संवादं मा कारय। एतस्मिन्कार्यमाणे वयं बाधिताः स्याम। ननु यद्यपि त्वं जानीषे एनं पुरुषं तथाऽपि तद्गुणोपासनां फलं च न जानीषे इत्यत आह—बृहन् अभ्यधिकः पाण्डरवासाः शुक्लगुणोज्ज्वलवस्त्रः, चन्द्रमसः सूर्यसुषुम्नानाडीरूपत्वात्। एतौ शास्त्रान्तरोक्तौ गुणौ सूर्येऽप्यविरुद्धौ। अतिष्ठाः, सर्वाणि भूतान्यतीत्य तिष्ठतीत्यतिष्ठाः। सर्वेषां भूतानां निखिलानां स्थिरजङ्गमानां मूर्धा मस्तकं, इति अनेन प्रकारेण वै प्रसिद्धः सर्वेषां ब्रह्मविदां निरभिमानिनां, अहं अजातशत्रुः एतं त्वयोक्तं पुरुषं उपासे उपासनया साक्षात्कुर्वे। इतिः उक्तपुरुषगुणपरिसमाप्त्यर्थः। स यो हैतमेवमुपास्ते। यः प्रसिद्ध उपासकः ह किल एतं उक्तगुणकं पुरुषं एवमुपास्ते उक्तगुणोपासनया साक्षात्कुरुते, सः अतिष्ठाः सर्वेषां भूतानां मूर्धा। व्याख्यातम्। भवति, यद्गुणं ब्रह्मोपास्ते स्वयमपि तद्गुणो भवति। उपासनास्थानमेतत्, न तु शुद्धं निरुपाधिब्रह्मेत्युक्तं भवति। शंनन्द.

**स[1] होवाच बालाकिः। य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः।**

(१) कौउ. ४।२; क. बृहन्पा (बृहत्पा); श्रीकंठ. श्रीकर. १।४।१६.

(१) कौउ. ४।३ क. (सोमो राजा०); श्रीकंठ. श्रीकर. १।४।१६.

मा मैतस्मिन्संवादयिष्ठाः । सोमो राजाऽन्नस्याऽऽत्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्तेऽन्नस्याऽऽत्मा भवति ॥ ३ ॥

चन्द्रमसि चन्द्रमण्डले । सोमो राजा प्रियदर्शनो दीप्तिमान् । अन्नस्याऽऽत्मा चतुर्विधस्यादनीयस्याऽऽत्मा कारणं स्वरूपं वा । फले तु तद्वान्भवतीति व्याख्येयम् । शंनन्द.

स[1] होवाच बालाकिः । य एवैष विद्युति पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । तेजस आत्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते तेजस आत्मा भवति ॥ ४ ॥

विद्युति सौदामनीमण्डले । तेजस आत्मा तेजस्वीत्याद्यभिमानः । शंनन्द.

स[2] होवाच बालाकिः । य एवैष स्तनयित्नौ पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । शब्दस्याऽऽत्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते शब्दस्याऽऽत्मा भवति ॥ ५ ॥

स्तनयित्नौ मेघमण्डले । शब्दस्याऽऽत्मा ध्वनिवर्णभेदभिन्नस्य कारणं स्वरूपं वा । शंनन्द.

स[3] होवाच बालाकिः । य एवैष आकाशे पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिः । नो एव स्वयं नास्य प्रजा पुरा कालात्प्रवर्तते ॥ ६ ॥

आकाशे गगने अव्याकृते वा । पूर्णमप्रवर्ति क्रियाशून्यं ब्रह्म बृहत् सर्वस्मादप्यधिकम् । पूर्यते प्रजया पशुभिः । पूर्णगुणोपासनफलं पुत्रगवादिपरिपूर्तिः । अप्रवर्तिगुणोपासनफलमाह — नो एव ... प्रवर्तते । शतसंवत्सरकालात्पूर्वं स्वयमुपासको नो एव प्रवर्तते प्रमीयते । अस्योपासकस्य प्रजा तनयादिका । पुरा कालान्न प्रवर्तते इत्यनुवर्तते । शंनन्द.

स[1] होवाच बालाकिः । य एवैष वायौ पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते । जिष्णुर्ह वाऽपराजयिष्णुरन्यतस्त्यजायी भवति ॥ ७ ॥

वायौ पवने । इन्द्रः परमैश्वर्यसंपन्नः । वैकुण्ठः, विगता कुण्ठा परेण निवारणा यस्मात्स विकुण्ठः, विकुण्ठ एव वैकुण्ठः । अपराजिता सेना, न परैः पराजिता अपराजिता सेना । इन्द्रगुणफलमाह—जिष्णुर्ह वा जयनशीलः । ह प्रसिद्धौ, वाशब्द एवकारार्थः । वैकुण्ठगुणफलमाह—अपराजयिष्णुः परैर्जेतुमशक्यशीलः । अपराजितसेनागुणफलमाह—अन्यतस्त्यजायी अन्यतस्त्यः अन्यतो भवो वैरी, तज्जयलक्षणं शीलमस्येत्यन्यतस्त्यजायी । शंनन्द.

स[2] होवाच बालाकिः । य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । विषासहिरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते विषासहिर्हैवान्वेष भवति ॥ ८ ॥

अग्नौ जातवेदसि । विषासहिः विविधसहनशीलो दुःसहो वाऽन्यैः । हैवान्वेष भवति । ह प्रसिद्धं एष एव, न त्वन्यः, अनु उपासनादेष उपासको भवति । शंनन्द.

स[3] होवाच बालाकिः । य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । नाम्न आत्मेति वा अहमेत-

(१) कौड. ४।४; क. तेजस आ ( सत्यस्याऽऽ ); श्रीकंठ. १।४।१६.

(२) कौड. ४।५.

(३) कौड. ४।६; क. पशुभिः + ( यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ) ( नो एव... प्रवर्तते० ) षष्ठसप्तमयोः खण्डयोर्व्यत्यासेन पाठः.

(१) कौड. ४।७; क. वाऽपराजयिष्णु ( वा अपराजिष्णु ).

(२) कौड. ४।८; क. विषासहिर्हैवान्वेष ( विषासहिर्ह वा अन्येषु ).

(३) कौड. ४।९; क. नाम्न आ ( तेजस आ ).

मुपास इति । स यो हैतमेवमुपास्ते नाम्न आत्मा भवति । इत्यधिदैवतम् । अथाध्यात्मम् ॥ ९ ॥

अप्सु जलेषु । नाम्नः स्वात्मनाम्नः आत्मा स्वरूपं कारणं वा भवति । न च शाखान्तरप्रतिरूपगुणेन विरोधः । अस्ति हि सादृश्यं नाम्नो वस्तुना । तथाहि — घट इति वस्तु घट इति नामेति वाऽत्यन्तसादृश्योपलम्भात् । इत्यधिदैवतं, अनेन प्रकारेण दैवतमधिकृत्योक्तमधिदैवतम् । अथ अधिदैवतोपासनानन्तरं अध्यात्मं, आत्मानं शरीरमधिकृत्योच्यमानमुपासनमध्यात्मम् ।

शंनन्द.

[१] स होवाच बालाकिः । य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । प्रतिरूप इति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ १० ॥

आदर्शे दर्पणे, भास्वरे द्रव्ये इत्यर्थः । प्रतिरूपः सदृशः, रोचिष्णुरित्यर्थः । प्रतिरूपो हैवास्य उपासकस्य सदृशः प्रसिद्ध एव प्रजायां संताननिमित्तं आजायते पुत्रः स्पष्ट उपपद्यते, नाप्रतिरूपः न विलक्षणः ।

शंनन्द.

[२] स होवाच बालाकिः । य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । द्वितीयोऽनपग इति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते विन्दते द्वितीयात् । द्वितीयवान्भवति ॥ ११ ॥

प्रतिश्रुत्कायां, श्रवणं श्रवणं प्रत्यधितिष्ठतीति प्रतिश्रुत्का । द्वितीयः द्विसंख्यापूरणः । अनपगः गमनशून्यः । द्वितीयगुणस्य फलमाह — विन्दते लभते द्वितीयात् भार्याशरीरात्, द्वितीयमिति शेषः । अनपगगुणस्य फलमाह — द्वितीयवान् भवति । अनपगतपुत्रपौत्रादिर्भवतीत्यर्थः ।

शंनन्द.

[१] स होवाच बालाकिः । य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । असुरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्संमोहमेति ॥ १२ ॥

शब्दः पुरुषमन्वेति गच्छन्तं पुरुषं योऽयं ध्वन्यात्मकः शब्दः पश्चाद्गच्छति । असुर्जीवनहेतुरित्यर्थः । नो एवेत्याद्याकाशपर्याये व्याख्यातम् । संमोहमेति निधनं गच्छति ।

शंनन्द.

[२] स होवाच बालाकिः । य एवैष च्छायापुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । मृत्युरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥ १३ ॥

छायापुरुषः छायारूपः । मृत्युः मरणहेतुः । नो एवेत्यादिकमाकाशपर्याये व्याख्यातम् । प्रमीयते निधनं गच्छति ।

शंनन्द.

[३] स होवाच बालाकिः । य एवैष शारीरः पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुः । मा मैतस्मिन्संवादयिष्ठाः । प्रजापतिरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १४ ॥

शरीरे भवः शारीरः । प्रजापतिः प्रजायाः पालकः । प्रजायते प्रजया पशुभिः, प्रजापशुवृद्धिर्भवति ।

शंनन्द.

[४] स होवाच बालाकिः । य एवैष प्राज्ञ आत्मा येनैतत्पुरुषः सुप्तः स्वप्न्यया चरति तमेवाहमुपास

---

(१) कौड. ४।१०.

(२) कौड. ४।११; क. प्रतिश्रुत्कायां (च्छायायां) द्वितीयात् (द्वितीयान्) द्वितीयवान् + (द्वि).

(१) कौड. ४।१२; आटि. असुरिति (आयुरिति); क. शब्दः पुरुषमन्वेति (प्रतिश्रुत्कायां पुरुषः) नो एव स्वयं नास्य प्रजा (न).

(२) कौड. ४।१३; आटि. च्छायापुरुष (च्छायायां पुरुष); क. च्छायापु (शब्दे पु) नो एव स्वयं नास्य प्रजा (न) प्रमीयते (प्रैतीति).

(३) कौड. ४।१४; क. शारीरः (शरीरे) पशुभिः + (यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति) चतुर्दशपञ्चदशखण्डयोर्व्यत्यासेन पाठः.

(४) कौड. ४।१५; क. (य एवैष प्राज्ञ आत्मा०).

इति। तं होवाचाजातशत्रुः। मा मैतस्मिन्संवादयिष्ठाः। यमो राजेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥

सुषुप्तः प्राज्ञः प्रज्ञया नित्ययुक्तः प्राणोपाधिकः आत्मा आत्मशब्दप्रत्ययालम्बनम्। येन प्राज्ञेनाऽऽत्मना सह एकतायै एतत्सुप्तः एतत्स्वप्नदर्शनरूपं शयनं प्राप्तः स्वप्न्यया चरति स्वप्नेन गच्छति स्वप्नाननुभवति। सर्वं निखिलं ह प्रसिद्धं अस्मै अस्योपासकस्य इदं प्रत्यक्षादिप्रमाणैरुपलभ्यमानं श्रैष्ठ्याय अधिकत्वाय यम्यते नियमेन प्रवर्तते इत्यर्थः।

शंनन्द.

स[1] होवाच बालाकिः। य एवैष दक्षिणेऽक्षन्पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः। मा मैतस्मिन्संवादयिष्ठाः। नाम्न आत्माऽग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १६ ॥

दक्षिणेऽक्षन् दक्षिणेऽक्षणि दक्षिणे चक्षुषि। नाम्न आत्मा वर्णात्मकशब्दस्य कारणं स्वरूपं वा। ज्योतिष आत्मा प्रकाशमात्रस्य स्वरूपम्। एतेषां नामाग्निज्योतिषां सर्वेषां निखिलानां आत्मा भवति स्वरूपं भवति। शंनन्द.

स[2] होवाच बालाकिः। य एवैष सव्येऽक्षन्पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुः। मा मैतस्मिन्संवादयिष्ठाः। सत्यस्याऽऽत्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवतीति ॥ १७ ॥

सव्येऽक्षन् सव्येऽक्षणि वामे चक्षुषि। सत्यस्य प्राणरूपस्य आत्मा स्वरूपं, विद्युत आत्मा सौदामन्याः स्वरूपं, तेजस आत्मा ज्योतिर्मात्रस्य स्वरूपम्। एतेषां सत्यविद्युत्तेजसां सर्वेषामात्मा भवति सर्वेषां स्वरूपं

(१) कौड. ४।१६; क. दक्षिणेऽक्षन् ( दक्षिणेऽक्षिणि ) नाम्न ( वाच ).

(२) कौड. ४।१७; क. सव्येऽक्षन् ( सव्येऽक्षिणि ) भवतीति ( भवति ).

भवति। शेषं पर्यायपञ्चदशकेऽपि प्रथमपर्यायवद्व्याख्येयम्। इतिः पुरुषोपदेशपरिसमाप्त्यर्थः।

शंनन्द.

उक्तपुरुषाणां कर्ता, हितानाडीषु स्वप्ने वर्तमानः, सुषुप्तौ वाक्चक्षुःश्रोत्रमनसां नामरूपशब्दध्यानैः सहाप्ययस्थानं प्राणाख्यः, प्राणदेवलोकानामुद्भवकारणं शरीरस्थ आत्मा ब्रह्म सर्वपापनाशकज्ञानविषयः

तत[1] उ ह बालाकिस्तूष्णीमास। तं होवाचाजातशत्रुरेतावन्नु बालाका३इ इति। एतावद्धीति होवाच बालाकिः। तं होवाचाजातशत्रुः। मृषा वै किल मा समवादयिष्ठाः। ब्रह्म ते ब्रवाणीति। स होवाच। यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इति। तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति ॥

ततः सव्ये चक्षुषि पुरुषस्य निराकरणानन्तरं उ एव तदनन्तरमेव ह किल बालाकिः बालाकस्यापत्यं तूष्णीमास मौनी बभूव। तं तूष्णींभूतं बालाकिं होवाचाजातशत्रुः। व्याख्यातम्। राजोक्तिमाह—एतावत् इयत्प्रमाणम्। नु वितर्के। उतान्यदपीत्यर्थः। बालाका३इ हे बालाके। प्लुतिर्निर्भर्त्सनार्था। यद्यप्ययोग्यं ब्राह्मणस्य भर्त्सनं, तथाऽपि गर्वपरिहारार्थं क्रियमाणं न विरुद्धम्। गर्वो ह्यस्य महान्तं पुरुषार्थं नाशयन् कण्टकः, कण्टकोद्धरणं च राज्ञा

(१) कौड. ४।१८; आटि. समवादयिष्ठाः ( संवदिष्ठाः ) ब्रवाणीति। स ( ब्रवाणीति। तं स ); क. बालाका३इ ( बालाका३ ) एतावद्धीति ( एतावदिति ) किल ( खलु ) समवादयिष्ठाः ( संवादयिष्ठाः ) ( स होवाच० ) वेदितव्य इति ( वेदितव्यः ); ब्रशंकर. १।४।१६, १८, ३।२।७. किल ( खलु ) समवादयिष्ठाः ( संवदिष्ठाः ); भास्कर. १।४।१६, १७ वैतत्कर्म ( चैतत्कर्म ); रामानुज. १।४।१६, १७, १८ समवादयिष्ठाः ( संवदिष्ठाः ) वैतत्कर्म ( चैतत्कर्म ); निंबार्क. १।४।१६, १७, १८ यस्य वैतत्कर्म ( यस्यैतत्कर्म ); श्रीकंठ. १।४।१६, १७, १८; श्रीकर. १।४।१६, १७, १८, ३।२।१८; वल्लभ. १।४।१६, १७, १८, ३।२।७; विज्ञान. १।१।२३; बलदेव. १।४।१६, ३।२।७.

रणीयमिति न्यायात् । इति अनेन प्रकारेण राजोवाचेत्यन्वयः । एवं राज्ञोक्तेऽपगतगर्वः, एतावद्धि इयदेवोक्तं, नातोऽधिकमहं किंचिद्ब्रह्म वेद्मीति शेषः । इति होवाच बालाकिः एवं किलोक्तवान् बालाकस्यापत्यम् । तं अपगतगर्वं बालाकिं होवाचाजातशत्रुः । व्याख्यातम् । मृषा वै किल मा, मां अजातशत्रुं मृषा वै वितथमेव किल निश्चितं समवादयिष्ठाः । ब्रह्म ते ब्रवाणीति । व्याख्यातम् । एवमुक्त्वा पुनर्बालाकेर्वाग्वदनस्य लज्जाजडस्यापगतगर्वस्यानुग्रहार्थं सः अजातशत्रुः ह किल उवाच उक्तवान् बालाकिं प्रति । राजोक्तिमाह—यः त्वया प्रस्तावितो ब्रह्मत्वेन वै प्रसिद्धः सत्यज्ञानादिलक्षणः बालाके हे बालाके एतेषां आदित्यादीनां पुरुषाणां त्वयोक्तानां पुरुषाणां कर्ता उत्पादकः, यस्य वा यस्य प्रसिद्धस्य वेदान्तेषु । वाशब्दः पूर्वोक्तव्युदासार्थः । किमल्पाभिधानेनेत्यर्थः । एतत् भूतभौतिकरूपं विश्वं कर्म क्रियते इति कर्म । येनोत्पाद्यते इत्यर्थः । सः त्वदुक्तपुरुषैः सह विश्वकर्ता वै प्रसिद्धः सत्यज्ञानादिलक्षणः वेदितव्यः साक्षात्करणीयः श्रवणाद्युपायैः, इति अनेन प्रकारेण स होवाचेत्यन्वयः । तत उ तत एव राजोक्तेरनन्तरं ह किल बालाकिः बालाकस्यापत्यं ब्रह्मजिज्ञासुः समित्पाणिः समित्करः प्रतिचक्रमे प्रतिचक्राम, राजानं प्रति ब्रह्मोपदेशार्थं गृहीतोपायन आजगामेत्यर्थः । वाचैवं व्याहरन् उपायानीति । यदि भवतोऽनुज्ञा, तदा भवन्तं गुरुत्वेन समीप आगच्छामीत्यनेन प्रकारेण प्रतिचक्रामेत्यन्वयः ।

शंनन्द.

[1]तं होवाचाजातशत्रुः । प्रतिलोमरूपमेव तत्स्याद्यत्क्षत्रियो ब्राह्मणमुपनयेत् । एहि व्येव त्वा ज्ञपयिष्यामीति । तं ह पाणावभिपद्य प्रवव्राज । तौ ह सुप्तं पुरुषमाजग्मतुः । तं हाजातशत्रुरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम राजन्निति । स उ ह तूष्णीमेव शिश्ये । तत उ हैनं यष्ट्याऽऽविचिक्षेप । स तत एव समुत्तस्थौ । तं होवाचाजातशत्रुः । क्वैष एतद्बालाके पुरुषोऽशयिष्ट । क्वैतदभूत् । कुत एतदागादिति । तत उ ह बालाकिर्न विजज्ञे ॥

तं अपगतगर्वं ब्राह्मणं दीनतमामवस्थां प्राप्तं ह किल उवाचाजातशत्रुः उक्तवान् राजा । प्रतिलोमरूपमेव विपरीतरूपमेव, न त्वनुरूपं, तत्स्यात् भवेत् यत्क्षत्रियः न्यूनवर्णः क्षतत्राणकारी ब्राह्मणं उत्तमवर्णं द्विजोत्तमं उपनयेत् ब्रह्मविद्यायै दीक्षयेत् । मा च ते भयं यदसौ राजा न वक्ष्यतीत्येवमाह—एहि अस्माज्जनसमाजादेकान्तमागच्छ । व्येव त्वा ज्ञपयिष्यामि । त्वा त्वां गुरुं विज्ञपयिष्याम्येव यज्जानामि तत्तुभ्यं वदन् वञ्चयिष्यामीत्यर्थः। इति अनेन प्रकारेणोक्त्वा अनन्तरं तं बालाकिं ब्रह्मविद्यार्थिनं ह किल पाणावभिपद्य करे सस्नेहं गृहीत्वा प्रवव्राज सभादेशाद्देशान्तरं जगाम । तौ राजबालाकी ह किल सुप्तं पुरुषमाजग्मतुः अनेककर्मश्रमाकुलं शयानं राजपुरुषं कंचिदीयतुः प्रापतवन्तौ । तं सुप्तं पुरुषं ह किल अजातशत्रुः एतन्नामा राजा आमन्त्रयांचक्रे वक्ष्यमाणैर्नामभिः संबोधयांचक्रे । संबोधननामान्याह—बृहन् हे सर्वस्मादप्यधिक प्राण । पाण्डरवासः पाण्डरा आपो वाससी यस्य ते प्राणस्य तस्य संबोधनं हे पाण्डरवासः प्राण । सोम हे सोमात्मक प्राण । राजन् हे दीप्तिमन्प्राण । इतिः संबोधनपरिसमाप्त्यर्थः । सः बृहन्नित्यादिना संबोधितः प्राणः उ ह अपि प्रसिद्धो यो जागर्ति ततोऽन्यो जीवोऽवस्थान्तरात्मत्वेन तूष्णीमेव मौनेनैव शिश्ये शयनं चक्रे । तत उ तदनन्तरमेव ह किल एनं शयानं पुरुषं यष्ट्या वेत्रादितनुकाष्ठेन आविचिक्षेप आसमन्तात्ताडितवान् । सः शयानः पुरुषः प्राणाद्व्यतिरिक्तो यष्टिपातसंजातवेदनः तत एव तदानीमेव, न तु कालान्तरे, समुत्तस्थौ सम्यगुत्थानं कृतवान् । तं होवाचाजातशत्रुः । तं प्राणात्मवादिनं बालाकिम् । व्याख्यातमन्यत् ।

(१) आटि. रूपमेव तत्स्याद्य ( रूपमेव स्याद्य ) मुपनयेत् ( मुपनयेत ); क. रूपमेव तत्स्याद्यत्क्ष ( रूपमेतन्मन्ये यत्क्ष ) मुपनयेत् ( मुपनयते ) एहि ( हि ) बृहन्पा ( बृहत्पा ) सोम राज ( सोमराज ) तूष्णीमेव शिश्ये (शिश्य एव ) यष्ट्याऽऽविचि ( यष्ट्या विचि ) क्वैतदभूत् ( क्वचैतदभूत् ); ब्रशंकर. क्वैतदभूत् ( क्व वा एतदभूत् ); भास्कर. ब्रशंकरवत्; रामानुज. वैतत्कर्म ( चैतत्कर्म ) एनं यष्ट्याऽऽविचिक्षेप ( तं यष्टिना चिक्षेप ); श्रीकंठ. ऽऽविचिक्षेप ( ऱ्याचिक्षेप ).

( एवं प्राणः आत्मा न भवति यो जाग्रदपि न बुद्धवान् * )। क कुत्र एषः प्राणाद्व्यतिरिक्तः शयानः एतत् सर्वचैतन्यशून्यं यथा तथा बालाके हे बालाके, पुरुषः चेतनः प्राणादीनां स्वामी अशयिष्ट शयनमकुरुत। क कस्मिन् प्रदेशे एतत् उक्तं शयनं अभूत् जातम्। उक्तः (पूर्वः) प्रश्नः पुरुषविषये, अपरोऽवस्थाविषये। पुरुषशयनयोर्देशं पृष्ट्वा पुरुषस्याऽऽगमनदेशं पृच्छति—कुतः कस्माद्देशात् एतत् जागरणं प्रति एतदागमनं वा आगात् आगतवान्। प्लुतिर्विचारार्था। विचार्य कथयेत्यर्थः। इति अनेन प्रकारेण, प्रश्नमकरोदिति शेषः। तत उ अपि राज्ञा पृष्टं इ किल बालाकिर्बालाकस्यापत्यं न विजज्ञे न विज्ञातवान्। शंनन्द.

**तं होवाचाजातशत्रुः। यत्रैष एतद्बालाके पुरुषोऽशयिष्ट। यत्रैतदभूत्। यत एतदागादिति। हिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति। तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ति। शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति। तासु तदा भवति॥**

तं अज्ञातस्वप्रश्नं बालाकिम्। होवाच...एतदागादिति। व्याख्यातम्। स्वयं तद्देशविशेषमाह राजा—हिता नाम। प्राणिनां हितकारणाद्धिता इत्यभिधानम्। हृदयस्य हृदयपुण्डरीकसंबन्धिन्यः, हृदयपुण्डरीकान्निर्गता इत्यर्थः। नाड्यः शिराः हृदयात् हृदयपुण्डरीकान्निर्गत्य पुरीततं आन्त्रं हृदयवेष्टनं अभिप्रतन्वन्ति सर्वतः प्रकर्षेण विस्तारयन्ति, वेष्टयन्तीत्यर्थः। तद्यथा, यावत्परिमाणा इत्यर्थः। सहस्रधा केशो विपाटितः बालः सहस्रप्रकारेण विविधं पाटितः, केशस्य सहस्रांश इत्यर्थः। तावत् तत्परिमाणा अण्व्यः सूक्ष्माः पिङ्गलस्य चित्रवर्णस्य अणिम्ना अणुतमेन रसेन, अतिसूक्ष्मेणेत्यर्थः। तिष्ठन्ति पूर्णा वर्तन्ते। सामान्यतो वर्णमुक्त्वा विशेषेण वर्णानाह — शुक्लस्य श्वेतस्य। अणिम्नेति सर्वेषु वर्णेष्वनुवर्तते। कृष्णस्य कालस्य, पीतस्य सुवर्णवर्णस्य, लोहितस्य रक्तस्य इति एवंप्रकारस्य वर्णान्तरस्याप्यणिम्ना रसेन पूर्णास्तिष्ठन्ति। तासु हृदयवेष्टनपुरीतत्प्रतिष्ठितासु हृदयगमनमार्गभूतासु सामीप्येन तदा भवति तस्मिन् शयनकाले वर्तते। न स्वप्नोऽन्यनाडीषु वर्तमानस्य भवतीत्यर्थः। शंनन्द.

**यदा सुप्तः स्वप्नं न कंचन पश्यति। अथास्मिन्प्राण एवैकधा भवति। तदैनं वाक्सर्वैर्नामभिः सहाप्येति। चक्षुः सर्वै रूपैः सहाप्येति। श्रोत्रं सर्वैः शब्दैः सहाप्येति। मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुध्यते। यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते। प्राणेभ्यो देवाः। देवेभ्यो लोकाः॥ १८॥**

(१) स्वप्नस्थानमभिधाय विस्तृतं सुषुप्तस्थानं सजागरणमाह — यदा यस्मिन्काले। सुप्तः स्वप्नं न कंचन पश्यति इत्यादि लोका इत्यन्तं व्याख्यातम्। अयमर्थः — नाडीद्वारा पुरीतद्वेष्टनेऽनेकनाडीकारणे हृदयपुण्डरीके स्थिताकाशान्तर्वर्तिक्रियाशक्त्युपाधावानन्दात्मनि सुषुप्तिं प्राप्य तत एव जागरणमागच्छति स उपगताधाराधेयभेदो विज्ञानानन्दस्वरूपो ब्रह्मशब्दाभिधेयः, न तु भवदभिमतः प्राणादिरधिदैवतमथाध्यात्मं चेति। शंनन्द.

(२) 'जगद्वाचित्वात्' — कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते— 'यो वै बालाक...... वेदितव्यः' इति। तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते, उत मुख्यः प्राणः, उत परमात्मेति विशयः। किं तावत् प्राप्तम्। प्राण इति। कुतः। 'यस्य वैतत्कर्म' इति श्रवणात्। परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात्। जीवो वाऽयमिह वेदितव्यतयोपदिश्यते। तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुं 'यस्य वैतत्कर्म' इति।

---

* ग्रन्थोऽयं पुरस्तात् 'शयनं चक्रे' इत्यतः परं भवितुमर्हति। प्रमादादत्र पतित इति भाति।

(१) क. हृदयस्य ( पुरुषस्य ) स्याणिम्ना ति ( स्याणिम्न्यस्ति ) लोहितस्येति ( लोहितस्य च ).

(१) क. तदैनं ( तदेनं ) ध्यानैः ( ध्यातैः ) लोकाः + (स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः); भास्कर. सुप्तः ( सुषुप्तः ) त्रेवमेवैतस्मा ( त्रेवमेतस्मा ); रामानुज. कंचन ( कथंचन ); श्रीकर. सुप्तः स्वप्नं न कंचन ( सुप्तो न कंचन स्वप्नं ).

एवं प्राप्ते ब्रूमः— परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात् । कस्मात् । उपक्रमसामर्थ्यात् । इह हि बालाकिरजातशत्रुणा सह 'ब्रह्म ते ब्रवाणि' इति संवदितुमुपचक्रमे । स च कतिचिदादित्याद्यधिकरणान् पुरुषान् अमुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव । तमजातशत्रुः 'मृषा वै खलु मा संवदिष्ठाः ब्रह्म ते ब्रवाणि' इत्यमुख्यब्रह्मवादितया अपोद्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप । यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो बाध्येत । तस्मात्परमेश्वर एवायं भवितुमर्हति । कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते । 'यस्य वैतत्कर्म' इत्यपि नायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः । तयोरन्यतरस्याप्यप्रकृतत्वादसंशब्दितत्वाच्च । नापि पुरुषाणामयं निर्देशः । 'एतेषां पुरुषाणां कर्ता' इत्येव तेषां निर्दिष्टत्वात् लिङ्गवचनविभागाच्च । नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वाऽयं निर्देशः । कर्तृशब्देनैव तयोरुपात्तत्वात् । पारिशेष्यात् प्रत्यक्षसंनिहितं जगत् सर्वनाम्ना एतच्छब्देन निर्दिश्यते । क्रियते इति च तदेव जगत्कर्म । ननु जगदप्यप्रकृतं असंशब्दितं च । सत्यमेतत्, तथाऽप्यसति विशेषोपादाने साधारणेनाऽऽर्थेन संनिधानेन संनिहितवस्तुमात्रस्यायं निर्देश इति गम्यते, न विशिष्टस्य कस्यचित्, विशेषसंनिधानाभावात् । पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानादविशेषितं जगदेव इहोपादीयते इति गम्यते । एतदुक्तं भवति—य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण, यस्य कृत्स्नमेव जगदविशेषितं कर्म इति । वाशब्दः एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः । ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तिताः तेषामब्रह्मत्वख्यापनाय विशेषोपादानम् । एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतया उपदिश्यते । परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः ।

१।४।१६

'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके' — अपि च नैवात्र विवदितव्यं जीवप्रधानं वा इदं वाक्यं स्याद्ब्रह्मप्रधानं वेति । यतः अन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थं अस्मिन्वाक्ये जैमिनिराचार्यो मन्यते । कस्मात् । प्रश्नव्याख्यानाभ्याम् । प्रश्नस्तावत् सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते — 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्' इति । प्रतिवचनमपि — 'यदा सुप्तः स्वप्नं ...... एवैकधा भवति' इत्यादि, 'एतस्मादात्मनः प्राणा ...... देवेभ्यो लोकाः' इति च । सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति, परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायते इति वेदान्तमर्यादा । तस्मात् यत्रास्य जीवस्य निःसंबोधः स्वच्छतारूपः स्वापः उपाधिजनितविशेषविज्ञानरहितं स्वरूपं, यतस्तद्भ्रंशरूपमागमनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते ।

* ब्रशंकर. १।४।१८

तद्यथा क्षुरः क्षुरधानेऽवहितः स्यात् । विश्वंभरो वा विश्वंभरकुलाये । एवमेवैष प्रज्ञ आत्मेदं शरीरमात्मानमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः । तमेतमात्मानमेत आत्मानोऽन्ववस्यन्ति । यथा श्रेष्ठिनं स्वाः । तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते । यथा वा श्रेष्ठिनं स्वा भुञ्जन्ति । एवमेवैष प्रज्ञात्मैतैरात्मभि-

---

* भास्करादयः ब्रशंकरवत् । छाउ. ६।८।१ इत्यत्रापि भाष्यभागा द्रष्टव्याः ।

(१) कौउ. ४।१९; क. ऽवहितः (वोपहितः) (स्यात्॰) प्रज्ञ आत्मेदं श (प्रज्ञात्मेदं श) ऽन्ववस्यन्ति (ऽन्ववस्यन्ते) यथा वा श्रेष्ठिनं स्वा (यथा वा स्वाः श्रेष्ठिनं) यथा श्रेष्ठी स्वैः । एवं वैतमात्मानमेत आत्मानोऽन्ववस्यन्ति । यथा श्रेष्ठिनं स्वाः (एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति); ब्रशंकर. १।४।१६, १७, २।३।२७ यथा वा श्रेष्ठिनं स्वा (यथा वा स्वाः श्रेष्ठिनं) यथा श्रेष्ठी स्वैः । एवं वैतमात्मानमेत आत्मानोऽन्ववस्यन्ति । यथा श्रेष्ठिनं स्वाः (एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति); भास्कर. १।४।१६; रामानुज. १।४।१६, १७ ब्रशंकरवत्; निंबार्क. १।४।१७; श्रीकंठ. १।४।१७ प्रज्ञात्मैतै (प्राज्ञ आत्मैतै) शेषं रामानुजवत्; श्रीकर. १।४।१६, १७, २।३।२५ ब्रशंकरवत्; वल्लभ. १।४।१८, २।३।२७.

**भुङ्क्ते। यथा श्रेष्ठी स्वैः। एवं वैतमात्मानमेत आत्मानोऽन्ववस्यन्ति। यथा श्रेष्ठिनं स्वाः॥**

कथमसौ ब्रह्मशब्दाभिधेय उपलब्धुं शक्यते इति बालाकेर्हृदयगतां शङ्कामपाकरिष्यन् दृष्टान्तपुरःसरमाह—तत् तत्रोपलब्धौ दृष्टान्तः। यथा दृष्टान्ते क्षुरः तीक्ष्णाग्रः प्रसिद्धः क्षौरकर्मणि, क्षुरधाने, क्षुरो धीयते यस्मिन्पात्रे तत्क्षुरधानं, तस्मिन् अवहितः प्रक्षिप्तः स्यात् भवेत्। अयं हृदयपुण्डरीके शरीरैकदेशे उपलब्धौ दृष्टान्तः। इदानीं सर्वशरीरोपलब्ध्यर्थं दृष्टान्तमाह—विश्वंभरो वा। विश्वंभरोऽग्निः। वाशब्दो दृष्टान्तान्तरे। विश्वंभरकुलाये अग्निनीडेऽरण्यादौ। एवमेव अनेनैव प्रकारेण एषः ब्रह्म ते ब्रवाणीति यो भवता प्रकृतः प्रज्ञः नित्यस्वयंप्रकाशप्रज्ञायुक्तः आत्मा अस्मत्प्रत्ययव्यवहारयोग्यः। इदंशरीरं इदंशरीरे भवं, एतच्छरीरस्थेन्द्रियमित्यर्थः। आत्मानं आत्मशब्दप्रत्ययालम्बनं अनुप्रविष्टः सूक्ष्ममनु प्रवेशं कृतवान्। प्रवेशावधिमाह—आ लोमभ्य आ नखेभ्यः। लोमनखपर्यन्तं, नखाग्रशरीरबहिर्गतकेशान् मुक्त्वा समग्रे शरीरे इत्यर्थः। स्वप्नसुषुप्तिजागरणेषु प्राणाद्यतिरिक्तमात्मानमभिधाय, तस्य च सर्वस्मिन् शरीरे हृदये च सामान्यविशेषाभ्यां व्याप्तिं च, इदानीं तस्यैव स्वामित्वं विवक्षुर्दृष्टान्तपुरःसरमाह—तं आ लोमभ्य आ नखेभ्यः शरीरे सामान्यविशेषाभ्यां प्रविततं एतं बुद्धिसाक्षिणं आत्मानं अस्मत्प्रत्ययव्यवहारयोग्यं वस्तुत आनन्दात्मानं एते अपगताधिदैवभेदा अध्यात्मं प्रत्यक्षा इव आत्मानः वागाद्याः अन्ववस्यन्ति आत्मनो निश्चयमनु पश्चान्निश्चयं कुर्वन्ति। तत्र दृष्टान्तमाह—यथा दृष्टान्ते श्रेष्ठिनं, श्रेष्ठत्वं प्रधानत्वं, स गुणो यस्यास्ति स तु श्रेष्ठी, तं प्राधान्यवन्तं, कुटुम्बिनमित्यर्थः। स्वाः स्वसंबन्धिनः ज्ञात्युपलक्षिता उपजीवकाः। अन्ववस्यन्तीत्यनुवर्तते। निश्चये प्राधान्यमुक्त्वा भोगेऽपि प्राधान्यं वक्तुं दृष्टान्तमाह—तत् तत्र भोगप्राधान्ये यथा दृष्टान्ते श्रेष्ठी कुटुम्बी स्वैः ज्ञात्यादिभिः सह भुङ्क्ते अन्नमत्ति। यथा वा यद्वत्। वाशब्दः प्रकारान्तरेण दृष्टान्तार्थः। श्रेष्ठिनं प्रधानं कुटुम्बिनं स्वाः ज्ञात्याद्याः भुञ्जन्ति अदन्ति। एवमेव अनेन प्रकारेण, न त्वन्यथा। एष प्रज्ञात्मा। व्याख्यातम्। ज्ञानक्रियाशक्त्युपाधिरित्यर्थः। एतैः प्रतिप्राणिव्यवस्थितैः आत्मभिः आत्मशब्दप्रत्ययालम्बनैर्वागादिभिः सह भुङ्क्ते अत्ति। अथवा दृष्टान्तदार्ष्टान्तिकयोस्तृतीया करणार्था। न हि निर्मनुष्यकुटुम्बिनो द्रव्यवतोऽपि भोगः संभवति, परैर्द्रव्यापहारादेः संभवात्। एवमसङ्गोदासीनस्य चितिस्वभावस्याऽऽत्मनोऽपि विना करणादिकं न भोगः। यथा श्रेष्ठी स्वैः। व्याख्यातम्। उत्पन्ने कार्ये प्रधानकुटुम्बी येन प्रकारेण स्वैर्ज्ञातिभिः सह पर्यालोच्यान्ववस्यति, एवमेतैरात्मभिरयमात्मेति बहिरेवावगन्तव्यम्। तमेतमात्मानमित्यस्य प्रपञ्चार्थमाह— एवं वा अनेनैव यथा श्रेष्ठिनं स्वा इति वक्ष्यमाणेन प्रकारेण एतं इन्द्रियाणामधिष्ठातारं आत्मानमेत आत्मानोऽन्ववस्यन्ति। यथा श्रेष्ठिनं स्वाः। व्याख्यातम्। अत्राऽऽद्यन्तपर्याययोः सामान्यविशेषाभ्यां पुनरुक्तिपरिहारः। अथवा श्रेष्ठिनं स्वा इत्यस्य दार्ष्टान्तिक एवं वा इत्यादिः। न त्वात्मनो निश्चयमन्तरेणोपभोगः कर्तुं शक्यः। अस्मिन् पक्षे 'यथा श्रेष्ठी स्वैः' 'यथा श्रेष्ठिनं स्वाः' इति वचनद्वयं निगमनार्थत्वेन व्याख्येयम्। अथवा निश्चयो द्व्यात्मको भवति, आपत्कालीनः अनापत्कालीनश्च। तत्रानापत्कालीनः प्रधानबुद्ध्यनुसारी निश्चयो मृगयायां मन्त्रिणा। तादृशं हृदि निधाय तमेवमात्मानमिति प्रथममुक्तम्। आपत्कालीनस्तु बन्धुभिः सह कुटुम्बिनः, कुटुम्बिना सह बन्धूनां च विचार्य भवति। तादृशमङ्गीकृत्योक्तं यथा श्रेष्ठी स्वैरेवं वेत्यादि। अस्मिन्पक्षे यथा वा श्रेष्ठिनं स्वा भुञ्जन्तीत्यस्यैवमात्मानं प्राणा भुञ्जन्त इति। इदं बहिरेवावगन्तव्यम्।

शंनन्द.

**स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः। स यदा विजज्ञेऽथ हत्वाऽसुरान्विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय। तथो एवैवंविद्वान्सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद॥ १९॥**

**इति चतुर्थोऽध्यायः॥**

(१) क. सर्वेषां दे (सर्वेषां च दे) सर्वेषां भू (सर्वेषां च भू); रामानुज. सर्वेषां भू (सर्वेषां च भू); श्रीकंठ. रामानुजवत्.

अस्याऽऽत्मनो ज्ञानेन कस्य किं फलं जातमिति बालाकिशङ्कां व्यावर्तयितुमजातशत्रुराह—सः प्रसिद्धः प्रतर्दनस्य गुरुः यावत् यावन्तं कालं ह किल, श्रुतमस्माभिः पूर्वेभ्य इत्यर्थः। वै प्रसिद्धः प्रजापतिशिष्य एकाधिकशतवर्षब्रह्मचारी ब्रह्मविद्यार्थं, इन्द्रः परमैश्वर्यसंपन्नस्त्रिलोकीपतिः एतं मयोक्तं सर्वेन्द्रियोपजीव्यं आत्मानं आनन्दात्मानं न विजज्ञे विशेषेणायमसाविति न ज्ञातवान्, तावत् तावन्तं कालं एनं आत्मज्ञानशून्यमिन्द्रं असुराः शास्त्रनिषिद्धार्थप्रवृत्ताः बागादयः विरोचनादयो वा अभिबभूवुः अभिभवं पराभवं चक्रुः। सः असुरैरभिभूतः यदा यस्मिन्काले 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' (छाउ. ८।७।१) इति प्रजापतिवाक्यं सभायां श्रुत्वाऽनन्तरं विजज्ञे 'य एषोऽक्षिणि पुरुषो दृश्यते' (छाउ. ८।७।४) इत्यादेः प्रजापतेरुपदेशाद्विशेषेणायमसाविति ज्ञातवान्, साक्षात्कृतवानित्यर्थः। अथ तदा हत्वा निपात्य असुरान् उक्तान् विजित्य विजयं प्राप्य, त्रिलोकीं स्वाधीनां विधायेत्यर्थः। सर्वेषां निखिलानां देवानां अग्न्यादीनां श्रैष्ठ्यं श्रेष्ठत्वं प्राधान्यं, स्वाराज्यं स्वराजस्य भावः(वं) अप्रतिहतेच्छत्वं, आधिपत्यं गर्भदासानिव सर्वानधिष्ठाय पालयितृत्वमाधिपत्यं परीयाय सर्वतो गतवान्। तथो एव तद्वदेव, न त्वन्यथा। एवंविद्वान् अवस्थात्रयातीतः प्राणादिभिराश्रयणीयोऽसङ्गोदासीनस्वभाव आकाशवत्सर्वगतोऽपि शरीरे हृदये च सामान्यविशेषाभ्यामुपलभ्यमानचैतन्योऽपगतसर्वधर्म आनन्दात्माऽहमस्मीत्येवंज्ञानवान्। सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यम्। भूतानां स्थिरजङ्गमानाम्। व्याख्यातमन्यत्। पर्येति प्राप्नोति। यः शमादिसाधनचतुष्टयसंपन्नः। एवं वेद इन्द्रवदुक्तमात्मानं जानीते। य एवं वेद। व्याख्यातम्। वाक्याभ्यास उपनिषत्समाप्त्यर्थः।

शंनन्द.

इति श्रीपरमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यश्रीशंकरानन्दभगवतः कृतौ कौषीतकिब्राह्मणोपनिषद्दीपिकायां चतुर्थोऽध्यायः॥

---

# कौषीतकिसंहितोपनिषत्

## प्रथमोऽध्यायः

ॐ ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। मयि भर्गः। मयि महः। वाङ्मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम्। आविराविर्मय्याभूर्वेद सा मत्साणीः। ऋतं मा मा हिंसीः। अनेनाधीतेनाहोरात्रान्त्संवसामि। अग्न इळा नम इळा। नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः। नमोऽस्तु देवेभ्यः। शिवा नः शंतमा भव सुमृळीका सरस्वती। मा ते व्योम संदृशि। अदब्धं मन इषिरं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीः॥

(१) शाखा. ७।१.

माण्डूकेयानां संहितोपासनायां पृथिवी द्यौः वायुराकाशो वा अधिदैवतं, वाक् मनः प्राणश्च अध्यात्मम्

अथातः संहिताया उपनिषत्। पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। वायुः संहिता। इति शौरवीरो माण्डूकेयः। आकाशः संहितेत्यस्य

(१) शाखा. ७।२.

माक्षव्यो वेदयांचक्रे । स ह्यपरिवृतो मेने न मेऽस्य पुत्रेण समगादिति । परिवृतो मेन इत्यागस्त्यः । समानं ह्यत्र पितुश्च पुत्रस्य च वायुश्चाऽऽकाशश्च । इत्यधिदैवतम् । अथाध्यात्मम् । वाक् पूर्वरूपम् । मन उत्तररूपम् । प्राणः संहिता । इति शौरवीरो माण्डूकेयः । अथ ह स्मास्य पुत्र आह दीर्घः । मनसा वा अग्रे कीर्तयति । तद्वाचा वदति । तस्मान्मन एव पूर्वरूपम् । वागुत्तररूपम् । मनो वाक् प्राणस्त्वेव संहितेति । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहितः स्वर्गं लोकं गमयति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति । इति नु माण्डूकेयानाम् ॥

शाकल्यस्य संहितोपासनायां पृथिवी द्यौः वायुः वृष्टिः पर्जन्यश्च अधिदैवत, कृत्स्नः पुरुषः वाक्प्राणमनःसहितः अध्यात्मम्

[1]अथ शाकल्यस्य । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वायुः संहिता । वृष्टिः संधिः । पर्जन्यः संधाता । तदुतापि यत्रैतद्बलवदनुगृह्णन्महामेघा वृष्टिं वर्षन्ति । द्यावापृथिव्यौ समधाताम् । इत्यधिदैवतम् । अथाध्यात्मम् । पुरुषोऽयं सर्वमाण्डम् । द्वे विदले भवतः । तत्रेदमेव पूर्वरूपम् । इदमुत्तररूपम् । तत्रायमन्तरेणाऽऽकाशो यथाऽसौ द्यावापृथिव्योरन्तरेणाऽऽकाशः । तस्मिन्नेतस्मिन्नाकाशे प्राण आयत्तो भवति यथाऽमुष्मिन्नाकाशे वायुरायत्तो भवति । यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि । यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुः । यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयम् । यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेतः । एवमिव ह स्म सर्वत आत्मानमनुविधायाऽऽह । इदमेव पूर्वरूपम् । इदमुत्तररूपम् । मनो वाक् प्राणस्त्वेव संहितेति । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहितः स्वर्गं लोकं गमयति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

विश्वामित्रस्य संहितोपासनायां पृथिवी द्यौः वायुः दिशः आदित्यश्च अधिदैवतं, वाक् मनः प्राणः श्रोत्र चक्षुश्च अध्यात्मम्

[2]पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । वायुः संहिता । दिशः संधिः । आदित्यः संधाता । इति विश्वामित्रः । इत्यधिदैवतम् । अथाध्यात्मम् । वाक्पूर्वरूपम् । मन उत्तररूपम् । प्राणः संहिता । श्रोत्रं संधिः । चक्षुः संधाता । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

सूर्यदत्तस्य संहितोपासनायां अग्निः चन्द्रमा विद्युच्च अधिदैवतं, वाक् मनः सत्यं च अध्यात्मम्

[3]अग्निः पूर्वरूपम् । चन्द्रमा उत्तररूपम् । विद्युत्संहिता । इति सूर्यदत्तः । इत्यधिदैवतम् । अथाध्यात्मम् । वाक् पूर्वरूपम् । मन उत्तररूपम् । सत्यं संहिता । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

राधेयस्य संहितोपासनायां पृथिवी द्यौः कालश्च अधिदैवतं, वाक् मनः आत्मा च अध्यात्मं, वाक् मनः विद्या चेति पौष्करसादेर्मते विशेषः

[4]पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । कालः संहिता । इति राधेयः । इत्यधिदैवतम् । अथाध्यात्मम् । वाक् पूर्वरूपम् । मन उत्तररूपम् । आत्मा संहिता । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

[5]वाक्पूर्वरूपम् । मन उत्तररूपम् । विद्या संहिता । इति पौष्करसादिः । स य एवमेतां संहितां

(१) शाखा. ७१३.

(१) शाखा. ७१४. (२) शाखा. ७१५.
(३) शाखा. ७१६. (४) शाखा. ७१७.

वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

प्राणोपासने दोषवादिनः शापः

[१]अथातोऽनुव्याहाराः । प्राणो वंश इति विद्यात् । स य एनं प्राणं वंशं ब्रुवन्परमुपवदेच्छक्नुवन्कश्चिच्चेन्मन्येत । प्राणं वंशं समधाः । प्राणं वंशं समधित्सितुं न शक्नोषीत्याथ । प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्मन्येत । प्राणं वंशं समधित्सीः । तन्नाशकः संधातुम् । प्राणस्त्वा वंशो हास्यतीत्येवैनं ब्रूयात् । यथानुकथा च ब्रुवन् वाऽब्रुवन्वा ब्रूयादभ्याशमेव यत्तथा स्यात् । न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने चन ब्राह्मणं ब्रूयात् । नमोऽस्तु ब्राह्मणेभ्यः । इति शौरवीरो माण्डूकेयः ॥

[२]स यदि प्राणं वंशं ब्रुवन्तं परमुपवदेच्छक्नुवन्तं चेन्मन्येत । प्राणं वंशं समधित्सिपम् । प्राणं वंशं समधित्सितुं न शक्नोपीत्याथ । प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्तं मन्येत । प्राणं वंशं समधित्सीः । तन्नाशकः संधातुम् । प्राणस्त्वा वंशो हास्यतीत्येवैनं ब्रूयात् । यथानुकथा च ब्रुवन्तं वाऽब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात् । न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने चन ब्राह्मणं ब्रूयात् । नमोऽस्तु ब्राह्मणेभ्यः । इति शौरवीरो माण्डूकेयः ॥

संहितायाः पदस्य क्रमस्य च सहोपासना

[३]अथातो निर्भुजप्रवादाः । पृथिव्यायतनं निर्भुजम् । दिवायतनं प्रतृण्णम् । अन्तरिक्षायतनमुभयमन्तरेण । स य एनं निर्भुजं ब्रुवन्परमुपवदेत् । पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यदि प्रतृण्णं ब्रुवन् परमुपवदेत् । दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्युभयमन्तरेण ब्रुवन्परमुपवदेत् । अन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात् । यद्धि संधिं विवर्तयति तन्निर्भुजस्य रूपम् । अथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृण्णस्य । अग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति । अन्नाद्यकामो निर्भुजं ब्रूयात् । स्वर्गकामः प्रतृण्णम् । उभयकाम उभयमन्तरेण । स य एनं निर्भुजं ब्रुवन्परमुपवदेत् । अच्योष्टा अवराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । अथ यदि प्रतृण्णं ब्रुवन्परमुपवदेत् । अच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येवैनं ब्रूयात् । यस्त्वेवोभयमन्तरेणाऽऽह तस्य नास्त्यपवादः । यथानुकथा च ब्रुवन्वाऽब्रुवन्वा ब्रूयादभ्याशमेव यत्तथा स्यात् । न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने चन ब्राह्मणं ब्रूयात् । नमोऽस्तु ब्राह्मणेभ्यः । इति शौरवीरो माण्डूकेयः ॥

[१]अथ खल्वाहुर्निर्भुजवक्त्राः । पूर्वमेवाक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । यकारवकारावन्तरेण सा संहितेति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥

[२]अथ वै वयं ब्रूमो निर्भुजवक्त्राः स इति ह स्माऽऽह ह्रस्वो माण्डूकेयः । पूर्वमेवाक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । तद्याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण । येन संधिं विवर्तयति । येन मात्रामात्रं विभजति । येन स्वरात्स्वरं विज्ञापयति । सा संहितेति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

[३]अथ ह स्मास्य पुत्र आह मध्यमः प्रातियोधीपुत्रो मगधवासी । पूर्वमेवाक्षरं पूर्वरूपम् । उत्तरमुत्तररूपम् । तद्याऽसौ मात्रा संधिविज्ञापनी साम तद्भवति । सामैवाहं संहितां मन्य इति । तदेतदृ-

(१) शाआ. ७।८.
(२) शाआ. ७।९.
(३) शाआ. ७।१०.

(१) शाआ. ७।११.
(२) शाआ. ७।१२.
(३) शाआ. ७।१३.

चाऽभ्युदितम् । मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुरिति ( ऋसं. २।२३।१६ ) । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

कौण्ठरव्यस्य अवरपरपराख्या संहितोपासना

वाक् प्राणेन संधीयत इति कौण्ठरव्यः । प्राणः पवमानेन । पवमानो विश्वैर्देवैः । विश्वे देवाः स्वर्गेण लोकेन । स्वर्गो लोको ब्रह्मणा । सैपाऽवरपरा संहिता । स य एवमेतामवरपरां सहितां वेद । एवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषाऽवरपरा संहिता । स यदि परेण वोपसृष्टः स्वेन वाऽर्थेनाभिव्याहरेत् । अभिव्याहरन्नेव विद्यात् । दिवं संहिताऽगमद्विदुषो देवानभिव्याहारार्थमेवं भविष्यतीत्येतेनावरपरेण । तथा हैव तद्भवति ॥

भार्गवस्य अदितिरूपा संहिता

माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संहिता । इति भार्गवः । तदेतदेकमेव सर्वमभ्यनूक्तम् । माता च ह्येवेदं पिता च प्रजा च सर्वम् । सैषाऽदितिसंहिता । अदितिर्ह्येवेदं सर्वं यदिदं किंचिद्विश्वभूतम् । तदेतदृचाऽभ्युदितम् । अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वमिति ( ऋसं. १।८९।१० ) । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

स्थविरशाकल्यस्य प्रजापतिसंहिता

जाया पूर्वरूपम् । पतिरुत्तररूपम् । पुत्रः संहिता । रेतः संधिः । प्रजननं संधानम् । इति स्थविरः शाकल्यः । सैषा प्रजापतिसंहिता । स य एवमेतां सहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

काश्यपस्य सत्यसंहिता

श्रद्धा पूर्वरूपम् । श्रद्धोत्तररूपम् । कर्म संहिता । सत्यं संधानम् । इति काश्यपः । सैषा सत्यसंहिता । तदाहुर्यत्सत्यसंधा देवा इति । स य एवमेतां सहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

पञ्चालचण्डस्य ताक्ष्यस्य च संहिता

वाक् संहितेति पञ्चालचण्डः । वाचा वै वेदाः संधीयन्ते । वाचा छन्दांसि । वाचा मित्राणि संदधति । तद्यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति । वाक् तदा प्राणं रेळ्हि । अथ यत्स्वपिति वा तूष्णीं वा भवति प्राणे तदा वाग्भवति । प्राणस्तदा वाचं रेळ्हि । तावन्योन्यं रेळ्हः । तदेतदृचाऽभ्युदितम् । एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति ( ऋसं. १०।११४।४ ) । वाग्वै माता । प्राणो वत्सः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

बृहद्रथन्तरेण रूपेण संहिता संधीयत इति ताक्ष्यः । वाग्वै रथन्तरस्य रूपम् । प्राणो बृहतः । उभाभ्यामु खलु संहिता संधीयते वाचा च प्राणेन च । एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षत इति ताक्ष्यः । एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षत इति ताक्ष्यः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

(१) शाआ. ७।१४.
(२) शाआ. ७।१५.
(३) शाआ. ७।१६.
(१) शाआ. ७।१७.
(२) शाआ. ७।१८.
(३) शाआ. ७।१९.

जारत्कारवस्यार्तभागस्य गतिनिवृत्तिस्थिति-
सहिता कालसंहिता

गतिः पूर्वरूपम् । निवृत्तिरुत्तररूपम् । स्थितिः संहिता। इति जारत्कारव आर्तभागः । तस्यामेतस्यां संहितायां ध्वंसयो निमेषाः काष्ठाः कलाः क्षणा मुहूर्ता अहोरात्रा अर्धमासा मासा ऋतवः संवत्सराश्च संधीयन्ते । सैषा संहितैतान्कालान्संदधाति । कालो गतिनिवृत्तिस्थितीः संदधाति । गतिनिवृत्तिस्थितिभिरिदं सर्वं संधीयते । इत्यधिदैवतम् । अथाध्यात्मम् । भूतं पूर्वरूपम् । भविष्यदुत्तररूपम् । भवत्संहिता । इति कालसंधिः । तदेतदृचाभ्युदितम् । महत्तन्नाम गुह्यं पुरुस्पृग्येन भूतं जनयो येन भव्यम् । प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्चेति (ऋसं. १०।५५।२) । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

वालिशिखायनेः सर्वभूतसंहिता

अथातो वालिशिखायनेर्वचः । पञ्चेमानि महाभूतानि भवन्तीति ह स्माऽऽह वालिशिखायनिः । पृथिवी वायुराकाशमापो ज्योतींषि । तानि मिथः संहितानि भवन्ति । अथ यान्यन्यानि क्षुद्राणि महाभूतैः संधीयन्ते । सैषा सर्वभूतसंहिता । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥

लौहिक्यस्य वाग्ब्रह्मोपासना

सैर्वा वाग्ब्रह्मेति ह स्माऽऽह लौहिक्यः । ये तु केचन शब्दा वाचमेव तां विद्यात् । तदप्येतदृषिराह । अहं रुद्रेभिर्वसुभिश्चरामीति ( ऋसं. १०।१२५।१ ) । सैषा वाक् सर्वशब्दा भवति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति । यथा चैतद्ब्रह्म कामरूपि कामचारि भवति । एवं हैव स सर्वेषु भूतेषु कामरूपी कामचारी भवति । य एवं वेद य एवं वेद ॥

इति प्रथमोऽध्यायः ॥

---

## द्वितीयोऽध्यायः

संवत्सरसंमित आत्मा उपास्यः

ॐ प्राणो वंश इति ह स्माऽऽह स्थविरः शाकल्यः । तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमेवैतस्मिन्प्राणे सर्व आत्मा समाहितः । तस्यैतस्याऽऽत्मनः प्राण ऊष्मरूपम् । अस्थीनि स्पर्शरूपम् । मज्जानः स्वररूपम् । मांसं लोहितमित्येतच्चतुर्थमक्षररूपमिति । त्रयं त्वेव न एतत्प्रोक्तम् । इति ह स्माऽऽह ह्रस्वो माण्डूकेयः । तस्यैतस्य त्रयस्य त्रीणीतः षष्टिः शतानि भवन्ति संधीनां त्रीणीतः । तानि सप्त विंशतिः शतानि भवन्ति । सप्त वै विंशतिः शतानि संवत्सरस्याहोरात्राणाम् । तत्संवत्सरस्याहोरात्राण्याप्नोति । स य एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद । संवत्सरस्य सायुज्यं सलोकतां सरूपतां सभक्षतामश्नुते । पुत्री पशुमान्भवति । सर्वमायुरेति । इत्यस्याऽऽरुणिकेयो वेदयांचक्रे ॥

अहःसंमित आत्मा उपास्यः

अथ कौण्ठरव्यः । त्रीणि षष्टिः शतान्यक्षराणाम् । त्रीणि षष्टिः शतान्यूष्मणाम् । त्रीणि षष्टिः शतानि संधीनाम् । यान्यक्षराण्यवोचामाहानि तानि । यानूष्मणो रात्रयस्ताः । यान्संधीनवोचामाहोरात्राणां ते संधयः । इत्यधिदैवतम् । अथाध्यात्मम् । यान्यक्षराण्यधिदैवतमवोचामास्थीनि

(१) शाखा. ७।२०.
(२) शाखा. ७।२१.
(३) शाखा. ७।२२.

(१) शाखा. ८।१.
(२) शाखा. ८।२.

तान्यध्यात्मम् । यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्मम् । एष उ ह वै संप्रति प्राणो यन्मज्जा । एतद्रेतः । न वा ऋते प्राणाद्रेतसः सिद्धिरस्ति । यद्वा ऋते प्राणाद्रेतः सिच्येत्तत्पूयेत् । न संभवेत् । यान्संधीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम् । तस्यैतस्यास्थ्नां मज्ज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि भवन्ति । संधीनां पञ्चेतः । तदशीतिः सहस्रं भवति । अशीतिः सहस्रं वार्कलिनो बृहतीरहरहनि संपादयन्ति । स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतदहःसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेद । अह्नां सायुज्यं सलोकतां सरूपतां सभक्षतामश्नुते । पुत्री पशुमान्भवति । सर्वमायुरेति ॥

अक्षरसंमितः सर्वभूतस्थितः अशरीरः प्रज्ञात्मा आदित्यात्मा विविधरूपैः उपासनाविषयतां गतः

सर्वस्य

[१]चत्वारः पुरुषा इति बाध्वः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । शरीरपुरुष इति यमवोचाम य एवायं दैहिक आत्मा । तस्यैतस्य योऽयमशरीरः प्रज्ञात्मा स रसः । छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव । तस्यैतस्याकारो रसः । वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदमिति । तस्यैतस्य ब्रह्म रसः । तस्माद्ब्रह्मिष्ठं ब्रह्माणमृत्विजं कुर्वीत यो यज्ञस्योल्बणं विद्यात् । महापुरुष इति यमवोचाम संवत्सर एव । तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् । तदेतदृचाऽभ्युदितम् ॥

[२]चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेति ( ऋसं. १।११५।१ ) । एतमेवानुविधां संहितां संधीयमानां मन्य इति ह स्माऽऽह बाध्वः । एतमु हैव बह्वृचा महदुक्थे मीमांसन्ते । एतमग्नावध्वर्यवः । एतं महाव्रते छन्दोगाः । एतमस्याम् । एतमन्तरिक्षे । एतं दिवि । एतमग्नौ । एतं वायौ । एतं चन्द्रमसि । एतं नक्षत्रेषु । एतमप्सु । एतमोषधीषु । एतं सर्वेषु भूतेषु । एतमक्षरेषु । एतमेव ब्रह्मेत्युपासते । तदेतदृचाऽभ्युदितम् ॥

[१]उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ( ऋसं. १।५०।१० ) । स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति । दुग्धदोहा अस्य वेदा भवन्ति । अभागो वाचि भवति । अभागोऽनूक्ते । तदेतदृचाऽभ्युदितम् ॥

[२]यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थामिति ( ऋसं. १०।७१।६ ) । नास्यानूक्ते वाचो भागो अस्तीत्येव तदाह । तन्न परस्मा एतदहः शंसेत् । नाग्निं चिनुयात् । न महाव्रतेन स्तुयात् । नैतदात्मनोऽपि हीया इति । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विप्रदृश्येते ॥

अरिष्टदर्शनविद्या

[३]चन्द्रमा इवाऽऽदित्यो दृश्यते । न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठा । व्यस्त पायुर्भवति । संपरेतोऽस्याऽऽत्मा न चिरमिव जीविष्यतीति विद्यात् । स यत्करणीयं मन्येत तत्कुर्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येत् । न वा पश्येत् । तदप्येवमेव विद्यात् । अथापि च्छिद्रा छाया भवति । न वा भवति । तदप्येवमेव विद्यात् । अथापि च्छिद्र इवाऽऽदित्यो रथनाभिरिवाऽऽख्यायेत् । तदप्येवमेव विद्यात् । अथापि

(१) शाखा. ८।३. (२) शाखा. ८।४.

(१) शाखा. ८।५.
(२) शाखा. ८।६.
(३) शाखा. ८।७.

नील इवाग्निर्दृश्यते यथा मयूरग्रीवा। महामेघे वा मरीचीरिव पश्येत्। अनभ्रे वा विद्युतः पश्येत्। अभ्र एनां न पश्येत्। तदप्येवमेव विद्यात्। अथाप्यपिधायाक्षिणी उपेक्षेत। यत्रैतद्वराटकानीव न पश्येत्। तदप्येवमेव विद्यात्। अथाप्यपिधाय कर्णौ उपासीत। य एषोऽग्नेरिव ज्वलतः शब्दो रथस्येवोपब्दिस्तं न यदा शृणुयात्। तदप्येवमेव विद्यात्। अथापि विपर्यस्ते कनीनिके दृश्येते। द्विजिह्वे वा। न वा दृश्येते। तदप्येवमेव विद्यात्॥

सर्वेषां भूतानामान्तरः पुरुष आत्मा

स योऽतोऽश्रुतोऽमतोऽविज्ञातोऽदृष्टोऽनादिष्टोऽघुष्टः श्रोता मन्ता विज्ञाता द्रष्टाऽऽदेष्टा घोष्टा सर्वेषां भूतानामान्तरः पुरुषः स म आत्मेति विद्यात्। स उत्क्रामन्नेवैतमशरीरं प्रज्ञात्मानमभिसंपद्यते। विजहातीतरं दैहिकम्। सैषा सर्वस्यै वाच उपनिषत्। सर्वा हैवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवमाचक्षते॥

स्पर्शोष्मस्वरात्मकवर्णविषयिणी अधिदैवताधिविद्याध्यात्मोपासना

पृथिव्या[१] रूपं स्पर्शाः। अन्तरिक्षस्योष्माणः। दिवः स्वराः। अग्ने रूपं स्पर्शाः। वायोरूष्माणः। आदित्यस्य स्वराः। ऋग्वेदस्य रूपं स्पर्शाः। यजुर्वेदस्योष्माणः। सामवेदस्य स्वराः। रथन्तरस्य रूपं स्पर्शाः। वामदेव्यस्योष्माणः। बृहतः स्वराः। प्राणस्य रूपं स्पर्शाः। अपानस्योष्माणः। व्यानस्य स्वराः। प्राणस्य रूपं स्पर्शाः। अपानस्योष्माणः। मनसः स्वराः। प्राणस्य रूपं स्पर्शाः। अपानस्योष्माणः। उदानस्य स्वराः। इति पुनर्दत्तः। एष उ हैव सर्वां वाचं वेद य एवं वेद॥

शरीररूपा दैवी वीणा

अथ[२] खल्वियं दैवी वीणा भवति। तदनुकृतिरसौ मानुषी वीणा भवति। तद्यथेयं शस्रवती तर्द्मवती भवत्येवमेवासौ शस्रवती तर्द्मवती भवति। तद्यथाऽस्याः शिर एवममुष्याः शिरः। तद्यथाऽस्यै वंश एवममुष्या दण्डः। तद्यथाऽस्या उदरमेवममुष्या अम्भणम्। तद्यथास्यै मुखनासिके अक्षिणी इत्येवममुष्याश्छिद्राणि। तद्यथाऽस्या अङ्गुलिनिग्रहा उपस्तरणानीत्येवममुष्याः पर्वाणि। तद्यथाऽस्या अङ्गुलय एवममुष्यास्तन्त्र्यः। तद्यथाऽस्यै जिह्वैवममुष्या वादनम्। तद्यथाऽस्याः स्वरा एवममुष्याः स्वराः। तद्यथा हैवेयं रोमशेन चर्मणा पिहिता भवत्येवमेवासौ रोमशेन चर्मणा पिहिता भवति। रोमशेन ह स्म चर्मणा पुरा वीणा अपिदधति। सैषा दैवी वीणा भवति। स य एवमेतां दैवीं वीणां वेद श्रुतवदनतमो भवति। भूमिप्राऽस्य कीर्तिर्भवति। शुश्रूषन्ते हास्य पर्षत्सु भाष्यमाणस्येदमस्तु यदयमीहते। यत्राऽऽर्या वाचं वदन्ति विदुरेनं तत्र॥

अथातस्ताण्डबिन्दस्य[१] वचः। तद्यथेयमकुशलेन वादयित्रा वीणाऽऽरब्धा न तत्कृत्स्नं वीणार्थं साधयत्येवमेवाकुशलेन वक्त्रा वागारब्धा न तत्कृत्स्नं वागर्थं साधयति। तद्यथा हैवेयं कुशलेन वादयित्रा वीणाऽऽरब्धा कृत्स्नं वीणार्थं साधयत्येवमेव कुशलेन वक्त्रा वागारब्धा कृत्स्नं वागर्थं साधयति। तस्यै वा एतस्यै वीणायै या त्विषिः सा संहितेति कात्यायनीपुत्रो जातूकर्ण्यः॥

स्विष्टकृत्संहिताविषयिणी उपासना

अथ[२] ह स्मैतत्कृष्णहारीतो ब्राह्मणमेवोदाहरति। प्रजापतिः प्रजाः सृष्ट्वा व्यतंसयत्। छन्दोभिरात्मानं समदधत्। तद्यच्छन्दोभिरात्मानं समदधत्तस्मात्संहिता। तस्यै वा एतस्यै संहितायै णकारो बलम्। षकारः प्राणः। आत्मा संहिता। यैषा क्षुद्रमिश्रा विकृतिस्तानि नखानि रोमाणि व्यञ्जनानीति। स योऽत्र विचिकित्सेत्सणकारमेव ब्रूयादृते षकारमिति सणकारमेव ब्रूयात्। एवमेव योऽत्र विचिकित्सेत्सषकारमेव ब्रूयादृते णकारमिति सषकारमेव ब्रूयात्। तौ वा एतौ

---

(१) शाखा. ८।८.
(२) शाखा. ८।९.

(१) शाखा. ८।१०.
(२) शाखा. ८।११.

णकारषकारौ विद्वाननुसंहितमृचोऽधीयीताऽऽयुष्यमिति विद्यात् । एवमेव विद्यात् । अथ वागितिहासपुराणं यच्चान्यत्किंचिद्ब्रह्मीकृत्येवाधीयीत तदप्येवमेव विद्यात् । ते यद्वयमनुसंहितमृचोऽधीमहे । यच्च माण्डूकेयीयमध्यायं प्रब्रूमः । तेन नो णकारषकारा उपाप्तौ । इति ह स्माऽऽह ह्रस्वो माण्डूकेयः । अथ यद्वयमनुसंहितमृचोऽधीमहे । यच्च स्वाध्यायमधीमहे । तेन नो णकारषकारा उपाप्तौ । इति ह स्माऽऽह स्थविरः शाकल्यः ॥

आध्यात्मिकाग्निहोत्रम्

एतद्ध स्म वै तद्विद्वांस आहुः कावषेयाः । किमर्था वयं यक्ष्यामहे । किमर्था वयमध्येष्यामहे । वाचि हि प्राणं जुहुमः । प्राणे वाचम् । यो ह्येव प्रभवः स एवाप्यय इति । ता एताः संहिता नानन्तेवासिने ब्रूयात् । नासंवत्सरवासिने । नाब्रह्मचारिणे । नावेदविदे । नाप्रवक्त्रे । इत्याचार्या इत्याचार्याः ॥

इति द्वितीयोऽध्यायः ॥

## कौषीतकिसंहितोपनिषत् समाप्ता ।

---

# कौषीतक्यग्निहोत्रोपनिषत्

आध्यात्मिकमान्तरमग्निहोत्रम्

ॐ अथात आध्यात्मिकमान्तरमग्निहोत्रमित्याचक्षते । एता ह वै देवताः पुरुष एव प्रतिष्ठिताः । अग्निर्वाचि । वायुः प्राणे । आदित्यश्चक्षुषि । चन्द्रमा मनसि । दिशः श्रोत्रे । आपो रेतसि । एतासु ह वै सर्वासु हुतं भवति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

स[1] तृप्तो वाचं तर्पयति । वाक्तृप्ताऽग्निं तर्पयति । अग्निस्तृप्तः पृथिवीं तर्पयति । पृथिवी तृप्ता यत्किंच पृथिव्याऽपिहितं भवद्भविष्यद्भूतं तत्सर्वं[2] तर्पयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

(१) शाखा. १०११.　(२) शाखा. १०१२.

स[1] तृप्तः प्राणं तर्पयति । प्राणस्तृप्तो वायुं तर्पयति । वायुस्तृप्त आकाशं तर्पयति । आकाशस्तृप्तो यत्किंचाऽऽकाशेनापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

स[2] तृप्तश्चक्षुस्तर्पयति । चक्षुस्तृप्तमादित्यं तर्पयति । आदित्यस्तृप्तो दिवं तर्पयति । द्यौस्तृप्ता यत्किंच दिवाऽपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

स[3] तृप्तो मनस्तर्पयति । मनस्तृप्तं चन्द्रमसं तर्पयति । चन्द्रमास्तृप्तो नक्षत्राणि तर्पयति ।

(१) शाखा. १०१३.　(२) शाखा. १०१४.
(३) शाखा. १०१५.

नक्षत्राणि तृप्तानि मासांस्तर्पयन्ति । मासास्तृप्ता अर्धमासांस्तर्पयन्ति । अर्धमासास्तृप्ता अहोरात्रे तर्पयन्ति । अहोरात्रे तृप्ते ऋतूंस्तर्पयतः । ऋतवस्तृप्ताः संवत्सरं तर्पयन्ति । संवत्सरस्तृप्तो यत्किंच संवत्सरेणापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

[१]स तृप्तः श्रोत्रं तर्पयति । श्रोत्रं तृप्तं दिशस्तर्पयति । दिशस्तृप्ता अवान्तरदिशस्तर्पयन्ति । अवान्तरदिशस्तृप्ता यत्किंचावान्तरदिग्भिरपिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

[२]स तृप्तो रेतस्तर्पयति । रेतस्तृप्तमपस्तर्पयति । आपस्तृप्ता नदीस्तर्पयन्ति । नद्यस्तृप्ताः समुद्रं तर्पयन्ति । समुद्रस्तृप्तो यत्किंच समुद्रेणापिहितं भवद्भविष्यद्भूतं तत्सर्वं तर्पयति । य एव विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च सोऽश्नाति स पिबति स तृप्यति स तर्पयति ॥

[१]स तृप्तस्तदेतद्वैराजं दशविधमग्निहोत्रं भवति । तस्य प्राण एवाऽऽहवनीयः । अपानो गार्हपत्यः । व्यानोऽन्वाहार्यपचनः । मनो धूमः । मन्युरर्चयिता । अङ्गाराः श्रद्धा । पयो वाक् । समित्सत्यम् । आहुतिः प्रज्ञात्मा । स रसः । तदेतद्वैराजं दशविधमग्निहोत्रं हुतं भवति । रोहाभ्यां रोहाभ्यामभ्यारूळ्हमभि स्वर्गं लोकं गमयति । य एवं विद्वानश्नाति च पिबति चाऽऽशयति च पाययति च । अथ य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि हुतं तादृक्तत्स्यात्तादृक्तत्स्यात् ॥

(१) शाआ. १०१६. (२) शाआ. १०१७.

(१) शाआ. १०१८.

## कौषीतक्यग्निहोत्रोपनिषत्समाप्ता ।

---

# कौषीतकिवेदशिरउपनिषत्

आत्मज्ञानविधिः साङ्गः

ॐ [१]अथातो वैराग्यसंस्कृते शरीरे ब्रह्मयज्ञनिष्ठो भवेत् । अप पुनर्मृत्युं जयति । तदु ह वा आत्मा द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन च । इति माण्डूकेयः । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् । इति माण्डव्यः । योऽयं विज्ञानमयः पुरुषः प्राणेषु स एष नेति नेत्यात्मा न गृह्यः । इदं ब्रह्मेदं क्षत्रमिमे देवा इमे वेदा इमे लोका इमानि सर्वाणि भूतानीदं सर्वं यदयमात्मा । स एष तत्त्वमसीत्यात्माऽवगम्योऽहं ब्रह्मास्मीति । तदेतद्ब्रह्मापूर्वमपरमनपरमनन्तरमबाह्यम् । अयमात्मा ब्रह्म सर्वानुभूः । इत्यनुशासनमिति याज्ञवल्क्यः । तदेतन्नापुत्राय

(१) शाआ. १३.

# तैत्तिरीयोपनिषत्

## शीक्षावल्ल्यध्यायः

देवताभ्यः कल्याणप्रार्थना, वायुब्रह्म नमस्कार्थं, सत्यवचनप्रतिज्ञा

ॐ [1]शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।

ॐ शान्तिः शान्तिः शान्तिः ॥ *

( १ ) नित्यान्यधिगतानि कर्माण्युपात्तदुरितक्षयार्थानि, काम्यानि च फलार्थिनां पूर्वस्मिन् ग्रन्थे । इदानीं कर्मोपादानहेतुपरिहाराय ब्रह्मविद्या प्रस्तूयते । कर्महेतुः कामः स्यात् , प्रवर्तकत्वात् । आप्तकामानां हि कामाभावे स्वात्मन्यवस्थानात्प्रवृत्त्यनुपपत्तिः । आत्मकामत्वे चाऽऽप्तकामता । आत्मा हि ब्रह्म । तद्विदो हि परप्राप्तिं वक्ष्यति । अतोऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं परप्राप्तिः, ' अभयं प्रतिष्ठां विन्दते ' ' एतमानन्दमयमात्मानमुपसंक्रामति ' इत्यादिश्रुतेः ।

उपनिषदिति विद्योच्यते, तच्छीलिनां गर्भजन्मजरादिनिशातनात् तदवसादनाद्वा ब्रह्मणो वा उपनिगमयितृत्वात् उपनिषण्णं वाऽस्यां परं श्रेय इति । तदर्थत्वात् ग्रन्थोऽप्युपनिषत् ।

शं सुखं प्राणवृत्तेरह्नश्चाभिमानी देवतात्मा मित्रः नः अस्माकं भवतु । तथैवापानवृत्तेः रात्रेश्चाभिमानी देवतात्मा वरुणः । चक्षुष्यादित्ये चाभिमानी अर्यमा । बले इन्द्रः । वाचि बुद्धौ च बृहस्पतिः । विष्णुरुरुक्रमः विस्तीर्णक्रमः पादयोरभिमानी । एवमध्यात्मदेवताः । शं नो भवत्विति सर्वत्रानुषङ्गः । तासु हि सुखकृत्सु विद्याश्रवणधारणोपयोगा अप्रतिबन्धेन भविष्यन्तीति तत्सुखकर्तृत्वं प्रार्थ्यते शं नो भवत्विति । ब्रह्मविविदिषुणा नमस्कारवन्दनक्रिये वायुविषये ब्रह्मविद्योपसर्गशान्त्यर्थे क्रियेते । सर्वक्रियाफलानां तदधीनत्वात् ब्रह्म वायुः । तस्मै ब्रह्मणे नमः प्रह्वीभावं, करोमीति वाक्यशेषः । नमस्ते तुभ्यं हे वायो, नमस्करोमि इति परोक्षप्रत्यक्षाभ्यां वायुरेवाभिधीयते । किंच त्वमेव चक्षुराद्यपेक्ष्य बाह्यं संनिकृष्टमव्यवहितं प्रत्यक्षं ब्रह्मासि यस्मात्, तस्मात् त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं यथाशास्त्रं यथाकर्तव्यं बुद्धौ सुपरिनिश्चितमर्थं त्वदधीनत्वात् त्वामेव वदिष्यामि । सत्यमिति वाक्कायाभ्यां संपाद्यमानः, सोऽपि त्वदधीन एव संपाद्य इति त्वामेव सत्यं वदिष्यामि । तत् सर्वात्मकं वाय्वाख्यं ब्रह्म मयैव स्तुतं सत् मां विद्यार्थिनमवतु विद्यासंयोजनेन । तदेव ब्रह्म वक्तारं आचार्यं वक्तृत्वसामर्थ्यसंयोजनेनावतु । अवतु मामवतु वक्तारमिति पुनर्वचनमादरार्थम् । ॐ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनमाध्यात्मिकाधिभौतिकाधिदैविकानां विद्याप्राप्त्युपसर्गाणां प्रशमार्थम् । **शंकर.**

( २ ) ' वेद्याद्यर्थभेदात् ' — अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः — ' सर्वं प्रविध्य हृदयं प्रविध्य० ' इत्यादिः । ताण्डिनां ' देव सवितः प्रसुव यज्ञम् ' इत्यादिः । शाट्यायनिनां ' श्वेताश्वो हरितनीलोऽसि ' इत्यादिः । कठानां तैत्तिरीयाणां च ' शं नो मित्रः शं वरुणः ' इत्यादिः । वाजसनेयिनां तूपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते ' देवा ह वै

---

* रामानुजानुसारिभाष्ये शीक्षाध्यायो न व्याख्यातः ।

(१) तैउ. १।१; ब्रशंकर. ३।३।२५; भास्कर. ३।३।२५; रामानुज. ३।३।२५; मध्व. त्वामेव ( त्वमेव ); श्रीकंठ. ३।३।२५; श्रीकर. १।१।१ ( पृ. २६ ), ३।३।२५.

सत्रं निषेदुः' इत्यादि । कौषीतकिनामप्यग्निष्टोमब्राह्मणम् 'ब्रह्म वा अग्निष्टोमो०' इति । किमिमे सर्वे प्रविध्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासु उपसंह्रियेरन् किंवा नोपसंह्रियेरन् इति मीमांसामहे । किं तावन्नः प्रतिभाति । उपसंहार एवैषां विद्यास्विति । कुतः । विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात् ।

एवं प्राप्ते ब्रूमः, नैषामुपसंहारो विद्यास्विति । कस्मात् । वेधाद्यर्थभेदात् । 'हृदयं प्रविध्य' इत्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयो भिन्नाः अनभिसंबद्धास्ते उपनिषदुदिताभिर्विद्याभिः । न तेषां ताभिः संगन्तुं सामर्थ्यमस्ति ।

* ब्रशंकर. ३।३।२५

(३) सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् । सर्वैर्देवैरीड्यं विष्णवाख्यं सर्वदैमि सुप्रेष्ठम् ॥ 'आदित्यसंस्थिताद्विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् । तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः । विष्णुमस्तौत्तथा प्राह शं नो मित्रादिका श्रुतिः । यदुवाच हरिः सूर्यमण्डलस्थः परः पुमान् । ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु । शं नो मित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् । भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् । मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः । सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीम् ॥' इत्यादि यजुःसंहितायाम् । 'भृगुवाक्यतया वायुनमस्कारादिकं हरिः । प्रोवाच ब्रह्मणे चैवं वचःसु बहुदार्शिषु ॥' इति च । मध्व.

वेदपठने शिक्षितव्यो विषयः षड्विधः

ॐ [1]शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम संतानः । इत्युक्तः शीक्षाध्यायः ॥

(१) अर्थज्ञानप्रधानत्वादुपनिषदो ग्रन्थपाठे यत्नोपरमो मा भूदिति शीक्षाध्याय आरभ्यते । शिक्षा शिक्ष्यते अनयेति वर्णाद्युच्चारणलक्षणम् । शिक्ष्यन्ते इति वा शिक्षा वर्णादयः । शिक्षैव शीक्षा । दैर्घ्यं छान्दसम् । तां शीक्षां व्याख्यास्यामः विस्पष्टं आ समन्तात् कथयिष्यामः । चक्षिङो वा ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तवाक्कर्मण एतद्रूपम् । तत्र वर्णोऽकारादिः । स्वर उदात्तादिः । मात्रा ह्रस्वाद्याः । बलं प्रयत्नविशेषः । साम वर्णानां मध्यमवृत्त्योच्चारणं समता । संतानः संततिः । संहितेत्यर्थः । एष हि शिक्षितव्योऽर्थः । शिक्षा यस्मिन्नध्याये सोऽयं शीक्षाध्यायः इति एवं उक्तः उदितः । उक्त इत्युपसंहार उत्तरार्थः ।

शंकर.

(२) वरणीयो वर्णः, स्वरतेस्तु स्वरः, मानात् त्राता मात्रा, बलरूपः, समश्च सर्वरूपेषु, संततश्च । 'वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम् । विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम् ॥'

मध्व.

पञ्चविधमहासंहितोपासनम्

[1]सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः । वायुः संधानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः संधिः । वैद्युतः संधानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳ संधानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजननꣳ संधानम् । इत्यधिप्रजम् । अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् संधिः । जिह्वा संधानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥

(१) अधुना संहितोपनिषदुच्यते । तत्र संहिताद्युपनिषत्परिज्ञाननिमित्तं यद्यशः प्रार्थ्यते तत् नौ आवयोः शिष्याचार्ययोः सहैवास्तु । तन्निमित्तं च यद्ब्रह्मवर्चसं तेजः तच्च सहैवास्तु इति शिष्यवचन-

* भास्कररामानुजश्रीकण्ठश्रीकराः ब्रशंकरवत् ।

(१) तैउ. १।२; श्रीकर. ३।३।३२, ३।४।१.

(१) तैउ. १।३; श्रीकर. ३।४।१.

माशीः । शिष्यस्य ह्यकृतार्थत्वात्प्रार्थनोपपद्यते नाऽऽचार्यस्य, कृतार्थत्वात् । कृतार्थो ह्याचार्यो नाम भवति । अथ अनन्तरं अध्ययनलक्षणविधानस्य, यतोऽत्यर्थं ग्रन्थभाविता बुद्धिर्न शक्यते सहसाऽर्थज्ञानविषयेऽवतारयितुं इत्यतः संहिताया उपनिषदं संहिताविषयं दर्शनमित्येतत् , ग्रन्थसंनिकृष्टामेव व्याख्यास्यामः । पञ्चस्वधिकरणेषु आश्रयेषु, ज्ञानविषयेष्वित्यर्थः । कानि तानीत्याह — अधिलोकं, लोकेष्वधि यद्दर्शनं तदधिलोकम् । तथा अधिज्यौतिषमधिविद्यमधिप्रजमध्यात्ममिति । ता एताः पञ्चविषया उपनिषदो लोकादिमहावस्तुविषयत्वात् संहिताविषयत्वाच्च महत्यश्च ताः संहिताश्च महासंहिता इत्याचक्षते कथयन्ति वेदविदः । अथ तासां यथोपन्यस्तानामधिलोकं दर्शनमुच्यते । दर्शनक्रमविवक्षार्थोऽथशब्दः सर्वत्र । पृथिवी पूर्वरूपं, पूर्वो वर्णः पूर्वरूपम् । संहितायाः पूर्वे वर्णे पृथिवीदृष्टिः कर्तव्येत्युक्तं भवति । तथा द्यौरुत्तररूपम् । आकाशः अन्तरिक्षलोकः संधिर्मध्यं पूर्वोत्तररूपयोः संधीयेते अस्मिन् पूर्वोत्तररूपे इति । वायुः संधानम् । संधीयतेऽनेनेति संधानम् । इत्यधिलोकं दर्शनमुक्तम् । अथाधिज्यौतिषमित्यादि समानम् । इतीमा इत्युक्ता उपप्रदर्श्यन्ते । यः कश्चिदेवमेता महासंहिता व्याख्याता वेद उपास्ते । वेदेत्युपासनं स्यात् विज्ञानाधिकारात्, 'इति प्राचीनयोग्योपास्व' इति च वचनात् । उपासनं च यथाशास्त्रं तुल्यप्रत्ययसंततिरसंकीर्णा चातत्प्रत्ययैः शास्त्रोक्तालम्बनविषया च । प्रसिद्धश्चोपासनशब्दार्थो लोके गुरुमुपास्ते राजानमुपास्ते इति । यो हि गुर्वादीन् संततमुपचरति स उपास्ते इत्युच्यते । स च फलमाप्नोत्युपासनस्य । अतोऽत्रापि च य एवं वेद, संधीयते प्रजादिभिः स्वर्गान्तैः, प्रजादिफलान्याप्नोतीत्यर्थः । शंकर.

( २ ) 'नारायणादिरूपाणि लोकादिषु च पञ्चसु । अनिरुद्धावसानानि ध्येयानि चतुरात्मना । वासुदेवादिकान्येव तानि पूर्वोत्तराणयोः । संहितायास्तथा संधौ संधाने चापि कृत्स्नशः । यो वेदैतानि रूपाणि सर्वभोगसमन्वितः । प्राप्नोति वैष्णवं स्थानं मुक्तः स्वर्गाभिधं परम् ॥' मध्व.

मेधाकामस्य श्रीकामस्य च जपहोमौ

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना । कुर्वाणाऽचीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि माऽऽयन्तु ब्रह्मचारिणः स्वाहा । प्र माऽऽयन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान्वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा । यथाऽऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ॥

( १ ) यश्छन्दसामिति । मेधाकामस्य श्रीकामस्य च तत्प्राप्तिसाधनं जपहोमावुच्येते, 'स मेन्द्रो मेधया स्पृणोतु' 'ततो मे श्रियमावह' इति च लिङ्गदर्शनात् । यश्छन्दसां वेदानामृषभ इव ऋषभः प्राधान्यात् । विश्वरूपः सर्वरूपः सर्ववाग्व्याप्तेः, 'तद्यथा शङ्कुना' इत्यादिश्रुत्यन्तरात् । अत एव ऋषभत्वमोंकारस्य । ओंकारो ह्यत्रोपास्य इति ऋषभादिशब्दैः स्तुतिर्न्याय्यैवोंकारस्य । छन्दोभ्यः वेदेभ्यः, वेदा ह्यमृतं, तस्मादमृतादधिसंबभूव । लोकदेववेदव्याहृतिभ्यः सारिष्ठं जिघृक्षोः प्रजापतेस्तपस्यत ओंकारः सारिष्ठत्वेन प्रत्यभादित्यर्थः । न हि नित्यस्योंकारस्याञ्जसैवोत्पत्तिरेव कल्प्यते । स एवं-

(१) तैड. १।४; श्रीकर. १।१।१ (पृ. ७, ८, ९, १५, १७), १।१।४ (पृ. ४६), १।१।२९, १।२।१ (पृ. ९५, ९७), १।२।४, २।१।२३, ३२, ३।१।९, १७, ३।२।११, २३, ३।३।३२, ५३, ३।४।१, २, २०, ३४, ३५, ३९, ४।४।२२ देव धारणो ( देवधारणो ).

भूत ओंकार इन्द्रः सर्वकामेशः परमेश्वरो मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा । प्रज्ञाबलं हि प्रार्थ्यते । अमृतस्य अमृतत्वहेतुभूतस्य ब्रह्मज्ञानस्य, तदधिकारात्, हे देव, धारणो धारयिता भूयासं भवेयम् । किंच शरीरं मे मम विचर्षणं विचक्षणं, योग्यमित्येतत् । भूयादिति प्रथमपुरुषविपरिणामः । जिह्वा मे मधुमत्तमा मधुमत्यतिशयेन, मधुरभाषिणीत्यर्थः। कर्णाभ्यां श्रोत्राभ्यां भूरि बहु विश्रुवं व्यश्रवं श्रोता भूयासमित्यर्थः । आत्मज्ञानयोग्यः कार्यकरणसंघातोऽस्त्विति वाक्यार्थः । मेधा च तदर्थमेव हि प्रार्थ्यते । ब्रह्मणः परमात्मनः कोशोऽसि, असेरिवोपलब्ध्यधिष्ठानत्वात् । त्वं हि ब्रह्मणः प्रतीकं, त्वयि ब्रह्मोपलभ्यते । मेधया लौकिकप्रज्ञया पिहितः आच्छादितः, स त्वं सामान्यप्रज्ञैरविदिततत्त्व इत्यर्थः । श्रुतं श्रवणपूर्वकमात्मज्ञानादिकं मे गोपाय रक्ष । तत्प्राप्त्यविस्मरणादि कुर्वित्यर्थः । जपार्था एते मन्त्रा मेधाकामस्य । होमार्थास्त्वधुना श्रीकामस्य मन्त्रा उच्यन्ते । आवहन्ती आनयन्ती । वितन्वाना विस्तारयन्ती, तनोतेस्तत्कर्मत्वात् । कुर्वाणा निर्वर्तयन्ती अचीरं अचिरं क्षिप्रमेव । छान्दसो दीर्घः । चिरं वा कुर्वाणा । आत्मनो मम । किमित्याह— वासांसि वस्त्राणि मम गावश्च, गाश्चेति यावत् । अन्नपाने च सर्वदा । एवमादीनि कुर्वाणा श्रीर्या तां ततः मेधानिर्वर्तनात्परं आवह आनय । अमेधसो हि श्रीरनर्थायैवेति । किंविशिष्टाम् । लोमशां अजाव्यादियुक्तां अन्यैश्च पशुभिः संयुक्ताम् । आवहेत्यधिकारादोंकार एवाभिसंबध्यते । स्वाहा, स्वाहाकारो होमार्थमन्त्रान्तज्ञापनार्थः । आयन्तु मामिति व्यवहितेन संबन्धः । ब्रह्मचारिणः । वि माऽऽयन्तु प्र माऽऽयन्तु दमायन्तु शमायन्त्वित्यादि । यशः यशस्वी जने जनसमूहे असानि भवानि । श्रेयान् प्रशस्यतरः वस्यसो वसीयसो वसुतराद्वसुमत्तराद्वा असानीत्यन्वयः । किंच तं ब्रह्मणः कोशभूतं त्वा त्वां हे भग भगवन् पूजावन्, प्रविशानि, प्रविश्य चानन्यस्त्वदात्मैव भवानीत्यर्थः । स त्वमपि मा मां भग भगवन् पूजावन्, प्रविश । आवयोरेकत्वमेवास्तु । तस्मिंस्त्वयि सहस्रशाखे बहुभेदे निमृजे शोधयामि अहं पापकृत्याम् । यथा लोके आपः प्रवता प्रवणवता निम्नवता देशेन यन्ति गच्छन्ति । यथा च मासा अहर्जरं, संवत्सरोऽहर्जरः । अहोभिः परिवर्तमानो लोकान् जरयतीति अहानि वाऽस्मिन् जीर्यन्ति अन्तर्भवन्तीत्यहर्जरः । तं च यथा मासा यन्ति, एवं मां ब्रह्मचारिणः हे धातः सर्वस्य विधातः, मामायन्तु आगच्छन्तु सर्वतः सर्वदिग्भ्यः । प्रतिवेशः श्रमापनयनस्थानं आसन्नगृहमित्यर्थः । एवं त्वं प्रतिवेश इव प्रतिवेशः त्वच्छीलिना सर्वपापदुःखापनयनस्थानं असि, अतो मा मां प्रति प्रभाहि प्रकाशय आत्मानं प्रपद्यस्व च । मां रसविद्धमिव लोहं त्वन्मयं त्वदात्मानं कुर्वित्यर्थः । श्रीकामोऽस्मिन्विद्याप्रकरणे अभिधीयमानो धनार्थः । धनं च कर्मार्थम् । कर्म चोपात्तदुरितक्षयाय । तत्क्षये हि विद्या प्रकाशते । तथा च स्मृतिः— ' ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः । यथाऽऽदर्शतले प्रख्ये पश्यन्त्यात्मानमात्मनि ॥ ' इति । शंकर.

( २ ) ' यो विश्वरूपो भगवांश्छन्दसामधिपो हरिः । छन्दोभ्योऽमृतरूपेभ्यः सुव्यक्तस्तदुपासनात् । मेधावी तत्त्वविज्ञानी भूत्वा क्षिप्रं विमुच्यते ॥ ' इति च । 'वेदावासत्वतो विष्णुर्ब्रह्मकोश इति स्मृतः । भगः षड्गुणपूर्णत्वाद्बहुरूपत्वतो विभुः । सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम् । मुच्यते नात्र संदेहः सर्वभोगैश्च युज्यते ॥ ' इति प्रकल्पते । आवहन्ती चिरं सर्वभोगान् या श्रीः सनातनी । तां मय्यावह गोविन्द सुशिखण्डोपशोभिताम् ॥ ' इति च ।

मध्व.

( ३ ) ब्रह्ममेधाकामस्य तत्प्राप्तिसाधनं किमित्याकाङ्क्षायामाह — ' यश्छन्दसामृषभो......श्रुतं मे गोपाय ' इति । अस्यार्थः — यः शिवः छन्दसामृषभः सर्वविद्याप्रभुः, ' ईशानः सर्वविद्यानाम् ' इति श्रुतेः । विश्वरूपः प्रपञ्चमयः, ' सर्वो ह्येष रुद्रः ' इति श्रुतेः । यः छन्दोभ्यः आम्नायेभ्यः अमृतादधिसंबभूव । वेदोपनिषदागमादीनां अमृतरूपपरत्वात् तत्प्रति[illegible] इत्यर्थः । वचनव्यत्ययश्छान्दसः । स इन्द्रः परमैश्वर्यशाली [illegible] मा मां मेधया प्रज्ञया स्पृणोतु प्रीणयतु बलयतु वा । तद्विज्ञानार्थे प्रज्ञाबलं हि प्रार्थ्यते । अमृतस्य मोक्षस्य देवधारणः देवस्य लिङ्गरूपशिवस्य धारणं यस्य मम

सोऽहं देवधारणः भूयासं भवेयम् । चिच्छक्तिप्रकटीकृतपरशिवेष्टलिङ्गधारी भूयासमित्यर्थः । अतः मे शरीरं विचर्षणं किल्बिषरहितं भूयादित्यर्थः । जिह्वा मे मधुमत्तमा मधुमती अतिशयेन मधुरसंभाषिणी भूयात् । कर्णाभ्यां भूरि विश्रुवं श्रोत्राभ्यां (......) शिवज्ञानयोग्यकार्यकरणसंघातो भूयासमित्यर्थः । तन्मेधा च तदर्थमेव प्रार्थ्यते । ब्रह्मणः शिवस्य कोशोऽसि, असेरिवोपलब्ध्यधिष्ठानमित्यर्थः । मेधया लौकिकप्रज्ञया पिहितः आच्छादितः, सामान्यप्रज्ञया अविदितसत्त्व इत्यर्थः । 'नावेदविन्मनुते तं बृहन्तम्' 'नैषा तर्केण मतिरापनेया' इति श्रुतेः श्रुतं श्रवणपूर्वकं भक्तिज्ञानादिकं मम गोपाय रक्ष, तत्प्राप्त्यविस्मरणादिकं कुर्विति भावः । 'देवधारणो भूयासम्' इत्यत्र बाह्यलिङ्गधारणं अन्तर्लिङ्गधारणं प्रणवधारणं वेति संदेहः।

पूर्वपक्षस्तु—विश्वरूप इति ब्रह्मलिङ्गस्य निरुपपदब्रह्मपदस्य च परिच्छिन्नलिङ्गपरत्वायोगात्, देवधारण इत्यत्र देव इतिपदच्छेदाभावे गोपायेत्यन्वयस्यासंभवात्, भूयासमित्यत्र आशीर्लिङ्त्वेन विध्यर्थासंभवात्, 'लिङ्गिनं चक्रिणं दृष्ट्वा' इत्यादिना बाह्यलिङ्गधारणस्य निषिद्धत्वात् ........प्रात्यक्षिकश्रुतिस्मृत्याचारविरुद्धलिङ्गधारणस्य स्मृत्यनवकाशन्यायेन सांख्यस्मृतिवन्न विधेयत्वमिति चेद्ब्रूमः — (लिङ्गधारणराद्धान्तस्तु —) प्रात्यक्षिकश्रुतिस्मृत्यागमपुराणेतिहासविहितत्वेन लिङ्गधारणस्य अग्निहोत्रादिवद्वैदिकत्वं सिद्धम् । तस्मात्तद्दीक्षानन्तरं ब्रह्मजिज्ञासा विधीयते । 'यश्छन्दसामृषभो विश्वरूपः' इत्यत्र शिवस्य भक्तोपासनार्थं परिच्छिन्नत्वं युक्तं, नारायणे 'निधनपतये नमः' इत्यादिना लिङ्गस्य सर्वात्मकत्वमुक्त्वा 'सर्वलिङ्गं स्थापयति' इत्यनेन तस्यैव परिच्छिन्नलिङ्गधारणविधायकत्वदर्शनात् ......कैवल्याथर्वणशिरःकालाग्निरुद्रमुण्डकादिषु पाशुपतव्रतस्यैव ब्रह्मविद्याधिकारित्वोपदेशात् लिङ्गधारणदीक्षितस्यैव ब्रह्मविद्याधिकारित्वं सिद्धम् ।

श्रीकर. १।१।१ (पृ. ७,८,९)

चतुर्विधासु चतसृषु व्याहृतिषु ब्रह्मोपासना

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥

(१) संहिताविषयमुपासनमुक्तं, तदनु मेधाकामस्य श्रीकामस्य च मन्त्रा अनुक्रान्ताः । ते च पारम्पर्येण विद्योपयोगार्था एव । अनन्तरं व्याहृत्यात्मनो ब्रह्मणोऽन्तरुपासनं स्वाराज्यफलं प्रस्तूयते । भूर्भुवः सुवरित्युक्तोपप्रदर्शनार्थः । एतास्तिस्र इति प्रदर्शितानां परामर्शार्थः । परामृष्टाः स्मार्यन्ते वै इत्यनेन । तिस्र एताः प्रसिद्धा व्याहृतयः स्मार्यन्ते तावत् । तासामियं चतुर्थी व्याहृतिर्मह इति । तामेतां चतुर्थीं महाचमसस्यापत्यं माहाचमस्यः प्रवेदयते । उ ह स्म इत्येतेषां वृत्तानुकथनार्थत्वात् विदितवान्, ददर्शेत्यर्थः । माहाचमस्यग्रहणमार्षानुस्मरणार्थम् । ऋषिस्मरणमप्युपासनाङ्गमिति गम्यते, इहोपदेशात् । येयं माहाचमस्येन दृष्टा व्याहृतिर्मह इति तद्ब्रह्म । महद्धि ब्रह्म । महश्च व्याहृतिः । किं पुनस्तत् । स आत्मा । आप्नोतेर्व्याप्तिकर्मणः । आत्मेतराश्च व्याहृतयो लोका देवा वेदाः प्राणाश्च मह इत्यनेन व्याहृत्यात्मना आदित्यचन्द्रब्रह्मान्नभूतेन व्याप्यन्ते

(१) तैउ. १।५; ब्रशंकर. ४।४।१७; ब्रमध्व. ४।४।१९; श्रीकंठ. ३।३।४३; श्रीकर. ३।३।४३; बलदेव. ४।४। १७, १८.

यतः । अतोऽङ्गानि अवयवा अन्या देवताः । देवताग्रहणमुपलक्षणार्थं लोकादीनाम् । मह इत्येतस्य व्याहृत्यात्मनो देवलोकादयः सर्वे अवयवभूताः, यत आह —आदित्यादिभिर्लोकादयो महीयन्ते इति । आत्मनो ह्यङ्गानि महीयन्ते । महनं वृद्धिरुपचयः । महीयन्ते वर्धन्ते इत्यर्थः । अयं लोकोऽग्निर्ऋग्वेदः प्राण इति प्रथमा व्याहृतिर्भूरिति । एवमुत्तरोत्तरैकैका चतुर्धा भवति । मह इति ब्रह्म । ब्रह्मेत्योंकारः, शब्दाधिकारेऽन्यस्यासंभवात् । उक्तार्थमन्यत् । ता वा एताश्चतस्रश्चतुर्धेति । ता वा एता भूर्भुवः सुवर्मह इति चतस्र एकैकशः चतुर्धा चतुष्प्रकाराः । धाशब्दः प्रकारवचनः । चतस्रश्चतस्रः सत्यश्चतुर्धा भवन्तीत्यर्थः । तासां यथाक्लृप्तानां पुनरुपदेशस्तथैवोपासननियमार्थः । ता यथोक्तव्याहृतीर्यो वेद स वेद विजानाति । किम् । ब्रह्म । ननु—तद्ब्रह्म, स आत्मा, इति ज्ञाते ब्रह्मणि न वक्तव्यमविज्ञातवत् स वेद ब्रह्मेति । न । तद्विशेषविवक्षुत्वाददोषः । सत्यं विज्ञातं चतुर्थव्याहृत्यात्मा ब्रह्मेति, न तु तद्विशेषो हृदयान्तरुपलभ्यत्वं मनोमयत्वादिश्च । 'शान्तिसमृद्धम्' इत्येवमन्तो विशेषणविशेष्यरूपो धर्मपूगो विज्ञायते इति तद्विवक्षु हि शास्त्रमविज्ञातमिव ब्रह्म मत्वा स वेद ब्रह्मेत्याह, अतो न दोषः । यो हि वक्ष्यमाणेन धर्मपूगेन विशिष्टं ब्रह्म वेद स वेद ब्रह्मेत्यभिप्रायः । अतो वक्ष्यमाणानुवाकेनैकवाक्यताऽस्य, उभयोर्ह्यनुवाकयोरेकमुपासनम् । लिङ्गाच्च । 'भूरित्यग्नौ प्रतितिष्ठति' इत्यादिकं लिङ्गमुपासनैकत्वे । विधायकाभावाच्च । न हि वेद, उपासितव्यः इति विधायकः कश्चिच्छब्दोऽस्ति व्याहृत्यनुवाके । 'ता यो वेद' इति च वक्ष्यमाणार्थत्वान्नोपासनभेदकः । वक्ष्यमाणार्थत्वं च तद्विशेषविवक्षुत्वादित्यादिनोक्तम् । सर्वे देवा अस्मै एवं विदुषे अङ्गभूता आवहन्ति आनयन्ति बलिं स्वाराज्यप्राप्तौ सत्यामित्यर्थः ।

शंकर.

(२) 'भूरादिव्याहृतीभिस्तु वाच्यं मूर्तिचतुष्टयम् । अनिरुद्धादिकं वासुदेवान्तं देहमध्यगः । वासुदेवो महोनामा त्वनिरुद्धः शिरो मतः । भूर्नामाऽथ भुवोनामा बाहू प्रद्युम्न ईरितः । संकर्षणः सुवर्नामा पादौ तस्य महात्मनः । अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते । निर्विशेषोऽपि भगवान् संख्यामात्रविशेषतः । लोकज्योतिःप्राणवेदेष्वेकः स पुरुषोत्तमः । प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः । महीयते महति च स्वयं स भगवान् हरिः । पूज्यपूजकभेदोऽत्र नैव कश्चिदपीष्यते । नामप्रवृत्तिहेतुत्वान्नाम लोकादिकं हरेः । अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः । ईक्षणादन्तरिक्षं चाथाऽऽदित्यस्थोऽदितेः सुतः । अग्निरग्नौ स्थितत्वाच्च वायुर्वयति यज्जगत् । चन्द्र आह्लादरूपत्वादृगर्च्यत्वाज्जनार्दनः । यजुर्याज्यस्वरूपत्वात् साम चासौ समत्वतः । बृहत्त्वाद्ब्रह्म वेदानां समुदायेऽखिले स्थितः । तत्संबन्धाद्वेदराशिर्ब्रह्मशब्देन कीर्तितः । प्रकृष्टनयनात्प्राणोऽपानोऽवाङ्नयनाद्धरिः । विविधं नयनाद्व्यानः सोऽन्नं सर्वोपजीव्यतः । एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः । महाचमसनामाऽसौ यस्मादतिचमत्कृतिः । माहाचमस्यस्तज्ज्ञानी ब्रह्मा संपरिकीर्तितः । एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः । स एव ब्रह्मवित्तमात्पूज्यते मुक्तिगोऽपि सन् । सर्वदेवैरतितरां यः सम्यक्षोडशात्मवित् ॥' इति व्याहृतितत्त्वे । 'तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे । सुवरिति प्रतिष्ठे । द्वे प्रतिष्ठे । द्वे एते अक्षरे' इत्यादिश्रुतेः । सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यश्चतुर्थीत्वेनैतां प्रवेदयते इति विशेषः । 'भूर्नामा स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः । सुवः सुखलरूपत्वान्महः पूर्णत्वतो विभुः । तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् । स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः । तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः । वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः । स एव सर्ववेदोक्तः सर्वविद्यासु चेश्वरः । प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः । इतिहासः पुराणं च पञ्चरात्रं [illegible] सर्वशः । सम्यग्व्याहरणाद्विष्णोः श्रुता व्याहृतय[illegible] वेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु । [illegible]विशेषेणाहरन्तीति विष्णुमित्यथवा स्मृताः ॥' इति व्या[illegible]सारे ।

मध्व.

### हृदयाकाशे ब्रह्मोपासना

**स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ। सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्। आप्नोति मनसस्पतिम्। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत्ततो भवति। आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्स्व॥**

(१) भूर्भुवःसुवःस्वरूपा मह इत्येतस्य व्याहृत्यात्मनो ब्रह्मणोऽङ्गान्यन्या देवता इत्युक्तम्। यस्य ता अङ्गभूतास्तस्यैतस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाशः स्थानमुच्यते शालग्राम इव विष्णोः। तस्मिन् हि तद्ब्रह्मोपास्यमानं मनोमयत्वादिधर्मविशिष्टं साक्षादुपलभ्यते पाणाविवाऽऽमलकम्। मार्गश्च सर्वात्मभावप्रतिपत्तये वक्तव्य इत्यनुवाक आरभ्यते।

स इति व्युत्क्रम्य 'अयं पुरुषः' इत्यनेन संबध्यते। य एषोऽन्तर्हृदये हृदयस्यान्तः, हृदयमिति पुण्डरीकाकारो मांसपिण्डः प्राणायतनोऽनेकनाडीसुषिर ऊर्ध्वनालोऽधोमुखो विशस्यमाने पशौ प्रसिद्ध उपलभ्यते। तस्यान्तर्य एष आकाशः प्रसिद्ध एव करकाकाशवत्, तस्मिन् सोऽयं पुरुषः, पुरि शयनात् पूर्णा वा भूरादयो लोका येनेति पुरुषः मनोमयः। मनो विज्ञानम्। मनुतेऽर्ज्ञानकर्मणः। तन्मयस्तदुपलभ्यत्वात्। मनुतेऽनेनेति वा मनोऽन्तःकरणं, तदभिमानी तन्मयस्तल्लिङ्गो वा। अमृतः अमरणधर्मा, हिरण्मयो ज्योतिर्मयः। तस्यैवंलक्षणस्य हृदयाकाशे साक्षात्कृतस्य विदुष आत्मभूतस्येन्द्रस्य ईदृशस्वरूपप्रतिपत्तये मार्गोऽभिधीयते। हृदयादूर्ध्वं प्रवृत्ता सुषुम्ना नाम नाडी योगशास्त्रेषु प्रसिद्धा। सा च अन्तरेण मध्ये प्रसिद्धे तालुके, तालुकयोर्गता। यश्चैष तालुकयोर्मध्ये स्तन इवावलम्बते मांसखण्डस्तस्य चान्तरेणेत्येतत्। यत्र च केशान्तः केशानामन्तः अवसानं मूलं केशान्तः विवर्तते विभागेन वर्तते, मूर्धप्रदेश इत्यर्थः। तं देशं प्राप्य तत्र विनिःसृता व्यपोह्य विभज्य विदार्य शीर्षकपाले शिरःकपाले विनिर्गता या सा इन्द्रयोनिः इन्द्रस्य ब्रह्मणो योनिर्मार्गः, स्वरूपप्रतिपत्तिद्वारमित्यर्थः। तया एवं विद्वान्मनोमयात्मदर्शी मूर्ध्नो विनिष्क्रम्य अस्य लोकस्याधिष्ठाता भूरिति व्याहृतिरूपो योऽग्निर्महतो ब्रह्मणोऽङ्गभूतः तस्मिन्नग्नौ प्रतितिष्ठति अग्न्यात्मना इमं लोकं व्याप्नोतीत्यर्थः। तथा भुव इति द्वितीयव्याहृत्यात्मनि वायौ। प्रतितिष्ठतीत्यनुवर्तते। सुवरिति तृतीयव्याहृत्यात्मन्यादित्ये, मह इत्यङ्गिनि चतुर्थव्याहृत्यात्मनि ब्रह्मणि प्रतितिष्ठति। तेष्वात्मभावेन स्थित्वा आप्नोति ब्रह्मभूतः स्वाराज्यं स्वराड्भावं, स्वयमेव राजा अधिपतिर्भवति, अङ्गभूतानां देवानां यथा ब्रह्म। देवाश्च सर्वेऽस्मै बलिमावहन्त्यङ्गभूता यथा ब्रह्मणे। आप्नोति मनसस्पतिम्। सर्वेषां हि मनसां पतिः, सर्वात्मकत्वाद्ब्रह्मणः। सर्वैर्हि मनोभिस्तन्मनुते। तदाप्नोत्येवंविद्वान्। किंच वाक्पतिः सर्वासां वाचां पतिर्भवति। तथैव चक्षुष्पतिः चक्षुषां पतिः। श्रोत्रपतिः श्रोत्राणां पतिः। विज्ञानपतिः विज्ञानानां च पतिः। सर्वात्मकत्वात्सर्वप्राणिनां करणैस्तद्वान्भवतीत्यर्थः। किंच ततोऽप्यधिकतरमेतद्भवति। किं तत्। उच्यते। आकाशशरीरं, आकाशः शरीरमस्य, आकाशवद्वा सूक्ष्मं शरीरमस्येत्याकाशशरीरम्। किं तत्। प्रकृतं ब्रह्म। सत्यात्म, सत्यं मूर्तामूर्तं अवितथं स्वरूपं च आत्मा स्वभावः अस्य तदिदं सत्यात्म। प्राणारामं, प्राणेष्वारामः आरमणं आक्रीडा यस्य तत्प्राणारामम्। प्राणानां वा आरामो यस्मिंस्तत्प्राणारामम्। मनआनन्दं, आनन्दभूतं सुखकृदेव यस्य मनस्तन्मनआनन्दम्। शान्तिसमृद्धं,

(१) तैउ. १।६; ब्रशंकर. २।३।४, ५, ४।४।१७, १८; भास्कर. ४।४।१८; रामानुज. १।२।१; मध्व. व्यपोह्य शीर्षे (व्यपो ह्यशीर्षे); श्रीकंठ. १।१।२ (पृ. १२२, १२३, १२४, १२६), १।१।४ (पृ. १८८), १।२।११, १।३।८, २।३।१९, ३।२।१५, १७, ३।३।११, ३[illegible]।४।११, १४, २१; श्रीकर. १।१।२, ४, [illegible] १।२।११, [illegible]।२, ९, १७, २६, २।१।२६, २।४।१, ३, ११, ३।२।१[illegible] १५, २०, ३।३।८, ११, ३।४।३, ४, ४।१।३, ४।३।[illegible] ४।४।१३, १५; वल्लभ. २।३।७; बलदेव. १।२।१.

शान्तिः उपशमः, शान्तिश्च तत्समृद्धं च शान्तिसमृद्धम्। शान्त्या वा समृद्धं तदुपलभ्यते इति शान्तिसमृद्धम्। अमृतं अमरणधर्मि। एतच्चाधिकतरं विशेषणं तत्रैव मनोमय इत्यादौ द्रष्टव्यम्। इति एवं मनोमयत्वादिधर्मैर्विशिष्टं यथोक्तं ब्रह्म हे प्राचीनयोग्य, उपास्स्व इत्याचार्यवचनोक्तिरादरार्था।

शंकर.

( २ ) ' जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च '— ये सगुणब्रह्मोपासनात्सहैव मनसा ईश्वरसायुज्यं व्रजन्ति, किं तेषां निरवग्रहमैश्वर्यं भवति, आहोस्वित्सावग्रहमिति संशयः। किं तावत्प्राप्तम्। निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति, ' आप्नोति स्वाराज्यम् ' ' सर्वेऽस्मै देवा बलिमावहन्ति ' ' तेषां सर्वेषु लोकेषु कामचारो भवति ' ( छाउ. ७।२५।२,८।१।६ ) इत्यादिश्रुतिभ्य इति। एवं प्राप्ते पठति—जगद्व्यापारवर्जमिति। जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यत् अणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति। जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य। कुतः। तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम्।

' प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः '—अथ यदुक्तं ' आप्नोति स्वाराज्यम् ' इत्यादिप्रत्यक्षोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत्परिहर्तव्यम्। अत्रोच्यते। नायं दोषः, आधिकारिकमण्डलस्थोक्तेः। आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरः, तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणं अनन्तरं ' आप्नोति मनसस्पतिम् ' इत्याह। यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरः, तं प्राप्नोतीत्येतदुक्तं भवति। तदनुसारेणैव चानन्तरं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवतीत्याह। एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेव इतरेषामैश्वर्यं योजयितव्यम्।

ब्रशंकर. ४।४।१७,१८

( ३ ) स्थितमेतत्स्वमते ' अविभागेन दृष्टत्वात् ' इत्यारभ्य ' परमकारणे सायुज्यं गतानां च निरवधिकमैश्वर्यम् ' इति। ये पुनर्वदन्ति ' मुक्ताः पृथगवतिष्ठन्ते ' इति, तन्मतमभ्युपगम्य सावधिकमैश्वर्यं तेषामपि प्रतिपादयितुमधिकरणमारभ्यते।

* भास्कर. ४।४।१७

( ४ ) ' य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः। प्रद्युम्नस्तालुमध्यस्थो लम्बिन्यामिन्द्रनामकः। व्याख्यः सुपर्णरूपत्वात्केशान्ते वर्तते तु यः। संकर्षणः सुपर्णात्मा वासुदेवो व्यपः स्मृतः। यस्माद्व्यपगते स्थाता जगति प्रलये विभुः। अशीर्षककपालेऽसौ कपालादुपरि स्थितः। अनिरुद्धस्तु भूर्नामा हुताशे संव्यवस्थितः। प्रद्युम्नो भगवान्वायौ भुव इत्येव कीर्तितः। संकर्षणः सुवर्नामा सूर्ये तिष्ठति केशवः। महोनामा वासुदेवो ब्रह्मणि स्थश्चतुर्मुखे। स वासुदेवः स्वाराज्यं व्याप्यास्मिन्मनसस्पतौ। अनिरुद्धे च संव्यासस्ततो वागादिनां पतिः। वागादिषु स्थितो नित्यं भवत्येव जनार्दनः। स्वव्यापी च जगद्व्यापी नित्यैश्वर्योऽस्य ईश्वरः। आकाशवद्व्याप्तदेहः सत्यात्मा गुणपूर्तितः। वायोर्विशेषरमको बलानन्दस्वरूपवान्। ज्ञानानन्दस्वरूपोऽसौ शान्तिनामा सुखोन्नतेः। अन्तगत्वात्स्वतः पूर्तेः समृद्धं तत्प्रकीर्तितम्। इत्युपास्स्व प्राथमिको योग्यस्त्वं मदुपासने। प्राधान्यादिति पूर्वं हि प्राह विष्णुश्चतुर्मुखम्॥ ' इति ब्रह्मसारे।

मध्व.

(५) ब्रह्मणो मनसैव महानन्दानुभवः, न बाह्यकरणद्वारा। तथा हि श्रुतिः—'आकाशशरीरं ब्रह्म। सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्धममृतम् ' इति। आकाशते इत्याकाशः प्रकाशः चिदम्बरमुच्यते, न भूताकाशः, विशेषाभावात्। निखिलजगदण्डषण्डबुद्बुदनिकुरुम्बजलधिस्थानीया परप्रकृतिरूपा परमशक्तिर्हि चिदम्बरमुच्यते। तत्स्वरूपं ब्रह्म आकाशशरीरम्। परप्रकृतित्वं चिदाकाशस्य ' सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति ' ( छाउ. १।९।१ ) ' आकाशो ह वै नामरूपयोर्निर्वहिता ' ( छाउ. ८।१४।१ ) इत्यादिश्रुतिसिद्धम्। [illegible] रूपम्। प्राणारामं, प्राणः सकलाध[illegible]मता चिद[illegible] प्रकृतिरुच्यते। स्वरूपभूतायां तस्[illegible] आरामो यस्य

* अधिकरणरचना ब्रशंकरवत्

तत् प्राणारामम् । मनआनन्दं, मनस्येव आनन्दो यस्य, न बाह्यकरणे, तन्मनआनन्दम् । अत्राप्यानन्द इति चिदम्बरप्रकृतिरुच्यते । तथा च श्रूयते — 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तैउ. २।७) इति । शान्तिसमृद्धं शिवतासंपन्नम् । अमृतं अनादिमुक्तम् । अत्र सच्चिदानन्दरूपपरमाकाशरूपं ब्रह्म स्वरूपानन्दं मनसैवानुभवति बाह्यकरणनिरपेक्षमिति सिद्धं 'मनआनन्दम्' इत्यनेन । इदमेव ज्ञापकं ब्रह्मभावमापन्नानां मुक्तानां निरतिशयस्वरूपानन्दानुभवसाधनं बाह्यकरणनिरपेक्षमन्तःकरणमस्तीति । अतो बाह्यकरणनिरपेक्षेण शुद्धबोधशक्तिरूपेण मनसा स्वरूपानन्दमनन्तमनुभवद्ब्रह्म नित्यतृप्तम् । न तस्य कदाऽपि बाह्यसांसारिकसुखलवापेक्षा भवतीत्यर्थः । स्वतःसिद्धनिरतिशयज्ञानवत्त्वं अनादिबोधत्वम् । यत् स्वरूपानन्दानुभवसाधनमन्तःकरणं ज्ञानं तदनादिसिद्धमेव । अतोऽनादिबोधं ब्रह्म संसारनिवर्तकस्य ज्ञानस्यानादिसिद्धत्वात् नित्यनिवृत्तसंसारदोषं 'शान्तिसमृद्धममृतम्' इति श्रूयते ।

१।१।२

'आप्नोति स्वाराज्यं, आप्नोति मनसस्पतिम्' इत्यादिना मुक्तात्मा प्रस्तुतः । तस्य 'वाक्पतिः' इत्यादिना स्वाधीनाप्राकृतविशुद्धवागिन्द्रियादिसंबन्ध उक्तः । तस्य पुनस्तादृशावस्थाप्राप्त्यनन्तरं एतत् दृश्यमानं प्राकृतप्रपञ्चजालं आकाशशरीरं चिदम्बरप्रकाशशरीरं ब्रह्मैव भवतीति तात्पर्यरहस्यार्थः । ततो मुक्तानां ब्रह्मणा सादृश्यं तत्समरसीभूतप्रपञ्चदर्शित्वमिति सर्वं समीचीनम् । १।३।८

'भूरित्यग्नौ' इत्यादिषु न ब्रह्मप्राप्तिमार्ग उच्यते, किंतु तत्तद्विभूतिप्राप्तिरेव । ततः परप्राप्तिरर्चिरादिनैव ।

* श्रीकंठ. ४।३।१

अधिभूतपाङ्क्तत्रये अध्यात्मपाङ्क्तत्रये च ब्रह्मोपासना

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳ स्नावास्थि मज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥

(१) यदेतत् व्याहृत्यात्मकं ब्रह्म उपास्यमुक्तं, तस्यैवेदानीं पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते । पञ्चसंख्यायोगात् पङ्क्तिच्छन्दःसंपत्तिः । ततः पाङ्क्तत्वं सर्वस्य । पाङ्क्तश्च यज्ञः, 'पञ्चपदा पङ्क्तिः । पाङ्क्तो यज्ञः' इति श्रुतेः । तेन यत्सर्वं लोकाद्यात्मान्तं च पाङ्क्तं परिकल्पयति, यज्ञमेव तत्परिकल्पयति । तेन यज्ञेन परिकल्पितेन पाङ्क्तात्मकं प्रजापतिमभिसंपद्यते । तत्कथं पाङ्क्तमिदं सर्वमित्यत आह—पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशा इति लोकपाङ्क्तम् । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणीति देवतापाङ्क्तम् । आप ओषधयो वनस्पतय आकाश आत्मेति भूतपाङ्क्तम् । आत्मेति विराट्, भूताधिकारात् । इत्यधिभूतमिति अधिलोकाधिदैवतपाङ्क्तद्वयोपलक्षणार्थं, लोकदेवतापाङ्क्तयोश्चाभिहितत्वात् । अथ अनन्तरं अध्यात्मं पाङ्क्तत्रयमुच्यते । प्राणादि वायुपाङ्क्तम् । चक्षुरादि इन्द्रियपाङ्क्तम् । चर्मादि धातुपाङ्क्तम् । एतावद्धीदं सर्वमध्यात्मं बाह्यं च पाङ्क्तमेवेत्येतदेवमधिविधाय परिकल्प्य ऋषिर्वेदः एतद्दर्शनसंपन्नो वा कश्चिदृषिः अवोचत् उक्तवान् । किमित्याह—पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैव आध्यात्मिकेन संख्यासामान्यात् पाङ्क्तं बाह्यं स्पृणोति बलयति पूरयति एकात्मतयोपलभ्यते । इति एतदेव, पाङ्क्तमिदं सर्वमिति यो वेद स प्रजापत्यात्मैव भवतीत्यर्थः ।

शंकर.

(२) 'पृथिव्याद्यं पाङ्क्तषट्कं पाङ्क्तेनैव स्वयं हरिः । नारायणादिरूपेण बलयत्यञ्जसा प्रभुः । इत्युवाच स्वयं विष्णुर्वेदद्रष्टा गुणाधिकः ॥' इति तत्त्वसंहितायाम् । आत्मा अहंकारतत्त्वम् ।

मध्व.

* श्रीकर. श्रीकंठवत् ।

(१) तैउ. १।७.

प्रणवब्रह्मोपासना

**[1]ओमिति ब्रह्म । ओमितीद॑ँ सर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति । ओमिति सामानि गायन्ति । ओ॑ँ शोमिति शस्त्राणि श॑ँसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥**

( १ ) व्याहृत्यात्मनो ब्रह्मण उपासनमुक्तम् । अनन्तरं च पाङ्क्तस्वरूपेण तस्यैवोपासनमुक्तम् । इदानीं सर्वोपासनाङ्गभूतस्योंकारस्य उपासनं विधित्स्यते । परापरब्रह्मदृष्ट्या ह्युपास्यमान ओंकारः शब्दमात्रोऽपि परापरब्रह्मप्राप्तिसाधनं भवति । स ह्यालम्बनं ब्रह्मणः परस्यापरस्य च प्रतिमेव विष्णोः, ‘ एतेनैवाऽऽयतनेनैकतरमन्वेति ’ इति श्रुतेः । ओमिति । इतिशब्दः स्वरूपपरिच्छेदार्थः । ओमित्येतच्छब्दरूपं ब्रह्मेति मनसा धारयेत् उपासीत, यतः ओमिति इदं सर्वं हि शब्दरूपं ओंकारेण व्याप्तं, ‘ तद्यथा शङ्कुना ’ इति श्रुत्यन्तरात् । अभिधानतन्त्रं ह्यभिधेयमित्यत इदं सर्वमोंकार इत्युच्यते ।

ओंकारस्तुत्यर्थमुत्तरो ग्रन्थः, उपास्यत्वात्तस्य । ओमित्येतदनुकृतिः अनुकरणम् । करोमि यास्यामि चेति कृतं उक्तं ओमित्यनुकरोत्यन्यः । अत ओंकारोऽनुकृतिः । ह स्म वा इति प्रसिद्धावद्योतकाः । प्रसिद्धं ह्योंकारास्यनुकृतित्वम् । अपि च ‘ ओ श्रावय ’ इति प्रैषपूर्वकमाश्रावयन्ति प्रतिश्रावयन्ति । तथा ओमिति सामानि गायन्ति सामगाः । ओमिति शस्त्राणि शंसन्ति शस्त्रशंसितारोऽपि । तथा ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ब्रह्मा प्रसौति अनुजानाति प्रैषपूर्वकमाश्रावयति । ओमित्यग्निहोत्रमनुजानाति, जुहोमीत्युक्ते ओमित्येवानुज्ञां प्रयच्छति । ओमित्येव ब्राह्मणः प्रवक्ष्यन् प्रवचनं करिष्यन् अध्येष्यमाण ओमित्येवाऽऽह । ओमिति प्रतिपद्यते अध्येतुमित्यर्थः । ब्रह्म वेदं उपाप्नवानीति प्राप्नुयां ग्रहीष्यामीति उपाप्नोत्येव ब्रह्म । अथवा ब्रह्म परमात्मा, तमुपाप्नवानीत्यात्मानं प्रवक्ष्यन् प्रापयिष्यन् ओमित्येवाऽऽह । स च तेनोंकारेण ब्रह्म प्राप्नोत्येव । ओंकारपूर्वं प्रवृत्तानां क्रियाणां फलवत्त्वं यस्मात्, तस्मादोंकारं ब्रह्मेत्युपासीतेति वाक्यार्थः । शंकर.

( २ ) ‘ ओंनामा भगवान् विष्णुरधिकोच्चगुणत्वतः । यद्यद्रूपं भगवतस्तदिदं सर्वमेव च । ओमेवाधिकपूर्णत्वात्तस्माच्छस्त्रेषु चर्त्विजः । ओमित्येव स्वकर्माणि कुर्वन्त्युद्दिश्य केशवम् । अधिकोच्च शृणुष्वेति हरिमध्वर्युराह हि । अधिकोच्च महाधाम सूचदेवेति चादरात् । प्रति प्रतिगृणात्येनं शंरूपात्युच्चशावन । इत्याह होता शस्त्रेषु तथैवान्येऽपि चर्त्विजः । एवं स्वाध्यायकृच्चाऽऽह ब्रह्मप्राप्त्यर्थमञ्जसा । एवं जानन्त एते तु प्राप्नुवन्त्येव तत् परम् ॥ ’ इति च । मध्व.

यमनियमादीनां श्रौतस्मार्तकर्मणामनुष्ठेयत्वम्

**[1]ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥**

( १ ) विज्ञानादेव आप्नोति स्वाराज्यं इत्युक्तत्वाच्छ्रौतस्मार्तानां कर्मणामानर्थक्यं प्राप्तमित्यतस्तन्मा प्रापदिति कर्मणां पुरुषार्थं प्रति साधनत्वप्रदर्शनार्थमिहोपन्यासः । ऋतमिति व्याख्यातम् ( १।१ ) । स्वाध्यायोऽध्ययनम् । प्रवचनमध्यापनं ब्रह्मयज्ञो वा [illegible]तान्यृतादीन्यनुष्ठेयानीति वाक्यशेषः । सत्यं च [illegible]व्याख्यातार्थं वा ( १।१ ) । तपः कृ[illegible]दि । दमः बा[illegible]करणोपशमः । शमः अन्तःकरणोप[illegible] अग्नयः आधा[illegible]

(१) तैउ. १।८.

(१) तैउ. १।९.

तव्याः । अग्निहोत्रं च होतव्यम् । अतिथयश्च पूज्याः । मानुषमिति लौकिकः संव्यवहारः । तच्च यथाप्राप्तमनुष्ठेयम् । प्रजा चोत्पाद्या । प्रजनश्च प्रजननं, ऋतौ भार्यागमनमित्यर्थः । प्रजातिः पौत्रोत्पत्तिः, पुत्रो निवेशयितव्य इत्येतत् । सर्वैरेतैः कर्मभिर्युक्तस्यापि स्वाध्यायप्रवचने यत्नतोऽनुष्ठेये इत्येवमर्थं सर्वेण सह स्वाध्यायप्रवचनग्रहणम् । स्वाध्यायाधीनं ह्यर्थज्ञानम् । अर्थज्ञानायत्तं च परं श्रेयः । प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्ध्यर्थं च । अतः स्वाध्यायप्रवचनयोरादरः कार्यः । सत्यमिति सत्यमेवानुष्ठातव्यमिति सत्यवचाः, सत्यमेव वचो यस्य सोऽयं सत्यवचाः, नाम वा तस्य । राथीतरः रथीतरसगोत्रो राथीतराचार्यो मन्यते । तप इति तप एव कर्तव्यमिति तपोनित्यः तपसि नित्यः तपःपरः, तपोनित्य इति वा नाम । पौरुशिष्टिः पुरुशिष्टस्यापत्यं पौरुशिष्टिराचार्यो मन्यते । स्वाध्यायप्रवचने एवानुष्ठेये इति नाको नामतः, मुद्गलस्यापत्यं मौद्गल्य आचार्यो मन्यते । तद्धि तपस्तद्धि तपः । हि यस्मात् स्वाध्यायप्रवचने एव तपः तस्मात्ते एवानुष्ठेये इति । उक्तानामपि सत्यतपःस्वाध्यायप्रवचनानां पुनर्ग्रहणमादरार्थम् । शंकर.

( २ ) ऋतं च स्वाध्यायप्रवचने च कर्तव्यानि । प्रवचनं व्याख्यानम् । यथार्थज्ञानं ऋतम् । तत्पूर्वकं यथार्थवचनं करणं च सत्यम् । 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः । ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते ॥ ' इति शब्दनिर्णये । सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वात्तयोः सर्वत्रानुषङ्गः । 'मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा । सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ यतः ॥ ' इति कर्मतत्त्वे । आत्मनश्चेन्मनसैवार्थवचनम् । 'मानुषं मानुषो धर्मो देवा अपि हि मानुषे । मनुष्यवत्प्रवर्तन्ते नैवैश्वर्यप्रकाशिनः ॥ ' इति च । 'प्रजाया रक्षणं चैव पुनः प्रजननं तथा । प्रकृष्टजातिकरणं कर्मभिस्तनये पितुः ॥ ' इति च । 'सत्ये तपसि वा चीर्णे सर्वकर्म कृतं भवेत् । स्वाध्याये च प्रवचने [illegible]वो विशेषतः ॥ ' इति च । 'यं यं क्रतुमधीते तेन [illegible]स्येष्टं भवति' इति च श्रुतिः । '[illegible] जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ ' इति भारते । 'सम्यग्ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च । न तस्य किंचिदकृतं कर्तव्यं मुच्यते च सः ॥ ' इति कर्मतत्त्वे । मध्व.

त्रिशङ्कोर्वेदानुवचनम्

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ॥**

( १ ) अहं वृक्षस्य रेरिवेति स्वाध्यायार्थो मन्त्राम्नायः । स्वाध्यायश्च विद्योत्पत्तये, प्रकरणात् । विद्यार्थं हीदं प्रकरणम् । न चान्यार्थत्वमवगम्यते । स्वाध्यायेन च विशुद्धसत्त्वस्य विद्योत्पत्तिरवकल्पते । अहं वृक्षस्य उच्छेदात्मकस्य संसारवृक्षस्य रेरिवा प्रेरयिता अन्तर्याम्यात्मना । कीर्तिः ख्यातिर्गिरेः पृष्ठमिवोच्छ्रिता मम । ऊर्ध्वपवित्रः, ऊर्ध्वं कारणं पवित्रं पावनं ज्ञानप्रकाश्यं परमं ब्रह्म यस्य सर्वात्मनो मम सोऽहमूर्ध्वपवित्रः । वाजिनीव वाजवतीव । वाजं अन्नं, तद्वति सवितरीत्यर्थः । यथा सवितरि अमृतं आत्मतत्त्वं विशुद्धं प्रसिद्धं श्रुतिस्मृतिशतेभ्यः, एवं स्वमृतं शोभनं विशुद्धं आत्मतत्त्वं अस्मि भवामि । द्रविणं धनं सवर्चसं दीप्तिमत्, तदेव आत्मतत्त्वमस्मीत्यनुवर्तते । ब्रह्मज्ञानं वा आत्मतत्त्वप्रकाशकत्वात्सवर्चसम् । द्रविणमिव द्रविणं, मोक्षसुखहेतुत्वात् । अस्मिन्पक्षे प्राप्तं मयेत्यध्याहारः कर्तव्यः । सुमेधाः, शोभना मेधा सर्वज्ञत्वलक्षणा यस्य मम सोऽहं सुमेधाः । संसारस्थित्युत्पत्त्युपसंहारकौशलयोगात्सुमेधस्त्वम् । अत एव अमृतः अमरणधर्मा, अक्षितः अक्षीणः अव्ययः । उक्षितो वा, अमृतेन वा उक्षितः सिक्तः । 'अमृतोऽक्षितोऽहम्' इत्यादि ब्राह्मणम् । इति एवं त्रिशङ्कोर्ऋषेर्ब्रह्मभूतस्य ब्रह्मविदो वेदानुवचनं, वेदो वेदनं आत्मैकत्वविज्ञानं, तस्य प्राप्तिमनु वचनं वेदानुवचनम् । आत्मनः कृतकृत्यताख्यापनार्थं वामदेववत् त्रिशङ्कुना आर्षेण दर्शनेन दृष्टो मन्त्राम्नाय आत्मविद्याप्रकाशक इत्यर्थः । अस्य च जपो विद्योत्पत्त्यर्थोऽवगम्यते । ऋतं चेत्यादिकर्मोपन्यासात्, अनन्तरं च

(१) तैड. १।१०; शंकर. 'अमृतोऽक्षितः' इत्यपि पाठः; मध्व. वाजिनीव स्व ( वाजिनीवस्व ).

वेदानुवचनपाठादेतदवगम्यते । एवं श्रौतस्मार्तेषु नित्येषु कर्मसु युक्तस्य निष्कामस्य परं ब्रह्म विविदिषोरार्षाणि दर्शनानि प्रादुर्भवन्त्यात्मादिविषयाणीति ।

शंकर.

( २ ) ‘ संसारवृक्षच्छेत्ताऽहं मत्कीर्तिः पर्वतोपमा । अत्युत्कृष्टेन हरिणा पावितोऽस्मि यतः स्फुटम् । वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते । तत्रस्थो भगवान् विष्णुः संप्रोक्तो वाजिनीवसुः । तेनामृतोऽस्मि द्रविणं नित्यानन्दस्वरूपतः । तेनामृतेन सिक्तोऽहं तने व्याप्तो यतः सदा । इत्याह मन्त्रदृक्पूर्वं त्रिशङ्कुर्मानवो नृपः ॥ ’ इति यजुर्विवेके ।

मध्व.

स्नातकस्याचार्यकृतमनुशासनम्

[1]वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकँ सुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाँसो ब्राह्मणाः । तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥

( १ ) वेदमनूच्येत्येवमादिकर्तव्यतोपदेशारम्भः प्राग्ब्रह्मविज्ञानान्नियमेन कर्तव्यानि श्रौतस्मार्तकर्माणीत्येवमर्थः, अनुशासनश्रुतेः पुरुषसंस्कारार्थत्वात् । संस्कृतस्य हि विशुद्धसत्त्वस्य आत्मज्ञानमञ्जसैवोत्पद्यते । ‘ तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते ’ इति स्मृतिः । वक्ष्यति च — ‘ तपसा ब्रह्म विजिज्ञासस्व ’ इति । अतो विद्योत्पत्त्यर्थमनुष्ठेयानि कर्माणि । अनुशास्तीत्यनुशासनशब्दादनुशासनातिक्रमे हि दोषोत्पत्तिः । प्रागुपन्यासाच्च कर्मणाम् । केवलब्रह्मविद्यारम्भाच्च पूर्वं कर्माण्युपन्यस्तानि । उदितायां च विद्यायां ‘ अभयं प्रतिष्ठां विन्दते ’ ‘ न बिभेति कुतश्चन ’ ‘ किमहं साधु नाकरवम् ’ इत्येवमादिना कर्मनैष्किंचन्यं दर्शयिष्यतीत्यतोऽवगम्यते पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणीति । मन्त्रवर्णाच्च — ‘ अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ’ इति । ऋतादीनां पूर्वत्रोपदेश आनर्थक्यपरिहारार्थः । इह तु ज्ञानोत्पत्त्यर्थत्वात्कर्तव्यनियमार्थः ।

वेदमनूच्य अध्याप्य आचार्योऽन्तेवासिनं शिष्यं अनुशास्ति ग्रन्थग्रहणादनु पश्चात् शास्ति, तदर्थं ग्राहयतीत्यर्थः । अतोऽवगम्यते अधीतवेदस्य धर्मजिज्ञासामकृत्वा गुरुकुलान्न समावर्तितव्यमिति । ‘ बुद्ध्वा कर्माणि चाऽऽरभेत् ’ इति स्मृतेश्च । कथमनुशास्तीत्याह — सत्यं वद यथाप्रमाणावगतं वक्तव्यं तद्वद । तद्वद्धर्मं चर । धर्म इत्यनुष्ठेयानां सामान्यवचनं, सत्यादिविशेषनिर्देशात् । स्वाध्यायात् अध्ययना[illegible] प्रमदः प्रमादं मा कार्षीः । आचार्याय आच[illegible] इष्टं धनमाहृत्य आनीय दत्त्वा विद्या[illegible]यार्थं, आचार्[illegible] चानुज्ञातोऽनुरूपान् दारानाहृत्य [illegible]न्तुं प्रजासंतानं मा व्यवच्छेत्सीः प्रजासंतते[illegible]सिर्न कर्तव्या ।

(१) तैउ. १।११; शंकर. ‘ ऽऽसने न प्रश्वसि० ’ इत्यपि पाठः; ब्रशांकर. ३।१।९, ३।४।१८; भास्कर. ३।४।१८; रामानुज. ३।१।९; मध्व. ऽऽसनेन ( ऽऽसने न ) अश्रद्धयाऽदेयम् ( अश्रद्धया देयम् ); श्रीकर. १।१।१ ( पृ. २१ ), १।२।१, ७, २।३।४९, ३।१।९, ३।४।२, ५, ६, ७ अश्रद्धयाऽदेयम् ( अश्रद्धया देयम् ); विज्ञान. ३।४।१८; बलदेव. ३।३।५१.

अनुत्पद्यमानेऽपि पुत्रे पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः, प्रजाप्रजननप्रजातित्रयनिर्देशसामर्थ्यात्। अन्यथा प्रजन श्चेत्येतदेकमेवावक्ष्यत्। सत्यान्न प्रमदितव्यं प्रमादो न कर्तव्यः। सत्याच्च प्रमदनमनृतप्रसङ्गः, प्रमादशब्दसामर्थ्यात्। विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थः। अन्यथा असत्यवदनप्रतिषेध एव स्यात्। धर्मान्न प्रमदितव्यम्। धर्मशब्दस्यानुष्ठेयविषयत्वादननुष्ठानं प्रमादः, स न कर्तव्यः। अनुष्ठातव्य एव धर्म इति यावत्। एवं कुशलात् आत्मरक्षणार्थात्कर्मणो न प्रमदितव्यम्। भूतिर्विभूतिः, तस्यै भूत्यै, भूत्यर्थान्मङ्गलयुक्तात्कर्मणो न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। स्वाध्यायोऽध्ययनं, प्रवचनमध्यापनं, ताभ्यां न प्रमदितव्यम्। ते हि नियमेन कर्तव्ये इत्यर्थः। तथा देवपितृकार्याभ्यां न प्रमदितव्यम्। दैवपित्र्ये कर्मणी कर्तव्ये। मातृदेवः, माता देवो यस्य स त्वं मातृदेवः भव स्याः। एवं पितृदेवः आचार्यदेवोऽतिथिदेवो भव। देवतावदुपास्या एते इत्यर्थः। यान्यपि चान्यानि अनवद्यानि अनिन्दितानि शिष्टाचारलक्षणानि कर्माणि, तानि सेवितव्यानि कर्तव्यानि त्वया। नो न कर्तव्यानि इतराणि सावद्यानि शिष्टकृतान्यपि। यान्यस्माकमाचार्याणां सुचरितानि शोभनचरितानि आम्नायाद्यविरुद्धानि, तान्येव त्वयोपास्यानि अदृष्टार्थान्यनुष्ठेयानि, नियमेन कर्तव्यानीति यावत्। नो इतराणि विपरीतानि अचार्यकृतान्यपि। ये के च विशेषिता आचार्यत्वादिधर्मैः अस्मत् अस्मत्तः श्रेयांसः प्रशस्यतराः, ते च ब्राह्मणाः, न क्षत्रियादयः, तेषामासनेन आसनदानादिना त्वया प्रश्वसितव्यम्। प्रश्वसनं प्रश्वासः श्रमापनयः। तेषां श्रमस्त्वयाऽपनेतव्य इत्यर्थः। तेषां वा आसने गोष्ठीनिमित्ते समुदिते तेषु न प्रश्वसितव्यं प्रश्वासोऽपि न कर्तव्यः [illegible]केवलं तदुक्तसारग्राहिणा भवितव्यम्। किं[illegible] यत्किञ्चि[illegible]यं तच्छ्रद्धयैव दातव्यम्। अश्रद्धया अदेयं न दातव्यम्। श्रिया विभूत्या देयं दातव्यम्। ह्रिया लज्जया च देयम्। भिया च भयेन देयम्। संविदा च [illegible] संविन्मित्रादिकार्यम्। अथैवं वर्तमानस्य यदि कदाचित् ते तव श्रौते स्मार्ते वा कर्मणि वृत्ते वा आचारलक्षणे विचिकित्सा संशयः स्यात्, ये तत्र तस्मिन्देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन संबन्धः कर्तव्यः, संमर्शिनो विचारक्षमाः, युक्ताः अभियुक्ताः कर्मणि वृत्ते वा, आयुक्ताः अपरप्रयुक्ताः, अलूक्षाः अरूक्षाः अक्रूरमतयः, धर्मकामाः अदृष्टार्थिनः, अकामहता इत्येतत्, स्युः भवेयुः, ते यथा येन प्रकारेण ब्राह्मणास्तत्र तस्मिन्कर्मणि वृत्ते वा वर्तेरन् तथा त्वमपि वर्तेथाः। अथाभ्याख्यातेषु, अभ्याख्याता अभ्युक्ताः दोषेण संदिह्यमानेन संयोजिताः केनचित्, तेषु च यथोक्तं सर्वमुपनयेत् ये तत्रेत्यादि।

एष आदेशो विधिः। एष उपदेशः पुत्रादिभ्यः पित्रादीनाम्। एषा वेदोपनिषत् वेदरहस्यं, वेदार्थ इत्येतत्। एतदेवानुशासनं ईश्वरवचनं, आदेशवाच्यस्य विधेरुक्तत्वात्। सर्वेषां वा प्रमाणभूतानामनुशासनमेतत्। यस्मादेवं तस्मात् एवं यथोक्तं सर्वमुपासितव्यं कर्तव्यम्। एवमु चैतदुपास्यम्। उपास्यमेव चैतत्, नानुपास्यमित्यादरार्थं पुनर्वचनम्। शंकर.

(२) 'भूत्यै न प्रमदितव्यम्' 'अग्निरिति भस्म' इत्यादियजुराथर्वणबृहज्जाबालकालाग्निरुद्ररुद्राक्षोपनिषदादिप्रतिपादितभूतिरुद्राक्षविधायकत्वेन च..... श्रुत्यागमानां समानार्थत्वात् साक्षाद्वैदिकत्वं आगमानां निष्प्रत्यूहमेव। १।२।१

'भूत्यै न प्रमदितव्यम्' इत्यत्र न चैश्वर्यपरत्वं, 'धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' इति पूर्ववाक्ये प्राकृतैश्वर्यलक्षणावबोधकधनाहरणविधानदर्शनात्। भूतिशब्दस्य भस्मपरत्वमेव बोधायनसूत्रे 'अथातस्त्रिपुण्ड्रविधिं व्याख्यास्यामो भूत्यै न प्रमदितव्यम्' इति हि विज्ञायते इति। श्रीकर. १।२।७

देवताभ्यः कल्याणप्रार्थना, वायुब्रह्म नमस्कार्यं, सत्यप्रतिज्ञापूर्तिः

[1]शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा।

(१) वैउ. १।१२; रामानुज. ३।३।२५; श्रीकर. ३।३।२५.

शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ।

ॐ शान्तिः शान्तिः शान्तिः ॥

(१) अतीतविद्याप्राप्त्युपसर्गशमनार्थं शान्तिं पठति—शं नो मित्र इति । व्याख्यातमेतत्पूर्वम् (पृ. ६९३)। शंकर.

(२) संहितायाः पञ्चाधिकरणाभिमानित्वं प्राणादिरूपस्य वायोरपि भवति । पृथिव्यन्तरिक्षमित्युक्तपाङ्क्तत्वं च । अत उपक्रमोपसंहारयोः 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' 'त्वामेव प्रत्यक्षं ब्रह्मावादिषम्' इति युज्यते। मध्व.

इति शीक्षावल्ल्यध्यायः ॥

---

## ब्रह्मवल्ल्यध्यायः

विद्योपसर्गोपशमनप्रार्थना

* ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

अतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिः पठिता । इदानीं तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्तिः पठ्यते — सह नाववत्विति । वक्ष्यमाणविद्याविघ्नप्रशमनार्था चेयं शान्तिः । अविघ्नेनाऽऽत्मविद्याप्राप्तिराशास्यते, तन्मूलं हि परं श्रेय इति । शंकर.

ब्रह्मलक्षणं, ब्रह्मविद्याफलं, आत्मनः पुरुषान्ता सृष्टिः

ब्रह्मविदाप्नोति परम् । तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चितेति । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

---

* आनन्दाश्रमपुस्तके अतः प्राक् 'शं नो मित्रः शं वरुणः' इत्यादिशान्तिरपि पठिता । भाष्यं च तत्र 'शं नो मित्र इत्याद्यतीतविद्याप्राप्त्युपसर्गप्रशमनार्था शान्तिः पठिता । इदानीं तु वक्ष्यमाणब्रह्मविद्याप्राप्त्युपसर्गोपशमनार्था शान्तिः पठ्यते—शं नो मित्र इति, सह नाववत्विति च । शं नो मित्र इत्यादि पूर्ववत्स्पष्टम्' इति । टीकाऽपि 'शान्तिद्वयस्यापौनरुक्त्यमाह—शं नो मित्र इति' इति । अस्माभिस्तु तैत्तिरीयारण्यके ब्रह्मवल्ल्यादौ 'शं नो मित्रः' इतिशान्तेः पाठाभावेन तत्सर्वमुपेक्ष्य वाणीविलासपुस्तकपाठ एव समाश्रितः । 'सह नाववतु' इत्यस्याः शान्तेर्व्याख्यानं काठकान्तकृतव्याख्यानवत् ।

(१) तैउ. २।१; ब्रशंकर. १।१।१, १०, १२, १५, १९, २२, १।२।११, १।३।८, १।४।१४, २२, २।१।१४, २।२।२४, २।३।२, ५, ६, ८, १०, १८, २१, २।४।१, ३।२।२२, ३।३।१६, ३।४।१, ४।१।२, ४।३।१४; भास्कर. १।१।१, ४, १०, १२, १५, १९, १।२।११, १।३।८, १।४।१४, २।१।१४, २।३।२, १०, ११, १२, १८, ३।२।२३, ३।३।१६, ३।४।१, ५०, ४।४।६, २१; रामानुज. १।१।१ (पृ. ४, ६, १३, १७, १९, २०, ५९, ६०, ६१, ६२, ७९, १२१, १२८), १।१।२ (पृ. १३३, १३५), १।१।४ (पृ. १४७, १५१, १५५, १५९, १६२, १६७, १६८), १।१।११, १३, १६, २१, २३, ३२, १।३।७, १।४।१४, २७, २।१।१५ (पृ. ४३१, ४३८), २।३।१, ३, १०, ११, १२, २९, ३।२।१५, ३२, ३।३।१२, १३, १४, १७, २५, ३२, ३५, ५७, ३।४।१, ४।१।१, १३, ४।४।४, २१; निंबार्क. १।१।१६, २।३।२, ३, ९, १०, १२, १५, २।४।२, ३।४।१, ४।४।२१; ब्रमध्व. १।१।१५, १९, २४, १।२।११, १।३।२, २।३।२, १०, ११, १२, ३।३।२, १७, २७, ३।४।४४, ४।३।९; श्रीकंठ. १।१।१ [illegible]), १।१।२ (पृ. ११८, १२०, १२६), १।[illegible]४ (पृ. १४[illegible] [illegible]) १।१।१३, १६, २४, १।४।२३, २।३[illegible] २, ३, ६, [illegible] १०, ११, १२, १३, १४, २९, [illegible]११, १५, १६, ३।३।११, १६, ३९, ४०, ३।४[illegible] ४।१।१, ४।४।४,

( १ ) संहितादिविषयाणि कर्मभिरविरुद्धान्युपासनान्युक्तानि। अनन्तरं चान्तःसोपाधिकात्मदर्शनमुक्तं व्याहृतिद्वारेण स्वाराज्यफलम्। न चैतावताऽशेषतः संसारबीजस्योपमर्दनमस्तीत्यतोऽशेषोपद्रवबीजस्याज्ञानस्य निवृत्त्यर्थं विधूतसर्वोपाधिविशेषात्मदर्शनार्थमिदमारभ्यते — ब्रह्मविदाप्नोति परमित्यादि। प्रयोजनं चास्या ब्रह्मविद्याया अविद्यानिवृत्तिः, तत आत्यन्तिकः संसाराभावः। वक्ष्यति च — 'विद्वान्न बिभेति कुतश्चन' इति। संसारनिमित्ते च सति अभयं प्रतिष्ठां च विन्दते इत्यनुपपन्नं, कृताकृते पुण्यपापे न तपतः इति च। अतोऽवगम्यते अस्माद्विज्ञानात्सर्वात्मब्रह्मविषयादात्यन्तिकः संसाराभाव इति। स्वयमेव च प्रयोजनमाह— ब्रह्मविदाप्नोति परमिति आदावेव संबन्धप्रयोजनज्ञापनार्थम्। निर्ज्ञातयोर्हि संबन्धप्रयोजनयोर्विद्याश्रवणग्रहणधारणाभ्यासार्थं प्रवर्तते। श्रवणादिपूर्वकं हि विद्याफलं, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुत्यन्तरेभ्यः। ब्रह्मवित्, ब्रह्मेति वक्ष्यमाणलक्षणं बृहत्तमत्वाद्ब्रह्म, तद्वेत्ति विजानातीति ब्रह्मवित् आप्नोति परं निरतिशयं तदेव ब्रह्म परम्। न ह्यन्यस्य विज्ञानादन्यस्य प्राप्तिः। स्पष्टं च श्रुत्यन्तरं ब्रह्मप्राप्तिमेव ब्रह्मविदो दर्शयति — 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्यादि।

'ब्रह्मविदाप्नोति परम्' इति वाक्यं सूत्रभूतं सर्वस्य वल्ल्यर्थस्य। 'ब्रह्मविदाप्नोति परम्' इत्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणः अनिर्धारितस्वरूपविशेषस्य सर्वतोव्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय, अविशेषेण चोक्तवेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतयाऽनन्यरूपेण विज्ञेयत्वाय, ब्रह्मविद्याफलं च ब्रह्मविदो यत्परब्रह्मप्राप्तिलक्षणमुक्तं स सर्वात्मभावः सर्वसंसारधर्मातीतब्रह्मस्वरूपत्वमेव, नान्यत्, इत्येतत्प्रदर्शनाय एषा ऋगुदाह्रियते—तदेषाऽभ्युक्तेति। तत् तस्मिन्नेव ब्राह्मणवाक्योक्ते अर्थे एषा ऋक् अभ्युक्ता आम्नाता। सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मणो लक्षणार्थं वाक्यम्। सत्यादीनि हि त्रीणि विशेषणार्थानि पदानि विशेष्यस्य ब्रह्मणः। विशेष्यं ब्रह्म, विवक्षितत्वात् वेद्यतया। विशेषणविशेष्यत्वादेव सत्यादीन्येकविभक्त्यन्तानि पदानि समानाधिकरणानि। सत्यादिभिस्त्रिभिर्विशेषणैर्विशेष्यमाणं ब्रह्म विशेष्यान्तरेभ्यो निर्धार्यते। एवं हि तज्ज्ञानं भवति यदन्येभ्यो निर्धारितम्। यथा लोके नीलं महत् सुगन्धि उत्पलमिति।

ननु विशेष्यं विशेषणान्तरं व्यभिचरद्विशेष्यते, यथा नीलं रक्तं चोत्पलमिति। यदा ह्यनेकानि द्रव्याण्येकजातीयान्यनेकविशेषणयोगीनि तदा विशेषणस्यार्थवत्त्वम्। न ह्येकस्मिन्नेव वस्तुनि, विशेषणान्तरायोगात्, यथाऽसौ एक आदित्य इति। तथा एकमेव च ब्रह्म, न ब्रह्मान्तराणि, येभ्यो विशेष्येत नीलोत्पलवत्। न। लक्षणार्थत्वाद्विशेषणानाम्। नायं दोषः। कस्मात्। यस्मात् लक्षणार्थप्रधानानि विशेषणानि, न विशेषणप्रधानान्येव। कः पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्ययोर्वा विशेष इति। उच्यते।

१९, २०, २१, २२; श्रीकर. १।१।१ (पृ. ३, ४, ५, ६, २२, २८), १।१।२ (पृ. ३४), १।१।३ (पृ. ३७, ३९), १।१।४ (पृ. ४८, ५२), १।१।५, ८, ११, १३, १६, २०, २३, १।२।११, १।३।८, १।४।१४, २२, २३, २।१।२, ८, ११, १४, २२, २।२।४४, ४५, २।३।१, २, ३, ४, ५, ७, ९, १०, ११, १२, १४, १५, २७, २।४।१, ३, १६, ३।१।१७, ३।२।७, १५, १६, २३, २५, २६, ३२, ३।३।७, ८, ११, १२, १३, १४, १५, १७, ३२, ३५, ४१, ४२, ४४, ५१, ५७, ५९, ६०, ३।४।१, ४, ४९, ५१, ५२, ४।१।१, ६, १३, ४।२।१९, ४।३।७, ९, १२, ४।४।३, ४, ६, ७, १२, १३, १५, १७, २१, २२; वल्लभ. १।१।२ (पृ. ५१, ५३, ५४, ६१), १।१।३ (पृ. १२६), १।१।११ (पृ. १७०, १७१, १८४, १८६, १९१), १।१।१४, १९, २१, १।३।१, १।४।३, १४, २।३।१, १०, १२, ३।३।१८, २४, २९, ३३, ४७, ५३, ५४, ३।४।१, १७, २२, २५, ३८, ४१, ४।१।१९, ४।३।१५, १७, ४।४।१, २, ३, ४, ५, ७, ११, १४, १६, १७, २१, २२; विज्ञान. १।१।१ (पृ. १, २), १।१।२ (पृ. ६१), १।१।४ ([illegible]) १।१।१२ (पृ. १४५), १।१।१५, [illegible]३।२, ५, [illegible] १०, ११, १२, ३।३।४, ४।३।१३, ४।४।२१; बलदेव. १।१।१, १२, १५, १६, १।३।८, १।४।१४, २३, २।३।२, ३।३।१५, १८, २०, ३।४।१, ४२, ४।१।१९, ४।३।१०, ४।४।१३, २१.

समानजातीयेभ्य एव निवर्तकानि विशेषणानि विशेष्यस्य, लक्षणं तु सर्वत एव, यथाऽवकाशदात्राकाशमिति । लक्षणार्थं च वाक्यमित्यवोचाम । सत्यादिशब्दा न परस्परं संबध्यन्ते । परार्थत्वाद्विशेष्यार्था हि ते । अत एकैको विशेषणशब्दः परस्परं निरपेक्षो ब्रह्मशब्देन संबध्यते, सत्यं ब्रह्म ज्ञानं ब्रह्म अनन्तं ब्रह्मेति । सत्यमिति । यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यं, यद्रूपेण निश्चितं यत् तद्रूपं व्यभिचरदनृतमित्युच्यते । अतो विकारोऽनृतं, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' एवं सदेव सत्यमित्यवधारणात् । अतः सत्यं ब्रह्मेति ब्रह्म विकारान्निवर्तयति । अतः कारणत्वं प्राप्तं ब्रह्मणः । कारणस्य च कारकत्वं, वस्तुत्वान्मृद्वदचिद्रूपता च प्राप्ता, अत इदमुच्यते — ज्ञानं ब्रह्मेति । ज्ञानं ज्ञप्तिरवबोधः । भावसाधनो ज्ञानशब्दः, ब्रह्मविशेषणत्वात्सत्यानन्ताभ्यां सह । न हि सत्यताऽनन्तता च ज्ञानकर्तृत्वे सत्युपपद्यते । ज्ञानकर्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तं च । यद्धि न कुतश्चित्प्रविभज्यते तदनन्तम् । ज्ञानकर्तृत्वे च ज्ञेयज्ञानाभ्यां प्रविभक्तमित्यनन्तता न स्यात्, 'यत्र नान्यद्विजानाति स भूमाऽथ यत्रान्यद्विजानाति तदल्पम्' इति श्रुत्यन्तरात् ।

ज्ञानं ब्रह्मेति कर्तृत्वादिकारकनिवृत्त्यर्थं मृदादिवदचिद्रूपतानिवृत्त्यर्थं च प्रयुज्यते । ज्ञानं ब्रह्मेति वचनात्प्राप्तमन्तवत्त्वं, लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात्, अतस्तन्निवृत्त्यर्थमाह—अनन्तमिति । तत्र अनन्तशब्दोऽन्तवत्त्वप्रतिषेधद्वारेण विशेषणम् । सत्यज्ञानशब्दौ तु स्वार्थसमर्पणेनैव विशेषणे भवतः ।

न ज्ञानशब्दवाच्यमपि तद्ब्रह्म । तथाऽपि तदाभासवाचकेन बुद्धिधर्मविषयेण ज्ञानशब्देन तल्लक्ष्यते, न तूच्यते, शब्दप्रवृत्तिहेतुजात्यादिधर्मरहितत्वात् । तथा सत्यशब्देनापि सर्वविशेषप्रत्यस्तमितस्वरूपत्वाद्ब्रह्मणो बाह्यसत्तासामान्यविषयेण सत्यशब्देन लक्ष्यते सत्यं ब्रह्मेति, न तु सत्यशब्दवाच्यमेव ब्रह्म । एवं सत्यादिशब्दा इतरेतरसंनिधौ अन्योन्यनियम्यनियामकाः सन्तः सत्यादिशब्दवाच्यात्तन्निवर्तका ब्रह्मणो लक्षणार्थाश्च भवन्तीत्यतः सिद्धं 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' 'अनिरुक्तेऽनिलयने' इति चावाच्यत्वं नीलोत्पलवदवाक्यार्थत्वं च ब्रह्मणः ।

तत् यथाव्याख्यातं ब्रह्म यो वेद विजानाति निहितं स्थितं गुहायाम् । गूहतेः संवरणार्थस्य । निगूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिः । गूढौ अस्यां भोगापवर्गौ पुरुषार्थौ इति वा । तस्यां परमे प्रकृष्टे व्योमन् व्योम्नि आकाशे अव्याकृताख्ये । तद्धि परमं व्योम, 'एतस्मिन् खल्वक्षरे गार्ग्याकाशः' इत्यक्षरसंनिकर्षात् । गुहायां व्योम्नीति वा सामानाधिकरण्यादव्याकृताकाशमेव गुहा, तत्रापि निगूढाः सर्वे पदार्थास्त्रिषु कालेषु, कारणत्वात्सूक्ष्मतरत्वाच्च । तस्मिन्नन्तर्निहितं ब्रह्म । हार्दमेव तु परमं व्योमेति न्याय्यं, विज्ञानाङ्गत्वेनोपासनाङ्गत्वेन व्योम्नो विवक्षितत्वात् । 'यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्तः पुरुष आकाशो योऽयमन्तर्हृदय आकाशः' इति श्रुत्यन्तरात्प्रसिद्धं हार्दस्य व्योम्नः परमत्वम् । तस्मिन्हार्दे व्योम्नि या बुद्धिर्गुहा तस्यां निहितं ब्रह्म, तद्व्यावृत्त्या विविक्तयोपलभ्यते इति । न ह्यन्यथा विशिष्टदेशकालसंबन्धोऽस्ति ब्रह्मणः, सर्वगतत्वात् निर्विशेषत्वाच्च । स एवं ब्रह्म विजानन्किमित्याह—अश्नुते भुङ्क्ते सर्वान्निरवशिष्टान् कामान् भोगानित्यर्थः । किमस्मदादिवत्पुत्रस्वर्गादीन्पर्यायेण, नेत्याह—सह युगपत् एकक्षणोपारूढानेव एकयोपलब्ध्या सवितृप्रकाशवन्नित्यया ब्रह्मस्वरूपाव्यतिरिक्तया, यामवोचाम सत्यं ज्ञानमनन्तमिति । एतत्तदुच्यते—ब्रह्मणा सहेति । ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्वान्कामान् सह अश्नुते, न यथा उपाधिकृतेन स्वरूपेणाऽऽत्मना जलसूर्यकादिवत्प्रतिबिम्बभूतेन सांसारिकेण धर्मादिनिमित्तापेक्षांश्चक्षुरादिकरणापेक्षांश्च कामान्पर्यायेणाश्नुते लोकः । कथं तर्हि, यथोक्तेन प्रकारेण सर्वज्ञेन सर्वगतेन सर्वात्मना नित्यब्रह्मात्मस्वरूपेण धर्मादिनिमित्तानपेक्षांश्चक्षुरादिकरणनिरपेक्षांश्च सर्वान् कामान् सहैवाश्नुते इत्यर्थः । विपश्चिता मेधाविना सर्वज्ञेन । तद्धि वैपश्चित्यं यत्सर्वज्ञत्वं, तेन सर्वज्ञस्वरूपेण ब्रह्मणा इति । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ।

सर्व एव वल्ल्यर्थो ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्येन सूत्रितः । स च सूत्रितोऽर्थः संक्षेपतो मन्त्रेण व्याख्यातः । पुनस्तस्यैव विस्तरेणार्थनिर्णयः कर्तव्य इत्युत्तरस्तद्वृत्तिस्थानीयो ग्रन्थ आरभ्यते—तस्माद्वा एतस्मादित्यादिः । तत्र च सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तं मन्त्रादौ, तत्कथं सत्यमनन्तं चेत्यत आह । तत्र त्रिविधं ह्यानन्त्यं देशतः कालतो वस्तुतश्चेति । तद्यथा देशतोऽनन्त आकाशः । न हि देशतस्तस्य परिच्छेदोऽस्ति । न तु कालतश्चाऽऽनन्त्यं वस्तुतश्चाऽऽकाशस्य । कस्मात् । कार्यत्वात् । नैवं ब्रह्मण आकाशवत्कालतोऽप्यन्तवत्त्वं, अकार्यत्वात् । कार्यं हि वस्तु कालेन परिच्छिद्यते । अकार्यं च ब्रह्म । तस्मात्कालतोऽप्यनन्तम् । तथा वस्तुतः । कथं पुनर्वस्तुत आनन्त्यम् । सर्वानन्यत्वात् । भिन्नं हि वस्तु वस्त्वन्तरस्यान्तो भवति । वस्त्वन्तरबुद्धिर्हि प्रसक्ता वस्त्वन्तरात् निवर्तते । यतो यस्य बुद्धेर्विनिवृत्तिः स तस्यान्तः । तद्यथा गोत्वबुद्धिरश्वत्वाद्विनिवर्तते इत्यश्वत्वान्तं गोत्वमित्यन्तवदेव भवति । स चान्तो भिन्नेषु वस्तुषु दृष्टः । नैवं ब्रह्मणो भेदः । अतो वस्तुतोऽप्यानन्त्यम् । कथं पुनः सर्वानन्यत्वं ब्रह्मण इत्युच्यते । सर्ववस्तुकारणत्वात् । सर्वेषां हि वस्तूनां कालाकाशादीनां कारणं ब्रह्म । कार्यापेक्षया वस्तुतोऽन्तवत्त्वमिति चेन्न । अनृतत्वात्कार्यवस्तुनः । न हि कारणव्यतिरेकेण कार्यं नाम वस्तुतोऽस्ति, यतः कारणबुद्धिर्विनिवर्तेत, ' वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' एवं सदेव सत्यमिति श्रुत्यन्तरात् । तस्मादाकाशादिकारणत्वाद्देशतस्तावदनन्तं ब्रह्म । आकाशो ह्यनन्त इति प्रसिद्धं देशतः, तस्य चायं कारणं, तस्मात्सिद्धं देशत आत्मन आनन्त्यम् । न ह्यसर्वगतात्सर्वगतमुत्पद्यमानं लोके किंचित् दृश्यते । अतो निरतिशयमात्मन आनन्त्यं देशतः, तथा अकार्यत्वात्कालतः, तद्भिन्नवस्त्वन्तराभावाच्च वस्तुतः । अत एव निरतिशयसत्यत्वम् ।

तस्मादिति मूलवाक्यसूत्रितं ब्रह्म परामृश्यते । एतस्मादिति मन्त्रवाक्येणानन्तरं यथालक्षितम् । यद्ब्रह्म आदौ ब्राह्मणवाक्येन सूत्रितं, यच्च ' सत्यं ज्ञानमनन्तं ब्रह्म ' इत्यनन्तरमेव लक्षितं, तस्मादेतस्माद्ब्रह्मण आत्मनः आत्मशब्दवाच्यात् । आत्मा हि तत्सर्वस्य, ' तत्सत्यं स आत्मा ' इति श्रुत्यन्तरात् । अतो ब्रह्म आत्मा । तस्मादेतस्माद्ब्रह्मण आत्मस्वरूपादाकाशः संभूतः समुत्पन्नः । आकाशो नाम शब्दगुणोऽवकाशकरो मूर्तद्रव्याणाम् । तस्मादाकाशात्स्वेन स्पर्शगुणेन पूर्वेण च कारणगुणेन शब्देन द्विगुणो वायुः । संभूत इत्यनुवर्तते । वायोश्च स्वेन रूपगुणेन पूर्वाभ्यां च त्रिगुणोऽग्निः संभूतः । अग्नेः स्वेन रसगुणेन पूर्वैश्च त्रिभिश्चतुर्गुणा आपः संभूताः । अद्भ्यः स्वेन गन्धगुणेन पूर्वैश्चतुर्भिः पञ्चगुणा पृथिवी संभूता । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नाद्रेतोरूपेण परिणतात्पुरुषः शिरःपाण्याद्याकृतिमान् । स वा एष पुरुषोऽन्नरसमयः अन्नरसविकारः । पुरुषाकृतिभावितं हि सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतं रेतो बीजं, तस्माद्यो जायते सोऽपि तथा पुरुषाकृतिरेव स्यात् । सर्वजातिषु जायमानानां जनकाकृतिनियमदर्शनात् । सर्वेषामप्यन्नरसविकारत्वे ब्रह्मवंश्यत्वे चाविशिष्टे कस्मात्पुरुष एव गृह्यते । प्राधान्यात् । किं पुनः प्राधान्यम् । कर्मज्ञानाधिकारः । पुरुष एव हि शक्तत्वादर्थित्वादपर्युदस्तत्वाच्च कर्मज्ञानयोरधिक्रियते, ' पुरुषे त्वेवाऽऽविस्तरामात्मा । स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सतीत्येवं संपन्नः । अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम् ' ( ऐआ. २।३।२ ) इत्यादिश्रुत्यन्तरदर्शनात् ।

स हि पुरुष इह विद्ययाऽन्तरतमं ब्रह्म संक्रामयितुमिष्टः, तस्य च बाह्याकारविशेषेष्वनात्मसु आत्मभाविता बुद्धिः अनालम्ब्य विशेषं कंचित् सहसा अन्तरतमप्रत्यगात्मविषया निरालम्बना च कर्तुमशक्येति दृष्टशरीरात्मसामान्यकल्पनया शाखाचन्द्रनिदर्शनवदन्तः प्रवेशयन्नाह — तस्येदमेव शिरः । तस्यास्य पुरुषस्यान्नरसमयस्य इदमेव शिरः प्रसिद्धम् । प्राणमयादिष्वशिरस्त्वं शिरस्त्वदर्शनादिहापि तत्प्रसङ्गो मा भूदिति इदमेव शिर इत्युच्यते । एवं पक्षादिषु योजना । अयं दक्षिणो बाहुः पूर्वाभिमुखस्य दक्षिणः पक्षः । अयं सव्यो बाहुरुत्तरः पक्षः । अयं मध्यमो देहभाग आत्मा अङ्गानाम् । ' मध्यं ह्येषामङ्गा-

नामात्मा ' इति श्रुतेः । इदमिति नाभेरधस्ताद्यदङ्गं तत् पुच्छं प्रतिष्ठा, प्रतितिष्ठत्यनयेति प्रतिष्ठा, पुच्छमिव पुच्छं, अधोलम्बनसामान्यात्, यथा गोः पुच्छम् । एतत्प्रकृत्य उत्तरेषां प्राणमयादीनां रूपकत्वसिद्धिः मूषानिषिक्तद्रुतताम्रप्रतिमावत् । तदप्येष श्लोको भवति । तत् तस्मिन्नेवार्थे ब्राह्मणोक्ते अन्नमयात्मप्रकाशक एष श्लोकः मन्त्रः भवति ।

शंकर.

( २ ) महच्च प्रामाण्यकारणमेतद्यद्वेदान्तवाक्यानां चेतनकारणत्वे समानगतित्वं चक्षुरादीनामिव रूपादिषु । अतो गतिसामान्यात् सर्वज्ञं ब्रह्म जगतः कारणम् ।

१।१।१०

' तदभिध्यानादेव तु तल्लिङ्गात्सः ' — किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान् सृजन्ति, आहोस्वित् परमेश्वर एव तेन तेनाऽऽत्मनाऽवतिष्ठमानः अभिध्यायन् तं तं विकारं सृजतीति संदेहे सति प्राप्तं तावत् स्वयमेव सृजन्तीति । कुतः । ' आकाशाद्वायुर्वायोरग्निः ' इत्यादिस्वातन्त्र्यश्रवणात् । ननु अचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा । नैष दोषः, ' तत्तेज ऐक्षत ' ' ता आप ऐक्षन्त ' ( छाउ. ६।२।४ ) इति च भूतानामपि चेतनत्वश्रवणात्, इत्येवं प्राप्ते अभिधीयते— स एव परमेश्वरः तेन तेनाऽऽत्मनाऽवतिष्ठमानः अभिध्यायन् तं तं विकारं सृजतीति । कुतः । तल्लिङ्गात् । तथा हि शास्त्रं — ' यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति ' ( बृउ. ३।७।३ ) इत्येवंजातीयकं साध्यक्षाणामेव भूतानां प्रवृत्तिं दर्शयति ।

ब्रशंकर. २।३।१३

( ३ ) सर्वैः कामैः सह अश्नुते ब्रह्म प्राप्नोतीत्यर्थः । विभक्तिव्यत्ययोऽत्र द्रष्टव्यः, अन्यथा हि ब्रह्मणोऽप्राधान्यं स्यात्, ' सहयुक्तेऽप्रधाने ' इति स्मरणात् । यथा ' सह शाखया प्रस्तरं प्रहरति ' इति प्रस्तरेण सह शाखां प्रहरतीत्यर्थः । तस्मात्संप्रदायपरंपरया च तद्व्याख्यानं शोभनमिति स्थितम् ।

१।१।१९

इतश्च न निरङ्कुशं मुक्तानामैश्वर्यं, यस्माद्भोगसाम्यमेषामनादिसिद्धेनेश्वरेण श्रूयते — ' ब्रह्मविदाप्नोति परम् ' इत्युपक्रम्य ' सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता ' इति । किमनेन ग्रन्थेनोक्तम् । परमेश्वराधीनमेवैषामैश्वर्यं, न स्वातन्त्र्यमिति ।

* भास्कर. ४।४।२१

( ४ ) अथ परमतत्त्वहितपुरुषार्थप्रतिपादिका तैत्तिरीयशाखास्था आनन्दवल्ली व्याख्यायते । निरतिशयबृहत्त्वाश्रयवस्तूपासकः सर्वेभ्यः परं उत्कृष्टं ब्रह्म प्राप्नोतीत्यर्थः । ' आवृत्तिरसकृदुपदेशात् ' ( ब्रसू. ४।१।१ ) इत्यधिकरणोक्तन्यायेन वेदनोपासनादिशब्दानामेकार्थत्वात् ब्रह्मविदित्यत्र विच्छब्द उपासनपरः । तत्क्रतुन्यायेन प्राप्यस्यैवोपास्यत्वात् ब्रह्मविदाप्नोति परमिति परस्य ब्रह्मणः प्राप्यत्वकथनात्तस्यैवोपास्यत्वमिति द्रष्टव्यम् ।

अत्र ब्रह्म, तद्वेदनं, प्राप्तिः, प्राप्यं चेति चतुष्टयमुक्तम् । किं तद्ब्रह्म, कीदृशं वेदनं, कीदृशी प्राप्तिः, कीदृशं च प्राप्यमित्याकाङ्क्षायां मन्त्रमुखेन विवरितुं मन्त्रमवतारयति—तदप्येषाऽभ्युक्तेति । तत् ब्रह्म अभिमुखीकृत्य एषा ऋक् अध्येतृभिरुक्ता । ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियते इत्यर्थः । एवमेव हि मान्त्रवर्णिकसूत्रे भाषितम् ।

तत्र जन्मादिसूत्रे ' यतो वा इमानि ' इत्यादिकारणवाक्येन प्रतिपन्नजगज्जन्मादिकारणस्य ब्रह्मणः सकलेतरव्यावृत्तं स्वरूपमभिधीयते—सत्यं ज्ञानमनन्तं ब्रह्मेति । तत्र सत्यपदं निरुपाधिकसत्तायोगि ब्रह्म आह । तेन यामवंस्पदमचेतनं संसृष्टचेतनश्च व्यावृत्तः, नामा—ब्रह्मणाहाँवस्थान्तरयोगेणैतयोर्निरुपाधिकसत्तायोगरहितत्वात् । ज्ञानपदं नित्यासंकुचितज्ञानैकाकारमाह । तेन कदाचित्संकुचितज्ञानत्वेन मुक्ता व्यावृत्ताः । अनन्तपदं देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह । सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यं, तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणाः सातिशयस्वरूपस्वगुणा नित्या व्यावृत्ताः, विशेषणानां व्यावर्तकत्वादिति भाषितम् ।

नन्वत्र ज्ञानपदस्य विषयावगाहित्वं प्रवृत्तिनिमित्तं चेत् स्वरूपस्य अताद्दक्त्वात् ज्ञातृत्वमित्यर्थः पर्य

* अन्यत् ब्रशंकरवत् ।

वस्येत्, न तु स्वरूपस्य ज्ञानत्वम्। स्वप्रकाशतारूपं ज्ञानत्वं प्रवृत्तिनिमित्तं चेत् स्वरूपस्य ज्ञानत्वमात्रं सिध्येत्, न तु ज्ञानगुणकत्वम्। न चेष्टापत्तिः, ‘तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्’ (ब्रसू. ३।२।२९) इति सूत्रे ‘यथा सत्यं ज्ञानमिति ब्रह्मणो ज्ञानगुणसारत्वात् ज्ञानमिति व्यपदेशः’ इति भाष्यं विरुध्येत, इति चेदुच्यते—स्वप्रकाशत्वमेव प्रवृत्तिनिमित्तं तत्र, ज्ञानत्वाश्रयत्वमसंकोचात्स्वरूपतो गुणतश्च सिध्यति, ब्रह्मशब्दात्प्रतीयमानं बृहत्त्वं यथा स्वरूपतो गुणतश्च सिध्यति, तद्वदिति व्यासार्यैरुक्तम्। वस्तुतस्तु सत्यं ज्ञानमित्यस्यान्तोदात्तत्वादर्शआद्यजन्तत्वेन ज्ञानगुणकत्वमेवार्थः। ‘प्रज्ञानघन एवानन्दमयः’ इति श्रुत्यन्तराद्ब्रह्मणो ज्ञानस्वरूपत्वमस्तीति द्रष्टव्यम्। इहेदं नान्यत्रेति परिच्छेत्तुमशक्यत्वं देशापरिच्छेदः। इदमिदानीं नान्यदेति परिच्छेदायोग्यत्वं कालापरिच्छेदः। इदमिदं नेति परिच्छेदानर्हत्वलक्षणं सर्ववस्तुसामानाधिकरण्यार्हत्वरूपं वस्त्वपरिच्छेदः। यद्वा वस्तुस्वभावतः परिच्छेदो वस्तुपरिच्छेदः। यथा तुल्यकालत्वेऽपि तुल्यपरिमाणत्वेऽपि दशवर्णसुवर्णापेक्षया कलधौतादेरपकर्षः। तद्राहित्यं वस्त्वपरिच्छेदः। समाभ्यधिकराहित्यनिदानभूतैर्गुणैर्निरतिशयप्रकर्षो वस्त्वपरिच्छेद इत्युक्तं भवतीति व्यासार्यैर्व्याख्यातम्। ‘नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते’ इतिस्मरणाद्गुणानन्त्यमनन्तशब्दार्थः। अत्र रूढिवशाद्देवताविशेषनिर्णयः। न च अनन्तपदस्य नारायणवाचिनः पुंलिङ्गत्वं स्यादिति वाच्यम्। इष्टापत्तेः। तस्य द्वितीयान्तत्वेन पुंलिङ्गत्वस्येष्टत्वात्। द्वियान्तत्वाभावे च ‘यो वेद निहितं गुहायाम्’ इत्यत्र तच्छब्दस्याध्याहारप्रसङ्गात्। अनध्याहारेणोपपत्तौ अध्याहारस्यान्याय्यत्वात्। अत्र अनन्तपदयौगिकार्थस्य त्रिविधपरिच्छेदराहित्यस्य नारायणादन्यत्र प्रसक्त्या श्रीपत्यादिशब्देष्विव न रूढिः कल्पनीयेत्युच्यते तदाऽपि न क्षतिः। तत्र ‘सत्यं ज्ञानमनन्तं ब्रह्म’ इत्यनेन ब्रह्मशब्दार्थो विवृतः। हृदयगुहानिहितत्वप्रकारकज्ञानप्रतिपादकेन ‘यो वेद निहितं गुहायाम्’ इत्यनेन विच्छब्दार्थ उक्तः। ‘परमे व्योमन्। सोऽश्नुते’ इत्यनेन आप्नोतिशब्दार्थ उक्तः। परमे व्योमन् अप्राकृताकाशशब्दिते परमपदे इत्यर्थः। ‘सर्वान्कामान् सह। ब्रह्मणा विपश्चिता’ इत्यनेन प्राप्यमुक्तम्। काम्यन्ते इति कामाः कल्याणगुणाः, मुक्तस्य सर्वविषयविरक्तस्य तद्व्यतिरिक्तकाम्यान्तरासंभवात्, ‘अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्’ (छाउ. ८।१।६) इत्यादौ कामशब्दस्य कल्याणगुणेष्वेव प्रयोगात्। विविधं पश्यन्ती चिदस्येति बहुव्रीहिः। निरुपाधिकानन्याधीनासंकुचितसर्वविषयकज्ञानवत्त्वं विपश्चित्त्वम्। अयं च गुणो नित्यमुक्तादिव्यावर्तकः। ब्रह्मापेक्षयाऽपि तद्गुणानां फलदशायां प्राधान्यं प्रतिपादयितुं ब्रह्मणा सहेति निर्देशः। ‘सहयुक्तेऽप्रधाने’ (पा. सू. २।३।१९) इति पाणिनिस्मृतिः।

* रंग.

(५) प्रकृते भूतोत्पत्तिक्रमप्रतिपादके वाक्ये ‘तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः’ इत्यादौ आत्मन आकाशस्य चान्तराले सृष्टिसंहारक्रमबोधकवाक्यान्तरप्रसिद्धानि विज्ञानमनसीत्यनेनोपलक्षितानि अव्यक्तमहदहंकारादीनि तत्त्वानि ज्ञेयानीति संक्षेपः।

निंबार्क. २।३।१५

(६) ‘स्वयोग्यं ब्रह्मविद् भुङ्क्ते विरिञ्चेन परेण च। ब्रह्मणा सह तद्वश्यः सुखमेव न दुष्कृतम्॥’ इति च। ‘य एष भगवान्विष्णुर्भूतस्रष्टा गुणाधिकः। स एवान्नात्पुनर्जातो ह्यजातोऽपि यतो विभुः। अन्नात्मनि शरीरेऽसौ व्यज्यते सुविवेकिभिः। अन्नस्य सारभूतोऽयं शरीरस्य च केशवः॥’ मध्व.

(७) ‘स्वामिनः फलश्रुतेरित्यात्रेयः’—‘ब्रह्मविदाप्नोति परम्’ इत्यादिफलं स्वामिनां देवानामेव भवति, ‘यदु किंचेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किंचेमाः प्रजा विजानते देवा एतद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः’ इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते। ब्रमध्व. ३।४।४४

* शेषं शंकरवत्।

( ८ ) 'सदाशिवः शब्दमूर्तिः स्पर्शमूर्तिरथेश्वरः। रुद्रस्तेजोमयः साक्षाद्रसमूर्तिर्जनार्दनः। गन्धमूर्तिश्चतुर्वक्त्र इत्येता पञ्च मूर्तयः॥' इति वचनात् सदाशिवादिरूपात् शब्दाद्यात्मनो ब्रह्मणो वाय्वादिसंभवः। एते हि सदाशिवादयः पञ्चब्रह्मसंज्ञकाः पञ्चभूतात्मानः परब्रह्मणः शरीरम्। पञ्चब्रह्मशरीरादेव परब्रह्मणः प्रपञ्चस्य सृष्ट्यादयः प्रवर्तन्ते। पञ्चभूततापन्नाश्चैते सदाशिवादयः परमात्मन उत्पद्यन्ते। ननु भूतामेवात्रोत्पत्तिरुच्यते 'आकाशः संभूतः' इत्यादिना, सदाशिवादीनां न साक्षात्सृष्टिरुच्यते इति चेत्। उच्यते एव, श्रुत्यन्तराध्याहारात्। तथा अथर्वशिखायां 'ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्यगः' इति ब्रह्मादीनामिन्द्रियाणां च भूतैः सहोत्पत्तिः श्रूयते। ततः साक्षादेव ब्रह्मणः तत्तत्कारणरूपात् तत्तत्कार्योत्पत्तिरिति निर्णयः।

२।३।१४

एवं ज्ञानगुणकत्वेऽप्यात्मनः कथं ज्ञानमात्रत्वव्यपदेश इत्यत आह—'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'। ज्ञानगुणसारत्वादात्मनो ज्ञानव्यपदेशः, न ज्ञानमात्रत्वात्, यथा प्राज्ञस्य विपश्चितोऽपि 'सत्यं ज्ञानम्' इति। ततो ज्ञानमात्रत्वव्यपदेशे दोषो न भवत्यात्मन इति।

२।३।२९

'आह च तन्मात्रम्'— 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतिरनवच्छिन्नज्ञानरूपतामात्रं ब्रह्मण आह, नान्यं निवारयति, विशेषाभावात् अविरोधाच्च। यथा स्वर्णरूपं किरीटमित्येतत् स्वर्णरूपतामात्रकथनपरं, न तत्खचितरत्नादिनिषेधपरं, तद्वदिति। अत्र हि 'सत्यं ज्ञानमनन्तम्' इति स्वत एव महाप्रकाशरूपतया परब्रह्मणः परमज्ञानाकारमात्रमभिदधती श्रुतिः अनन्तरमुच्यमानं ब्रह्मणो विपश्चित्त्वं सर्वज्ञत्वं निवारयितुं कथं क्षमते। विविधं वस्तुजातं पश्यन्ती विमृशन्ती चित् यस्य स विपश्चित्। अतो न विरोधः। ३।२।१६

किंच वचनमेव सगुणं मोक्षफलं प्रकाशयति — 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इति। विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वानपि कामान् मुक्तः सह प्राप्नोति। सहशब्दो ब्रह्मणा आनन्दभोगस्य च यौगपद्याभिप्रायः। अतः सगुणमेव ब्रह्मस्वरूपं मुक्तप्राप्यं फलमिति। श्रीकठ. ३।३।४०

( ९ ) इहोपनिषदि 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमे ब्रह्मणो वेद्यत्वं प्राप्यत्वं, जीवस्य वेदितृत्वं प्राप्तृत्वं चोपदिश्यते। तस्मात् जीवब्रह्मणोः भिन्नत्वाराध्याराधकत्वव्यापकत्वाल्पत्वकिंचिज्ज्ञत्वासर्वज्ञत्वादिधर्माणां परस्परविरुद्धस्वभावत्वेऽपि मोक्षदशायां तद्भावापत्तिः संभवतीति सिद्धान्तः।

* श्रीकर. १।१।२०

( १० ) 'ब्रह्मविदाप्नोति परम्' इति अक्षरब्रह्मवित्परं ब्रह्माऽऽप्नोतीत्यर्थः। अत्र परशब्दस्य पूर्वपरत्वे तदित्येव वदेत्। पूर्वं ब्रह्मोक्त्वा अग्रे यत् परमित्याह तेन सांनिध्यात्तत एव परं पुरुषोत्तमरूपमेवात्राभिप्रेतमिति ज्ञायते।

अतः परं विशेषतस्तद्विवक्ष्यमाणानुभवैकगम्यं तत्स्वरूपं, नान्यमानगम्यमिति ज्ञापयितुमन्यमुखेनाह — तदेषाऽभ्युक्तेति। अन्यथा सर्वार्थतत्त्वप्रतिपादिका श्रुतिरेवं कथं वदेत्। तदित्यव्ययम्। तथा च तत् पूर्वोक्तं ब्रह्मविदः परप्राप्तिलक्षणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्य उपग्रह्य ऋगेषा विदितपरब्रह्मकैरुक्ता।

सोपपत्तिकमानन्दात्मकत्वमग्रे निरूपणीयमित्यधुना तदनिरूप्य सच्चिदंशौ देशकालापरिच्छिन्नत्वं चोक्तवती। अथवा अक्षरब्रह्मण्यानन्दात्मकत्वे सत्यपि तस्य परिच्छिन्नत्वान्न परमफलत्वं, अत आनन्दे अपरिच्छिन्नत्वमेव परमफलतावच्छेदकमिति तद्धर्मपुरःसरं परमानन्द एवानन्तशब्देनोच्यतेऽत्र।

अथ वेदनपदार्थमाह—यो वेदेत्यादिना। अत्रेदमाकूतम्—'नायमात्मा प्रवचनेन......वृणुते तनुं स्वाम्' ( मुण्ड. ३।२।३ ) इति श्रुत्या वरणेतरसाधनाप्राप्यत्वमुच्यते। एवं सति श्रुतिद्वयविरोधपरिहाराय अक्षरब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतसंसर्गराहित्येन शुद्धत्वसंपादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता संपाद्यते। तादृशे जीवे स्वीयत्वेन वरणे भक्ति-

* अन्यत् श्रीकंठवत्।

भावात् सहकारियोग्यतासंपत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयते । तदैव गुहायां परमव्योमाविर्भावः । परो मीयते दृश्यतेऽनेनेति तथा । ज्ञानमार्गीयजीवज्ञेयप्रकारकाद्वैशिष्ट्येनापि तथा । परमव्योम्नोऽत्यलौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः ।

‘ भक्त्याऽहमेकया ग्राह्यः ’ ‘ नाहं वेदैः ’ इत्युपक्रम्य ‘ भक्त्या त्वनन्यया शक्यः ’ ( भ. गी. ११।५३,५४ ) इत्यादिस्मृतिरपि एवमेव संगच्छते। अन्यथा ज्ञानमार्गिणामपि ब्रह्मविदां परप्राप्तिः स्यात्, न त्वेवं, ‘ मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ ’ इत्यादिवाक्यैः । एतदेवाह—गुहायां हृदयाकाशे यदाविर्भूतं परमं व्योम अक्षरात्मकं व्यापि वैकुण्ठं, तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्तमानं यो वेद स भक्तो ब्रह्मणा नित्याविकृतरूपेण विपश्चिता, विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः । तेन विविधभोगचतुरेण सह सर्वान् कामानश्नुते इत्यर्थः । एतेन परप्राप्तिपदार्थ उक्तो भवति । शुद्धपुष्टिमार्गीयत्वादस्य भक्तस्य स्वातन्त्र्यं भोग उच्यते । सहभावोक्त्या ब्रह्मणो गौणत्वम्। अत एव भक्ताधीनत्वं भगवतः स्मृतिष्वप्युच्यते —‘ अहं भक्तपराधीनः ’ ‘ वशे कुर्वन्ति मां भक्त्या ’ इत्यादिवाक्यैः। यद्यपि ‘ अश भोजने ’ इति धातोरश्नातीत्येवं रूपं भवति, ‘ अशूङ् व्याप्तौ ’ इति धातोर्भवत्यश्नुते इति रूपं, विकरणभेदात्पदभेदाच्च । तथाप्यत्र ‘ अश भोजने ’ इति धातोरेव प्रयोग इति ज्ञायते।

२।१।११

‘ ब्रह्मविदाप्नोति परम् ’ इत्यत्र एकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वं आनन्दरूपेण फलत्वमिति।

१।४।३

‘ भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते ’ — पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्प्राप्तिप्रकारमाह — इतरे अग्रे प्राप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन संपद्यते, ‘ सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता ’ इति श्रुत्युक्तेन भोगेन संपद्यते इत्यर्थः।

श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः। अलौकिकत्वं विना उक्तदेहं विना च उक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ।

४।१।१९

‘ संपद्याऽऽविर्भावः स्वेन शब्दात् ’— ‘ ब्रह्मविदाप्नोति परम् ’ इत्युपक्रम्य ‘ सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता ’ इति तैत्तिरीयके पठ्यते। तत्रेदं संदिह्यते — किं अन्तःस्थित एवाश्नुते, उत पुनर्जन्म प्राप्य इति। तत्र अन्त्यस्त्वनुपपन्नः, ‘ न स पुनरावर्तते ’ ‘ तेषामिह न पुनरावृत्तिरस्ति ’ इत्यादिश्रुतिविरोधात् कर्माभावाच्च, इति प्राप्ते प्रतिवदति — संपद्य ब्रह्म संपद्यापि स्थितस्य जीवस्य प्रभोरत्यनुग्रहवशात् स्वरूपात्मकभजनानन्ददित्सायां तत्कृत आविर्भावो भवत्येव। भगवदधीनत्वज्ञापनायास्य तत्र कर्तृत्वं नोक्तम्। ननु उक्तं ‘ न स पुनरावर्तते ’ इत्यादिश्रुतिविरोधः कर्माभावश्च बाधक इति, अत आह — स्वेनेति। स्वशब्दोऽत्र भगवद्वाची। तथा च भगवत्स्वरूपबलेनैवाऽऽविर्भाव इत्यर्थः। एवं सति उक्तश्रुतिर्मर्यादामार्गविषयिणीति न विरोध इति भावः । तेषां इह प्रपञ्चे न पुनरावृत्तिरस्तीति हि श्रुतिराह । लीलायाः प्रपञ्चातीतत्वात् तत्राऽऽविर्भावस्य निषेधाविषयत्वादपि न विरोधः। अत्र प्रमाणाकाङ्क्षायामाह — शब्दादिति ।

‘ सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता ’ इति श्रुतिः पुरुषोत्तमेन सह सर्वकामभोगं वदति। स च न विग्रहं विना संभवतीति श्रुतिबलादेव तथा मन्तव्यमित्यर्थः।

वल्लभ. ४।४।१

[ आविर्भाव इति। स्वस्य ब्रह्मभिन्नतया अनुभवविषयत्वयोग्यता ।

भाष्यप्रकाश. ]

पञ्चविधाः पुरुषरूपा अन्नमयप्राणमयमनोमयविज्ञान-
मयानन्दमया आत्मानः, पञ्चात्मभ्योऽभ्यन्तर-
तमं ब्रह्म सत् मनोवागगोचरं विज्ञानं,
ब्रह्मविद्याफलं च

**अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥**

(१) अन्नात् रसादिभावपरिणतात् । वै इति स्मरणार्थः । प्रजाः स्थावरजङ्गमाः प्रजायन्ते । याः काश्च अविशिष्टाः पृथिवीं श्रिताः पृथिवीमाश्रिताः ताः सर्वा अन्नादेव प्रजायन्ते । अथो अपि जाताः अन्नेनैव जीवन्ति प्राणान्धारयन्ति, वर्धन्ते इत्यर्थः । अथाप्येनत् अन्नमपि यन्ति अपिगच्छन्ति । अपिशब्दः प्रतिशब्दार्थे । अन्नं प्रति प्रलीयन्ते इत्यर्थः । अन्ततः अन्ते जीवनलक्षणाया वृद्धेः परिसमाप्तौ । कस्मात् । अन्नं हि यस्माद्भूतानां प्राणिनां ज्येष्ठं प्रथमजम् । अन्नमयादीनां हीतरेषां भूतानां कारणमन्नं, अतोऽन्नप्रभवा अन्नजीवना अन्नप्रलयाश्च सर्वाः प्रजाः । यस्माच्चैवं तस्मात्सर्वौषधं सर्वप्राणिनां देहदाहप्रशमनं अन्नमुच्यते । अन्नब्रह्मविदः फलमुच्यते—सर्वे वै ते समस्तमन्नजातं आप्नुवन्ति । के । येऽन्नं ब्रह्म यथोक्तमुपासते । कथम् । अन्नजोऽन्नात्मा अन्नप्रलयोऽहं, तस्मादन्नं ब्रह्मेति । कुतः पुनः सर्वान्नप्राप्तिफलमन्नात्मोपासनमिति, उच्यते—अन्नं हि भूतानां ज्येष्ठम् । भूतेभ्यः पूर्वं निष्पन्नत्वात् ज्येष्ठं हि यस्मात्, तस्मात्सर्वौषधमुच्यते । तस्मादुपपन्ना सर्वान्नात्मोपासकस्य सर्वान्नप्राप्तिः । अन्नाद्भूतानि जायन्ते, जातान्यन्नेन वर्धन्ते इत्युपसंहारार्थं पुनर्वचनम् । इदानीमन्ननिर्वचनमुच्यते । अद्यते भुज्यते चैव यद्भूतैरन्नं, अत्ति च भूतानि स्वयं, तस्माद्भूतैर्भुज्यमानत्वात् भूतभोक्तृत्वाच्चान्नं तदुच्यते । इतिशब्दः प्रथमकोशपरिसमाप्त्यर्थः ।

अन्नमयादिभ्य आनन्दमयान्तेभ्य आत्मभ्योऽभ्यन्तरतमं ब्रह्म विद्यया प्रत्यगात्मत्वेन दिदर्शयिषु शास्त्रं अविद्याकृतपञ्चकोशापनयनेन अनेकतुषकोद्रववितुषीकरणेनेव तदन्तर्गततण्डुलान्, प्रस्तौति—तस्माद्वा एतस्मादन्नरसमयादित्यादि । तस्मादेतस्माद्यथोक्तादन्नरसमयात्पिण्डात् अन्यः व्यतिरिक्तः अन्तरः अभ्यन्तरः आत्मा पिण्डवदेव मिथ्यापरिकल्पितः आत्मत्वेन, प्राणमयः, प्राणो वायुः, तन्मयः तत्प्रायः । तेन प्राणमयेन अन्नरसमय आत्मा एष पूर्णो वायुनेव दृतिः । स वा एष प्राणमय आत्मा पुरुषविध एव पुरुषाकार एव शिरःपक्षादिभिः । किं स्वत एव, नेत्याह — प्रसिद्धं तावदन्नरसमयस्यात्मनः पुरुषविधत्वम् । तस्य अन्नरसमयस्य पुरुषविधतां पुरुषाकारतां अनु अयं प्राणमयः पुरुषविधो मूषानिषिक्तप्रतिमावत्, न स्वत एव । एवं पूर्वस्य पूर्वस्य पुरुषविधतामनु उत्तरोत्तरः पुरुषविधो भवति, पूर्वः पूर्वश्चोत्तरोत्तरेण पूर्णः । कथं पुनः पुरुषविधताऽस्येत्युच्यते— तस्य प्राणमयस्य प्राण एव शिरः । प्राणमयस्य वायुविकारस्य प्राणो मुखनासिकानिःसरणो वृत्तिविशेषः शिर एव परिकल्प्यते, वचनात् । सर्वत्र वचनादेव पक्षादिकल्पना । व्यानो व्यानवृत्तिर्दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा, य आकाशस्थो वृत्तिविशेषः समानाख्यः स आत्मेवाऽऽत्मा, प्राणवृत्त्यधिकारान्मध्यस्थत्वादितराः पर्यन्ता वृत्तीरपेक्ष्य आत्मा । 'मध्यं ह्येषामङ्गानामात्मा' इतिश्रुतिप्रसिद्धं मध्यमस्थस्याऽऽत्मत्वम् । पृथिवी पुच्छं प्रतिष्ठा । पृथिवीति पृथिवी देवता आध्यात्मिकस्य प्राणस्य धारयित्री,

(१) तैउ. २।२; अशंकर. १।१।१९; रंग. अथैन (अथैत); रामानुज. १।१।१२, ३।३।१४; ब्रमध्व. १।१।१३; श्रीकर. १।१।१३, १६, १८, २०, २३, १।२।१, २।२।३०, २।३।१, ३।३।१६; वल्लभ. ३।३।१६, १८; बलदेव. १।१।१२.

स्थितिहेतुत्वात् । 'सैषा पुरुषस्यापानमवष्टभ्य' इति हि श्रुत्यन्तरम् । अन्यथा उदानवृत्त्या ऊर्ध्वगमनं गुरुत्वाच्च पतनं वा स्याच्छरीरस्य । तस्मात्पृथिवी देवता पुच्छं प्रतिष्ठा प्राणमयस्याऽऽत्मनः । तत् तस्मिन्नेवार्थे प्राणमयात्मविषय एष श्लोको भवति ।

शंकर.

(२) 'ओषधीभ्योऽन्नम्' इत्योषधिपरिणामित्वं निमित्तीकृत्य अन्ने प्रयुक्तमोषधिशब्दं भेषजत्वनिमित्ततया श्रुतिर्व्यपदिशतीति द्रष्टव्यम् । ब्रह्मदृष्टिहेतुभूतं ब्रह्मसाम्यमाह––अन्नं हि भूतानामिति । ब्रह्मणोऽपि सकलरोगनिवर्तकतया सर्वभेषजत्वस्य सत्त्वादिति भावः । अन्नाद्भूतानीति । जननवृद्धिहेतुत्वमन्नब्रह्मणोः सममित्यर्थः । नाशदशायां अलभ्यमानतया वा विपरीतपरिणामहेतुतया वा 'अन्नं मृत्युं तमु जीवातुमाहुः' इतिश्रुत्युक्तरीत्या अत्तृत्वलक्षणं संहर्तृत्वं द्रष्टव्यम् । एवमाकाशादेरन्नमयस्य स्थूलशरीरपर्यन्तस्य मन्त्रब्राह्मणोदितब्रह्मोपादानकत्वं, 'आत्मन आकाशः' इत्यात्मशब्दश्रवणात् तदन्तर्यामिकत्वं चोक्तं भवति । एवमाकाशादेरन्नमयशब्दितस्थूलशरीरपर्यन्तस्य ब्रह्मैव आत्मा उपादानं चेत्युक्त्वा स आत्मा क इत्यपेक्षायां आनन्दमय एव स आत्मेति दर्शयितुं स्थूलारुन्धतीन्यायेन स्थूलदेहान्तर्वर्तिनं प्राणमयमात्मत्वेन दर्शयति—हस्तपादादिमत्त्वेन पुरुषविधत्वभ्रान्तिं व्युदस्यति—तस्य पुरुषविधतामिति । तस्य अन्नमयस्य पुरुषविधत्वमनुकृत्य प्राणमयोऽपि पुरुषविध इत्यर्थः । ततश्च तद्वदेव शिरःपुच्छादिमत्तया पञ्चविध इत्यर्थः । आकाश आत्मेति । 'यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्' इतिस्मृत्युक्तरीत्या वायुविकारभूतप्राणापानादिधारकत्वादाकाशस्याऽऽत्मत्वम् । पृथिव्यामाकाशस्य प्रतिष्ठितत्वादस्याः पुच्छत्वम् ।

रंग.

(३) 'अन्ननामा चान्नसंस्थः शरीरेषु च संस्थितः । अत्तृत्वात्सर्वलोकानामन्नमित्युच्यते हरिः । उपजीव्यश्च भूतानामिति चान्नं जनार्दनः । स ज्यायान्सर्वभूतेभ्यस्तस्मात्सर्वौषधं स्मृतः । संसारे दह्यमानानामाश्रयत्वात्स औषधम् । प्रचुरं मय इत्युक्तं प्रचुरात्ता यतो हरिः । प्रचुरैः सेव्यते नित्यमतोऽन्नमय ईरितः । देहस्यैव शिरस्यस्य शिरो विष्णोः प्रतिष्ठितम् । बाह्वोः पक्षौ तथा मध्ये मध्यं पश्चात्तनौ तथा । पुच्छमित्येष भगवाननिरुद्धः स्वयं हरिः । तस्यान्तरं परं रूपमभिन्नमपि भिन्नवत् । प्रद्युम्नाख्ये प्राणमयं प्रणेतृत्वात्प्रकीर्तितम् । शिरस्तस्य प्राणगतं प्राण इत्येव नामतः । व्यानाख्यो दक्षिणः पक्षो व्यानगश्चोत्तरस्तथा । अपानाख्योऽपानगत आकाशस्थं च मध्यमम् । आकाशाख्यं तथा पुच्छं पृथ्व्यां पृथिविनामकम् । उदान आकाशनामा समानः पृथिवीति च । प्रणेतृत्वात्प्राणनाम शिरो विष्णोः प्रकीर्तितम् । विशेषाच्चेष्टयेद्यस्माद्व्यानाख्यो दक्षिणः करः । यस्मादपनयेद्दोषानपानः सव्य उच्यते । आकाशस्त्ववकाशत्वान्मध्यदेहो महात्मनः । पृथिवी पुच्छमस्योक्तं सर्वस्यापि प्रधारणात् ॥'

मध्व.

प्राणं[१] देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात्प्राणमयात् । अन्योन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

(१) प्राणं देवा अनु प्राणन्ति । देवा अग्न्यादयः प्राणं वाय्वात्मानं प्राणनशक्तिमन्तं अनु तदात्मभूताः सन्तः प्राणन्ति प्राणनकर्म कुर्वन्ति प्राणनक्रियया क्रियावन्तो भवन्ति । अध्यात्माधिकारात् देवा इन्द्रियाणि प्राणमनु प्राणन्ति मुख्यप्राणमनु चेष्टन्ते इति वा । तथा मनुष्याः पशवश्च ये, ते प्राणनकर्मणैव चेष्टावन्तो भवन्ति । अतश्च नान्नमयेनैव परिच्छिन्नेनाऽऽत्मना आत्मवन्तः प्राणिनः । किं तर्हि । तदन्तर्गतेन

(१) तैउ. २।३; ब्रशंकर. १।१।१९, ३।२।३१; रंग. (प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति॰); श्रीकर. १।१।१३, २।१।१३; वल्लभ. २।४।१, ४, ३।३।१६; विज्ञान. १।४।१७; बलदेव. १।१।१२.

प्राणमयेनापि साधारणेनैव सर्वपिण्डव्यापिना आत्मवन्तो मनुष्यादयः। एवं मनोमयादिभिः पूर्वपूर्वव्यापिभिरुत्तरोत्तरैः सूक्ष्मैरानन्दमयान्तैराकाशादिभूतारब्धैरविद्याकृतैरात्मवन्तः सर्वे प्राणिनः। तथा स्वाभाविकेनाप्याकाशादिकारणेन नित्येनाविकृतेन सर्वगतेन सत्यज्ञानानन्तलक्षणेन पञ्चकोशातिगेन सर्वात्मना आत्मवन्तः। स हि परमार्थत आत्मा सर्वेषामित्येतदप्यर्थादुक्तं भवति। प्राणं देवा अनु प्राणन्तीत्युक्तं, तत्कस्मादित्याह—प्राणो हि यस्मात् भूतानां प्राणिनां आयुः जीवनं, 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति श्रुत्यन्तरात्। तस्मात्सर्वायुषम्। सर्वेषामायुः सर्वायुः, सर्वायुरेव सर्वायुषं, इत्युच्यते प्राणापगमे मरणप्रसिद्धेः। प्रसिद्धं हि लोके सर्वायुष्ट्वं प्राणस्य। अतोऽस्माद्बाह्यादसाधारणादन्नमयादात्मनोऽपक्रम्य अन्तः साधारणं प्राणमयमात्मानं ब्रह्मोपासते ये 'अहमस्मि प्राणः सर्वभूतानामात्मा आयुः, जीवनहेतुत्वात्' इति, ते सर्वमेवाऽयुरस्मिन् लोके यन्ति, नापमृत्युना म्रियन्ते प्राक् प्राप्तादायुष इत्यर्थः। शतं वर्षाणीति तु युक्तं, 'सर्वमायुः' इति श्रुतिप्रसिद्धेः। किं कारणं, प्राणो हि भूतानामायुस्तस्मात्सर्वायुषमुच्यत इति। यो यद्गुणकं ब्रह्मोपास्ते स तद्गुणभाग्भवतीति। विद्याफलप्राप्तेर्हेत्वर्थं पुनर्वचनं—प्राणो हीत्यादि। तस्य पूर्वस्यान्नमयस्य एष एव शरीरे अन्नमये भवः शारीर आत्मा। कः। य एष प्राणमयः।

तस्माद्वा एतस्मादित्युक्तार्थमन्यत्। अन्योऽन्तर आत्मा मनोमयः। मन इति संकल्पाद्यात्मकमन्तःकरणं, तन्मयो मनोमयः, यथाऽन्नमयः। सोऽयं प्राणमयस्याभ्यन्तर आत्मा। तस्य यजुरेव शिरः। यजुरित्यनियताक्षरपादावसानो मन्त्रविशेषः। तज्जातीयवचनो यजुःशब्दः। तस्य शिरस्त्वं प्राधान्यात्। प्राधान्यं च यागादौ संनिपत्योपकारात्। यजुषा हि हविर्दीयते स्वाहाकारादिना। वाचनिकी वा शिरआदिकल्पना सर्वत्र। मनसो हि स्थानप्रयत्ननादस्वरवर्णपदवाक्यविषया तत्संकल्पात्मिका तद्भाविता वृत्तिः श्रोत्रादिकरणद्वारा यजुःसंकेतविशिष्टा यजुरित्युच्यते। एवमृक् एवं साम च। आदेशोऽत्र ब्राह्मणं अतिदेष्टव्यविशेषानतिदिशतीति। अथर्वाङ्गिरसा च दृष्टा मन्त्रा ब्राह्मणं च शान्तिकपौष्टिकादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति मनोमयात्मप्रकाशकः पूर्ववत्। शंकर.

(२) एवं प्राणमये आकाशाद्यन्नमयान्तस्याऽऽत्मत्वबुद्धिमवतार्य (तां) बुद्धिं निवर्तयति—तस्यैष एवेति। (यः) पूर्वस्यान्नमयस्य आत्मा, एष एव तस्य प्राणमयस्याऽऽत्मेत्यर्थः। शारीरः शरीसंबन्ध्यात्मेत्यर्थः। अनेनाऽऽत्मशब्दस्य स्वरूपार्थभ्रान्तिर्व्युदस्ता भवति। ततश्चान्नमयप्राणमयावेकात्मकौ, न त्वन्नमयस्य प्राणमय आत्मेत्यर्थः। तर्ह्यन्नमयप्राणमययोः क आत्मेत्याकाङ्क्षायामाह — तस्माद्वा इति। अत्र मनोमय इत्यत्र प्राचुर्यार्थे मयट्, मनोबुद्ध्यहंकारचित्ताख्यान्तःकरणवृत्तिषु मनोवृत्तेः प्राचुर्यात्।

तस्यान्तःकरणस्य यजुर्वेदविषयज्ञानजनकमनोव्यापारः शिर इत्यर्थः, मुख्यार्थस्य यजुर्वेदस्य मनःसंबन्धाभावेन मनसः शिरोरूपेणासंभवादिति द्रष्टव्यम्। एवमुत्तरत्रापि। इदं कुर्विदं मा कार्षीरिति विधिनिषेधरूपं रहस्यानुशासनमादेश इत्यर्थः। अत्र तज्जन्यज्ञानहेतुभूतान्तःकरणवृत्तिरादेशशब्देनोच्यते। अथर्वाङ्गिरसा दृष्टा मन्त्राः प्रतिष्ठाहेतुभूतं पुच्छमित्यर्थः। अत्रापि अथर्वाङ्गिरःशब्दस्तज्जन्यज्ञानहेतुभूतमनोव्यापारपरः। रंग.

(३) 'स एष जगतामायुस्तस्मिन् संकर्षणः स्थितः। शिरस्तस्य यजुर्नाम यज्ञानां हरणात्स्मृतम्। यजुःसंस्थं च बाहू तु ऋक्सामान्तःस्थितौ सदा। ऋगर्चनायाः स्वीकारात्साम दोषात्समीकृतेः। पञ्चरात्रगतं मध्यमादेशाख्यं सुविस्तृतेः। अथर्वाख्यं तथा पुच्छमथर्वाङ्गिनां रसः॥' मध्व.

**यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव।**

(१) तैउ. २।४; ब्रशांकर. १।१।१९; ३।३।४०; रामानुज. १।१।१ (पृ. ४२); श्रीकर. १।१।१३, २०, ३।३।१६.

तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति ॥

( १ ) यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहेत्यादि। तस्य पूर्वस्य प्राणमयस्य एष एवाऽऽत्मा शारीरः शरीरे प्राणमये भवः शारीरः। कः। य एष मनोमयः। तस्माद्वा एतस्मादित्यादि पूर्ववत्। अन्योऽन्तर आत्मा विज्ञानमयः मनोमयस्याभ्यन्तरो विज्ञानमयः। मनोमयो वेदात्मा उक्तः। वेदार्थविषया बुद्धिर्निश्चयात्मिका विज्ञानं, तच्च अध्यवसायलक्षणमन्तःकरणस्य धर्मः। तन्मयो निश्चयविज्ञानैः प्रमाणस्वरूपैर्निर्वर्तित आत्मा विज्ञानमयः। प्रमाणविज्ञानपूर्वको हि यज्ञादिस्तायते। यज्ञादिहेतुत्वं च वक्ष्यति श्लोकेन। निश्चयविज्ञानवतो हि कर्तव्येष्वर्थेषु पूर्वं श्रद्धा उत्पद्यते। सा सर्वकर्तव्यानां प्राथम्याच्छिर इव शिरः। ऋतसत्ये यथाव्याख्याते एव। योगो युक्तिः समाधानं आत्मेवाऽऽत्मा। आत्मवतो हि युक्तस्य समाधानवतोऽङ्गानीव श्रद्धादीनि यथार्थप्रतिपत्तिक्षमाणि भवन्ति। तस्मात्समाधानं योग आत्मा विज्ञानमयस्य। महः पुच्छं प्रतिष्ठा। मह इति महत्तत्त्वं प्रथमजं, 'महद्यक्षं प्रथमजम्' इति श्रुत्यन्तरात्। पुच्छं प्रतिष्ठाकारणत्वात्। कारणं हि कार्याणां प्रतिष्ठा, यथा वृक्षवीरुधां पृथिवी। सर्वबुद्धिविज्ञानानां च महत्तत्त्वं कारणम्। तेन तत् विज्ञानमयस्याऽऽत्मनः प्रतिष्ठा। तदप्येष श्लोको भवति पूर्ववत्। यथा अन्नमयादीनां ब्राह्मणोक्तानां प्रकाशकाः श्लोकाः, एवं विज्ञानमयस्यापि। शंकर.

( २ ) यस्माद्ब्रह्मानन्दाद्वाङ्मनसानि इयत्तालक्षणं पारमप्राप्य निवर्तन्ते, तादृशं ब्रह्मानन्दं 'दृश्यते त्वग्र्यया बुद्ध्या' 'मनसा तु विशुद्धेन' इत्युक्तरीत्या शुद्धेन मनसा ज्ञात्वा कदाऽपि न बिभेतीत्यर्थः। अत्र ब्रह्मानन्दस्य विशुद्धमनोगोचरत्वप्रतिपादकत्वादस्य श्लोकस्य मनोविषयत्वमस्तीति द्रष्टव्यम्। पूर्वस्य प्राणमयस्य य आत्मा, स एव मनोमयस्याऽऽत्मेत्यर्थः। एवं च अन्नमयप्राणमयमनोमयानामेक आत्मेत्युक्तं भवति। स क इत्यपेक्षायामाह—तस्माद्वा इति। अत्र विज्ञानमयो जीवः, न बुद्धिमात्रं, मयट्प्रत्ययेन व्यतिरेकप्रतीतेः। तेनैष इत्यादि। पूर्ववदर्थः। अत्र श्रद्धर्तसत्यशब्दा ज्ञानविशेषपराः। 'ब्रह्मणे त्वा महसे' 'ओमित्यात्मानं युञ्जीत' इति विहितज्ञानविशेषो योगशब्देनोच्यते। योगविरोधिनिरसनसामर्थ्यलक्षणं महः पुच्छमित्यर्थः। एतेषां श्रद्धादीनामात्मगुणत्वेन सिद्धत्वात् तत्तदवच्छिन्नमात्मस्वरूपं शिरःपक्षपुच्छादितया प्रतिपाद्यते इति द्रष्टव्यम्। अतः 'स्वस्मादनतिरिक्तैः स्वावयवैः शिरःपक्षपुच्छादिरूपणपरत्वात् प्रकरणस्य' इति भाष्यस्य न विरोधः। रंग.

( ३ ) 'मनोवाचामगम्यं तं ज्ञात्वाऽऽनन्दस्वरूपिणम्। कुतश्चिन्न बिभेत्येव वासुदेवोऽन्तरस्ततः। श्रद्धाख्यं श्रुतिधर्तृत्वाच्छ्रद्धायां तच्छिरः स्थितम्। ऋतं ज्ञानततेर्दाता चर्तस्थो दक्षिणः करः। वामः सत्यस्थितः सत्यं सतां यस्मान्नियामकः। योगाख्यं सर्वलोकस्य योगादत्रैव योगगम्। मध्यं पुच्छं महो नाम महनीयत्वतः सदा ॥' मध्व.

[१]विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च। विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान् कामान्त्समश्नुत इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा

---

(१) तैउ. २।५; ब्रशंकर. १।१।१२, १५, १९, २।३।३६, ४०, ३।३।१२; भास्कर. १।१।१२, १९, २।३।३६; रंग. ब्रह्म ज्येष्ठ ( ब्रह्मज्येष्ठ ); रामानुज. १।१।१३, १८, १।४।१५, २७, २।३।१९, २९, ३५, ३।३।१२, १५; निंबार्क. २।३।३५, ३।३।१४, १५, १६, १७; ब्रमध्व. १।१।१३; श्रीकंठ. १।१।२ (पृ. १२२), १।१।१३, १५, १६, २।३।३५, ३।३।१२, १६, १७; श्रीकर. १।१।१३, १६, २०, १।३।२२, २।३।१७, २६, ३३, ३।३।१२, १५, १६, ४१, ५९; वल्लभ. १।१।११, २३, १।२।१, २।३।३६; विज्ञान. १।१।२ (पृ. ६४),१।१।१२ (पृ. १४६, १४७), १।१।१७, २।३।३६, ३।३।१२; बलदेव. १।१।२, १२, २।३।२१, ३।३।१३, १४, १५, १६.

एतस्माद्विज्ञानमयात् । अन्योन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

( १ ) विज्ञानं यज्ञं तनुते । विज्ञानवान् हि यज्ञं तनोति श्रद्धापूर्वकम् । अतो विज्ञानस्य कर्तृत्वं तनुते इति । कर्माणि च तनुते । यस्माद्विज्ञानकर्तृकं सर्वं, तस्माद्युक्तं विज्ञानमय आत्मा ब्रह्मेति । किंच विज्ञानं ब्रह्म सर्वे देवा इन्द्रादयो ज्येष्ठं प्रथमजत्वात्, सर्वप्रवृत्तीनां वा तत्पूर्वकत्वात् प्रथमज विज्ञानं ब्रह्म उपासते ध्यायन्ति, तस्मिन्विज्ञानमये ब्रह्मण्यभिमानं कृत्वा उपासते इत्यर्थः । तस्मात्ते महतो ब्रह्मण उपासनात् ज्ञानैश्वर्यवन्तो भवन्ति । तच्च विज्ञानं ब्रह्म चेत् यदि वेद विजानाति । न केवलं वेदैव, तस्माद्ब्रह्मणश्चेन्न प्रमाद्यति। बाह्येष्वेवानात्मस्वात्मभावितत्वात्प्राप्तं विज्ञानमये ब्रह्मण्यात्मभावनायाः प्रमदनं, तन्निवृत्त्यर्थमुच्यते तस्माच्चेन्न प्रमाद्यतीति । अन्नमयादिष्वात्मभावं हित्वा केवले विज्ञानमये ब्रह्मण्यात्मभावं भावयन्नास्ते चेदित्यर्थः । ततः किं स्यादित्युच्यते—शरीरे पाप्मनो हित्वा । शरीराभिमाननिमित्ता हि सर्वे पाप्मानः, तेषां च विज्ञानमये ब्रह्मण्यात्माभिमानात् निमित्तापाये हानमुपपद्यते छत्रापाये इव च्छायापायः । तस्मात् शरीराभिमाननिमित्तान्सर्वान् पाप्मनः शरीरप्रभवान् शरीरे एव हित्वा विज्ञानमयब्रह्मस्वरूपापन्नः तत्स्थान् सर्वान्कामान् विज्ञानमयेनैवाऽऽत्मना समश्नुते सम्यग्भुङ्क्ते इत्यर्थः । तस्य पूर्वस्य मनोमयस्य आत्मा एष एव शरीरे मनोमये भवः शारीरः । कः । य एष विज्ञानमयः । तस्माद्वा एतस्मादित्युक्तार्थम्। आनन्दमय इति कार्यात्मप्रतीतिः, अधिकारात् मयट्शब्दाच्च ।

अन्नादिमया हि कार्यात्मानो भौतिका इहाधिकृताः । तदधिकारपतितश्चायमानन्दमयः । मयट् चात्र विकारार्थे दृष्टः, यथा अन्नमय इत्यत्र । तस्मात् कार्यात्मा आनन्दमयः प्रत्येतव्यः ।

तस्य आनन्दमयस्याऽऽत्मनः इष्टपुत्रादिदर्शनजं प्रियं शिर इव शिरः, प्राधान्यात् । मोद इति प्रियलाभनिमित्तो हर्षः । स एव च प्रकृष्टो हर्षः प्रमोदः । आनन्द इति सुखसामान्यं आत्मा प्रियादीनां सुखावयवानां, तेष्वनुस्यूतत्वात् । आनन्द इति परं ब्रह्म । तद्धि शुभकर्मणा प्रत्युपस्थाप्यमाने पुत्रमित्रादिविषयविशेषोपाधौ अन्तःकरणवृत्तिविशेषे तमसा अप्रच्छाद्यमाने प्रसन्ने अभिव्यज्यते । तत् विषयसुखमिति प्रसिद्धं लोके । तद्वृत्तिविशेषप्रत्युपस्थापकस्य कर्मणोऽनवस्थितत्वात् सुखस्य क्षणिकत्वम् । तद्यदाऽन्तःकरणं तपसा तमोघ्नेन विद्यया ब्रह्मचर्येण श्रद्धया च निर्मलत्वमापद्यते यावद्यावत्, तावत्तावद्विविक्ते प्रसन्नेऽन्तःकरणे आनन्दविशेष उत्कृष्यते विपुलीभवति । वक्ष्यति च—'रसो वै सः । रसꣲ ह्येवायं लब्ध्वाऽऽनन्दीभवति ' 'एष ह्येवाऽऽनन्दयाति ' । ' एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ' ( बृउ. ४।३।३२ ) इति च श्रुत्यन्तरात् । एवं च कामोपशमोत्कर्षापेक्षया शतगुणोत्तरोत्तरोत्कर्ष आनन्दस्य वक्ष्यते । एवं चोत्कृष्यमाणस्याऽऽनन्दमयस्याऽऽत्मनः परमार्थब्रह्मविज्ञानापेक्षया ब्रह्म परमेव यत्प्रकृतं सत्यज्ञानानन्तलक्षणं, यस्य च प्रतिपत्त्यर्थं पञ्चान्नादिमयाः कोशा उपन्यस्ताः, यच्च तेभ्योऽभ्यन्तरं, येन च ते सर्वे आत्मवन्तः, तद्ब्रह्म पुच्छं प्रतिष्ठा । तदेव च सर्वस्याविद्यापरिकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा, आनन्दमयस्यैकत्वावसानत्वात् । अस्ति तदेकमविद्याकल्पितस्य द्वैतस्यावसानभूतमद्वैतं ब्रह्म प्रतिष्ठा पुच्छं, तदेतस्मिन्नप्यर्थे एष श्लोको भवति ।

शंकर.

( २ ) यस्त्वयं व्यपदेशो दर्शितः 'विज्ञानं यज्ञं तनुते ' इति, स बुद्धेरेव कर्तृत्वं प्रापयति, विज्ञानशब्दस्य तत्र प्रसिद्धत्वात् मनोऽनन्तरं पाठाच्च । ' तस्य श्रद्धैव शिरः ' ( तैउ. २।४ ) इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात् । श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः । तस्मात् कर्तृत्वमस्यात्मनः उपाधिनिमित्तमेवेति स्थितम् ।

ब्रशांकर. २।३।४०

( ३ ) ब्रह्मैव आनन्दमयः, न विकारापन्नः। कुतः। अभ्यासात्। भास्कर. १।१।१२

( ४ ) अत्र विज्ञानमयशब्दोदितो जीवो विज्ञानशब्देनोच्यते, आत्मस्वरूपस्य स्वप्रकाशतया ज्ञानैकनिरूपणीयत्वेन विज्ञानशब्देनाभिधानसंभवात्। 'कृत्यल्युटो बहुलम्' इति वा जानातीत्यर्थे ल्युडाश्रीयते। नन्द्यादित्वं वा आश्रित्य 'नन्दिग्रहि०' इत्यादिना कर्तरि ल्युराश्रीयते। तेन विज्ञानमात्रपरामर्शे 'यज्ञं तनुते कर्माणि तनुतेऽपि च' इति प्रतिपादितलौकिकवैदिककर्मकर्तृत्वासंभवात्, अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्' इति माध्यन्दिनपाठगतात्मशब्दस्थाने 'यो विज्ञाने तिष्ठन्' इति काण्वपाठदर्शनात् विज्ञानशब्दो जीवात्मपरः। सर्वे देवा विज्ञानं जीवस्वरूपमेव प्रधानशब्दाभिलप्यादचेतनाद्ब्रह्मणोऽपि ज्येष्ठं प्रजापतिविद्योक्तरीत्या उपासते इत्यर्थः। यस्तु विज्ञानरूपं ब्रह्म वेद, तस्माच्च जीवादन्तिमप्रत्ययपर्यन्तं न प्रमाद्यति चेत्, शरीरे पाप्मनो हित्वा देहे वर्तमाने एव विनष्टाश्लिष्टपूर्वोत्तराघः सर्वान्कामान् समश्नुते।

इष्टवस्तुदर्शनजन्यं सुखं प्रियम्। तल्लाभजन्यं सुखं मोदः। लब्धस्योपयोगजन्यं सुखं प्रमोदः। सुखातिशय आनन्दः। न च मध्यकायत्वेन रूपितस्याऽऽनन्दस्य पुच्छत्वेन रूपितब्रह्मणश्च भेदाभावेन तस्यैवाऽऽत्मत्वेन पुच्छत्वेन च रूपणं कथमिति वाच्यम्। एकस्यैव ब्रह्मणो ब्रह्मरूपत्ववेषेण पुच्छत्वं, आनन्दत्वेन वेषेणाऽऽत्मशब्दितमध्यकायत्वमित्युपपत्तेः। न च आनन्दरूपब्रह्मस्वरूपस्य कथमानन्दप्रचुरत्वलक्षणमानन्दमयत्वं, आनन्दस्याऽऽनन्दमयत्वाभावात्, इति वाच्यम्। आनन्दस्वरूपस्यैव ब्रह्मणः प्रियमोदप्रमोदशब्दवाच्यशिरःपक्षतारूपितधर्मभूतानन्दप्रचुरत्वेनाऽऽनन्दमयत्वस्याप्युपपत्तेः। अत्र च पूर्वेष्वन्नमयादिषु पर्यायेषु निरूपितस्य ब्रह्मणोऽवयवत्वस्यास्मिन्नानन्दपर्याये निरूपणं 'ब्रह्मविदाप्नोति परम्' इत्युपक्रान्तस्य ब्रह्मोपदेशस्याऽऽनन्दमयपर्याये समानत्वमिति ज्ञापनार्थमिति द्रष्टव्यम्। ततोऽत्राऽऽनन्दमय एव प्रक्रान्त एव ब्रह्म (आनन्दमयः प्रक्रान्तं ब्रह्मैव)।

रंग.

( ५ ) यत्तूक्तं 'यो विज्ञाने तिष्ठन्' (बृउ. ३।७।२२) 'विज्ञानं यज्ञं तनुते' 'ज्ञानस्वरूपमत्यन्तनिर्मलम्' (वि. पु. १।२।६) इत्यादिषु ज्ञानमेवाऽऽत्मेति व्यपदिश्यते इति, तत्राऽऽह —'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'। तुशब्दश्चोद्यं व्यावर्तयति। तद्गुणसारत्वात् विज्ञानगुणसारत्वात् आत्मनो विज्ञानमिति व्यपदेशः। विज्ञानमेवास्य सारभूतो गुणः, यथा प्राज्ञस्याऽऽनन्दः सारभूतो गुणः, इति प्राज्ञ आनन्दशब्देन व्यपदिश्यते। २।३।२९

ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनामप्राप्तिः, तेषामब्रह्मगुणत्वात्। ब्रह्मणः पुरुषविधत्वरूपणमात्रान्तर्गतत्वात्प्रियशिरस्त्वादीनाम्।

रामानुज. ३।३।१२

( ६ ) आनन्दमयः परमात्मैव, न तु जीवः। कुतः। परमात्मविषयकानन्दपदाभ्यासात्।

निंबार्क. १।१।१३

( ७ ) 'तस्मिन्नानन्दरूपोऽसौ स्थितो नारायणः सदा। शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम्। मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात्। मोदप्रमोदनामानावानन्दस्त्वाततत्वतः। मध्यमानन्दसंस्थं च ब्रह्मसृष्ट्या तु बृंहयेत्। पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा। अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः। देहदेहिवदेवासौ पञ्चधाऽवस्थितो हरिः। बहिःस्थो देहवद्विष्णुरन्तःस्थो देहिवत्स्मृतः। अन्तर्व्याप्तिविशेषेण न त्वशक्तत्वतो बहिः। सर्वेऽपि पुरुषाकारा उत्तरात्पूर्वसंभवः। उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः। अत्तृत्वं च प्रणेतृत्वं बोधो विविधवेत्तृता। आनन्दश्च यतः पूर्णस्ततोऽन्नादिमयाः स्मृताः। अत्त्यादिदास्ते प्रत्येकं सर्वे सर्वगुणा अपि। नामभेदस्ततस्तूक्तः सर्वनामवतामपि॥'

मध्व.

( ८ ) यत् 'सत्यं ज्ञानमनन्तं ब्रह्म' इतिमन्त्रवर्णोदितं ब्रह्म, तदेव 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति आनन्दप्रचुरतया आनन्दमय इति गीयते। 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मशब्दः प्रणववाचकः। तस्य परमेश्वरवाचकत्वाधारत्वम्।

श्रीकंठ. १।१।१६

( ९ ) अत्राऽऽनन्दमयः परमेश्वर एव। 'ब्रह्म पुच्छं प्रतिष्ठा' इति वाक्ये ब्रह्मपदस्य प्रणवार्थकत्वेन तदाधारत्वं तत्प्रतिपाद्यत्वं च तदात्मकपरमेश्वरस्योपदिश्यते। १।१।१६

तस्मिन् अन्नमयाद्यपेक्षया परकोशे दहराकाशे 'ब्रह्म पुच्छं प्रतिष्ठा' इति यत् प्रतिष्ठाभूतं ब्रह्म, तत् प्रतिष्ठितम्। श्रीकर. १।३।२२

( १० ) आनन्दमयशब्दवाच्यः पर एव। कुतः। अभ्यासात्। 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यन्नमयादिषु सर्वत्रैवाऽऽत्मत्वेनाऽऽनन्दयमस्यैव कथनात्। वल्लभ. १।१।११

( ११ ) अयं भावः—अन्नमयप्राणमयमनोमयविज्ञानमयाश्चत्वारः पुरुषाः स्थूलशरीरप्राणमनोबुद्ध्युपाधिका जीवभेदा एव। तत्र स्थूलशरीरिणो मनुष्यादयः, तेषां स्थूलशरीरं विना भोगाद्यभावात्। प्राणादिशरीरिणश्च त्रिविधा देवा उत्तरोत्तरं श्रेष्ठाः, सूक्ष्मशरीरैरेव पूर्वनिरपेक्षैस्तेषां भोक्तृत्वात्। श्रुतौ च विज्ञानमयादूर्ध्वं काऽपि जीवावस्था नास्ति, बुद्धिं विना जीवव्यवहाराभावात्। तथा च श्रुतिः—'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' ( बृउ. ४।३।७ ) इति। या चान्या जीवावस्था विलयरूपा, सा श्रुतिषु नदीसमुद्रवदविभागत ईश्वराद्भेदेन नोच्यते 'परेऽव्यये सर्व एकीभवन्ति' इत्येवं श्रवणात्। एवं च सति विज्ञामयात् बुद्ध्यवच्छिन्नजीवात् भेदेनोच्यमान आनन्दमयो न जीवो भवितुमर्हति, विज्ञानमयावस्थाया उपरि जीवानां ब्रह्मण्येकीभावस्यैव श्रुतिषु कथनात्। तस्मात् विज्ञानमयावस्थजीवस्यान्तस्थः अन्तर्याम्येव आनन्दमयः इति गम्यते, तद्भेदेन तदन्तरत्ववचनादिति। विज्ञान. १।१।१७

सत् सृष्टिकारणं, द्वैतरूपेणाविर्भूतं, सृष्ट्यनुप्रविष्टं, सुकृतरूपं, विदुषोऽभयप्रतिष्ठास्थानं, सर्वशासकम्

**असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य। कश्चन गच्छती ३। आहो विद्वानमुं लोकं प्रेत्य। कश्चित्समश्नुता ३ उ। सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳ सर्वमसृजत। यदिदं किंच। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्। यदिदं किंच। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥**

( १ ) असन्नेव असत्सम एव यथा असन्न पुरुषार्थसंबन्धी, एवं स भवति अपुरुषार्थसंबन्धी। कौऽसौ। यः असत् अविद्यमानं ब्रह्मेति वेद विजानाति चेत् यदि। तद्विपर्ययेण यत्सर्वविकल्पास्पदं सर्वप्रवृत्तिबीजं सर्वविशेषप्रत्यस्तमितमप्यस्ति, तद्ब्रह्मेति

(१) तैउ. २।६; शंकर. १।१।१२, १६, १८, १९, १।४।१४, १५, २२, २६, २।१।४, १३, ३१, २।३।१०, १३, १७, ४८, ३।२।२२; भास्कर. १।१।१२, १६,१८, १९, १।४।१५, २।१।४, ३।२।२३, ३।३।२; रंग. उतावि ( उता वि ) गच्छती३ (गच्छति) श्नुता ३ उ ( श्नुते ); रामानुज. १।१।१ ( पृ. ६२, ११२, ११९, १२१ ), १।१।१३ ( पृ. १८०, १८२ ), १।१।१७, १९, २१, ३२, १।२।१९, १।४।१५, २४, २६, २७, २।१।४, १५ ( पृ. ४४२ ), २।२।३५, २।४।१४, ३।२।३२, ३।३।१६; निंबार्क. १।१।१९, १।४।१५, २।१।४, २।१।२६, ३।३।१६; मध्व. २।३।६ : २।४।३ इदं सर्वं ( स इदं सर्वं ); श्रीकंठ. १।२।९, १।४।१५, २७, २।१।४, २।२।३८, ३।२।३५, ३।४।८; श्रीकर. १।१।१ ( पृ. २० ), १।१।१२, १३ ( पृ. ६३ ), १।१।१६, १९, २३, १।२।१९, १।३।२, ७, १।४।१४, १५, २२, २४, २।१।६, २७, २।२।४१, ४४, ४५, २।४।१३, १८, ३।२।७, ११, १६, ३५, ३।३।१६, १७, ४।४।४, ७, २२; वल्लभ. १।१।१४, १७, १।४।१५, २४, २।१।५, १६, ३१, २।३।१, ३।२।३, ४।३।१६; विज्ञान. १।१।४ ( पृ. ९८, १११ ), १।१।५ ( पृ. १२७ ), १।१।१२ ( पृ. १४८ ), १।१।१५, १६, १८, २८, १।२।१, २।१।४, ५, २।२।१०, २।३।२९, २।४।१४, ३।२।१६, १९, २९; बलदेव. १।१।१२, १।४।२४, २६, ३।३।१४, १७, ४।४।१७.

वेद चेत् । कुतः पुनराशङ्का तन्नास्तित्वे । व्यवहारातीतत्वं ब्रह्मण इति ब्रूमः । व्यवहारविषये हि वाचारम्भणमात्रे अस्तित्वभाविता बुद्धिः, तद्विपरीते व्यवहारातीते नास्तित्वमपि प्रतिपद्यते । यथा घटादिर्व्यवहारविषयतयोपपन्नः सन् तद्विपरीतः असन्निति प्रसिद्धं, एवं तत्सामान्यादिहापि स्यात् ब्रह्मणो नास्तित्वं प्रत्याशङ्का । तस्मादुच्यते—अस्ति ब्रह्मेति चेद्वेदेति । किं पुनः स्यात्तदस्तीति विजानतः, तदाह — सन्तं विद्यमानब्रह्मस्वरूपेण परमार्थसदात्मापन्नं एनं एवंविदं विदुर्ब्रह्मविदः ततः तस्मात् अस्तित्ववेदनात्, सोऽन्येषां ब्रह्मवद्विज्ञेयो भवतीत्यर्थः । अथवा यो नास्ति ब्रह्मेति मन्यते, स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्याश्रद्दधानतया नास्तित्वं प्रतिपद्यते, ब्रह्मप्रतिपत्त्यर्थत्वात्तस्य । अतो नास्तिकः सः असन् असाधुरुच्यते लोके । तद्विपरीतः सन् यः अस्ति ब्रह्मेति चेद्वेद, सः तद्ब्रह्मप्रतिपत्तिहेतुं सन्मार्गं वर्णाश्रमादिव्यवस्थालक्षणं श्रद्दधानतया यथावत्प्रतिपद्यते यस्मात्, ततः तस्मात् सन्तं साधुमार्गस्थमेनं विदुः साधवः । तस्मादस्तीत्येव ब्रह्म प्रतिपत्तव्यमिति वाक्यार्थः ।

तस्य पूर्वस्य विज्ञानमयस्य एष एव शारीरे विज्ञानमये भवः शारीर आत्मा । कोऽसौ । य एष आनन्दमयः । तं प्रति नास्त्याशङ्का नास्तित्वे । अपोढसर्वविशेषत्वात्तु ब्रह्मणो नास्तित्वं प्रत्याशङ्का युक्ता, सर्वसामान्याच्च ब्रह्मणः । यस्मादेवं अतः तस्मात् अथ अनन्तरं श्रोतुः शिष्यस्य अनुप्रश्नाः आचार्योक्तिमनु एते प्रश्नाः अनुप्रश्नाः । सामान्यं हि ब्रह्म आकाशादिकारणत्वाद्विदुषः अविदुषश्च । तस्मादविदुषोऽपि ब्रह्मप्राप्तिराशङ्क्यते—उत अपि अविद्वान् अमुं लोकं परमात्मानमितः प्रेत्य कश्चन । चनशब्दोऽप्यर्थे । अविद्वानपि गच्छति प्राप्नोति ? किंवा न गच्छतीति द्वितीयोऽपि प्रश्नो द्रष्टव्यः, अनुप्रश्ना इति बहुवचनात् । विद्वांसं प्रत्यन्यौ प्रश्नौ । यदि अविद्वान् सामान्यं कारणमपि ब्रह्म न गच्छति, ततो विदुषोऽपि ब्रह्मागमनमाशङ्क्यते, अतस्तं प्रति प्रश्नः—आहो विद्वानिति । उकारं च वक्ष्यमाणं अधस्तादपकृष्य तकारं च पूर्वस्मादुतशब्दाद्व्यासज्य आहो इत्येतस्मात्पूर्वमुतशब्दं संयोज्य पृच्छति—उताहो विद्वानिति । विद्वान् ब्रह्मविदपि कश्चित् इतः प्रेत्य अमुं लोकं समश्नुते प्राप्नोति ? समश्नुते उ इत्येवं स्थिते अयादेशे यलोपे च कृते अकारस्य प्लुतिः—समश्नुता३ उ इति । विद्वान् समश्नुते अमुं लोकं ? किंवा यथा अविद्वान् एवं विद्वानपि न समश्नुते ? इत्यपरः प्रश्नः । द्वावेव वा प्रश्नौ विद्वदविद्वद्विषयौ । बहुवचनं तु सामर्थ्यप्राप्तप्रश्नान्तरापेक्षया घटते । 'असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद' इतिश्रवणात् अस्ति नास्तीति संशयः, ततोऽर्थप्राप्तः किमस्ति, नास्ति, इति प्रथमोऽनुप्रश्नः । ब्रह्मणोऽपक्षपातित्वादविद्वान् गच्छति, न गच्छति, इति द्वितीयः । ब्रह्मणः समत्वेऽप्यविदुष इव विदुषोऽप्यगमनमाशङ्क्य किं विद्वान् समश्नुते, न समश्नुते, इति तृतीयोऽनुप्रश्नः । एतेषां प्रतिवचनार्थमुत्तरग्रन्थ आरभ्यते । तत्रास्तित्वमेव तावदुच्यते । यच्चोक्तं 'सत्यं ज्ञानमनन्तं ब्रह्म' इति, तच्च कथं सत्यत्वमित्येतद्वक्तव्यमितीदमुच्यते । सत्त्वोक्त्यैव सत्यत्वमुच्यते । उक्तं हि 'सदेव सत्यं' इति । तस्मात्सत्त्वोक्त्यैव सत्यत्वमुच्यते । कथमेवमर्थताऽवगम्यतेऽस्य ग्रन्थस्य, शब्दानुगमात् । अनेनैव ह्यर्थेनान्वितान्युत्तराणि वाक्यानि 'तत्सत्यमित्याचक्षते' 'यदेष आकाश आनन्दो न स्यात्' इत्यादीनि । तत्र असदेव ब्रह्मेत्याशङ्क्यते । कस्मात् । यदस्ति, तद्विशेषतो गृह्यते, यथा घटादि । यन्नास्ति, तन्नोपलभ्यते, यथा शशविषाणादि । तथा नोपलभ्यते ब्रह्म । तस्माद्विशेषतोऽग्रहणान्नास्तीति । तन्न । आकाशादिकारणत्वाद्ब्रह्मणः । न नास्ति ब्रह्म । कस्मात् । आकाशादि हि सर्वं कार्यं ब्रह्मणो जातं गृह्यते । यस्माच्च जायते किंचित्, तदस्तीति दृष्टं लोके, यथा घटाङ्कुरादिकारणं मृद्बीजादि । तस्मादाकाशादिकारणत्वादस्ति ब्रह्म । न चासतो जातं किंचित् गृह्यते लोके कार्यम् । असतश्चेन्नामरूपादि कार्यं, निरात्मकत्वान्नोपलभ्येत । उपलभ्यते तु, तस्मादस्ति ब्रह्म । असतश्चेत्कार्यं, गृह्यमाणमप्यसदन्वितमेव तत्स्यात् । न चैवं, तस्मादस्ति ब्रह्म । 'तत्र कथमसतः सज्जायेत' इति श्रुत्यन्तरमसतः सज्जन्मासंभवमन्वाचष्टे न्यायतः । तस्मात्सदेव ब्रह्मेति युक्तम् । तद्यदि मृद्बीजादिवत्कारणं स्यादचेतनं तर्हि । न, कामयितृत्वात् । न हि कामयितृ

अचेतनमस्ति लोके। सर्वज्ञं हि ब्रह्मेत्यवोचाम, अतः कामयितृत्वोपपत्तिः । कामयितृत्वादस्मदादिवदनाप्तकामं चेत्, न, स्वातन्त्र्यात्। यथा अन्यान्परवशीकृत्य कामादिदोषाः प्रवर्तयन्ति, न तथा ब्रह्मणः प्रवर्तकाः कामाः। कथं तर्हि, सत्यज्ञानलक्षणाः स्वात्मभूतत्वाद्विशुद्धाः, न तैर्ब्रह्म प्रवर्त्यते। तेषां तु तत् प्रवर्तकं ब्रह्म प्राणिकर्मापेक्षया। तस्मात्स्वातन्त्र्यं कामेषु ब्रह्मणः, अतो न अनाप्तकामं ब्रह्म। साधनान्तरानपेक्षत्वाच्च। किंच यथा अन्येषामनात्मभूता धर्मादिनिमित्तापेक्षाः कामाः स्वात्मव्यतिरिक्तकार्यकरणसाधनान्तरापेक्षाश्च, न तथा ब्रह्मणो निमित्ताद्यपेक्षत्वं, किं तर्हि, स्वात्मनोऽनन्याः, तदेतदाह — सोऽकामयत। स आत्मा यस्मादाकाशः संभूतः अकामयत कामितवान्। कथं, बहु स्यां, बहु प्रभूतं स्यां भवेयम्। कथमेकस्यार्थान्तरानप्रवेशे बहुत्वं स्यादित्युच्यते—प्रजायेय उत्पद्येय। न हि पुत्रोत्पत्त्येवार्थान्तरविषयं बहुभवनं, कथं तर्हि, आत्मस्थानभिव्यक्तनामरूपाभिव्यक्त्या। यदा आत्मस्थे अनभिव्यक्ते नामरूपे व्याक्रियेते, तदा नामरूपे आत्मस्वरूपापरित्यागेनैव ब्रह्मणा अप्रविभक्तदेशकाले सर्वावस्थासु व्याक्रियेते, तदा तन्नामरूपव्याकरणं ब्रह्मणो बहुभवनम्।

नान्यथा निरवयवस्य ब्रह्मणो बहुत्वापत्तिरुपपद्यते अल्पत्वं वा। यथा आकाशस्याल्पत्वं बहुत्वं च वस्त्वन्तरकृतमेव। अतस्तद्द्वारेणैव आत्मा बहु भवति। न हि आत्मनोऽन्यदनात्मभूतं तत्प्रविभक्तदेशकालं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भवत् भविष्यद्वा वस्तु विद्यते। अतो नामरूपे सर्वावस्थे ब्रह्मणैवात्मवती, न ब्रह्म तदात्मकम्। ते तत्प्रत्याख्याने न स्त एवेति तदात्मके उच्येते। ताभ्यां चोपाधिभ्यां ज्ञातृज्ञेयज्ञानशब्दार्थादिसर्वसंव्यवहारभाक् ब्रह्म।

स आत्मा एवंकामः सन् तपोऽतप्यत। तप इति ज्ञानमुच्यते, 'यस्य ज्ञानमयं तपः' इतिश्रुत्यन्तरात्। आप्तकामत्वाच्चेतरस्यासंभव एव तपसः। तत्तपः अतप्यत तप्तवान्। सृज्यमानजगद्रचनादिविषयामालोचनामकरोदात्मेत्यर्थः। स एवमालोच्य तपस्तप्त्वा प्राणिकर्मादिनिमित्तानुरूपमिदं सर्वं जगत् देशतः कालतो नाम्ना रूपेण च यथानुभवं सर्वैः प्राणिभिः सर्वावस्थैरनुभूयमानं असृजत सृष्टवान्। यदिदं किंच यत्किंचेदमविशिष्टम्। तदिदं जगत्सृष्ट्वा किमकरोदित्युच्यते—तदेव सृष्टं जगत् अनुप्राविशदिति। तत्रैतच्चिन्त्यं कथमनुप्राविशदिति। किं यः स्रष्टा, स तेनैवाऽऽत्मनाऽनुप्राविशत् उत अन्येनेति। किं तावद्युक्तम्। क्त्वाप्रत्ययश्रवणाद्यः स्रष्टा, स एवानुप्राविशदिति।

तदेवेदमाकाशादिकारणं कार्यं सृष्ट्वा तदनुप्रविष्टमिवान्तर्गुहायां बुद्धौ द्रष्टृ श्रोतृ मन्तृ विज्ञातृ इत्येवं विशेषवदुपलभ्यते। स एव तस्य प्रवेशः। तस्मादस्ति तत्कारणं ब्रह्म। अतः अस्तित्वादस्तीत्येवोपलब्धव्यं तत्। तत् कार्यं अनुप्रविश्य, किं, सच्च मूर्तं त्यच्च अमूर्तं अभवत्। मूर्तामूर्ते हि अव्याकृतनामरूपे आत्मस्थे अन्तर्गतेनाऽऽत्मना व्याक्रियेते, व्याकृते च मूर्तामूर्तशब्दवाच्ये ते आत्मना त्वप्रविभक्तदेशकाले इति कृत्वा आत्मा ते अभवदित्युच्यते। किंच निरुक्तं चानिरुक्तं च। निरुक्तं नाम निष्कृष्य समानासमानजातीयेभ्यो देशकालविशिष्टतया इदं तदित्युक्तं, अनिरुक्तं तद्विपरीतम्। निरुक्तानिरुक्ते अपि मूर्तामूर्तयोरेव विशेषणे। यथा सच्च त्यच्च प्रत्यक्षपरोक्षे, तथा निलयनं चानिलयनं च। निलयनं नीडं आश्रयः मूर्तस्यैव धर्मः। अनिलयनं तद्विपरीतं अमूर्तस्यैव धर्मः। त्यदनिरुक्तानिलयनान्यमूर्तधर्मत्वेऽपि व्याकृतविषयाण्येव, सर्गोत्तरकालभावश्रवणात्। त्यदिति प्राणादि अनिरुक्तं, तदेवानिलयनं च। अतो विशेषणान्यमूर्तस्य व्याकृतविषयाण्येवैतानि। विज्ञानं चेतनं, अविज्ञानं तद्रहितमचेतनं पाषाणादि। सत्यं च व्यवहारविषयं, अधिकारात्, न परमार्थसत्यम्। एकमेव हि परमार्थसत्यं ब्रह्म। इह पुनर्व्यवहारविषयमापेक्षिकं सत्यं मृगतृष्णिकाद्यनृतापेक्षया उदकादि सत्यमुच्यते। अनृतं च तद्विपरीतम्। किं पुनरेतत्सर्वमभवत्, परमार्थसत्यम्। किं पुनस्तत्, ब्रह्म, 'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृतत्वात्। यस्मात् सत्त्यदादिकं मूर्तामूर्तधर्मजातं यत्किंचेदं सर्वमविशिष्टं विकारजातं एकमेव सच्छब्दवाच्यं ब्रह्म अभवत्, तद्व्यतिरेकेणाभावान्नामरूपविकारस्य, तस्मात् तद्ब्रह्म

सत्यमित्याचक्षते ब्रह्मविदः । अस्ति नास्तीत्यनुप्रश्नः प्रकृतः, तस्य प्रतिवचनविषये एतदुक्तं — आत्मा अकामयत बहु स्यामिति । स यथाकामं चाऽऽकाशादिकार्यं सत्त्यदादिलक्षणं सृष्ट्वा तदनुप्रविश्य पश्यन् शृण्वन् मन्वानो विजानन् बह्वभवत् । तस्मात् तदेवेदमाकाशादिकारणं कार्यस्थं परमे व्योमन् हृदयगुहायां निहितं तत्प्रत्ययावभासविशेषेणोपलभ्यमानं अस्तीत्येवं विजानीयादित्युक्तं भवति । तदेतस्मिन्नर्थे ब्राह्मणोक्ते एष श्लोको मन्त्रो भवति । यथा पूर्वेष्वन्नमयाद्यात्मप्रकाशकाः पञ्चस्वपि, एवं सर्वान्तरतमात्मास्तित्वप्रकाशकोऽपि मन्त्रः कार्यद्वारेण भवति ।

शंकर.

( २ ) पूर्वेषु चतुर्षु पर्यायेषूदाहृतानां श्लोकानां पुच्छवद्विषयत्वदर्शनात् अयमपि श्लोकः पुच्छवदानन्दमय विषय एव, न तु 'ब्रह्म पुच्छम्' इतिनिर्दिष्टतदेकदेशविषयः । ततश्च ब्रह्मशब्देनाऽऽनन्दमय एवोच्यते । आनन्दमयसदसत्त्वज्ञानात् मोक्षसंसारौ भवत इत्यर्थः । आनन्दमयरूपस्य ब्रह्मणः आकाशादिविज्ञानमयान्तपदार्थान्तर्यामितया निर्दिष्टस्यापि आत्मान्तरं नास्ति किम् ? इति शङ्कां व्युदस्यति—तस्यैष एवेति । विज्ञानमयान्तपदार्थस्याऽऽत्मभूत एवाऽऽनन्दमय आत्मा तस्य आनन्दमयस्य आत्मेत्यर्थः । ततश्चानन्यात्मकत्वमुक्तं भवति । न च पूर्वेषु पर्यायेषु 'तस्यैष एव शारीर आत्मा' इत्यस्यानन्यात्मकत्वप्रतिपादकत्वादर्शनात् अस्मिन्पर्याये तदाश्रयणे अर्थवैरूप्यं स्यादिति शङ्क्यम् । पूर्वेषु पर्यायेष्वनुक्तस्य ब्रह्मावयवत्वस्येह निरूपणात्, 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा' इति निर्देशाभावाच्च एतत्पर्यायस्य तस्यैष एव शारीर आत्मेत्यस्य अनन्यात्मत्वमेवार्थः ।

आनन्दमयब्रह्मप्रतिपादनानन्तरं 'ब्रह्मविदाप्नोति परम्' इत्युपक्रमाभिहितप्राप्तिविशदीकरणार्थं प्रश्नानुपक्षिपति—अथात इति । पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतःशब्देनोच्यते । उतेति निपातस्य छान्दसो दीर्घः । अविद्वानिति पदे सत्याद्युदात्तत्वं स्यात्, 'तत्पुरुषे तुल्यार्थ०' ( पा. सू. ६।२।२ ) इति स्मरणात् । अन्तोदात्तं चेदं पदम् । उता विद्वानितिच्छेदः । अविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्नं च ब्रह्मोपासीनो विद्वान् किमितः प्रेत्य अमुं लोकं परमे व्योमन्नित्युक्तं लोकं गच्छति ? इत्येकः प्रश्नः । उत गत्यनपेक्षमिहैव ब्रह्माऽऽप्नोति ? इत्यर्थसिद्धः प्रश्नः । आहो विद्वान् कश्चित्समश्नुते ? इति भोक्तृत्वं विवक्षितम् । अयमर्थः—यः कश्चित् अहंग्रहेणोपासीनोऽपि विद्वान् अमुं लोकं गत्वा किं कश्चित् समश्नुते ? भोग्यभूतं ब्रह्म अनुभवति ? इत्येकः प्रश्नः । उत ब्रह्मस्वरूपेणैकीभवति ? इत्यर्थसिद्धः प्रश्नः । एवं शास्त्रवैविध्यमूला गतिविशेषस्वरूपभेदसदसद्भावविषयाः प्रश्नाः बहुवचनविवक्षिताः । एतत्सर्वं व्यासार्यैः 'उपासात्रैविध्यात्०' इति सूत्रे स्पष्टमुक्तम् । एतान् प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव ब्रह्मणः प्राप्यत्वादिज्ञापनायाऽऽह — स आनन्दमय आत्मा देवमनुष्यादिरूपेण बहु स्यां, तदर्थमाकाशादिभूतरूपेण प्रजायेयेति व्यष्टिसमष्टिरूपचेतनाचेतनविषयसंकल्पं अकरोदित्यर्थः । स तपोऽतप्यतेति । स परमात्मा स्रष्टव्यालोचनरूपं तपः कृतवानित्यर्थः । 'तप आलोचने' इति धातुः । स तपस्तप्त्वा......तदेवानुप्राविशदिति । ननु सर्वदा सर्वव्याप्तस्य ब्रह्मणः कोऽसौ सृष्टिकालानुप्रवेश इति चेत्, उच्यते—गोजठरगतवत्से गोत्वादिवत् सर्वव्याप्तस्य ब्रह्मणः प्रत्येकं सर्ववस्तुषु पुष्कलप्रतीत्यर्हस्थितिविशेष एवानुप्रवेशः । अनेन 'सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायाम्' इति मन्त्रोक्तं अनन्तस्य ब्रह्मणो हृदयगुहानिहितत्वमुपपादितं भवति । सच्च त्यच्चेति । सच्छब्देन निर्विकारतया सततैकरूपश्चेतन उच्यते । त्यच्छब्देन पूर्वपूर्वावस्थात्यागिविकारास्पदमचेतनमुच्यते । ब्रह्मैव चेतनाचेतननामरूपभाक् भवतीत्यर्थः । ननु ब्रह्मण एव सर्वोपादानतया सर्वभावे विकारास्पदत्वं स्यादित्याशङ्क्याऽऽह—निरुक्तमित्यादि । जातिगुणक्रियावत्तया जातिगुण ( क्रिया )-भिधायिशब्दवाच्यमचेतनं निरुक्तम् । जातिगुणादिकशून्यं चेतनजातमनिरुक्तम् । 'एता भूतमात्राः प्रज्ञामात्रास्वर्पिताः' इत्युक्तरीत्या अचेतनवर्गाधारभूतं चेतनजातं निलयनं, आश्रितमचेतनजातं त्वनिलयनम् ।

अजडस्वरूपं जडस्वरूपं च । निर्विकारतया सत्यत्वं चेतनस्य, इतरस्य त्वतथात्वम् । निरुक्तत्वनिलयनत्वविज्ञानत्वयुक्तसत्यानृतशब्दितचेतनाचेतननामरूपभाग्भवदपि ब्रह्म सत्यमेवाभवत् । अजहन्निर्विकारत्वलक्षणस्वस्वभावमेवाभवदित्यर्थः । यदिदं किञ्चेति । यस्माच्चेतनाचेतनात्मकवर्गानुप्रविष्टतया सत्यशब्दितस्य ब्रह्मण आत्मत्वं, अत एव सर्वमपि चेतनाचेतनात्मकं जगत् शास्त्रदृष्टिमन्तः पुरुषाः पराशरादयः, 'हरेर्न किंचिद्व्यतिरिक्तमस्ति ज्योतींषि विष्णुर्भुवनानि विष्णुः' इत्याचक्षते इत्यर्थः । रंग.

( ३ ) 'पञ्चरूपं च तद्ब्रह्म जीवादन्यन्न विद्यते । इति ये तु विजानन्ति तेऽसन्तस्तमआलयाः । जीवादन्यत्परं ब्रह्म पञ्चरूपं च ये विदुः । सन्तस्त इति विज्ञेया मोक्षयोग्या हि ते ध्रुवम् । इत्युक्ते ब्रह्मणा पूर्वं पप्रच्छ वरुणो विभुम् । अविद्वानपि यः कश्चिद्ब्रह्माप्नोति कथंचन । विद्वानेवोत तत्रापि सर्वे वाऽथैव केचन । यदि सर्वेऽथ तत्रापि सर्वे सम्यक्त्वमाप्नुयुः । केचिदेवोत सम्यक्तदसम्यगपरे जनाः । ज्ञानिनोऽपीति पृष्टः स ब्रह्मा प्राह चतुर्मुखः । अज्ञा न प्राप्नुयुर्ब्रह्म प्राप्नुयुर्ज्ञानिनोऽखिलाः । तत्रापि सम्यक्प्राप्तिस्तु विरिञ्चस्यैव सर्वदा । अन्येषां तारतम्येन प्राप्तिः सुखविशेषतः । इत्यभिप्रायवान् ब्रह्मा ह्युकारेण समासतः । उक्त्वा प्रश्नोत्तरं पश्चाद्विस्तरेण जगाद ह । कश्चिदेवोत सम्यक्तदाप्नुयादितिवाक्यतः । अनन्तरं तथैवेति ब्रह्मोकारमुवाच ह । अज्ञो नैव तदाप्नोति ज्ञान्येवैतदवाप्नुते । इति ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय तु । आह सृष्टिं प्रवेशं च माहात्म्यज्ञानतो यतः । प्रीतिं यान्ति महान्तस्तु तद्वशा एव चेश्वराः । अग्न्यादयोऽपि किमुत तदन्ये मुक्तिदस्ततः । स एवैकः स विज्ञेयः पूर्णैश्वर्यादिरूपवान् । इति तस्य महैश्वर्यमुच्यते स त्वकामयत् । सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु । बहुरूपो भवानीति स्याज्जगत्त्वेत्यचिन्तयत् । स्यादित्यालोचनान्नान्यत्तपो विष्णोः कदाचन । अवतारेष्वनुकृतिर्बाह्यवृत्त्या तपस्विनाम् । सृष्टिर्नाम स्वरूपात्तु बहिर्निष्क्रमणं स्मृतम् । यद्यपीदं जगत्सर्वं स्वोदरस्थं महात्मनः । तथाऽप्येष द्वितीयेन रूपेण बहिराक्षिपेत् । रूपान्तरेणाविशच्च जगत्सर्वं जनार्दनः । त्यच्चानिरुक्तं विज्ञानं तथा निलयनं महान् । सत्यं प्राणस्तथा श्रीश्च सन्निरुक्तं तथाऽनृतम् । अविज्ञानं चानिलयनं प्रकृतिप्राणयोः परम् । तद्वद्विष्णोस्तु संबन्धात्स्वतस्तन्नामको हरिः । ततो नियामकश्चेति त्यदानन्त्यादवाच्यतः । अनिरुक्तं निलयनं सर्वाधारत्वतो हरिः । विज्ञानं सर्वविज्ञानात्सत्यं साधु स्वरूपतः । अवसादमुवाच्यत्वदौर्बल्याल्पत्वसाधुताः । प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः । अतः साधुस्वरूपः सन्सत्यनामाऽनृतादिकम् । नामानेन गतत्वादेर्यदिदं किंच भाषितम् । सन्निरुक्तादिशब्देन तत्सर्वं साधुतैव हि । अवसादनादिहेतुत्वं साधुतैव हि सर्वशः । असाधुतावसादादिस्तत्कर्तृत्वं हि भाषितम् ॥' मध्व.

( ४ ) 'सोऽकामयत बहु स्याम्' इति नामरूपादिविभागरहितसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमेश्वरः संविभक्तनामरूपचिदचिद्वस्तुशरीरको भवेयमिति संकल्पमकरोत् । ततश्च 'इदं सर्वमसृजत । यदिदं किंच' इति स्वशरीरभूतं सूक्ष्मचिदचिद्वस्तु स्वस्माद्विभज्य 'तत्सृष्ट्वा । तदेवानुप्राविशत्' इति स्वतो विभक्ते चिदचिद्वस्तुनी स्वयमात्मतया प्रविश्य 'सच्च त्यच्चाभवत्' इत्यादिना सदसत्प्रपञ्चरूपेण बहुधा परिणतोऽभवदिति पुरुषस्य बालत्वयुवत्वादिवत् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वं च ।

श्रीकंठ. १।४।२७

( ५ ) ब्रह्मणि सृष्टेः पूर्वकाले एव अद्वैतमवगन्तव्यं, सृष्ट्युन्मुखस्य ब्रह्मणः कामनया बहुभावश्रवणात् । श्रीकर. १।१।१

( ६ ) अथैवं 'स ईक्षांचक्रे' 'सोऽकामयत' इत्यादिश्रुतिषु ब्रह्मणो ज्ञानकामनाद्युत्पत्तिवचनमनुपपन्नमिति चेत्, न, स्वकार्यजनकसामग्रीसमवधाननिमित्तकाभिव्यक्तिरूपोत्पत्तेर्लौकिकव्यवहारसिद्धाया अनुवादात् । लोके अभिव्यञ्जकस्य तैलसंबन्धस्यानन्तरं व्यवह्रियते कुङ्कुमगन्ध इदानीं जात इति । अथ वा अमुककाले अमुकं पश्यत्करिष्यामीतीक्षणसंकल्पाद्यवच्छेदककालाद्युत्पत्त्यैवेक्षणाद्युत्पत्तिरुपचर्यते शिखी जात इत्यादिवदिति मन्तव्यम् ।

विज्ञान. १।१।५

असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वै तत्सुकृतम्। रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवाऽऽनन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य। तदप्येष श्लोको भवति॥

---

(१) तैउ. २।७; ब्रशंकर. १।१।१२ यदेष ( य एष ), १।१।१४, १७, १९, २२, १।४।१४, १५, २६, २।१।१७, २।३।१०, ३।२।२३, ३।३।४; भास्कर. १।१।१२, १४, १७, १९, १।४।१४, १५, २५, २।३।१३; रामानुज. १।१।१ ( पृ. १४, १७, ६४, ७९ ), १।१।१५, २०, २३, १।३।१६, १।४।१४, १५, १९, २६, २७, २।१।१८, २।२।३५, २।३।२९, ३।२।४, ३८, ३।३।३५, ४।४।१, १९, २०; निंबार्क. १।१।१८, २०, १।४।१५, २६: २।१।२६ आत्मानꣳ स्वयमकुरुत ( स्वयमात्मानमकुरुत), २।३।१३, ३।२।३९, ४।४।१९; ब्रमध्व. १।१।१४, १७, १९, २०, २२, १।३।३९, २।३।९; श्रीकंठ. १।१।२ ( पृ. १२३ ), १।१।१५, १६, १।४।१४, १५, २६, २।१।१७, २।२।३८, २।३।९, २।४।१, ३।२।४, ४।४।१४, १९; श्रीकर. १।१।१ ( पृ. ३, ४, २६ ), १।१।२ ( पृ. २९ ), १।१।४ ( पृ. ४८ ), १।१।१२, १३, १५, १६, १८, २०, २३, १।४।१४, १५, २६, २।१।७, १७, २।२।२७, ४१, २।३।८, १६, २७, २।४।१, ३।२।४, ३८, ३।३।३५, ४१, ४।४।४, १५, १९ एतस्मिन्नुदर ( एतस्मिन्नु दर ); वल्लभ. १।१।३ ( पृ. ८९, ११९ ) तदात्मानं ( स आत्मानं ), १।१।५, ६, ११ ( पृ. १६७, १८३ ), १।१।१३, १६, २१, १।२।११, १।४।१५, १९, २६, २।१।१७, १८, ३।२।३, ३।३।३ ( पृ. १००० ), ३।३।४, ३।३।१०, १५, ४।२।११, १३, ४।४।१९; विज्ञान. १।१।२ (पृ.४१), १।१।४. ( पृ. ९८, १०० ), १।१।१२ ( पृ. १४७ ), १।१।१४, १६, १७, १९, १।३।८, १।४।२६, २।१।१७, ३।२।३०; बलदेव. १।१।७, १२, १४, १९, १।३।१७, १।४।१४, १५, २।१।१७, ३।३।१०, ४।४।१, २०.

(१) असद्वा इदमग्र आसीत्। असदिति व्याकृतनामरूपविशेषविपरीतरूपमविकृतं ब्रह्मोच्यते, न पुनरत्यन्तमेवासत्। न ह्यसतः सज्जन्मास्ति। इदमिति नामरूपविशेषवद्व्याकृतं जगत् अग्रे पूर्वं प्रागुत्पत्तेः ब्रह्मैव असच्छब्दवाच्यमासीत्। ततः असतः वै सत् प्रविभक्तनामरूपविशेषं अजायत उत्पन्नम्। किं ततः प्रविभक्तं कार्यमिति, पितुरिव पुत्रः? नेत्याह—तत् असच्छब्दवाच्यं स्वयमेव आत्मानमेव अकुरुत कृतवत्। यस्मादेवं तस्मात् तत् ब्रह्मैव सुकृतं स्वयं कर्तृ उच्यते। स्वयं कर्तृ ब्रह्मेति प्रसिद्धं लोके सर्वकारणत्वात्। यस्माद्वा स्वयमकरोत्सर्वं सर्वात्मना, तस्मात्पुण्यरूपेणापि तदेव ब्रह्म कारणं सुकृतमुच्यते। सर्वथाऽपि तु फलसंबन्धादिकारणं सुकृतशब्दवाच्यं प्रसिद्धं लोके, यदि पुण्यं यदि वाऽन्यत्। सा प्रसिद्धिर्नित्ये चेतनावत्कारणे सत्युपपद्यते। तस्मादस्ति तद्ब्रह्म, सुकृतप्रसिद्धेः। इतश्चास्ति। कुतः। रसत्वात्। कुतो रसत्वप्रसिद्धिर्ब्रह्मणः, इत्यत आह—यद्वै तत्सुकृतम्। रसो वै सः। रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके। रसमेवायं लब्ध्वा प्राप्य आनन्दी सुखी भवति। नासत आनन्दहेतुत्वं दृष्टं लोके। बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा दृश्यन्ते विद्वांसः, नूनं ब्रह्मैव रसस्तेषाम्। तस्मादस्ति तत् तेषामानन्दकारणं रसवद्ब्रह्म। इतश्चास्ति, कुतः। प्राणनादिक्रियादर्शनात्। अयमपि हि पिण्डो जीवतः प्राणेन प्राणिति अपानेन अपानिति। एवं वायवीया ऐन्द्रियकाश्च चेष्टाः संहतैः कार्यकरणैर्निर्वर्त्यमाना दृश्यन्ते। तच्च एकार्थवृत्तित्वेन संहननं नान्तरेण चेतनमसंहतं संभवति, अन्यत्रादर्शनात्। तदाह—यत् यदि एष आकाशे परमे व्योम्नि गुहायां निहित आनन्दो न स्यात् न भवेत्, को ह्येव लोके अन्यात् अपानचेष्टां कुर्यादित्यर्थः। कः प्राण्यात् प्राणनं वा कुर्यात्। तस्मादस्ति तद्ब्रह्म। यदर्थाः कार्यकरणप्राणनादिचेष्टाः, तत्कृत एव चाऽऽनन्दो लोकस्य। कुतः। एष ह्येव पर आत्मा आनन्दयाति आनन्दयति सुखयति लोकं धर्मानुरूपम्। स एवाऽऽत्मानन्दरूपः अविद्यया परिच्छिन्नो विभाव्यते प्राणिभिरित्यर्थः। भयाभयहेतुत्वाद्विद्वदविदुषोरस्ति तद्ब्रह्म। सद्वस्त्वा-

श्रयणेन ह्यभयं भवति । नासद्वस्त्वाश्रयणेन भयनिवृत्तिरुपपद्यते । कथमभयहेतुत्वमित्युच्यते — यदा ह्येव यस्मादेष साधक एतस्मिन्ब्रह्मणि । किंविशिष्टे । अदृश्ये । दृश्यं नाम द्रष्टव्यं विकारः, दर्शनार्थत्वाद्विकारस्य । न दृश्यं अदृश्यं, अविकार इत्यर्थः । एतस्मिन् अदृश्ये अविकारे अविषयभूते अनात्म्ये अशरीरे । यस्माददृश्यं तस्मादनात्म्यं, यस्मादनात्म्यं तस्मादनिरुक्तम् । विशेषो हि निरुच्यते । विशेषश्च विकारः । अविकारं च ब्रह्म, सर्वविकारहेतुत्वात् । तस्मादनिरुक्तम् । यत एवं, तस्मादनिलयनम् । निलयनं नीड आश्रयः । न निलयनं अनिलयनं अनाधारम् । तस्मिन्नेतस्मिन्नदृश्ये अनात्म्ये अनिरुक्ते अनिलयने सर्वकार्यधर्मविलक्षणे ब्रह्मणीति वाक्यार्थः । अभयमिति क्रियाविशेषणम् । अभयामिति वा लिङ्गान्तरं परिणम्यते । प्रतिष्ठां स्थितिं आत्मभावं विन्दते लभते, अथ तदा स तस्मिन्नानात्वस्य भयहेतोरविद्याकृतस्यादर्शनादभयं गतो भवति । स्वरूपप्रतिष्ठो ह्यसौ यदा भवति, तदा नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति । अन्यस्य ह्यन्यतो भयं भवति, नाऽऽत्मन एवाऽऽत्मनो भयं युक्तं, तस्मादात्मैवाऽऽत्मनः अभयकारणम् । सर्वतो हि निर्भया ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु, तच्चायुक्तमसति भयत्राणे ब्रह्मणि । तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्मेति । कदाऽसौ अभयं गतो भवति साधकः । यदा नान्यत्पश्यति, आत्मनि चान्तरं भेदं न कुरुते, तदा अभयं गतो भवतीत्यभिप्रायः । यदा पुनरविद्यावस्थायां हि यस्मात् एषोऽविद्यावान् अविद्यया प्रत्युपस्थापितं वस्तु तैमिरिकद्वितीयचन्द्रवत्पश्यत्यात्मनि चैतस्मिन्ब्रह्मणि उत् अपि अरं अल्पमपि अन्तरं छिद्रं भेददर्शनं कुरुते । भेददर्शनमेव ह्यन्तरकरणम् । अल्पमपि भेदं पश्यतीत्यर्थः । अथ तस्माद्भेददर्शनाद्धेतोः तस्य भेददर्शिन आत्मनो भयं भवति । तस्मादात्मैवाऽऽत्मनो भयकारणमविदुषः । तदेतदाह—तत् ब्रह्म त्वेव भयं भेददर्शिनो विदुषः ईश्वरोऽन्यो मत्तः, अहमन्यः संसारी, इत्येवं विदुषो भेददृष्टमीश्वराख्यं तदेव ब्रह्म अल्पमप्यन्तरं कुर्वतो भयं भवति एकत्वेनामन्वानस्य । तस्माद्विद्वानप्यविद्वानेवासौ योऽयमेकमभिन्नमात्मतत्त्वं न पश्यति । उच्छेदहेतुदर्शनाद्ध्युच्छेद्याभिमतस्य भयं भवति । अनुच्छेद्यो ह्युच्छेदहेतुः । तत्र असत्युच्छेदहेतौ उच्छेद्ये न तद्दर्शनकार्यं भयं युक्तम् । सर्वं च जगद्भयवत् दृश्यते । तस्माज्जगतो भयदर्शनाद्गम्यते नूनं तदस्ति भयकारणमुच्छेदहेतुरनुच्छेद्यात्मकं, यतो जगत् बिभेतीति । तदेतस्मिन्नप्यर्थे एष श्लोको भवति ।

शंकर

(२) यस्मात्स्वयमेव स्वस्य कार्यं, अत एव ब्रह्म सुकृतं सुष्ठु कृतं कार्यं यस्य तत्सुकृतम् । कार्यस्य सौष्ठवं चानतिक्लेशरूपत्वम् । स्वभिन्नस्य कार्यस्य निर्माणे हि क्लेशप्रसक्तिः । भवतु तत्सुकृतं, तस्योपास्यत्वप्राप्यत्वयोः किमागतमित्यत्राऽऽह—यद्वै तत्सुकृतमित्यादि । सुकृतमिति निर्दिष्टं ब्रह्म रस आनन्दः । तल्लाभादस्याऽऽनन्दित्वं, ततश्च तस्याऽऽनन्दस्य प्राप्यत्वात् प्राप्यत्वोपास्यत्वे युक्ते इति भावः । तदेवोपपादयति—को ह्येवान्यादित्यादिना । यद्ययमपरिच्छिन्नानन्दरसः परमात्मा न स्यात्, सांसारिकमापवर्गिकं वा सुखं कः प्राप्नुयात् । अत एष ह्येवाऽऽनन्दयति । अतस्तस्य सर्वविधानन्दहेतुत्वात्तस्य प्राप्यत्वमस्तीति भावः ।

अनिलयने आधारशून्ये । अभयं अभयाय । 'नाव्ययीभावात्' (पा. सू. २।४।८४) इति चतुर्थ्या अम्भावः । 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः समासः । अभयसाधनभूतां प्रतिष्ठां निरन्तरस्मृतिलक्षणां निष्ठां यो विन्दते लभते सोऽभयं प्राप्नोति । अत्र व्यासार्यैः 'अदृश्य इत्यचिद्व्यावृत्तिः । अनात्म्य इति बद्धव्यावृत्तिः । तेषां हि परमात्मना व्याप्यत्वम् । यद्वा आत्म्यं व्याप्यं कर्मकृतं शरीरं, तद्रहितः अनात्म्यः । अनिरुक्त इति मुक्तव्यावृत्तिः । स हि बद्धावस्थायां देवादिशब्दैरुक्तः । अनिलयन इति नित्यमुक्तव्यावृत्तिः । तेषां हि भगवानाधार इत्युक्तम् । एवं विहितायाः प्रतिष्ठाया विच्छेदे अनर्थं दर्शयति—यदा ह्येवैष इति । एष उपासकः । एतस्मिन्परमात्मनि ध्यानस्य अन्तरं विच्छेदं अरं अल्पमपि यः कुरुते, तस्य भयमुद्भवती-

त्यर्थः। पूर्ववाक्ये प्रतिष्ठाशब्देन निरन्तरध्यानवाचिना ध्यानगतनैरन्तर्यस्य विहितत्वात् अत्रान्तरशब्देनापि तस्यैव ध्यानगतनैरन्तर्यस्य विरोधिनो ध्यानविच्छेदस्य ग्रहणमुचितं, न तु परोक्तरीत्या ब्रह्मण्यन्तरं भेदं यः कुरुते जानातीत्यर्थ उचित इति द्रष्टव्यम्। वस्तुतस्तु ब्रह्मैक्यवादिनामस्माकं ब्रह्मणि नानात्वनिषेधो न प्रतिकूलः। अस्माभिर्नानाब्रह्मवादस्यानभ्युपगमात्। तथापि प्रकरणानुगुण्यादुक्त एवार्थ उचित इति द्रष्टव्यम्। किं भयं तत्राह — तत्त्वेवेति। विदुषो ब्रह्मोपासननिष्ठस्य तद्व्यतिरिक्तविषयस्पृहया निरन्तरं मननमकुर्वतस्तदेवामननं भयं, न हि तदपेक्षयाऽन्यद्भयमस्ति।

* रंग.

(३) 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति' इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तं तदसत्, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छाउ. ३।१४।१) इति तन्नानात्वानुसंधानस्य शान्तिहेतुत्वोपदेशात्। तथा हि—सर्वस्य जगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसंधानेनात्र शान्तिर्विधीयते। अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगत् ब्रह्मात्मकमित्यनुसंधानस्य शान्तिहेतुतया अभयप्राप्तिहेतुत्वेन न भयहेतुत्वप्रसङ्गः।

१।१।१

इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तारं प्रत्यगात्मानं प्राणनस्य कर्तृत्वेनोक्त इति न मन्वीथाः, तस्य सुषुप्तिमूर्च्छादौ प्राणनादेरकर्तृत्वात्। 'को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्' इति सर्वप्राणिप्राणनहेतुत्वं हि परमात्मन एवान्यत्र श्रुतम्।

रामानुज. ३।३।३५

(४) 'अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः। स आसाद्यश्च सन्नामा वासुदेवो भवत्प्रभुः। स वासुदेवः स्वात्मानं चक्रे संकर्षणादिकम्। तस्मात्तत्सुकृतं नाम स आनन्दो रसस्ततः। आनन्दमेनं संप्राप्य मुक्तो मोदेन्न चान्यथा। आदीप्तस्त्वेष भगवान्यद्यानन्दो भवेन्न च। सामान्यचेष्टा धर्म्याश्च कस्य स्युस्तमृते प्रभुम्। सुखं लब्ध्वा हि कुरुते लोकचेष्टां जनार्दनः। अल्पात्सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत्। न ह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः। तमाद्याद्दृक् सुखं तादृक्कर्म पूर्णसुखस्ततः। सर्वकर्तृत्वात्परो विष्णुराह तस्मात्सनातनी। सुखं लब्ध्वा करोतीति छन्दोगानां श्रुतिः परा। अलब्ध्वा तु सुखं नैव करोतीत्यपि सादरम्। तत्पूर्णानन्ददेवेन कारितः प्राणिति स्फुटम्। सर्वलोकः स एवैक आनन्दयति चाखिलम्। तस्माददृश्ये जैवानां गुणानामप्यसंगतेः। अनात्म्येऽथ गुणानन्त्यादनिरुक्ते निराश्रयात्। अनिलयनेऽभयत्वेन यदा ज्ञानेन तिष्ठति। तदाऽभयं हरिं गच्छेन्नैवाज्ञानी कथंचन। यदैतस्मिन्परे विष्णावुदरं जीवगत्वतः। भेदं करोति तेनैव भयमस्य महद्भवेत्। अइत्युक्तः परो विष्णुरेभ्य उच्चः स एव तु। त उदा जीवसंघाः स्युरुदरं तद्गतान्तरम्। तदेव ब्रह्म भयकृद्विदुषोऽविदुषस्तथा। विदुषोऽल्पभयं कुर्याद्यावन्मुक्तिं व्रजत्यसौ। अथाभयं भवेद्ब्रह्म तस्य मुक्तस्य सर्वदा॥'

मध्व.

(५) आनन्दमयः परमाकाशः। परमाकाशरूपत्वमस्य 'यदेष आकाश आनन्दो न स्यात्' इत्यतोऽवगम्यते।

श्रीकंठ. १।१।१६

(६) नामरूपविभागार्हत्वं सत्त्वं, नामरूपविभागानर्हत्वे सति सद्गुरुकरुणाकटाक्षलब्धसूक्ष्मदृष्टिगोचरत्वं असत्त्वं इति 'असद्वा इदमग्र आसीत्ततो वै सदजायत' इत्यादिषु वेदितव्यम्।

१।१।१३

'को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्' इत्यादिना परमाकाशरूपत्वं आनन्दमयस्यावगम्यते।

१।१।१६

'यदा ह्येवैष एतस्मिन्नदृश्ये......भयं भवति' इति मुक्तिदशायां यदा एतस्मिन् आनन्दमये परशिवे अन्यं अन्तरं अतादात्म्यरूपं पश्यति, तदा जन्मभयान्न निवर्तते। यदा ह्येतस्मिन् आनन्दमये उपासनकाले तादात्म्येन पश्यति, तदा संसारभयात् विमुच्यते।

१।१।२०

'यदा ह्येवैष एतस्मिन्नु दरमन्तरं०' इत्यत्र नुशब्दो वाक्यालङ्कारे, 'किमिव हि मधुराणां मण्डनं नाकृतीनाम्', इत्यादिकाव्येष्वपि अव्ययानां

* शेषं शंकरवत्।

वाक्यालङ्कारत्वदर्शनात् । दरं अल्पं, ' दरहसोदरदलितनीलोत्पलदृशा सखी ' इत्यादिप्रयोगेषु दरशब्दस्याल्पार्थकत्वात् । श्रीकर. ३।३।४१

(७) ' रसो वै सः ' इतिश्रुत्या ' सर्वरसः ' इतिश्रुत्या च सर्वरसात्मकत्वं ब्रह्मणो निर्णीतम् । तथा च यस्य रसस्य ये विभावानुभावादिरूपाः, तैः स रसः संपद्यते आतानवितानात्मकतन्तुभिः पट इव । अतस्तत्तादात्म्यं रसस्येति सर्वाभेदो निष्प्रत्यूह इति ।

वल्लभ. ३।३।१०

(८) ननु तथापि ' तदात्मान स्वयमकुरुत ' ' तन्नामरूपाभ्यामेव व्याक्रियत ' इतिश्रुतिभ्यामुक्तयोर्विकारकर्तृत्वयोरनुपपत्तिरिति चेन्न, तादृशवाक्यानामौपाधिकविकारकृत्योस्तात्पर्यात्, जीववत्परमात्मनोऽपि शरीरद्वयवत्त्वात्, ' यस्य सर्वं शरीरम् ' इत्यादिश्रुतीनां गौणत्वाऽनौचित्यात् । १।१।४

अनात्म्ये आत्मान्तरशून्ये, परमात्मनो जीववदात्मान्तराभावात् । अनिलयने जीववल्लयशून्ये सदा प्रबुद्धे । अभयं यथा स्यात्तथा प्रतिष्ठां अविभागं समुद्रे नद्या इव विन्दते लभते । लाभश्चात्रानुभवरूपः, उत्तरवाक्यात् । * विज्ञान. १।१।१९

**[1]भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ।**

**अकामहतब्रह्मविच्छ्रोत्रियस्य ब्रह्मज्ञानजन्यानन्दस्य मीमांसा, पुण्यपापतरणं विदुषः**

**सैषाऽऽनन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाऽध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्याऽऽनन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्याऽऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति । तदप्येष श्लोको भवति ॥**

(१) भीषा भयेन अस्माद्वातः पवते । भीषोदेति सूर्यः, भीषाऽस्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चम इति ।

* काउ. २।१।११ इतिमन्त्रगतं व्याख्यानं द्रष्टव्यम् ।

(१) तैउ. २।८; **शांकर.** १।१।१२, १९, १।२।१७, १।३।३९, ३।४।८; **भास्कर.** १।१।१२, १९, १।२।१७ **श्चेन्द्रश्च ( श्चेन्दुश्च )**, ४।३।१३; **रामानुज.** १।१।१ ( पृ. ६१, ६३ ), १।१।१३, १४, २०, १।३।४०, १।४।१५, २।३।२९, २।४।१३, ३।२।४, १७, ३।३।५७, ३।४।८, ४।४।१, २०; **मध्व.** पितृणां ( पितॄणां ); **अमध्व.** १।१।१७, १९, १।३।२: ३।२।२१ सैषाऽऽ ( अथात आ ); **श्रीकण्ठ.** १।१।२ ( पृ. १२२, १२७ ), १।१।१३, १६, १।३।४०, ३।३।३९, ४।१।१२, ४।४।१४; **श्रीकर.** १।१।१ ( पृ. १२, २१ ), १।१।११, १३, १४, १६, २०, २२, १।२।१७, १।३।३९, २।१।६, २।३।२७, ३६, २।४।१२, ३।१।१४, ३।२।४, १७, ३।३।४१, ५७, ६०, ३।४।८, ४।४।१, १५, २०, २२; **वल्लभ.** १।१।११ ( पृ. १८४, १८५ ), १।१।१८, ३।३।३४, ३।४।२२; **विज्ञान.** १।१।२ ( पृ. ६४ ), १।१।१२ ( पृ. १४६, १४७ ); १।१।१३, १५; **बलदेव.** १।१।१२, ३।३।१४

वातादयो हि महार्हाः स्वयमीश्वराः सन्तः पवनादिकार्येष्वायासबहुलेषु नियताः प्रवर्तन्ते । तद्युक्तं प्रशास्तरि सत्यन्यस्मिन् नियमेन तेषां प्रवर्तनम् । तस्मादस्ति भयकारणं तेषां प्रशास्तृ ब्रह्म । यतस्ते भृत्या इव राज्ञः अस्माद्ब्रह्मणो भयेन प्रवर्तन्ते, तच्च भयकारणमानन्दं ब्रह्म ।

तस्यास्य ब्रह्मण आनन्दस्य एषा मीमांसा विचारणा भवति । किमानन्दस्य मीमांस्यमित्युच्यते । किमानन्दो विषयविषयिसंबन्धजनितो लौकिकानन्दवत्, आहोस्वित् स्वाभाविकः इत्येवमेषा आनन्दस्य मीमांसा । तत्र लौकिक आनन्दो बाह्याध्यात्मिकसाधनसंपत्तिनिमित्त उत्कृष्टः। स य एष निर्दिश्यते ब्रह्मानन्दानुगमार्थम्। अनेन हि प्रसिद्धेनाऽऽनन्देन व्यावृत्तविषयबुद्धिगम्य आनन्दोऽनुगन्तुं शक्यते । लौकिकोऽप्यानन्दो ब्रह्मानन्दस्यैव मात्रा अविद्यया तिरस्क्रियमाणे विज्ञाने उत्कृष्यमाणायां चाविद्यायां ब्रह्मादिभिः कर्मवशाद्यथाविज्ञानं विषयादिसाधनसंबन्धवशाच्च विभाव्यमानश्च लोकेऽनवस्थितो लौकिकः संपद्यते । स एवाविद्याकामकर्मापकर्षेण मनुष्यगन्धर्वाद्युत्तरोत्तरभूमिष्वकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते शतगुणोत्तरोत्कर्षेण यावद्धिरण्यगर्भस्य ब्रह्मण आनन्द इति । निरस्ते त्वविद्याकृते विषयविषयिविभागे विद्यया स्वाभाविकः परिपूर्ण एक आनन्दोऽद्वैतो भवतीत्येतमर्थं विभावयिष्यन्नाह — युवा प्रथमवयाः । साधुयुवेति साधुश्चासौ युवा चेति यूनो विशेषणम्। युवाऽप्यसाधुर्भवति, साधुरप्ययुवा, अतो विशेषणं युवा स्यात्साधुयुवेति । अध्यायकः अधीतवेदः । आशिष्ठः आशास्तृतमः, दृढिष्ठो दृढतमः, बलिष्ठो बलवत्तमः। एवमाध्यात्मिकसाधनसंपन्नः। तस्येयं पृथिवी उर्वी सर्वा वित्तस्य वित्तेन उपभोगसाधनेन दृष्टार्थेन अदृष्टार्थेन च कर्मसाधनेन संपन्ना पूर्णा, राजा पृथिवीपतिरित्यर्थः। तस्य च य आनन्दः स एको मानुषो मनुष्याणां प्रकृष्ट एक आनन्दः। ते ये शतं मानुषा आनन्दाः, स एको मनुष्यगन्धर्वाणामानन्दः । मानुषानन्दाच्छतगुणेनोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवति । मनुष्याः सन्तः कर्मविद्याविशेषाद्गन्धर्वत्वं प्राप्ता मनुष्यगन्धर्वाः । ते ह्यन्तर्धानादिशक्तिसंपन्नाः सूक्ष्मकार्यकरणाः । तस्मात्प्रतिघाताल्पत्वं तेषां द्वन्द्वप्रतिघातशक्तिसाधनसंपत्तिश्च । ततः अप्रतिहन्यमानस्य प्रतीकारवतो मनुष्यगन्धर्वस्य स्याच्चित्तप्रसादः । तत्प्रसादविशेषात्सुखविशेषाभिव्यक्तिः । एवं पूर्वस्याः पूर्वस्या भूमेरुत्तरस्यामुत्तरस्यां भूमौ प्रसादविशेषः शतगुणेनानन्दोत्कर्ष उपपद्यते । प्रथमं त्वकामहताग्रहणं मनुष्यविषयभोगकामानभिहतस्य श्रोत्रियस्य मनुष्यानन्दाच्छतगुणेनाऽऽनन्दोत्कर्षो मनुष्यगन्धर्वेण तुल्यो वक्तव्य इत्येवमर्थम्। साधुयुवाऽध्यायक इति श्रोत्रियत्वावृजिनत्वे गृह्येते । ते ह्यविशिष्टे सर्वत्र । अकामहतत्वं तु विषयोत्कर्षापकर्षतः सुखोत्कर्षापकर्षाय विशेष्यते । अतोऽकामहतग्रहणं तद्विशेषतः शतगुणसुखोत्कर्षोपलब्धेरकामहतत्वस्य परमानन्दप्राप्तिसाधनत्वविधानार्थम् । व्याख्यातमन्यत् । देवगन्धर्वा जातित एव । चिरलोकलोकानामिति पितृणां विशेषणं, चिरकालस्थायी लोको येषां पितृणां ते चिरलोकलोका इति । आजान इति देवलोकः, तस्मिन्नाजाने जाता आजानजा देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जाताः । कर्मदेवाः, ये वैदिकेन कर्मणाऽग्निहोत्रादिना केवलेन देवानपियन्ति । देवा इति त्रयस्त्रिंशद्धविर्भुजः । इन्द्रस्तेषां स्वामी । तस्याऽऽचार्यो बृहस्पतिः । प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिरूपः संसारमण्डलव्यापी, यत्रैते आनन्दभेदा एकतां गच्छन्ति । धर्मश्च तन्निमित्तो ज्ञानं च तद्विषयं अकामहतत्वं च निरतिशयं यत्र स एष हिरण्यगर्भो ब्रह्मा । तस्यैष आनन्दः श्रोत्रियेणावृजिनेनाकामहतेन च सर्वतः प्रत्यक्षमुपलभ्यते । तस्मादेतानि त्रीणि साधनानीत्यवगम्यते । तत्र श्रोत्रियत्वावृजिनत्वे नियते, अकामहतत्वं तूत्कृष्यते इति प्रकृष्टसाधनताऽवगम्यते । तस्याकामहतत्वप्रकर्षतश्चोपलभ्यमानः श्रोत्रियप्रत्यक्षो ब्रह्मण आनन्दो यस्य परमानन्दस्य मात्रा एकदेशः, 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इतिश्रुत्यन्तरात्, स एष आनन्दो यस्य मात्रा समुद्राम्भस इव विप्रुषः प्रविभक्ता यत्रैकतां गता, स एष परमानन्दः स्वाभाविकः, अद्वैतत्वादानन्दानन्दिनोश्चाविभागोऽत्र ।

तदेतन्मीमांसाफलमुपसंह्रियते—स यश्चायं पुरुष इति । यो गुहायां निहितः परमे व्योम्नि आकाशादिकार्यं सृष्ट्वा

अन्नमयान्तं, तदेवानुप्रविष्टः स य इति निर्दिश्यते । कोऽसौ, अयं पुरुषे । यश्चासावादित्ये, यः परमानन्दः श्रोत्रियप्रत्यक्षो निर्दिष्टः, यस्यैकदेशं ब्रह्मादीनि भूतानि सुखार्हाण्युपजीवन्ति, स यश्चासावादित्य इति निर्दिश्यते । स एको भिन्नप्रदेशस्थघटाकाशाकाशैकत्ववत् ।

अस्ति नास्तीत्यनुप्रश्नो व्याख्यातः । कार्यरसलाभप्राणनाभयप्रतिष्ठाभयदर्शनोपपत्तिभ्योऽस्त्येव तदाकाशादिकारणं ब्रह्मेत्यपाकृतोऽनुप्रश्न एकः, द्वावन्यावनुप्रश्नौ विद्वदविदुषोर्ब्रह्मप्राप्त्यप्राप्तिविषयौ, तत्र विद्वान्समश्नुते न समश्नुते इत्यनुप्रश्नोऽन्त्यः, तदपाकरणायोच्यते । मध्यमोऽनुप्रश्नोऽन्त्यापाकरणादेवापाकृत इति तदपाकरणाय न यत्यते । स यः कश्चित् एवं यथोक्तं ब्रह्म उत्सृज्योत्कर्षापकर्षमद्वैतं सत्यं ज्ञानमनन्तमस्मीत्येवं वेत्तीत्येवंवित्, एवंशब्दस्य प्रकृतपरामर्शार्थत्वात् । स किं, अस्माल्लोकात्प्रेत्य, दृष्टादृष्टेष्टविषयसमुदायो ह्ययं लोकः, तस्मादस्माल्लोकात्प्रेत्य प्रत्यावृत्य निरपेक्षो भूत्वा एतं यथाव्याख्यातमन्नमयमात्मानं उपसंक्रामति विषयजातमन्नमयात् पिण्डात्मनो व्यतिरिक्तं न पश्यति, सर्वं स्थूलभूतमन्नमयमात्मानं पश्यतीत्यर्थः । ततोऽभ्यन्तरमेतं प्राणमयं सर्वान्नमयात्मस्थमविभक्तम् । अथैतं मनोमयं विज्ञानमयमानन्दमयमात्मानमुपसंक्रामति । तमेतं निर्विकल्पमात्मानमेवं क्रमेणोपसंक्रम्य विदित्वा न बिभेति कुतश्चन, अभयं प्रतिष्ठां विन्दते, इत्येतस्मिन्नर्थेऽप्येष श्लोको भवति, सर्वस्यैवास्य प्रकरणस्याऽऽनन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशनायैष मन्त्रो भवति । शंकर.

( २ ) अग्नीन्द्रसूर्यप्रमुखाः सर्वेऽपि देवप्रवराः परमात्मशासनातिवृत्तौ किं भविष्यतीति भीत्या स्वकर्मसु जागरूका भवन्ति । अतश्च ब्रह्मव्यतिरिक्तं कृत्स्नमपि परं दुःखोदर्कत्वादनर्थरूपमेव । ततश्च तादृशपदकामनया मननविच्छेदस्यात्यन्तभयावहत्वात् ततोऽपि न भयं किंचिदस्तीत्यर्थः । एवं ब्रह्मवेदनस्य जगत्कारणत्वतदौपयिकसार्वज्ञ्यादिगुणविशिष्टविषयकत्वमविच्छिन्नत्वं च विधाय प्राप्यस्यानन्दमयस्य ब्रह्मणः आनन्दमयशब्दप्रवृत्तिनिमित्तमानन्दप्राचुर्यं दर्शयति — सैषाऽऽनन्दस्येति । वक्ष्यमाणानन्दविषयकविचारो भवतीत्यर्थः । अत्र व्यासार्यैः — साधुयुवाध्यायकः । साधु यथाविधि सम्यक्संप्रदायसिद्धतया स्वरवर्णविभ्रंशरहितं वा । युवशब्देन प्रत्यग्रत्वं विवक्षितम् । अविस्मरणं नित्यं नवं यथा भवति तथाऽध्ययनवानित्यर्थः । यद्वा, समवयस्कानां सर्वेषामध्यापकः, तदधिकज्ञान इत्यर्थः । आशिष्ठ आशुतरक्रियः । यद्वा, अशनक्षमः, अरोग इत्यर्थः । यद्वा, आशीर्वादविषयभूतसर्वानुरञ्जक इत्यर्थः । सर्वान्देवान् नमस्यन्तीतिवत् । दृढिष्ठ इति शारीरबलस्योक्तत्वात् । यद्वा दृढिष्ठो दृढतरः, न त्वव्यवस्थितस्वभाव इत्यर्थः । बलिष्ठः शारीरमानससर्वविधबलवान् । वित्तस्य पूर्णा वित्तेन पूर्णा । एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा ' स एको मानुष आनन्दः ' इतिश्रुत्या तस्यैवानन्दत्वमुक्तम् । न च ज्ञानभिन्नस्य गुणविभूत्यादेः कथमानन्दत्वमिति शङ्क्यम् । अनुकूलत्वं ह्यानन्दत्वं, तच्च स्वत एवेष्टत्वं, तच्च गुणविभूत्योरपि संभवति, तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुरूपत्वमेवेत्यन्वयव्यतिरेकसिद्धम् । अतः श्रुतिस्वारस्याद्गुणविभूत्यादेरानन्दत्वम् । श्रोत्रियो ब्रह्मनिष्ठोऽकामहतः समस्तसांसारिकभोगानुपहतः अतो मुक्त इत्युच्यते, इत्युक्तम् । एवं च युवत्वदृढगात्रत्वसौन्दर्यज्ञानबलैश्वर्यादयः संभूय यत्र भवन्ति स एको मानुष आनन्दः । अकामहतश्रोत्रियस्य मुक्तस्यापि स आनन्दोऽस्ति, मुक्तस्य सर्वानन्दानुभवशालितया तत्र मानुषानन्दस्यान्तर्गतत्वादिति भावः ।

प्रजापतिश्चतुर्मुखः, न तु दक्षादयः, एकवचनश्रवणात् । अत्र ब्रह्मशब्दः ' ब्रह्मविदाप्नोति परम् ' इतिप्रकृतब्रह्मपरः । न च ब्रह्मानन्दस्य ते ये शतमिति परिच्छिन्नत्वं कथमिति शङ्क्यम् । क्षणार्धेन बहूनि योजनानि गच्छति रवौ इषुवत् गच्छति सवितेतीषुसाम्यप्रतिपादकवचनस्य हि मान्द्यनिवृत्तिपरत्ववत् ते ये शतमिति वाक्यस्यापि चतुर्मुखानन्दाधिक्यमात्रपरत्वेन शतगुणितचतुर्मुखानन्दात् न्यूनाधिकपरत्वाभावात् । एवंभूतानन्दमयः ' यो वेद निहितं गुहायाम् ' इति हृदयगुहानिहितत्वेनोपास्यमानः कीदृशविग्रहविशेषविशिष्टः को वा देवताविशेष इत्या-

काङ्क्षायामाह—स यश्चायमित्यादि। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम' (छाउ. १।६।६,७) इति आदित्यमण्डलान्तर्वर्तिकमनीयविग्रहयुक्तो यः पुण्डरीकाक्षः स एव हृदयगुहावर्तिविज्ञानमयादन्तरः। ततश्च पुण्डरीकाक्षत्वादिविग्रहयुतो नारायण एवेत्यर्थः। ततश्च तादृशविग्रहविशिष्टत्वेन हृदयगुहावर्तिनो भगवतो ध्यानं कर्तव्यमिति फलितार्थः। अत्र सच्च त्यच्चाभवदिति चिदचिच्छरीरकत्वेनानुसंधानमुक्तं, सत्यं ज्ञानमिति स्वरूपेणानुसंधानमुक्तम्।

एवं प्राप्यस्य प्राप्यत्वोपयुक्तमुताविद्वानमुं लोकमित्यादिनोपक्षिप्तानां प्रश्नानामुत्तरमाह—स य एवंविदिति। अस्माल्लोकात्प्रेत्य इत्यनेन सर्वेषां ब्रह्मविदामर्चिरादिमार्ग उक्तो भवति। आनन्दमयमात्मानमुपसंक्रामतीति मुक्तिदशायां जीवब्रह्मणोरुपास्योपासकयोर्भोक्तृभोग्यभावप्रतिपादनात् मुक्तौ ब्रह्मैक्यपक्षो व्युदस्तो भवति। एतमन्नमयमित्यादिपञ्चस्वपि पर्यायेष्वेतच्छब्दः परमात्मपरः। अन्नमयप्राणमयमनोमयविज्ञानमयशब्दास्तच्छरीरकपरमात्मपराः। अत्र व्यासार्यैः, सर्वोऽपि विद्वानस्माल्लोकात्प्रेत्य अन्नमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन्ननुभवतीति प्रश्नस्योत्तरमुक्तं भवतीत्युक्तम्। 'अभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' इत्युक्तार्थे साक्षित्वेन श्लोकं पठति। * रंग.

(३) 'स एको ब्रह्मण आनन्दः' 'आनन्दं ब्रह्मणो विद्वान्' (तैउ. २।४) इत्यादिव्यतिरेकनिर्देशाच्च नाऽऽनन्दमात्रं ब्रह्म, अपि त्वानन्दि। ज्ञातृत्वमेव ह्यानन्दित्वम्। × रामानुज. १।१।१

(४) 'तस्माद्वाय्वादयो देवा विद्वांसोऽपि विशेषतः। भीताः स्वकर्म कुर्वन्ति विष्णोः प्रीत्यर्थमञ्जसा। अमन्वानस्य नुर्विष्णुः कुर्याच्चित्यं महद्भयम्। तमआख्यमनुत्थानं विदुषां नियमेन तु। स्यादेव मोक्षस्तत्रापि ह्यानन्दस्य विचित्रता। यस्तु साधुगुणैर्युक्तस्तस्यैवाप्यखिला मही। त्रेतायुगे चक्रवर्ती यदा मुक्तस्तु संस्तुतः। अधीतिफलपूर्णत्वादाध्यायक इतीरितः। स एव विष्णुना युक्तो गच्छतीति युवा स्मृतः। एकानन्दस्वरूपोऽसौ मानुषो मुक्त इष्यते। तस्माच्छतगुणानन्दा गन्धर्वा मानुषात्मकाः। मुक्त्या श्रुतिफलं प्राप्तास्ततः कामाहतास्तथा। तेभ्यः शतगुणानन्दा देवप्रेष्यास्तु मुख्यतः। ये ते हि देवगन्धर्वा मुक्तेभ्यस्तेभ्य एव च। शताधिका हि पितरस्तेभ्य आजानदेवताः। अनाख्याता देवतास्तु जाता देवकुले च याः। आजानदेवतास्ता हि ताभ्योऽन्याः कर्मदेवताः। बल्याद्या अन्तराप्राप्तदेवताः कर्मदेवताः। ताभ्यश्च तात्त्विका देवाः सूर्याद्यादौ देवतां गताः। तेभ्यो दक्षश्चेन्द्रनामा स हीन्दुं रारयत्पुरा। तस्माद्बृहस्पतिर्नाम महेन्द्रत्वात्पुरंदरः। तस्मात्प्रजापतिर्मुक्तो रुद्रः प्रजननेषिता। तस्माद्ब्रह्मा शतगुणो मुक्त इत्येष निर्णयः। यथाऽऽनन्दे तथा ज्ञाने विष्णुभक्तौ बलाधिके। सर्वैर्गुणैः शतगुणाः क्रमेणोक्तेन तेऽखिलाः। अथवा सहस्रगुणिता अनन्तगुणितास्तथा। परिमाणे शतगुणेऽप्यानन्दस्फुटतावशात्। यथा दीपाच्छतगुणाऽप्यग्निज्वाला न दीपवत्। स्फुटीभवेद्यथैवाग्निर्बहुलोऽपि न सूर्यवत्। यथैव सूर्याद्द्विगुणश्चन्द्रो नैव स्फुटीभवेत्। उत्तरेषामुत्तरेषां गुणा एवमतिस्फुटाः। प्रतिबिम्बा यतः पूर्वे ब्रह्मान्तानां नरादयः। अतोऽस्पष्टस्वरूपास्ते स्फुटरूपास्तथोत्तराः। यत्प्रसादात्स्वरूपाप्तिर्ब्रह्मादीनां समन्ततः। स विष्णुः सर्वजीवेषु नृषु देवेषु च स्थितः। एक एव महायोगी निर्विशेषोऽखिलैर्गुणैः। सर्वोत्तमः स पूर्णश्च तमेवं वेद यः पुमान्। जीवांश्च तारतम्यस्थान्स गच्छेत्पञ्चरूपिणम्। विष्णुं न पुण्यपापे च तस्यानिष्टे कदाचन। प्रियाप्रियेषु तज्ज्ञानी ह्यास्तॄणोति यतो नृषु॥'

मध्व.

(५) 'स एको मानुष आनन्दः' इत्यारभ्य 'स एको ब्रह्मण आनन्दः' इति ब्रह्मपर्यन्तं उपाधितिरोधानादानन्दाविर्भावस्तारतम्येन श्रूयते। निरुपाधिकतया ब्रह्मणि मुक्ते च परिपूर्णो वर्तते स आनन्दः, 'स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य' इति श्रवणात्। ब्रह्मार्पणबुद्ध्या निष्कामानुष्ठिताग्निहोत्रादि-

* शेषं शंकरवत्।

× भास्करविज्ञानयोरानन्दित्वं रामानुजवत्।

कर्मा परविद्वान् अकामहतः श्रोत्रियः । तस्य जीवत एव मुक्तस्य ब्रह्मणश्च तुल्य एव आनन्दः । तस्य योगातिशयेन तत्तद्भूमिमधिरूढस्य पूर्वत्र पूर्वत्र भूमावभ्यासः स्वल्प इति तदनुसारेण तत्तद्भूमौ तदीयानन्दाविर्भावस्य मानुषाद्यानन्दसाम्यकृतिरिति न विरोधः ।

श्रीकंठ. ४।४।१४

( ६ ) एवं चैतन्याध्यस्तेश्वरत्वविशिष्टेश्वरात् रज्जुसर्पादिवत् भयमपि न स्यात् । श्रूयते चापरोक्षविद्यावतामपि सूर्यादीनां भयं ' भीषाऽस्माद्वातः पवते ' इत्यादिना ।

श्रीकर. १।१।१

( ७ ) अत्रेदं प्रतिभाति । ' अस्माल्लोकात्प्रेत्य ' इतिवाक्ये इदंशब्दप्रयोगात् प्राकृतगुणमयं प्रपञ्चमतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलोपयोगिनं प्राप्नोतीत्यवगम्यते ।

१।१।११

ननु संसारनिवृत्त्यानन्दाविर्भावयोरविशेषादक्षरे ब्रह्मणि लये पुरुषोत्तमे प्रवेशात् न्यूनतोक्तौ को हेतुरित्याकाङ्क्षायामाह—इयदामननात् । इयदिति परिमाणवचनम् । तस्य श्रुतौ कथनादित्यर्थः । अत्रेदं ज्ञेयम्—तैत्तिरीयोपनिषत्सु ' सैषाऽऽनन्दस्य मीमांसा भवति ' इत्युपक्रम्य मानुषमानन्दमेकं गणयित्वा तस्मादुत्तरोत्तरं शतगुणमानन्दं गन्धर्वानारभ्य प्रजापतिपर्यन्तस्योक्त्वा उच्यते ' ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः ' इति । एवं सति इयतः एतावदिति अक्षरानन्दस्य सावधिकत्वेन श्रुतौ कथनादानन्दमयत्वेन निरवध्यानन्दात्मकत्वस्य पुरुषोत्तमे कथनात् तथोक्तिरिति ।

वल्लभ. ३।३।३४

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳ ह वाव न तपति । किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳ स्पृणुते । य एवं वेद । इत्युपनिषत् ॥**

( १ ) यतः यस्मान्निर्विकल्पाद्यथोक्तलक्षणादद्वयानन्दादात्मनः वाचः अभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि ब्रह्मणि प्रयोक्तृभिः प्रकाशनाय प्रयुज्यमानानि अप्राप्य अप्रकाश्यैव निवर्तन्ते स्वसामर्थ्याद्धीयन्ते । मन इति प्रत्ययो विज्ञानम् । तच्च यत्राभिधानं प्रवृत्तमतीन्द्रियेऽप्यर्थे तदर्थे च प्रवर्तते प्रकाशनाय । यत्र च विज्ञानं तत्र वाचः प्रवृत्तिः । तस्मात्सहैव वाङ्मनसयोरभिधानप्रत्यययोः प्रवृत्तिः सर्वत्र । तस्माद्ब्रह्मप्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचो यस्मादप्रत्ययविषयादनभिधेयाददृश्यादिविशेषणात्सहैव मनसा विज्ञानेन सर्वप्रकाशनसमर्थेन निवर्तन्ते, तं ब्रह्मण आनन्दं श्रोत्रियस्यावृजिनस्याकामहतस्य सर्वैषणाविनिर्मुक्तस्याऽऽत्मभूतं विषयविषयिसंबन्धविनिर्मुक्तं स्वाभाविकं नित्यमविभक्तं परमानन्दं ब्रह्मणो विद्वान्यथोक्तेन विधिना, न बिभेति कुतश्चन, निमित्ताभावात् । न हि तस्माद्विदुषोऽन्यद्वस्त्वन्तरमस्ति भिन्नं, यतो बिभेति । अविद्यया यदा ' उदरमन्तरं कुरुते । अथ तस्य भयं भवति ' इति ह्युक्तम् । विदुषश्चाविद्याकार्यस्य तैमिरिकदृष्टद्वितीयचन्द्रवन्नाशाद्भयनिमित्तस्य, न बिभेति कुतश्चनेति युज्यते । मनोमये चोदाहृतो मन्त्रः, मनसो ब्रह्मविज्ञानसाधनत्वात् । तत्र ब्रह्मत्वमध्यारोप्य तत्स्तुत्यर्थं न बिभेति कदाचनेति भयमात्रं प्रतिषिद्धं, इहाद्वैतविषये न बिभेति कुतश्चनेति भयनिमित्तमेव प्रतिषिध्यते । नन्वस्ति भयनिमित्तं साध्यकरणं पापक्रिया च ।

---

(१) तैउ. २।९; शांकर. १।१।४ ( पृ. ६० ), १।१।१९, ३।२।१७, २२, ४।३।१४; भास्कर. १।१।१२, १९, ३।४।५०; रामानुज. १।१।१९ ( पृ. ६१, ६२, ६३ ), १।१।१३, १७, २०, २।३।२९, ३।२।१७, ३।४।८; मध्व. ह्येवैष एते ( ह्येवैष ते ); अमध्व. १।१।५, १।३।४१, ३।२।२८, ३२; श्रीकर. १।१।१ ( पृ. ४, ६ ), १।१।३ ( पृ. ३९ ), १।१।७, १।१।१३ ( पृ. ६२ ), १।१।२२, २।१।२६, २।३।२७, ३।२।१७, २३, ३।३।१९, ४१, ३।४।८, ४।२।१४; वल्लभ. १।१।४ ( पृ. १३१ ), १।१।११ ( पृ. १८९ ), १।२।१, १।४।१५, ३।२।१५, २२, २३, ३।३।४२, ४३, ३।४।२२, ४।२।९; विज्ञान. १।१।२ ( पृ. ६३ ), १।१।३ ( पृ. ७०, ७२ ), १।१।१२ ( पृ. १४६ ), ३।२।२३; बलदेव. १।१।५, १२, ३।२।२८, ३२, ३।३।१.

नैवम् । कथमित्युच्यते — एतं यथोक्तमेवंविदम् । ह वावेत्यवधारणार्थौ । न तपति नोद्वेजयति न संतापयति । कथं पुनः साध्वकरणं पापक्रिया च न तपति इत्युच्यते — किं कस्मात् साधु शोभनं कर्म नाकरवं न कृतवानस्मीति पश्चात्संतापो भवत्यासन्ने मरणकाले । तथा किं कस्मात् पापं प्रतिषिद्धं कर्म अकरवं कृतवानस्मीति च नरकपतनादिदुःखभयात्तापो भवति । ते एते साध्वकरणपापक्रिये एवमेनं न तपतः यथा अविद्वांसं तपतः । कस्मात्पुनर्विद्वांसं न तपत इत्युच्यते—स य एवं विद्वान् एते साध्वसाधुनी तापहेतू इत्यात्मानं स्पृणुते प्रीणयति बलयति वा, परमात्मभावेनोभे पश्यतीत्यर्थः । उभे पुण्यपापे हि यस्मात् एव एष विद्वान् एते आत्मानं आत्मरूपेणैव पुण्यपापे स्वेन विशेषरूपेण शून्ये कृत्वा आत्मानं स्पृणुते एव । कः, य एवं वेद यथोक्तमद्वैतमानन्दं ब्रह्म वेद । तस्याऽऽत्मभावेन दृष्टे पुण्यपापे निर्वीर्ये अतापके जन्मान्तरारम्भके न भवत इतीयमेवं यथोक्ता अस्यां वल्ल्यां ब्रह्मविद्या उपनिषत् सर्वाभ्यो विद्याभ्यः परमरहस्यं दर्शितमित्यर्थः, परं श्रेयोऽस्यां निषण्णमिति । शंकर.

( २ ) ‘ यतो वाचो निवर्तन्ते ’ इति च रागादिदोषदूषितयोः वाङ्मनसयोरगोचरं ब्रह्मेत्यर्थः । शुद्धयोस्तु पुनर्गोचर एव । भास्कर. १।१।१९

( ३ ) तादृशानन्दगुणकब्रह्मोपासनेन सर्वक्लेशभयास्त्यन्तिकनिवृत्तिर्भवतीत्यर्थः ।

एतादृशं ब्रह्मविद्याप्रयुक्तमाहात्म्यमपि ध्येयमित्याह — स य इति । एते एताभ्यां पुण्यपापाभ्यामात्मानं स्पृणुते रक्षतीत्यर्थः । पुण्यपापफलानुभवो नास्तीत्युक्तं भवति । उभे ह्येवैष इति । पुनर्वचनं पुण्यपापविधूननध्यानसातत्यतात्पर्यद्योतनाय अनुवाकसमाप्तिद्योतनाय ( च ) । इत्युपनिषदिति । इदं परमरहस्यरूपोपदेशयोग्यायैव वक्तव्यं इति भावः ।

*रंग.

( ४ ) ‘ यतो वाचो निवर्तन्ते ’ इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्, अपि तु वाङ्मनसयोस्तत्र अप्रमाणतां वदेत् । तथा च सति तस्य तुच्छत्वमेवापद्यते ।

अतः शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयिततां वक्तुमुपक्रम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः ‘ यतो वाचो निवर्तन्ते ’ इत्युच्यते ।

रामानुज. १।१।१७

( ५ ) ‘ अगोचरं वाङ्मनसोरानन्त्यात्पुरुषोत्तमम् । ज्ञात्वा मुक्तस्य भीर्नैव कुतश्चन भविष्यति ॥ ’ इत्यादि यजुःसंहितायाम् ।

न च ‘ सह ब्रह्मणा ’ ( तैउ. २।१ ) इत्यादेरन्योऽर्थः कल्प्यः, अप्रामाणिकत्वात् अनाश्वासाच्च । न च ‘ ओषधीभ्योऽन्नम् ’ ‘ अन्नरसमयः ’ इत्यत्रोभयार्थत्वेन विरोधः, ‘ अन्नस्यान्नम् ’ ‘ मध्यमः प्राणः ’ ‘ प्राणः स्थूणा ’ इत्यादिवद्विशेषितत्वादुपपत्तेः । न चान्नमयादीनामब्रह्मत्वे किंचिन्मानम् । ‘ येऽन्नं ब्रह्मोपासते ’ ‘ ये प्राणं ब्रह्मोपासते ’ ‘ आनन्दं ब्रह्मणो विद्वान् ’ ‘ विज्ञानं ब्रह्म चेद्वेद ’ ‘ अस्ति ब्रह्मेति चेद्वेद ’ ‘ अधीहि भगवो ब्रह्मेति ’ ‘ तस्मा एतत्प्रोवाच ’ ‘ अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम् ’ इत्यादिना ब्रह्मशब्देनोक्तत्वाच्च । न च लौकिकान्नस्यात्तृत्वमस्ति । ‘ येऽन्यथा विदुस्तेऽन्यराजानस्ते क्षय्यलोका भवन्ति ’ इति श्रुतेः, अविमानोपासनादोषावगतेश्च । ‘ न च रमन्त्यहो असदुपासनयाऽऽत्महनः ’ इति च भागवते । ‘ नाविद्यमानं ब्रुवते वेदा ध्यातुं न वैदिकाः । अविद्यमानं ध्यायन्तो यान्ति सर्वेऽधरं तमः । तस्मात्सत्यार्थतां ब्रूयाद्वेदानामपि सर्वशः । य एवं वेद स ज्ञानी ज्ञानवान्नान्यथा भवेत् ॥ ’ इति वेदार्थविवेके । ‘ स यश्चायं पुरुषे । यश्चासावादित्ये ’ इत्यधिकरणत्वेन भेद एव जीवस्य परमादुक्तः । ‘ एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ’ ‘ एतमानन्दमयमात्मानमुपसंक्रामति ’ ‘ सोऽश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चिता ’ ‘ एतमानन्दमयमात्मानमुपसंक्रम्य ’ इमांल्लोकान्कामान्नी कामरूप्यनुसंचरन् ’ इत्यादिना, मुक्तस्यापि भेद एवाभ्यस्यते । ‘ अथ सोऽभयं गतो

---

* शेषं शंकरवत् ।

भवति ' इति मुक्तिप्रस्तावात् ' सैषाऽऽनन्दस्य मीमांसा ' इति मुक्तानन्दो मीमांस्यते, ' श्रोत्रियस्य चाकामहतस्य ' इति सर्वत्र विशेषणाच्च । न ह्यमुक्तस्याकामहतत्वं मुख्यं भवति । न च मुख्या श्रोत्रियता । ' यस्य श्रुतिफलं पूर्णं स श्रोत्रिय उदाहृतः । स हि मुक्तोऽकामहतः स हि कामैर्न हन्यते । यस्य कामास्तु सत्याः स्युः स हि कामैर्न हन्यते । न ह्यकामः क्वचित्कश्चिद्दृश्यते श्रूयतेऽपि च ॥ ' इति ब्रह्माण्डे । न च देवपदाकामस्य सकाशादिन्द्रपदाकामस्य शतगुणानन्दो दृश्यते इति च प्राजापत्यादिकामे । न च मानुषाः प्रायस्तदिच्छवः । चक्रवर्तिनस्तु युवशब्देनैव मुक्तत्वमुक्तम् । तस्मात् मुक्तविषयेयं मीमांसा । ' यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ' इत्यत्राप्यन्तःकरणस्थानामेव कामानां विमोक्ष उक्तः, न तु स्वरूपभूतानाम् । ' यं यमन्तमभिकामो भवति सोऽस्य संकल्पादेव भवति ' इति मुक्तानामपि स्वरूपभूतः कामः प्रतीयते । ' कामः संकल्प आनन्दो मुक्तानां तारतम्यतः । स्वरूपभूतास्ते सर्वे निर्दोषा गुणरूपकाः ॥ ' इति पाद्मे । ' संकल्पादेव च तच्छ्रुतेः ' इति सूत्रम् । ' भेदव्यपदेशात् ' इति जीवेशयोर्भेदश्चोक्तो भगवता । न च भेददर्शनमशुकरं, स्वरूपत्वाद्भेदस्य । सर्वव्यावृत्तं हि सर्वस्य स्वरूपं सर्वैरनुभूयते । अन्यथा अहं वा दृष्टोऽन्यो वा दृष्ट इत्यपि संशयः स्यात् । न च पश्चाद्भेदो ज्ञायते इत्यत्र किंचिन्मानम् । न हि दृष्टवस्तुनः पुरुषस्य तस्य वस्त्वन्तराद्भेदे संशयः क्वचिद्दृष्टः । न च सर्वतो व्यावृत्त्यनुभवे सर्वज्ञता अपेक्षितेति दोषः, सामान्यतः सर्वस्य सर्वैरपि ज्ञातत्वात् । यावत्तु सर्वतो भेदो विशेषतो न ज्ञायते तावत्स्वरूपमेव विशेषतो न ज्ञातम् । न हि ज्ञाताद्वस्तुनोऽव्यावृत्तिः केनचिच्छङ्क्यते । यदा तु संशीयते तदाऽपि कुतश्चिद्व्यावृत्तमेव ज्ञायते । न हि सर्वमिदं भवति वा न वेति कस्यचित्संशयः । अतो व्यावृत्तिरेव स्वरूपम् । अस्य भेद इति विशेष्यत्वं अस्य स्वरूपमितिवत् । यथा अस्तीति वर्तमानकालो वस्तुना सहैवानुभूयते, एवमन्यस्माद्व्यावृत्तमित्यत्र अन्यदपि सामान्यतः सहैवानुभूयते । न हि अस्तीति वर्तमानकालापेक्षया अनुभूयते इत्येतावता विद्यमानता नाम वस्तुनोऽन्या । सदित्यपि शत्रन्तत्वात्कालसंबन्ध्येवानुभूयते तिष्ठन् इतिवत् । एवमन्यस्माद्व्यावृत्तमिति अन्येन सह प्रतीयमानमपि न स्वरूपान्यत् । अस्माद्व्यावृत्तिरन्यस्य स्वरूपं, अन्यस्माद्व्यावृत्तिरस्य स्वरूपं, इति नैकस्वरूपता । ज्ञानानन्दादिवत्स्वरूपत्वेऽपि व्यवहारविशेषो भवति । न च स्वरूपत्वेन भेदस्याभावो भवति ज्ञानानन्दादिवदेव । अन्यप्रतियोगिकत्वाद्भेदस्य न स्वस्मादपि भवति । ' भेदस्तु सर्ववस्तूनां स्वरूपं नैजमव्ययम् । नष्टानामपि वस्तूनां भेदो नैव विनश्यति । अवस्तुनोऽपि रूपं स्वं भेद एव न चान्यथा । विशेषरूपनाशेन भेदमात्रावसायिता । नाश इत्युच्यते सद्भिर्भेदो न हि विनश्यति । इत्याहुः केचिदज्ञानात्तत्राऽऽहुः सूक्ष्मदर्शिनः । सत्यं भेदस्तु वस्तूनां स्वरूपं नात्र संशयः । तस्माद्वस्तुविनाशे तु तद्भेदो नास्ति कुत्रचित् । अविनष्टस्य तस्मात्तु भेदोऽस्त्येव स्वरूपतः । एवं भावादभावस्य न भेदो भावरूपवान् । अभावाद्भावरूपस्य स्वरूपं भाव इष्यते । नष्टभेदोऽप्यभावात्मा विद्यते च विनाशतः । स्वरूपत्वात्तु भेदस्य भेदे शङ्का न कस्यचित् । सर्वं सामान्यतो यस्मात्सर्वैरप्यनुभूयते । तस्माद्व्यावृत्तता सर्वैः सर्वस्मादनुभूयते । प्रतियोगिता स्वभावस्याप्यस्त्यभावतया स्फुटम् । न ह्यभावोऽप्यधर्मा स्यान्न तु स्याद्भावधर्मयुक् । अभावस्यास्तिता नाम स्यादेवाभावरूपिणी । अभावताऽपि सैव स्यान्न तु स्याद्भावरूपिणी । अतः स सर्वव्यावृत्तस्वरूपो भगवान् परः । येन ज्ञातः स तु ज्ञानी मुच्यते नात्र संशयः ॥ ' इति तत्त्वनिर्णये ।

मध्व.

(६) ' आनन्दं ब्रह्मणो विद्वान् ' ' अथैष एव परम आनन्दः ' इत्युभयव्यपदेशादहिकुण्डलवदेव युज्यते । यथाऽहिः कुण्डली कुण्डलं च ।

ब्रमध्व. ३।२।२८

(७) ' यतो वाचो निवर्तन्ते ' इत्यादिश्रुतीनां गुरुकटाक्षरहितप्राकृतजीवपरत्वम् । नो चेत् ' आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति ' इत्युत्तरवाक्यविरोधः । तन्माहात्म्यज्ञानपरत्वं वा ।

श्रीकृ. १।१।६

(८) 'न बिभेति कुतश्चन' इतिवाक्येन लोकात् तदभावमुक्त्वा 'एतꣳ ह वाव न तपति। किमहं साधु नाकरवम्। किमहं पापमकरवम्' इतिवाक्यैर्वेदाद्भयाभाव उच्यते।

१।१।११

ननु सर्वव्यवहारातीते शास्त्रवैफल्यं, 'मनसैवैतदाप्तव्यं' इति विरोधश्च न परिहृतः, 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'यतो वाचो निवर्तन्ते' इति च, इत्यत आह— प्रकाशवत्। यथा सौरप्रकाशो व्यवहार्योऽव्यवहार्यश्च, न हि स्वतः संपादयितुं शक्यते स्थापयितुं वा, आगते तु सूर्ये मेघाद्यभावे च सांनिध्यमात्रेण व्यवहारः कर्तुं शक्यते, तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुं, ईश्वरसंनिधाने तु शक्यते इति द्वयमाह श्रुतिः। कुत एतदवगम्यते तत्राह— अवैयर्थ्यात्। अन्यथा शास्त्रं व्यर्थं स्यात्।

वल्लभ. ३।२।१५

(९) ननु 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' इत्यादिश्रुतिभिर्ब्रह्मणः शब्दाद्यगोचरत्ववचनात् कथं ब्रह्मणः शास्त्रादिप्रमाणकत्वमुच्यते इति। उच्यते। वागादीनां लौकिकमनसश्च ब्रह्माशेषगोचरत्वं प्रतिषेधति तथाविधं शास्त्रजातं, न तु शब्दादीनां सामान्यगोचरत्वमपि, नापि योगजधर्मसंस्कृतमनोजन्यसाक्षात्कारगोचरत्वमपि, 'स यथा हि हननं प्रमुच्य प्रब्रूयादेतां दिशं गान्धारा एतां दिशं व्रजेति स ग्रामात् ग्रामान्तरं व्रजन् पण्डितो मेधावी गान्धारानेवोपसंपद्येतैवमेवेहाऽऽचार्यवान्पुरुषो वेद' इत्यादिश्रुतौ शब्दादिमात्रेण सामान्यतो ज्ञाने जाते योगेन भूमिकाक्रमात् स्वयं मनसा ब्रह्म अशेषविशेषतः साक्षात् क्रियते इत्यवगमात्।

विज्ञान. १।१।३

इति ब्रह्मवल्ल्यध्यायः॥

---

## भृगुवल्ल्यध्यायः

ब्रह्मलक्षणं भूतानां जन्मस्थितिलयकारणत्वं, अन्नप्राणमनोविज्ञानानन्दरूपता ब्रह्मणः, तपसः ब्रह्मज्ञानसाधनता

**भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥**

(१) सत्यं ज्ञानमनन्तं ब्रह्म आकाशादिकार्यमन्नमयान्तं सृष्ट्वा तदेवानुप्रविष्टं विशेषवदिवोपलभ्यमानं यस्मात्, तस्मात्सर्वकार्यविलक्षणमदृश्यादिधर्मकमेवाऽऽनन्दं, तदेवाहं, इति विजानीयात्, अनुप्रवेशस्य तदर्थत्वात्। तस्यैवं विजानतः शुभाशुभे कर्मणी जन्मान्तरारम्भके न भवतः इत्येवमानन्दवल्ल्यां विवक्षितोऽर्थः। परिसमाप्ता च ब्रह्मविद्या। अतः परं ब्रह्मविद्यासाधनं

---

(१) **तैउ.** ३।१; **ब्रशंकर.** १।१।१ (पृ. २६), १।१।२ (पृ. ३२, ४०), १।३।२६, १।४।२३, २।३।१४, ४।३।१४; **भास्कर.** १।१।२, १।३।२६; **रामानुज.** १।१।१ (पृ. २०, ७१), १।१।२ (पृ. १२२, १२५), १।१।३ (पृ. १३६), १।१।४ (पृ. १४६, १७०), १।१।२१, २३, १।२।१, २।३।१८, ३।३।१३, २५, ४।४।१७; **निंबार्क.** ४।४।१७, **ब्रमध्व.** १।१।२, ४।१।२; **श्रीकंठ.** १।१।२ (पृ. ११६), १।४।२३, ४।४।१७; **श्रीकर.** १।१।१ (पृ. ६, २६), १।१।२ (पृ. २८, २९, ३०, ३१), १।१।४ (पृ. ५२), १।१।१२ (पृ. ६१), १।१।२३, १।२।५, ९, १०, १।३।२६, १।४।२०, २२, २३, २।१।३, ६, ७, ८, ९, ११, २१, ३२, २।२।४२ (पृ. २४३, २४६), २।३।१६, ४२, ५०, २।४।१८, ३।१।२४, ३।२।७, ३।३।१३, ५१, ४।१।४, ४।३।७, ४।४।७, १७, २२; **वल्लभ.** १।१।२ (पृ. ५३, ६१), १।१।३ (पृ. ८२), १।१।५, ३।४।२२; **विज्ञान.** १।१।१ (पृ. ४, ५, २७), १।१।३ (पृ. ६९, ९२), १।३।४२; **बलदेव.** १।१।२, १।४।२३, ३।४।२३, ४।१।२, ४।४।१७.

तपो वक्तव्यं, अन्नादिविषयाणि चोपासनान्यनुक्तानि, इत्यत इदमारभ्यते।

आख्यायिका विद्यास्तुतये प्रियाय पुत्राय पित्रोक्तेति। भृगुर्वै वारुणिः। वैशब्दः प्रसिद्धानुस्मारकः। भृगुरित्येवंनामा प्रसिद्धोऽनुस्मर्यते। वारुणिः, वरुणस्यापत्यं वारुणिः वरुणं पितरं ब्रह्म विजिज्ञासुः उपससार उपगतवान् 'अधीहि भगवो ब्रह्म' इति अनेन मन्त्रेण। स च पिता विधिवदुपसन्नाय तस्मै पुत्राय एतद्वचनं प्रोवाच — अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। अन्नं शरीरं, तदभ्यन्तरं च प्राणमत्तारं, उपलब्धिसाधनानि चक्षुः श्रोत्रं मनो वाचमित्येतानि ब्रह्मोपलब्धौ द्वाराण्युक्तवान्। उक्त्वा च द्वारभूतान्येतान्यन्नादीनि तं भृगुं होवाच ब्रह्मणो लक्षणम्। किं तत्। यतः यस्मात् वै इमानि ब्रह्मादीनि स्तम्बपर्यन्तानि भूतानि जायन्ते, येन जातानि जीवन्ति प्राणान् धारयन्ति वर्धन्ते, विनाशकाले च यत्प्रयन्ति यद्ब्रह्म प्रतिगच्छन्ति अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते। उत्पत्तिस्थितिलयकालेषु यदात्मतां न जहति भूतानि, तदेतद्ब्रह्मणो लक्षणम्। तत् ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छस्व। यदेवं लक्षणं ब्रह्म, तदन्नादिद्वारेण प्रतिपद्यस्वेत्यर्थः। श्रुत्यन्तरं च — 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुस्ते विचिक्युर्ब्रह्म पुराणमग्र्यम्' इति ब्रह्मोपलब्धौ द्वाराण्येतानीति दर्शयति।

स भृगुर्ब्रह्मोपलब्धिद्वाराणि ब्रह्मलक्षणं च श्रुत्वा पितुः, तपो ब्रह्मोपलब्धिसाधनत्वेन अतप्यत तप्तवान्। कुतः पुनरनुपदिष्टस्यैव तपसः साधनत्वप्रतिपत्तिर्भृगोः। सावशेषोक्तेः। अन्नादिब्रह्मणः प्रतिपत्तौ द्वारं लक्षणं च यतो वा इमानीत्याद्युक्तवान्। सावशेषं हि तत्, साक्षाद्ब्रह्मणोऽनिर्देशात्। अन्यथा हि स्वरूपेणैव ब्रह्म निर्देष्टव्यं जिज्ञासवे पुत्राय इदमित्थंरूपं ब्रह्मेति। न चैवं निरदिशत्। किं तर्हि। सावशेषमेवोक्तवान्। अतोऽवगम्यते नूनं साधनान्तरमप्यपेक्षते पिता ब्रह्मविज्ञानं प्रतीति। तपोविशेषप्रतिपत्तिस्तु सर्वसाधकतमत्वात्। सर्वेषां हि नियतसाध्यविषयाणां साधनानां तप एव साधकतमं साधनमिति हि प्रसिद्धं लोके। तस्मात् पित्राऽनुपदिष्टमपि ब्रह्मविज्ञानसाधनत्वेन तपः प्रतिपेदे भृगुः। तच्च तपो बाह्यान्तःकरणसमाधानं, तद्द्वारकत्वाद्ब्रह्मप्रतिपत्तेः। 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः। तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते॥' इति स्मृतेः। स च तपस्तप्त्वा—

शंकर.

(२) 'यतः' इतीयं पञ्चमी 'यतो वा इमानि भूतानि जायन्ते' इत्यत्र, 'जनिकर्तुः प्रकृतिः' (पा. सू. १।४।३०) इतिविशेषस्मरणात् प्रकृतिलक्षणे एवापादाने द्रष्टव्या। निमित्तत्वं त्वधिष्ठात्रन्तराभावादभिगन्तव्यम्।

ब्रशंकर. १।४।२३

(३) अथ लक्षणान्तरमुखेन ब्रह्म प्रतिपादयितुं ब्रह्मप्रतिपत्तौ तपोनिहतकल्मषान्तःकरणस्य हेतुत्वमिति प्रतिपादनाय च भृगुवल्ली आरभ्यते। ब्रह्माधीहि उपदेशाय स्मर अधीष्वेति वा अध्यापयेति वाऽर्थः।

समित्येकीकरणे। एकीकृततया प्रवेशः संवेशः। यद्वा, (प्र)यन्तीति मोक्षः, अभिसंविशन्तीति प्रलयः। अस्मिन्पक्षे यच्छब्दस्याऽऽवृत्तिः। 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति' इत्यत्र प्रतिवाक्यं तद्ब्रह्मेत्यनुक्तेर्न जगज्जन्मादि प्रत्येकं लक्षणम्। प्रत्येकलक्षणत्वे लक्षणान्तरवैयर्थ्यप्रसङ्गाच्च। अतः समुदितमेव लक्षणम्।

'तद्विजिज्ञासस्व' इति न विचारस्योपासनस्य वा विधिः। विचारात्मकज्ञानं रागप्राप्तत्वान्न विधेयम्। उपासनात्मकस्य तु ज्ञानस्य 'ब्रह्मविदाप्नोति' इति प्राकरणिकवाक्यान्तरसिद्धत्वात्। उपक्रमे 'अधीहि भगवो ब्रह्म' इति प्रश्नस्य अतत्त्वपरत्वेन उपायविषयत्वाभावाच्च नोपासनाज्ञानमिह विधेयम्। अतो 'विजिज्ञासस्व' इत्युपदिश्यमानेऽर्थे सावधानत्वार्थं संदेहनिवृत्त्यर्थं चोक्तं, या गन्धवती तां पृथिवीं विद्धीतिवत्। अतः कारणत्वस्य ब्रह्मलक्षणत्वमेवास्य वाक्यस्य विधेयम्। *रंग.

(४) 'चक्षुः स चष्टे यद्विष्णुः श्रोत्रं श्रोतृत्वतो विभुः। वाक्च वक्तृत्वतो नित्यं मनो

* तपोविषयकशङ्कासमाधानवर्जं शेषं शंकरवत्।

मन्तृत्वतस्तथा। तपो ज्ञानस्वरूपत्वात् विज्ञानं तु विवेचनात्। ज्ञानानुसंधानरूपतपसा तं जनार्दनम्। क्रमाद्भृगुर्व्यजानात्तमन्नादिबहुरूपिणम्॥'

मध्व.

(५) 'यतो वा इमानि भूतानि जायन्ते' इत्यनेन शिवस्य ब्रह्मणः निमित्तकारणत्वं, 'यत्प्रयन्ति' इत्यनेन उपादानकारणत्वं चोपदिश्यते। तस्मादभिन्ननिमित्तोपादानकारणत्वम्। न त्वेककारणत्वं, नाध्यारोपत्वं, न मिथ्यात्वं विधीयते।

१।१।२

'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्यनुगतजन्माधिकरणे शक्तिविशेषविशिष्टशिवाद्वैतं सूत्रकारेण सूचितं, निर्विशेषस्य ब्रह्मणः कार्यकारणत्वासंभवात्। विवर्तोपादानकारणत्वं (त्वे ?) तद्विधायकप्रात्यक्षिकश्रुत्यदर्शनात् प्रतिज्ञादृष्टान्तश्रुतिविरोधाच्च मुमुक्षुभिर्नाविधेयम् (नं विधेयं ?)। 'यतो वा इमानि' इति वाक्ये परमेश्वरशक्तेरेव जगदुपादानकारणत्वं परमेश्वरस्य निमित्तत्वं च सूचितं, तथापि मृत्पिण्डकुलालयोरिव न पृथक्त्वं, 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतौ परमेश्वरनिष्ठमायाशक्तेः वह्नौ दाहशक्तिवत्स्वाभाविकत्वनिर्देशात्। तस्मात् सर्वदा न निर्विशेषं ब्रह्मेति निश्चितम्।

श्रीकर. १।४।२३

**अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥**

(१) तैउ. ३।२; ब्रशंकर. २।३।५; भास्कर. २।३।५; रामानुज. १।१।२०; निंबार्क. २।३।४; ब्रमध्व. ४।१।२; श्रीकंठ. १।१।१ (पृ. ९०); श्रीकर. १।१।१ (पृ. १५, १७, २६, २७), १।१।१३ (पृ. ६१), १।१।२२, १।२।९, २।१।१३, २१, २।२।३७, ४१, २।३।१, ४, ३।३।१५, ५९, ४।१।६; वल्लभ. १।१।११, २।३।५, ३।३।१६, १८; विज्ञान. १।१।१ (पृ. २९), ३।३।११; बलदेव. २।३।४.

(१) —अन्नं ब्रह्मेति व्यजानात् विज्ञातवान्। तद्धि यथोक्तलक्षणोपेतम्। कथम्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तस्मात् युक्तमन्नस्य ब्रह्मत्वमित्यभिप्रायः। स एवं तपस्तप्त्वा अन्नं ब्रह्मेति विज्ञाय लक्षणेनोपपत्त्या च, पुनरेव संशयमापन्नो वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति। कः पुनः संशयहेतुरस्येत्युच्यते—अन्नस्योत्पत्तिदर्शनात्। तपसः पुनः पुनरुपदेशः साधनातिशयत्वावधारणार्थः। यावद्ब्रह्मणो लक्षणं निरतिशयं न भवति, यावच्च जिज्ञासा न निवर्तते, तावत्तप एव ते साधनम्। तपसैव ब्रह्म विजिज्ञासस्वेत्यर्थः। ऋज्वन्यत्।

शंकर.

(२) शृङ्गग्राहिकयेदं ब्रह्मेत्युपदेशं परित्यज्य लक्षणोपदेशपूर्वकं विजिज्ञासस्वेत्युपदिशतो ह्ययं भावः—संपादनीयं ब्रह्मज्ञानसाधनं संपाद्य एतल्लक्षणलक्षितं ब्रह्म विजानीहीत्येतमर्थं निश्चित्य इन्द्रियनिग्रहादिलक्षणस्य तपसो ब्रह्मविद्यायामन्तरङ्गोपायत्वात् तदेव साधनमिति ज्ञात्वा तपः कृत्वा प्रथमतोऽन्नं ब्रह्मेति ज्ञातवानित्यर्थः।

रंग.

(३) 'अङ्गेषु यथाश्रयभावः'— अङ्गेषु 'अन्नं ब्रह्म' 'प्राणो ब्रह्म' 'मनो ब्रह्म' 'विज्ञानं ब्रह्म' 'वाचं ब्रह्म' 'नाम ब्रह्म' 'खं ब्रह्म' 'कं ब्रह्म' इत्यादिमोक्षोपासनाङ्गेष्वूपासनेषु यथाश्रयभावः 'आनन्दो ब्रह्मेति व्यजानात्' इत्यादि (?) सर्वातिशयपरमानन्दात्मकस्य शिवस्य परब्रह्मणः प्राप्तिसाधनोपासनरूपभावः। तथा (च) दहरभूमाद्युपासनानामिव साक्षान्मोक्षहेतुत्वमसंगतमिति सूत्रसूचितार्थः।

श्रीकर. ३।३।५९

**प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति।**

(१) तैउ. ३।३; श्रीकंठ. १।१।१ (पृ. ९०), १।१।२४; श्रीकर. १।१।२४, २।३।१, ३।३।५९, ४।१।६; विज्ञान. ३।३।११.

तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

[2]विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तँ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता । स य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥

(१) तैउ. ३।४; श्रीकंठ. १।१।१ (पृ. ९१); श्रीकर. २।१।१३, २१, २।३।१, ३।३।५९.

(२) तैउ. ३।५; श्रीकंठ. १।१।१ (पृ. ९१); श्रीकर. २।१।१३, २१, २।३।१, २।४।१६, ३।३।५९.

(३) तैउ. ३।६; अशंकर. १।१।२, १२, १५, १९, २२; भास्कर. १।१।१२, १९, ४।३।१३; रामानुज. १।१।१ (पृ. १४, ६३), १।१।४ (पृ. १४७), १।१।२०, ३२, १।२।१, १।४।२७, २।३।२९, ३।३।१३; मध्व. स य एवं (य एवं); अमध्व. १।२।१५; श्रीकंठ. १।१।२ (पृ. १२०, १२२), १।१।४ (पृ. १८८), १।१।१३, १६, २।१।३२, ३।३।११, ४।४।१४, १९; श्रीकर. १।१।२ (पृ. ३०), १।१।१३ (पृ. ६१, ६२), १।१।१६, २।१।२१, २।३।१, २७; ३।३।११, १२, ५१, ५९, ४।४।१५; वल्लभ. १।१।३ (पृ. ११३), १।१।२१, १।४।१९, ३।३।१६; विज्ञान. १।१।२ (पृ. ६३), १।१।२२, १।३।४१, ३।३।११; बलदेव. १।१।१.

(१) एवं तपसा विशुद्धात्मा प्राणादिषु साकल्येन ब्रह्मलक्षणमपश्यन् शनैःशनैरन्तरनुप्रविश्यान्तरतममानन्दं ब्रह्म विज्ञातवांस्तपसैव साधनेन भृगुः, तस्माद्ब्रह्म विजिज्ञासुना बाह्यान्तःकरणसमाधानलक्षणं परमं तपः-साधनमनुष्ठेयमिति प्रकरणार्थः । अधुना आख्यायिकातोऽपसृत्य श्रुतिः स्वेन वचनेन आख्यायिकानिर्वृत्तमर्थमाचष्टे — सैषा भार्गवी भृगुणा विदिता वरुणेन प्रोक्ता वारुणी विद्या परमे व्योमन् हृदयाकाशगुहायां परमे आनन्देऽद्वैते प्रतिष्ठिता परिसमाप्ता अन्नमयादात्मनोऽधिप्रवृत्ता । य एवमन्योऽपि तपसैव साधनेन अनेनैव क्रमेणानुप्रविश्याऽऽनन्दं ब्रह्म वेद, स एवं विद्याप्रतिष्ठानात्प्रतितिष्ठत्यानन्दे परमे ब्रह्मणि, ब्रह्मैव भवतीत्यर्थः ।

दृष्टं च फलं तस्योच्यते — अन्नवान् प्रभूतमन्नमस्य विद्यते इत्यन्नवान् । सत्तामात्रेण तु सर्वो ह्यन्नवानिति विद्याया विशेषो न स्यात् । एवं अन्नमत्तीत्यन्नादः, दीप्ताग्निर्भवतीत्यर्थः । महान् भवति । केन महत्त्वमित्यत आह—प्रजया पुत्रादिना, पशुभिः गवाश्वादिभिः, ब्रह्मवर्चसेन शमदमज्ञानादिनिमित्तेन तेजसा । महान् भवति कीर्त्या ख्यात्या शुभप्रचारनिमित्तया ।

* शंकर.

(२) 'एवं विजानंस्तं विष्णुं तस्मिंस्तु प्रतितिष्ठति । मुक्तो भूत्वाऽन्नवांश्च स्यादन्नादश्च सदैव तु । अन्ननामा तु भगवान् विद्वांस्तमुपजीवति । तद्वांश्च तेन गुप्तत्वात् — ॥'

मध्व.

(३) 'आनन्दो ब्रह्म' इत्यानन्दस्य ब्रह्मत्वव्यपदेशस्तु ब्रह्मधर्मत्वेन तदभेदात् । 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता' इति ब्रह्मधर्मस्वरूपे परमानन्दरूपे प्रपञ्चप्रकृतौ परमशक्तिपर्याये चिदात्मनि परमे व्योम्नि वारुणी समाप्तेत्युच्यते । ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपा परमशक्तिः आनन्दमय इत्युच्यते । तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परं

* रंग. शंकरेण गतार्थम् ।

ब्रह्म। विज्ञानमयश्च तदुपासको जीवः। प्रतिष्ठाभूताद्धर्मिणो ब्रह्मणः धर्मभूतस्यानन्दमयस्य शक्त्यात्मनः भेदादर्शनात् आनन्दमय आत्मा ब्रह्मेत्याभिप्रायेण 'आनन्दमयोऽभ्यासात्' इति सूत्रकारेण सूचितमिति।

श्रीकंठ. १।१।१६

अन्नब्रह्मोपासना, तदङ्गव्रतानि, ब्रह्मोपासनाविशेषाः, आदित्यशरीरपुरुषयोः स्थितमेकं ब्रह्म, ब्रह्मविदो गतिः

**अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥**

(१) किंच अन्नेन द्वारभूतेन ब्रह्म विज्ञातं यस्मात्, तस्मात् गुरुमिवान्नं न निन्द्यात्, तदस्यैवं ब्रह्मविदो व्रतमुपदिश्यते। व्रतोपदेशोऽन्नस्तुतये। स्तुतिभाक्त्वं चान्नस्य ब्रह्मोपलब्ध्युपायत्वात्। प्राणो वा अन्नं, शरीरान्तर्भावात्प्राणस्य। यत् यस्यान्तः प्रतिष्ठितं भवति, तत्तस्यान्नं भवतीति। शरीरे च प्राणः प्रतिष्ठितः, तस्मात्प्राणोऽन्नं, शरीरमन्नादम्। तथा शरीरमप्यन्नं, प्राणोऽन्नादः। कस्मात् प्राणे शरीरं प्रतिष्ठितं, तन्निमित्तत्वाच्छरीरस्थितेः। तस्मात्तदेतदुभयं शरीरं प्राणश्च अन्नमन्नादश्च। येन अन्योऽन्यस्मिन्प्रतिष्ठितं, तेनान्नम्। येन अन्योऽन्यस्य प्रतिष्ठा तेनान्नादः। तस्मात्प्राणः शरीरं च उभयमन्नमन्नादं च। स य एवमेतदन्नमन्ने प्रतिष्ठितं वेद, प्रतितिष्ठत्यन्नान्नादात्मनैव। किंच अन्नवानन्नादो भवतीत्यादि पूर्ववत्।

शंकर.

(२) एतद्विद्याङ्गं व्रतमाह—अन्नं न निन्द्यादिति। प्राणशरीरयोरप्तेजसोः पृथिव्याकाशयोरन्नान्नादत्वदृष्टिं तयोः परस्परप्रतिष्ठितत्वदृष्टिं परस्परप्रतिष्ठिततया परंपरया स्वप्रतिष्ठितत्वदृष्टिं तदङ्गव्रतविशेषं तत्फलं चाऽऽह—प्राणो वा इति।

रंग.

(१) तैउ. ३।७; रंग. 'प्रतिष्ठितं वेद' इति द्विरुक्तम्.

**अन्नं न परिचक्षीत। तद्व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥**

(१) अन्नं न परिचक्षीत न च परिहरेत्। तद्व्रतं पूर्ववत्स्तुत्यर्थम्। तदेवं शुभाशुभकल्पनया अपरिह्रियमाणं स्तुतं महीकृतमन्नं स्यात्। एवं यथोक्तमुत्तरेष्वपि आपो वा अन्नमित्यादिषु योजयेत्।

शंकर.

(२) न परिचक्षीत पात्रस्थमन्नं न निराकुर्यादित्यर्थः।

रंग.

**अन्नं बहु कुर्वीत। तद्व्रतम्। पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या॥**

(१) अप्सु ज्योतिरित्यब्ज्योतिषोरन्नान्नादगुणत्वेनोपासकस्यान्नस्य बहुकरणं व्रतम्।

शंकर.

(२) अतिथ्यभ्यागतस्वजनपर्याप्तं कुर्यात्। यद्वा, बहु कुर्वीत बहु मन्वीतेत्यर्थः। अन्ने बहुमतिं कुर्यादित्यर्थः।

रंग.

**न कंचन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्।**

(१) तैउ. ३।८.

(२) तैउ. ३।९, रंग. 'प्रतिष्ठितं वेद' इति द्विरुक्तम्; अमध्व. २।३।१२.

(३) तैउ. ३।१०; अशंकर. १।२।२३; भास्कर. १।१।१९ कामान्नी (कामात्मा); रामानुज. १।१।१ (पृ. ७९), १।१।२०, ४।४।१८; मध्व. देवेभ्यो अमृ (देवेभ्योऽमृ) भायि (भाइ) मा३ऽऽवाः (मा३वाः) मा३भि (माभि) भवा३मू (भवाम्) सुवर्न ज्योतीः (सुवर्णज्योतीः); अमध्व. ३।३।२७, ४।४।२१;

अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यते । य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान्भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान् कामान्नी कामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत् । अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्यो अमृतस्य ना३भायि । यो मा ददाति स इदेव मा३ऽऽवाः * । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवा३म् । सुवर्न ज्योतीः । य एवं वेद । इत्युपनिषत् ॥

(१) तथा पृथिव्याकाशोपासकस्य वसतौ वसतिनिमित्तं कंचन कंचिदपि न प्रत्याचक्षीत, वसत्यर्थमागतं न निवारयेदित्यर्थः । वासे च दत्तेऽवश्यं ह्यशनं दातव्यम् । तस्माद्यया कया च विधया येन केन च प्रकारेण बह्वन्नं प्राप्नुयात् बह्वन्नसंग्रहं कुर्यादित्यर्थः । यस्मादन्नवन्तो विद्वांसोऽभ्यागतायान्नार्थिने अराधि संसिद्धमस्मै अन्नमित्याचक्षते, न नास्तीति प्रत्याख्यानं कुर्वन्ति, तस्माच्च हेतोर्बह्वन्नं प्राप्नुयादिति पूर्वेण संबन्धः । अपि चान्नदानस्य माहात्म्यमुच्यते । यथा यत्कालं प्रयच्छत्यन्नं तथा तत्कालमेव प्रत्युपनमते । कथमिति तदेतदाह — एतद्वा अन्नं मुखतः मुख्ये प्रथमे वयसि मुख्यया वा वृत्त्या पूजापुरःसरमभ्यागतायान्नार्थिने राद्धं संसिद्धं, प्रयच्छतीति वाक्यशेषः । तस्य किं फलं स्यादित्युच्यते— मुखतः पूर्वे वयसि मुख्यया वा वृत्त्या अस्मै अन्नदाय अन्नं राध्यते, यथादत्तमुपतिष्ठते इत्यर्थः । एवं मध्यतः मध्यमे वयसि मध्यमेन चोपचारेण, तथा अन्ततः अन्ते वयसि जघन्येन चोपचारेण परिभवेन तथैवास्मै राध्यते संसिध्यत्यन्नम् । य एवं वेद य एवं अन्नस्य यथोक्तं माहात्म्यं वेद तद्दानस्य च फलं, तस्य यथोक्तं फलमुपनमते ।

इदानीं ब्रह्मण उपासनप्रकार उच्यते—क्षेम इति वाचि । क्षेमो नाम उपात्तपरिरक्षणम् । ब्रह्म वाचि क्षेमरूपेण प्रतिष्ठितमित्युपास्यम् । योगक्षेम इति । योगः अनुपात्तस्योपादानम् । तौ हि योगक्षेमौ प्राणापानयोः सतोर्भवतो यद्यपि, तथापि न प्राणापाननिमित्तावेव, किं तर्हि, ब्रह्मनिमित्तौ । तस्माद्ब्रह्म योगक्षेमात्मना प्राणापानयोः प्रतिष्ठितमित्युपास्यम् । एवमुत्तरेष्वन्येषु तेन तेनात्मना ब्रह्मैवोपास्यम् ।

---

* अत्र अस्मद्गृहीतात् आनन्दाश्रममुद्रितशांकरभाष्यपाठात् तैत्तिरीयारण्यकसायणभाष्यात् शंकरानन्दव्याख्यानाच्च 'इदेवमा३वाः' ( इत् एवं आवाः ) इति पाठः स्पष्टं निष्कृष्यते । पुस्तकेषु तु सर्वेषु 'इदेव मा३ऽऽवाः' ( इत् एव मा आवाः ) इति पाठस्यैव मुद्रितत्वात् तैत्तिरीयब्राह्मणसायणीये तथैव स्फुटं भाषितत्वाच्च स एवास्माभिरवस्थापितः । वाणीविलासपुस्तके तु यथाभूतमूलपाठानुसारी ' स इत् इत्थमेवेत्यर्थः, एवमविनष्टं यथाभूतं मां आवाः अवतीत्यर्थः ' इत्येवमाकारो भाष्यपाठः समाश्रितः ।

श्रीकंठ. १।१।१६, २।३।२०, ३।३।१५, १६, ४।४।१५, १७, १८, १९, २२; श्रीकर. १।१।१६, २।३।१८, ३।३।४०, ५१, ५२, ४।४।१६, १७, १९, २२ सुवर्न ज्योतीः ( सुवर्णज्योतीः ); वल्लभ. १।१।१ ( पृ. ३७ ), १।१।१९, २।३।२०, ३।२।३१; बलदेव. ४।१।१२.

कर्मणो ब्रह्मनिर्वर्त्यत्वाद्धस्तयोः कर्मात्मना ब्रह्म प्रतिष्ठितमित्युपास्यम् । गतिरिति पादयोः । विमुक्तिरिति पायौ । इत्येता मानुषीः मनुष्येषु भवाः मानुष्यः समाज्ञाः आध्यात्मिक्यः समाज्ञाः ज्ञानानि विज्ञानानि उपासनानीत्यर्थः ।

अथ अनन्तरं दैवीः दैव्यः देवेषु भवाः समाज्ञा उच्यन्ते । तृप्तिरिति वृष्टौ । वृष्टेरन्नादिद्वारेण तृप्तिहेतुत्वाद्ब्रह्मैव तृप्त्यात्मना वृष्टौ व्यवस्थितमित्युपास्यम् । तथा अन्येषु तेन तेनाऽऽत्मना ब्रह्मैवोपास्यम् । तथा बलरूपेण विद्युति । यशोरूपेण पशुषु । ज्योतीरूपेण नक्षत्रेषु । प्रजातिः, अमृतं अमृतत्वप्राप्तिः पुत्रेण ऋणविमोक्षद्वारेण, आनन्दः सुखमित्येतत्सर्वमुपस्थनिमित्तम् । ब्रह्मैवानेनाऽऽत्मनोपस्थे प्रतिष्ठितमित्युपास्यम् । सर्वं ह्याकाशे प्रतिष्ठितं, अतो यत्सर्वमाकाशे तद्ब्रह्मैवेत्युपास्यम् । तच्चाऽऽकाशं ब्रह्मैव, तस्मात्तत्सर्वस्य प्रतिष्ठेत्युपासीत । प्रतिष्ठागुणोपासनात् प्रतिष्ठावान्भवति । एवं पूर्वेष्वपि यद्यत्तदधीनं फलं तद्ब्रह्मैव, तदुपासनात्तद्वान्भवतीति द्रष्टव्यम् । श्रुत्यन्तराच्च — 'तं यथा यथोपासते तदेव भवति' इति । तन्मह इत्युपासीत । महः महत्त्वगुणवत्तदुपासीत । महान् भवति । तन्मन इत्युपासीत । मननं मनः । मानवान् भवति मननसमर्थो भवति । तन्नम इत्युपासीत । नमनं नमः, नमनगुणवत्तदुपासीत । नम्यन्ते प्रह्वीभवन्त्यस्मै उपासित्रे कामाः काम्यन्ते इति भोग्या विषया इत्यर्थः । तद्ब्रह्मेत्युपासीत । ब्रह्म परिवृढतममित्युपासीत । ब्रह्मवान् तद्गुणो भवति । तद्ब्रह्मणः परिमर इत्युपासीत । ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन्पञ्च देवता विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः । अतो वायुः परिमरः, श्रुत्यन्तरप्रसिद्धेः । स एष एवायं वायुराकाशेनानन्य इत्याकाशो ब्रह्मणः परिमरः, तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत । पर्येनमेवंविदं प्रतिस्पर्धिनो द्विषन्तः, अद्विषन्तोऽपि सपत्ना यतो भवन्ति अतो विशेष्यन्ते द्विषन्तः सपत्ना इति । य एनं द्विषन्तः सपत्नास्ते परिम्रियन्ते प्राणान् जहति । किंच ये चाप्रिया अस्य भ्रातृव्या अद्विषन्तोऽपि, ते च परिम्रियन्ते । 'प्राणो वा अन्नं शरीरमन्नादम्' इत्यारभ्य आकाशान्तस्य कार्यस्यैवान्नान्नादत्वमुक्तम् । उक्तं नाम, किं तेन । तेनैतत्सिद्धं भवति, कार्यविषय एव भोज्यभोक्तृत्वकृतः संसारः, न त्वात्मनीति । आत्मनि तु भ्रान्त्या उपचर्यते ।

श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वमेकत्वाच्च । कथमेकत्वमित्युच्यते — 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इत्येवमादि पूर्ववत्सर्वम् । अन्नमयादिक्रमेणाऽऽनन्दमयमात्मानमुपसंक्रम्यैतत्साम गायन्नास्ते । 'सत्यं ज्ञानम्' इत्यस्या ऋचोऽर्थो व्याख्यातो विस्तरेण तद्विवरणभूतयाऽऽनन्दवल्ल्या । 'सोऽश्नुते सर्वान्कामान् सह । ब्रह्मणा विपश्चिता' इति तस्य फलवचनस्यार्थविस्तारो नोक्तः । के ते किंविषया वा सर्वे कामाः, कथं वा ब्रह्मणा सह समश्नुते इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते । तत्र पितापुत्राख्यायिकायां पूर्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तम् । प्राणादेराकाशान्तस्य च कार्यस्यान्नान्नादत्वेन विनियोगश्चोक्तः, ब्रह्मविषयोपासनानि च । ये च सर्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्यभेदविषयाः, एते दर्शिताः । एकत्वे पुनः कामकामित्वानुपपत्तिः, भेदजातस्य सर्वस्य आत्मभूतत्वात् । तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्वान् कामानेवंवित्समश्नुते इत्युच्यते --- सर्वात्मत्वोपपत्तेः । कथं सर्वात्मत्वोपपत्तिरित्याह — पुरुषादित्यस्थात्मैकत्वविज्ञानेन अपोह्योत्कर्षापकर्षौ, अन्नमयाद्यात्मनोऽविद्याकल्पितान् क्रमेण संक्रम्याऽऽनन्दमयान्तान्, सत्यं ज्ञानमनन्तं ब्रह्म अदृश्यादिधर्मकं स्वाभाविकमानन्दमजममृतमभयमद्वैतं फलभूतमापन्नः इमाँल्लोकान् भूरादीननुसंचरन्निति व्यवहितेन संबन्धः । कथमनुसंचरन् । कामान्नी कामतोऽन्नमस्येति कामान्नी । तथा कामतो रूपाण्यस्येति कामरूपी । अनुसंचरन् सर्वात्मनेमाँल्लोकानात्मत्वेनानुभवन् । किम् । एतत्साम गायन्नास्ते । समत्वाद्ब्रह्मैव साम सर्वानन्यरूपं गायन् शब्दयन् आत्मैकत्वं प्रख्यापयन् लोकानुग्रहार्थं तद्विज्ञानफलं च, अतीव कृतार्थत्वं गायन्नास्ते तिष्ठति ।

कथम् । हा३वु हा३वु हा३वु । अहो इत्येतस्मिन्नर्थे अत्यन्तविस्मयख्यापनार्थम् । कः पुनरसौ विस्मय इत्युच्यते—अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नम-

न्नादश्च। किंच अहमेव श्लोककृत्। श्लोको नाम अन्नान्नादयोः संघातः, तस्य कर्ता चेतनावान्। अन्नस्यैव वा परार्थस्य अन्नादार्थस्य सतः अनेकात्मकस्य पारार्थ्येन हेतुना संघातकृत्। त्रिरुक्तिर्विस्मयत्वख्यापनार्था। अहमस्मि भवामि प्रथमजाः प्रथमजः प्रथमोत्पन्नः ऋतस्य सत्यस्य मूर्तामूर्तस्यास्य जगतः देवेभ्यश्च पूर्वम्। अमृतस्य नाभिः अमृतत्वस्य नाभिः मध्यं, मत्संस्थममृतत्वं प्राणिनामित्यर्थः। यः कश्चिन्मा मां अन्नं अन्नार्थिभ्यो ददाति प्रयच्छति अन्नात्मना ब्रवीति, स इत् इत्थं एवं अविनष्टं यथाभूतं आवाः अवतीत्यर्थः। यः पुनरन्यो मामदत्त्वाऽर्थिभ्यः काले प्राप्ते अन्नमत्ति, तमन्नमदन्तं भक्षयन्तं पुरुषं अहमन्नमेव संप्रत्यद्मि भक्षयामि। अत्राऽऽह—एवं तर्हि बिभेमि सर्वात्मत्वप्राप्तेर्मोक्षात्, अस्तु संसार एव, यतो मुक्तोऽप्यहमन्नभूतः अद्यः स्यामन्यस्य। एवं मा भैषीः संव्यवहारविषयत्वात्सर्वकामाशनस्य। अतीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विद्वान्, तस्य नैव द्वितीयं वस्त्वन्तरमस्ति यतो बिभेति, अतो न भेतव्यं मोक्षात्। एवं तर्हि किमिदमाह अहमन्नमहमन्नाद इति। उच्यते— योऽयमन्नान्नादादिलक्षणः संव्यवहारः कार्यभूतः, स संव्यवहारमात्रमेव, न परमार्थवस्तु। स एवंभूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेण असन्निति कृत्वा ब्रह्मविद्याकार्यस्य ब्रह्मभावस्य स्तुत्यर्थमुच्यते—'अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नादोऽहमन्नादः' इत्यादि। अतो भयादिदोषगन्धोऽप्यविद्यानिमित्तः अविद्योच्छेदाद्ब्रह्मभूतस्य नास्तीति। अहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिः, भवन्ति (इति ?) वाऽस्मिन् भूतानीति भुवनं अभ्यभवां अभिभवामि परेणेश्वरेण स्वरूपेण। सुवर्न ज्योतीः। सुवः आदित्यः। नकार उपमार्थे। आदित्य इव सकृद्विभातमस्मदीयं ज्योतीः ज्योतिः प्रकाश इत्यर्थः। इति वल्लीद्वयविहिता उपनिषत् परमात्मज्ञानं, तामेतां यथोक्तामुपनिषदं शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं यथोक्तमोमिति। शंकर.

(२) स्वगृहे रात्र्यादौ भोजनार्थमागतं कमपि नरं न निराकुर्यादित्यर्थः। तस्माद्येति। भोजनार्थमागतानां पुरुषाणामप्रत्याख्यानस्य आवश्यकत्वात् निषिद्धेनापि येन केन मार्गेण बह्वन्नं संपादयेदित्यर्थः। अराध्यस्मा इति। अस्मै उपासकाय अन्नं अराधि सिद्धम्। उपासकार्थमेव ह्यन्नस्य निष्पत्तिः। अतस्तदर्थमेव निष्पन्नत्वादन्नानां तेषां येन केनाप्युपायेन अर्जने न दोष इति भावः। एतद्वै इति। एतद्वै मध्यतो राद्धं सर्वावयवयुक्तमप्यन्नं अस्मै उपासकाय सिद्धम्। तदर्थमेवोत्पन्नमिति हि सन्त आचक्षते इत्यर्थः। य एवं वेदेति। स यया कया च विधया बह्वन्नं प्राप्नुयादिति पूर्वेण संबन्धः। क्षेम इत्यादि। क्षेमसाधनत्वाद्वाचः क्षेमत्वबुद्धिस्तत्र कार्येत्यर्थः। एवमुत्तरत्रापि। विमुक्तिर्विसर्ग इत्यर्थः। इति मानुषीरिति। अध्यात्ममेता उपासना उक्ता इत्यर्थः। अथ दैवीरिति। उपासना आचक्षते इत्यर्थः। तृप्तिरित्यादि। एतत्तु आध्यात्मिकोपासने संगतं, पाठक्रमादर्थक्रमस्य बलवत्त्वादिति द्रष्टव्यम्। आकाशस्य प्रतिष्ठितत्वादिगुणयुक्ततयोपासने तत्क्रतुन्यायेन प्रतिष्ठादिकं भवतीत्यर्थः। ब्रह्मवान् ब्रह्मत्ववान् इत्यर्थः। नम्यन्ते प्राप्यन्ते इत्यर्थः। परितो म्रियन्तेऽस्मिन्निति परिमरः। सार्वत्रिकमरणस्याप्यवकाशतया आश्रय इत्यर्थः। एवमाकाशस्य ब्रह्मत्वोपत्वेन परिमरत्वेनोपासने एनमुपासकं परितो द्विषन्तो म्रियन्ते इत्यर्थः। पर्येणमिति णत्वं छान्दसम्। तदेतद्व्याचष्टे— परि येऽप्रिया इति। अप्रिया भ्रातृव्याः शत्रवः परितो वर्तमाना म्रियन्ते इत्यर्थः। स यश्चायमित्यादि। पूर्ववदर्थः। एतत्सामेति। एतत् वक्ष्यमाणमित्यर्थः।

हा३वु हा३वु हा३वु इति। स्तोभाक्षराण्येतानि। अत्राहंशब्दः परमात्मपर्यन्तः। भोक्तृभोग्यवाच्यन्नान्नादशब्दावपि तत्पर्यन्तौ। श्लोक्यते इति श्लोकः। श्लाघनीयजगद्रक्षणादिकृदित्यर्थः। ऋतस्य कर्मणः प्रथमजाः सर्गाद्यसमये तत्परिपाककृदित्यर्थः। देवेभ्यः पूर्वं वर्तमानोऽमृतस्य मोक्षस्य नाभी रथचक्रस्य नाभिरिवाऽऽश्रयभूतः। नाभा(यि) इति गानकृतो विकारः। यो मां योग्याय शिष्याय ददाति उपदिशति

स इदेवमाऽऽवाः अवाः प्राप्तो भवति । वा गतिगन्धनयोरिति धातुः । इच्छब्दोऽनर्थकः । अन्नशब्दितमचेतनं तद्भोक्तारं चेतनं चाद्मि व्याप्नोमि । अहं विश्वमिति । प्रलयकाले विश्वमभिभूतवानस्मीत्यर्थः । सुवर्नेति । कमनीयदेदीप्यमानशरीरो भवति । इत्युपनिषदिति । समाप्ता इति शेषः ।

रंग.

( ३ ) — 'विद्यार्थे वसतीच्छया । आगतं नेति न ब्रूयात्तदेतद्विदुषो व्रतम् । स विष्णुः पृथिवीनामा पृथुत्वात्प्राणनामकः । प्रकृष्टानन्दबलत आकाशः सर्ववेत्तृतः । शराख्यदेहिनश्चैव शरीरं प्रेरणात्स्मृतः । एतैश्चतुर्भिर्भगवान् रूपैश्च चतुरात्मभिः । भोग्यभोक्तृस्वरूपेण तिष्ठति क्रीडया स्वयम् । न च भोग्यत्वमात्रेण हीनत्वं तस्य कुत्रचित् । न हि भार्योपभोग्यस्तु भर्ता हीनत्वमाप्नुयात् । एवं स भगवान् विष्णुरविशेषोऽखिलेष्वपि । रूपेषु क्रीडते नित्यं भोक्ता भोग्य इतीच्छया । अन्नाख्यं तं नैव निन्द्याद्बहु मन्येत तं सदा । इति व्रतद्वयं ह्येतद्धार्यं यदि सुखे स्पृहा । येन केनापि विधिना बह्वित्येव जनार्दनम् । मत्वैव प्राप्नुयान्नित्यं मनोवाक्कायवृत्तिभिः । य एवं समुपासीत तस्यान्नाख्यो हरिः स्वयम् । सिद्ध इत्येव हि प्राहुर्विद्वांसः परिनिष्ठिताः । यस्य तद्ब्रह्म संसिद्धं पूर्वं तेनाऽऽप्यतेऽग्रतः । मध्ये वयसि चेत्सिद्धं मुक्तो मध्यं प्रपश्यति । वार्धके चेद्विजानाति मुक्तः पादौ प्रपश्यति । तेजोमण्डलमेवान्यदङ्गं विष्णोः प्रपश्यति । पूर्वे वयसि बोद्धव्यमामुखात्सर्वदृष्टये । क्षेमकृत्त्वात्क्षेमनामा वाचि स्थः स परो हरिः । योगनामा तथा प्राणे सर्वकामनियोजनात् । क्षेमनामा क्षेमकृत्त्वादपाने हि हरिः स्वयम् । कर्मनामा हस्तगतः कर्मकृत्त्वाज्जनार्दनः । गतिदत्वाद्गतिर्नाम पादस्थः पुरुषोत्तमः । विसर्गकृद्विमुक्त्याख्यः पायुस्थः परमो विभुः । अध्यात्मस्थ इति प्रोक्तोऽथाधिदैवगतं शृणु । पर्जन्ये तृप्तिनामाऽसौ तृप्तिदत्वाज्जनार्दनः । वायौ च बलनामा च बलदत्वात्सदैव हि । यशःप्रदत्वाद्दक्षे तु यशः पश्वभिमानिनि । नक्षत्रेषु ज्योतिराख्यो ज्योतिर्दातृत्वतो हरिः । उपस्थमानिनि शिवे प्रजात्यानन्दसंततेः । दातृत्वात्तत्तदाख्योऽसौ संततिस्त्वमृतं स्मृतम् । सर्वे सर्वप्रदत्वात्तु प्रकृतौ पुरुषोत्तमः । स प्रतिष्ठा स्थापकत्वान्मनो मान्यत्वतो हरिः । नमो नन्दत्वतो नित्यं महश्चापि महत्त्वतः । विरिञ्चमारकश्चासौ ब्रह्म पूर्णगुणत्वतः । वेदैनं तत्त्वतो ब्रह्म स एनं पञ्चरूपिणम् । प्राप्य गायति मुक्तः सन्नन्ननामाऽस्मि भोग्यतः । यथेष्टमन्नभोक्ता च कीर्तिकर्ता हरेस्तथा । ऋतरूपस्य विष्णोस्तु पुत्रः प्रथमजो ह्यहम् । देवेभ्यः पूर्वजश्चाहं मुक्तानामाश्रयः सदा । यो ददाति च मां सम्यग्विष्णुतत्त्वप्रदर्शकः । स इत्थमेव मां याति विष्णोरन्नमहं सदा । ममान्नं सर्वजीवास्तु भोग्या मम यतः सदा । सर्वमभ्यभवं चाहं गुणैः सर्वैश्च नित्यकैः । सुवर्णो भगवान्विष्णुर्ज्योतिः स मम चेरकः । योऽहमेवंविदमवं तस्य मे माधवः पतिः । इति ब्रह्मा गायमानो मुक्तश्चरति सर्वदा ॥' इति यजुःसंहितायाम् । अन्नं भगवन्तं न परिचक्षीत न निराकुर्यात् । तद्गुणांस्तत्कर्माणि वा कुत्रापि बहु कुर्वीत बहुगुणत्वेन प्रतिपादयेद्भगवन्तम् । यया कया च विधया बह्वन्नं प्राप्नुयात् । अतिप्रयत्नेनापि विहितप्रकारेण बहुतरां भगवद्विद्यां प्राप्नुयात् । 'प्रजापतिः प्रथमजा ऋतस्य । आत्मनात्मानमभिसंबभूव' 'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव' इत्यादिना विरिञ्चस्यैवैतज्ज्ञानं, अन्यो न परिबभूव इति निषेधात् । 'विप्रुद्वन्मानुषा विप्रुः सूर्यमण्डलवत्सुराः । प्रतिबिम्बवच्च गिरिशो ब्रह्मैनं पश्यति स्फुटम् । ब्रह्मा हि स्थिरचिद्रूपो बहुलात्मा विशेषतः । अन्ये क्रमादबहुलास्तथा चञ्चलतेजसः । तस्मात्सम्यङ्न पश्यन्ति हरिं ब्रह्मा तु पश्यति ॥' इति हरिवंशवचनाच्च ब्रह्मैवैनं सम्यग्वेद ।

यस्योच्चोऽथ समो वा कश्चिन्नैवास्त्यनन्तसच्छक्तेः । तं वन्दे परमेशं प्रेयांसं प्रेयसश्च मे विष्णुम् ॥ यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् । वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥

'हनशब्दो ज्ञानवाची हनुमान्मतिशब्दितः । रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि । भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः । ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् । प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः । मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् । मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः । इति सूक्तगतं रूपत्रयमेतन्महात्मनः । यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादतः ॥' इति च । 'साधको रामवाक्यानां तत्समीपगतः सदा । हनूमान्प्रथमो ज्ञेयो भीमस्तु बहुभुक्पितोः । पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः । पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः । दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते । प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः । आसमन्तात्पतित्वे तु गूढं कलियुगे हरिम् । असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् । वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्यथामति । येन विष्णोस्तु वर्पाख्यान्गुणानाशासिषुः परान् । ईशानासः सूरयश्च निगूढान्निर्गुणोक्तिभिः । त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः । एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः । स्वयंभुब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ॥' इति च । पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे । अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

मध्व.

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते तैत्तिरीयोपनिषद्भाष्ये तृतीया भृगुवल्ली संपूर्णा ॥

(४) मुक्तस्योपासना कर्तव्या न वा इति, अतो ब्रवीति— हानौ तूपायनेति । नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहणस्तुत्युपगानवदेव मोक्षे उपासनादि, 'ब्रह्मविदाप्नोति परम्' इतिमोक्षवाक्यशेषत्वादितरेषाम् । तथोक्तम्—'एतत्साम गायन्नास्ते' इत्यादि ।

अमध्व. ३।३।२७

(५) अन्ये पुनः — 'अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादौ अन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसंबन्धात् संसारलोकादुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमाच्च एते सर्वथा अन्नमयादय आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारणभूताः पुरुषा ब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञाः । अन्नमयाद्यात्माधारस्य सदाशिवस्याऽऽनन्दमयस्यापि कारण परमशिवाख्यं ब्रह्म 'तत्प्रतिष्ठा' इत्युच्यते । तदभेदादानन्दमयस्य ब्रह्मत्वव्यपदेशः -- इति । सर्वथा आनन्दमयः परमेश्वर इति सिद्धम् ।

१।१।१६

[ एवमन्नमयाद्याः शरीरप्राणमनोजीवाः, आनन्दमयस्तु ब्रह्मानन्दरूपा चिच्छक्तिरिति केषांचिन्मतमुपन्यस्तम् । इदानीं अन्नमयाद्याः पञ्च कारणपुरुषा इत्यन्येषां मतमुपन्यस्यति — अन्ये पुनरिति ।

ननु उपन्यस्तमतत्रयमध्ये किं मतं ग्राह्यमित्याकाङ्क्षायामाह— सर्वथेति । यदि आनन्दमयः साक्षात्परं ब्रह्म, यदि वा तदीया चिच्छक्तिः, यदि वा सदाशिवेऽभिव्यक्तं परं ब्रह्म, सर्वथाऽप्यानन्दमयो न जीवः, किंतु परमेश्वरः, इत्यतिव्याप्तिनिरासात् अधिकरणप्रयोजनसिद्धिरविशिष्टेति किं तत्र विशेषविचारणेनेत्यभिप्रायः ।

शिवार्कमणिदीपिका ]

व्याप्त्या विश्वभुवनाभिभावित्वं यदुक्तं, तत्तु मलतिरोधानापगमप्रकटितशक्तिमरीचिव्याप्तमुक्तजीवविषयम् । तस्मादणुरेवाऽऽत्मा ।

२।३।२१

सदाशिवादीनामधिकारिणां ब्रह्मान्तानां मण्डलेषु स्वेच्छया संचरमाणः कामान्नी कामरूपी विगलितमनुष्यादिदेहाभिमानः असंकुचितशक्तित्रयव्यापारः परमानन्दप्रकाशविभूतिमयशक्तिशिवसामरस्यपरब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनं परिपूर्णमहंभावं प्रकटमनुभवति । तथा हि— 'अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽहमन्नादोऽहमन्नादः' इत्यादिना भोज्यभोक्त्रादिसकलप्रपञ्चात्मभावपरिपूर्णाहंभावना अस्यावगम्यते । अत्राहंकारो न सांसारिकः, सकलप्रपञ्चावगाहित्वेन परिपूर्णत्वात्, किंतु मुक्तस्वभाव एव । कल्पितात् 'देवोऽहं, मनुष्योऽहं' इति देवादिदेहमात्रावगाहितया परिच्छिन्नात् सांसारिकाहंकारात् अयं विलक्षण एव । अतोऽत्र न प्राकृताहंकारसंबन्धः । यद्वा, अहमिति शक्ति-

शिवाद्वयं ब्रह्मोच्यते । तदेवान्नादिकं प्रपञ्चजालमिति भावना । तथाऽऽप्तवचनम् — ' अनुत्तरविसर्गान्ता (न्तः) शिवशक्त्यद्वयात्मनः । परामर्शो निर्गुणत्वादहमित्युच्यते विभोः ॥ हृद्यकारो द्वादशान्ते हकारस्तदिदं विदुः । अहमात्मकमद्वैतं यत्प्रकाशात्मविश्रमः ॥ ' इति । अत्रानुत्तरब्रह्मानन्दपदानुप्रविष्टस्य मुक्तस्य सकलप्रपञ्चाकारशिवाभिधायकप्रासादाक्षरानुसंधानपूर्वकं गानं कर्तव्यतया न विधीयते, किंतु आनन्दास्वादपरमोल्लासद्योतनाय स्तुतिरिति । अतो मुक्तानां ब्रह्मानन्दानुभवव्यापारमन्तरेण सृष्ट्यादिव्यापारः स्वेच्छया न संभवति ।

श्रीकंठ. ४।४।१९

इति भृगुवल्ल्यध्यायः ॥

तैत्तिरीयोपनिषत्समाप्ता ।



# छान्दोग्योपनिषत



उद्गीथप्रतिपाद्यप्रणवोपासना प्रणवनद्विनोपेता,
कर्म विद्यया समुच्चितम्

* [1]ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति । तस्योपव्याख्यानम् ॥

( १ ) ओमित्येतदक्षरमित्याद्यष्टाध्यायी छान्दोग्योपनिषत् । तस्याः संक्षेपतोऽर्थजिज्ञासुभ्यः ऋजुविवरणमल्पग्रन्थमिदमारभ्यते ।

तत्र संबन्धः—समस्तं कर्म अधिगतं प्राणादिदेवताविज्ञानसहितमर्चिरादिमार्गेण ब्रह्मप्रतिपत्तिकारणं, केवलं च धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणम् । स्वभावप्रवृत्तानां च मार्गद्वयपरिभ्रष्टानां कष्टा अधोगतिरुक्ता । न चोभयोर्मार्गयोरन्यतरस्मिन्नपि मार्गे आत्यन्तिकी पुरुषार्थसिद्धिः, इत्यतः कर्मनिरपेक्षमद्वैतात्मविज्ञानं संसारगतित्रयहेतूपमर्देन वक्तव्यमित्युपनिषदारभ्यते ।

तत्रैतस्मिन्नद्वैतविद्याप्रकरणे अभ्युदयसाधनान्युपासनान्युच्यन्ते, कैवल्यसंनिकृष्टफलानि चाद्वैतादीषद्विकृतब्रह्मविषयाणि 'मनोमयः प्राणशरीरः' इत्यादीनि, कर्मसमृद्धिफलानि च कर्माङ्गसबन्धीनि, रहस्यसामान्यात् मनोवृत्तिसामान्याच्च । यथाऽद्वैतज्ञानं मनोवृत्तिमात्रं, तथा अन्यान्यप्युपासनानि मनोवृत्तिरूपाणीत्यस्ति हि सामान्यम् । कस्तर्ह्यद्वैतज्ञानस्योपासनानां च विशेषः । उच्यते—स्वाभाविकस्य आत्मनि अक्रिये अध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानं, रज्ज्वादाविव सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्तः, उपासनं तु यथाशास्त्रसमर्थितं किंचिदालम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसंतानकरणं तद्विलक्षणप्रत्ययानन्तरितं, इति विशेषः ।

तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाणि आलम्बनविषयत्वात्सुसाध्यानि चेति पूर्वमुपन्यस्यन्ते । तत्र कर्माभ्यासस्य दृढीकृतत्वात् कर्मपरित्यागेनोपासने एव दुःखं चेतःसमर्पणं कर्तुमिति कर्माङ्गविषयमेव तावदादौ उपासनमुपन्यस्यते—ओमित्येतदक्षरमुद्गीथमुपासीत । ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठम् । तस्मिन् हि प्रयुज्यमाने स प्रसीदति प्रियनामग्रहणे इव लोकः । तदिह इतिपरं प्रयुक्तं अभिधायकत्वात् व्यावर्तितं शब्दस्वरूपमात्रं प्रतीयते । तथा च अर्चादिवत्परस्याऽऽत्मनः प्रतीकं संपद्यते । एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासनसाधनं श्रेष्ठमिति सर्ववेदान्तेष्ववगतम् । जपकर्मस्वाध्यायाद्यन्तेषु च बहुशः प्रयोगात्प्रसिद्धमस्य श्रैष्ठ्यम् । अतस्तदेतदक्षरं वर्णात्मकं उद्गीथभक्त्यवयवत्वात् उद्गीथशब्दवाच्यं उपासीत कर्माङ्गावयवभूते ओंकारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणां मतिं संतनुयात् । स्वयमेव श्रुतिरोंकारस्योद्गीथशब्दवाच्यत्वे हेतुमाह—ओमिति ह्युद्गायति । ओमित्यारभ्य हि यस्मात् उद्गायति, अत उद्गीथ ओंकार इत्यर्थः । तस्योपव्याख्यानं तस्याक्षरस्योपव्याख्यानं एवमुपासनं एवंविभूति एवंफलमित्यादिकथनं उपव्याख्यानम् । प्रवर्तते इति वाक्यशेषः । शंकर.

( २ ) 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्' — यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि, एवमुद्गीथाद्युपासनान्यपीति

---

* छान्दोग्योपनिषदः मध्वभाष्यं नोपलब्धम् ।

(१) छान्दो. १।१।१; ब्रशांकर. ३।३।७, ९, ४२, ५५, ३।४।२२, ४।१।१६; भास्कर. २।१।१४, ३।३।९, ४२, ५५, ३।४।२२; रामानुज. ३।३।७, ४१, ५३, ५९, ३।४।१०; निंबार्क. ३।३।७, ४१, ५३, ६०, ३।४।२२; श्रीकंठ. ३।३।७, ९, ६०, ६३, ३।४।२१, २२; श्रीकर. ३।३।७, ४२, ५३, ६३, ३।४।१०; वल्लभ. ४।१।१८; विज्ञान. ३।३।७, ५५.

द्रष्टव्यम्। अत एव च कल्पसूत्रकाराः नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः। ३।३।४२

'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्'— 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'लोकेषु पञ्चविधं सामोपासीत' (छाउ. २।२।१) 'उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थं, इयमेव पृथिवी' (ऐआ. २।१।२) 'अयं वाव लोक एषोऽग्निश्चितः' (शब्रा. १०।५।४।१) इत्येवमाद्या ये उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः, ते तत्तच्छाखागतेष्वेवोद्गीथादिषु भवेयुः, अथवा सर्वशाखागतेषु इति विशयः। प्रतिशाखं च स्वरादिभेदादुद्गीथादिभेदानुपादाय अयमुपन्यासः। किं तावत्प्राप्तम्। स्वशाखागतेष्वेवोद्गीथादिषु विधीयेरन्निति। कुतः। संनिधानात्। 'उद्गीथमुपासीत' इति हि सामान्यविहितानां विशेषाकाङ्क्षायां संनिकृष्टेनैव स्वशाखागतेन विशेषेणाऽऽकाङ्क्षादिनिवृत्तेः। बदतिलङ्घनेन शाखान्तरविहितविशेषोपादाने कारणं नास्ति। तस्मात्प्रतिशाखं व्यवस्थेति। एवं प्राप्ते ब्रवीति — अङ्गावबद्धास्त्विति। तुशब्दः पक्षं व्यावर्तयति। नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्, अपि तु सर्वशाखास्वनुवर्तेरन्। कुतः। उद्गीथादिश्रुत्यविशेषात्। स्वशाखाव्यवस्थायां हि 'उद्गीथमुपासीत' इति सामान्यश्रुतिः अविशेषप्रवृत्ता सती संनिधानवशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात्। न चैतन्न्याय्यम्। संनिधानाच्च श्रुतिर्बलीयसी। न च सामान्याश्रयः प्रत्ययो नोपपद्यते। तस्मात्स्वरादिभेदे सत्यपि उद्गीथत्वाद्यविशेषात् सर्वशाखागतेष्वेव उद्गीथादिषु एवंजातीयकाः प्रत्ययाः स्युः।

* ब्रशंकर. ३।३।५५

(३) ओमित्यक्षरस्योद्गीथत्वासंभवेन सामानाधिकरण्यार्थमुद्गीथपदस्य वा अक्षरपदस्य वा मुख्यार्थत्यागेन लक्षणायां समाश्रयणीयायां 'एतस्यैवाक्षरस्योपव्याख्यानम्' इत्युपसंहारानुगुण्यादुद्गीथशब्दस्य जघन्यतया च तस्यैवोद्गीथावयवलक्षकत्वं युक्तं, न तु मुख्यस्योमित्येतदक्षरमित्यस्योंकारावयवयुक्तोद्गीथलक्षकत्वं युक्तमिति द्रष्टव्यम्।

* रंग.

(४) 'व्याप्तेश्च समञ्जसम्'—छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति श्रूयते। इह प्रणवोद्गीथयोः तन्त्रमुपासनं, उत एकविषयं, इति संशये पूर्वः पक्षः—यद्यपि प्रणवोद्गीथयोरिह सामानाधिकरण्यमवगम्यते, तच्च विशेषणविशेष्यतया संभवति, तथापि उद्गीथेन प्रणवो विशेष्यते, प्रणवेन चोद्गीथः, इत्यत्र नियामकाभावात् तन्त्रमुपासनमिति। एवं प्राप्ते ब्रूमः— न तन्त्रमुद्गीथप्रणवयोरुपासनम्। छान्दोग्ये प्रथमप्रपाठके 'ओमित्येतदक्षरमुद्गीथमुपासीत। ओमित्युद्गायति' इति तस्योपक्रमवत् उत्तरत्रापि 'खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति' इति प्रणवस्योपास्यत्वव्याप्तेः उद्गीथेन प्रणवो विशेष्यते इति प्राणविषयत्वमेव समञ्जसम्। अतः प्रणव एवोपास्यः।

श्रीकंठ. ३।३।९

**एषां भूतानां पृथिवी रसः। पृथिव्या आपो रसः। अपामोषधयो रसः। ओषधीनां पुरुषो रसः। पुरुषस्य वाग्रसः। वाच ऋग्रसः। ऋचः साम रसः। साम्न उद्गीथो रसः॥**

(१) एषां चराचराणां भूतानां पृथिवी रसः गतिः परायणं अवष्टम्भः। पृथिव्या आपो रसः। अप्सु ह्योता च प्रोता च पृथिवी, अतस्ता रसः पृथिव्याः। अपामोषधयो रसः, अप्परिणामत्वादोषधीनाम्। तासां पुरुषो रसः, अन्नपरिणामत्वात्पुरुषस्य। तस्यापि पुरुषस्य वाक् रसः। पुरुषावयवानां हि वाक् सारिष्ठा, अतो वाक् पुरुषस्य रस उच्यते। तस्या अपि वाचः ऋक् रसः सारतरा। ऋचः साम रसः सारतरम्। तस्यापि साम्नः उद्गीथः प्रकृतत्वादोंकारः सारतरः।

शंकर.

(२) पुरुषस्येति। वाचः अत्युपकारकत्वादिति भावः। वाच इति। ऋचां गम्भीरार्थत्वादिति भावः। ऋच इति। गीतिसारत्वात्साम्नामिति भावः। साम्न इति।

---

* भास्कर. रामानुज. निंबार्क. ब्रशंकरवत्। विज्ञान. ३।३।५५ ब्रशंकरवत्।

* शेषं शंकरेण गतार्थम्।

(१) छाउ. १।१।२.

श्राव्यत्वात्सार इत्यर्थः। * रंग.

स एष रसानाꣳ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः॥

(१) एवं स एष उद्गीथाख्य ओंकारो भूतादीनामुत्तरोत्तररसानामतिशयेन रसो रसतमः। परमः, परमात्मप्रतीकत्वात्। परार्ध्यः, अर्धं स्थानं, परं च तदर्धं च परार्धं, तदर्हतीति परार्ध्यः। परमात्मस्थानार्हः, परमात्मवदुपास्यत्वादित्यभिप्रायः। अष्टमः पृथिव्यादिरससंख्यायाम्। यदुद्गीथो य उद्गीथः। शंकर.

(२) 'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्'— 'स एष रसानां .... यदुद्गीथः' 'इयमेवर्गग्निः साम' (छाउ. १।६।१) 'अयं वाव लोक एषोऽग्निश्चितः' (शब्रा. १०।५।४।१) 'तदिदमेवोक्थमियमेव पृथिवी' (ऐआ. २।१।२) इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्था आहोस्विदुपासनाविध्यर्था इत्यस्मिन्संशये स्तुत्यर्था इति युक्तं, उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्। यथा 'इयमेव जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थाः, तद्वदिति चेत्, नेत्याह। न हि स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तं, अपूर्वत्वात्। विध्यर्थतायां ह्यपूर्वोऽर्थो विहितो भवति, स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात्। विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यते इत्युक्तं— 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यत्र। प्रदेशान्तरविहितानां तूद्गीथादीनामियं प्रदेशान्तरपठिता स्तुतिर्वाक्यशेषभावमप्रतिपद्यमाना अनर्थिकैव स्यात्। 'इयमेव जुहूः' इत्यादि तु विधिसंनिधाववाऽऽम्नातमिति वैषम्यम्। तस्मात् विध्यर्था एवंजातीयकाः श्रुतयः। + ब्रशंकर. ३।४।२१

* शेषं शंकरवत्।

+ भास्कर. रामानुज. निंबार्क. श्रीकंठ. ब्रशंकरवत्।

(१) छाउ. १।१।३; ब्रशंकर. ३।४।२१; भास्कर. ३।४।२१ (परमः ०); रामानुज. ३।४।२१ यदुद्गीथः (य उद्गीथः); निंबार्क. ३।४।२१; श्रीकंठ. ३।४।२१ रामानुजवत्.

(३) परस्य ब्रह्मणः अर्धं स्थानं अर्हति स परार्ध्यः। * रंग.

कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति॥

वाच ऋग्रस इत्युक्तम्। कतमा सा ऋक्, कतमच्च तत्साम, कतमो वा स उद्गीथः। कतमा कतमेति वीप्सा आदरार्था। ननु 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा. सू. ५।३।९३)। न ह्यत्र ऋग्जातिबहुत्वम्। कथं डतमच्प्रयोगः। नैष दोषः। जातौ परिप्रश्नो जातिपरिप्रश्न इत्येतस्मिन्विग्रहे जातौ ऋग्व्यक्तीनां बहुत्वोपपत्तेः। न तु जातेः परिप्रश्न इति विगृह्यते। ननु जातेः परिप्रश्न इत्यस्मिन् विग्रहे कतमः कठ इत्याद्युदाहरणमुपपन्नं, जातौ परिप्रश्न इत्यत्र तु न युज्यते। तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः। यदि जातेः परिप्रश्नः स्यात्, कतमा कतमा ऋगित्यादौ उपसंख्यानं कर्तव्यं स्यात्। विमृष्टं भवति विमर्शः कृतो भवति। × शंकर.

वागेवर्क्। प्राणः साम। ओमित्येतदक्षरमुद्गीथः। तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च॥

(१) विमर्शे हि कृते सति प्रतिवचनोक्तिरुपपन्ना वागेव ऋक् प्राणः सामेति। वागृचोरेकत्वेऽपि नाष्टमत्वव्याघातः, पूर्वस्माद्वाक्यान्तरत्वात् आप्तिगुणसिद्धये ओमित्येतदक्षरमुद्गीथ इति। वाक्प्राणौ ऋक्सामयोनी इति वागेवर्क्प्राणः सामेत्युच्यते। यथाक्रममृक्सामयोन्योर्वाक्प्राणयोर्ग्रहणे हि सर्वासामृचां सर्वेषां च साम्नामवरोधः कृतः स्यात्। सर्वर्क्सामावरोधे च ऋक्सामसाध्यानां च सर्वकर्मणामवरोधः कृतः स्यात्। तदवरोधे च सर्वे कामा अवरुद्धाः स्युः। ओमित्येतदक्षरमुद्गीथ इति भक्त्याशङ्का निवर्त्यते। तद्वा एतदिति मिथुनं निर्दिश्यते। किं तन्मिथुनमित्याह—यद्वाक्च प्राणश्च सर्वर्क्सामकारणभूतौ मिथुनम्। ऋक्च साम चेति ऋक्सामकारणभूतौ, ऋक्सामशब्दोक्तावित्यर्थः। न तु

* शेषं शंकरवत्।

× रंग शास्त्रार्थवर्जं शंकरवत्।

(१) छाउ. १।१।४.

(२) छाउ. १।१।५.

स्वतन्त्रमृक्च साम च मिथुनम्। अन्यथा हि वाक्च प्राणश्चेत्येकं मिथुनं, ऋक्साम चापरं मिथुनमिति द्वे मिथुने स्याताम्। तथा च तदेतन्मिथुनमित्येकवचननिर्देशोऽनुपपन्नः स्यात्। तस्मादृक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वम्। शंकर.

(२) स्त्रीलिङ्गशब्दवाच्यतया वाचः स्त्रीत्वं, प्राणस्य पुंलिङ्गशब्दवाच्यतया पुंस्त्वमिति भावः। ऋक्च सामचेति। अत्रापि तदेतन्मिथुनमित्यनुषज्यते। उक्तरीत्या वाक्प्राणयोर्मिथुनत्वेन तदभिन्नत्वेन ऋक्सामयोरपि मिथुनत्वं द्रष्टव्यम्। * रंग.

**तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते। यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम्॥**

(१) तदेतदेवंलक्षणं मिथुनं ओमित्येतस्मिन्नक्षरे संसृज्यते। एवं सर्वकामावाप्तिगुणविशिष्टं मिथुनमोंकारे संसृष्टं विद्यते इत्योंकारस्य सर्वकामावाप्तिगुणवत्त्वं प्रसिद्धम्। वाङ्मयत्वमोंकारस्य प्राणनिष्पाद्यत्वं च मिथुनेन संसृष्टत्वम्। मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते— यथा लोके मिथुनौ मिथुनावयवौ स्त्रीपुंसौ यदा समागच्छतः ग्राम्यधर्मतया संयुज्येयातां, तदा आपयतः प्रापयतः अन्योन्यस्य इतरेतरस्य तौ कामम्। तथा च स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वमोंकारस्य सिद्धमित्यभिप्रायः। शंकर.

(२) ऋक्सामात्मकं तदेतन्मिथुनं ओमित्यस्मिन्नक्षरे उद्गीथावयवभूते संसृज्यते। उद्गीथस्य ऋगारूढसामभक्तिरूपत्वेन ऋक्सामरूपतया उद्गीथावयवप्रणवस्य ऋक्सामभ्यां संसृष्टत्वात्तदात्मकमिथुनेन संसृष्टत्वमित्यर्थः। वाक्प्राणात्मकमिथुनाध्यासविशिष्टर्क्साम-संसृष्टतया उद्गीथावयवप्रणवोपासनं कर्तव्यमित्यर्थः। रंग.

**आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते॥**

(१) तदुपासकोऽप्युद्गाता तद्धर्मा भवतीत्याह— आपयिता ह वै कामानां यजमानस्य भवति, य एतदक्षरमेवमाप्तिगुणवदुद्गीथमुपास्ते, तस्यैतद्यथोक्तं फलमित्यर्थः, 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः। शंकर.

(२) तदुपासकोऽप्युद्गाता स्वोपास्योंकारवत् यजमानकामप्रापक इत्याह— आपयितेति। कामाप्त्यादिविशिष्टोद्गीथावयवोपासनस्य यजमानगतकामाप्तिरेव फलमित्यर्थः। रंग.

**तद्वा एतदनुज्ञाक्षरम्। यद्धि किंचानुजानात्योमित्येव तदाह। एषो एव समृद्धिर्यदनुज्ञा। समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते॥**

समृद्धिगुणवांश्च ओंकारः। कथम्— तद्वा एतत् प्रकृतं अनुज्ञाक्षरं अनुज्ञा च सा अक्षरं च तत्। अनुज्ञा अनुमतिरोंकार इत्यर्थः। कथमनुज्ञेत्याह श्रुतिरेव—यद्धि किंच यत्किंच लोके ज्ञानं धनं वा अनुजानाति विद्वान् धनी वा, तत्रानुमतिं कुर्वन्नोमित्येव तदाह। तथा च वेदे 'त्रयस्त्रिंशदिति। ओमिति होवाच' इत्यादि। तथा च लोकेऽपि तवेदं धनं गृह्णामीत्युक्ते ओमित्याह। अत एषा उ एव एषैव समृद्धिः यदनुज्ञा या अनुज्ञा सा समृद्धिः, तन्मूलत्वादनुज्ञायाः। समृद्धो ह्योमित्यनुज्ञां ददाति। तस्मात्समृद्धिगुणवानोंकार इत्यर्थः। समृद्धिगुणोपासकत्वात्तद्धर्मा सन् समर्धयिता ह वै कामानां यजमानस्य भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते इत्यादि पूर्ववत्।

* शंकर.

**[२]तेनेयं त्रयी विद्या वर्तते। ओमित्याश्रावयति। ओमिति शꣳसति। ओमित्युद्गायति। एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन॥**

---

* शेषं शंकरवत्।

(१) छाउ. १।१।६.

(२) छाउ. १।१।७; ब्रशंकर. ३।३।९, ४२, ३।४।२२.

* रंग. शंकरवत्।

(१) छाउ. १।१।८.

(२) छाउ. १।१।९; ब्रशंकर. ३।३।६४; रामानुज. ३।३।६२; निंबार्क. ३।३।६१; श्रीकंठ. ३।३।६२; श्रीकर. ३।३।६३.

(१) अथेदानीमक्षरं स्तौति उपास्यत्वात्प्ररोचनार्थम् । कथम् । तेन अक्षरेण प्रकृतेन इयं ऋग्वेदादिलक्षणा त्रयी विद्या, त्रयीविद्याविहितं कर्मेत्यर्थः । न हि त्रयी विद्यैव आश्रावणादिभिर्वर्तते । कर्म तु तथा प्रवर्तते इति प्रसिद्धम् । कथं — ओमित्याश्रावयति, ओमिति शंसति, ओमित्युद्गायतीति । लिङ्गाच्च सोमयाग इति गम्यते । तच्च कर्म एतस्यैवाक्षरस्यापचित्यै पूजार्थम् । परमात्मप्रतीकं हि तत् । तदपचितिः परमात्मन एव सा । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' (भ. गी. १८। ४६) इति स्मृतेः । महिम्ना रसेन । किंच एतस्यैवाक्षरस्य महिम्ना महत्त्वेन, ऋत्विग्यजमानादिप्राणैरित्यर्थः । तथा एतस्यैवाक्षरस्य रसेन, व्रीहियवादिरसनिर्वृत्तेन हविषेत्यर्थः । यागहोमादि अक्षरेण क्रियते । तच्च आदित्यमुपतिष्ठते । ततो वृष्ट्यादिक्रमेण प्राणोऽन्नं च जायते । प्राणैरन्नेन च यज्ञस्तायते । अत उच्यते अक्षरस्य महिम्ना रसेनेति ।　　शंकर.

(२) किमित्योंकारपूर्वकमेवाऽऽश्रावणादिकं क्रियते इत्यत्राऽऽह — एतस्यैवेति । रसेन सारभूतेन महिम्ना माहात्म्येन युक्तस्योंकारलक्षणस्य अपचित्यै पूजार्थमित्यर्थः ।　　* रंग.

**'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति । खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥**

* शेषं शंकरवत् ।

(१) छाउ. १।१।१०; अशंकर. ३।३।७, ४२, ३।४।४, १०, ४।१।६, १८; भास्कर. ३।३।४२, ३।४।४, १०; रामानुज. ३।३।७, ४१, ५९, ६३, ३।४।४, १०, ४५, ५०, ४।१।१८; निंबार्क. ३।३।४१, ४८, ३।४।४, १०, ४४, ४।१।१८; अमध्व. ३।४।४, ४।१।१८; श्रीकंठ. ३।३।९, ४१, ४८, ६०, ६३, ३।४।४, १०, ४।१।६, १८; श्रीकर. ३।३।७, ४२, ६३, ३।४।१, १०, ५१, ४।१।१८; वल्लभ. १।१।१ (पृ. ४२), १।१।२ (पृ. ६९), १।१।३ (पृ. १११), ३।३।२५, ४।१।१८ निषदा+ (वा); विज्ञान. ३।३।५७, ३।४।४, ८, १०, ४।१।१८; बलदेव. ३।४।४, ४।१।१८.

(१) तत्र अक्षरविज्ञानवतः कर्म कर्तव्यमिति स्थितमाक्षिपति — तेन अक्षरेण उभौ यश्च एतत् अक्षरं एवं व्याख्यातं वेद, यश्च कर्ममात्रवित् अक्षरयाथात्म्यं न वेद, तावुभौ कुरुतः कर्म । तयोश्च कर्मसामर्थ्यादेव फलं स्यात्, किं तत्राक्षरयाथात्म्यविज्ञानेनेति । दृष्टं हि लोके हरीतकीं भक्षयतोस्तद्रसाभिज्ञेतरयोर्विरेचनम् । नैवम् । यस्मात् नाना तु विद्या चाविद्या च । भिन्ने हि विद्याऽविद्ये । तुशब्दः पक्षव्यावृत्त्यर्थः । न ओंकारस्य कर्माङ्गत्वमात्रविज्ञानमेव रसतमाप्तिसमृद्धिगुणवद्विज्ञानं, किं तर्हि, ततोऽभ्यधिकम् । तस्मात्तदङ्गाधिक्यात्फलाधिक्यं युक्तमित्यभिप्रायः । दृष्टं हि लोके वणिक्शबरयोः पद्मरागादिमणिविक्रये वणिजो विज्ञानाधिक्यात्फलाधिक्यम् । तस्मात् यदेव विद्यया विज्ञानेन युक्तः सन् करोति कर्म श्रद्धया श्रद्दधानश्च सन् उपनिषदा योगेन युक्तश्चेत्यर्थः । तदेव कर्म वीर्यवत्तरं अविद्वत्कर्मणोऽधिकफलं भवतीति । विद्वत्कर्मणो वीर्यवत्तरत्ववचनादविदुषोऽपि कर्म वीर्यवदेव भवतीत्यभिप्रायः । न च अविदुषः कर्मण्यनधिकारः, औषस्त्ये काण्डे अविदुषामप्यार्त्विज्यदर्शनात् । रसतमाप्तिसमृद्धिगुणवदक्षरमित्येकमुपासनं, मध्ये प्रयत्नान्तरादर्शनात् । अनेकैर्हि विशेषणैरनेकधोपास्यत्वात्खलु एतस्यैव प्रकृतस्य उद्गीथाख्यस्य अक्षरस्योपव्याख्यानं भवति ।　　शंकर.

(२) 'असार्वत्रिकी' — 'यदेव विद्यया करोति' इत्येषा श्रुतिर्न सर्वविद्याविषया, प्रकृतविद्याभिसंबन्धात् । प्रकृता चोद्गीथविद्या 'ओमित्येतदक्षरमुद्गीथमुपासीत' (छाउ. १।१।१) इत्यत्र ।

† अशंकर. ३।४।१०

(३) उपनिषच्छब्देनोपनिषज्जन्यं ब्रह्मात्मकज्ञानमुच्यते । कर्मणो वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबद्धफलकत्वम् ।　　‡ रंग.

(४) 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वर्तमाननिर्देशेऽपि क्रतु-

† भास्कर. रामानुज. निंबार्क. श्रीकंठ. श्रीकर. अशंकरवत् ।

‡ शेषं शंकरवत् ।

वीर्यवत्तरत्वसाधनतया उपासनाविधिः कल्प्यते । वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबन्धेन अविलम्बितफलत्वमेव । श्रीकंठ. ३।३।४१

( ५ ) किंच औपनिषदज्ञानस्यापि कर्मोपयोगित्वं ' यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति ' इति । अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसांनिध्यम् । अन्यथा आभासत्वमेव । १।१।१ ( पृ. ४२ )

काण्डद्वयस्यान्योन्योपकारित्वाय साधारणग्रहणम् * । ' यदेव विद्यया करोति ' इत्यादिना पूर्वशेषत्वं सर्वस्य । ' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ' ( बृउ. ४।४।२२ ) इत्यादिना सर्वस्योत्तरशेषत्वम् । कर्मब्रह्मणोः क्रियाज्ञानयोर्धर्मिपरत्वेनैक्यात् कर्तृवाक्येषु सर्वत्र न विरोधः । तस्माच्छास्त्रयोनित्वं सिद्धम् ।

वल्लभ. १।१।२ ( पृ. ६९ )

( ६ ) ' असार्वत्रिकी ' — ' यदेव विद्यया करोति ' ' तं विद्याकर्मणी समन्वारभेते ' ( बृउ. ४।४।२ ) इत्यादिका कर्मशेषत्वतत्समुच्चयश्रुतिर्न सर्वभूमिकासाधारणी, 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ' ( मुउ. ३।१।४ ) इति विद्याप्रकरणस्थश्रुत्या विद्यायां कर्माङ्गकत्वस्याप्यवगमात् ।

विज्ञान. ३।४।१०

उद्गीथाक्षररूपत्वेन प्राणोपासना साख्याना

**[१]देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥**

( १ ) देवासुराः देवाश्चासुराश्च । देवाः, दीव्यतेर्द्योतनार्थस्य, शास्त्रोद्भासिता इन्द्रियवृत्तयः । असुरास्तद्विपरीताः स्वेष्वेवासुषु विष्वग्विषयासु प्राणनक्रियासु रमणात् स्वाभाविक्यस्तमआत्मिका इन्द्रियवृत्तय एव । ह वै इति पूर्ववृत्तोद्भासकौ निपातौ । यत्र यस्मिन्निमित्ते इतरेतरविषयापहारलक्षणे संयेतिरे, संपूर्वस्य यततेः संग्रामार्थत्वमिति संग्रामं कृतवन्त इत्यर्थः । शास्त्रीयप्रकाशवृत्त्यभिभवनाय प्रवृत्ताः स्वाभाविक्यस्तमोरूपा इन्द्रियवृत्तयः असुराः, तथा तद्विपरीताः शास्त्रार्थविषयविवेकज्योतिरात्मानो देवाः स्वाभाविकतमोरूपासुराभिभवनाय प्रवृत्ताः, इत्यन्योन्याभिभवोद्भवरूपः संग्राम इव सर्वप्राणिषु प्रतिदेहं देवासुरसंग्रामोऽनादिकालप्रवृत्त इत्यभिप्रायः । स इह श्रुत्या आख्यायिकारूपेण धर्माधर्मोत्पत्तिविवेकज्ञानाय कथ्यते प्राणविशुद्धिविज्ञानविधिपरतया । अत उभयेऽपि देवासुराः प्रजापतेरपत्यानीति प्राजापत्याः । प्रजापतिः कर्मज्ञानाधिकृतः पुरुषः, ' पुरुष एवोक्थमयमेव महान्प्रजापतिः ' ( ऐआ. २।१।२ ) इति श्रुत्यन्तरात् । तस्य हि शास्त्रीयाः स्वाभाविक्यश्च करणवृत्तयो विरुद्धा अपत्यानीव, तदुद्भवत्वात् । तत् तत्र उत्कर्षापकर्षलक्षणनिमित्ते ह देवाः उद्गीथं उद्गीथभक्त्युपलक्षितमौद्गात्रं कर्म आजह्रुः आहृतवन्तः । तस्यापि केवलस्याऽऽहरणासंभवाज्ज्योतिष्टोमाद्याहृतवन्त इत्यभिप्रायः । तत्किमर्थमाजह्रुरित्युच्यते — अनेन कर्मणा एनान् असुरान् अभिभविष्याम इत्येवमभिप्रायाः सन्तः ।

शंकर.

( २ ) उद्गीथावयवे ओंकारे मुख्यप्राणदृष्टिं विधातुमाख्यायिकां प्रस्तौति—देवासुरा हेति । द्विविधाः प्रजापतिसुता देवासुराः यस्मिन्काले परस्परं युद्धं कृतवन्त इत्यर्थः । तदा देवा अनेन उद्गीथावयवेनोंकारेणोपासितेन असुरान् जेष्याम इत्यभिसंधाय उद्गीथं प्राणमुपायत्वेन स्वीकृतवन्त इत्यर्थः ।

रंग.

**[१]ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे । तꣳहासुराः पाप्मना विविधुः । तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च । पाप्मना ह्येष विद्धः ॥**

यदा च तदुद्गीथं कर्म आजिहीर्षवः, तदा ते ह देवा नासिक्यं नासिकायां भवं चेतनावन्तं घ्राणं प्राणं उद्गीथकर्तारं उद्गातारं उद्गीथभक्त्या उपासांचक्रिरे

---

* ' शास्त्रयोनित्वात् ' इति सूत्रे शास्त्रेति साधारणग्रहणम् ।

(१) छाउ. १।२।१; ब्रसंकर. ३।३।६; रामानुज. ३।३।६; निंबार्क. ३।३।६, ९; श्रीकंठ. ३।३।६; श्रीकर. ३।३।६, ७.

(१) छाउ. १।२।२.

उपासनं कृतवन्त इत्यर्थः। नासिक्यप्राणदृष्ट्या उद्गीथाख्यमक्षरमोंकारमुपासांचक्रिरे इत्यर्थः। एवं हि प्रकृतार्थपरित्यागः अप्रकृतार्थोपादानं च न कृतं स्यात्। 'खल्वेतस्यैवाक्षरस्य' इत्योंकारो ह्युपास्यतया प्रकृतः। ननु उद्गीथोपलक्षितं कर्म आहृतवन्त इत्यवोचः, इदानीमेव कथं नासिक्यप्राणदृष्ट्या ओंकारमुपासांचक्रिरे इत्यात्थ। नैष दोषः। उद्गीथकर्मण्येव हि तत्कर्तृप्राणदेवतादृष्ट्या उद्गीथभक्त्यवयवश्चोंकार उपास्यत्वेन विवक्षितः, न स्वतन्त्रः, अतस्तादर्थ्येन कर्म आहृतवन्त इति युक्तमेवोक्तम्। तं एवं देवैर्वृतमुद्गातारं ह असुराः स्वाभाविकतमआत्मानो ज्योतीरूपं नासिक्यं प्राणं देवं स्वोत्थेन पाप्मना अधर्मासङ्गरूपेण विविधुः विद्धवन्तः, संसर्गं कृतवन्त इत्यर्थः। स हि नासिक्यः प्राणः कल्याणगन्धग्रहणाभिमानासङ्गाभिभूतविवेकविज्ञानो बभूव। स तेन दोषेण पाप्मसंसर्गी बभूव। तदिदमुक्तमसुराः पाप्मना विविधुरिति। यस्मादासुरेण पाप्मना विद्धः तस्मात्तेन पाप्मना प्रेरितो घ्राणः प्राणो दुर्गन्धिग्राहकः प्राणिनाम्। अतस्तेनोभयं जिघ्रति लोकः सुरभि च दुर्गन्धि च। पाप्मना हि एष यस्माद्विद्धः। उभयग्रहणमविवक्षितं, 'यस्योभयं हविरार्तिमार्छति' इति यद्वत्, 'यदेवेदमप्रतिरूपं जिघ्रति' (बृउ. १।३।३) इति समानप्रकरणश्रुतेः।

* शंकर.

अथ ह वाचमुद्गीथमुपासांचक्रिरे। ताँ हासुराः पाप्मना विविधुः। तस्मात्तयोभयं वदति सत्यं चानृतं च। पाप्मना ह्येषा विद्धा॥

अथ ह चक्षुरुद्गीथमुपासांचक्रिरे। तद्धासुराः पाप्मना विविधुः। तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च। पाप्मना ह्येतद्विद्धम्॥

अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे। तद्धासुराः पाप्मना विविधुः। तस्मात्तेनोभयँ शृणोति श्रवणीयं चाश्रवणीयं च। पाप्मना ह्येतद्विद्धम्॥

अथ ह मन उद्गीथमुपासांचक्रिरे। तद्धासुराः पाप्मना विविधुः। तस्मात्तेनोभयँ संकल्पयते संकल्पनीयं चासंकल्पनीयं च। पाप्मना ह्येतद्विद्धम्॥

(१) मुख्यप्राणस्योपास्यत्वाय तद्विशुद्धत्वानुभवार्थोऽयं विचारः श्रुत्या प्रवर्तितः। अतश्चक्षुरादिदेवताः क्रमेण विचार्य आसुरेण पाप्मना विद्धा इत्यपोह्यन्ते। समानमन्यत् अथ ह वाचं चक्षुः श्रोत्रं मन इत्यादि। अनुक्ता अप्यन्यास्त्वग्रसनादिदेवता द्रष्टव्याः, 'एवमु खल्वेता देवताः पाप्मभिः' (बृउ. १।३।६) इति श्रुत्यन्तरात्। शंकर.

(२) अदर्शनीयं अमेध्यादिकमित्यर्थः। अश्रवणीयं पापवचनमित्यर्थः। असंकल्पनीयं पापमित्यर्थः। रंग.

* अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे। तँ हासुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्वँसेतैवम्॥

(१) आसुरेण विद्धत्वाद्घ्राणादिदेवता अपोह्य अथ अनन्तरं य एवायं प्रसिद्धो मुखे भवो मुख्यः प्राणः, तमुद्गीथमुपासांचक्रिरे। तं ह असुराः पूर्ववत् ऋत्वा प्राप्य विदध्वंसुः विनष्टाः अभिप्रायमात्रेण। अकृत्वा किंचिदपि प्राणस्य कथं विनष्टा इत्यत्र दृष्टान्तमाह — यथा लोके अश्मानमाखणं, न शक्यते खनितुं कुद्दालादिभिरपि, टङ्कैश्च छेत्तुं न शक्यः अखनः, अखन एव आखणः, तमृत्वा सामर्थ्याल्लोष्ठः पांसुपिण्डः श्रुत्यन्तराच्च, अश्मनि क्षिप्तोऽश्मभेदनाभिप्रायेण तस्याश्मनः किंचिदप्यकृत्वा स्वयं विध्वंसेत विदीर्येत, एवं विदध्वंसुरित्यर्थः। एवं विशुद्धोऽसुरैरधर्षितत्वात्प्राण इति। शंकर.

(२) आखन्यते इत्याखणं मृत्पिण्डः। यथा मृत्पिण्डोऽश्मानं प्राप्य विध्वस्तो भवति, एवमिति व्यासार्यैर्व्याख्यातम्। आखणमिति छान्दसं णत्वं नपुंसकत्वं च। रंग.

---

* रंग. शंकरवत्।

(१) छाउ. १।२।३—६.

* सर्वेषु ब्रह्मसूत्रभाष्येषु इयं प्राणविद्या बृहदारण्यकप्राणविद्यातो भिन्नेति ३।३।६, ७ इति सूत्राभ्यां व्यवस्थापितम्।

(१) छाउ. १।२।७; ब्रशांकर. ३।३।६; भास्कर. ३।३।६; रामानुज. २।४।९, ३।३।६; निंबार्क. ३।३।६; श्रीकर. ३।३।६, ७.

मेव मुख्यप्राणमाङ्गिरसं वदन्तीत्याह — एतमु एवेति। अङ्गानां प्राणाधीनस्थितित्वेन प्राणस्याऽऽङ्गिरसत्वमिति भावः। अङ्गरसं आङ्गिरसं वदन्ति परोक्षप्रियत्वाद्देवानामिति भावः। रंग.

[1]तेन तꣳ ह बृहस्पतिरुद्गीथमुपासांचक्रे। एतमु एव बृहस्पतिं मन्यन्ते। वाग्घि बृहती तस्या एष पतिः॥

तेन तꣳ हाऽऽयास्य उद्गीथमुपासांचक्रे। एतमु एवाऽऽयास्यं मन्यन्ते। आस्याद्यदयते॥

(१) तथा वाचो बृहत्याः पतिः तेनासौ बृहस्पतिः। तथा यत् यस्मात् आस्यात् अयते निर्गच्छति, तेन आयास्य ऋषिः प्राण एव सन्नित्यर्थः। तथा अन्योऽप्युपासक आत्मानमेवाऽऽङ्गिरसादिगुणं प्राणमुद्गीथमुपासीतेत्यर्थः। शंकर.

(२) तेन आङ्गिरसत्वेन गुणेन बृहस्पतिरुपासितवानित्यर्थः। वागिन्द्रियस्य सर्वार्थप्रकाशकत्वादिना बृहत्त्वम्। तस्य च मुख्यप्राणाधीनत्वात्प्राणस्य वाक्पतित्वम्। अत उपास्यस्यैव बृहस्पतित्वं मन्यन्ते इत्यर्थः। तेन बृहस्पतित्वेन आयास्य ऋषिरुपासितवानिति। आस्यात् मुखात् अयते निर्गच्छतीत्यर्थः। रंग.

[2]तेन तꣳ ह बको दाल्भ्यो विदांचकार। स ह नैमिशीयानामुद्गाता बभूव। स ह स्मैभ्यः कामानागायति॥

(१) न केवलमङ्गिरःप्रभृतय उपासांचक्रिरे। तं ह बको नाम दल्भ्यस्यापत्यं दाल्भ्यो विदांचकार यथादर्शितं प्राणं विज्ञातवान्। विदित्वा च स ह नैमिशीयानां सत्रिणामुद्गाता बभूव। स च प्राणविज्ञानसामर्थ्यात् एभ्यो नैमिशीयेभ्यः कामानागायति स्म ह आगीतवान् किलेत्यर्थः। शंकर.

(२) तेन पूर्वोक्ताङ्गिरसत्वबृहस्पतित्वायास्यत्वादिगुणविशिष्टतया दल्भसुतो बकनामा उपासितवानित्यर्थः। * रंग.

[1]आगाता ह वै कामानां भवति
विद्वानक्षरमुद्गीथमुपास्ते। इत्यध्यात्मः वानु-
(१) तथा अन्योऽप्युद्गाता उ उरादि-
कामानां भवति य एवं विद्वान् यथ विद्वा
क्षरमुद्गीथमुपास्ते। तस्यैतत् दृष्टं फलं क्षुः श्रोत्रं
भावस्त्वदृष्टं 'देवो भूत्वा देवान नादिदेवता
न्तरात्सिद्धमेवेत्यभिप्रायः। इत्यध्यात्, (बृउ.
मुद्गीथोपासनं इत्युक्तोपसंहारः आ शंकर.
वक्ष्यमाणे बुद्धिसमाधानार्थः। र्थः। अश्रव-
पापमित्यर्थः।
(२) एवमुपासको यजमानक रंग.
दयिता भवतीत्यर्थः। इत्यध्या णस्तमुद्गीथमुपा-
द्गीथोपासनं समाप्तमित्यर्थः। चंसुर्यथाऽश्मा-
मनःप्राणादिसंवात उच्यते।
– अथ

उद्गीथाक्षरत्वेनाधिदैवतोपासना
आदित्यविषयिणी

[2]अथाधिदैवतम्। य एवासौ तपति तमुद्गीथमुपासीत। उद्यन्वा एष प्रजाभ्य उद्गायति। उद्यꣳस्तमो भयमपहन्ति। अपहन्ता ह वै भयस्य तमसो भवति य एवं वेद॥

(१) अथ अनन्तरं अधिदैवतं देवताविषयमुद्गीथोपासनं प्रस्तुतमित्यर्थः, अनेकधोपास्यत्वादुद्गीथस्य। य एवासौ आदित्यस्तपति तमुद्गीथमुपासीत, आदित्यदृष्ट्या उद्गीथमुपासीतेत्यर्थः। तमुद्गीथमित्युद्गीथशब्दोऽक्षरवाची सन् कथमादित्ये वर्तते इत्युच्यते—उद्यन् उद्गच्छन् वा एष प्रजाभ्यः प्रजार्थं उद्गायति प्रजानामन्नोत्पत्त्यर्थम्। न हि अनुद्यति तस्मिन् व्रीह्यादेः पक्तिः स्यात्, अत उद्गायतीवोद्गायति, यथैवोद्गाता अन्नार्थम्। अतः उद्गीथः सवितेत्यर्थः। किंच उद्यन् नैशं तमः तज्जं च भयं प्राणिनामपहन्ति। तमेवंगुणं सवितारं यो वेद सः अपहन्ता नाशयिता ह वै भयस्य जन्ममरणादिलक्षणस्याऽऽत्मन

---

* शेषं शंकरवत्।

(१) छाउ. १।२।११, १२.

(२) छाउ. १।२।१३; ब्रशंकर. ३।४।४५; रंग.

नैमिशी ( नैमिषी )

(१) छाउ. १।२।१४.

(२) छाउ. १।३।१; ब्रशंकर. भास्कर. रामानुज निंबार्क. श्रीकंठ. ४।१।६.

तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति ।

शंकर.

(२) 'आदित्यादिमतयश्चाङ्ग उपपत्तेः'—'य एवासौ तपति तमुद्गीथमुपासीत' 'लोकेषु पञ्चविधं सामोपासीत' ( छाउ. २।२।१ ) 'वाचि सप्तविधं सामोपासीत' ( छाउ. २।८।१ ) 'इयमेवर्गग्निः साम' ( छाउ. १।६।१ ) इत्येवमादिष्वङ्गावबद्धेषूपासनेषु संशयः—किं आदित्यादिषु उद्गीथादिदृष्टयो विधीयन्ते किंवा उद्गीथादिष्वेवाऽऽदित्यादिदृष्टय इति । तत्र अनियमः, नियमकारणाभावात् इति प्राप्तम् ।

एवं प्राप्ते ब्रूमः—आदित्यादिमतय एवाङ्गेषु उद्गीथादिषु क्षिप्येरन् । कुतः । उपपत्तेः । उपपद्यते ह्येवमपूर्वसंनिकर्षात् आदित्यादिमतिभिः संस्क्रियमाणेषूद्गीथादिषु कर्मसमृद्धिः ।

फलात्मकत्वाच्चाऽऽदित्यादीनां उद्गीथादिभ्यः कर्मात्मकेभ्यः उत्कर्षोपपत्तिः । आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु ।

* ब्रशंकर. ४।१।६

(३) वैशब्दोऽवधारणे । एष आदित्य उद्गच्छन्नेव प्रजानामर्थप्रकाशनं कुर्वन्नुद्गायतीव भवति । अपहन्तेत्यादि । अन्धकारादिप्रयुक्तभयापहन्ता भवतीत्यर्थः । रंग.

**समान उ एवायं चासौ च । उष्णोऽयमुष्णोऽसौ । स्वर इतीममाचक्षते, स्वर इति प्रत्यास्वर इत्यमुम् । तस्माद्वा एतमिमममुं चोद्गीथमुपासीत ॥**

(१) यद्यपि स्थानभेदात्प्राणादित्यौ भिन्नाविव लक्ष्येते तथापि न सतत्त्वभेदस्तयोः । कथम्—समान उ एव तुल्य एव प्राणः सवित्रा गुणतः सविता च प्राणेन । यस्मादुष्णोऽयं प्राणः उष्णश्चासौ सविता । किंच स्वर इतीमं प्राणमाचक्षते कथयन्ति, तथा स्वर इति प्रत्यास्वर इति चामुं सवितारम् । यस्मात्प्राणः स्वरत्येव, न पुनर्मृतः प्रत्यागच्छति । सविता त्वस्तमित्वा पुनरप्यहन्यहनि प्रत्यागच्छति, अतः प्रत्यास्वरः । अस्माद्गुणतो नामतश्च समानावितरेतरं प्राणादित्यौ । अतः सतत्त्वाभेदादेतं प्राणं इममनुं चाऽऽदित्यमुद्गीथमुपासीत ।

शंकर.

(२) प्राणस्य वायुरूपतया सदागतित्वेन प्रत्यागमनाभावान्न प्रत्यास्वरसंज्ञेति भावः । * रंग.

उद्गीथाक्षरे व्यानोपासना व्यानकार्यनिरूपणमहिना

**अथ खलु व्यानमेवोद्गीथमुपासीत । यद्वै प्राणिति स प्राणः । यदपानिति सोऽपानः । अथ यः प्राणापानयोः संधिः स व्यानः । यो व्यानः सा वाक् । तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥**

अथ खल्विति प्रकारान्तरेणोपासनमुद्गीथस्योच्यते । व्यानमेव वक्ष्यमाणलक्षणं प्राणस्यैव वृत्तिविशेषमुद्गीथमुपासीत । अधुना तत्सतत्त्वं निरूप्यते — यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति, स प्राणाख्यो वायोर्वृत्तिविशेषः । यत् अपानिति अपश्वसिति ताभ्यामेवान्तराकर्षति वायुं, सोऽपानः अपानाख्या वृत्तिः । ततः किमित्युच्यते — अथ यः उक्तलक्षणयोः प्राणापानयोः संधिस्तयोरन्तरा वृत्तिविशेषः स व्यानः । यः सांख्यादिशास्त्रप्रसिद्धः, श्रुत्या विशेषनिरूपणान्नासौ व्यान इत्यभिप्रायः । कस्मात्पुनः प्राणापानौ हित्वा महताऽऽयासेन व्यानस्यैवोपासनमुच्यते । वीर्यवत्कर्महेतुत्वात् । कथं वीर्यवत्कर्महेतुत्वमित्याह — यो व्यानः सा वाक्, व्यानकार्यत्वाद्वाचः । यस्मात् व्याननिर्वर्त्या वाक् तस्मादप्राणन् अनपानन् प्राणापानव्यापारौ अकुर्वन् वाचमभिव्याहरति उच्चारयति लोकः ।

† शंकर.

**यो वाक्सर्क् । तस्मादप्राणन्ननपानन्नृचमभिव्याहरति । यर्क्तत्साम । तस्मादप्राणन्ननपानन्साम गायति । यत् साम स उद्गीथः । तस्मादप्राणन्ननपानन्नुद्गायति ॥**

तथा वाग्विशेषां(षं) ऋचं, ऋक्संस्थं च साम, सामावयवं चोद्गीथं अप्राणन्ननपानन् व्यानेनैव निर्वर्तयतीत्यभिप्रायः । † शंकर.

* भास्कर. रामानुज. निंबार्क. श्रीकंठ. ब्रशंकरवत् ।

(१) छाउ. १।३।२.

* शेषं शंकरवत् ।

† रंग. शंकरवत् ।

(१) छाउ. १।३।३.

(२) छाउ. १।३।४.

**अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति । एतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥**

न केवलं वागाद्यभिव्याहरणमेव, अतः अस्मात् अन्यान्यपि यानि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि, यथाऽग्नेर्मन्थनं, आजेः मर्यादायाः सरणं धावनं, दृढस्य धनुष आयमनं आकर्षणं, अप्राणन्ननपानंस्तानि करोति । अतो विशिष्टो व्यानः प्राणादिवृत्तिभ्यः । विशिष्टस्योपासनं न्याय्यं फलवत्त्वाद्राजोपासनवत् । एतस्य हेतोः एतस्मात्कारणात् व्यानमेवोद्गीथमुपासीत, नान्यद् वृत्त्यन्तरम् । कर्मवीर्यवत्तरत्वं फलम् ।

* शंकर.

उद्गीथावयवाक्षरेषु प्राणवागन्नरूपैर्द्युमध्यस्थानपृथिवीरूपैरादित्यवाय्वग्निरूपैः सामवेदयजुर्वेदर्ग्वेदरूपैर्वोपासना

**अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति । प्राण एवोत् । प्राणेन ह्युत्तिष्ठति । वाग्गीः । वाचो ह गिर इत्याचक्षते । अन्नं थम् । अन्ने हीद्ँ सर्वँ स्थितम् ॥**

( १ ) अथाधुना खलु उद्गीथाक्षराण्युपासीत । भक्त्यक्षराणि मा भूवन्नित्यतो विशिनष्टि—उद्गीथ इति । उद्गीथनामाक्षराणीत्यर्थः । नामाक्षरोपासनेऽपि नामवत एवोपासनं कृतं भवेदमुकमिश्रा इति यद्वत् । प्राण एव उत्, उदित्यस्मिन्नक्षरे प्राणदृष्टिः । कथं प्राणस्योत्त्वमित्याह—प्राणेन ह्युत्तिष्ठति सर्वः, अप्राणस्यावसाददर्शनात् । अतः अस्त्युदः प्राणस्य च सामान्यम् । वाक् गीः । वाचो ह गिरः इत्याचक्षते शिष्टाः । तथा अन्नं थम् । अन्ने हीदं सर्वं स्थितम् । अतः अस्त्यन्नस्य थाक्षरस्य च सामान्यम् । शंकर.

( २ ) अन्नस्य सर्वस्थानत्वेन थकारवत्त्वसाम्यात् थशब्दे अन्नबुद्धिर्युज्यते इति भावः । † रंग.

* रंग. शंकरवत् ।

† शेषं शंकरवत् ।

(१) छाउ. १।३।५.

(२) छाउ. १।३।६.

[१] **द्यौरेवोत् । अन्तरिक्षं गीः । पृथिवी थम् । आदित्य एवोत् । वायुर्गीः । अग्निस्थम् । सामवेद एवोत् । यजुर्वेदो गीः । ऋग्वेदस्थम् । दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः । अन्नवानन्नादो भवति । य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥**

त्रयाणां श्रुत्युक्तानि सामान्यानि, तानि तेनानुरूपेण शेषेष्वपि द्रष्टव्यानि । द्यौरेवोत्, उच्चैःस्थानात् । अन्तरिक्षं गीः, गिरणाल्लोकानाम् । पृथिवी थं, प्राणिस्थानात् । आदित्य एवोत्, ऊर्ध्वत्वात् । वायुर्गीः, अग्न्यादीनां गिरणात् । अग्निस्थं, याज्ञीयकर्मावस्थानात् । सामवेद एवोत्, स्वर्गसंस्तुतत्वात् । यजुर्वेदो गीः, यजुषा प्रत्तस्य हविषो देवतानां गिरणात् । ऋग्वेदस्थं, ऋच्यध्यूढत्वात्साम्नः । उद्गीथाक्षरोपासनफलमधुनोच्यते — दुग्धे दोग्धि अस्मै साधकाय । का सा, वाक् । कं, दोहम् । कोऽसौ दोह इत्याह — यो वाचो दोहः । ऋग्वेदादिशब्दसाध्यं फलमित्यभिप्रायः । तद्वाचो दोहस्थं स्वयमेव वाग्दोग्धि आत्मानमेव दोग्धि । किंच अन्नवान् प्रभूतान्नः अन्नादश्च दीप्ताग्निः भवति, य एतानि यथोक्तानि एवं यथोक्तगुणानि उद्गीथाक्षराणि विद्वान् सन् उपास्ते उद्गीथ इति । * शंकर.

फलसमृद्ध्यर्थानुष्ठेयान्युपासनाङ्गानि

**अथ खल्वाशीःसमृद्धिः । उपसरणानीत्युपासीत । येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥**

( १ ) अथ खल्विदानीं आशीःसमृद्धिः आशिषः कामस्य समृद्धिः, यथा भवेत्तदुच्यते इति वाक्यशेषः । उपसरणानि उपसर्तव्यानि उपगन्तव्यानि, ध्येयानीत्यर्थः । कथम् । इति उपासीत एवमुपासीत । तद्यथा — येन साम्ना येन सामविशेषेण स्तोष्यन् स्तुतिं करिष्यन् स्यात् भवेत् उद्गाता, तत्साम उपधावेत् उपसरेत् चिन्तयेत् उत्पत्त्यादिभिः । शंकर.

( २ ) आशीःसमृद्धिहेतुभूतान्युपासनानीति मत्वा उपासनं कुर्यादित्यर्थः । केषामुपासनं कार्यमित्य-

* रंग. शंकरवत् ।

(१) छाउ. १।३।७.

(२) छाउ. १।३।८.

तस्मात् छन्दसां मन्त्राणां छादनाच्छन्दस्त्वं प्रसिद्धमेव ।
शंकर.

(२) छन्दोभिः कर्मविनियुक्तैर्वैदिकैर्मन्त्रैः ।
* रंग.

**तान्नु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि । ते नु विस्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥**

(१) तांस्तत्र देवान्कर्मपरान् मृत्युः यथा लोके मत्स्यघातको मत्स्यं उदके नातिगम्भीरे परिपश्येत् बडिशोदकस्रावोपायसाध्यं मन्यमानः, एवं पर्यपश्यत् दृष्टवान् मृत्युः, कर्मक्षयोपायेन साध्यान्देवान् मेने इत्यर्थः । क्वासौ देवान् ददर्शेत्युच्यते—ऋचि साम्नि यजुषि । ऋग्यजुःसामसंबन्धिकर्मणीत्यर्थः । ते नु देवा वैदिकेन कर्मणा संस्कृताः शुद्धात्मानः सन्तो मृत्योश्चिकीर्षितं विदितवन्तः । विदित्वा च ते ऊर्ध्वाः व्यावृत्ताः कर्मभ्यः ऋचः साम्नो यजुषः ऋग्यजुःसामसंबद्धात्कर्मणोऽभ्युत्थायेत्यर्थः । तेन कर्मणा मृत्युभयापगमं प्रति निराशाः तदपास्य अमृताभयगुणमक्षरं स्वरं स्वरशब्दितं प्राविशन्नेव प्रविष्टवन्तः । ओंकारोपासनपराः संवृत्ताः । एवशब्दोऽवधारणार्थः सन् समुच्चयप्रतिषेधार्थः । तदुपासनपराः संवृत्ता इत्यर्थः ।
शंकर.

(२) त्रयीविहितयज्ञादिकर्मभ्य उद्गताः कर्मनिर्मलीकृतान्तःकरणाः सन्तः ।
* रंग.

**यदा वा ऋचमाप्नोत्योमित्येवातिस्वरति । एवꣳ सामैवं यजुः । एष उ स्वरो यदेतदक्षरमेतदमृतमभयम् । तत्प्रविश्य देवा अमृता अभया अभवन् ॥**

(१) कथं पुनः स्वरशब्दवाच्यत्वमक्षरस्येत्युच्यते—यदा वा ऋचमाप्नोत्योमित्येवातिस्वरति, एवं सामैवं यजुः । एष उ स्वरः । कोऽसौ । यदेतदक्षरमेतदमृतमभयम् । तत् प्रविश्य यथागुणमेवामृता अभयाश्चाभवन् देवाः ।
शंकर.

(२) यदा वर्गादिकमारभते तदा ओमिति शब्दं करोतीत्यर्थः । तस्मात् एष ओंकारः स्वर इत्यर्थः ।
* रंग.

**स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ स्वरममृतमभयं प्रविशति । तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥**

स यः अन्योऽपि देववदेव एतत् अक्षरं एवं अमृताभयगुणं विद्वान् प्रणौति स्तौति । उपासनमेवात्र स्तुतिरभिप्रेता । स तथैव एतदेवाक्षरं स्वरममृतमभयं प्रविशति । तत्प्रविश्य च राजकुलं प्रविष्टानामिव राज्ञोऽन्तरङ्गबहिरङ्गतावत् न परस्य ब्रह्मणोऽन्तरङ्गबहिरङ्गताविशेषः । किं तर्हि । यदमृता देवाः येनामृतत्वेन यदमृता अभूवन्, तेनैवामृतत्वेन विशिष्टस्तदमृतो भवति, न न्यूनता नाप्यधिकता अमृतत्वे इत्यर्थः ।
‡ शंकर.

अनेकपुत्रफलः उद्गीथरूपप्रणवोपासनाविशेषः

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति । असौ वा आदित्य उद्गीथ एष प्रणवः । ओमिति ह्येष स्वरन्नेति ॥**

प्राणादित्यदृष्टिविशिष्टस्योद्गीथस्य उपासनमुक्तमेवानूद्य प्रणवोद्गीथयोरेकत्वं कृत्वा तस्मिन् प्राणरश्मिभेदगुणविशिष्टदृष्ट्या अक्षरस्योपासनं अनेकपुत्रफलं इदानीं वक्तव्यमित्यारभ्यते — अथ खलु य उद्गीथः स प्रणवो बह्वृचानां, यश्च प्रणवस्तेषां स एव छान्दोग्ये उद्गीथशब्दवाच्यः । असौ वा आदित्य उद्गीथ एष प्रणवः । प्रणवशब्दवाच्योऽपि स एव बह्वृचानां, नान्यः । उद्गीथ आदित्यः कथम् । उद्गीथाख्यमक्षरमोमित्येतत् एष हि यस्मात् स्वरन् उच्चारयन्, अनेकार्थत्वाद्धातूनां, अथवा स्वरन् गच्छन् एति, अतोऽसावुद्गीथः सविता ।
‡ शंकर.

---

* शेषं शंकरवत् ।

(१) छाउ. १।४।३; रंग. विस्त्वो ( विदित्वो ).

(२) छाउ. १।४।४.

* शेषं शंकरवत् ।

‡ रंग. शंकरवत् ।

(१) छाउ. १।४।५.

(२) छाउ. १।५।१; ब्रशंकर. ४।१।२; विज्ञान. ३।३।३७.

एतमु एवाहमभ्यगासिषं, तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच । रश्मीꣳस्त्वं पर्यावर्तयात् । बहवो वै ते भविष्यन्ति । इत्यधिदैवतम् ॥

तमेतं उ एव अहमभ्यगासिषं आभिमुख्येन गीतवानस्मि, आदित्यरश्म्यभेदं कृत्वा ध्यानं कृतवानस्मीत्यर्थः । तेन तस्मात्कारणात् मम त्वमेकोऽसि पुत्र इति ह कौषीतकिः कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाच उक्तवान् । अतो रश्मीन् आदित्यं च भेदेन त्वं पर्यावर्तयात् पर्यावर्तयेत्यर्थः, त्वंयोगात् । एवं बहवो वै ते तव पुत्रा भविष्यन्ति इत्यधिदैवतम् ।

* शंकर.

एतमु एवाहमभ्यगासिषं, तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच । प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥

एतमु एवाहमभ्यगासिषमित्यादि पूर्ववदेव । अतो वागादीन् मुख्यं च प्राणं भेदगुणविशिष्टमुद्गीथं पश्यन् भूमानं मनसा अभिगायतात् । पूर्ववदावर्तयेदित्यर्थः । बहवो वै मे मम पुत्रा भविष्यन्तीत्येवमभिप्रायः सन् इत्यर्थः । प्राणादित्यैकत्वोद्गीथदृष्टेः एकपुत्रत्वफलदोषेणापोदितत्वात् रश्मिप्राणभेददृष्टेः कर्तव्यता चोद्यतेऽस्मिन् काण्डे बहुपुत्रफलत्वार्थम् ।

* शंकर.

**अथाध्यात्मम् । य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत । ओमिति ह्येष स्वरन्नेति ॥**

( १ ) अथ अनन्तरं अध्यात्ममुच्यते । य एवायं मुख्यः प्राणः, तमुद्गीथमुपासीतेत्यादि पूर्ववत् । तथा ओमिति ह्येष प्राणोऽपि स्वरन्नेति ओमिति ह्यनुज्ञां कुर्वन्निव वागादिप्रवृत्त्यर्थमेतीत्यर्थः । न हि मरणकाले मुमूर्षोः समीपस्थाः प्राणस्योंकरणं शृण्वन्तीति । एतत्सामान्यादादित्येऽप्योंकरणमनुज्ञामात्रं द्रष्टव्यम् ।

* शंकर.

( २ ) 'वेधाद्यर्थभेदात्' — वाक्प्राणादिषु यः पाप्मवेधः, आदिपदात् दुष्टविषयसंबन्धश्च, तत्र हेतुरर्थभेदः । अर्थो भगवान्, तस्माद्भेदादित्यर्थः । आसन्यस्तु 'य एवाऽयं मुख्यः प्राणस्तमुपासीत' इति छान्दोग्ये उपास्यत्वेनोक्तः । 'सर्ववेदान्तप्रत्ययम्' इति न्यायात् वेदान्तेषूपास्यं ब्रह्मातिरिक्तं नोच्यते इत्यासन्योऽपि ब्रह्माभिन्नः । अत एव 'अपहतपाप्मा ह्येषः' इति सामगैः पठ्यते । अतस्तत्र न पाप्मवेध इति भावः ।

वल्लभ. ३।३।२५

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति । होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥**

( १ ) अथ खलु य उद्गीथ इत्यादि प्रणवोद्गीथैकत्वदर्शनमुक्तं, तस्यैतत्फलमुच्यते—होतृषदनात् । होता यत्रस्थः शंसति तत्स्थानं होतृषदनम् । हौत्रात्कर्मणः सम्यक्प्रयुक्तादित्यर्थः । न हि देशमात्रात्फलमाहर्तुं शक्यम् । किं तत् । हैवापि दुरुद्गीतं दुष्टमुद्गीतं उद्गानं कृतं, उद्गात्रा स्वकर्मणि क्षतं कृतमित्यर्थः । तत् अनुसमाहरति अनुसंधत्ते इत्यर्थः, चिकित्सयेव धातुवैषम्यसमीकरणमिति । शंकर.

( २ ) उक्तप्रणवोद्गीथैकत्वविज्ञानफलमाह—अथ खलु य इति । अपि दुरुद्गीथं वेदनहीनमप्युद्गीथमित्यर्थः । होतृषदनात् होतृकर्तृकोद्गीथप्रणवैक्यज्ञानात् इत्यर्थः । अयं भावः — उद्गीथप्रणवैकत्वविज्ञानं होत्राऽपि कर्तव्यं उद्गात्राऽपि कर्तव्यं, प्रणवे होतुः उद्गीथे उद्गातुश्च कर्तृत्वात् । तत्र उद्गातुरेतादृशैकत्वविज्ञानाभावेन दोषयुक्तमप्युद्गात्रा प्रयुज्यमानमुद्गीथं होता स्वीयोद्गीथप्रणवैकत्वविज्ञानमाहात्म्यात् अनुस-

* रंग. शंकरवत् ।

(१) छाउ. १।५।२; ब्रशंकर. ४।१।२; भास्कर. ४।१।२.

(२) छाउ. १।५।३; वल्लभ. ३।३।२५.

* रंग. शंकरवत् ।

(१) छाउ. १।५।४.

(२) छाउ. १।५।५; ब्रशंकर. ३।३।६३; भास्कर. ३।३।६३ दुरुद्गीतं ( दुरुद्गीथं ); रंग. भास्करवत्; रामानुज. ३।३।६१; निंबार्क. ३।३।६१ भास्करवत्; श्रीकंठ. ३।३।६१ भास्करवत्.

माहरति समादधाति अदुष्टं करोतीति । द्विरुक्तिर्वि-द्यासमाप्त्यर्था ।

रंग.

अधिदैवताध्यात्मिकसामाक्षरदृष्टिमहिता उद्गीथोपासना परमात्मरूपादित्यस्थचाक्षुषपुरुषविषयिणी सर्वफल-संपत्प्रयोजनवती

**ईयमेवर्क् । अग्निः साम । तदेतदेतस्या-मृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । इयमेव सा । अग्निरमः । तत्साम ॥**

अथेदानीं सर्वफलसंपत्त्यर्थमुद्गीथस्योपासनान्तरं विधित्स्यते—इयमेव पृथिवी ऋक् । ऋचि पृथिवीदृष्टिः कार्या । तथा अग्निः साम । साम्नि अग्निदृष्टिः । कथं पृथिव्यग्न्योर्ऋक्सामत्वमित्युच्यते—तदेतत् अग्न्याख्यं साम एतस्यां पृथिव्यां ऋचि अध्यूढं अधिगतं, उपरिभावेन स्थितमित्यर्थः । ऋचीव साम । तस्मात् अत एव कारणात् ऋचि अध्यूढमेव साम गीयते इदानीमपि सामगैः । यथा च ऋक्सामनी नात्यन्तं भिन्ने अन्योन्यं, तथा एतौ पृथिव्यग्नी । कथम् । इयमेव पृथिवी सा सामनामार्धशब्दवाच्या । इतरार्धशब्दवाच्योऽग्निः अमः । तदेतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वमापन्नं साम । तस्मान्नान्योन्यं भिन्नं पृथिव्यग्निद्वयं नित्यसंश्लिष्टं, ऋक् सामनी इव । तस्माच्च पृथिव्यग्न्योर्ऋक्सामत्व-मित्यर्थः । सामाक्षरयोः पृथिव्यग्निदृष्टिविधानार्थं 'इयमेव साऽग्निरमः' इति ( इति ) केचित् ।

* शंकर.

**अन्तरिक्षमेवर्क् । वायुः साम । तदेतदेतस्या-मृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीय-ते । अन्तरिक्षमेव सा । वायुरमः । तत्साम ॥**

**द्यौरेवर्क् । आदित्यः साम । तदेतदेतस्यामृच्य-ध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । द्यौरेव सा । आदित्योऽमः । तत्साम ॥**

**नक्षत्राण्येवर्क् । चन्द्रमाः साम । तदेतदेतस्यामृ-च्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । नक्षत्राण्येव सा । चन्द्रमा अमः । तत्साम ॥**

अन्तरिक्षमेवर्ग्वायुः सामेत्यादि पूर्ववत् । नक्षत्रा-णामधिपतिश्चन्द्रमाः, अतः स साम ।

शंकर.

**अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क् । अथ यन्नीलं परः कृष्णं तत्साम । तदेतदेतस्यामृच्य-ध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते ॥**

( १ ) अथ यदेतदादित्यस्य शुक्लं भाः शुक्ला दीप्तिः, सैव ऋक् । अथ यदादित्ये नीलं परः कृष्णं परः अतिशयेन कार्ष्ण्यं, तत्साम । तद्धि एकान्तसमा-हितदृष्टेर्दृश्यते ।

शंकर.

( २ ) अत्र परःशब्दः सान्तो द्रष्टव्यः ।

* रंग.

**अथ यदेवैतदादित्यस्य शुक्लं भाः सैव सा । अथ यन्नीलं परः कृष्णं तदमः । तत्साम ।**

**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥**

( १ ) ते एवैते भाःशुक्लकृष्णत्वे सा च अमश्च साम ।

अथ य एषोऽन्तरादित्ये आदित्यस्य अन्तः मध्ये हिरण्मयः हिरण्मय इव हिरण्मयः । न हि सुवर्ण-विकारत्वं देवस्य संभवति, ऋक्सामगेष्णत्वापहत-पाप्मत्वासंभवात् । न हि सौवर्णे अचेतने पाप्मादि-प्राप्तिरस्ति, येन प्रतिषिध्येत । चाक्षुषे च अग्रहणात् । अतो लुप्तोपम एव हिरण्मयशब्दः, ज्योतिर्मय इत्यर्थः ।

---

* छाउ. १।१।३, १।३।१ इत्यत्र श्रशंकरभाष्यं द्रष्ट-व्यम् । रंग. 'केचित्' इत्युक्तं मतं स्वीकृत्य शंकरवत् ।

(१) छाउ. १।६।१; ब्रशंकर. ३।३।३८, ३।४।२१, ४।१।६; भास्कर. ४।१।६; बलदेव. १।१।२०.

(२) छाउ. १।६।२—४; बलदेव. १।१।२०.

* शेषं शंकरवत् ।

(१) छाउ. १।६।५; बलदेव. १।१।२०.

(२) छाउ. १।६।६; ब्रशंकर. १।१।२०, १।२।१४, ३।२।२१, ३।३।३८; भास्कर. १।१।२०, ३।२।२२; रामा-नुज. १।१।२१; निंबार्क. १।१।२१; श्रीकंठ. १।१।२१, ३।३।२२; श्रीकर. १।१।२१, २।२।४२, ३।३।६, ७, २२, २३, ४।१।६; वल्लभ. १।१।१९, ३।२।२१; विज्ञान. १।१।२१; बलदेव. १।१।२०, ३।३।८.

उत्तरेष्वपि समाना योजना । पुरुषः पुरि शयनात् पूरयति वा स्वेनाऽऽत्मना जगदिति । दृश्यते निवृत्तचक्षुर्भिः समाहितचेतोभिर्ब्रह्मचर्यादिसाधनापेक्षैः । तेजस्विनोऽपि श्मश्रुकेशादयः कृष्णाः स्युरित्यतो विशिनष्टि—हिरण्यश्मश्रुर्हिरण्यकेश इति । ज्योतिर्मयान्येवास्य श्मश्रूणि केशाश्चेत्यर्थः । आप्रणखात्, प्रणखो नखाग्रं, नखाग्रेण सह सर्वः सुवर्ण इव भारूप इत्यर्थः ।

शंकर.

( २ ) 'अन्तस्तद्धर्मोपदेशात्' — 'य एषोऽन्तरादित्ये' 'य एषोऽन्तरक्षिणि' इति च श्रूयमाणः पुरुषः परमेश्वर एव, न संसारी । कुतः । तद्धर्मोपदेशात् । तस्य हि परमेश्वरस्य धर्मा इहोपदिष्टाः । तद्यथा — 'तस्योदिति नाम' इति श्रावयित्वा, अस्याऽऽदित्यपुरुषस्य नाम 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति सर्वपाप्मापगमेन निर्वक्ति । तदेव च कृतनिर्वचनं नाम अक्षिपुरुषस्याप्यतिदिशति 'यन्नाम तन्नाम' ( छाउ. १।७।५ ) इति । सर्वपाप्मापगमश्च परमात्मन एव श्रूयते — 'य आत्माऽपहतपाप्मा' ( छाउ. ८।७।१ ) इत्यादौ ।

* ब्रशंकर. १।१।२०

( ३ ) हिरण्मयः रमणीयः । रमणीयश्मश्रुकेशः, रमणीयसर्वावयव इत्यर्थः । × रंग.

( ४ ) 'दर्शयति च' — छान्दोग्ये तैत्तिरीये च मण्डलविद्या आम्नाता । सा एका भिन्ना वा इति संशये पूर्वः पक्षः—एकत्र 'य एषोऽन्तरादित्ये ... सर्व एव सुवर्णः' इत्यादि श्रूयते । अन्यत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' ( नाउ. १४ ) इति त्रयीमण्डलान्तर्वर्तिपुरुषान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तस्योपसंहारे 'सर्वो वै रुद्रः' इत्यारभ्य 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः' इत्यन्तेन सर्वात्मत्वं हिरण्यबाहुत्वं उमापतित्वं चाऽऽम्नायते । तत्र एकत्र 'सर्वो वै रुद्रः' इति सर्वात्मत्वं, अन्यत्र 'सर्वेषां लोकानामीष्टे' इति सर्वाधिपत्यं इति धर्मभेदः । तस्मान्न विद्यैक्यम् । इति प्राप्ते ब्रूमः — न भिन्ना विद्या 'अन्तरादित्ये' इति स्थानैक्यमेव विद्यैक्यं दर्शयति । तैत्तिरीये 'हिरण्मयः पुरुषः' इत्युपक्रमेण बाहुग्रहणस्योपलक्षणत्वात् उपसंहारेऽपि सर्वाङ्गसुवर्णत्वमेव विवक्षितम् । जगदीश्वरस्यापि तनुप्रवेशात् तदात्मत्वं युक्तमिति निरूपितम् । तस्मादुभयत्र एकस्य प्रतिपाद्यत्वात् उभयत्राप्युमापतित्वादिकमुपसंहार्यम् ।

* श्रीकंठ. ३।३।२२

( ५ ) आधुनिकास्तु अस्मिन्नधिकरणे छान्दोग्यप्रथमप्रपाठकस्थं 'य एषोऽन्तरादित्ये' इत्यादिवाक्यमप्युदाहरन्ति, 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति वाक्यशेषे च ब्रह्मधर्मोपदेशाद्ब्रह्मपरत्वमस्य वर्णयन्ति । तन्न, पाप्मभ्य उदयस्य पापविनाशरूपतया ब्रह्मधर्मत्वाभावात्, धर्मान्तरस्य चानुक्तत्वात्, प्रत्युत तेनैव लिङ्गेन चन्द्रनक्षत्रादिदेवताप्रकरणपठिततया च देवताविशेषत्वावधारणाच्च । न च 'आदित्यस्यान्तः' इति भेदनिर्देशादनुपपत्तिरिति वाच्यम् । आदित्यस्यान्तरपि आदित्याभिन्नस्य हिरण्यगर्भादेः स्मरणात् ।

विज्ञान. १।१।२१

**तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी । तस्योदिति नाम । स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥**

( १ ) तस्यैवं सर्वतः सुवर्णवर्णस्याप्यक्ष्णोर्विशेषः । कथम् । तस्य यथा कपेर्मर्कटस्य आसः कप्यासः । आसेरुपवेशनार्थस्य करणे घञ् । कपिपृष्ठान्तः येनोपविशति । कप्यास इव पुण्डरीकं अत्यन्ततेजस्वि, एवमस्य देवस्याक्षिणी । उपमितोपमानत्वान्न हीनोपमा । तस्य एवंगुणविशिष्टस्य गौणमिदं नाम उत् इति । कथं गौणत्वम् । स एष देवः सर्वेभ्यः पाप्मभ्यः, पाप्मना सह तत्कार्येभ्यः इत्यर्थः । 'य आत्माऽपहतपाप्मा' इत्यादि

---

* भास्कर, रामानुज. निंबार्क. श्रीकंठ. श्रीकर. वल्लभ. ब्रशंकरवत् ।

× शेषं शंकरवत् ।

* श्रीकर. श्रीकंठवत् ।

(१) छाउ. १।६।७; ब्रशंकर. १।१।२०, १।२।१४; भास्कर. १।१।२०; रामानुज. १।१।२१; ब्रमध्व. १।३।१४; श्रीकंठ. १।१।२१; श्रीकर. १।१।२१, १।२।१४, २।२।४२, ३।३।६; वल्लभ. १।१।१९; विज्ञान. १।१।२१; बलदेव. १।१।२०, ३।३।८, ६४.

वक्ष्यति। उदितः उत् इतः उद्गत इत्यर्थः। अतोऽसौ उन्नामा। तमेवंगुणसंपन्नमुन्नामानं यथोक्तेन प्रकारेण यो वेद सोऽप्येवमेव उदेति उद्गच्छति सर्वेभ्यः पाप्मभ्यः। ह वा इत्यवधारणार्थौ निपातौ। उदेत्येवेत्यर्थः।

शंकर.

(२) कं पिबतीति कपिः आदित्यः तेन अस्यते क्षिप्यते विकास्यते इति कप्यासम्। तथाऽऽह वाक्यकारः— 'आदित्यक्षितं वा श्रीमत्त्वात्' इति। यद्वा, कं पिबतीति कपिर्नालं, तस्मिन्नास्ते इति कप्यासम्। अपाचितादपि पङ्कजात् नालस्थस्य पुण्डरीकस्य शोभातिशयशालित्वात् तादृशमिह विवक्षितम्। यद्वा, कं जलम्। आस उपवेशने इति धातुरपिपूर्वकः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनादकारलोपः। के जले अप्यास्ते इति कप्यासं, सलिलस्थमित्यर्थः। एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्तिततत्वमभिप्रेत्य भगवता भाष्यकारेण वेदार्थसंग्रहे—'गम्भीराम्भःसमुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः' इत्यभिहितम्। मर्कटजघनसदृशपुण्डरीकसादृश्याद्यर्थान्तरं तु अश्लीलत्वादिदोषदुष्टतया वाक्यकृदनादृतत्वाद्भाष्यकारेणाप्यनादृतम्। यद्यपि अमरकोशे 'पुण्डरीकं सिताम्भोजम्' इत्यनुशिष्टं, तथाऽपि शबरस्वामिना नवमाध्याये 'सौद्रं चरुं निर्वपेच्छ्रियै श्रीकामः' इति विहितायामिष्टौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इति स्तरणार्थत्वेन विहितेषु पुण्डरीकेषु अतिदेशप्राप्तस्य 'दर्भैः स्तृणीत हरितैः' इति मन्त्रस्य दर्भपदस्थाने पुण्डरीकपदं, हरितपदस्थाने रक्तपदमूहितव्यमित्युक्तत्वाद्रक्ताम्भोजमेव पुण्डरीकमिति द्रष्टव्यम्। पापशब्दश्च पुण्यपापरूपोभयविधकर्मपरः। कृतानामपि कर्मणां फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्वभावविशेषोऽपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थ इति द्रष्टव्यम्। नीडात् शकुन्तस्योद्गमनवत् पापपञ्जरात् उद्गमनरूपमुख्यार्थस्य कुत्राप्यभावात् उद्गमनेन तत्संबन्धराहित्यं लक्ष्यते। पापशब्दश्च पुण्यपापरूपोभयविधकर्मपरः। सर्वपापोदितत्वं नाम कर्मवश्यतागन्धराहित्यमिति फलितोऽर्थः। कृतानामपि कर्मणां फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्वभावविशेषः अपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थ इति द्रष्टव्यम्।

रंग.

(३) 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्डरीकसादृश्यवर्णनार्थं, न तृतीयलोचनाभावद्योतनपरम्।

* श्रीकंठ. १।१।२१

**तस्यर्क्च साम च गेष्णौ। तस्मादुद्गीथः। तस्मात्त्वेवोद्गाता। एतस्य हि गाता। स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च। इत्यधिदैवतम्॥**

(१) तस्योद्गीथत्वं देवस्याऽऽदित्यादीनामिव विवक्षितत्वादाह—तस्यर्क्च साम च गेष्णौ पृथिव्याद्युक्तलक्षणे पर्वणी। सर्वात्मा हि देवः। परापरलोककामेशितृत्वादुपपद्यते पृथिव्यग्न्यृक्सामगेष्णत्वम्। सर्वयोनित्वाच्च। यत एवमुन्नामा चासौ ऋक्सामगेष्णश्च तस्मादृक्सामगेष्णत्वप्राप्तमुद्गीथत्वमुच्यते परोक्षेण, परोक्षप्रियत्वाद्देवस्य—तस्मादुद्गीथ इति। तस्मात्त्वेव हेतोः उदं गायतीत्युद्गाता। यस्माद्धि एतस्य यथोक्तस्य उन्नाम्नो गाता असौ, अतो युक्ता उद्गातेतिनामप्रसिद्धिरुद्गातुः। स एष देव उन्नामा ये चामुष्मादादित्यात्पराञ्चः परागञ्चनादूर्ध्वा लोकाः, तेषां लोकानां च ईष्टे, न केवलमीशितृत्वमेव, चशब्दाद्धारयति च, 'स दाधार पृथिवीं द्यामुतेमाम्' इत्यादिमन्त्रवर्णात्। किंच देवकामानामीष्टे। इति एतत् अधिदैवतं देवताविषयं देवस्योद्गीथस्य स्वरूपमुक्तम्।

शंकर.

(२) पृथिव्यग्न्यादित्यदृष्टिविशिष्टतया प्राक्प्रस्तुते ऋक्सामे एतस्य गानरूपे। यद्यपि ऋचो गानाश्रयत्वेऽपि न गानरूपत्वं, तथाऽप्यभेदोपचारेण गेष्णत्वोक्तिर्द्रष्टव्या।

---

* श्रीकर. श्रीकंठवत्।

(१) छाउ. १।६।८; ब्रशंकर. १।१।२०, ३।२।२१, ३।३।३८; भास्कर. १।१।२०; रामानुज. १।१।२१; श्रीकर. १।१।२०, ३।३।६, २२.

अव्युत्पन्नो गेष्णशब्दः । व्यत्ययेन पुंस्त्वम् । अग्नीन्द्रादि-प्रतिपादकऋक्सामगेष्णत्वोक्त्या सर्वात्मकत्वमुक्तं भवति । यस्मादुन्नामकत्वं परात्मनः, अत एव तद्गान-रूपत्वात् द्वितीयभक्तेरुद्गीथसंज्ञत्वं तद्गातुरुद्गातृ-संज्ञावत्त्वं चेत्यर्थः । यद्वा, परमात्मन उन्नामकत्वादृक्-सामगेष्णत्वाच्च उद्गेष्णस्य परमात्मनः उद्गीथत्वमुप-पद्यते, तत उद्गीथे परमात्मदृष्टिर्युक्तेत्यर्थः । स एष हिरण्मयः पुरुषः आदित्यमण्डलोर्ध्ववर्तिलोकानां देवभोग्यभोगोपकरणभोगस्थानानां च नियन्तेत्यर्थः ।

रंग.

[१]अथाध्यात्मम् । वागेवर्क् । प्राणः साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । वागेव सा । प्राणोऽमः । तत्साम ॥

अथाधुनाऽध्यात्ममुच्यते । वागेव ऋक्, प्राणः साम, अधरोपरिस्थानत्वसामान्यात् । प्राणो घ्राणमुच्यते सह वायुना । वागेव सा प्राणोऽमः इत्यादि पूर्ववत् ।

शंकर.

[२]चक्षुरेवर्क् । आत्मा साम । तदेतदेतस्यामृच्य-ध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । चक्षुरेव सा । आत्माऽमः । तत्साम ॥

चक्षुरेवर्क्, आत्मा साम । आत्मेति च्छायात्मा तत्स्थत्वात्साम ।

शंकर.

[३]श्रोत्रमेवर्क् । मनः साम । तदेतदेतस्यामृ-च्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । श्रोत्रमेव सा । मनोऽमः । तत्साम ॥

श्रोत्रमेवर्क्, मनः साम । श्रोत्रस्याधिष्ठातृत्वान्मनसः सामत्वम् ।

शंकर.

[४]अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क् । अथ यन्नीलं परः कृष्णं तत्साम । तदेतदेतस्यामृच्यध्यूढꣳ साम । तस्मादृच्यध्यूढꣳ साम गीयते । अथ यदेवैतदक्ष्णः शुक्लं भाः सैव सा । अथ यन्नीलं परः कृष्णं तदमः । तत्साम ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क् । अथ यन्नीलं परः कृष्णमादित्य इव दृक्शक्त्यधिष्ठानं तत्साम ।

शंकर.

(१) छाउ. १।७।१; ब्रशंकर. १।१।२०.
(२) छाउ. १।७।२.
(३) छाउ. १।७।३.
(४) छाउ. १।७।४.

[१]अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् । तत्साम । तदुक्थम् । तद्यजुः । तद्ब्रह्म । तस्यैतस्य तदेव रूपं यदमुष्य रूपम् । यावमुष्य गेष्णौ तौ गेष्णौ । यन्नाम तन्नाम ॥

( १ ) अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते । पूर्ववत् । सैवर्क् अध्यात्मं वागाद्या पृथिव्याद्या चाधि-दैवतम् । प्रसिद्धा च ऋक् पादबद्धाक्षरात्मिका । तथा साम । उक्थसाहचर्याद्वा स्तोत्रं साम, ऋक् शस्त्रं उक्थादन्यत् । तथा यजुः स्वाहास्वधावषडादि सर्वमेव वाग्यजुः, तत्स एव । सर्वात्मकत्वात्सर्वयोनित्वाच्चेति ह्यवोचाम । ऋगादिप्रकरणात् तद्ब्रह्मेति त्रयो वेदाः । तस्यैतस्य चाक्षुषस्य पुरुषस्य तदेव रूपमतिदिश्यते । किं तत् । यदमुष्याऽऽदित्यपुरुषस्य हिरण्मय इत्यादि यदधिदैवतमुक्तम् । यौ अमुष्य गेष्णौ पर्वणी तावेवास्यापि चाक्षुषस्य गेष्णौ । यच्चामुष्य नाम उदिति उद्गीथ इति च, तदेवास्य नाम । स्थानभेदात् रूपगुण-नामातिदेशात् ईशितृत्वविषयभेदव्यपदेशाच्च आदित्य-चाक्षुषयोर्भेद इति चेत् । न । अमुनाऽनेनैवेत्येक-स्योभयात्मप्राप्त्यनुपपत्तेः । द्विधाभावेनोपपद्यते इति चेत् । वक्ष्यति हि ‘ स एकधा भवति त्रिधा भवति ’ इत्यादि । न । चेतनस्यैकस्य निरवयवत्वाद्द्विधाभावा-नुपपत्तेः । तस्मादध्यात्माधिदैवतयोरेकत्वमेव । यत्तु रूपाद्यतिदेशो भेदकारणमवोचः, न तद्भेदावगमाय । किं तर्हि, स्थानभेदाद्भेदाशङ्का मा भूदित्येवमर्थम् ।

शंकर.

( २ ) चक्षुषि यः पुरुषो योगिभिर्दृश्यते स एव ऋग्यजुःसामात्मोक्थादिशस्त्रात्मा ब्रह्म चेत्यर्थः ।

(१) छाउ. १।७।५; ब्रशंकर. १।१।२०, ३।२।३१; ३।३।२२; भास्कर. १।१।२०, ३।२।३२, ३।३।२२; रामानुज. १।१।२१, ३।३।२२; निंबार्क. ३।३।२२; श्रीकर. १।१।२१, ३।३।६; वल्लभ. १।१।१९, ३।२।३१; बलदेव. १।१।२०.

अत्रोक्थस्य त्र्यवरेक्षया पृथक्परिगणनं गोबलीवर्दन्यायेन द्रष्टव्यम्।

* रंग.

**स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति। तद्य इमे वीणायां गायन्त्येतं ते गायन्ति। तस्मात्ते धनसनयः॥**

स एष चाक्षुषः पुरुषः ये चैतस्मात् आध्यात्मिकादात्मनः अर्वाञ्चः अर्वाग्गताः लोकाः, तेषां च ईष्टे मनुष्यसंबन्धिनां च कामानाम्। तत् तस्मात् ये इमे वीणायां गायन्ति गायकाः, ते एतमेव गायन्ति। यस्मादीश्वरं गायन्ति तस्मात्ते धनसनयः धनलाभयुक्ताः धनवन्त इत्यर्थः।

\+ शंकर.

**अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति। सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ता२ँश्चाऽऽप्नोति देवकामा२ँश्च॥**

अथ य एतदेवं विद्वान् यथोक्तं देवमुद्गीथं विद्वान् साम गायति, उभौ स गायति चाक्षुषमादित्यं च। तस्यैवंविदः फलमुच्यते — सोऽमुनैव आदित्येन स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाऽऽप्नोति, आदित्यान्तर्गतदेवो भूत्वेत्यर्थः, देवकामांश्च। + शंकर.

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ता२ँश्चाऽऽप्नोति मनुष्यकामा२ँश्च। तस्मादु हैवंविदुद्गाता ब्रूयात्॥**

**कं ते काममागायानीति। एष ह्येव कामागानस्येष्टे य एवं विद्वान्साम गायति साम गायति॥**

अथ अनेनैव चाक्षुषेणैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाऽऽप्नोति मनुष्यकामांश्च, चाक्षुषो भूत्वेत्यर्थः।

---

* शेषं शंकरवत्।

\+ रंग. शंकरवत्।

(१) छान्द. १।७।६; ब्रशंकर. १।१।२०, ३।२।३१; भास्कर. १।१।२०.

(२) छान्द. १।७।७.

(३) छान्द. १।७।८, ९; ब्रशंकर. ३।३।३८, ३।४।२२, ४६, ४।१।६; रंग. कामाप्य ( कामगा ); श्रीकंठ. ३।४।४५; श्रीकर. ३।३।४२; बलदेव. ३।४।४६.

तस्मादु हैवंविदुद्गाता ब्रूयाद्यजमानं, कमिष्टं ते तव काममागायानीति। एष हि यस्मात् उद्गाता कामागानस्य उद्गानेन कामं संपादयितुं ईष्टे समर्थ इत्यर्थः। कोऽसौ। य एवं विद्वान् साम गायति साम गायति। द्विरुक्तिरुपासनसमाप्त्यर्था।

* शंकर.

उद्गीथाक्षरे परमाकाशरूपपरमात्मोपासना परोवरीयस्त्वगुणविषयिणी साख्याना

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति। ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति॥**

(१) अनेकधोपास्यत्वादक्षरस्य प्रकारान्तरेण परोवरीयस्त्वगुणफलमुपासनान्तरमानिनाय। इतिहासस्तु सुखावबोधनार्थः। त्रयः त्रिसंख्याकाः। ह इत्यैतिह्यार्थः। उद्गीथे उद्गीथज्ञानं प्रति कुशलाः निपुणाः बभूवुः। कस्मिंश्चिद्देशे काले च निमित्ते वा समेतानामित्यभिप्रायः। न हि सर्वस्मिन् जगति त्रयाणामेव कौशलमुद्गीथादिविज्ञाने। श्रूयन्ते ह्युषस्तिजानश्रुतिकैकेयप्रभृतयः सर्वज्ञकल्पाः। के ते त्रय इत्याह — शिलकः नामतः, शलावतोऽपत्यं शालावत्यः। चिकितायनस्यापत्यं चैकितायनः, दल्भगोत्रो दाल्भ्यः द्व्यामुष्यायणो वा। प्रवाहणः नामतः, जीवलस्यापत्यं जैवलिः। इति एते त्रयः। ते ह ऊचुरन्योन्यं उद्गीथे वै कुशलाः निपुणाः इति प्रसिद्धाः स्मः, अतो हन्त यद्यनुमतिर्भवतां, उद्गीथ उद्गीथज्ञाननिमित्तां कथां विचारणां पक्षप्रतिपक्षोपन्यासेन वदामः वादं कुर्म इत्यर्थः। तथा च तद्विद्यसंवादे विपरीतग्रहणनाशः अपूर्वविज्ञानोपजनः संशयनिवृत्तिश्चेति। अतस्तद्विद्यसंयोगः कर्तव्य इति च इतिहासप्रयोजनम्। दृश्यते हि शिलकादीनाम्।

शंकर.

(२) त्रय एव उद्गीथविज्ञाने निपुणा बभूवुरित्यर्थः। + रंग.

---

* रंग. शंकरवत्।

\+ शेषं शंकरवत्।

(१) छान्द. १।८।१.

तथेति ह समुपविविशुः । स ह प्रवाहणो जैवलिरुवाच । भगवन्तावग्रे वदताम् । ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥

तथेत्युक्त्वा ते समुपविविशुर्ह उपविष्टवन्तः किल । तत्र राज्ञः प्रागल्भ्योपपत्तेः स ह प्रवाहणो जैवलिरुवाचेतरौ, भगवन्तौ पूजावन्तौ अग्रे पूर्वं वदताम् । ब्राह्मणयोरिति लिङ्गाद्राजाऽसौ । युवयोर्ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामि । अर्थरहितामित्यपरे, वाचमिति विशेषणात् । * शंकर.

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति । पृच्छेति होवाच ॥

उक्तयोः स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच, हन्त यद्यनुमंस्यसे, त्वा त्वां पृच्छानि । इत्युक्त इतरः पृच्छेति होवाच । शंकर.

का साम्नो गतिरिति । स्वर इति होवाच । स्वरस्य का गतिरिति । प्राण इति होवाच । प्राणस्य का गतिरिति । अन्नमिति होवाच । अन्नस्य का गतिरिति । आप इति होवाच ॥

लब्धानुमतिराह—का साम्नः प्रकृतत्वादुद्गीथस्य । उद्गीथो ह्यत्रोपास्यत्वेन प्रकृतः । 'परोवरीयांसमुद्गीथम्' इति च वक्ष्यति । गतिः आश्रयः, परायणमित्येतत् । एवं पृष्टो दाल्भ्य उवाच—स्वर इति, स्वरात्मकत्वात्साम्नः । यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति युक्तं, मृदाश्रय इव घटादिः । स्वरस्य का गतिरिति, प्राण इति होवाच । प्राणनिष्पाद्यो हि स्वरः, तस्मात्स्वरस्य प्राणो गतिः । प्राणस्य का गतिरिति, अन्नमिति होवाच । अन्नावष्टम्भो हि प्राणः, 'शुष्यति वै प्राण ऋतेऽन्नात्' इति श्रुतेः, 'अन्नं दाम' ( बृउ. २।२।१ ) इति च । अन्नस्य का गतिरिति, आप इति होवाच, अप्संभवत्वादन्नस्य । × शंकर.

अपां का गतिरिति । असौ लोक इति होवाच । अमुष्य लोकस्य का गतिरिति । न स्वर्गं लोकमति नयेदिति होवाच । स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः । स्वर्गसꣳस्तावꣳ हि सामेति ॥

अपां का गतिरिति, असौ लोक इति । अमुष्माद्धि लोकात् वृष्टिः संभवति । अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्य उवाच — स्वर्गं अमुं लोकं अतीत्य आश्रयान्तरं साम न नयेत्कश्चिदिति होवाच आह । अतो वयमपि स्वर्गं लोकं साम अभिसंस्थापयामः, स्वर्गलोकप्रतिष्ठं साम जानीम इत्यर्थः । स्वर्गसंस्तावं स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्साम स्वर्गसंस्तावं हि यस्मात् । 'स्वर्गो वै लोकः साम वेदः' इति हि श्रुतिः । * शंकर.

तꣳ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम । यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥

तमितरः शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच अप्रतिष्ठितं असंस्थितं परोवरीयस्त्वेन असमाप्तगति सामेत्यर्थः । वा इत्यागमं स्मारयति किलेति च । दाल्भ्य ते तव साम । यस्त्वसहिष्णुः सामवित् एतर्हि एतस्मिन् काले ब्रूयात्कश्चित् विपरीतविज्ञानं अप्रतिष्ठितं साम प्रतिष्ठितमिति, एवंवादापराधिनो मूर्धा शिरः ते विपतिष्यति विस्रष्टं पतिष्यतीति । एवमुक्तस्यापराधिनस्तथैव तद्विपतेत्, न संशयः । न त्वहं ब्रवीमीत्यभिप्रायः । ननु मूर्धपाताहं चेदपराधं कृतवान्, अतः परेणानुक्तस्यापि पतेन्मूर्धा, न चेदपराधी उक्तस्यापि नैव पतति । अन्यथा अकृताभ्यागमः कृतनाशश्च स्याताम् । नैष दोषः । कृतस्य कर्मणः शुभाशुभस्य फलप्राप्तेर्देशकालनिमित्तापेक्षत्वात् । तत्रैवं सति मूर्धपातनिमित्तस्याप्यज्ञानस्य पराभिव्याहारनिमित्तापेक्षत्वमिति । * शंकर.

हन्ताहमेतद्भगवतो वेदानीति । विद्धीति हो-

---

* रंग 'अपरे' इत्युक्तमतवर्जं शंकरवत् ।

× रंग. शंकरेण यतार्थम् । सामशब्दस्य उद्गीथपरत्वं न व्याख्यातम् ।

(१) छाउ. १।८।२.

(२) छाउ. १।८।३.

(३) छाउ. १।८।४.

* रंग. शंकरवत् ।

(१) छाउ. १।८।५. (२) छाउ. १।८।६.

(३) छाउ. १।८।७; रंग. द्भगवतो ( द्भगवत्तो ); विज्ञान. १।१।२२.

**वाच । अमुष्य लोकस्य का गतिरिति । अयं लोक इति होवाच । अस्य लोकस्य का गतिरिति । न प्रतिष्ठां लोकमति नयेदिति होवाच । प्रतिष्ठां वयं लोकꣳ सामानि सꣳस्थापयामः । प्रतिष्ठासꣳस्तावꣳ हि सामेति ॥**

( १ ) एवमुक्तो दाल्भ्य आह—हन्ताहमेतद्भगवतो वेदानि यत्प्रतिष्ठं साम । इत्युक्तः प्रत्युवाच शालावत्यः – विद्धीति होवाच । अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्येन शालावत्यः अयं लोक इति होवाच । अयं हि लोको यागदानहोमादिभिरमुं लोकं पुष्यतीति । 'अतः प्रदानं देवा उपजीवन्ति' इति हि श्रुतयः । प्रत्यक्षं हि सर्वभूतानां धरणी प्रतिष्ठेति । अतः साम्नोऽप्ययं लोकः प्रतिष्ठैवेति युक्तम् । अस्य लोकस्य का गतिरित्युक्त आह शालावत्यः—न प्रतिष्ठामिमं लोकमतीत्य नयेत्साम कश्चित् । अतो वयं प्रतिष्ठां लोकं सामाभि संस्थापयामः । यस्मात्प्रतिष्ठासंस्तावं हि प्रतिष्ठात्वेन संस्तुतं सामेत्यर्थः । 'इयं वै रथन्तरम्' इति च श्रुतिः ।

शंकर.

( २ ) स्वर्गस्य ज्योतिश्चक्रलग्नतया बम्भ्रम्यमाणत्वेन प्रतिष्ठात्वाभावेऽपि पृथिव्यास्तु स्थिरत्वात्प्रतिष्ठात्वमित्युक्तवानित्यर्थः । * रंग.

**तꣳ ह प्रवाहणो जैवलिरुवाच । अन्तवद्वै किल ते शालावत्य साम । यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति । हन्ताहमेतद्भगवतो वेदानीति । विद्धीति होवाच ॥**

तं एवमुक्तवन्तं ह प्रवाहणो जैवलिरुवाच—अन्तवद्वै किल ते शालावत्य सामेत्यादि पूर्ववत् । ततः शालावत्य आह— हन्ताहमेतद्भगवतो वेदानीति । विद्धीति होवाच इतरः । × शंकर.

**अस्य लोकस्य का गतिरिति । आकाश इति होवाच । सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायान् । आकाशः परायणम् * ॥**

( १ ) अनुज्ञात आह—अस्य लोकस्य का गतिरिति । आकाश इति होवाच प्रवाहणः । आकाश इति च पर आत्मा, 'आकाशो वै नाम' इति श्रुतेः । तस्य हि कर्म सर्वभूतोत्पादकत्वम् । तस्मिन्नेव हि भूतप्रलयः । 'तत्तेजोऽसृजत' 'तेजः परस्यां देवतायाम्' इति हि वक्ष्यति । सर्वाणि ह वा इमानि भूतानि स्थावरजङ्गमानि आकाशादेव समुत्पद्यन्ते तेजोबन्नादिक्रमेण, सामर्थ्यात् । आकाशं प्रत्यस्तं यन्ति प्रलयकाले तेनैव विपरीतक्रमेण । हि यस्मात् आकाश एव एभ्यः सर्वेभ्यो भूतेभ्यः ज्यायान् महत्तरः, अतः स सर्वेषां भूतानां परमयनं परायणं प्रतिष्ठा त्रिष्वपि कालेष्वित्यर्थः । शंकर.

( २ ) ज्यायस्त्वं नाम सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षः । + रंग.

( ३ ) तस्मात् सर्वभूतकारणत्वं न भूताकाशप्राणयोरिति सिद्धान्तः । ननु भूताकाश इत्युपपदग्रहणेन किमिति चेत्, परमाकाशस्य परप्रकृतिरूपस्य सर्वभूतकारणत्वसद्भावात् सप्रयोजनम् । तर्हि परमेश्वर इति कथं निर्णयः । तदभेदात् । श्रीकंठ. १।१।२३

( ४ ) आधुनिकास्तु अस्मिन्नधिकरणे छान्दोग्यप्रथमप्रपाठकस्थवाक्यमिदमुदाहरन्ति— 'अमुष्य लोकस्य का गतिरित्ययं लोक इति' 'अस्य लोकस्य......समुत्पद्यन्ते' इति । अत्र सर्वभूतकारणत्वं ब्रह्मलिङ्गमित्याहुः । तन्न, प्रकरणादिशून्यात्केवललिङ्गात् श्रुतेर्बलवत्त्वात् । न ह्यत्र वाक्ये अस्मदुदाहृतवाक्य-

* शेषं. शंकरवत् ।

× रंग. शंकरवत् ।

(१) छान्द. १।८।८; रंग. द्भगवतो ( द्भगवत्तो ).

(२) छान्द. १।९।१; ब्रसंकर. १।१।२२, १।३।१७, १।४।२५, ३।३।७; भास्कर. १।१।२२, १।४।२४,

* विज्ञानभिन्नेषु सर्वेषु ब्रह्मसूत्रभाष्येषु वाक्यस्यास्य परमात्मपरत्वम् ।

+ शेषं शंकरवत् ।

३।३।७ ह्येवैभ्यो ( ह्येवैतेभ्यो ) परायणं ( परायणः ); रामानुज. १।१।२३, १।३।१६; निंबार्क. १।१।२३, १।३।१७; ब्रमध्व. १।१।२२; श्रीकंठ १।१।२ ( पृ. १२३ ), १।१।२३; श्रीकर. १।१।२ ( पृ. ३० ), १।१।२३, १।३।१७, ४१, १।४।२५; वल्लभ. १।१।२१, १।४।२५; विज्ञान. १।१।२२; बलदेव. १।१।२२, १।४।१४, ३।३।८.

चङ्क्रमः प्रकरणं श्रुतिर्वा अस्ति । ‘ श्रुतिलिङ्ग ’ इत्यादिपूर्वमीमांसासूत्रेण च शब्दापेक्षया लिङ्गस्य दुर्बलत्वमवधारितम् । नाप्यत्र ब्रह्मलिङ्गमस्ति । ‘ अस्य लोकस्य का गतिः ’ इत्यत्र हि भूलोकस्थजना एवोक्ताः, प्रत्युत्तरे भूतानीत्युक्तत्वात् । एवं च ‘ सर्वाणि भूतानि ’ इत्यादि ब्रह्मलिङ्गं न भवति आकाशात् वृष्ट्यादिद्वारा एषां भूलोकस्थानां सर्वभूतानां सृष्टिस्थितिसंहारादिति ।

विज्ञान. १।१।२२

स एष परोवरीयानुद्गीथः । स एषोऽनन्तः । परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयाꣳसमुद्गीथमुपास्ते ॥

( १ ) यस्मात्परं परं वरीयः, वरीयसोऽप्येष वरः, परश्च वरीयांश्च परोवरीयान् उद्गीथः परमात्मा संवृत्त इत्यर्थः । अत एव स एषः अनन्तः अविद्यमानान्तः । तमेतं परोवरीयांसं परमात्मभूतमनन्तं एवं विद्वान्परोवरीयांसमुद्गीथमुपास्ते, तस्यैतत्फलमाह — परोवरीयः परं परं वरीयः विशिष्टतरं जीवनं हास्य विदुषो भवति दृष्टं फलं, अदृष्टं च परोवरीयसः उत्तरोत्तरविशिष्टतरानेव ब्रह्माकाशान्तान् लोकान् जयति, य एतदेवं विद्वानुद्गीथमुपास्ते । शंकर.

( २ ) अत्र परः शब्दः सकारान्तो द्रष्टव्यः । ततश्चानन्तस्याऽऽकाशशब्दितस्य परमात्मन एव सामगतिपरंपराविश्रान्तिभूमित्वान्मत्पक्षे ‘ अन्तवद्वै किल ते साम ’ इत्युक्तोऽन्तवत्त्वदोषो न प्रसरतीति भावः ।

* रंग.

( ३ ) परोवरीयस्त्वगुणकोपासना तु समस्तोद्गीथविशेष्यिका । विज्ञान. ३।३।७

तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच । यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥

( १ ) किंच तमेतं उद्गीथं विद्वानतिधन्वा नामतः, शुनकस्यापत्यं शौनकः उदरशाण्डिल्याय शिष्याय एतं उद्गीथदर्शनं उक्त्वा उवाच—यावत् ते तव प्रजायां प्रजासंततौ इत्यर्थः, एनं उद्गीथं त्वत्संततिजा वेदिष्यन्ते ज्ञास्यन्ति, तावन्तं कालं परोवरीयो हैभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्यः उत्तरोत्तरविशिष्टतरं जीवनं तेभ्यो भविष्यति । शंकर.

( २ ) उदरशाण्डिल्याय ऋषये । उदरशब्देन संततिर्लक्ष्यते, संततिमाली शाण्डिल्य इत्यर्थः । यावन्तः पुरुषाः । * रंग.

तथाऽमुष्मिँल्लोके लोक इति । स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥

( १ ) तथा अदृष्टेऽपि परलोके अमुष्मिन् परोवरीयान् लोको भविष्यतीत्युक्तवान् शाण्डिल्यायातिधन्वा शौनकः । स्यादेतत्फलं पूर्वेषां महाभाग्यानां, न ऐदंयुगीनानामित्याशङ्कानिवृत्तये आह—स यः कश्चिदेतमेवं विद्वानुद्गीथमेतर्ह्युपास्ते, तस्याप्येवमेव परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति, तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति । शंकर.

( २ ) तथा अमुष्मिन्नपि परलोके भविष्यतीत्यर्थः । परोवरीयो जीवनमित्यनुषङ्गः । लोके लोके इति वीप्सायां द्विर्वचनम् । इत्यतिधन्वोवाचेति पूर्वेणान्वयः । अत इदानींतनानामपि तद्विदां तत्फलमस्तीत्याह—स य एतमेवमिति । द्विरुक्तिर्विद्यासमाप्त्यर्था । रंग.

प्रस्तावोद्गानप्रतिहारविषयिणी क्रमेण प्राणादित्यान्नरूपदेवतोपासना, आपदि प्रतिषिद्धान्नानुमतिपरमाख्यानम्

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥

---

* शंकरवत् ।

(१) छाउ. १।९।२; अशंकर. १।१।२२, ३।३।७; रंग. एतदेवं ( एतमेवं ); अमध्व. १।१।२२; विज्ञान. ३।३।७; बलदेव. ३।३।८.

(२) छाउ. १।९।३; रंग. यावत्त ( यावन्त ).

* शेषं शंकरवत् ।

(१) छाउ. १।९।४; रंग. द्वितीयमपि लोकपदं सप्तम्यन्तम् ।

(२) छाउ. १।१०।१; अशंकर. ३।४।२८; श्रीकंठ.

( १ ) उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमप्युपासनं वक्तव्यमिति इदमारभ्यते । आख्यायिका तु सुखावबोधार्था । मटचीहतेषु, मटच्यः अशनयः, ताभिर्हतेषु नाशितेषु कुरुषु, कुरुसस्येष्वित्यर्थः । ततो दुर्भिक्षे जाते आटिक्या अनुपजातपयोधरादिस्त्रीव्यञ्जनया सह जायया उषस्तिर्ह नामतः, चक्रस्यापत्यं चाक्रायणः । इभो हस्ती, तमर्हतीति इभ्यः ईश्वरः हस्त्यारोहो वा, तस्य ग्रामः इभ्यग्रामः तस्मिन् प्रद्राणकः अन्नालाभात्, द्रा कुत्सायां गतौ, कुत्सितां गतिं गतः, अन्त्यावस्थां प्राप्त इत्यर्थः । उवास उषितवान् कस्यचिद्गृहमाश्रित्य ।

शंकर.

( २ ) ब्रह्मविद्याया निष्पत्तये प्राणानामनवसादं काङ्क्षन् उवास । चक्रस्य गोत्रापत्यमित्यर्थे अश्वादित्वात्फञि चाक्रायण इति रूपम् । ×रंग.

**स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे । तꣳ होवाच । नेतोऽन्ये विद्यन्ते यच्चये * म इम उपनिहिता इति ॥**

( १ ) सः अन्नार्थमटन् इभ्यं कुल्माषान् कुत्सितान् माषान् खादन्तं भक्षयन्तं यदृच्छयोपलभ्य, बिभिक्षे याचितवान् । तमुषस्तिं होवाच इभ्यः—न इतः अस्मात् मया भक्ष्यमाणात् उच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते, यत् चये राशौ मे मम उपनिहिताः प्रक्षिप्ता इमे भाजने, किं करोमि ।

शंकर.

( २ ) 'कुल्माषादञ्' ( पा. सू. ५।२।८३ ) इति निर्देशात् कुत्सितमाषार्थे कुल्माषशब्दस्य साधुत्वम् । यत् यस्माद्धेतोः इमे कुल्माषा मे चये मदीये भक्ष्यचये उच्छिष्टराशौ उपनिहिताः प्रक्षिप्ताः ।

* रंग.

**एतेषां मे देहीति होवाच । तानस्मै प्रददौ । हन्तानुपानमिति । उच्छिष्टं वै मे पीतꣳ स्यादिति होवाच ॥**

( १ ) इत्युक्तः प्रत्युवाच उषस्तिः — एतेषां एतानित्यर्थः । मे मह्यं देहीति होवाच । तान् स इभ्यः अस्मै उषस्तये प्रददौ प्रदत्तवान् । पानाय समीपस्थमुदकं च गृहीत्वा उवाच — हन्त गृहाणानुपानम् । इत्युक्तः प्रत्युवाच — उच्छिष्टं वै मे मम इदमुदकं पीतं स्यात् यदि पास्यामि ।

शंकर.

( २ ) एतेषामिति । उच्छिष्टानाम[illegible]ध्ये ।

* रंग.

**न स्विदेतेऽप्युच्छिष्टा इति । न [illegible] अजीविष्यमिमानखादन्निति होवाच । [illegible] उदपानमिति ॥**

इत्युक्तवन्तं प्रत्युवाचेतरः — किं न स्विदेते कुल्माषा अप्युच्छिष्टाः । इत्युक्त आहोषस्तिः — न वै अजीविष्यं न जीविष्यामि इमान्कुल्माषानखादन् अभक्षयन् इति होवाच । कामः इच्छतः मे मम उदकपानं लभ्यते इत्यर्थः । अतश्चैतामवस्थां प्राप्तस्य

× शेषं शंकरवत् ।

* अस्माभिरासादितेषु उपदशेषु मूलमात्र-सटीकभाष्यसहितोपनिषत्पुस्तकेषु सर्वत्र मूले 'यच्चये म इमे' इत्यत्र 'च ये' इति विभिन्ने एव पदे मुद्रिते स्तः । 'यच्चये राशौ' इति शांकरभाष्ये, 'यच्चये यस्मिन् राशौ' इति श्रीकंठटीकायां शिवार्कमणिदीपिकायां श्रीमदप्पय्यदीक्षितकृतायामपि च छित्त्वैव मुद्रितम् । तदेतत् महान्तं विस्मयमावहति । यतो वयं तत्तद्भाष्य-टीकास्वारस्यात्, पदभेदे बहुवचनान्तयच्छब्दसत्त्वेन पौनरुक्त्यापत्तेरनुपपद्यमानात् 'यदित्यव्ययं बहुवचनान्तम्' इत्यानन्दगिरिटीकावाक्यात्, 'मे चये मदीये भक्ष्यचये उच्छिष्टराशौ' इति रंगरामानुजभाष्याच्च 'चये' इत्येकं पदं राश्यर्थकमिति निश्चिनुमः ।

३।४।२८; श्रीकर. ३।४।२८; वल्लभ. ३।४।२७; विज्ञान. ३।४।२८; बलदेव. ३।४।२८.

(१) छान्द. १।१०।२; श्रीकंठ. श्रीकर. बलदेव. ३।४।२८.

* शेषं शंकरवत् ।

(१) छान्द. १।१०।३; रामानुज. श्रीकंठ. श्रीकर. बलदेव. ३।४।२८.

(२) छान्द. १।१०।४; ब्रशंकर. ३।४।२८; रंग. उदपान ( उदकपान ); रामानुज. ब्रमध्व. श्रीकंठ. श्रीकर. बलदेव. ३।४।२८.

विद्याधर्मयशोवतः स्वात्मनरोपकारसमर्थस्य एतदपि कर्म कुर्वतो नावद्यर्श इत्यभिप्रायः । तस्यापि जीवितं प्रति उपायान्तरे अजुगुप्सिते सति जुगुप्सितमेतत्कर्म दोषाय । ज्ञानावलेपेन कुर्वतो नरकपातः स्यादेवेत्यभिप्रायः, प्रद्राणकशब्दश्रवणात् ।

+ शंकर.

[१] स ह खादित्वाऽतिशेषाञ्जायाया आजहार । साऽग्र एव सुभिक्षा बभूव । तान्प्रतिगृह्य निदधौ ॥

तांश्च स खादित्वा अतिशेषान् अतिशिष्टान् जायायै कारुण्यादाजहार । सा आटिकी अग्रे एव कुल्माषप्राप्तेः, सुभिक्षा शोभनभिक्षा लब्धान्नेत्येतत्, बभूव संवृत्ता । तथापि स्त्रीस्वाभाव्यात् अनवज्ञाय तान् कुल्माषान् पत्युर्हस्तात्प्रतिगृह्य निदधौ निक्षिप्तवती ।

* शंकर.

[२] स ह प्रातः संजिहान उवाच । यद्बतान्नस्य लभेमहि, लभेमहि धनमात्राम् । राजाऽसौ यक्ष्यते । स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥

स तस्याः कर्म जानन् प्रातः उषःकाले संजिहानः शयनं निद्रां वा परित्यजन् उवाच पत्न्याः शृण्वत्याः । यत् यदि बतेति खिद्यमानः अन्नस्य स्तोकं लभेमहि, तद्भुक्त्वाऽन्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पम् । ततोऽस्माकं जीवनं भविष्यतीति । धनलाभे च कारणमाह—राजाऽसौ नातिदूरे स्थाने यक्ष्यते । यजमानत्वात्तस्य आत्मनेपदम् । स च राजा मा मां पात्रमुपलभ्य सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः, ऋत्विक्कर्मप्रयोजनायेत्यर्थः, वृणीतेति ।

* शंकर.

[३] तं जायोवाच । हन्त पत इम एव कुल्माषा इति । तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥

एवमुक्तवन्तं जायोवाच—हन्त गृहाण हे पते इमे एव ये मद्धस्ते विनिक्षिप्तास्त्वया कुल्माषा इति । तान् खादित्वा अमुं यज्ञं राज्ञो विततं विस्तारितं ऋत्विग्भिः एयाय ।

÷ शंकर.

[१] तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश । स ह प्रस्तोतारमुवाच ॥

तत्र च गत्वा उद्गातॄन् उद्गातृपुरुषान्, आगत्य स्तुवन्त्यस्मिन्नित्यास्तावः, तस्मिन्नास्तावे स्तोष्यमाणान् उप उपविवेश समीपे उपविष्टस्तेषामित्यर्थः । उपविश्य स ह प्रस्तोतारमुवाच ।

‡ शंकर.

[२] प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तां चेदविद्वान्प्रस्तोष्यसि, मूर्धा ते विपतिष्यतीति ॥

हे प्रस्तोतः इत्यामन्त्र्य अभिमुखीकरणाय, या देवता प्रस्तावं प्रस्तावभक्तिं अनुगता अन्वायत्ता, तां चेद्देवतां प्रस्तावभक्तेः अविद्वान् सन् प्रस्तोष्यसि विदुषो मम समीपे । तत्परोक्षेऽपि चेद्विपतेत्तस्य मूर्धा, कर्ममात्रविदामनधिकार एव कर्मणि स्यात् । तच्च अनिष्टं अविदुषामपि कर्मदर्शनात् दाक्षिणमार्गश्रुतेश्च । अनधिकारे चाविदुषां उत्तर एवैको मार्गः श्रूयेत । न च स्मार्तकर्मनिमित्त एव दक्षिणः पन्थाः । 'यज्ञेन दानेन' इत्यादिश्रुतेः । 'तथोक्तस्य मया*' इति च विशेषणात् विद्वत्समक्षमेव कर्मण्यनधिकारः, न सर्वत्राग्निहोत्रस्मार्तकर्माध्ययनादिषु च, अनुज्ञायास्तत्र तत्र दर्शनात् कर्ममात्रविदामप्यधिकारः सिद्धः कर्मणीति । मूर्धा ते विपतिष्यतीति । ‡ शंकर.

[३] एवमेवोद्गातारमुवाच । उद्गातर्या देवतोद्गीथमन्वायत्ता, तां चेदविद्वानुद्गास्यसि, मूर्धा ते विपतिष्यतीति ॥

एवमेव प्रतिहर्तारमुवाच । प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता, तां चेदविद्वान्प्रतिहरिष्यसि, मूर्धा ते विपतिष्यतीति । ते ह समारतास्तूष्णीमासांचक्रिरे ॥

---

+ रंग. शब्दार्थमात्रे शंकरवत् ।
* रंग. शंकरवत् ।
(१) छाउ. १।१०।५.
(२) छाउ. १।१०।६. (३) छाउ. १।१०।७.

‡ रंग. शंकरवत् ।
* विशेषणमिदं छाउ. १।११।५ इति वाक्येऽस्ति ।
(१) छाउ. १।१०।८.
(२) छाउ. १।१०।९; ब्रशंकर. ३।३।४२; रामानुज. १।१।२४; श्रीकर. १।१।२४.
(३) छाउ. १।१०।१०, ११; ब्रशंकर. ३।३।४२.

एवमेवोद्गातारं प्रतिहर्तारमुवाचेत्यादि समानमन्यत्। ते प्रस्तोत्रादयः कर्मभ्यः समारताः उपरताः सन्तो मूर्धपातभयात्तूष्णीमासांचक्रिरे अन्यच्चाकुर्वन्तः, अर्थित्वात्। * शंकर.

**अथ हैनं यजमान उवाच । भगवन्तं वा अहं विविदिषाणीति । उषस्तिरस्मि चाक्रायण इति होवाच ॥**

अथ अनन्तरं ह एनं उषस्तिं यजमानः राजा उवाच— भगवन्तं वै पूजावन्तं अहं विविदिषाणि वेदितुमिच्छामि। इत्युक्त उषस्तिः अस्मि चाक्रायणस्तवापि श्रोत्रपथमागतो यदीति ह उवाच उक्तवान्। * शंकर.

**स होवाच । भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम् । भगवतो वा अहमवित्त्याऽन्यानवृषि ॥**

(१) स ह यजमान उवाच—सत्यमेवं, अहं भगवन्तं बहुगुणमश्रौषं, सर्वैश्च ऋत्विक्कर्मभिः आर्त्विज्यैः पर्यैषिषं पर्येषणं कृतवानस्मि, अन्विष्य भगवतो वै अहमवित्त्या अलाभेन अन्यानिमान् अवृषि वृतवानस्मि। शंकर.

(२) भगवत अविद्या, विदिर्लाभः, न विदिः अविदिः। 'इकृष्यादिभ्यः' इति इक्। अविद्या अलाभेन। + रंग.

**भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति । तथेति । अथ तर्ह्येत एव समतिसृष्टाः स्तुवताम् । यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति । तथेति ह यजमान उवाच ॥**

(१) अद्यापि भगवांस्त्वेव मे मम सर्वैरार्त्विज्यैः ऋत्विक्कर्मार्थं अस्तु इत्युक्तस्तथेत्याहोषस्तिः। किंतु अथैवं तर्हि एते एव त्वया पूर्वं वृताः मया समतिसृष्टाः मया सम्यक्प्रसन्नेनानुज्ञाताः सन्तः स्तुवताम्। त्वया त्वेतत्कार्यम्—यावत्तु एभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः प्रयच्छसि, तावन्मम दद्याः। इत्युक्तस्तथेति ह यजमानः उवाच। शंकर.

(२) मया सम्यक्प्रसन्नेनानुज्ञाताः उपदिष्टदेवताः सन्तः स्तुवतां स्तुवन्तु। * रंग.

**अथ हैनं प्रस्तोतोपससाद । प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् । कतमा सा देवतेति ॥**

अथ हैनं औषस्त्यं वचः श्रुत्वा प्रस्तोता उपससाद उषस्तिं विनयेनोपजगाम। प्रस्तोतर्या देवतेत्यादि मा मां भगवानवोचत्पूर्वम्। कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति। + शंकर.

**प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता । तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥**

(१) पृष्टः प्राण इति होवाच। युक्तं प्रस्तावस्य प्राणो देवतेति। कथम्। सर्वाणि स्थावरजङ्गमानि भूतानि प्राणमेवाभिसंविशन्ति प्रलयकाले, प्राणं अभि लक्षयित्वा प्राणात्मनैव उज्जिहते प्राणादेवोद्गच्छन्तीत्यर्थः, उत्पत्तिकाले। अतः सैषा देवता प्रस्तावमन्वायत्ता। तां चेदविद्वान् त्वं प्रास्तोष्यः प्रस्तवनं प्रस्तावभक्तिं कृतवानसि यदि, मूर्धा शिरः ते व्यपतिष्यत् विपतितमभविष्यत्

---

* रंग. शंकरवत्।

\+ शेषं शंकरवत्।

(१) छांउ. १।११।१.

(२) छांउ. १।११।२; रंग. मवित्त्या ( मविद्या ).

(३) छांउ. १।११।३.

* शेषं शंकरवत्।

\+ रंग. शंकरवत्।

(१) छांउ. १।११।४; अशंकर. १।१।२३; भास्कर. १।१।२३; रामानुज. १।१।२४; श्रीकर. १।१।२४; वल्लभ. १।१।२२; बलदेव. १।१।२३, १।४।१४.

(२) छांउ. १।११।५; अशंकर. १।१।२३; भास्कर. १।१।२३; रामानुज. १।१।२४, १।२।१, २।४।१; निंबार्क. १।१।२४ मेवाभिसं ( मेव सं ); श्रीकंठ. १।१।२३; श्रीकर. १।१।२४, २।४।१; वल्लभ. १।१।२२; विज्ञान. १।१।२३; बलदेव. १।१।२३, १।४।१४.

तथोक्तस्य मया तत्काले मूर्धा ते विपतिष्यतीति। अनस्त्वया साधु कृतं, मया निषिद्धः कर्मणो यद्परमम-कार्षीरित्यभिप्रायः।

शंकर.

( २ ) प्राणनिमित्तौ सर्वेषां भूतानामुत्पत्तिप्रलयौ उच्यमानौ प्राणस्य ब्रह्मतां गमयतः।

* ब्रशंकर. १।१।२३

( ३ ) अत्र प्राणपितृत्वगुणयोगात्प्राणशब्देन परमात्मा उच्यते। व्यासार्यैस्तु मूर्धा ते व्यपतिष्यदित्यस्य 'आत्मसत्ता न लभ्येतेत्यर्थः' इत्यात्मसत्ताहानि-पर्यन्तः प्रत्यवायो वर्णितः।

+ रंग.

( ४ ) अत्राप्याधुनिकाः छान्दोग्यप्रथमप्रपाठकस्थमेव वाक्यान्तरमुदाहरन्ति—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति' इति। तत्र दूषणं पूर्वसूत्र-वदेव बोध्यम्। अधिकं तु अन्नादित्याभ्यां सह पाठो ब्रह्मपरत्वे बाधक इति।

विज्ञान. १।१।२३

अथ हैनमुद्गातोपससाद। उद्गातर्या देवतोद्गीथ-मन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपति-ष्यतीति मा भगवानवोचत्। कतमा सा देव-तेति॥

तथा उद्गाता पप्रच्छ—कतमा सा उद्गीथभक्ति-मनुगता अन्वायत्ता देवतेति।

शंकर.

आदित्य इति होवाच। सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति। सैषा देवतो-द्गीथमन्वायत्ता। तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति॥

पृष्टः आदित्य इति होवाच। सर्वाणि ह वा इमानि भूतान्यादित्यं उच्चैः ऊर्ध्वं सन्तं गायन्ति शब्दयन्ति, स्तुवन्तीत्यभिप्रायः, उच्छब्दसामान्यात्, प्रणवशब्दसामान्यादिव प्राणः। अतः सैषा देवतेत्यादि पूर्ववत्।

* शंकर.

अथ हैनं प्रतिहर्तोपससाद। प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्। कतमा सा देवतेति॥

एवमेवाथ हैनं प्रतिहर्तोपससाद कतमा सा देवता प्रतिहारमन्वायत्तेति।

शंकर.

अन्नमिति होवाच। सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिहारमन्वायत्ता। तां चेदविद्वान्प्रत्य-हरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति॥

( १ ) पृष्टः अन्नमिति होवाच। सर्वाणि ह वा इमानि भूतानि अन्नमेवाऽऽत्मानं प्रति सर्वतः प्रति-हरमाणानि जीवन्ति। सैषा देवता प्रतिशब्दसामा-न्यात्प्रतिहारभक्तिमनुगता। समानमन्यत्तथोक्तस्य मयेति। प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासी-तेति समुदायार्थः। प्राणाद्यापत्तिः कर्मसमृद्धिर्वा फल-मिति। शंकर.

( २ ) प्रतिहरमाणानि, भक्षयन्तीत्यर्थः। सन्तीति शेषः। द्विरुक्तिर्विद्यासमाप्त्यर्था।

+ रंग.

शौवसामसंबन्धिनी आख्यायिका

अथातः शौव उद्गीथः। तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज॥

अतीते खण्डे अन्नाप्राप्तिनिमित्ता कष्टावस्था उक्ता उच्छिष्टपर्युषितभक्षणलक्षणा, सा मा भूदित्यन्नलाभाय अथ

---

* भास्करादयः सर्वे ब्रमध्वविज्ञानभिन्नाः ब्रशंकरवत्।

+ शेषं शंकरवत्।

(१) छाउ. १।११।६.

(२) छाउ. १।११।७.

* रंग. शंकरवत्।

+ शेषं शंकरवत्। 'भक्षयन्ति' इति 'सन्ति' इति च शब्रन्तम्।

(१) छाउ. १।११।८.

(२) छाउ. १।११।९.

(३) छाउ. १।१२।१.

अनन्तरं शौवः श्वभिर्दृष्टः उद्गीथः उद्गानं साम अतः प्रस्तूयते । तत् तत्र ह किल बको नामतः, दल्भस्यापत्यं दाल्भ्यः, ग्लावो वा नामतः, मित्रायाश्चापत्यं मैत्रेयः । वाशब्दश्चार्थे । द्व्यामुष्यायणो ह्यसौ, वस्तुविषये क्रियास्विव विकल्पानुपपत्तेः । 'द्विनामा द्विगोत्रः' इत्यादि * हि स्मृतिः । दृश्यते चोभयतः पिण्डभाक्त्वम् । उद्गीथे बद्धचित्तत्वात् ऋषौ अनादराद्वा वाशब्दः स्वाध्यायार्थः । स्वाध्यायं कर्तुं ग्रामाद्बहिः उद्वव्राज उद्गतवान् विविक्तदेशस्थोदकाभ्याशम् । उद्वव्राज, प्रतिपालयांचकार इति चैकवचनाल्लिङ्गादेकोऽसावृषिः । श्वोद्गीथकालप्रतिपालनादृषेः स्वाध्यायकरणमन्नकामनयेति लक्ष्यते इत्यभिप्रायतः ।

× शंकर.

[1]तस्मै श्वा श्वेतः प्रादुर्बभूव । तमन्ये श्वान उपसमेत्योचुः । अन्नं नो भगवानागायतु । अशनायाम वा इति ॥

( १ ) स्वाध्यायेन तोषिता देवता ऋषिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः सन् तस्मै ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार । तमन्ये शुक्लं श्वानं क्षुल्लकाः श्वानः उपसमेत्य ऊचुः उक्तवन्तः अन्नं नः अस्मभ्यं भगवान् आगायतु आगानेन निष्पादयत्वित्यर्थः । मुख्यप्राणं वागादयो वा प्राणमनु अन्नभुजः, स्वाध्यायपरितोषिताः सन्तः अनुगृह्णीयुरेनं श्वरूपमादायेति युक्तमेवं प्रतिपत्तुम् । अशनायाम वै बुभुक्षिताः स्मो वा इति । शंकर.

( २ ) तत्स्वाध्यायेन तोषितः कश्चन ऋषिः श्वेतशुनकरूपतया प्रादुर्बभूवेत्यर्थः । वैशब्दोऽवधारणे । अस्माकं गानेनान्नं भगवान्संपादयत्वित्यूचुरित्यर्थः ।

रंग.

[2]तान्होवाचेहैव मा प्रातरुपसमीयातेति । तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयांचकार ॥

एवमुक्ते श्वा श्वेतः उवाच तान्क्षुल्लकान् शुनः —इहैव अस्मिन्नेव देशे मा मां प्रातः प्रातःकाले उपसमीयातेति । दैर्घ्यं छान्दसं समीयातेति, प्रमादपाठो वा । प्रातःकालकरणं तत्काले एव कर्तव्यार्थं, अन्नदस्य वा सवितुरपराह्णे अनाभिमुख्यात् । तत् तत्रैव ह बको दाल्भ्यो ग्लावो वा मैत्रेय ऋषिः प्रतिपालयांचकार प्रतीक्षणं कृतवानित्यर्थः ।

+ शंकर.

[1]ते ह यथैवेदं * वहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुः । ते ह समुपविश्य हिं चक्रुः ॥

ते श्वानस्तत्रैवाऽऽगम्य ऋषेः समक्षं यथैवेह कर्मणि बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषाः संरब्धाः संलग्नाः अन्योन्यमेव सर्पन्ति, एवं मुखेनान्योन्यस्य पुच्छं गृहीत्वा आससृपुः आसृतवन्तः, परिभ्रमणं कृतवन्त इत्यर्थः । त एवं संसृप्य समुपविश्य उपविष्टाः सन्तः हिं चक्रुः हिंकारं कृतवन्तः । शंकर.

[2]ओ३मदा३म । ओं३ पिबा३म । ओं३ देवो वरुणः प्रजापतिः सविताऽऽन्नमिहाऽऽहरत् । अन्नपते३ऽन्नमिहाऽऽहराऽऽहरो३मिति ॥

( १ ) ओं अदाम ओं पिबाम ओं देवः, द्योतनात् । वरुणः, वर्षणाज्जगतः । प्रजापतिः, पालनात् प्रजानाम् । सविता, प्रसवितृत्वात्सर्वस्य । आदित्य उच्यते एतैः पर्यायैः । स एवंभूत आदित्यः अन्नमस्मभ्यं इह आहरत् आहरत्विति । ते एवं हिं कृत्वा पुनरप्यूचुः—स त्वं हे अन्नपते । स हि सर्वस्यान्नस्य प्रसवितृत्वात्पतिः । न हि तत्पाकेन विना प्रभूतमन्नमणुमात्रमपि जायते प्राणिनाम् । अतोऽन्नपतिः । हे अन्नपते, अन्नमस्मभ्यं इह आहर आहरेति । अभ्यास आदरार्थः । ओमिति ।

+ शंकर.

---

* 'इत्यादि वाक्यं स्मृतिरूपं धर्मशास्त्रे प्रसिद्धमित्यर्थः' इति टीका । तेन 'इत्यादि' इति नपुंसकत्वं साधु ।

× रंग. शंकरवत् ।

(१) छान्द. १।१२।२. (२) छान्द. १।१२।३.

+ रंग शंकरवत् ।

* 'यथैवेह' इति पाठः शांकरभाष्यतः प्रतिभाति ।

(१) छान्द. १।१२।४.

(२) छान्द. १।१२।५.

( २ ) त्रिदमागत्वाद्वरुणः । आहराहरेति द्विरुक्तिः नार्थवत्त्वात् । * रंग.

सामावयवस्तोमाक्षरविषयिण्य उपासनाः

[1]अयं वाव लोको हाउकारः । वायुर्हाइकारः । चन्द्रमा अथकारः । आत्मेहकारः । अग्निरीकारः ॥

भक्तिविषयोपासनं सामावयवसंबद्धमित्यतः सामावयवान्तरस्तोभाक्षरविषयाण्युपासनान्तराणि संहतान्युपदिश्यन्तेऽनन्तरं, सामावयवसंबद्धत्वाविशेषात् । अयं वाव अयमेव लोको हाउकारः स्तोभः रथन्तरे साम्नि प्रसिद्धः । 'इयं वै रथन्तरम्' इत्यस्मात्संबन्धसामान्याद्धाउकारस्तोभः अयं लोक इत्येवमुपासीत । वायुर्हाइकारः । वामदेव्ये सामनि हाइकारः प्रसिद्धः । वाय्वप्संबन्धश्च वामदेव्यस्य साम्नो योनिरित्यस्मात् सामान्याद्धाइकारं वायुदृष्ट्या उपासीत । चन्द्रमा अथकारः । चन्द्रदृष्ट्या अथकारमुपासीत । अन्ने हीदं स्थितम् । अन्नात्मा चन्द्रः । थकाराकारसामान्याच्च । आत्मा इहकारः इहेति स्तोभः । प्रत्यक्षो ह्यात्मा इहेति व्यपदिश्यते । इहेति च स्तोभः । तत्सामान्यात् । अग्निः ईकारः, ईनिधनानि चाऽऽग्नेयानि सर्वाणि सामानीत्यतस्तत्सामान्यात् । + शंकर.

[2]आदित्य ऊकारः । निहव एकारः । विश्वे देवा औहोयिकारः । प्रजापतिर्हिंकारः । प्राणः स्वरः । अन्नं या । वाग्विराट् ॥

आदित्य ऊकारः । उच्चैरूर्ध्वं सन्तमादित्यं गायन्ति । ऊकारश्चायं स्तोभः । आदित्यदैवत्ये साम्नि स्तोभ ऊ इत्यादित्य ऊकारः । निहवः इत्याह्वानं एकारः स्तोभः, एहीति चाऽऽह्वयन्तीति तत्सामान्यात् । विश्वे देवा औहोयिकारः, वैश्वदेव्ये साम्नि स्तोभस्य दर्शनात् । प्रजापतिर्हिंकारः, आनिरुक्त्याद्धिंकारस्य चाव्यक्तत्वात् । प्राणः स्वरः स्वर इति स्तोभः, प्राणस्य च स्वरहेतुत्वसामान्यात् । अन्नं या, या इति स्तोभः अन्नं, अन्नेन हीदं यातीत्यतस्तत्सामान्यात् । वागिति स्तोभो विराट् अन्नं देवताविशेषो वा, वैराजे साम्नि स्तोभदर्शनात् । × शंकर.

[1]अनिरुक्तस्त्रयोदशः स्तोभः संचरो हुंकारः ॥

अनिरुक्त अव्यक्तत्वादिदं चेदं चेति निर्वक्तुं न शक्यत इत्यतः संचरः विकल्प्यमानस्वरूप इत्यर्थः । कोऽसावित्याह—त्रयोदशः स्तोभो हुंकारः । अव्यक्तो ह्ययं, अतः अनिरुक्तविशेष एवोपास्य इत्यभिप्रायः । * शंकर.

[2]दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः । अन्नवानन्नादो भवति । य एतामेवꣳ साम्नामुपनिषदं वेदोपनिषदं वेद ॥

स्तोभाक्षरोपासनाफलमाह — दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थम् । य एतामेवं यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषयां उपनिषदं दर्शनं वेद, तस्यैतद्यथोक्तं फलमित्यर्थः । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः सामावयवविषयोपासनाविशेषपरिसमाप्त्यर्थो वेति । * शंकर.

इति प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

साम्नः साधुत्वात् सर्वावयवविशिष्टसामोपासनस्य साधुत्वम्

[3]समस्तस्य खलु साम्न उपासनꣳ साधु । यत्खलु साधु तत्सामेत्याचक्षते । यदसाधु तदसामेति ॥

'ओमित्येतदक्षरम्' इत्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टम् । अनन्तरं च स्तोभाक्षर-

---

* शेषं शंकरवत् ।
+ रंग. शंकरेण गतार्थम् ।
(१) छाउ. १।१३।१.
(२) छाउ. १।१३।२.

× रंग. शंकरेण गतार्थम् ।
* रंग. शंकरवत् ।
(१) छाउ. १।१३।३.
(२) छाउ. १।१३।४.
(३) छाउ. २।१।१; ब्रशांकर. ४।१।६.

विषयमुपासनमुक्तम् । सर्वथाऽपि सामैकदेशसंबद्धमेव तदिति । अथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः । युक्तं ह्येकदेशोपासनानन्तरमेकदेशिविषयमुपासनमुच्यते इति । समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य चेत्यर्थः । खल्विति वाक्यालङ्कारार्थः । साम्न उपासनं साधु । समस्ते साम्नि साधुदृष्टिविधिपरत्वान्न पूर्वोपासननिन्दार्थत्वं साधुशब्दस्य । ननु पूर्वत्र अविद्यमानं साधुत्वं समस्ते साम्न्यभिधीयते । न 'साधु सामेत्युपास्ते' इत्युपसंहारात् । साधुशब्दः शोभनवाची । कथमवगम्यते इत्याह—यत्खलु लोके साधु शोभनं अनवद्यं प्रसिद्धं, तत्सामेत्याचक्षते कुशलाः । यदसाधु विपरीतं तदसामेति ।

* शंकर.

**[१]तदुताप्याहुः । साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुः । असाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥**

(१) तत् तत्रैव साध्वसाधुविवेककरणे उताप्याहुः—साम्ना एनं राजानं सामन्तं वा उपागात् उपगतवान् । कोऽसौ । यतः असाधुत्वप्राप्त्याशङ्का स इत्यभिप्रायः । शोभनाभिप्रायेण साधुनैनमुपागादित्येव तत् तत्र आहुर्लौकिकाः बन्धनाद्यसाधुकार्यमपश्यन्तः । यत्र पुनर्विपर्ययः, बन्धनाद्यसाधुकार्यं पश्यन्ति, तत्र असाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः । शंकर.

(२) तत् तस्मिन् विषये अन्यदप्याहुः । किं तदित्यत्राऽऽह— साम्नैनमिति । सामासामोपायाभ्यामागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतं व्यवहरन्तीत्यर्थः । रंग.

**[२]अथोताप्याहुः । साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुः । असाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥**

(१) अथोताप्याहुः स्वसंवेद्यं —साम नः अस्माकं बतेत्यनुकम्पयन्तः संवृत्तमित्याहुः, एतत्तैरुक्तं भवति, यत्साधु भवति साधु बतेत्येव तदाहुः । विपर्यये जाते असाम नो बतेति, यदसाधु भवति असाधु बतेत्येव तदाहुः । तस्मात् सामसाधुशब्दयोरेकार्थत्वं सिद्धम् । शंकर.

(२) बतेति सानुमोदाः प्रवदन्ति ।

* रंग.

**स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥**

(१) अतः स यः कश्चित्साधु सामेति साधुगुणवत्सामेत्युपास्ते समस्तं साम साधुगुणवद्विद्वान्, तस्यैतत्फलम्—अभ्याशो ह क्षिप्रं ह, यदिति क्रियाविशेषणार्थं, एनं उपासकं साधवः शोभनाः धर्माः श्रुतिस्मृत्यविरुद्धाः आ च गच्छेयुः आगच्छेयुश्च, न केवलमागच्छेयुः, उप च नमेयुः उपनमेयुश्च, भोग्यत्वेनोपतिष्ठेयुरित्यर्थः । शंकर.

(२) 'रमणीयचरणा अभ्याशो ह' (छाउ. ५।१०।७) इत्यत्र 'अभ्याशः अभ्यागन्तारः' इति व्याख्यातृभिर्व्याख्यातत्वादिहाप्यभ्याशः आगन्तारः साधवो धर्मा अभ्यागमनयोग्याः साधवो धर्मा अभ्यागच्छेयुरिति वा अर्थः ।

\+ रंग.

पृथिव्यादिलोकेषु वृष्टौ अप्सु ऋतुषु
पशुषु च पञ्चविधसामोपासनम्

**[२]लोकेषु पञ्चविधꣳ सामोपासीत । पृथिवी हिंकारः । अग्निः प्रस्तावः । अन्तरिक्षमुद्गीथः । आदित्यः प्रतिहारः । द्यौर्निधनम् । इत्यूर्ध्वेषु ॥**

---

* रंग. शंकरवत् ।

(१) छाउ. २।१।२.

(२) छाउ. २।१।३.

* शेषं शंकरवत् ।

\+ शंकरवच्च ।

(१) छाउ. २।१।४.

(२) छाउ. २।२।१; ब्रशंकर. ३।३।५५, ३।४।२२, ४।१।६; भास्कर. १।१।१, ३।३।५५, ३।४।२२, ४।१।६; रामानुज. ३।३।५३; श्रीकर. ३।३।५३; विज्ञान. ३।३।५५.

कानि पुनस्तानि साधुदृष्टिविशिष्टानि समस्तानि सामान्युपास्यानीति, इमानि तान्युच्यन्ते —'लोकेषु पञ्चविधम्' इत्यादीनि । ननु लोकादिदृष्ट्या तान्युपास्यानि साधुदृष्ट्या चेति विरुद्धम् । न, साध्वर्थस्य लोकादिकार्येषु कारणस्यानुगतत्वात् मृदादिवत् घटादिविकारेषु । साधुशब्दवाच्योऽर्थो धर्मो ब्रह्म वा सर्वथाऽपि लोकादिकार्येष्वनुगतम् । अतो यथा यत्र घटादिदृष्टिः, मृदादिदृष्ट्यनुगतैव सा, तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिः, धर्मादिकार्यत्वाल्लोकादीनाम् । यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्मयोः, तथाऽपि धर्म एव साधुशब्दवाच्य इति युक्तं, 'साधुकारी साधुर्भवति' इति धर्मविषये साधुशब्दप्रयोगात् । ननु लोकादिकार्येषु कारणस्यानुगतत्वादर्थप्राप्तैव तद्दृष्टिरिति 'साधु सामेत्युपास्ते' इति न वक्तव्यम् । न, शास्त्रगम्यत्वात्तद्दृष्टेः । सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्याः, न विद्यमाना अप्यशास्त्रीयाः ।

लोकेषु पृथिव्यादिषु पञ्चविधं पञ्चभक्तिभेदेन पञ्चप्रकारं साधु समस्तं साम उपासीत । कथम् । पृथिवी हिंकारः । लोकेष्विति या सप्तमी तां प्रथमात्वेन विपरिणमय्य पृथिवीदृष्ट्या हिंकारे* पृथिवी हिंकार इत्युपासीत । व्यत्यस्य वा सप्तमीश्रुतिं लोकविषयां, हिंकारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत । तत्र पृथिवी हिंकारः, प्राथम्यसामान्यात् । अग्निः प्रस्तावः । अग्नौ हि कर्माणि प्रस्तूयन्ते । प्रस्तावश्च भक्तिः । अन्तरिक्षमुद्गीथः । अन्तरिक्षं हि गगनम् । गकारविशिष्टश्चोद्गीथः । आदित्यः प्रतिहारः, प्रतिप्राण्यभिमुखत्वात् मां प्रति मां प्रतीति । द्यौर्निधनम् । दिवि निधीयन्ते हीतो गताः । इत्यूर्ध्वेषु ऊर्ध्वगतेषु लोकदृष्ट्या सामोपासनम् ।

‡ शंकर.

अथाऽऽवृत्तेषु । द्यौर्हिंकारः । आदित्यः प्रस्तावः । अन्तरिक्षमुद्गीथः । अग्निः प्रतिहारः । पृथिवी निधनम् ॥

अथ आवृत्तेषु अवाङ्मुखेषु पञ्चविधमुच्यते सामोपासनम् । गत्यागतिविशिष्टा हि लोकाः । यथा ते तथादृष्ट्यैव सामोपासनं विधीयते यतः, अत आवृत्तेषु लोकेषु । द्यौर्हिंकारः, प्राथम्यात् । आदित्यः प्रस्तावः । उदिते ह्यादित्ये प्रस्तूयन्ते कर्माणि प्राणिनाम् । अन्तरिक्षमुद्गीथः पूर्ववत् । अग्निः प्रतिहारः, प्राणिभिः प्रतिहरणादग्नेः । पृथिवी निधनं, तत आगतानामिह निधनात् । शंकर.

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वांल्लोकेषु पञ्चविधꣳ सामोपास्ते ॥

उपासनफलम्— कल्पन्ते समर्था भवन्ति हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च गत्यागतिविशिष्टाः, भोग्यत्वेन व्यवतिष्ठन्ते इत्यर्थः । य एतदेवं विद्वान् लोकेषु पञ्चविधं समस्तं साधु सामेत्युपास्ते इति सर्वत्र योजना पञ्चविधे सप्तविधे च । * शंकर.

वृष्टौ पञ्चविधꣳ सामोपासीत । पुरोवातो हिंकारः । मेघो जायते स प्रस्तावः । वर्षति स उद्गीथः । विद्योतते स्तनयति स प्रतिहारः ॥

वृष्टौ पञ्चविधं सामोपासीत । लोकस्थितेर्वृष्टिनिमित्तत्वादानन्तर्यम् । पुरोवातो हिंकारः । पुरोवातादयुद्ग्रहणान्ता हि वृष्टिः, यथा साम हिंकारादिनिधनान्तम् । अतः पुरोवातो हिंकारः, प्राथम्यात् । मेघो जायते स प्रस्तावः । प्रावृषि मेघजनने वृष्टेः प्रस्ताव इति हि प्रसिद्धिः । वर्षति स उद्गीथः, श्रैष्ठ्यात् । विद्योतते स्तनयति स प्रतिहारः, प्रतिहृतत्वात् । शंकर.

उद्गृह्णाति तन्निधनम् । वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ॥

---

* ध्येये सति इति शेषः ।

‡ ब्रशंकरभाष्यादि छाउ. १।१।१ (पृ. ७४६) इत्यत्र द्रष्टव्यम् । रंग. उपनिषच्छब्दार्थमात्रं शंकरवत् ।

---

* रंग. शंकरवत् ।

(१) छाउ. २।२।२.

(२) छाउ. २।२।३; ब्रशंकर. ३।३।४२, ३।४।२२, ४।१।६. (३) छाउ. २।३।१.

(४) छाउ. २।३।२; ब्रशंकर. ३।४।४४; भास्कर. ३।४।४३.

(१) उद्‌गृह्णाति तन्निधनम्, समाप्तिसामान्यात्। फलमुपासनस्य — वर्षति हास्मै इच्छातः। तथा वर्षयति ह असत्यामपि वृष्टौ। य एतदित्यादि पूर्ववत्। * शंकर.

(२) 'स्वामिनः फलश्रुतेरित्यात्रेयः।'—अङ्गेषूपासनेषु संशयः — किं तानि यजमानकर्माणि आहोस्विदृत्विक्कर्माणीति। किं तावत्प्राप्तम्। यजमानकर्माणीति। कुतः। फलश्रुतेः। फलं हि श्रूयते — 'वर्षति हास्मै... सामोपास्ते' इत्यादि। तच्च स्वामिगामि न्याय्यं, तस्य साङ्गे प्रयोगे अधिकृतत्वात्, अधिकृताधिकारत्वाच्चैवंजातीयकस्य। फलं च कर्तरि उपासनानां श्रूयते 'वर्षत्यस्मै, य उपास्ते' इत्यादि। ननु ऋत्विजोऽपि फलं दृष्टं— 'आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' (बृउ. १।३।२८) इति। न, तस्य वाचनिकत्वात्। तस्मात्स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते।

३।४।४४

'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते।' —नैतदस्ति स्वामिकर्माण्युपासनानीति। ऋत्विक्कर्माण्येतानि स्युरित्यौडुलोमिराचार्यो मन्यते। किं कारणम्। तस्मै हि साङ्गाय कर्मणे यजमानेन ऋत्विक्परिक्रीयते। तत्प्रयोगान्तःपातीनि चोद्गीथाद्युपासनानि, अधिकृताधिकारत्वात्। तस्माद्गोदोहनादिनियमवदेव ऋत्विग्भिर्निर्वर्त्येरन्। तथा च 'तं ह बको ......उद्गाता बभूव' (छाउ. १।२।१३) इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति। यत्तूक्तं कर्त्राश्रयं फलं श्रूयते इति। नैष दोषः, परार्थत्वादृत्विजः अन्यत्र वचनात् फलसंबन्धानुपपत्तेः। ‡ ब्रशंकर. ३।४।४५

**सर्वास्वप्सु पञ्चविधꣳ सामोपासीत। मेघो यत्संप्लवते स हिंकारः। यद्वर्षति स प्रस्तावः। याः प्राच्यः स्यन्दन्ते स उद्गीथः। याः प्रतीच्यः स प्रतिहारः। समुद्रो निधनम्॥**

सर्वास्वप्सु पञ्चविधं सामोपासीत। वृष्टिपूर्वकत्वात्सर्वासामपामानन्तर्यम्। मेघो यत्संप्लवते, एकीभावेनेतरेतरं घनीभवति मेघो यदोन्नतः तदा संप्लवते इत्युच्यते, तदा अपामारम्भः, स हिंकारः। यद्वर्षति स प्रस्तावः। आपः सर्वतो व्याप्तुं प्रस्तुताः। याः प्राच्यः स्यन्दन्ते स उद्गीथः, श्रैष्ठ्यात्। याः प्रतीच्यः स प्रतिहारः, प्रतिशब्दसामान्यात्। समुद्रो निधनं, तन्निधनत्वादपाम्। शंकर.

**न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते॥**

न हाप्सु प्रैति नेच्छति चेत्। अप्सुमान् अम्मान् भवति, फलम्। * शंकर.

**(२) ऋतुषु पञ्चविधꣳ सामोपासीत। वसन्तो हिंकारः। ग्रीष्मः प्रस्तावः। वर्षा उद्गीथः। शरत्प्रतिहारः। हेमन्तो निधनम्॥**

ऋतुषु पञ्चविधं सामोपासीत। ऋतुव्यवस्थाया यथोक्ताम्बुनिमित्तत्वादानन्तर्यम्। वसन्तो हिंकारः, प्राथम्यात्। ग्रीष्मः प्रस्तावः। यवादिसंग्रहः प्रस्तूयते हि प्रावृडर्थम्। वर्षा उद्गीथः, प्राधान्यात्। शरत्प्रतिहारः, रोगिणां मृतानां च प्रतिहरणात्। हेमन्तो निधनं, निवाते निधनात्प्राणिनाम्। शंकर.

**(३) कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते॥**

फलं—कल्पन्ते ह ऋतुव्यवस्थानुरूपं भोग्यत्वेनास्मै उपासकाय ऋतवः। ऋतुमान् आर्तवैर्भोगैश्च संपन्नो भवतीत्यर्थः।

* शंकर.

**(४) पशुषु पञ्चविधꣳ सामोपासीत। अजा हिंकारः। अवयः प्रस्तावः। गाव उद्गीथः। अश्वाः प्रतिहारः। पुरुषो निधनम्॥**

---

* रंग. शंकरवत्।

‡ भास्कर. ब्रशंकरवत्।

(१) छाउ. २।४।१.

* रंग. शंकरवत्।

(१) छाउ. २।४।२.

(२) छाउ. २।५।१.

(३) छाउ. २।५।२.

(४) छाउ. २।६।१.

पशुषु पञ्चविधं सामोपासीत। सम्यग्दृष्टेषु ऋतुषु पशब्दः काल इत्यानन्तर्यम्। अजा हिंकारः, प्राधान्यात् प्राथम्याद्वा, 'अजः पशूनां प्रथमः' इति श्रुतेः। अवयः प्रस्तावः, साहचर्यदर्शनादजादीनाम्। गाव उद्गीथः श्रैष्ठ्यात्। अश्वाः प्रतिहारः, प्रतिहरणात् पुरुषाणाम्। पुरुषो निधनं, पुरुषाश्रयत्वात्पशूनाम्।

शंकर.

**भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥**

फलं—भवन्ति हास्य पशवः, पशुमान् भवति, पशुफलैश्च भोगत्यागादिभिर्युज्यते इत्यर्थः।

शंकर.

प्राणेषु पञ्चविधपरोवरीयस्त्वयुक्तसामोपासनम्

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत। प्राणो हिंकारः। वाक्प्रस्तावः। चक्षुरुद्गीथः। श्रोत्रं प्रतिहारः। मनो निधनम्। परोवरीयाꣳसि वा एतानि ॥**

(१) प्राणेषु पञ्चविधं परोवरीयः सामोपासीत। परंपरं वरीयस्त्वगुणवत्प्राणदृष्टिविशिष्टं सामोपासीतेत्यर्थः। प्राणो घ्राणं हिंकारः, उत्तरोत्तरवरीयसां प्राथम्यात्। वाक् प्रस्तावः। वाचा हि प्रस्तूयते सर्वम्। वाक् वरीयसी प्राणात्। अप्राप्तमप्युच्यते वाचा, प्राप्तस्यैव तु गन्धस्य ग्राहकः प्राणः। चक्षुरुद्गीथः। वाचो बहुतरविषयं प्रकाशयति चक्षुः, अतो वरीयो वाचः। उद्गीथः, श्रैष्ठ्यात्। श्रोत्रं प्रतिहारः, प्रतिहृतत्वात्। वरीयश्चक्षुषः, सर्वतः श्रवणात्। मनो निधनम्। मनसि हि निधीयन्ते पुरुषस्य भोग्यत्वेन सर्वेन्द्रियाहृता विषयाः। वरीयस्त्वं च श्रोत्रान्मनसः, सर्वेन्द्रियविषयव्यापकत्वात्। अतीन्द्रियविषयोऽपि मनसो गोचर एवेति। यथोक्तहेतुभ्यः परोवरीयांसि प्राणादीनि वा एतानि।

शंकर.

(२) वरीयस्त्वं ज्येष्ठत्वं, परत्वं श्रेष्ठत्वं, परत्वे सति वरीयस्त्वं परोवरीयस्त्वं, परोवरीयस्त्वगुणकप्राणदृष्ट्या पञ्चविधं सामोपासनं कर्तव्यमित्यर्थः। प्राणादीनि परोवरीयांसि।

रंग.

**परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्ते। इति तु पञ्चविधस्य ॥**

(१) एतद्दृष्ट्या विशिष्टं यः परोवरीयः सामोपास्ते, परोवरीयो हास्य जीवनं भवतीत्युक्तार्थम्। इति तु पञ्चविधस्य साम्न उपासनमुक्तमिति सप्तविधे वक्ष्यमाणविषये बुद्धिसमाधानार्थम्। निरपेक्षो हि पञ्चविधे, वक्ष्यमाणे बुद्धिं समाधित्सति।

शंकर.

(२) परोवरीय इति। उपासकस्य जीवनं श्रेष्ठं भवतीत्यर्थः। इति त्विति। साम्न उपासनमुक्तं भवतीत्यर्थः।

रंग.

वाग्दृष्टिविशिष्टसप्तविधसामोपासनम्

**अथ सप्तविधस्य। वाचि सप्तविधꣳ सामोपासीत। यत्किंच वाचो हुमिति स हिंकारः। यत्प्रेति स प्रस्तावः। यदेति स आदिः ॥**

(१) अथ अनन्तरं सप्तविधस्य समस्तस्य साम्न उपासनं साध्विदमारभ्यते। वाचीति सप्तमी पूर्ववत्। वाग्दृष्टिविशिष्टं सप्तविधं सामोपासीतेत्यर्थः। यत्किंच वाचः शब्दस्य हुमिति यो विशेषः स हिंकारः, हकारसामान्यात्। यत् प्र इति शब्दरूपं स प्रस्तावः, प्रसामान्यात्। यत् आ इति स आदिः, आकारसामान्यात्। आदिरित्योंकारः, सर्वादित्वात्।

* शंकर.

(२) वाचः शब्दस्य अवयवभूतो हिमिति यः शब्दः स हिंकारः, हिंकारस्य हिंशब्दवत्त्वसादृश्यात्। ततश्च हिंकारे लोके हिंशब्दा यावन्तस्तद्बुद्धिः कर्तव्येत्यर्थः। एवमुत्तरत्रापि। प्रस्तावे सर्वत्र प्रशब्दत्वबुद्धिः

(१) छाउ. २।६।२.

(२) छाउ. २।७।१.

* छाउ. १।३।१ इत्यत्र (पृ. ७५५) व्रशंकरभाष्यं द्रष्टव्यम्।

(१) छाउ. २।७।२; व्रशंकर. ४।१।६.

(२) छाउ. २।८।१; व्रशंकर. ४।१।६; रंग. हुमिति (हिमिति), 'यदेति' इत्यत्र शंकरभाष्ये 'यत् आ इति' इति छेदः। रंगभाष्ये तु 'यत् अ इति' इति।

कर्तव्या । उद्गीथेऽप्याद्यावयवभूते ओंकारे अ इति शब्दबुद्धिः कर्तव्येत्यर्थः । * रंग.

**यदुदिति स उद्गीथः । यत्प्रतीति स प्रतिहारः । यदुपेति स उपद्रवः । यन्नीति तन्निधनम् ॥**

यदुदिति स उद्गीथः, उत्पूर्वत्वादुद्गीथस्य । यत्प्रतीति स प्रतिहारः, प्रतिसामान्यात् । यदुपेति स उपद्रवः, उपोपक्रमत्वादुपद्रवस्य । यन्नीति तन्निधनं, निशब्दसामान्यात् । शंकर.

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहः । अन्नवानन्नादो भवति । य एतदेवं विद्वान्वाचि सप्तविधँ सामोपास्ते ॥**

( १ ) दुग्धेऽस्मै इत्याद्युक्तार्थम् । शंकर.

( २ ) वाक्संबन्धी यो दोहोऽस्ति, वाक्साध्यं यत्फलं, तत्फलमुपास्यमाना वाक् अस्मै उपासकाय दुग्धे प्रयच्छति । रंग.

आदित्यदृष्टिविशिष्टसप्तविधसामोपासनम्

**अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत । सर्वदा समस्तेन साम । मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥**

अवयवमात्रे साम्न्यादित्यदृष्टिः पञ्चविधेपूक्ता प्रथमे चाध्याये । अथेदानीं खल्वमुमादित्यं समस्ते साम्न्यवयवविभागशोऽध्यस्य सप्तविधं सामोपासीत । कथं पुनः सामत्वमादित्यस्येति । उच्यते—उद्गीथत्वे हेतुवदादित्यस्य सामत्वे हेतुः । कोऽसौ । सर्वदा समः, वृद्धिक्षयाभावात्, तेन हेतुना साम आदित्यः । मां प्रति मां प्रतीति तुल्यां बुद्धिमुत्पादयति, अतः सर्वेण समः, अतः साम, समत्वादित्यर्थः । उद्गीथभक्तिसामान्यवचनादेव लोकादिषूक्तसामान्याद्धिंकारादित्वं गम्यते इति हिंकारादित्वे कारणं नोक्तम् । सामत्वे पुनः सवितुरनुक्तं कारणं न सुबोधमिति समत्वमुक्तम् ।

‡ शंकर.

( २ ) यत्रापि तुल्यो द्वितीयानिर्देशः 'अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत' इति, तत्रापि 'समस्तस्य खलु साम्न उपासनँ साधु' ( छाउ. २।१।१ ) 'इति तु पञ्चविधस्य' ( छाउ. २।७।२ ) 'अथ सप्तविधस्य' ( छाउ. २।८।१ ) इति च साम्न एवोपास्यत्वोपक्रमात् तस्मिन्नेव आदित्याद्यध्यासः । ‡ ब्रशंकर. ४।१।६

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् । तस्य यत्पुरोदयात्स हिंकारः । तदस्य पशवोऽन्वायत्ताः । तस्मात्ते हिं कुर्वन्ति । हिंकारभाजिनो ह्येतस्य साम्नः ॥**

तस्मिन् आदित्ये अवयवविभागशः इमानि वक्ष्यमाणानि सर्वाणि भूतान्यन्वायत्तानि अनुगतानि आदित्यमुपजीव्यत्वेनेति विद्यात् । कथम् । तस्याऽऽदित्यस्य यत्पुरोदयाद्धर्मरूपं स हिंकारो भक्तिः । तत्रेदं सामान्यं यत्तस्य हिंकारभक्तिरूपं, तदस्याऽऽदित्यस्य साम्नः पशवो गवादयः अन्वायत्ताः अनुगताः, तद्भक्तिरूपं उपजीवन्तीत्यर्थः । यस्मादेवं तस्मात्ते हिं कुर्वन्ति पशवः प्रागुदयात् । तस्माद्धिंकारभाजिनो ह्येतस्याऽऽदित्याख्यस्य साम्नः, तद्भक्तिभजनशीलत्वाद्धि ते एवं वर्तन्ते ।

\+ शंकर.

**अथ यत्प्रथमोदिते स प्रस्तावः । तदस्य मनुष्या अन्वायत्ताः । तस्मात्ते प्रस्तुतिकामाः प्रशँसाकामाः । प्रस्तावभाजिनो ह्येतस्य साम्नः ॥**

( १ ) अथ यत्प्रथमोदिते सवितृरूपं तदस्याऽऽदित्याख्यस्य साम्नः स प्रस्तावः । तदस्य मनुष्या अन्वायत्ताः पूर्ववत् । तस्मात्ते प्रस्तुतिं प्रशंसां * कामयन्ते, यस्मात्प्रस्तावभाजिनो ह्येतस्य साम्नः । शंकर.

( २ ) प्रस्तुतिकामा इत्यस्य विवरणं प्रशंसाकामा इति । § रंग.

---

* शेषं शंकरवत् ।

‡ रंग. पदार्थमात्रं शंकरवत् ।

(१) छाउ. २।८।२.

(२) छाउ. २।८।३.

(३) छाउ. २।९।१; ब्रशंकर. ४।१।६.

‡ छाउ. १।३।१ इत्यत्रापि ( पृ. ७५५ ) ब्रशंकरभाष्यं द्रष्टव्यम् ।

\+ रंग. शंकरवत् ।

* 'प्रत्यक्षपरोक्षभावेन प्रस्तुतिप्रशंसयोर्भेदः' इति टीका ।

§ शेषं शंकरवत् ।

(१) छाउ. २।९।२. (२) छाउ. २।९।३.

अथ यत्संगववेलायाँ स आदिः। तदस्य वयाँस्यन्वायत्तानि। तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायाऽऽत्मानं परिपतन्ति। आदिभाजीनि ह्येतस्य साम्नः॥

(१) अथ संगववेलायां गवां रश्मीनां संयमनं संगवो यस्यां वेलायां, गवां वा वत्सैः, सा संगववेला, तस्मिन्काले यत्सावित्रं रूपं स आदिर्भक्तिविशेष ओंकारः। तदस्य वयांसि पक्षिणः अन्वायत्तानि। यत एवं तस्मात्तानि वयांस्यन्तरिक्षे अनारम्बणानि अनालम्बनानि आत्मानमादाय आत्मानमेवाऽऽलम्बनत्वेन गृहीत्वा परिपतन्ति गच्छन्ति। अत आकारसामान्यादादिभक्तिभाजीनि ह्येतस्य साम्नः। शंकर.

(२) तानि वयांसि पक्षिणः अनारम्बणानि आलम्बनान्तरशून्यान्येव आत्मानमेवावलम्बनत्वेनाऽऽदाय आकाशे परिपतन्ति। संगवकालादित्यसंबन्ध्यादिशब्दितोंकाररूपोपजीवित्वादेवाऽऽदाय परिपतनं पक्षिणामित्यर्थः। आदिशब्दादायशब्दयोराकारदकारवत्त्वसाम्यमिहाभिप्रेतम्। रंग.

अथ यत्संप्रति मध्यंदिने स उद्गीथः। तदस्य देवा अन्वायत्ताः। तस्मात्ते सत्तमाः प्राजापत्यानाम्। उद्गीथभाजिनो ह्येतस्य साम्नः॥

(१) अथ यत्संप्रति मध्यंदिने, ऋजुमध्यंदिने इत्यर्थः। स उद्गीथभक्तिः। तदस्य देवा अन्वायत्ताः, द्योतनातिशयात्तत्काले। तस्मात्ते सत्तमा विशिष्टतमाः प्राजापत्यानां प्रजापत्यपत्यानाम्। उद्गीथभाजिनो ह्येतस्य साम्नः। शंकर.

(२) उद्गीथसत्तमशब्दयोः संयुक्ततकारश्रुतिमत्त्वसाम्यादुपजीव्योपजीवकभावोक्तिर्द्रष्टव्या। * रंग.

अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात्स प्रतिहारः। तदस्य गर्भा अन्वायत्ताः। तस्मात्ते प्रतिहृता नावपद्यन्ते। प्रतिहारभाजिनो ह्येतस्य साम्नः॥

अथ यदूर्ध्वं मध्यंदिनात् प्रागपराह्णाद्यद्रूपं सवितुः स प्रतिहारः। तदस्य गर्भा अन्वायत्ताः। अतस्ते सवितुः प्रतिहारभक्तिरूपेणोर्ध्वं प्रतिहृताः सन्तो नावपद्यन्ते नाधः पतन्ति, तद्द्वारे सत्यपीत्यर्थः। यतः प्रतिहारभाजिनो ह्येतस्य साम्नो गर्भाः। ‡ शंकर.

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवः। तदस्याऽऽरण्या अन्वायत्ताः। तस्मात्ते पुरुषं दृष्ट्वा कक्षँ श्वभ्रमित्युपद्रवन्ति। उपद्रवभाजिनो ह्येतस्य साम्नः॥

(१) अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवः। तदस्य आरण्याः पशवः अन्वायत्ताः। तस्मात् ते पुरुषं दृष्ट्वा भीताः कक्षं अरण्यं श्वभ्रं भयशून्यं इत्युपद्रवन्ति उपगच्छन्ति। दृष्ट्वा उपद्रवणात् उपद्रवभाजिनो ह्येतस्य साम्नः। शंकर.

(२) आदित्यसंबन्ध्युपद्रवभक्त्युपजीवित्वादेव पुरुषदर्शनभीतानामारण्यानां कक्षश्वभ्रादिषूपद्रवगमित्यर्थः। रंग.

अथ यत्प्रथमास्तमिते तन्निधनम्। तदस्य पितरोऽन्वायत्ताः। तस्मात्तान्निदधति। निधनभाजिनो ह्येतस्य साम्नः। एवं खल्वमुमादित्यँ सप्तविधँ सामोपास्ते॥

अथ यत्प्रथमास्तमिते अदर्शनं जिगमिषति सवितरि तन्निधनम्। तदस्य पितरोऽन्वायत्ताः। तस्मात्तान्निदधति पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपन्ति तान्, तदर्थं पिण्डान्वा स्थापयन्ति। निधनसंबन्धात् निधनभाजिनो ह्येतस्य साम्नः पितरः। एवमवयवशः सप्तधा विभक्तं खल्वमुमादित्यं सप्तविधं सामोपास्ते यः, तस्य तदापत्तिः फलमिति वाक्यशेषः। † शंकर.

आत्मसंमितातिमृत्युसप्तविधसामविषयमुपासनम्

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधँ

---

* शेषं शंकरवत्.

(१) छाउ. २।९।४.

(२) छाउ. २।९।५.

(३) छाउ. २।९।६.

‡ रंग. शंकरवत्।

† रंग. वाक्यशेषवर्जं शंकरवत्।

(१) छाउ. २।९।७; रंग. त्स उप ( त्समुप ).

(२) छाउ. २।९।८.

(३) छाउ. २।१०।१.

**सामोपासीत । हिंकार इति त्र्यक्षरम् । प्रस्ताव इति त्र्यक्षरम् । तत्समम् ॥**

मृत्युरादित्यः, अहोरात्रादिकालेन जगतः प्रमापयितृत्वात् * । तस्यातितरणायेदं सामोपासनमुपदिश्यते— अथ खलु अनन्तरं आदित्यमृत्युविषयसामोपासनस्य, आत्मसंमितं स्वावयवतुल्यतया मितं, परमात्मतुल्यतया वा संमितं, अतिमृत्यु, मृत्युजयहेतुत्वात् । यथा प्रथमेऽध्याये उद्गीथभक्तिनामाक्षराणि उद्गीथ इत्युपास्यत्वेनोक्तानि, तथेह साम्नः सप्तविधभक्तिनामाक्षराणि समाहृत्य त्रिभिस्त्रिभिः समतया सामत्वं परिकल्प्य उपास्यत्वेनोच्यन्ते । तदुपासनेन मृत्युगोचराक्षरसंख्यासामान्येन तं मृत्युं प्राप्य तदतिरिक्ताक्षरेण तस्याऽऽदित्यस्य मृत्योरतिक्रमणायैव संक्रमणं कल्पयति । अतिमृत्यु सप्तविधं सामोपासीत । मृत्युमतिक्रान्तं अतिरिक्ताक्षरसंख्यया इत्यतिमृत्यु साम । तस्य प्रथमभक्तिनामाक्षराणि हिंकार इति । एतत्त्र्यक्षरं भक्तिनाम । प्रस्ताव इति च भक्तेस्त्र्यक्षरमेव नाम । तत्पूर्वेण समम् ।

† शंकर.

**(१) आदिरिति द्व्यक्षरम् । प्रतिहार इति चतुरक्षरम् । तत इहैकम् । तत्समम् ॥**

आदिरिति द्व्यक्षरम् । सप्तविधस्य साम्नः संख्यापूरणे ओंकार आदिरित्युच्यते । प्रतिहार इति चतुरक्षरम् । तत इहैकमक्षरमवच्छिद्य आद्यक्षरयोः प्रक्षिप्यते । तेन तत्सममेव भवति । † शंकर.

**(२) उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति । अक्षरमतिशिष्यते त्र्यक्षरम् । तत्समम् ॥**

( १ ) उद्गीथ इति त्र्यक्षरं उपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति । अक्षरमतिशिष्यते अतिरिच्यते । तेन वैषम्ये प्राप्ते साम्नः समत्वकरणायाऽऽह — तदेकमपि सत् ' अक्षरं ' इति त्र्यक्षरमेव भवति । अतस्तत्समम् । शंकर.

( २ ) उपद्रव इति चतुरक्षरे एकस्मिन्नक्षरे पृथक्कृते सति अवशिष्टं त्र्यक्षरं सममेव भवतीत्यर्थः ।

रंग

**(३) निधनमिति त्र्यक्षरम् । तत्सममेव भवति । तानि ह वा एतानि द्वाविंशतिरक्षराणि ॥**

निधनमिति त्र्यक्षरम् । तत्सममेव भवति । एवं त्र्यक्षरसमतया सामत्वं संपाद्य यथाप्राप्तान्येवाक्षराणि संख्यायन्ते—तानि ह वा एतानि सप्तभक्तिनामाक्षराणि द्वाविंशतिः ।

शंकर.

**(१) एकविंशत्याऽऽदित्यमाप्नोति । एकविंशो वा इतोऽसावादित्यः । द्वाविंशेन परमादित्याज्जयति । तन्नाकम् । तद्विशोकम् ॥**

( १ ) तत्र एकविंशत्यक्षरसंख्यया आदित्यमाप्नोति मृत्युम् । यस्मात् एकविंश इतः अस्माल्लोकात् असौ आदित्यः संख्यया, ' द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ' इति श्रुतेः । अतिशिष्टेन द्वाविंशेनाक्षरेण परं मृत्योरादित्यात् जयति आप्नोतीत्यर्थः । यच्च तदादित्यात्परं, किं तत् ? नाकं, कमिति सुखं, तस्य प्रतिषेधः अकं, तन्न भवतीति नाकं, कमेवेत्यर्थः, मृत्युविषयत्वाद्दुःखस्य । विशोकं च तत् विगतशोकं, मानसदुःखरहितमित्यर्थः तदाप्नोतीति ।

शंकर

( २ ) आदित्यमाप्नोति । आदित्यसालोक्यं प्राप्नोतीत्यर्थः । * रंग

**(३) आप्नोतीहाऽऽदित्यस्य जयम् । परो हास्याऽऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविधं सामोपास्ते सामोपास्ते ॥**

( १ ) उक्तस्यैव पिण्डितार्थमाह—एकविंशतिसंख्यया आदित्यस्य जयमाप्नोति । परो हास्यैवंविद आदित्यजयान्मृत्युगोचरात्परो जयो भवति द्वाविंशत्यक्षरसंख्य-

* नाशयितृत्वादित्यर्थः ।
† रंग. शंकरवत् ।
(१) छाउ. २।१०।२.
(२) छाउ. २।१०।३.

* शेषं शंकरवत् ।
(१) छाउ. २।१०।४.
(२) छाउ. २।१०।५; ब्रशंकर. ३।३।२६.
(३) छाउ. २।१०।६.

येत्यर्थः । य एतदेवं विद्वानित्याद्युक्तार्थम् । तस्यैतद्-थोक्तं कृत्स्नमिति । द्विरभ्यासः सप्तविधसमाप्त्यर्थः । शंकर.

( २ ) इह लोके आदित्यजयं प्राप्नोतीत्यर्थः । य एवमुपास्ते तस्याऽऽदित्यजयात्सर्वोत्कर्षो भवतीत्यर्थः । रंग.

महामनस्त्वव्रतयुक्तं गायत्रसामोपासनं

प्राणदृष्टिविशिष्टम्

**मनो हिंकारः । वाक्प्रस्तावः । चक्षुरुद्गीथः । श्रोत्रं प्रतिहारः । प्राणो निधनम् । एतद्गायत्रं प्राणेषु प्रोतम् ॥**

( १ ) विना नामग्रहणं पञ्चविधस्य सप्तविधस्य च साम्न उपासनमुक्तम् । अथेदानीं गायत्रादिनामग्रहणपूर्वकं विशिष्टफलानि सामोपासनान्तराण्युच्यन्ते, यथाक्रमं गायत्रादीनां कर्मणि प्रयोगस्तथैव । मनो हिंकारः, मनसः सर्वकरणवृत्तीनां प्राथम्यात् । तदानन्तर्याद्वाक् प्रस्तावः । चक्षुरुद्गीथः, श्रैष्ठ्यात् । श्रोत्रं प्रतिहारः, प्रतिहृतत्वात् । प्राणो निधनं, यथोक्तानां प्राणे निधनात्स्वापकाले । एतद्गायत्रं साम प्राणेषु प्रोतं, गायत्र्याः प्राणसंस्तुतत्वात् । शंकर.

( २ ) अथ गायत्ररथन्तरादिसामोपासनं प्रस्तूयते । गायत्राख्यस्य साम्नो हिंकारादिपञ्चविधभक्तिषु मनआदिदृष्टिः कर्तव्येत्यर्थः । एतद्गायत्रमिति । अनेनाऽऽकारेण गायत्राख्यसाम्नो मनआदिप्राणानां च अध्यासाधिष्ठानभावलक्षणसंबन्धेन परस्परसंबद्धमित्यर्थः । रंग.

**स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद । प्राणी भवति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । महामनाः स्यात् । तद्व्रतम् ॥**

( १ ) स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद, प्राणी भवति, अविकलकरणो भवतीत्येतत् । सर्वमायुरेति, 'शतं वर्षाणि सर्वमायुः पुरुषस्य ' इति श्रुतेः । ज्योक् उज्ज्वलं जीवति । महान् भवति प्रजादिभिर्महांश्च कीर्त्या । गायत्रोपासकस्यैतद्व्रतं भवति यत् महामनस्त्वं, अक्षुद्रचित्तः स्यादित्यर्थः । शंकर.

( २ ) महामनस्कत्वं वदान्यमनस्कत्वम् । ज्योक् उज्ज्वलः, व्याध्यादिभिरनुपहत इत्यर्थः । शिष्टं स्पष्टम् । रंग.

निष्ठीवनप्रतिषेधादिव्रतयुक्तं रथन्तरसामोपासनं

अग्निदृष्टिविशिष्टम्

**अभिमन्थति स हिंकारः । धूमो जायते स प्रस्तावः । ज्वलति स उद्गीथः । अङ्गारा भवन्ति स प्रतिहारः । उपशाम्यति तन्निधनम् । संशाम्यति तन्निधनम् । एतद्रथन्तरमग्नौ प्रोतम् ॥**

अभिमन्थति स हिंकारः, प्राथम्यात् । अग्नेर्धूमो जायते स प्रस्तावः, आनन्तर्यात् । ज्वलति स उद्गीथः । हविःसंबन्धात् श्रैष्ठ्यं ज्वलनस्य । अङ्गारा भवन्ति स प्रतिहारः, अङ्गाराणां प्रतिहृतत्वात् । उपशमः सावशेषत्वादग्नेः, संशमः निःशेषोपशमः समाप्तिसामान्यात् निधनम् । एतद्रथन्तरमग्नौ प्रोतम् । मन्थने ह्यग्नेर्गीयते । * शंकर.

**स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद । ब्रह्मवर्चस्यन्नादो भवति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत् । तद्व्रतम् ॥**

स य इत्यादि पूर्ववत् । ब्रह्मवर्चसी, वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । तेजस्तु केवलं त्विड्भावः । अन्नादः दीप्ताग्निः । न प्रत्यङ् अग्नेः अभिमुखः नाऽऽचामेत् न भक्षयेत्किंचित्, न निष्ठीवेत् श्लेष्मनिरसनं च न कुर्यात्, तद्व्रतम् । ‡ शंकर.

कामिन्यप्रतिहारव्रतयुक्तं वामदेव्यसामोपासनं

मिथुनदृष्टिविशिष्टम्

**उपमन्त्रयते स हिंकारः । ज्ञपयते स प्रस्तावः । स्त्रिया सह शेते स उद्गीथः । प्रति स्त्रीं सह शेते स**

* रंग. उपशमसंशमशब्दमात्रमर्थापितम् । तच्च शंकरवत् ।

‡ रंग. शंकरेण गतार्थम् ।

(१) छाउ. २।११।१; ब्रशंकर. ४।१।६.

(२) छाउ. २।११।२.

(१) छाउ. २।१२।१. (२) छाउ. २।१२।२.

(३) छाउ. २।१३।१.

प्रतिहारः । कालं गच्छति तन्निधनम् । पारं गच्छति तन्निधनम् । एतद्वामदेव्यं मिथुने प्रोतम् ॥

उपमन्त्रयते संकेतं करोति, प्राथम्यात्स हिंकारः । ज्ञपयते तोषयति स प्रस्तावः । सहशयनं एकपर्यङ्कगमनं, स उद्गीथः, श्रैष्ठ्यात् । प्रति स्त्रीं शयनं स्त्रिया अभिमुखीभावः, स प्रतिहारः । कालं गच्छति मैथुनेन, पारं समाप्तिं गच्छति तन्निधनम् । एतद्वामदेव्यं मिथुने प्रोतम् । वाय्वम्बुमिथुनसंबन्धात् ।

‡ शंकर.

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद । मिथुनी भवति । मिथुनान्मिथुनात्प्रजायते । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । न कांचन परिहरेत् । तद्व्रतम् ॥

स य इत्यादि पूर्ववत् । मिथुनीभवति अविधुरो भवतीत्यर्थः । मिथुनान्मिथुनात्प्रजायते इत्यमोघरेतस्त्वमुच्यते । न कांचन कांचिदपि स्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत् समागमार्थिनीम् । वामदेव्यसामोपासनाङ्गत्वेन विधानात् एतस्मादन्यत्र प्रतिषेधस्मृतयः । वचनप्रामाण्याच्च धर्मावगतेर्न प्रतिषेधशास्त्रेणास्य विरोधः । ‡ शंकर.

तपन्नादित्यानिन्दाव्रतयुक्तं बृहत्सामोपासनं आदित्यदृष्टिविशिष्टम्

उद्यन्हिंकारः । उदितः प्रस्तावः । मध्यंदिन उद्गीथः । अपराह्णः प्रतिहारः । अस्तं यन्निधनम् । एतद्बृहदादित्ये प्रोतम् ॥

( १ ) उद्यन्सविता स हिंकारः, प्राथम्याद्दर्शनस्य । उदितः प्रस्तावः, प्रस्तवनहेतुत्वात् कर्मणाम् । मध्यंदिन उद्गीथः, श्रैष्ठ्यात् । अपराह्णः प्रतिहारः, पश्वादीनां गृहान्प्रति हरणात् । यदस्तं यन् तन्निधनं, रात्रौ गृहे निधानात्प्राणिनाम् । एतद्बृहदादित्ये प्रोतं, बृहत आदित्यदैवत्यत्वात् ।

शंकर.

( २ ) मध्यंदिनकालावच्छिन्न आदित्य उद्गीथ इत्यर्थः । अपराह्णकालावच्छिन्न आदित्यः प्रतिहारः । यन् गच्छन्नित्यर्थः । रंग.

स य एवमेतद्बृहदादित्ये प्रोतं वेद । तेजस्व्यन्नादो भवति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । तपन्तं न निन्देत् । तद्व्रतम् ॥

( १ ) स य इत्यादि पूर्ववत् । तपन्तं न निन्देत्, तद्व्रतम् । शंकर.

( २ ) तपन्तमादित्यं न निन्देदित्यर्थः ।

रंग.

वर्षत्पर्जन्यानिन्दाव्रतयुक्तं वैरूपसामोपासनं पर्जन्यदृष्टिविशिष्टम्

अभ्राणि संप्लवन्ते स हिंकारः । मेघो जायते स प्रस्तावः । वर्षति स उद्गीथः । विद्योतते स्तनयति स प्रतिहारः । उद्गृह्णाति तन्निधनम् । एतद्वैरूपं पर्जन्ये प्रोतम् ॥

( १ ) अभ्राणि अब्भरणात् । मेघः उदकसेक्तृत्वात् । उक्तार्थमन्यत् । एतद्वैरूपं नाम साम पर्जन्ये प्रोतं, अनेकरूपत्वात् । अभ्रादिभिः पर्जन्यस्य वैरूप्यम् ।

शंकर.

( २ ) संप्लवः संचारः ।

रंग.

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद । विरूपांश्च सुरूपांश्च पशूनवरुन्धे । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । वर्षन्तं न निन्देत् । तद्व्रतम् ॥

( १ ) विरूपांश्च सुरूपांश्चाजाविप्रभृतीन् पशूनवरुन्धे प्राप्नोतीत्यर्थः । वर्षन्तं न निन्देत्, तद्व्रतम् ।

शंकर.

( २ ) विरूपान् विरुद्धनानारूपान्, सुरूपान् शोभनरूपान् अवरुन्धे प्राप्नोतीत्यर्थः ।

रंग.

---

‡ रंग. शंकरवत् ।

(१) छाउ. २।१३।२; अशंकर. ३।४।२८.

(२) छाउ. २।१४।१.

(१) छाउ. २।१४।२.

(२) छाउ. २।१५।१.

(३) छाउ. २।१५।२.

ऋतुनिन्दाव्रतयुक्तं वैराजसामोपासनं ऋतु-
दृष्टिविशिष्टम्

[1]वसन्तो हिंकारः । ग्रीष्मः प्रस्तावः । वर्षा उद्गीथः । शरत्प्रतिहारः । हेमन्तो निधनम् । एतद्वैराजमृतुषु प्रोतम् ॥

वसन्तो हिंकारः, प्राथम्यात् । ग्रीष्मः प्रस्ताव इत्यादि पूर्ववत् । शंकर.

[2]स य एवमेतद्वैराजमृतुषु प्रोतं वेद । विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । ऋतून्न निन्देत् । तद्व्रतम् ॥

एतद्वैराजमृतुषु प्रोतं वेद विराजति ऋतुवत् । यथा ऋतवः आर्तवैर्धर्मैर्विराजन्ते, एवं प्रजादिभिर्विद्वानिति । उक्तमन्यत् । ऋतून्न निन्देत्, तद्व्रतम् । शंकर.

पृथिव्यादिलोकानिन्दाव्रतयुक्तं शक्वरीसामोपासनं
लोकदृष्टिविशिष्टम्

[3]पृथिवी हिंकारः । अन्तरिक्षं प्रस्तावः । द्यौरुद्गीथः । दिशः प्रतिहारः । समुद्रो निधनम् । एताः शक्वर्यो लोकेषु प्रोताः ॥

पृथिवी हिंकार इत्यादि पूर्ववत् । शक्वर्य इति नित्यं बहुवचनं रेवत्य इव । लोकेषु प्रोताः ।

† शंकर.

[4]स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद । लोकी भवति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । लोकान्न निन्देत् । तद्व्रतम् ॥

लोकीभवति लोकफलेन युज्यते इत्यर्थः । लोकान्न निन्देत्, तद्व्रतम् । शंकर.

पशुनिन्दाव्रतयुक्तं रेवतीसामोपासनं
पशुदृष्टिविशिष्टम्

[5]अजा हिंकारः । अवयः प्रस्तावः । गाव उद्गीथः । अश्वाः प्रतिहारः । पुरुषो निधनम् । एता रेवत्यः पशुषु प्रोताः ॥

(१) अजा हिंकार इत्यादि पूर्ववत् । पशुषु प्रोताः । शंकर.

(२) रेवत्य इत्यपि शक्वर्य इतिवन्नित्यं बहुवचनम् । रंग.

[1]स य एवमेता रेवत्यः पशुषु प्रोता वेद । पशुमान्भवति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । पशून्न निन्देत् । तद्व्रतम् ॥

पशून्न निन्देत्, तद्व्रतम् । शंकर.

मज्जानशनव्रतयुक्तं यज्ञायज्ञीयसामोपासनं
अङ्गदृष्टिविशिष्टम्

[2]लोम हिंकारः । त्वक्प्रस्तावः । मांसमुद्गीथः । अस्थि प्रतिहारः । मज्जा निधनम् । एतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥

लोम हिंकारः, देहावयवानां प्राथम्यात् । त्वक् प्रस्तावः, आनन्तर्यात् । मांसमुद्गीथः, श्रैष्ठ्यात् । अस्थि प्रतिहारः, प्रतिहृतत्वात् । मज्जा निधनं, आन्त्यात् । एतद्यज्ञायज्ञीयं नाम साम देहावयवेषु प्रोतम् । शंकर.

[3]स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेद । अङ्गी भवति । नाङ्गेन विहूर्छति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । संवत्सरं मज्ज्ञो नाश्नीयात् । तद्व्रतम् । मज्ज्ञो नाश्नीयादिति वा ॥

(१) अङ्गीभवति समग्राङ्गो भवतीत्यर्थः । नाङ्गेन हस्तपादादिना विहूर्छति न कुटिलीभवति पङ्गुः कुणी * वेत्यर्थः । संवत्सरं संवत्सरमात्रं मज्ज्ञः मांसानि नाश्नीयात् न भक्षयेत् । बहुवचनं

† रंग. शंकरवत् ।

(१) छाउ. २।१६।१. (२) छाउ. २।१६।२.
(३) छाउ. २।१७।१. (४) छाउ. २।१७।२.
(५) छाउ. २।१८।१.

* 'कुणिः श्मश्रुरहितः' इति टीका । 'इदं द्विवचनम् । कुत्सितकरवाचकस्य प्रसिद्धत्वात् श्मश्रुरहितवाचकस्याप्रसिद्धत्वात् एकस्यैव टीकायां व्याख्यानम्' इति तत्रत्या आगाशेकाशीनाथशास्त्रिणां टिप्पणी । सर्वेषु पुस्तकेषु 'कुणी' इति दीर्घान्त एव पाठ उपलभ्यते ।

(१) छाउ. २।१८।२.
(२) छाउ. २।१९।१.
(३) छाउ. २।१९।२.

मत्स्योपलक्षणार्थम् । मज्ज्ञो नाश्नीयात् सर्वदैव नाश्नीयादिति वा । तद्व्रतम् ।

शंकर.

( २ ) मज्जाख्यमांसविशेषानित्यर्थः ।

† रंग.

ब्राह्मणानिन्दाव्रतयुक्तं राजनसामोपासनं देवतादृष्टिविशिष्टम्

अग्निर्हिंकारः । वायुः प्रस्तावः । आदित्य उद्गीथः । नक्षत्राणि प्रतिहारः । चन्द्रमा निधनम् । एतद्राजनं देवतासु प्रोतम् ॥

अग्निर्हिंकारः, प्रथमस्थानत्वात् । वायुः प्रस्तावः, आनन्तर्यसामान्यात् । आदित्य उद्गीथः, श्रैष्ठ्यात् । नक्षत्राणि प्रतिहारः, प्रतिहृतत्वात् । चन्द्रमा निधनं, कर्मिणां तन्निधनात् । एतद्राजनं देवतासु प्रोतं, देवतानां दीप्तिमत्त्वात् ।

शंकर.

स य एवमेतद्राजनं देवतासु प्रोतं वेद । एतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति । सर्वमायुरेति । ज्योग्जीवति । महान्प्रजया पशुभिर्भवति । महान्कीर्त्या । ब्राह्मणान्न निन्देत् । तद्व्रतम् ॥

( १ ) विद्वत्फलम् — एतासामेवाग्न्यादीनां देवतानां सलोकतां समानलोकतां सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावं, एकदेहदेहित्वमित्येतत् । वाशब्दोऽत्र लुप्तो द्रष्टव्यः सलोकतां वेत्यादि, भावनाविशेषतः फलविशेषोपपत्तेः । गच्छति प्राप्नोति । समुच्चयानुपपत्तेश्च । ब्राह्मणान्न निन्देत्, तद्व्रतं, 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः' इति श्रुतेर्ब्राह्मणनिन्दा देवतानिन्दैवेति ।

शंकर.

( २ ) सायुज्यं समानभोग्यत्वम् ।

* रंग.

† शेषं शंकरवत् । बहुवचनस्योपलक्षणार्थता नोक्ता ।
* वालोपकल्पनार्थं शेषं शंकरवत् ।

(१) छान्दो. २।२०।१.
(२) छान्दो. २।२०।२.

सर्वात्मदृष्टिव्रतयुक्तं सामोपासनं सर्वदृष्टिविशिष्टम्

त्रयी विद्या हिंकारः । त्रय इमे लोकाः स प्रस्तावः । अग्निर्वायुरादित्यः स उद्गीथः । नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः । सर्पा गन्धर्वाः पितरस्तन्निधनम् । एतत्साम सर्वस्मिन्प्रोतम् ॥

( १ ) त्रयी विद्या हिंकारः । अग्न्यादिसाम्न आनन्तर्यं त्रयीविद्याया अग्न्यादिकार्यत्वश्रुतेः । हिंकारः, प्राथम्यात्सर्वकर्तव्यानाम् । त्रय इमे लोकास्तत्कार्यत्वादनन्तरा इति प्रस्तावः । अग्न्यादीनामुद्गीथत्वं श्रैष्ठ्यात् । नक्षत्रादीनां प्रतिहृतत्वात्प्रतिहारत्वम् । सर्पादीनां धकारसामान्यान्निधनत्वम् । एतत्साम, नामविशेषाभावात् सामसमुदायः सामशब्दः, सर्वस्मिन्प्रोतम् । त्रयीविद्यादि हि सर्वम् । त्रयीविद्यादिदृष्ट्या हिंकारादिसामभक्तय उपास्याः, अतीतेष्वपि सामोपासनेषु येषु येषु प्रोतं यद्यत्साम, तद्दृष्ट्या तदुपास्यमिति, कर्माङ्गानां दृष्टिविशेषेणाऽऽज्यस्येव संस्कार्यत्वात् ।

शंकर.

( २ ) अत्र सामविशेषानिर्देशात् सामशब्दः सामसामान्यपरः । रंग.

स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वꣳ ह भवति ॥

( १ ) सर्वविषयसामविदः फलं — सर्वं ह भवति सर्वेश्वरो भवतीत्यर्थः । निरुपचरितसर्वभावे हि दिक्स्थेभ्यो बलिप्राप्त्यनुपपत्तिः ।

शंकर.

( २ ) काम्यमानं सर्वमाप्नोतीत्यर्थः ।

रंग.

तदेष श्लोकः । यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥

( १ ) तदेतस्मिन्नर्थे एष श्लोकः मन्त्रोऽप्यस्ति । यानि पञ्चधा पञ्चप्रकारेण हिंकारादिविभागैः प्रोक्तानि त्रीणि त्रीणि त्रयीविद्यादीनि, तेभ्यः पञ्चत्रिकेभ्यः

(१) छान्दो. २।२१।१.
(२) छान्दो. २।२१।२.
(३) छान्दो. २।२१।३.

ज्यायः तदन्तरं परं च व्यतिरिक्तं अन्यद्वस्त्वन्तरं नास्ति न विद्यते इत्यर्थः। तत्रैव हि सर्वस्यान्तर्भावः।

शंकर.

( २ ) त्रीणि 'त्रयी विद्या हिंकारः । त्रय इमे लोकाः' इत्युक्तानि यानि त्रीणि हिंकारादिरूपेण पञ्चधा भवन्ति, अतः परं उत्कृष्टं श्रेयः किमपि नास्ति ।'

रंग.

**यस्तद्वेद स वेद सर्वम् । सर्वा दिशो बलिमस्मै हरन्ति । सर्वमस्मीत्युपासीत । तद्व्रतं तद्व्रतम् ॥**

( १ ) यस्तद्यथोक्तं सर्वात्मकं साम वेद, स वेद सर्वं, स सर्वज्ञो भवतीत्यर्थः। सर्वा दिशः सर्वदिक्स्थाः अस्मै एवंविदे बलिं भोगं हरन्ति प्रापयन्तीत्यर्थः। सर्वमस्मि भवामि इत्येवमेतत्सामोपासीत । तस्यैतदेव व्रतम् । द्विरुक्तिः सामोपासनसमाप्त्यर्था ।

शंकर.

( २ ) सामसामान्ये उक्तरीत्या सर्वस्याऽऽश्रयत्वेन स्वाभिन्नत्वेन चोपासना कर्तव्येत्यर्थः ।

* रंग.

सप्तविधानि सामगानानि अग्न्यादिदेवतासंबन्धीनि

**[२]विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथः। अनिरुक्तः प्रजापतेः। निरुक्तः सोमस्य । मृदु श्लक्ष्णं वायोः । श्लक्ष्णं बलवदिन्द्रस्य । क्रौञ्चं बृहस्पतेः । अपध्वान्तं वरुणस्य । तान्सर्वानेवोपसेवेत । वारुणं त्वेव वर्जयेत् ॥**

( १ ) सामोपासनप्रसङ्गेन गानविशेषादिसंपदुद्गातुरुपदिश्यते, फलविशेषसंबन्धात् । विनर्दि, विशिष्टो नर्दः स्वरविशेषः ऋषभकूजितसमः अस्यास्तीति विनर्दि, गानमिति वाक्यशेषः । तच्च साम्नः संबन्धि पशुभ्यो हितं पशव्यं अग्नेः अग्निदेवत्यं चोद्गीथ उद्गानम् । तदहमेवं-विशिष्टं वृणे प्रार्थये इति कश्चिद्यजमान उद्गाता वा मन्यते । अनिरुक्तः अमुकसम इत्यविशेषितः प्रजापतेः प्रजापतिदेवत्यः स गानविशेषः, अनिरुक्त्यात्प्रजापतेः। निरुक्तः स्पष्टः सोमस्य सोमदेवत्यः स उद्गीथ इत्यर्थः। मृदु श्लक्ष्णं च गानं वायोः वायुदेवत्यं तत् । श्लक्ष्णं बलवच्च प्रयत्नाधिक्योपेतं च इन्द्रस्य ऐन्द्रं तद्गानम् । क्रौञ्चं क्रौञ्चपक्षिनिनादसमं बृहस्पतेः बार्हस्पत्यं तत् । अपध्वान्तं भिन्नकांस्यस्वरसमं वरुणस्यैतद्गानम् । तान् सर्वानेवोपसेवेत प्रयुञ्जीत । वारुणं त्वेवैकं वर्जयेत् ।

शंकर.

( २ ) एवं सामोपासनं समाप्य गानविशेषानुद्गातुरुपदिशति । विशिष्टो नर्दः स्वरविशेषः । सोऽस्यास्तीति विनर्दि। गानमिति वाक्यशेषः । साम्नः सामसंबन्धि पशव्यं पशुहितम् । सामसंबन्धि विनर्दि गानं वृणे प्रार्थयते । पुरुषव्यत्ययः छान्दसः । अग्निदैवत्यमुद्गानं अनिरुक्तः अस्पष्टं भवति । अस्पष्टो गानविशेषः अग्निप्रीतिहेतुर्भवतीत्यर्थः । निरुक्तः स्पष्टः गानविशेषः प्रजापतिर्दैवत्यः, प्रजापतिप्रीतिहेतुरित्यर्थः । बलवत्प्रयत्नोपेतमित्यर्थः । क्रौञ्चपक्षिनादसमं बार्हस्पत्यं गानमित्यर्थः । भिन्नकांस्यस्वरसमं वारुणगानमित्यर्थः। अपध्वान्तगानव्यतिरिक्तान् सर्वानुद्गीथानुपसेवेतेत्यर्थः । रंग.

स्तोत्रगानविधिः फलविशेषाभिसंधियुक्तः

**[१]अमृतत्वं देवेभ्य आगायानीत्यागायेत् । स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥**

अमृतत्वं देवेभ्य आगायानि साधयानि । स्वधां पितृभ्य आगायानि। आशां मनुष्येभ्यः, आशां प्रार्थनां, प्रार्थितमित्येतत् । तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मने मह्यं आगायानीत्येतानि मनसा चिन्तयन् ध्यायन् अप्रमत्तः स्वरोष्मव्यञ्जनादिभ्यः, स्तुवीत । * शंकर.

इन्द्रप्रजापतिमृत्युरूपाः सर्वे स्वरा ऊष्माणः स्पर्शाश्च यथाविधि वक्तव्याः

**[२]सर्वे स्वरा इन्द्रस्याऽऽत्मानः । सर्वे ऊष्माणः प्रजापतेरात्मानः । सर्वे स्पर्शा मृत्योरात्मानः । तं**

* शेषं शंकरवत् ।

(१) छाउ. २।२१।४; भास्कर. ४।१।१.

(२) छाउ. २।२२।१.

* रंग. शंकरवत् ।

(१) छाउ. २।२२।२; विज्ञान. ३।३।६३.

(२) छाउ. २।२२।३.

यदि स्वरेषूपालभेत । इन्द्र१ँ शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् ॥

सर्वे स्वराः अकारादयः इन्द्रस्य बलकर्मणः प्राणस्य आत्मानः देहावयवस्थानीयाः । सर्वे ऊष्माणः शष-सहादयः प्रजापतेः विराजः कश्यपस्य वा आत्मानः । सर्वे स्पर्शाः कादयो व्यञ्जनानि मृत्योरात्मानः । तं एवंविदमुद्गातारं यदि कश्चित्स्वरेषूपालभेत स्वरस्त्वया दुष्टः प्रयुक्त इति, एवमुपालब्ध इन्द्रं प्राणमीश्वरं शरणं आश्रयं प्रपन्नोऽभूवं स्वरान्प्रयुञ्जानोऽहं, सः इन्द्रः यत्तव वक्तव्यं त्वा त्वां प्रति वक्ष्यति स एव देव उत्तरं दास्यतीत्येनं ब्रूयात् ।

* शंकर.

अथ यद्येनमूष्मसूपालभेत । प्रजापति१ँ शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयात् । अथ यद्येन१ँ स्पर्शेषूपालभेत । मृत्यु१ँ शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥

अथ यद्येनमूष्मसु तथैवोपालभेत, प्रजापतिं शरणं प्रपन्नोऽभूवं, स त्वा प्रति पेक्ष्यति संचूर्णयिष्यतीत्येनं ब्रूयात् । अथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं, स त्वा प्रति धक्ष्यति भस्मीकरिष्यतीत्येनं ब्रूयात् ।

* शंकर.

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति । सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति । सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥

यतः इन्द्राद्यात्मानः स्वरादयः, अतः सर्वे स्वराः घोषवन्तो बलवन्तो वक्तव्याः, तथा अहमिन्द्रे बलं ददानि बलमादधानीति । तथा सर्वे ऊष्माणः अग्रस्ताः अन्तः अप्रवेशिताः अनिरस्ताः बहिरप्रक्षिप्ताः विवृताः विवृतप्रयत्नोपेताः प्रजापतेरात्मानं परिददानि प्रयच्छानीति । सर्वे स्पर्शा लेशेन शनकैः अनभिनिहिताः अनभिनिक्षिप्ताः वक्तव्याः मृत्योरात्मानं बालानिव शनकैः परिहरद्भिर्मृत्योरात्मानं परिहराणीति ।

* शंकर.

* रंग. शंकरवत् ।

(१) छाउ. २।२२।४.

(२) छाउ. २।२२।५.

चातुराश्रम्यं, प्रणवोपासनाविधिः, प्रणवस्य सर्वलोकरसतमत्वम्

त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययनं दानमिति प्रथमः । तप एव द्वितीयः । ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्वे एते पुण्यलोका भवन्ति । ब्रह्मस१ँस्थोऽमृतत्वमेति ॥

(१) ओंकारस्योपासनविध्यर्थं त्रयो धर्मस्कन्धा इत्याद्यारभ्यते । नैवं मन्तव्यं सामावयवभूतस्यैवोद्गीथादिलक्षणस्योंकारस्योपासनात्फलं प्राप्यते इति । किं तर्हि, यत्सर्वैरपि सामोपासनैः कर्मभिश्चाप्राप्यं, तत्फलममृतत्वं केवलादोंकारोपासनात्प्राप्यते इति । तत्स्तुत्यर्थं सामप्रकरणे तदुपन्यासः । त्रयः त्रिसंख्याकाः धर्मस्य स्कन्धाः धर्मस्कन्धाः धर्मप्रविभागा इत्यर्थः । के त इत्याह—यज्ञः अग्निहोत्रादिः । अध्ययनं सनियमस्य ऋगादेरभ्यासः । दानं बहिर्वेदि यथाशक्ति द्रव्यसंविभागो भिक्षमाणेभ्यः । इति एषः प्रथमो धर्मस्कन्धः गृहस्थसमवेतत्वात्तन्निर्वर्तकेन गृहस्थेन निर्दिश्यते । प्रथमः एक इत्यर्थः, द्वितीयतृतीयश्रवणान्नाऽऽद्यार्थः । तप एव द्वितीयः । तप इति कृच्छ्रचान्द्रायणादि । तद्वान् तापसः परिव्राड्वा, न ब्रह्मसंस्थ आश्रमधर्ममात्रसंस्थः, ब्रह्मसंस्थस्य त्वमृतत्वश्रवणात् । द्वितीयो धर्मस्कन्धः । ब्रह्मचारी आचार्यकुले वस्तुं शीलमस्येत्याचार्यकुलवासी अत्यन्तं यावज्जीवं आत्मानं नियमैराचार्यकुले अवसादयन् क्षपयन्देहं, तृतीयो धर्म-

* रंग. शंकरवत् ।

(१) छाउ. २।२३।१; ब्रशंकर. ३।४।१७,१८,१९,२०, ४०, ४९; भास्कर. १।१।१, ३।४।१७, १८, १९, २०, ३२, ४०; रामानुज. ३।४।१७, १८, १९, २०, २५, ४०, ४८; निंबार्क. ३।४।१७, १८, १९, २०, २५, ४८; श्रीकंठ. १।१।१ ( पृ. ४० ), ३।४।१७, १८, १९, २०, ४०; श्रीकर. १।१।१ ( पृ. १९ ), १।४।२२, ३।३।१८, ३।४।१७, १९, २१, २५, ४०, ४९; विज्ञान. ३।४। १७, १८, १९, २०, २४; बलदेव. ३।४।४९.

स्कन्धः । अत्यन्तमित्यादिविशेषणान्नैष्ठिक इति गम्यते। उपकुर्वाणस्य स्वाध्यायग्रहणार्थत्वान्न पुण्यलोकत्वं ब्रह्मचर्येण । सर्वे एते त्रयोऽप्याश्रमिणः यथोक्तैर्धर्मैः पुण्यलोका भवन्ति । पुण्यो लोको येषां ते इमे पुण्यलोका आश्रमिणो भवन्ति । अवशिष्टस्त्वनुक्तः परिव्राट् ब्रह्मसंस्थः ब्रह्मणि सम्यक् स्थितः स अमृतत्वं पुण्यलोकविलक्षणं अमरणभावमात्यन्तिकं एति न आपेक्षिकं देवाद्यमृतत्ववत्, पुण्यलोकात्पृथगमृतत्वस्य विभागकरणात् । यदि च पुण्यलोकातिशयमात्रममृतत्वमभविष्यत्, ततः पुण्यलोकत्वाद्विभक्तं नावक्ष्यत् । विभक्तोपदेशाच्चाऽऽत्यन्तिकममृतत्वमिति गम्यते । अत्र च आश्रमधर्मफलोपन्यासः प्रणवसेवास्तुत्यर्थं, न तत्फलविध्यर्थम् । स्तुतये च प्रणवसेवायाः, आश्रमधर्मफलविधये च, इति हि भिद्येत वाक्यम् । तस्मात् स्मृतिसिद्धाश्रमफलानुवादेन प्रणवसेवाफलममृतत्वं ब्रुवन् प्रणवसेवां स्तौति । यथा पूर्णवर्मणः सेवा भक्तपरिधानमात्रफला, राजवर्मणस्तु सेवा राज्यतुल्यफलेति, तद्वत् । प्रणवश्च तत्सत्यं परं ब्रह्म, तत्प्रतीकत्वात् । 'एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम्' ( काठ. २।१६ ) इत्याद्याम्नायात्काठके, युक्तं तत्सेवातोऽमृतत्वम् ।

अत्राऽऽहुः केचित् — चतुर्णामाश्रमिणामविशेषेण स्वकर्मानुष्ठानात्पुण्यलोकता इहोक्ता ज्ञानवर्जितानां—सर्वे एते पुण्यलोका भवन्तीति । नात्र परिव्राडवशेषितः, परिव्राजकस्यापि ज्ञानं यमा नियमाश्च तप एवेति । 'तप एव द्वितीयः' इत्यत्र तपःशब्देन परिव्राट्तापसौ गृहीतौ । अतस्तेषामेव चतुर्णां यो ब्रह्मसंस्थः प्रणवसेवकः सोऽमृतत्वमेतीति, चतुर्णामधिकृतत्वाविशेषात् ।

न । कर्मनिमित्तविद्याप्रत्यययोर्विरोधात् । कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादाय इदं कुरु, इदं मा कार्षीः, इति कर्मविधयः प्रवृत्ताः । तच्च निमित्तं न शास्त्रकृतं, सर्वप्राणिषु दर्शनात् । 'सदेकमेवाद्वितीयम्' 'आत्मैवेदं सर्वम्' 'ब्रह्मैवेदं सर्वम्' इति शास्त्रजन्यः प्रत्ययो विद्यारूपः स्वाभाविकं क्रियाकारकफलभेदप्रत्ययं कर्मविधिनिमित्तं अनुपमृद्य न जायते, भेदाभेदप्रत्यययोर्विरोधात् ।

न हि नैमित्तिकद्विचन्द्रादिभेदप्रत्ययमनुपमृद्य निमित्तापगमे चन्द्रैकत्वप्रत्यय उपजायते, विद्याऽविद्याप्रत्यययोर्विरोधात् । तत्रैवं सति यं भेदप्रत्ययमुपादाय कर्मविधयः प्रवृत्ताः, स यस्योपमर्दितः 'सदेकमेवाद्वितीयम्' 'तत्सत्यम्' 'विकारभेदोऽनृतम्' इत्येतद्वाक्यप्रमाणजनितेन एकत्वप्रत्ययेन, स सर्वकर्मभ्यो निवृत्तः, निमित्तनिवृत्तेः । स च निवृत्तकर्मा ब्रह्मसंस्थ उच्यते । स च परिव्राडेव, अन्यस्यासंभवात् । शंकर.

( २ ) 'परामर्शं जैमिनिरचोदना चापवदति हि' — 'त्रयो धर्मस्कन्धाः' इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति । यतः परामर्शमेषु शब्देषु आश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम् । कुतः । न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति ।

ननु परामर्शेऽप्याश्रमा गम्यन्ते एव । सत्यं गम्यन्ते । स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिः, न प्रत्यक्षश्रुतेः । अतश्च प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्ति, अनधिकृतविषया वा । ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं 'यज्ञोऽध्ययनं दानमिति प्रथमः' इति । सत्यमेवं, तथाऽपि तु गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानात् श्रुतिप्रसिद्धमेव हि तदस्तित्वम् । तस्मात् स्तुत्यर्थ एवायं परामर्शः, न चोदनार्थः । अपि च अपवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम्—'वीरहा वा एष देवानां योऽग्निमुद्वासयते' 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' (तैउ. १।११।१) 'नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः' इत्येवमाद्या ।

ननु च 'ब्रह्मचर्यादेव प्रव्रजेत्' ( जाउ. ४ ) इति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम् । सत्यं, एवमेतत् । अनपेक्ष्य त्वेतां श्रुतिं अयं विचार इति द्रष्टव्यम् । ३।४।१८

'अनुष्ठेयं बादरायणः साम्यश्रुतेः' अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते, वेदे श्रवणात् । अग्निहोत्रादीनां चावश्यानुष्ठेयत्वात् तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरं, इतीमां मतिं निराकरोति गार्हस्थ्यवदेव आश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्य-

मानः । कुतः । साम्यश्रुतेः । समा हि गार्हस्थ्येन आश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते ' त्रयो धर्मस्कन्धाः ' इत्याद्या । यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टं, एवमाश्रमान्तरमपीति प्रतिपत्तव्यम् । यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये । तस्मात्तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाऽऽश्रमान्तरस्य । ३।४।१९

' विधिर्वा धारणवत् ' — विधिर्वा अयं आश्रमान्तरस्य, न परामर्शमात्रम् । ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत । प्रतीयते चात्रैकवाक्यता पुण्यलोकफलास्त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थता त्वमृतत्वफलेति । सत्यमेतत् । सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वात्, विध्यन्तरस्यादर्शनात्, विस्पष्टाच्चाऽऽश्रमान्तरप्रत्ययात् गुणवादकल्पनया एकवाक्यत्वयोजनानुपपत्तेः । धारणवत् । यथा ' अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति ' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयते एवोपरिधारणं, अपूर्वत्वात् । तथा चोक्तं शेषलक्षणे — ' विधिस्तु धारणेऽपूर्वत्वात् ' इति । तद्वदिहाप्याश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यते । यदाऽपि परामर्श एवायमाश्रमान्तराणां, तदाऽपि ब्रह्मसंस्थता तावत् संस्तवसामर्थ्यादवश्यविधेया अभ्युपगन्तव्या । ३।४।२०

' तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ' — सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम् । तांस्तु प्राप्तस्य कथंचित्ततः प्रच्युतिरस्ति नास्ति वेति संशयः । पूर्वधर्मेस्वनुष्ठानचिकीर्षया वा रागादिवशेन वा प्रच्युतोऽपि स्यात्, विशेषाभावात्, इत्येवं प्राप्ते उच्यते —तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदप्यतद्भावः न ततः प्रच्युतिः स्यात् । कुतः । नियमातद्रूपाभावेभ्यः । तथा हि — ' अत्यन्तमात्मानमाचार्यकुलेऽवसादयन् ' इति, ' अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत् ' इति । ' आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् । आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥ ' इति चैवंजातीयको नियमः प्रच्युत्यभावं दर्शयति । यथा च ' ब्रह्मचर्यं समाप्य गृही भवेत्० ब्रह्मचर्यादेव प्रव्रजेत् ' ( जाउ. ४ ) इति चैवमादीन्यारोहरूपाणि वचांस्युपलभ्यन्ते, नैवं प्रत्यवरोहरूपाणि । न चैवमाचाराः शिष्टा विद्यन्ते ।

ब्रशंकर ३।४।४०

( ३ ) केचिदत्राऽऽहुः—' ब्रह्मसंस्थः ' इति परिव्राजको निर्दिश्यते, पारिशेष्यात् । ' तप एव ' इत्यत्र वैखानसो गृह्यते, तस्य तपःप्राधान्यात्, न भिक्षुः, अतः पारिशेष्योपपत्तिः । ' सर्वे एते पुण्यलोका भवन्ति ' इति च विरोधात् पुण्यलोकाश्च अमृतभाजश्चेति । न हि भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, तयोरन्यतरो महाप्रज्ञ इति । अत्रान्ये प्रतिब्रुवते—नायं रूढशब्दः ब्रह्मसंस्थ इति, यौगिकोऽयं ब्रह्मणि संस्था यस्येति । जातिशब्दो गुणशब्दो यौगिको वा संनिहितं विशेषं नातिवर्तते, यथा गामानय, पथिकाय वेतनं देहीति । ब्रह्मसंस्थता च ब्रह्मनिष्ठा उच्यते । सा च सर्वाश्रमाणां अविशिष्टा । न च ओंकारालम्बनं ब्रह्मानुचिन्तनं इतरेषां अशक्यमिति शक्यं वक्तुम् ।

यदि च कर्मसंबन्धमात्रेण अमृतत्वं नास्तीत्युच्यते, परिव्राजकस्यापि न स्यात् । तस्यापि शौचाचमनस्नानभिक्षाटनादिकर्म कायिकं वाचिकं मानसं, तच्च अपरिहार्यं ध्रियमाणशरीरस्य, इति न कस्यचिन्मुक्तिः स्यात् । तस्मात्सर्वेषां यथायोगं ब्रह्मनिष्ठतात्पर्ये तन्निष्ठतोच्यते, न व्यापारान्तरोपरमः, यथा स्वाध्यायनिष्ठः तपोनिष्ठ इति । यदुक्तं विरोधादिति, तदयुक्तं, अवस्थान्तरापेक्षया अविरोधात् । केवलकर्मिणः पुण्यलोकाः, ते एव ब्रह्मसंस्था अमृतत्वभागिनः इति । अवश्यं चाश्रमकर्म यतिनाऽपि कर्तव्यं, अन्यथा प्रत्यवायात्, सर्वकर्मत्यागस्य च मिथ्यासंकल्पत्वात् ।

* भास्कर. ३।४।२०

( ४ ) ओंकारेण ब्रह्मोपासनं विधातुं प्रस्तौति—त्रयो धर्मस्कन्धाः । धर्मसाधका मार्गाः ।

‡ रंग.

---

* अन्यत् ब्रशंकरवत् ।

‡ शेषं भास्करवत् ।

(५) 'अत एव चाग्नीन्धनाद्यनपेक्षा' — इदानीमूर्ध्वरेतसो यद्यप्याश्रमान्तराङ्गिका विद्या न सम्भवतीत्याशङ्क्याऽऽह — अत एव चाग्नीन्धनाद्यनपेक्षेति । यत ऊर्ध्वरेतस आश्रमिणो विद्यासंबन्धित्वेन श्रुत्या परिगृह्यन्ते — 'ब्रह्मसंस्थोऽमृतत्वमेति' 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छाउ. ५।१०।१) 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृउ. ४।४।२२) 'यदिच्छन्तो ब्रह्मचर्यं चरन्ति' (काउ. २।१५) इत्यादिकया, अत एवोर्ध्वरेतःसु विद्या अग्नीन्धनाद्यनपेक्षा । अग्नीन्धनं अग्न्याधानम् । आधानपूर्वकाग्निहोत्रदर्शपूर्णमासादिकर्मानपेक्षा । तेषु विद्या केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ।

* रामानुज. ३।४।२५

(६) अथ व्रीहिप्रोक्षणवत् सर्वकर्मणां संस्कारकत्वे 'सर्व एते पुण्यलोका भवन्ति' इतिश्रुत्युक्ताश्रमफलस्वातन्त्र्यं न स्यादिति चेत्, न, पुण्यलोकफलाभिसंधिपूर्वककर्मणां स्वातन्त्र्येऽपि तदभिसंधिविरहितेन पुंसा अनुष्ठितकर्मणां चित्तशुद्ध्यादिसंस्कारजनकत्वोपपत्तेः ।

‡ श्रीकंठ. १।१।१

(७) इदं त्वत्रधेयम् — अनेन सूत्रेण कर्मत्यागे विधिर्नाभ्युपगम्यते, 'सर्वापेक्षा च यज्ञादिश्रुतेः' 'सहकारित्वेन च' इत्यागामिसूत्रविरोधात्, वैधस्य प्रतिषेधासंभवाच्च । किंतु आश्रमान्तरविधिरेवाभ्युपगम्यते बाह्यकर्मत्यागश्च अन्तरङ्गशमादिविरोधेन न्यायप्राप्त एवेति वक्ष्यामः । नन्वेवं संन्यासाश्रमशब्दार्थः क इति चेत्, 'प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणम् । आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥' इत्यादिमन्वादिवाक्येभ्योऽवगतं स्वदेहे अग्न्याद्यारोपणपूर्वकं पुत्रादिकुटुम्बाभिमानसत्यलोकादिपर्यन्तकर्मफलकामनात्यागपूर्वकं च गृहादिभ्यः प्रव्रजनमिति । केवलकर्मफलत्यागरूपो गौणसंन्यासश्च गृहस्थाद्याश्रमो गीताद्यन्यस्मृत्यादावुक्त इति विभाग इति ।

३।४।२०

सर्वथा योगे अयोगे वा त एव प्रसिद्धाश्चत्वार एवाऽऽश्रमाः प्रत्येतव्याः । कुतः । उभयलिङ्गात् । श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतौ हि 'त्रयो धर्मस्कन्धाः' इत्यादिना आश्रमत्रयमुक्त्वा पश्चाच्चतुर्थ उक्तः — 'ब्रह्मसंस्थोऽमृतत्वमेति' इति । ब्रह्मसंस्थश्च योगी इति योगिनश्चतुर्थ एवाश्रमोऽनुमीयते, मन्वादिस्मृतौ च आश्रमचतुष्कस्यैव कथनात् 'पञ्चमो नोपपद्यते' इति वचनाच्च योगिनामप्येते एवाऽऽश्रमा इत्युन्नीयते इत्यर्थः ।

विज्ञान. ३।४।३४

**प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥**

(१) यत्संस्थोऽमृतत्वमेति तन्निरूपणार्थमाह — प्रजापतिः विराट् कश्यपो वा लोकानुद्दिश्य तेषु सारजिघृक्षया अभ्यतपत् अभितापं कृतवान्, ध्यानं तपः कृतवानित्यर्थः । तेभ्योऽभितप्तेभ्यः सारभूता त्रयी विद्या संप्रास्रवत्, प्रजापतेर्मनसि प्रत्यभादित्यर्थः । तामभ्यतपत् । पूर्ववत् । तस्या अभितप्तायाः एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति व्याहृतयः । शंकर.

(२) एवं 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यमृतत्वसाधनं ब्रह्मोपासनमुक्त्वा तत् प्रणवाङ्गकमिति वक्तुं प्रणवं स्तौति— प्रजापतिरिति । सारनिष्कर्षाय लोकान् पर्यालोचयदित्यर्थः । तेभ्य इति । त्रयी विद्यासारत्वेन निष्पन्नाऽभवदित्यर्थः । रंग.

**तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत् । तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णा । ओंकार एवेद$^{\circ}$ सर्वमोंकार एवेद$^{\circ}$ सर्वम् ॥**

(१) तानि अक्षराणि अभ्यतपत् । तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत् । तत् ब्रह्म । कीदृशमित्याह—तद्यथा शङ्कुना पर्णनालेन सर्वाणि पर्णानि

---

* अन्यत् भास्करवत् । निंबार्क. रामानुजवत् । तपःशब्दार्थविषये ब्रह्मसंस्थताविषये च न किमप्युक्तम् ।

‡ ३।४।४० ब्रशंकरवत् । अन्यत्र विवादविषये न किंचित् स्पष्टमुक्तम् । श्रीकर. श्रीकंठवत् रामानुजवच्च ।

(१) छाउ. २।२३।२.

(२) छाउ. २।२३।२; ब्रशंकर. श्रीकर. १।३।१०.

पत्रावयवजातानि संतृण्णानि निविद्धानि व्याप्तानीत्यर्थः। एवमोंकारेण ब्रह्मणा परमात्मनः प्रतीकभूतेन सर्वा वाक् शब्दजातं संतृण्णा, 'अकारो वै सर्वा वाक्' इत्यादिश्रुतेः। परमात्मविकारश्च नामधेयमात्रमित्यतः ओंकार एवेदं सर्वमिति। द्विरभ्यास आदरार्थः। लोकादिनिष्पादनकथनमोंकारस्तुत्यर्थमिति।

शंकर.

( २ ) ओंकार एव सर्वं वाङ्मयम्।

* रंग.

सवनत्रयसंबन्धीनि यज्ञाङ्गभूतानि सामहोम-
मन्त्रोत्थानानि लोकत्रयजयसाधनानि

[1]ब्रह्मवादिनो वदन्ति। यद्वसूनां प्रातःसवनम्। रुद्राणां माध्यन्दिनꣳ सवनम्। आदित्यानां च विश्वेषां च देवानां तृतीयसवनम्॥

सामोपासनप्रसङ्गेन कर्मगुणभूतत्वान्निवर्त्य ओंकारं परमात्मप्रतीकत्वादमृतत्वहेतुत्वेन महीकृत्य प्रकृतस्यैव यज्ञस्याङ्गभूतानि सामहोममन्त्रोत्थानान्युपदिदिक्षन्नाह— ब्रह्मवादिनो वदन्ति, यत्प्रातःसवनं प्रसिद्धं, तद्वसूनाम्। तैश्च प्रातःसवनसंबद्धोऽयं लोको वशीकृतः सवनेशानैः। तथा रुद्रैर्माध्यन्दिनसवनेशानैरन्तरिक्षलोकः। आदित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानैस्तृतीयो लोको वशीकृतः। इति यजमानस्य लोकोऽन्यः परिशिष्टो न विद्यते।

‡ शंकर.

[2]क तर्हि यजमानस्य लोक इति। स यस्तं न विद्यात्कथं कुर्यात्। अथ विद्वान्कुर्यात्॥

( १ ) अतः क तर्हि यजमानस्य लोको यदर्थं यजते। न कचिल्लोकोऽस्तीत्यभिप्रायः, 'लोकाय वै यजते यो यजते' इति श्रुतेः। लोकाभावे च स यो यजमानः तं लोकस्वीकरणोपायं सामहोममन्त्रोत्थानलक्षणं न विद्यात् न विजानीयात्, सोऽज्ञः कथं कुर्याद्यज्ञं, न कथंचन तस्य कर्तृत्वमुपपद्यते इत्यर्थः। सामादिविज्ञानस्तुतिपरत्वात् न अविदुषः कर्तृत्वं कर्ममात्रविदः प्रतिषिध्यते। स्तुतये च सामादिविज्ञानस्याविद्वत्कर्तृत्वप्रतिषेधाय चेति हि भिद्येत वाक्यम्। आद्ये चौपस्त्ये काण्डे अविदुषोऽपि कर्मास्तीति हेतुमवोचाम। अथैतद्वक्ष्यमाणं सामाद्युपायं विद्वान्कुर्यात्।

शंकर.

( २ ) अवशिष्टस्य लोकस्याभावाद्यजमानस्य लोकः कास्तीति वेदितव्यमित्यर्थः। यस्य यजमानप्राप्यलोकस्थानज्ञानं नास्ति, सोऽज्ञः कथं कुर्यात्। तस्मात् लोकस्वीकरणोपायभूतं वक्ष्यमाणं सामगानहोममन्त्रोत्थानलक्षणं ज्ञात्वैव कुर्यादित्यर्थः।

रंग.

[1]पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति॥

किं तद्वेद्यमित्याह---पुरा पूर्वं प्रातरनुवाकस्य शस्त्रस्य प्रारम्भात् जघनेन गार्हपत्यस्य पश्चादुदङ्मुखः सन् उपविश्य स वासवं वसुदेवत्यं साम अभिगायति।

* शंकर.

[2]लो३कद्वारमपावा३र्णू३३ । पश्येम त्वा वयꣳ रा ३ ३ ३ ३ ३ हु ३ म् आ ३ ३ ज्या ३ यो ३ आ ३ २ १ १ १ इति॥

लोकद्वारं अस्य पृथिवीलोकस्य प्राप्तये द्वारं अपावृणु हे अग्ने, तेन द्वारेण पश्येम त्वा त्वां राज्यायेति।

* शंकर.

[3]अथ जुहोति। नमोऽग्नये पृथिवीक्षिते लोकक्षिते। लोकं मे यजमानाय विन्द। एष वै यजमानस्य लोकः। एताऽस्मि॥

अत्र यजमानः परस्तादायुषः स्वाहा। अपजहि परिघमित्युक्त्वोत्तिष्ठति। तस्मै वसवः प्रातःसवनꣳ संप्रयच्छन्ति॥

* शेषं शंकरवत्।

‡ रंग. शंकरवत्।

(१) छाउ. २।२४।१.

(२) छाउ. २।२४।२.

* रंग. शंकरवत्।

(१) छाउ. २।२४।३.

(२) छाउ. २।२४।४.

(३) छाउ. २।२४।५, ६.

( १ ) अथ अनन्तरं जुहोत्यनेन मन्त्रेण—नमोऽग्नये पृथिवीक्षिते लोकक्षिते वयं पृथिवीक्षिते पृथिवीनिवासाय लोकक्षिते पृथिवीलोकनिवासायेत्यर्थः । लोकं मे मह्यं यजमानाय विन्द लभस्व । एष वै मम यजमानस्य लोकः । एता गन्ता अस्मि अत्र अस्मिंल्लोके यजमानोऽहं आयुषः परस्तात् ऊर्ध्वं, मृतः सन्नित्यर्थः । स्वाहा इति जुहोति । अपजहि अपनय परिघं लोकद्वारार्गलं, इति एवं मन्त्रमुक्त्वा उत्तिष्ठति । एवमेतैर्वसुभ्यः प्रातःसवनसंबद्धो लोको निष्क्रीतः स्यात्, ततस्ते प्रातःसवनं वसवो यजमानाय संप्रयच्छन्ति । शंकर.

( २ ) मह्यं यजमानाय लोकं विन्द लम्भयस्व । * रंग.

पुंरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाऽऽग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ॥

लो३कद्वारमपावा३र्णू३३ । पश्येम त्वा वयं, वैरा३३३३३ हु ३ म् आ३३ज्या३यो ३ आ ३२१११ इति ॥

तथा आग्नीध्रीयस्य दक्षिणाग्नेः जघनेन उदङ्मुख उपविश्य स रौद्रं सामाभिगायति यजमानो रुद्रदेवत्यं वैराज्याय । ‡ शंकर.

अंथ जुहोति । नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते । लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः । एताऽस्मि ॥

अत्र यजमानः परस्तादायुषः स्वाहा । अपजहि परिघमित्युक्त्वोत्तिष्ठति । तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ संप्रयच्छन्ति ॥

अन्तरिक्षक्षिते इत्यादि समानम् । ‡ शंकर.

पुंरा तृतीयसवनस्योपाकरणाज्जघनेनाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति ॥

लो३कद्वारमपावा३र्णू३३ । पश्येम त्वा वयꣳ स्वारा ३३३३३ हु३म् आ३३ ज्या ३ यो ३ आ ३२१११ इत्यादित्यम् * ॥

अथ वैश्वदेवम् । लो३कद्वारमपावा ३र्णू ३३ । पश्येम त्वा वयꣳ साम्रा ३३३३३ हु ३ म् आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥

( १ ) तथाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यदेवत्यं आदित्यं वैश्वदेवं च साम अभिगायति क्रमेण स्वाराज्याय साम्राज्याय । शंकर.

( २ ) तत्र आदित्यं सामाऽऽह — लोकद्वारमिति । अथ वैश्वदेवमिति । सामोच्यते इति शेषः ।

§ रंग.

अंथ जुहोति । नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यः । लोकं मे यजमानाय विन्दत ॥

एष वै यजमानस्य लोकः । एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहा । अपहत परिघमित्युक्त्वोत्तिष्ठति ॥

दिविक्षिद्भ्यः इत्येवमादि समानमन्यत् । विन्दत अपहतेति बहुवचनमात्रं विशेषः । याजमानं त्वेतत्, एताऽस्म्यत्र यजमान इत्यादिलिङ्गात् । † शंकर.

तंस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ संप्रयच्छन्ति । एष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥

एष ह वै यजमानः एवंवित् यथोक्तस्य सामादेर्विद्वान् यज्ञस्य मात्रां यज्ञयाथात्म्यं वेद यथोक्तम् । य एवं वेद य एवं वेदेति द्विरुक्तिरध्यायपरिसमाप्त्यर्था । शंकर.

इति द्वितीयोऽध्यायः ॥

---

* शेषं शंकरवत् ।

‡ रंग. शंकरवत् ।

(१) छाउ. २।२४।७,८. (२) छाउ. २।२४।९,१०.

(३) छाउ. २।२४।११–१३ इत्यादित्यम् ॥ अथ ( इति ॥ आदित्यमथ ).

* अत्रायं एव श्रेयान्, 'आदित्यम्' इत्यस्य पूर्वत्र संबन्धात् ।

§ शेषं शंकरवत् ।

† रंग. पूर्ववत् ।

(१) छाउ. २।२४।१४,१५.

(२) छाउ. २।२४।१६.

## तृतीयोऽध्यायः

### ( मधुविद्या )

वेदोपनिषदितिहासपुराणरसाश्रय आदित्यः

**असौ वा आदित्यो देवमधु। तस्य द्यौरेव तिरश्चीनवꣳशः । अन्तरिक्षमपूपः । मरीचयः पुत्राः ॥**

( १ ) 'असौ वा आदित्यः' इत्याद्यध्यायारम्भे संबन्धः — अतीतानन्तराध्यायान्ते उक्तं 'यज्ञस्य मात्रां वेद' इति, यज्ञविषयाणि च सामहोममन्त्रोत्थानानि विशिष्टफलप्राप्तये यज्ञाङ्गभूतान्युपदिष्टानि। सर्वयज्ञानां च कार्यनिर्वृत्तिरूपः सविता महत्या श्रिया दीप्यते। स एष सर्वप्राणिकर्मफलभूतः प्रत्यक्षं सर्वैरुपजीव्यते। अतो यज्ञव्यपदेशानन्तरं तत्कार्यभूतसवितृविषयमुपासनं सर्वपुरुषार्थेभ्यः श्रेष्ठतमफलं विधास्यामीत्येवमारभते श्रुतिः—असौ वा आदित्यो देवमध्वित्यादि। देवानां मोदनात् मध्विव मधु असौ आदित्यः । वस्वादीनां च मोदनहेतुत्वं वक्ष्यति सर्वयज्ञफलरूपत्वादादित्यस्य। कथं मधुत्वमित्याह—तस्य मधुनः द्यौरेव भ्रामरस्येव मधुनः तिरश्चीनश्चासौ वंशश्चेति तिरश्चीनवंशः। तिर्यग्गतेव हि द्यौर्लक्ष्यते। अन्तरिक्षं च मध्वपूपः, द्युवंशे लग्नः सन् लम्बते इव, अतो मध्वपूपसामान्यादन्तरिक्षं मध्वपूपः, मधुनः सवितुराश्रयत्वाच्च । मरीचयः रश्मयः रश्मिस्था आपो भौमाः सवित्राकृष्टाः। 'एता वा अपः स्वराजो यन्मरीचयः' इति हि विज्ञायन्ते। ता अन्तरिक्षमध्वपूपस्थरश्म्यन्तर्गतत्वाद्भ्रमरबीजभूताः पुत्रा इव हिता लक्ष्यन्ते इति पुत्रा इव पुत्राः। मध्वपूपनाड्यन्तर्गता हि भ्रमरपुत्राः।

*शंकर.

( २ ) 'मध्वादिष्वसंभवादनधिकारं जैमिनिः'—इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं, तत्पर्यावर्त्यते। देवादीनां अनधिकारं जैमिनिः आचार्यो मन्यते। कस्मात्। मध्वादिष्वसंभवात्। ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशेषात् मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत। न चैवं संभवति। कथम्। 'असौ वा आदित्यो देवमधु' इत्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन्। देवादिषु ह्युपासकेष्वभ्युपगम्यमानेषु आदित्यः कमन्यमादित्यमुपासीत।

'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' ( छाउ. ३।६।३ ) इत्यादिना वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति। वस्वादयस्तु कानन्यान् वस्वादीनमृतोपजीविनो विजानीयुः, कं वाऽन्यं वस्वादिमहिमानं प्रेप्सेयुः। तथा 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' ( छाउ. ३।१८।२ ) 'वायुर्वाव संवर्गः' ( छाउ. ४।३।१ ) 'आदित्यो ब्रह्मेत्यादेशः' ( छाउ. ३।१९।१ ) इत्यादिषु देवतात्मोपासनेषु न तेषामेव देवतात्मनामधिकारः संभवति। तथा 'इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाजः' ( बृउ. २।२।४ ) इत्यादिष्वपि ऋषिसंबन्धेषूपासनेषु न तेषामेव ऋषीणामधिकारः संभवति।

१।३।३१

'भावं तु बादरायणोऽस्ति हि'—तुशब्दः पूर्वपक्षं व्यावर्तयति। बादरायणस्तु आचार्यो भावं अधिकाकारस्य देवादीनामपि मन्यते। यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रासु असंभवोऽधिकारस्य, तथाऽपि अस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः, अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य। ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम् — 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' ( बृउ. १।४।१० ) इति, 'ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितीन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' ( छाउ. ८।७।२ ) इत्यादि च।

*ब्रशंकर. १।३।३३

* रंग शंकरवत्।

(१) छाउ. ३।१।१; ब्रशंकर. १।३।३१,३३; भास्कर. १।३।३१,३३; रामानुज. १।३।३०,३२,१।४।१०; श्रीकंठ. १।३।३२,१।४।१०; श्रीकर. १।३।३१, ३३, १।४।१०; वल्लभ. १।३।३१,३३, १।४।१०, ४।१।६; विज्ञान. १।४।१०; बलदेव. १।३।३१.

* भास्कर. ब्रशंकरवत्।

(३) ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम्। इदमिदानीं चिन्त्यते—येषूपासनेषु देवता एवोपास्यास्तेषु तासामधिकारोऽस्ति, नेति। किं प्राप्तम्। नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते। कुतः। असंभवात्। न ह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये संभवन्ति। न च वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति, प्राप्तत्वात्।

१।३।३०

इति प्राप्ते अभिधीयते—आदित्यवस्वादीनामपि तेष्वधिकारसद्भावं भगवान् बादरायणो मन्यते। अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्वप्राप्तिपूर्वकब्रह्मप्राप्तिसंभवः। इदानीं वसूनां सतामपि कल्पान्तरे वस्वादित्वप्राप्तिश्चापेक्षिता भवति। अत्र हि कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते। 'असौ वा आदित्यो देवमधु' इत्यारभ्य 'अथ तत ऊर्ध्वमुदेता' (?) (छा.उ. ३।११।१) इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमित्युपदिश्यते। 'अथ तत ऊर्ध्व उदेति' इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्म उपास्यमित्युपदिश्यते। तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाऽऽप्नोति। 'न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्य भवति य एतामेवं ब्रह्मोपनिषदं वेद' (छाउ. ३।११।३) इति कृत्स्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणात् ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलश्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते। अत एवंविधमुपासनमादित्यवस्वादीनामपि संभवति।

* रामानुज. १।३।३२

(४) 'आदित्यादिमतयश्चाङ्ग उपपत्तेः' — छान्दोग्ये 'अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच' इति। 'अथ होवाचेन्द्रद्युम्नम्' इत्युपक्रम्य 'त्वं कमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाच' इति। एवमेवाग्रे प्रश्नभेदेन वस्तुभेदेन ब्रह्मणोऽनन्यत्वेन आत्मत्वेन उपासनाविधया उक्ताः। तत्रैव 'असौ वा आदित्यो देवमधु' इत्युपक्रम्य अन्ते पठ्यते — 'य एतामेवं विद्वानादित्यं ब्रह्मेत्युपास्ते' इति। अथेदं चिन्त्यते — अत्र प्रतीकोपासनत्वमस्ति, न वेति। अस्तीति पूर्वः पक्षः। तथा हि — 'सर्वं खल्विदं ब्रह्म' इति श्रुतौ सर्वस्यापि ब्रह्मत्वं तत्र बोध्यते इति न क्वचित् प्रतीकोपासनमस्तीति हि पूर्वं निरूपितम्। तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्त्या नोपपद्यते, ब्रह्मण एकत्वादेकप्रकारकेणैवोपासनेन सर्वेषां फलसिद्धेः पृथक्पृथगुक्तौ गौरवात् प्रयोजनविशेषाभावाच्च। तादृगधिकाराभावात् पृथगुक्तिरिति चेत्। न, सर्वत्र सदा तद्भावनायां तथाऽनुभवस्यापि संभवात्। एवं सति वस्तुतः सर्वस्य ब्रह्मत्वं नाभिमतं, किन्तु यथा आदित्यादीनां तत् तथा, तथा सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र। तेनैव फलम्। इति प्राप्ते प्रतिवदति — आदित्यादौ या ब्रह्मत्वमतय उच्यन्ते, तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ता विधियन्ते। उपपन्नं चैतत्। न हि साकारव्यापकब्रह्मणोऽङ्गं न ब्रह्म, अतो न प्रतीकोपासनत्वं तत्र।

* वल्लभ. ४।१।६

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाडयः। ऋच एव मधुकृतः। ऋग्वेद एव पुष्पम्। ता अमृता आपः। ता वा एता ऋचः॥**

तस्य सवितुः मध्वाश्रयस्य मधुनो ये प्राञ्चः प्राच्यां दिशि गताः रश्मयः, ता एवास्य प्राच्यः प्रागञ्चनात्, मधुनो नाड्यो मधुनाड्य इव, मध्वाधारच्छिद्राणि इत्यर्थः। तत्र ऋच एव मधुकृतः, लोहितरूपं सवित्राश्रयं मधु कुर्वन्तीति मधुकृतो भ्रमरा इव। यतो रसानादाय मधु कुर्वन्ति, तत् पुष्पमिव पुष्पं ऋग्वेद एव। तत्र ऋग्ब्राह्मणसमुदायस्य ऋग्वेदाख्यत्वात्, शब्दमात्राच्च भोग्यरूपरसनिःस्रावासंभवात् ऋग्वेदशब्देनात्र ऋग्वेद विहितं कर्म, ततो हि कर्मफलभूतमधुरसनिःस्रावसंभवात्।

* निंबार्क. श्रीकंठ. रामानुजवत्।

* १।३।३१, ३३ शंकरवत्।

(१) छाउ. ३।१।२.

मधुकरैरिव पुष्पस्थानीयात् ऋग्वेदविहितात्कर्मणः अप आदाय ऋग्भिर्मधु निर्वर्त्यते। कास्ता आप इत्याह— ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपाः अग्नौ प्रक्षिप्तास्तत्पाकाभिनिर्वृत्ता अमृताः अमृतार्थत्वादत्यन्तरसवत्यः आपो भवन्ति। तद्रसानादाय ता वा एता ऋचः पुष्पेभ्यो रसमाददाना इव भ्रमरा ऋचः * —

† शंकर.

एतमृग्वेदमभ्यतपन्। तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥(१)

—एतमृग्वेदं ऋग्वेदविहितं कर्म पुष्पस्थानीयं अभ्यतपन् अभितापं कृतवत्य इव। एता ऋचः कर्मणि प्रयुक्ताः। ऋग्भिर्हि मन्त्रैः शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं रसं मुञ्चतीत्युपपद्यते पुष्पाणीव भ्रमरैराचूष्यमाणानि। तदेतदाह—तस्य ऋग्वेदस्याभितप्तस्य। कोऽसौ रसो य ऋङ्मधुकराभितापनिःसृत इत्युच्यते— यशः विश्रुतत्वं, तेजः देहगता दीप्तिः, इन्द्रियं सामर्थ्योपेतैरिन्द्रियैरवैकल्यं, वीर्यं सामर्थ्यं बलमित्यर्थः, अन्नाद्यं अन्नं च तत् आद्यं च, येनोपयुज्यमानेन अहन्यहनि देवानां स्थितिः स्यात्, तदन्नाद्यम्। एष रसोऽजायत यागादिलक्षणात्कर्मणः।

‡ शंकर.

तद्व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदेतदादित्यस्य रोहितꣳ रूपम् ॥(२)

(१) यशआद्यन्नाद्यपर्यन्तं तत् व्यक्षरत् विशेषेण अक्षरत् अगमत्। गत्वा च तत् आदित्यमभितः पार्श्वतः पूर्वभागं सवितुः अश्रयत् आश्रितवदित्यर्थः। अमुष्मिन्नादित्ये संचितं कर्मफलाख्यं मधु भोक्ष्यामहे इत्येवं हि यशआदिलक्षणफलप्राप्तये कर्माणि क्रियन्ते मनुष्यैः केदारनिष्पादनमिव कर्षकैः। तत् प्रत्यक्षं प्रदर्श्यते श्रद्धाहेतोः — तद्वा एतत्। किं तत्। यदेतदादित्यस्य उद्यतो दृश्यते रोहितं रूपम्।

शंकर.

(२) रोहितरूपे तद्बुद्धिः कर्तव्येति यावत्।

* रंग.

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यः। यजूꣳष्येव मधुकृतः। यजुर्वेद एव पुष्पम्। ता अमृता आपः ॥(१)

अथ येऽस्य दक्षिणा रश्मय इत्यादि समानम्। यजूꣳष्येव मधुकृतः यजुर्वेदविहिते कर्मणि प्रयुक्तानि पूर्ववन्मधुकृत इव। यजुर्वेदविहितं कर्म पुष्पस्थानीयं पुष्पमित्युच्यते। ता एव सोमाद्या अमृता आपः।

शंकर.

तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपन्। तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥

तद्व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥(२)

तानि वा एतानि यजूंषि एतं यजुर्वेदमभ्यतपन् इत्येवमादि सर्वं समानम्। मधु एतदादित्यस्य दृश्यते शुक्लं रूपम्।

शंकर.

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः। सामान्येव मधुकृतः। सामवेद एव पुष्पम्। ता अमृता आपः ॥

तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपन्। तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥

तद्व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदेतदादित्यस्य कृष्णꣳ रूपम् ॥(३)

अथ येऽस्य प्रत्यञ्चो रश्मयः इत्यादि समानम्। तथा साम्नां मधु एतदादित्यस्य कृष्णं रूपम्।

शंकर.

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यः। अथर्वाङ्गिरस एव मधुकृतः। इतिहास-

---

* इदमुत्तरान्वयि।
† रंग. शंकरवत्।
‡ रंग. शंकरवत्। यशआदिपदानि नार्थापितानि।
(१) छाउ. ३।१।३.
(२) छाउ. ३।१।४.

* शेषं शंकरवत्.
(१) छाउ. ३।२।१.
(२) छाउ. ३।२।२, ३.
(३) छाउ. ३।३।१–३.
(४) छाउ. ३।४।१–३; रंग. मरं ( परः ).

पुराणं पुष्पम् । ता अमृता आपः ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥

तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥

(१) अथ येऽस्योदञ्चो रश्मय इत्यादि समानम् । अथर्वाङ्गिरसः अथर्वणा अङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः कर्मणि प्रयुक्ता मधुकृतः । इतिहासपुराणं पुष्पम् । तयोश्चेतिहासपुराणयोरश्वमेधे पारिप्लवासु रात्रिषु कर्माङ्गत्वेन विनियोगः सिद्धः । मधु एतदादित्यस्य परं कृष्णं रूपं अतिशयेन कृष्णमित्यर्थः ।

शंकर.

(२) इतिहासपुराणविहितकर्मस्वथर्वाङ्गिरसां विनियोगात् ऋग्वेदादिवत्पुष्पत्वोक्तिश्च द्रष्टव्या । † रंग.

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यः । गुह्या एवाऽऽदेशा मधुकृतः । ब्रह्मैव पुष्पम् । ता अमृता आपः ॥

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपन् । तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥

तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥

(१) अथ येऽस्योर्ध्वा रश्मय इत्यादि पूर्ववत् । गुह्याः गोप्याः रहस्याः एवाऽऽदेशा लोकद्वारीयादिविधयः * उपासनानि च कर्माङ्गविषयाणि मधुकृतः । ब्रह्मैव शब्दाधिकारात् प्रणवाख्यं पुष्पम् । समानमन्यत् । मधु एतदादित्यस्य मध्ये क्षोभते इव समाहितदृष्टेर्दृश्यते संचलतीव । शंकर.

(२) गुह्या एवाऽऽदेशा इति । ब्रह्मविषयकौपनिषदरहस्योपदेशा इत्यर्थः । ‡ रंग.

[1]ते वा एते रसानाꣳ रसाः । वेदा हि रसाः । तेषामेते रसाः । तानि वा एतान्यमृतानाममृतानि । वेदा ह्यमृताः । तेषामेतान्यमृतानि ॥

(१) ते वा एते यथोक्ता रोहितादिरूपविशेषाः रसानां रसाः । केषां रसानामित्याह—वेदा हि यस्मात् लोकनिष्यन्दत्वात्सारा इति रसाः । तेषां रसानां कर्मभावमापन्नानामप्येते रोहितादिविशेषा रसाः, अत्यन्तसारभूता इत्यर्थः । तथा अमृतानाममृतानि । वेदा ह्यमृताः, नित्यत्वात् । तेषामेतानि रोहितादीनि रूपाण्यमृतानि । रसानां रसा इत्यादि कर्मस्तुतिरेषा, यस्य एवंविशिष्टान्यमृतानि फलमिति ।

शंकर.

(२) लोकसारभूतवेदादिप्रतिपाद्यकर्मनिष्पाद्यत्वात् रोहितादिरूपाणामतिरसत्वम् । तथा वेदेभ्योऽपि इष्टतत्साधनप्रतिपादकतया भोग्यभूततया अमृतेभ्यः रोहितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानां अतिभोग्यत्वात् अमृतादप्यमृतत्वमित्यर्थः । अयमत्र निर्गलितार्थः— प्रागाद्यूर्ध्वदेशान्तस्थितरश्मिनाडीतस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजोवीर्यमिन्द्रियमित्येवमात्मकानि रोहितं शुक्लं कृष्णं परः कृष्णं मध्ये क्षोभत इवेत्युक्तानि रोहितादीनि पञ्चामृतान्यादित्यमध्याश्रितानीति । रंग.

अग्निमुखेन वसुभोग्यामृतोपासनम्

[2]तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन । न वै देवा अश्नन्ति न पिबन्ति । एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥

तत् तत्र यत्प्रथमममृतं रोहितरूपलक्षणं, तद्वसवः प्रातःसवनेशाना उपजीवन्ति अग्निना मुखेन अग्निना प्रधानभूतेन, अग्निप्रधानाः सन्त उपजीवन्तीत्यर्थः । 'अन्नाद्यं रसोऽजायत' इति वचनात्कवलग्राहमश्न-

---

† शेषं शंकरवत् ।

* 'लोकद्वारमपावृणु' इत्येवमादयः पूर्वं गता लोकद्वारीयादिविधयः।

‡ शेषं शंकरवत् ।

(१) छाउ. ३।५।१–३.

(१) छाउ. ३।५।४.

(२) छाउ. ३।६।१; ब्रशंकर. भास्कर. ३।१।७; रामानुज. १।३।३०, ३।१।७ न वै ( न ह वै ); श्रीकर. ३।१।७ रामानुजवत्; वल्लभ. ४।१।६; विज्ञान. ३।१।७, ३।२।१३ रामानुजवत्.

न्तीति प्राप्तं, तत्प्रतिषिध्यते—न वै देवा अश्नन्ति न पिबन्तीति। कथं तर्ह्युपजीवन्तीत्युच्यते—एतदेव हि यथोक्तममृतं रोहितं रूपं दृष्ट्वा उपलभ्य सर्वकरणैरनुभूय तृप्यन्ति, दृशेः सर्वकरणद्वारोपलब्ध्यर्थत्वात्। ननु रोहितं रूपं दृष्ट्वेत्युक्तं, कथमन्येन्द्रियविषयत्वं रूपस्येति। न, यशआदीनां श्रोत्रादिगम्यत्वात्। श्रोत्रग्राह्यं यशः। तेजोरूपं चाक्षुषम्। इन्द्रियं विषयग्रहणकार्यानुमेयं करणसामर्थ्यम्। वीर्यं बलं देहगत उत्साहः प्राणवत्ता। अन्नाद्यं प्रत्यहमुपजीव्यमानं शरीरस्थितिकरं यद्भवति। रसो ह्येवमात्मकः सर्वः, यं दृष्ट्वा तृप्यन्ति सर्वे। देवा दृष्ट्वा तृप्यन्तीति एतत्सर्वं स्वकरणैरनुभूय तृप्यन्तीत्यर्थः। आदित्यसंश्रयाः सन्तो वैगन्ध्यादिदेहकरणदोषरहिताश्च। * शंकर.

त[१] एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति॥

(१) किं ते निरुद्यमा अमृतमुपजीवन्ति? न। कथं तर्हि। एतदेव रूपमभिलक्ष्य अधुना भोगावसरो नास्माकमिति बुद्ध्वा अभिसंविशन्ति उदासते। यदा वै तस्यामृतस्य भोगावसरो भवेत्, तदा एतस्मादमृतात्, अमृतभोगनिमित्तमित्यर्थः। एतस्माद्रूपात् उद्यन्ति उत्साहवन्तो भवन्तीत्यर्थः। न ह्यनुत्साहवतामननुतिष्ठतामलसानां भोगप्राप्तिर्लोके दृष्टा।

शंकर.

(२) एतदेव रूपमभिलक्ष्य, अनुभूयेति यावत्। संविशन्ति भोगानन्तरं उदासीना भवन्तीत्यर्थः। एतस्माद्रूपादुद्यन्तीति। प्राप्ते भोगकाले इति शेषः। एतस्माद्रूपादिति ल्यब्लोपे पञ्चमी। एतद्रूपानुभवमुद्दिश्य उद्यन्ति सोत्साहा भवन्तीत्यर्थः। रंग.

स[२] य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति॥

---

* रंग शंकरेण गतार्थम्।

(१) छाउ. ३।६।२.

(२) छाउ. ३।६।३; ब्रशंकर. १।३।३१; रामानुज. १।३।३०; ब्रमध्व. १।३।३१; श्रीकंठ. १।३।३२; श्रीकर. १।३।३१, ३३.

(१) स यः कश्चित् एतदेवं यथोदितं ऋङ्मधुकरतापरससंक्षरणं ऋग्वेदविहितकर्मपुष्पात्, तस्य चाऽऽदित्यसंश्रयणं रोहितरूपत्वं च, अमृतस्य प्राचीदिग्गतरश्मिनाडीसंस्थतां वसुदेवभोग्यतां तद्विदश्च वसुभिः सहैकतां गत्वा अग्निना मुखेनोपजीवनं दर्शनमात्रेण तृप्तिं स्वभोगावसरे उद्यमनं तत्कालापाये च संवेशनं वेद, सोऽपि वसुवत्सर्वं तथैवानुभवति।

शंकर.

(२) अनेन प्रकारेण वसुतृप्त्याधायकदर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिना रोहितामृतं यो वेद, सः तत्क्रतुन्यायेन तदुपासीनोऽपि वसुत्वं प्राप्य तथैव भवतीत्यर्थः। रंग.

स[१] यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यँ स्वाराज्यं पर्येता॥

(१) कियन्तं कालं विद्वांस्तदमृतमुपजीवतीत्युच्यते—स विद्वान् यावदादित्यः पुरस्तात् प्राच्यां दिशि उदेता, पश्चात् प्रतीच्यां अस्तमेता, तावद्वसूनां भोगकालः, तावन्तमेव कालं वसूनामाधिपत्यं स्वाराज्यं पर्येता परितो गन्ता भवतीत्यर्थः। न यथा चन्द्रमण्डलस्थः केवलकर्मी परतन्त्रो देवानामन्नभूतः, किं तर्हि, अयमाधिपत्यं स्वराड्भावं चाधिगच्छति।

शंकर.

(२) अप्रतिहतसंकल्पकत्वलक्षणं स्वाराज्यम्।

* रंग.

इन्द्रमुखेन रुद्रभोग्यामृतोपासनम्

अथ[१] यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन। न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति॥

त एतदेव रूपमभिसंविशन्ति। एतस्माद्रूपादुद्यन्ति॥

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स एतदेव रूपमभिसंविशति। एतस्माद्रूपादुदेति॥

---

* शेषं शंकरवत्।

(१) छाउ. ३।६।४.

(२) छाउ. ३।७।१—३

अथ यद्द्वितीयममृतं, तद्रुद्रा उपजीवन्तीत्यादि समानम् । शंकर.

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥

( १ ) स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, द्विस्तावत् ततो द्विगुणं कालं दक्षिणत उदेतोत्तरतोऽस्तमेता, रुद्राणां तावद्भोगकालः । शंकर.

( २ ) पुरस्तादुदयपश्चादस्तमयापेक्षया द्विगुणं कालं दक्षिणत उदयमुत्तरतोऽस्तमयं च कल्पयित्वा श्रुतिर्ब्रवीतीति नात्र कथंता कार्या । रंग.

वरुणमुखेनादित्यभोग्यामृतोपासनं, सोममुखेन मरुद्भोग्यामृतोपासनं, ब्रह्ममुखेन साध्यभोग्यामृतोपासनं च

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन । न वै देवा अश्नन्ति न पिबन्ति। एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥

त एतदेव रूपमभिसंविशन्ति । एतस्माद्रूपादुद्यन्ति ॥

स य एतदेवममृतं वेदाऽऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति । स एतदेव रूपमभिसंविशति । एतस्माद्रूपादुदेति ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन । न वै देवा अश्नन्ति न पिबन्ति । एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥

त एतदेव रूपमभिसंविशन्ति । एतस्माद्रूपादुद्यन्ति ॥

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति । स एतदेव रूपमभिसंविशति । एतस्माद्रूपादुदेति ॥

स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥

अथ यत्पञ्चममममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन । न वै देवा अश्नन्ति न पिबन्ति । एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥

त एतदेव रूपमभिसंविशन्ति । एतस्माद्रूपादुद्यन्ति ॥

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति । स एतदेव रूपमभिसंविशति । एतस्माद्रूपादुदेति ॥

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेताऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥

तथा पश्चादुत्तरत ऊर्ध्वमुदेता, विपर्ययेणास्तमेता । पूर्वस्मात्पूर्वस्मात् द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनम् । सवितुश्चतुर्दिशमिन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तं, मानसोत्तरस्य मूर्धनि मेरोः प्रदक्षिणावृत्तेस्तुल्यत्वादिति ।

अत्रोक्तः परिहार आचार्यैः । अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वासः स्यात् । उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिः, तदत्ययश्चास्तमनं, न परमार्थत उदयास्तमने स्तः । तन्निवासिनां च प्राणिनामभावे तान्प्रति तेनैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति, चक्षुर्गोचरापत्तेस्तदत्ययस्य चाभावात् । तथा अमरावत्याः सकाशाद्द्विगुणं कालं संयमनी पुरी वसति, अतस्तन्निवासिनः प्राणिनः प्रति दक्षिणत इवोदेत्युत्तरतोऽस्तमेतीत्युच्यते, अस्मद्बुद्धिं चापेक्ष्य । तथा उत्तरास्वपि पुरीषु योजना । सर्वेषां च मेरुरुत्तरतो भवति । यदा अमरावत्यां मध्याह्नगतः सविता, तदा संयमन्यामुद्यन् दृश्यते, तत्र मध्याह्नगतो वारुण्यामुद्यन् दृश्यते, तथोत्तरस्यां, प्रदक्षिणावृत्तेस्तुल्यत्वात् । इलावृतवासिनां सर्वतः पर्वतप्राकारनिवारिता-

(१) छाउ. ३।७।४.
(२) छाउ. ३।८।१–४.
(३) छाउ ३।९।१–४
(१) छाउ. ३।१०।१–४.

दित्यरश्मीनां सविता ऊर्ध्व इवोदेता अर्वागस्तमेता दृश्यते, पर्वतोर्ध्वच्छिद्रप्रवेशात्सवितृप्रकाशस्य।

तथा ऋगाद्यमृतोपजीविनाममृतानां च द्विगुणोत्तरोत्तरवीर्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेन। उद्यमनसंवेशनादि देवानां रुद्रादीनां विदुषश्च समानम्।

शंकर.

उदयास्तमनशून्यादित्यरूपनित्यब्रह्मोपासना

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता। तदेष श्लोकः॥**

(१) कृत्वैवमुदयास्तमनेन प्राणिनां स्वकर्मफलभोगनिमित्तमनुग्रहं, तत्कर्मफलोपभोगक्षये तानि प्राणिजातान्यात्मनि संहृत्य अथ ततः तस्मादनन्तरं प्राण्यनुग्रहकालादूर्ध्वः सन् आत्मन्युदेत्य उद्गम्य यान्प्रत्युदेति तेषां प्राणिनामभावात् स्वात्मस्थो नैवोदेता नास्तमेता, एकलः अद्वितीयः अनवयवः मध्ये स्वात्मन्येव स्थाता। तत्र कश्चिद्विद्वान् वस्वादिसमानचरणः रोहिताद्यमृतभोगभागी यथोक्तक्रमेण स्वात्मानं सवितारमात्मत्वेनोपेत्य समाहितः सन् एतं मन्त्रं दृष्ट्वा उत्थितः अन्यस्मै पृष्टवते जगाद। यतस्त्वमागतो ब्रह्मलोकात्, किं तत्राप्यहोरात्राभ्यां परिवर्तमानः सविता प्राणिनामायुः क्षपयति, यथेहास्माकं, इत्येवं पृष्टः प्रत्याह—तत् तत्र यथा पृष्टे यथोक्ते चार्थे एष श्लोको भवति तेनोक्तो योगिना इति श्रुतेर्वचनमिदम्।

शंकर.

(२) एवं वसुरुद्रादित्यमरुत्साध्यगणभोग्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयदेवमधुत्वरूपितज्योतिर्मण्डलाख्यरूपयुक्तस्योदयास्तमयादिकृत्यविशिष्टस्य आदित्यनामकस्याऽऽदित्यशरीरककार्यावस्थब्रह्मण उपसनामुपदिश्य नामरूपकृत्यादिरहितकार्यावस्थारहितादित्यजीवशरीरकब्रह्मोपासनं दर्शयति — अथ तत इति। अथ ब्रह्मदिवसरूपस्य कल्पस्य समाप्त्यनन्तरं तत ऊर्ध्व उदेत्य उदयास्तमयाभ्यां प्राण्यनुग्रहादूर्ध्वं उदेत्य उदयास्तमयकृत्यप्रयुक्तप्राण्यनुग्रहरहित इत्यर्थः। उदयास्तमयशून्य एकस्वभाव एवोदासीनतया वर्तते इत्यर्थः। अत्र हि भाष्ये—कार्यकारणावस्थब्रह्मोपासनं विधीयते। 'असौ वा आदित्यो देवमधु' इत्यारभ्य 'अथ तत ऊर्ध्व उदेत्य' इत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते। 'अथ तत ऊर्ध्व उदेत्य' इत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्म उपदिश्यते इत्युक्तम्। तत्रापि 'अथ तत ऊर्ध्व उदेत्य' इत्यस्य मुक्तावस्थादित्यान्तर्यामिब्रह्मोपासनपरत्वे अथशब्दादिस्वारस्यात् कारणावस्थमिति भाष्यस्य अकार्यावस्थं मुक्त्यवस्थमित्यर्थ एवोचितः, न त्वादित्यभावप्राप्तिपूर्वावस्था। व्यासार्यैस्तु भाष्यस्वारस्यमवलम्ब्य आदित्यनामरूपभाक्त्वावस्थापूर्वभाव्यवस्थैव 'अथ तत ऊर्ध्व उदेत्य' इत्यादिना संदर्भेण प्रतिपाद्यते इति वर्णितम्। तेषामयमाशयः—अथशब्दो न निर्दिष्टानन्तर्यार्थः, अपि तु उपासनान्तरप्रस्तावार्थः। 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' इत्यस्याप्युदयास्तमयतत्कार्यशून्यत्वमर्थः। तच्च आदित्यभावपूर्वावस्थायां कल्पादौ संभवतीति। तस्मिन्विषये देवान्प्रति केनचिद्योगिना गीतः श्लोकः।

* रंग.

**न वै तत्र न निम्लोच नोदियाय कदाचन।**
**देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति॥**

(१) न वै तत्र यतोऽहं ब्रह्मलोकादागतस्तस्मिन् न वै तत्र एतदस्ति यत्पृच्छसि। न हि तत्र निम्लोच अस्तमगमत्सविता, न चोदियाय उद्गतः कुतश्चित् कदाचन कस्मिंश्चिदपि काले इति। उदयास्तमयवर्जितो ब्रह्मलोक इत्यनुपपन्नमित्युक्तः शपथमिव प्रतिपेदे—हे देवाः साक्षिणः, यूयं शृणुत, यथा मयोक्तं सत्यं वचः तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विरुध्येय, अप्राप्तिर्ब्रह्मणो मम मा भूदित्यर्थः।

शंकर.

(२) हे देवाः, तत्र तस्मिन् आदित्यभावमुक्तिकाले स मुक्तादित्यान्तर्यामी परमात्मा नास्तमितः नोदितश्च।

---

(१) छान्द. ३।११।१; ब्रशंकर. ३।३।३२; रामानुज. १।३।३२, १।४।१० ऊर्ध्व उ ( ऊर्ध्वमु ); श्रीकंठ. १।३।३२, १।४।१०.

* श्रीकंठ. रंगवत्।

(१) छान्द. ३।११।२.

तेन तादृशेन सत्येन निर्विकारेण ब्रह्मणा अहं मा विरा-
धिषि विरोधं न गच्छामीति यावत् । निम्लोचेति
छान्दसो द्विर्वचनाभावः । रंग.

न ह वा अस्मा उदेति न निम्लोचति । सकृद्दिवा हैवास्मै भवति । य एतामेवं ब्रह्मोपनिषदं वेद ॥

( १ ) सत्यं तेनोक्तमित्याह श्रुतिः—न ह वा अस्मै । यथोक्तब्रह्मविदे नोदेति न निम्लोचति नास्तमेति, किंतु ब्रह्मविदेऽस्मै सकृद्दिवा हैव सदैव अहर्भवति, स्वयं ज्योतिष्ट्वात्, य एतां यथोक्तां ब्रह्मोपनिषदं वेदगुह्यं वेद । एवं, तन्त्रेण वंशादित्रयं प्रत्यमृतसंबन्धं च यच्चान्यदवोचाम, एवं जानातीत्यर्थः । विद्वानुदयास्तमयकालापरिच्छेद्यं नित्यमजं ब्रह्म भवतीत्यर्थः । शंकर.

( २ ) एतां मधुविद्यारूपां ब्रह्मोपनिषदं ब्रह्मविद्यां वेद अनुतिष्ठति, अस्मै ब्रह्मविदे आदित्यो नोदेति नास्तमेति । आदित्योदयप्रकाशाभ्यां न किंचिदस्य प्रयोजनमित्यर्थः । कुत इत्यत आह—सकृद्दिवा हैवेत्यादि । अस्मै ब्रह्मविदे सकृत् दिवैव भवति सकृदुदितमहरेव भवति सदैवाहर्वा भवतीत्यर्थः । संततं सर्वविषयसाक्षात्कारोऽस्य भवतीत्यर्थः ।

रंग.

मधुविद्यारूपब्रह्मविद्याचार्यवंशः

तद्धैतद्ब्रह्मा प्रजापतय उवाच । प्रजापतिर्मनवे । मनुः प्रजाभ्यः । तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥

( १ ) तद्धैतत् मधुज्ञानं ब्रह्मा हिरण्यगर्भः विराजे प्रजापतये उवाच, सोऽपि मनवे, मनुरिक्ष्वाक्वाद्याभ्यः प्रजाभ्यः प्रोवाचेति विद्यां स्तौति ब्रह्मादिविशिष्टक्रमागतेति । किंच तद्धैतत् मधुज्ञानं उद्दालकाय आरुणये पिता ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय प्रोवाच ।

शंकर.

( २ ) मधुविद्यासंप्रदायमाह—तद्धैतद्ब्रह्मेति । तद्धैतत् मधुविज्ञानमित्यर्थः । तद्धैतद्ब्रह्म उद्दालकाय पिता प्रोक्तवान् । रंग.

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वाऽन्तेवासिने ॥

इदं वाव तत् यथोक्तं अन्योऽपि ज्येष्ठाय पुत्राय सर्वप्रियार्हाय ब्रह्म प्रब्रूयात्, प्रणाय्याय वा योग्याय अन्तेवासिने शिष्याय । * शंकर.

नान्यस्मै कस्मैचन । यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥

( १ ) नान्यस्मै कस्मैचन प्रब्रूयात् । तीर्थद्वयमनुज्ञातं अनेकेषां प्राप्तानां तीर्थानामाचार्यादीनाम् । कस्मात्पुनस्तीर्थसंकोचनं विद्यायाः कृतमित्याह—यद्यपि अस्मै आचार्याय इमां कश्चित्पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि दद्यात् अस्या विद्याया निष्क्रयार्थमाचार्याय धनस्य पूर्णां संपन्नां भोगोपकरणैः, नासौ अस्य निष्क्रयः, यस्मात् ततोऽपि दानात् एतदेव यन्मधुविद्यादानं भूयः बहुतरफलमित्यर्थः । द्विरभ्यास आदरार्थः । शंकर.

( २ ) द्विरुक्तिर्विद्यासमाप्त्यर्था । ‡ रंग.

वाग्भूतपृथिवीशरीरहृदयप्राणरूपा गायत्री
हार्दाकाशाख्यं नित्यं ब्रह्मैव

गायत्री वा इदꣳ सर्वं भूतं यदिदं किंच । वाग्वै गायत्री । वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥

( १ ) यत एवमतिशयफलैषा ब्रह्मविद्या, अतः सा प्रकारान्तरेणापि वक्तव्येति ‘ गायत्री वै ’ इत्या-

---

(१) छाउ. ३।११।३; ब्रशंकर. १।१।२५; रामानुज. १।३।३२ निम्लो ( निम्रो ) हैवास्मै ( हैवास्य ); श्रीकंठ. १।३।३२ निम्लो ( निम्रो ); श्रीकर. १।३।३३.

(२) छाउ. ३।११।४.

* रंग. शंकरवत् ।

‡ शेषं शंकरवत् ।

(१) छाउ. ३।११।५.

(२) छाउ. ३।११।६.

(३) छाउ. ३।१२।१; ब्रशंकर. १।१।२४, २५; भास्कर. १।१।२५; रामानुज. १।१।२६; ब्रमध्व. १।१।२५; श्रीकंठ १।१।२५, २६; श्रीकर. १।१।२६; वल्लभ. १।१।२३, २४.

ध्यारभ्यते। गायत्रीद्वारेण चोच्यते ब्रह्म, सर्वविशेषरहितस्य नेति नेति इत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात्। सत्स्वनेकेषु छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादानं प्राधान्यात्। सोमाहरणात् इतरच्छन्दोक्षराहरणेनेतरच्छन्दोव्याप्त्या च सर्वसवनव्यापकत्वाच्च यज्ञे प्राधान्यं गायत्र्याः। गायत्रीसारत्वाच्च ब्राह्मणस्य * मातरमिव हित्वा गुरुतरां गायत्रीं ततोऽन्यत् गुरुतरं न प्रतिपद्यते यथोक्तं ब्रह्मापीति, तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात्। अतो गायत्रीमुखेनैव ब्रह्मोच्यते।

गायत्री वा इत्यवधारणार्थो वैशब्दः। इदं सर्वं भूतं प्राणिजातं यत्किंच स्थावरं जङ्गमं वा तत्सर्वं गायत्र्येव। तस्याश्छन्दोमात्रायाः सर्वभूतत्वमनुपपन्नमिति गायत्रीकारणं वाचं शब्दरूपामापादयति गायत्रीं — वाग्वै गायत्रीति। वाग्वा इदं सर्वं भूतम्। यस्माद्वाक् शब्दरूपा सती सर्वं भूतं गायति शब्दयति असौ गौरसावश्व इति च, त्रायते च रक्षति अमुष्मान् मा भैषीः किं ते भयमुत्थितमित्यादिना सर्वतो भयान्निवर्त्यमानो वाचा त्रातः स्यात्। यत् वाक् भूतं गायति च त्रायते च गायत्र्येव तद्गायति च त्रायते च, वाचोऽनन्यत्वाद्गायत्र्याः। गानात् त्राणाच्च गायत्र्या गायत्रीत्वम्।

शंकर.

(२) 'छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम्'—छन्दोभिधानान्न ब्रह्मणः प्रकृतत्वं, इति चेत्, न एष दोषः, तथा चेतोर्पणनिगदात्। तथा गायत्र्याख्यच्छन्दोद्वारेण तदनुगते ब्रह्मणि चेतसः अर्पणं चित्तसमाधानं अनेन ब्राह्मणवाक्येन निगद्यते 'गायत्री वा इदं सर्वम्' इति। न हि अक्षरसंनिवेशमात्राया गायत्र्याः सर्वात्मकत्वं संभवति। तस्मात् यद्गायत्र्याख्यविकारेऽनुगतं जगत्कारणं ब्रह्म, तदिह सर्वमित्युच्यते, यथा 'सर्वं खल्विदं ब्रह्म' (छाउ. ३।१४।१) इति। तस्मादस्ति छन्दोभिधानेऽपि पूर्वस्मिन्वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम्। तदेव ज्योतिर्वाक्येऽपि परामृश्यते उपासनान्तरविधानाय।

अपर आह—साक्षादेव गायत्रीशब्देन ब्रह्म प्रतिपाद्यते, संख्यासामान्यात्। यथा गायत्री चतुष्पदा षडक्षरैः पादैः, तथा ब्रह्म चतुष्पात्। तथा अन्यत्रापि छन्दोभिधायी शब्दः अर्थान्तरे संख्यासामान्यात्प्रयुज्यमानो दृश्यते। तद्यथा—'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्' (छाउ. ४।३।८) इत्युपक्रम्याऽऽह 'सैषा विराडन्नादी' (छाउ. ४।३।८) इति। अस्मिन्पक्षे ब्रह्मैवाभिहितमिति न छन्दोभिधानम्। सर्वथाऽप्यस्ति पूर्वस्मिन्वाक्ये प्रकृतं ब्रह्म।

* ब्रशांकर. १।१।२५

(३) चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणो गायत्रीसादृश्यानुसंधानरूपा विद्या प्रस्तूयते—गायत्री वा इत्यादिना। 'इन्द्रः शचीपतिः, बलेन पीडितः, दुश्च्यवनो वृषा, समित्सु सासहिः' इति गायत्री चतुष्पदा। एकैकस्य पादस्य षडक्षरात्मतया षडक्षरपादवत्त्वेन षड्विधा च। एवं ब्रह्मणोऽपि सर्वभूतशब्दितात्मवर्गः एकः पादः, कर्मार्जितभोगस्थानरूपः पृथिवीलोक एकः पादः, भोगोपकरणं शरीरमेकः पादः, आत्मस्थित्यनुगुणप्रदेशविशेषरूपं हृदयमेकः पाद इति भूतपृथिवीशरीरहृदयानि चत्वारः पादाः। तत्र सर्वभूतलक्षणपादस्य ब्रह्मात्मकवाक्कर्तृकगानकर्मत्वत्राणकर्मत्वलक्षणं विधाद्वयं, पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्त्यत्वलक्षणं विधाद्वयं, शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वलक्षणं विधाद्वयमेव द्वयोरपि, विधाद्वययोरपि भेदाभावात्। ततश्च परब्रह्मरूपा गायत्री भूतपृथिवीशरीरहृदयरूपपादचतुष्टयवत्तया चतुष्पदा, गानकर्मत्वत्राणकर्मत्वसर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्त्यत्वसर्वप्राणिप्राणप्रतिष्ठात्वसर्वप्राणानतिवर्त्यत्वलक्षणविधाषट्कयुक्ततया षड्विधा च। अतश्चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसादृश्यानुसंधानं कर्तव्यमिति प्रतिपादयति—गायत्री वा इति। अत्र गायत्रीशब्देन न प्रसिद्धा गायत्र्यभिधीयते, तस्या भूतादिपादचतुष्टयसंबन्धाभावात्, 'एतावानस्य महिमा' इति पुंसूक्तमन्त्रप्रतिपाद्यत्वाभावाच्च। अपि तु परमात्मा। यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्दः प्रयुज्यमानस्तत्सादृश्यविशिष्टानुष्ठानार्थः, तथा गायत्रीशब्दो ब्रह्मणि प्रयुज्यमानः तत्सादृश्यानुसंधानार्थः। ततश्च

* 'ब्रह्मणोऽस्य' इति युक्ततरं भवितुम्।

* भास्करादयः सर्वे तात्पर्यतो ब्रशांकरवत्।

गायत्रीशब्देन ब्रह्मैवाभिधीयते । वैशब्दोऽवधारणार्थः । ब्रह्मैव परिदृश्यमानसर्वभूतात्मकमित्यर्थः । ततश्च ब्रह्मणि भूतलक्षणपादवत्त्वमुक्तम् ।

अथ गायत्रीशब्दप्रवृत्तिनिमित्तमपि ब्रह्मण्युपपादयन् विधाद्वयमाह—वाग्वै गायत्रीति । गायत्रीशब्दितं गायत्रीसदृशं ब्रह्मैव वाग्रूपविशिष्टं भवतीत्यर्थः । 'शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः' इति पराशरस्मृत्याद्यनुरोधेन ब्रह्मण एव शब्दरूपत्वमिति भावः । ततश्च किं, इत्यत्राऽऽह—वाग्वा इदमिति । वाग्रूपमेव ब्रह्म सर्वाणि भूतान्यभिधत्ते, हिताहितविधिनिषेधमुखेन त्रायते च । अतश्च ब्रह्मणो वाग्रूपस्य सर्वभूतगानत्राणकर्तृत्वाभ्यां गायत्रीशब्दवाच्यत्वं भूतात्मकपादवतो ब्रह्मणो वाक्कर्तृकगानत्राणकर्मत्वाभ्यां द्वैविध्यं चोक्तं भवति । रंग.

**यां वै सा गायत्रीयं वाव सा येयं पृथिवी । अस्या ँ हीद ँ सर्वं भूतं प्रतिष्ठितम् । एतामेव नातिशीयते ॥**

( १ ) या वै सा एवंलक्षणा सर्वभूतरूपा गायत्री, इयं वाव सा येयं पृथिवी । कथं पुनरियं पृथिवी गायत्रीति, उच्यते— सर्वभूतसंबन्धात् । कथं सर्वभूतसंबन्धः, अस्यां पृथिव्यां हि यस्मात् सर्वं स्थावरं जङ्गमं च भूतं प्रतिष्ठितम् । एतामेव पृथिवीं नातिशीयते नातिवर्तते इत्येतत् । यथा गानत्राणाभ्यां भूतसंबन्धो गायत्र्याः, एवं भूतप्रतिष्ठानाद्भूतसंबद्धा पृथिवी, अतो गायत्री पृथिवी । शंकर.

( २ ) उक्तार्थानुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाऽऽह—या वै सेति । उक्तरूपविशिष्टप्रकृतधर्मिपरो यच्छब्दः । या सा सर्वभूतरूपैकपादयुक्ता गायत्री गायत्र्याख्यं ब्रह्म, तदेव प्रसिद्धा पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राऽऽह—अस्यां हीदमिति । ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम् । न हि केवलपृथिव्याः सर्वभूतधारणशक्तिरस्तीत्यर्थः । प्रतिष्ठात्वं च नियतमित्याह—एतामेवेति । पृथिवीं भूतजातं नातिवर्तते । कर्मवश्यात्मनां हि प्रतिष्ठात्वादेव पृथिवी नियमेनाशक्यातिक्रमणेत्यर्थः । पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते, न ततोऽन्यत्रेति भावः । एवं द्वितीयः पादः भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । रंग.

**यां वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरम् । अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते ॥**

( १ ) या वै सा पृथिवी गायत्री, इयं वाव सा इदमेव । तत्किम् । यदिदमस्मिन्पुरुषे कार्यकरणसंघाते जीवति शरीरं, पार्थिवत्वाच्छरीरस्य । कथं शरीरस्य गायत्रीत्वमित्युच्यते—अस्मिन् हीमे प्राणाः भूतशब्दवाच्याः प्रतिष्ठिताः । अतः पृथिवीवत् भूतशब्दवाच्यप्राणप्रतिष्ठानाच्छरीरं गायत्री । एतदेव यस्माच्छरीरं नातिशीयन्ते प्राणाः । शंकर.

( २ ) अथ तृतीयं पादमाह—या वै सेति । अत्र पुरुषशब्दः शरीरविशिष्टजीवपरः । पृथिवी पृथिवीरूपपादविशिष्टा या गायत्री गायत्र्याख्यं ब्रह्म, सा शरीरं शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्टतया भूतपृथिवीशब्दयोर्ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वादग्न्यप्रायन्यायेनात्र शरीरलक्षणपादान्तरनिर्देशकस्य शरीरशब्दस्य निष्कर्षकशब्दत्वेऽपि सामानाधिकरण्येन निर्देशो युक्तः । शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्यामुपपादयति—अस्मिन्हीमे इति । नातिवर्तन्ते इत्यर्थः । शंकर.

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयम् । अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते ॥**

( १ ) यद्वै तत्पुरुषे शरीरं गायत्री, इदं वाव तत् यदिदमस्मिन्नन्तः मध्ये पुरुषे हृदयं पुण्डरीकाख्यम् । एतद्गायत्री कथमित्याह—अस्मिन्हीमे प्राणाः प्रतिष्ठिताः । अतः शरीरवद्गायत्री हृदयम् । एतदेव

(१) छाउ. ३।१२।२.

(१) छाउ. ३।१२।३.

(२) छाउ. ३।१२।४.

च नातिशीयन्ते प्राणाः । 'प्राणो ह पिता प्राणो माता' (छाउ. ७।१५।१) 'अहिंसन्त्सर्वभूतानि' (छाउ. ८।१५।१) इति श्रुतेर्भूतशब्दवाच्याः प्राणाः ।

शंकर.

(२) चतुर्थं पादमाह—यद्वै तत्पुरुषे इति । पुरुषे शरीरम् । पुरुषशब्दितशरीरविशिष्टजीवनिष्ठशरीराख्यपादविशिष्टं यद्गायत्र्याख्यं ब्रह्म, तदेव हृदयं हृदयशरीरक हृदयलक्षणपादकमित्यर्थः । हृदयस्य ब्रह्मात्मकत्वमुपपादयति—अस्मिन्हीमे प्राणा इति । प्राणशब्देन प्राणापानादयः इन्द्रियाणि वा कथ्यन्ते। तेषां हृदयसंबन्धिनाडीद्वारा हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थपादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । रंग.

**[१]सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाऽभ्यनूक्तम् ॥**

(१) सैषा चतुष्पदा षडक्षरपदा छन्दोरूपा सती भवति गायत्री षड्विधा, वाग्भूतपृथिवीशरीरहृदयप्राणरूपा सती षड्विधा भवति । वाक्प्राणयोरन्यार्थनिर्दिष्टयोरपि गायत्रीप्रकारत्वं, अन्यथा षड्विधसंख्यापूरणानुपपत्तेः । तत् एतस्मिन्नर्थे एतत् गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गायत्रीमुखेनोक्तं ऋचाऽपि मन्त्रेण अभ्यनूक्तं प्रकाशितम् ।

शंकर.

(२) षाड्विध्यं च निगमयति—सैषेति । नन्वेवं चतुष्पात्त्वे ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायां उक्तस्य महिम्नोऽवधिप्रतिषेधिकां ऋचमुदाहरति—तदेतदिति । तदेतद्गायत्र्याख्यं ब्रह्म अभिमुखीकृत्य ऋचाऽभ्युक्तमित्यर्थः ।

रंग.

**[२]तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥**

(१) तावानस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः, यावान् चतुष्पात् षड्विधश्च ब्रह्मणो विकारः पादो गायत्रीति व्याख्यातः । अतः तस्माद्विकारलक्षणाद्गायत्र्याख्याद्वाचारम्भणमात्रात् ततः ज्यायान् महत्तरश्च परमार्थसत्यरूपः अविकारः पूरुषः पुरुषः सर्वपूरणात् पुरि शयनाच्च । तस्यास्य पादः सर्वा सर्वाणि भूतानि तेजोबन्नादीनि सस्थावरजङ्गमानि । त्रिपात् त्रयः पादा अस्य सोऽयं त्रिपात् । त्रिपात् अमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मनि अवस्थितमित्यर्थ इति ।

शंकर.

(२) तामेव ऋचं पठति — तावानस्येति । पूर्वोक्तः सर्वोऽप्येतस्य महिमा नियाम्यवर्गः । पूर्वोक्तमहिमापेक्षया पुरुषो ज्यायान् परमात्मा ज्यायान्, ततोऽधिकमहिमशालीत्यर्थः । अत्र सर्वा भूतानीति कार्यजगदन्तर्गता अचित्संसृष्टाश्चेतना उच्यन्ते । ते सर्वे पादः, अंशमात्रमित्यर्थः । सर्वशब्दात्परस्य शेः 'सुपां सुलुक्०' इति लुकि नलोपे रूपम् । अत्र द्युशब्दः समष्टिव्यष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः । अप्राकृते स्थानविशेषेऽस्य परमात्मनः अमृतं पादत्रयमित्यर्थः । त्रिपात्त्वं च अप्राकृतैर्भोग्यभोगस्थानभोगोपकरणविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैर्नित्यसिद्धैश्च मुक्तैश्चाऽऽत्मभिर्वा संभवति । रंग.

(३) पादोऽस्य सर्वा भूतानि, सर्वाणि भूतान्येकः पादः । पादत्रयममृतं दिवि इत्येकोऽर्थः । 'पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः । अमृतं क्षेममभयं

---

(१) छाउ. ३।१२।५; ब्रशंकर. १।१।२५, २६; भास्कर. १।१।२५, २६; रामानुज. १।१।२६; श्रीकर. १।१।२६; विज्ञान. १।१।२५.

(२) छाउ. ३।१२।६; ब्रशंकर. १।१।२४, २५, २६, २।१।२७, २।३।४४, ४।४।१९; भास्कर. १।१।२४, २७, २।३।४४, ४।४।१९; रामानुज. १।१।२५, २६, २८; निंबार्क. १।१।२५, २।१।२६, २।३।४३; ब्रमध्व. १।१।२६, २७, १।२।१३, २।३।४८, ३।२।३४ सर्वा (विश्वा); श्रीकंठ. १।१।२५, २६, २८; श्रीकर. १।१।२५, २६, २७, २८ तावान (एतावान) पूरुषः (पुरुषः) सर्वा (विश्वा); वल्लभ. १।१।२३, २६; विज्ञान. १।१।२४, २७, ३१, २।३।४४, ३।२।३१ तावान (एतावान) ततो (अतो) सर्वा (विश्वा); बलदेव. १।१।२४, २।३।४२.

त्रिमूर्ध्नोऽध्यधि मूर्द्धसु ॥' इत्यन्वयः । पुरुषसूक्तानुरोधे द्वितीय एवार्थः .

वल्लभ.१।१।२६

[ एकोऽर्थ इति । पुरःस्फूर्तिकः सर्वाद्वृतस्तृतीयोऽर्थः । अस्मिन् पक्षे श्रौतं दिवीतिपदं द्योतनात्मत्वरूपपरम् । अतः पादसंख्यापूर्तिस्त्वमृतात्मकेन स्वरूपेणैव, न तु जीवैर्न वा लोकैरिति । द्वितीयस्कन्धानुसारेणेतरमाहुः — पादेष्वित्यादि । तिष्ठन्ति येष्विति ( स्था ? ) भूरादिलोकाः स्थिति( त ? ) पदवाच्याः । ते पादा यस्येति स्थितिपात् । तस्य स्थितिपदो भगवतो भूरादिषु पादेषु सर्वाणि भूतानि विदुः । त्रिमूर्ध्नः भूरादित्रयोपरिवर्तमानस्य महर्लोकस्य मूर्द्धसु उपरितनेषु जनस्तपःसत्येषु अमृतं क्षेममभयमिति सुखत्रयमधादि । अतो भूरादिचतुष्के अनित्यं सुखमित्यर्थादायाति । अस्मिन्पक्षे श्रौते पादशब्दे 'सुपां सुलुक्' इति सुपः स्वादेशः । अस्येत्यस्य स्थितिपदः पुंस इत्यर्थः । दिवीति जनआदित्रयोपलक्षकम् । अमृतपदं अमृतत्वस्यानुजीव्यमानत्वात् सुखत्रयोपलक्षकम् । एवं सति द्वितीयस्योपपादनसापेक्षत्वात् प्राञ्जलः पूर्व एव ग्राह्य इति शङ्कायामाहुः— पुरुषेत्यादि । एवकारोऽप्यर्थे, पूर्वस्यापि 'पादोऽस्य' इत्युक्तरीत्या पुरुषसूक्तानुसारित्वात् ।

अणुभाष्यप्रकाशः ]

**यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः । यो वै स बहिर्धा पुरुषादाकाशः ॥**

**अयं वाव स योऽयमन्तः पुरुष आकाशः । यो वै सोऽन्तः पुरुष आकाशः ॥**

**अयं वाव स योऽयमन्तर्हृदय आकाशः । तदेतत्पूर्णमप्रवर्ति । पूर्णमप्रवर्तिनी ^(३) श्रियं लभते य एवं वेद ॥**

( १ ) यद्वै तत् त्रिपादमृतं गायत्रीमुखेनोक्तं ब्रह्मेति, इदं वाव तत् इदमेव तत् , योऽयं प्रसिद्धो बहिर्धा बहिः पुरुषात् आकाशः भौतिकः । यो वै स बहिर्धा पुरुषादाकाश उक्तः, अयं वाव सः, योऽयमन्तः पुरुषे शरीरे आकाशः । यो वै सोऽन्तः पुरुषे आकाशः, अयं वाव सः, योऽयमन्तर्हृदये हृदयपुण्डरीके आकाशः । कथमेकस्य सतः आकाशस्य त्रिधा भेद इति । उच्यते— बाह्येन्द्रियविषये जागरितस्थाने नभसि दुःखबाहुल्यं दृश्यते । ततः अन्तःशरीरे स्वप्नस्थानभूते मन्दतरं दुःखं भवति स्वप्नान्पश्यतः । हृदयस्थे पुनर्नभसि न कंचन कामं कामयते, स्वप्नं पश्यति, अतः सर्वदुःखनिवृत्तिरूपमाकाशं सुषुप्तस्थानम् । अतो युक्तमेकस्यापि त्रिधा भेदान्वाख्यानम् । बहिर्धा पुरुषादारभ्य आकाशस्य हृदये संकोचकरणं चेतःसमाधानस्थानस्तुतये । यथा 'त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते । अर्धतस्तु कुरुक्षेत्रमर्धतस्तु पृथूदकम् ॥' इति, तद्वत् । तदेतत् हार्दाकाशाख्यं ब्रह्म पूर्णं सर्वगतं, न हृदयमात्रपरिच्छिन्नमिति मन्तव्यं, यद्यपि हृदयाकाशे चेतः समाधीयते अप्रवर्ति, न कुतश्चित्क्वचित्प्रवर्तितुं शीलमस्येत्यप्रवर्ति तत् अनुच्छित्तिधर्मकम् । यथा अन्यानि भूतानि परिच्छिन्नान्युच्छित्तिधर्मकाणि, न तथा हार्दं नभः । पूर्णां अप्रवर्तिनीं अनुच्छेदात्मिकां श्रियं विभूतिं गुणफलं लभते दृष्टं, य एवं यथोक्तं पूर्णाप्रवर्तिगुणं ब्रह्म वेद जानाति, इहैव जीवन् तद्भावं प्रतिपद्यते इत्यर्थः ।

शंकर.

( २ ) अथ चतुर्थपादत्वेनोक्तस्य उपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदयाकाशस्य बाह्याकाशाभेदेन महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाऽऽह—यद्वैतदिति । स्वकार्यव्याप्तत्वामूर्तत्वाचलत्वादिभिर्ब्रह्मतुल्यो बाह्याकाशो यो वर्तते इत्यर्थः । बाह्यान्तराकाशयोर्भेदसत्त्वेऽपि धर्मैक्याभिप्रायेणाभेदनिर्देशः । यो वै सोऽन्तः पुरुष इति । एवं ब्रह्मतुल्यबाह्याकाशाभिन्नः शरीरान्तराकाशो य इत्यर्थः । तादृशशरीरान्तःस्थाकाशाभिन्नो हृदयावच्छिन्नाकाश इत्यर्थः । पूर्ववत् धर्मैक्यादिति भावः । एवं ब्रह्मतुल्यबाह्याकाशाभिन्नपुरुषान्तर्गताकाशाभेदं हृदयाकाशस्योक्त्वा एवादृशमहिमशाली हृदयाकाश इति स्तौति—यो वै सोऽन्तर्हृदय आकाश इति । अन्तर्हृदये वर्तमानो य आकाशः,

---

(१) छाउ. ३।१२।७; ब्रशंकर. १।१।२५, २६, ३।२।३५; श्रीकर. १।१।२६.

(२) छाउ. ३।१२।८; ब्रशंकर. ३।२।३५.

(३) छाउ. ३।१२।९; ब्रशंकर. ३।२।३५; रंग. हृदय आकाशः । + ( यो वै सोऽन्तर्हृदय आकाशः ).

अयं तादृशमहिमशालीत्यर्थः । अनया च हृदयाकाशस्तुत्या चतुर्थपादत्वेनोक्तं हृदयं स्तुतं भवति । एवं चतुष्पदषड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलं विदधाति—तदेतत्पूर्णमिति । पूर्णत्वं अपरिच्छिन्नत्वं, अप्रवर्तित्वं अचलत्वं स्थिरत्वम् । अनन्तस्थिरा श्रीः मुक्तैश्वर्यमेव, तदुपासीनो मुक्तिं भजतीत्यर्थः ।

रंग.

स्वर्गलोकभवनरूपहृदयस्य पञ्चद्वारपालोपासनम्

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः । स योऽस्य प्राङ् सुषिः स प्राणः । तच्चक्षुः । स आदित्यः । तदेतत्तेजोऽन्नाद्यमित्युपासीत । तेजस्व्यन्नादो भवति य एवं वेद ॥**

(१) तस्य ह वा इत्यादिना गायत्र्याख्यस्य ब्रह्मणः उपासनाङ्गत्वेन द्वारपालादिगुणविधानार्थमारभ्यते । यथा लोके द्वारपाला राज्ञ उपासनेन वशीकृता राजप्राप्त्यर्था भवन्ति, तथेहापीति । तस्येति प्रकृतस्य हृदयस्येत्यर्थः । एतस्य अनन्तरनिर्दिष्टस्य पञ्च पञ्चसंख्याकाः देवानां सुषयो देवसुषयः स्वर्गलोकप्राप्तिद्वारच्छिद्राणि, देवैः प्राणादित्यादिभिः रक्ष्यमाणानीत्यतो देवसुषयः । तस्य स्वर्गलोकभवनस्य हृदयस्यास्य यः प्राङ् सुषिः पूर्वाभिमुखस्य प्राग्गतं यच्छिद्रं द्वारं, स प्राणः, तत्स्थः तेन द्वारेण यः संचरति वायुविशेषः स प्रागनितीति प्राणः । तेनैव संबद्धमव्यतिरिक्तं तच्चक्षुः तथैव स आदित्यः 'आदित्यो ह वै बाह्यः प्राणः' (प्रउ. ३।८) इति श्रुतेः, चक्षूरूपप्रतिष्ठाक्रमेण हृदि स्थितः । 'स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषि (इति)' (बृउ. ३।९।२०) इत्यादि हि वाजसनेयके । प्राणवायुदेवतैव ह्येका चक्षुरादित्यश्च सहाऽऽश्रयेण । वक्ष्यति च — 'प्राणाय स्वाहेति हुतं हविः सर्वमेतत्तर्पयति' इति । तदेतत् प्राणाख्यं स्वर्गलोकद्वारपालत्वाद्ब्रह्म स्वर्गलोकं प्रतिपित्सुः तेजस्वि एतत् चक्षुरादित्यस्वरूपेण अन्नाद्यत्वाच्च सवितुः, तेजोऽन्नाद्यमित्याभ्यां गुणाभ्यामुपासीत । ततः तेजस्वी अन्नादश्च आमयावित्वरहितः भवति, य एवं वेद । तस्यैतद्गुणफलं, उपासनेन वशीकृतो द्वारपः स्वर्गलोकप्राप्तिहेतुर्भवतीति मुख्यं च फलम् ।

शंकर

(२) अथ उक्तब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते — तस्य ह वा इति । तस्यैतस्य चतुर्थपादत्वेन निर्दिष्टस्य प्रकृतस्य हृदयस्य देवताधिष्ठानभूतानि पञ्च द्वारच्छिद्राणीत्यर्थः । प्राणवृत्तिविशेषाप्यायितचक्षुरनुग्राहकादित्यस्य हृदयप्राक्सुषिरद्वारपालस्य तेजोऽन्नाद्यतयोपासने उपासकः स्वयमपि तेजस्व्यन्नादो भवतीत्यर्थः । तदेतदित्यादित्यस्य तेजोऽन्नाद्यापेक्षया नपुंसकलिङ्गनिर्देशः । एवमुत्तरत्रापि ।

रंग.

**अथ योऽस्य दक्षिणः सुषिः स व्यानः । तच्छ्रोत्रम् । स चन्द्रमाः । तदेतच्छ्रीश्च यशश्चेत्युपासीत । श्रीमान्यशस्वी भवति य एवं वेद ॥**

अथ योऽस्य दक्षिणः सुषिः । तत्स्थो वायुविशेषः स वीर्यवत्कर्म कुर्वन् विगृह्य वा प्राणापानौ नाना वा अनितीति व्यानः । तत्संबद्धमेव च तच्छ्रोत्रमिन्द्रियम् । तथा स चन्द्रमाः, श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च' (ऐआ. २।१।७) इति श्रुतेः । सहाश्रयौ पूर्ववत् । तदेतच्छ्रीश्च विभूतिः, श्रोत्रचन्द्रमसोर्ज्ञानान्नहेतुत्वं, अतस्ताभ्यां श्रीत्वम् । ज्ञानान्नवतश्च यशः ख्यातिर्भवतीति यशोहेतुत्वात् यशस्त्वम् । अतस्ताभ्यां गुणाभ्यामुपासीतेत्यादि समानम् ।

शंकर.

**अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः । सा वाक् । सोऽग्निः । तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत । ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥**

(१) अथ योऽस्य प्रत्यङ् सुषिः पश्चिमः तत्स्थो वायुविशेषः, स मूत्रपुरीषाद्यपनयन् अधः अनितीत्यपानः । सा तथा वाक् । तत्संबन्धात् तथा अग्निः । तदेतद्ब्रह्मवर्चसं, वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसं, अग्निसंबन्धाद्वृत्तस्वाध्यायस्य । अन्नग्रसनहेतुत्वादपानस्यान्नाद्यत्वम् । समानमन्यत् ।

शंकर.

(१) छाउ. ३।१३।१; श्रीकर. १।१।२५.

(१) छाउ. ३।१३।२.

(२) छाउ. ३।१३।३.

अथ योऽस्योदङ् सुषिः स समानः । तन्मनः । स पर्जन्यः । तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत । कीर्तिमान्व्युष्टिमान्भवति य एवं वेद ॥

(१) अथ योऽस्य उदङ् सुषिः उद्गतः सुषिः तत्स्थो वायुविशेषः, सः अशितपीते समं नयतीति समानः । तत्संबद्धं मनः अन्तःकरणम् । स पर्जन्यः वृष्ट्यात्मको देवः पर्जन्यनिमित्ताश्चाऽऽप इति, 'मनसा सृष्टा आपश्च वरुणश्च' ( ऐआ. २।१।७ ) इति श्रुतेः । तदेतत्कीर्तिश्च, मनसः ज्ञानस्य कीर्तिहेतुत्वात् । * आत्मपरोक्षं विश्रुतत्वं कीर्तिः यशः । स्वकरणसंवेद्यं विश्रुतत्वं व्युष्टिः कान्तिः देहगतं लावण्यम् । ततश्च कीर्तिसंभवात्कीर्तिश्चेति । समानमन्यत् । शंकर.

(२) व्युष्टिः देहकान्तिः । रंग.

अथ योऽस्योर्ध्वः सुषिः स उदानः । स वायुः । स आकाशः । तदेतदोजश्च महश्चेत्युपासीत । ओजस्वी महस्वान्भवति य एवं वेद ॥

(१) अथ योऽस्योर्ध्वः सुषिः स उदानः, आ पादतलादारभ्योर्ध्वमुत्क्रमणात्, उत्कर्षार्थं च कर्म कुर्वन्ननितीत्युदानः । स वायुः तदाधारश्चाऽऽकाशः । तदेतद्वाय्वाकाशयोः ओजोहेतुत्वात् ओजः बलं, महत्त्वाच्च मह इति । समानमन्यत् ।

शंकर.

(२) ओजः बलं, महत्त्वं महः । आकाशश्च देवताविशेषः । रंग.

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः । स य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते । प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥

(१) ते वा एते यथोक्ताः पञ्चसुषिसंबन्धात्पञ्च ब्रह्मणो हार्दस्य पुरुषाः राजपुरुषा इव द्वारस्थाः स्वर्गस्य हार्दस्य लोकस्य द्वारपाः द्वारस्थाः । एतैर्हि चक्षुःश्रोत्रवाङ्मनःप्राणैर्बहिर्मुखप्रवृत्तैर्ब्रह्मणो हार्दस्य प्राप्तिद्वाराणि निरुद्धानि । प्रत्यक्षं ह्येतत् अजितकरणतया बाह्यविषयासङ्गानृतप्ररूढत्वान्न हार्दे ब्रह्मणि मनस्तिष्ठति । तस्मात्सत्यमुक्ता एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा इति । अतः स य एतानेवं यथोक्तगुणविशिष्टान् स्वर्गस्य लोकस्य द्वारपान् वेद उपास्ते उपासनया वशीकरोति, सः राजद्वारपालानिव उपासनेन वशीकृत्य तैरनिवारितः प्रतिपद्यते स्वर्गं लोकं राजानमिव हार्दं ब्रह्म । किंचास्य विदुषः कुले वीरः पुत्रो जायते वीरपुरुषसेवनात् । तस्य च ऋणापाकरणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वं, ततश्च स्वर्गलोकप्रतिपत्तये पारम्पर्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलम् । शंकर.

(२) आदित्यचन्द्रमोऽग्निपर्जन्याकाशाख्या ब्रह्मपुरुषाः । द्वारपालकाः । यद्वा भगवल्लोकस्य द्वारपाः आतिवाहिकाः । * रंग.

सर्वलोकप्रकाशकं पुरुषेऽन्तः स्थितं ज्योतिः, तदुपासनं च

अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः । तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति । तदेतद्दृष्टं च श्रुतं चेत्युपासीत । चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥

(१) अथ यदसौ विद्वान् स्वर्गं लोकं वीरपुरुषसेवनात्प्रतिपद्यते, यच्चोक्तं 'त्रिपादस्यामृतं दिवि' इति, तदिदं लिङ्गेन चक्षुःश्रोत्रेन्द्रियगोचरमापादयितव्यं, यथा अग्न्यादि धूमादिलिङ्गेन । तथाहि एवमेवेदमिति यथो-

* टीकानुसृतेयं वाक्यव्यवस्था ।

(१) छाउ. ३।१३।४.

(२) छाउ. ३।१३।५.

(३) छाउ. ३।१३।६; ब्रशंकर. १।१।२६, १।४।१२; श्रीकर. १।१।२७, १।४।१२.

* शेषं शंकरवत् ।

(१) छाउ. ३।१३।७; ब्रशंकर. १।१।२४, भास्कर. १।१।२४, १।३।४०; रामानुज. १।१।२५, १।३।४१, १।४।१६; निंबार्क. १।१।२५; ब्रमध्व. १।१।२५; श्रीकंठ. १।१।२५, २८; श्रीकर. १।१।२५, २८, ३।३।७, २३; बलदेव. १।१।२४.

केऽर्थे दृढा प्रतीतिः स्यात्, अनन्यत्वेन च निश्चय इति। अत आह—यत् अतः अमुष्मात् दिवः द्युलोकात् परः परं इति लिङ्गव्यत्ययेन, ज्योतिर्दीप्यते। स्वयंप्रभं सदाप्रकाशत्वाद्दीप्यते इव दीप्यते इत्युच्यते, अग्न्यादिवज्ज्वलनलक्षणाया दीप्तेरसंभवात्। विश्वतः पृष्ठेष्वित्येतस्य व्याख्यानं सर्वतः पृष्ठेष्विति। संसारादुपरीत्यर्थः। संसार एव हि सर्वः, असंसारिण एकत्वात् निर्भेदत्वाच्च। अनुत्तमेषु, तत्पुरुषसमासाशङ्कानिवृत्तये आह—उत्तमेषु लोकेष्विति। सत्यलोकादिषु हिरण्यगर्भादिकार्यरूपस्य परस्येश्वरस्य आसन्नत्वादुच्यते उत्तमेषु लोकेष्विति। इदं वाव इदमेव तत् यदिदमस्मिन्पुरुषे अन्तः मध्ये ज्योतिः चक्षुःश्रोत्रग्राह्येण लिङ्गेनोष्णिम्ना शब्देन चावगम्यते। यत् त्वचा स्पर्शरूपेण गृह्यते तच्चक्षुषैव, दृढप्रतीतिकरत्वात् त्वचः, अविनाभूतत्वाच्च रूपस्पर्शयोः। कथं पुनस्तस्य ज्योतिषो लिङ्गं त्वग्दृष्टिगोचरत्वमापद्यते इति, आह—यत्र यस्मिन्काले। एतदिति क्रियाविशेषणम्। अस्मिन् शरीरे हस्तेनाऽऽलभ्य संस्पर्शेन उष्णिमानं रूपसहभाविनमुष्णस्पर्शभावं विजानाति। स हि उष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो लिङ्गं, अव्यभिचारात्। न हि जीवन्तमात्मानमुष्णिमा व्यभिचरति। 'उष्ण एव जीविष्यञ्शीतो मरिष्यन्' इति हि विज्ञायते। मरणकाले च 'तेजः परस्यां देवतायाम्' इति परेणाविभागत्वोपगमात्। अतः असाधारणं लिङ्गमौष्ण्यं अग्नेरिव धूमः। अतस्तस्य परस्य एषा दृष्टिः साक्षादिव दर्शनं, दर्शनोपाय इत्यर्थः। तथा तस्य ज्योतिषः एषा श्रुतिः श्रवणं श्रवणोपायोऽप्युच्यमानः। यत्र यदा पुरुषो ज्योतिषो लिङ्गं शुश्रूषति श्रोतुमिच्छति, तदा एतत् कर्णौ अपिगृह्य, एतच्छब्दः क्रियाविशेषणम्। अपिगृह्य अपिधायेत्यर्थः। अङ्गुलिभ्यां प्रोर्णुत्य निनदमिव, रथस्येव घोषो निनदः, तमिव शृणोति, नदथुरिव ऋषभकूजितमिव शब्दः, यथा चाग्नेर्बहिर्ज्वलतः, एवं शब्दमन्तः शरीरे उपशृणोति। तदेतज्ज्योतिः दृष्टश्रुतलिङ्गत्वात् दृष्टं च श्रुतं चेत्युपासीत। तथोपासनात् चक्षुष्यः दर्शनीयः श्रुतः विश्रुतश्च। यत् स्पर्शगुणोपासननिमित्तं फलं, तद्रूपे संपादयति चक्षुष्य इति, रूपस्पर्शयोः सहभावित्वात्, इष्टत्वाच्च दर्शनीयतायाः। एवं च विद्यायाः फलमुपपन्नं स्यात्, न तु मृदुत्वादिस्पर्शवत्त्वे। य एवं यथोक्तौ गुणौ वेद। स्वर्गलोकप्रतिपत्तिस्तूक्तं अदृष्टं फलम्। द्विरभ्यास आदरार्थः।

शंकर.

(२) एवं गायत्रीविद्याप्रकृतस्य द्युसंबन्धिनः सकलफलप्रदस्य परस्य ब्रह्मणः आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनाविधानायाऽऽह—अथ यदत इति। 'तथाऽक्षरात्संभवतीह विश्वम्' (मुउ. १।१।७) इत्यत्र जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः। सर्वशब्दः परिशेषात्समष्टितत्त्वपरः। ततश्च अतः परो दिवः अप्राकृतस्थानविशेषस्योपरिष्टात् समष्टिव्यष्टिबहिर्भूतेषु अनुत्तमेषु स्वावधिकोत्तमरहितेषु उत्तमस्थानविशेषेषु 'तस्य भासा सर्वमिदं विभाति' (मुउ. २।२।१०) इत्यवभासकतया ज्योतिःशब्दितः परमात्मा यो दीप्यते इत्यर्थः। अत्र यच्छब्दस्य सर्वनामत्वेन प्रकृतपरामर्शितया प्रकृतं त्रिपाद्ब्रह्म परामृश्यते तत् दिवः परस्तात् दीप्यमानं त्रिपात् ब्रह्म यदिदमस्मिन्नन्तः पुरुषे शरीरस्यान्तः ज्योतिः, इदं वाव कौक्षेयज्योतिरेव, कौक्षेयज्योतिःशरीरकमेवेत्यर्थः। 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥' (भ. गी. १५।१४) इति स्मरणात्। ततश्च तदात्मकत्वानुसंधानं कर्तव्यमित्यर्थः। तस्यैषा दृष्टिरिति। यदौष्ण्योपलम्भनमित्यर्थः। उपलभ्यमानोष्णस्पर्शस्य जाठराग्निसंबन्धित्वात् तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कार इत्यर्थः। यत्र यदा कर्णौ अङ्गुलिभ्यामपिधाय निनदमिव रथघोषमिव ऋषभकूजितमिव बहिर्ज्वलतोऽग्नेः शब्दमिव शृणोतीति यत्, तदेतत् जाठराग्निश्रवणम्। आन्तरस्य शब्दस्य जाठराग्निसंबन्धित्वात् तच्छब्दश्रवणमेव 'तच्छ्रवणमि'त्यर्थः। तदेतत् परमात्मशरीरभूतं कौक्षेयज्योतिः उक्तरीत्या दृष्टत्वश्रुतत्वाभ्यां उपासीतेत्यर्थः। तस्य फलमाह—चक्षुष्य इति। चक्षुष्यत्वं आभिरूप्यम्। श्रुतत्वं कीर्तिमत्त्वम्। द्विरुक्तिर्विद्यासमाप्त्यर्था।

रंग.

( शाण्डिल्यविद्या )

सर्वात्मकब्रह्मोपासनम्, ऐहिकः क्रतुः स्वसदृशपरलोकफलदः, सूक्ष्म अन्तरात्मा आकाशात्मा सर्वलोकव्यापि ब्रह्म सर्वोपेतम्

**सर्वं[१] खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत ॥**

(१) पुनस्तस्यैव त्रिपादमृतस्य ब्रह्मणोऽनन्तगुणवतोऽनन्तशक्तेरनेकभेदोपास्यस्य विशिष्टगुणशक्तिमत्त्वेनोपासनं विधित्सन्नाह—सर्वं समस्तं, खल्विति वाक्यालंकारार्थो निपातः, इदं जगत् नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म कारणम् । वृद्धतमत्वाद्ब्रह्म । कथं सर्वस्य ब्रह्मत्वमित्यत आह—तज्जलानिति । तस्मात् ब्रह्मणो जातं तेजोबन्नादिक्रमेण सर्वं, अतस्तज्जम् । तथा तेनैव जननक्रमेण प्रतिलोमतया तस्मिन्नेव ब्रह्मणि लीयते तदात्मतया श्लिष्यते इति तल्लम् । तथा तस्मिन्नेव स्थितिकाले अनिति प्राणिति चेष्टते इति । एवं ब्रह्मात्मतया त्रिषु कालेष्वविशिष्टं, तद्व्यतिरेकेणाग्रहणात् । अतस्तदेवेदं जगत् । यथा चेदं तदेव एकमद्वितीयं तथा षष्ठे विस्तरेण वक्ष्यामः । यस्माच्च सर्वमिदं ब्रह्म, अतः शान्तः रागद्वेषादिदोषरहितः संयतः सन् यत्तत्सर्वं ब्रह्म, तद्वक्ष्यमाणैर्गुणैरुपासीत । कथमुपासीत । क्रतुं कुर्वीत । क्रतुः निश्चयः अध्यवसायः एवमेव नान्यथेत्यविचलः प्रत्ययः, तं क्रतुं कुर्वीत उपासीतेत्यनेन व्यवहितेन संबन्धः । किं पुनः क्रतुकरणेन कर्तव्यं प्रयोजनं, कथं वा क्रतुः कर्तव्यः, क्रतुकरणं चाभिप्रेतार्थसिद्धिसाधनं कथं, इत्यस्यार्थस्य प्रतिपादनार्थं अथेत्यादिग्रन्थः । अथ खल्विति हेत्वर्थः । यस्मात्क्रतुमयः क्रतुप्रायः अध्यवसायात्मकः पुरुषः जीवः, यथाक्रतुः यादृशः क्रतुरस्य सोऽयं यथाक्रतुः यथाध्यवसायः यादृङ्निश्चयः अस्मिँल्लोके जीवन्निह पुरुषो भवति, तथा इतः अस्माद्देहात् प्रेत्य मृत्वा भवति । क्रत्वनुरूपफलात्मको भवतीत्यर्थः । एवं ह्येतच्छास्त्रतो दृष्टम्—'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्' (भ. गी. ८।६) इत्यादि । यत एवं व्यवस्था शास्त्रदृष्टा अतः स एवं जानन् क्रतुं कुर्वीत, यादृशं क्रतुं वक्ष्यामस्तम् । यत एवं शास्त्रप्रामाण्यादुपपद्यते क्रत्वनुरूपं फलं, अतः स कर्तव्यः क्रतुः । **शंकर.**

( २ ) नेदं वाक्यं ब्रह्मोपासनाविधिपरम् । किं तर्हि । शमविधिपरम् । यत्कारणं 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्याह । एतदुक्तं भवति—यस्मात्सर्वमिदं विकारजातं ब्रह्मैव तज्जत्वात्तल्लत्वात्तदनत्वाच्च, न च सर्वस्यैकात्मत्वे रागादयः संभवन्ति, तस्माच्छान्त उपासीतेति । उपासनं तु 'स क्रतुं कुर्वीत' इत्यनेन विधीयते । क्रतुः संकल्पः ध्यानमित्यर्थः ।

* **ब्रशंकर.** १।२।१

( ३ ) शाण्डिल्यविद्या प्रस्तूयते— सर्वं खल्विदमिति । जायते इति जं, लीयते इति लम् । जलशब्दौ डप्रत्ययान्तौ । अनिति जीवतीत्यन् । क्विबन्तो विजन्तो वाऽयं शब्दः । तस्य जलान् तज्जलान् । इतिर्हेत्वर्थः । सर्वशब्दः सर्वशरीरकपरः । इदमित्येतत् ब्रह्मणः सर्वस्य वा विशेषणम् ।

(१) छाउ. ३।१४।१; **ब्रशंकर.** १।१।१२, २५, १।२।१, २।१।९, २।३।६, ३।२।२१; **भास्कर.** १।२।१, ४।३।१४; **रामानुज.** १।१।१ (पृ. ६२, ६४, ११२, १२३), १।१।७, १।२।१, ७, १।३।१२, ४४, १।४।२३, २।१।१५ (पृ. ४४३), २।२।४२, २।३।१८, ३।३।३७, ५१, ३।४।२, ४।१।३, ४।३।१४, ४।४।४; **निंबार्क.** १।२।१, २।१।१४, ४।३।१४; **ब्रमध्व.** २।३।२९; **श्रीकंठ.** १।१।४ (पृ. १८७), १।२।१ (पृ. २९६, २९९, ३०७, ३१२), ३।२।३१, ३।३।४३, ५२; **श्रीकर.** १।१।१ ( पृ. २७ ), १।१।२ ( पृ. २९, ३०, ३१ ), १।१।३ ( पृ. ३७ ), १।१।४ ( पृ. ४७, ४८, ५० ), १।१।५ ( पृ. ५४ ), १।१।७, १।२।२ ( पृ. ९८ ), १।२।५, १।४।२२, २।१।३, ११, १४, २।२।४४, २।३।५, १६, ३।२।३१, ३६, ३।३।२५, ३७, ४३, ५१, ५२, ५३, ५६, ५९, ३।४।३, ४।१।३, ४, ४।३।१५, ४।४।४; **वल्लभ.** १।२।१, १।४।२४, ४।१।५, ६; **विज्ञान.** १।१।४ ( पृ. ११२ ), १।१।२८, १।२।१, २, ३।२।२७, ३।३।१०, ४।१।५, ४।४।२२; **बलदेव.** १।२।१, ३।२।३३, ३।३।५२, ५६, ४।३।१४, १५, ४।४।१२.

* यद्यपि पूर्वपक्षस्थमिदं भाष्यं, तथाऽपि सिद्धान्ते 'यद्यपि' इत्यादिना तदनुमतम् । भास्कर. ब्रशंकरवत् ।

अतश्च तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वात्मकं ब्रह्मेति शान्तः सन् उपासीतेत्यर्थः। अत्र तज्जत्वतल्लत्वे स्थूलचिदचिच्छरीरकब्रह्मगते, उपादानोपादेयभावस्याभिन्ननिष्ठत्वात्। तदनत्वरूपं तन्नियाम्यत्वं तु न ब्रह्मगतं, ब्रह्मणस्तदसंभवात्, अपि तु चिदचिन्मात्रगतमिति द्रष्टव्यम्। भगवता च भाष्यकृता — ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' इति सर्वोत्पत्तिस्थितिप्रलयकारणत्वेन सर्वस्याऽऽत्मतया अनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय— इति भाषितम्। व्यासार्यैश्च— ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य ' सर्वभूतात्मके तात जगन्नाथे जगन्मये। परमात्मनि गोविन्दे मित्रामित्रकथा कुतः॥ ' इत्युक्तरीत्या रागद्वेषादिरहितः सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः— इत्युक्तम्। वक्ष्यमाणगुणकं ब्रह्मेति वदतां व्यासार्याणामयमाशयः — सर्वं खल्विति वाक्योक्तसार्वात्म्यं तु नोपास्यगुणः, उत्पत्तिशिष्टसार्वात्म्यगुणावरुद्धे मनोमयत्वादिवक्ष्यमाणगुणविधानानुपपत्तिप्रसङ्गात्। न च उपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्याविवक्षा कथमभ्युपगम्यते इति वाच्यम्। ' सर्वं खल्विदं ब्रह्म तज्जलान् ' इत्यन्तस्य वाक्यस्य खलुशब्दकृतेन प्रसिद्धवन्निर्देशेनैकवाक्यत्वस्य निवारितत्वात्। न चोपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्याविवक्षया कथमभ्युपगम्यत इति वाच्यम्। सर्वं खल्विदं ब्रह्म तज्जलानित्यन्तस्य वाक्यस्य खलुशब्दकृतेन प्रसिद्धवन्निर्देशेनैकवाक्यत्वनिवारितत्वात्। न हि उपासीत खल्विति वचनव्यक्तिर्घटते। अतः सार्वात्म्यस्योपासनोत्पत्तिवाक्यश्रुतत्वाभावेन शान्त उपासीतेति वाक्ये उपास्याकाङ्क्षायां पूर्ववाक्यप्रतिपन्नस्य ब्रह्मरूपधर्मिमात्रस्यैवोपास्यतया अन्वयः, न तु सार्वात्म्यविशिष्टस्य। ततश्चोत्पत्तिशिष्टसार्वात्म्यानवरोधात् न वक्ष्यमाणमनोमयत्वादिगुणानन्वयशङ्का। सर्वात्मकं ब्रह्मोपासीतेति तदर्थनिर्देशकभाष्येऽपि सर्वात्मकत्वं न उपास्यगुणतया निर्दिष्टं, अपि तु उपास्यब्रह्मणः स्वरूपकथनमात्रपरमिति। तच्च सर्वमपि तैः कण्ठत एव वर्णितं च। विहितमुपासनं स्तौति — अथ खलु क्रतुमय इति। ' तं यथा यथोपासते तथैव भवति ' इति श्रुत्यन्तरात् इह लोके पुरुषो यथाक्रतुः यथोपासनः तथैव इतः प्रेत्य अमुष्मिँल्लोके भवति। ततो हेतोः पुरुषः क्रतुमयः क्रतुप्रधानः उपासनप्रधान इत्यर्थः। ततश्चोपासनस्यैव हिततमत्वात्सर्वथा अनुष्ठेयमित्यर्थः। एवं विहितं ब्रह्मोपासनं मनोमयत्वादिगुणान्तरविधानायानुवदति — स क्रतुमिति। उपासकः क्रतुं ब्रह्मण उपासनं कुर्वीतेत्यर्थः। रंग.

(४) न च ' सर्वं खल्विदं ब्रह्म ' इति पूर्ववाक्यनिर्दिष्टं ब्रह्म अत्रोपास्यतया संबन्धुं शक्यते। ' शान्त उपासीत ' इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात्। न च ' स क्रतुं कुर्वीत ' इत्युपासनस्य उपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म संबध्यते इति शक्यं वक्तुम्। स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात्।

अथवा ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ' इत्यत्रैव उपासनं विधीयते, सर्वात्मकं ब्रह्म शान्तः सन् उपासीतेति। ' स क्रतुं कुर्वीत ' इति तस्यैव गुणोपादानार्थोऽनुवादः। उपादेयाश्च गुणा मनोमयत्वादयः। अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः।

* रामानुज. १।२।१

(५) ' तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ' — ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूपं, अतोऽभेदव्यपदेशः। यथा सर्वगुणात्मकत्वात्सर्वात्मकत्वं ब्रह्मण उच्यते ' सर्वं खल्विदं ब्रह्म ' इति। भविष्यत्पर्वणि च — ' भिन्ना जीवाः परो भिन्नस्तथापि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः॥ ' इति। ब्रमध्व. २।३।२९

(६) ' सर्वत्र प्रसिद्धोपदेशात् ' — इदमाम्नायते — ' सर्वं खल्विदं ब्रह्म... स क्रतुं कुर्वीत। मनोमयः प्राणशरीरः ' इत्यादि। तत्र वाक्योपक्रमे सर्वं खल्विदं ब्रह्मेति सर्वस्य ब्रह्मत्वं प्रतिज्ञाय, तज्जलानिति सर्वविशेषणं हेतुत्वेनोक्त्वा, तत्त्वेनोपासनमुक्तम्। न चायं शमविधिः, वाक्यार्थे लक्षणाप्रसङ्गात्, कारणत्वेन सामान्यत एव सिद्धत्वाच्च। अतः सर्वजगतो ब्रह्मत्वेनोपासनमुक्तम्। इदमेव पुराणादिषु विराट्त्वेनोपासनम्। अतः परं अग्रिमवाक्यार्थे संदेहः क्रतुं

* तैउ. २।७ (पृ. ७२७) इत्यत्रापि द्रष्टव्यम्।

कुर्वीतेति । क्रतुर्धर्मः, वश इति यावत् । तस्य स्वरूपं मनोमयः प्राणशरीर इति । उपासनाप्रकरणत्वादुपासनैवैषा । तत्र मनोमय इति प्रमाणभूतो वेद उक्तः । प्राणशरीर इति कार्यकारणयोरभेदोपचारः । अग्रे सत्यसंकल्पादिधर्मवचनात् किमयं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्यः, उत ब्रह्मैवान्तर्यामी, यः पुराणेषु सूक्ष्म उक्तः ।

तत्र पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेनोपासनस्योक्तत्वात् जीवस्यापि ब्रह्मत्वेनोपासनमेव युक्तं, न त्वा-इत्यैव ब्रह्मवाक्यं भवितुमर्हति । 'विज्ञानं ब्रह्म चेद्वेद' इति शाखान्तरे स्पष्टत्वाच्च । तस्मात् कार्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्य इत्येवं प्राप्ते, उच्यते—

'सर्वत्र प्रसिद्धोपदेशात्' । अथ खल्वित्यादि ब्रह्मवाक्यमेव । कुतः । सर्वत्र प्रसिद्धोपदेशात् । कुर्वीतेत्युपदेशः, न तु उपासना । तत्र परमशान्तस्य, सर्वस्य जगतो ब्रह्मत्वेनोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो मननरूपः, न तु क्वचित् सिद्धस्य जीवस्योपासना । शाखान्तरे त्वग्रे आनन्दमयस्य वक्तव्यत्वात्तथा युक्तम् । न त्विह तथा । तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थः । १।२।१

ननु 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वम्' इत्यादिश्रुतयः सर्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति । सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वं, इति प्राप्ते उत्तरमाह—'ब्रह्मदृष्टिरुत्कर्षात्' । सर्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका, सर्वस्य वस्तुतो ब्रह्मात्मकत्वात् । सा च नोपदेशसाध्या, अतो नोपदिश्यते, किंतु अनूद्यते । सा त्वधिकारोत्कर्षात् स्वत एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तम् । एतदेवोक्तमनेन सूत्रेण । वल्लभ. ४।१।५

(७) 'सर्वत्र प्रसिद्धोपदेशात्' — न केवलमाकाशाद्यनुगतमेव ब्रह्म अविभागलक्षणाभेदेनाऽऽकाशादिरूपमेव मन्तव्यं, अपि तु सर्वत्रैव जीवपर्यन्तेष्वनुगतं ब्रह्म सर्वरूपं ज्ञेयम् । कुतः । प्रसिद्धोपदेशात् । 'सर्वं खल्विदं ब्रह्म तज्जलान्' 'तत्सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्' (तैउ. २।६) 'रूपंरूपं प्रतिरूपो बभूव' (काउ. ५।१०) 'यः सर्वेस्मिंस्तिष्ठन् सर्वस्यान्तरो यस्य सर्वं शरीरम्' इत्यादि-रूपात्सकलस्मृतिप्रसिद्धात् श्रौतोपदेशादित्यर्थः । १।२।१

'सर्वं खल्विदं ब्रह्म ... न विचिकित्सास्तीति' (छाउ ३।१४।१-४) अस्यार्थः— सर्वं खल्विदं ब्रह्म, तज्जत्वात्तल्लत्वात् तदनत्वात् तज्जीवनाच्च । इतिहेतोः सर्वत्र रागद्वेषशून्यतया शान्तो भूत्वा प्रकरणात् वाक्यशेषे ब्रह्मशब्देन प्रत्यभिज्ञायमानत्वाच्च तदेव ब्रह्मोपासीत सदा चिन्तयेत्, यतोऽयं पुरुषो जीवसमूहः क्रतुमयः संकल्पमय एव । 'यं यं वापि स्मरन्भावम्' इत्यादिस्मृतेः । तत्राधिकारिणमाह — स क्रतुमिति । यस्य पुरुषस्याद्धा तत्त्वतः ब्रह्मनिश्चयोऽस्ति, न तु विचिकित्सा संशयः, स क्रतुं वक्ष्यमाणोपासनं कुर्वीत । तत्रोपासनाया आकारमाह — मनोमय इत्यादिना । इतः प्रेत्येतिवचनादत्राभिसंभवनं ब्रह्मलोकद्वारा बोध्यम् । तत्र संशयः — किमत्र मनोमयत्वादिना प्रसिद्धो मानसो ब्रह्मा गौणब्रह्म उपास्यः, अथ वा परमिति । तत्रायं निर्णयः — यद्यपि मनोमयब्रह्मशब्दावैकैकल्य, गौणतयोभयत्रोपपत्तेः, तथापि सत्यसंकल्पत्वासंकुचितसर्वकर्मत्वादयो गुणा ब्रह्मण्येवोपपद्यन्ते, अतः 'अणुरपि विशेषोऽध्यवसायकरः' इतिन्यायेन 'गौणमुख्ययोर्मध्ये मुख्ये संप्रतिपत्तिः' इतिन्यायेन च परं ब्रह्मैव सर्वं खल्वित्यत्रोक्तं, तदेव चोपास्यमिति । मनोमयत्वादयश्च धर्मा ब्रह्मण्यपि गौणाः, तस्य सर्वमयत्वप्रसिद्धेः । 'स म आत्मा' इत्युच्यमानस्य जीवात्मत्वस्योपपादनार्थं तु विशिष्य जीवोपकरणमयत्वमुक्तं, न तु मनआदीनां करणत्वादिकमत्र विवक्षितं, येन ब्रह्मणि तदनुपपत्तिः स्यात् । १।२।२

'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यादिवाक्योक्तायां सर्वप्रतीकालम्बनब्रह्मोपासनायाम् ... । विज्ञान. ३।३।१०

**मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥**

(१) छाउ. ३।१४।२; ब्रशंकर. १।१।२०, ३१, १।२।१, २६, १।३।२२, २।१।३०, २।३।२९, ३।२।११, २१, ३।३।५८, ५९, ३।४।५२, ४।३।१४; भास्कर.

( १ ) कथम् । मनोमयो मनःप्रायः। मनुते अनेनेति मनः, तत्स्ववृत्त्या विषयेषु प्रवृत्तं भवति, तेन मनसा तन्मयः । तथा प्रवृत्त इव तत्प्रायो निवृत्त इव च । अत एव प्राणशरीरः । प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितः, 'यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः' (कौउ. ३।३ ) इति श्रुतेः । सः शरीरं यस्य स प्राणशरीरः । 'मनोमयः प्राणशरीरनेता' (मुउ. २।२।७ ) इति च श्रुत्यन्तरात् । भारूपः, भा दीप्तिः चैतन्यलक्षणं रूपं यस्य स भारूपः । सत्यसंकल्पः, सत्याः अवितथाः संकल्पाः यस्य सोऽयं सत्यसंकल्पः । न यथा संसारिणः इव * अनैकान्तिकफलः संकल्प ईश्वरस्येत्यर्थः । अनृतेन मिथ्याफलत्वहेतुना प्रत्यूढत्वात्संकल्पस्य मिथ्याफलत्वं वक्ष्यति 'अनृतेन हि प्रत्यूढाः' (छाउ. ८।३।२ ) इति । आकाशात्मा, आकाश इव आत्मा स्वरूपं यस्य स आकाशात्मा। सर्वगतत्वं सूक्ष्मत्वं रूपादिहीनत्वं चाऽऽकाशतुल्यतेश्वरस्य । सर्वकर्मा, सर्वं विश्वं तेनेश्वरेण क्रियते इति जगत् सर्वं कर्म अस्य स सर्वकर्मा, 'स हि सर्वस्य कर्ता' इति श्रुतेः। सर्वकामः, सर्वे कामा दोषरहिता अस्येति सर्वकामः, 'धर्माविरुद्धो भूतेषु कामोऽस्मि' (भ. गी. ७।११) इति स्मृतेः । ननु कामोऽस्मीति वचनादिह बहुव्रीहिर्न संभवति सर्वकाम इति । न, कामस्य कर्तव्यत्वात् शब्दादिवत्पारार्थ्यप्रसङ्गाच्च देवस्य । तस्माद्यथेह सर्वकाम इति बहुव्रीहिस्तथा कामोऽस्मीतिस्मृत्यर्थो वाच्यः। सर्वगन्धः, सर्वे गन्धाः सुखकरा अस्य सोऽयं सर्वगन्धः, 'पुण्यो गन्धः पृथिव्याम्' (भ. गी. ७।९ ) इति स्मृतेः । तथा रसा अपि विज्ञेयाः । अपुण्यगन्धरसग्रहणस्य पाप्मसंबन्धनिमित्तत्वश्रवणात् , 'तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च । पाप्मना ह्येष विद्धः' (छाउ. १।२।२ ) इति श्रुतेः । न च पाप्मसंसर्ग ईश्वरस्य, अविद्यादिदोषस्यानुपपत्तेः । सर्वमिदं जगत् अभ्यात्तः अभिव्याप्तः । अततेर्व्याप्त्यर्थस्य कर्तरि निष्ठा । तथा अवाकी । उच्यते अनयेति वाक्, वागेव वाकः । यद्वा वचेर्घञन्तस्य करणे वाकः । स यस्य विद्यते स वाकी, न वाकी अवाकी । वाक्प्रतिषेधश्चात्रोपलक्षणार्थः । गन्धरसादिश्रवणादीश्वरस्य प्राप्तानि घ्राणादीनि करणानि गन्धादिग्रहणाय, अतो वाक्प्रतिषेधेन प्रतिषिध्यन्ते तानि, 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वेउ. ३।१९ ) इत्यादिमन्त्रवर्णात् । अनादरः असंभ्रमः । अप्राप्तप्राप्तौ हि संभ्रमः स्यादनाप्तकामस्य, न त्वाप्तकामत्वान्नित्यतृप्तस्येश्वरस्य संभ्रमोऽस्ति क्वचित् ।

शंकर.

( २ ) 'विकल्पोऽविशिष्टफलत्वात्' — स्थिते विद्याभेदे विचार्यते—किमासामिच्छया समुच्चयो विकल्पो वा स्यात् , अथवा विकल्प एव नियमेनेति । तत्र स्थितत्वात्तावद्विद्याभेदस्य न समुच्चयनियमे किंचित्कारणमस्ति । ननु भिन्नानामप्यग्निहोत्रदर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते । नैष दोषः । नित्यताश्रुतिर्हि तत्र कारणं, नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति । तस्मात् न समुच्चयनियमः । नापि विकल्पानियमः, विद्यान्तराधिकृतस्य विद्यान्तराप्रतिषेधात् । पारिशेष्याद्याथाकाम्यमापद्यते । ननु अविशिष्टफलत्वादासां विकल्पो न्याय्यः । तथा हि 'मनोमयः प्राणशरीरः' 'कं ब्रह्म खं ब्रह्म' (छाउ. ४।१०।५ ) 'सत्यकामः सत्यसंकल्पः' (छाउ. ८।१।५ ) इत्येवमाद्यास्तुल्यवदीश्वरप्राप्तिफला लक्ष्यन्ते । नैष दोषः । समानफलेष्वपि स्वर्गादिसाधनेषु कर्मसु याथाकाम्यदर्शनात् । तस्माद्याथाकाम्यप्राप्तौ उच्यते — विकल्प एवाऽऽसां भवितुमर्हति, न समुच्चयः । कस्मात् । अविशिष्टफलत्वात् । अविशिष्टं ह्यासां फलमुपास्यविषयसाक्षात्करणम् । एकेन चोपासनेन साक्षात्कृते उपास्ये विषये ईश्वरादौ द्वितीयमनर्थकम् । अपि च असंभवः, साक्षात्करणस्य समुच्चयपक्षे चित्तविक्षेपहेतुत्वात् । साक्षात्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः — 'यस्य स्याद्द्धा

---

* 'इवशब्दस्तत्थार्थः' इति टीका ।

१।२।२६, २।१।३०; रामानुज. १।२।१, २, ७, २।१।३०, ३।३।३४; निंबार्क. १।२।१, २; श्रीकंठ. १।२।१ ( पृ. २९५ ); श्रीकर. १।२।२; वल्लभ. १।२।१, ३।२।११, २३, ३।३।९, १०; विज्ञान. १।२।२, २६, ३।२।१७; बलदेव. ३।३।३४.

न विचिकित्साऽस्ति ' ( छाउ. ३।१४।४ ) इति, ' देवो भूत्वा देवानप्येति ' ( बृउ. ४।१।२ ) इति चैवमाद्याः । स्मृतयश्च — ' सदा तद्भावभावितः ' ( भ. गी. ८।६ ) इत्येवमाद्याः । तस्मादविशिष्टफलानां विद्यानामन्यतमामादाय तत्परः स्यात् यावदुपास्यविषयसाक्षात्करणेन तत्फलं प्राप्तमिति । ३।३।५९

सगुणासु तु विद्यासु ' मनोमयः प्राणशरीरः ' इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः कर्मफलवत् । तथा च लिङ्गदर्शनम्—' तं यथा यथोपासते तदेव भवति ' इति । नैवं निर्गुणायां विद्यायां, गुणाभावात् ।

* ब्रशांकर. ३।४।५२

( ३ ) गुणानेवाऽऽह— मनोमय इति । मनोमयः परिशुद्धमनोमात्रग्राह्यः, विवेकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतमनोमात्रग्राह्य इत्यर्थः । प्राणशरीरः, जगति सर्वेषां प्राणिनां धारकः प्राणो यस्य शरीरं आधेयं विधेयं शेषभूतं च स प्राणशरीरः, आधेयत्वविधेयत्वशेषत्वानामेव शरीरशब्दप्रवृत्तिनिमित्तत्वात् । भारूपः भास्वररूपः । ' आदित्यवर्णं तमसः परस्तात् ' ( श्वेउ. ३।८ ) ' यदा पश्यः पश्यते रुक्मवर्णम् ' ( मुउ. ३।१।३ ) इत्यादिवाक्यप्रतिपन्नाप्राकृतस्वासाधारणनिरतिशयकल्याणगुणगणनिरतिशयदीप्तियुक्तविग्रहशालीत्यर्थः । सत्यसंकल्पः अप्रतिहतसंकल्पः । आकाशात्मा आकाशवत्सूक्ष्मस्वच्छस्वरूपः, सकलेतरकारणभूताव्याकृताकाशस्याऽऽत्मभूत इत्याकाशात्मा, स्वयं च प्रकाशते अन्यांश्च प्रकाशयतीति वा आकाशात्मा । क्रियते इति कर्म, सर्वं जगद्यस्य कर्म असौ सर्वकर्मा, सर्वा वा क्रिया यस्य आराधनमसौ सर्वकर्मा । काम्यन्ते इति कामाः भोग्यभोगोपकरणादयः, ते परिशुद्धास्तस्य सन्तीत्यर्थः । ' अशब्दमस्पर्शम् ' इत्यादिना प्राकृतगन्धरसादिनिषेधात् अप्राकृतस्वासाधारणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः । उक्तं सर्वमिदं कल्याणगुणजातं अभ्यात्तः स्वीकृतवान् । मुक्ता ब्राह्मणा इतिवत्कर्तरि क्तप्रत्ययः अर्शआद्यजन्तो वा । वाकः उक्तिः, साऽस्य नास्तीत्यवाकी । कुत इत्यत्राऽऽह — अनादरः अवाप्तसमस्तकामत्वेनाऽऽदर्तव्याभावादादररहितः । अत एव अवाकी, परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः ।

रंग.

**एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा । एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥**

( १ ) एष यथोक्तगुणो मे मम आत्मा अन्तर्हृदये हृदयपुण्डरीकस्यान्तः मध्ये अणीयान् अणुतरः व्रीहेर्वा यवाद्वेत्यादि अत्यन्तसूक्ष्मत्वप्रदर्शनार्थम् । श्यामाकाद्वा श्यामाकतण्डुलाद्वेति परिच्छिन्नपरिमाणादणीयानित्युक्ते अणुपरिमाणत्वं प्राप्तमाशङ्क्य, अतस्तत्प्रतिषेधायाऽऽरभते—एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या इत्यादिना । ज्यायःपरिमाणाच्च ज्यायस्त्वं दर्शयन् अनन्तपरिमाणत्वं दर्शयति * । शांकर.

---

* प्रउ. ५।२ इत्यत्रापि द्रष्टव्यम् । वल्लभभाष्यं छाउ. ३।१४।१ ( पृ. ८०८ ) इत्यत्र, तैउ. २।७ ( पृ. ७२८ ) इत्यत्र च द्रष्टव्यम् । विज्ञानभाष्यं छाउ. ३।१४।१ ( पृ. ८०९ ) इत्यत्र द्रष्टव्यम् ।

* अत्र ' ज्यायःपरिमाणाच्च.... दर्शयति ' इत्यवतरणं, 'मनोमय...इत्यनेन ' इति प्रतीकं इति सर्वेषु पुस्तकेषु ग्रन्थव्यवस्था दृश्यते । अत एव सर्वमिदं तृतीयवाक्ये मुद्रितम् । भाषान्तरकारैरपि एतामेव ग्रन्थव्यवस्थामाश्रित्य भाषान्तरं विहितम् । अत्रत्या 'मनोमय इत्यादिना ' इति प्रतिशिरस्का ' पुनरुक्तेरुपयोगमाह ' इत्यवतरणात्मिका टीकाऽपि तृतीयवाक्ये एव मुद्रिताऽस्ति । तदिदं सर्वं संशोधनानवधानमूलमिति ध्यानगोचरीकुर्मः । अवतरणवाक्यार्थस्य तृतीयवाक्योत्तरार्धमात्रानुगामिनः प्रतीकसंगृहीततृतीयवाक्यपूर्वार्ध-

(१) छाउ. ३।१४।३; ब्रशंकर. १।१।२२, १।२।१, ७, २।३।२९, ३।२।३७, ३।३।२३; भास्कर. १।२।१, ७, २।३।२९, ३।२।३७, ३।३।२३; रामानुज. १।२।५, ७, १।३।१३, ३।३।२३; निंबार्क. १।२।५, ७, ४।१।३; ब्रमध्व. १।३।२१; श्रीकर. १।१।२३; वल्लभ. ३।२।३७; विज्ञान. १।२।२, ७, २४.

( २ ) मदीये हृदये व्रीह्याद्यपेक्षया अणुत्वेन अल्पत्वेनैव परमात्मा उपासनार्थमवस्थित इत्यर्थः। तथाऽनुसंधानं कर्तव्यमिति भावः। अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारमनुसंधेयं निर्दिशति—एष म आत्मेति। अन्तर्हृदये विद्यमानोऽपि स्वरूपतो निरतिशयपरिमाण इत्यर्थः।

रंग.

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदये। एतद्ब्रह्म। एतमितः प्रेत्याभिसंभविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्ति। इति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः॥**

( १ ) 'मनोमयः' इत्यादिना 'ज्यायानेभ्यो लोकेभ्यः' इत्यन्तेन यथोक्तगुणलक्षण ईश्वरो ध्येयः, न तु तद्गुणविशिष्ट एव, यथा राजपुरुषमानय चित्रगुं वेत्युक्ते न विशेषणस्याप्यानयने व्याप्रियते, तद्वदिहापि प्राप्तं, अतस्तन्निवृत्त्यर्थं सर्वकर्मेत्यादि पुनर्वचनम्। तस्मान्मनोमयत्वादिगुणविशिष्ट एवेश्वरो ध्येयः। अत एव षष्ठसप्तमयोरिव 'तत्त्वमसि' 'आत्मैवेदं सर्वम्' इति, नेह स्वाराज्येऽभिषिञ्चति, एष म आत्मा, एतद्ब्रह्म, एतमितः प्रेत्याभिसंभवितास्मीति लिङ्गात्, न त्वात्मशब्देन प्रत्यगात्मैवोच्यते, ममेति षष्ठयाः संबन्धार्थप्रत्यायकत्वात्, एतमभिसंभवितास्मीति च कर्मकर्तृत्वनिर्देशात्।

---

सहितद्वितीयवाक्येऽननुगमात् 'सर्वकर्मा' इत्यादेश्चतुर्थवाक्यावयवस्य पुनरुक्तत्वेन पौनरुक्त्योपयोगकथनस्य तृतीयवाक्यार्थबोधे अनुपयोगाच्च। किंच 'मनोमय .....इत्यन्तेन' इत्येतावन्मात्राद्वाक्यात्पुनरुक्त्युपयोगो नावगम्यते। न च भाष्येण अन्यथाऽवतरितस्य टीकया अन्यथाऽवतरणमौचित्यमावभवति। तस्मादेतादृश्येवात्र व्यवस्था आस्थेया—'दर्शयति' इत्यन्तमेव तृतीयवाक्यव्याख्यानं, 'मनोमयः' इत्यादेश्च चतुर्थमन्त्रव्याख्यानेन 'यथोक्तगुणलक्षणः' इत्यादिना एकवाक्यतेति।

(१) **छाउ.** ३।१४।४; **ब्रशंकर.** १।२।१, ४, ३।३।५९; **भास्कर.** १।२।४; **रामानुज.** १।२।१, ४, ३।३।५२; **निंबार्क.** १।२।४; **श्रीकंठ.** ३।२।३१, ३।३।३४; **श्रीकर.** ३।२।१३, ३१; **वल्लभ.** १।२।४, २।१।३०; **विज्ञान.** १।२।२, ४.

यथाक्रतुरूपस्यात्मनः प्रतिपत्ताऽस्मीति यस्यैवंविदः स्यात् भवेत् अद्धा सत्यं एवं स्यां अहं प्रेत्य, एवं न स्यामिति, न च विचिकित्साऽस्तीत्येतस्मिन्नर्थे क्रतुफलसंबन्धे स तथैवेश्वरभावं प्रतिपद्यते विद्वान् इत्येतदाह स उक्तवान्किल शाण्डिल्यो नाम ऋषिः। द्विरभ्यास आदरार्थः।

शंकर.

( २ ) सर्वकर्मेत्यादि। उक्तोऽर्थः। एवंभूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषया अस्मद्धृदये संनिहितमित्यनुसंधातव्यमित्याह — एष म आत्मेति। यथोपासनमीदृशं परमात्मानं 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छाउ. ८।१२।३ ) इत्युक्तरीत्या देशविशेषविशिष्टं प्राप्ताऽस्मीति निश्चयरूपमनुसंधानं कर्तव्यमित्याह—एतमित इति। अत्र इतीत्यस्य 'स क्रतुं कुर्वीत' इत्यनेनान्वयः। 'मनोमयः प्राणशरीरः' इत्यारभ्य 'एतमितः प्रेत्याभिसंभविताऽस्मि' इत्येतत्पर्यन्तोऽनुसंधानप्रकारः। अत्र च इतिशब्दनिर्दिष्टो मनोमयत्वादिगुणगतः क्रमविशेष एक एव विधीयते। मनोमयत्वाद्युपास्यगुणानां त्वाक्षेपतो विधानं पृष्ठगतसर्वताविधानादिव पृष्ठानाम्। ततश्च प्राप्तानुवादेन मनोमयत्वाद्यनेकगुणविधाने वाक्यभेद इति शङ्का प्रत्युक्ता। यद्वा, विधेयानां बहुत्वेऽपि क्रमरूपविधेयतावच्छेदकैक्यान्न वाक्यभेदः, 'यदग्नये च प्रजापतये च' इति वाक्ये देवतात्वरूपविधेयतावच्छेदकैक्येन वाक्यभेदस्य तान्त्रिकैः परिहृतत्वात्। केचित्तु प्राप्तोपासनानुवादेनाभ्युदयेष्टिवाक्यवत्प्रयोगविधित्वसंभवान्न वाक्यभेद इति वदन्ति। एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहरति—यस्य स्यादद्धेति। अत्र इतिशब्दोऽध्याहर्तव्यः। अभिसंभवितास्मीति इतिशब्दस्य क्रमवाचकस्यैव काकाक्षिन्यायेन वा अन्वयः। उक्तप्रकारेण यस्योपासकस्य अद्धा निश्चयोऽस्ति, तस्य प्राप्तौ संशयो नास्ति। उक्तार्थस्य श्रद्धेयत्वसिद्धौ वक्तुराप्तिं दर्शयति—इति ह स्माऽऽहेति। द्विरुक्तिर्विद्यासमाप्त्यर्था।

रंग.

जगत्कोशोपासनं तज्जपश्च पुत्रस्य दीर्घायुष्ट्वाय

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति। दिशो ह्यस्य स्रक्तयः। द्यौरस्योत्तरं बिलम्। स एष कोशो वसुधानः। तस्मिन्विश्वमिद्ँ श्रितम्॥**

अस्य कुले वीरो जायते इत्युक्तम्। न वीरजन्ममात्रं पितुस्त्राणाय, 'तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः' (बृउ. १।५।१७) इति श्रुत्यन्तरात्। अतस्तद्दीर्घायुष्ट्वं कथं स्यादित्येवमर्थं कोशविज्ञानारम्भः। अभ्यर्हितविज्ञानव्यासङ्गादनन्तरमेव नोक्तं, तदिदानीमेवाऽऽरभ्यते। अन्तरिक्षं उदरं अन्तः सुषिरं यस्य सोऽयमन्तरिक्षोदरः कोशः कोश इवानेकधर्मसादृश्यात्कोशः। स च भूमिबुध्नः भूमिर्बुध्नो मूलं यस्य स भूमिबुध्नः न जीर्यति न विनश्यति, त्रैलोक्यात्मकत्वात्। सहस्रयुगकालावस्थायी हि सः। दिशो ह्यस्य सर्वाः स्रक्तयः कोणाः। द्यौरस्य कोशस्योत्तरं ऊर्ध्वं बिलम्। स एष यथोक्तगुणः कोशो वसुधानः वसु धीयतेऽस्मिन्प्राणिनां कर्मफलाख्यं अतो वसुधानः। तस्मिन्नन्तः विश्वं समस्तं प्राणिकर्मफलं सह तत्साधनैः इदं यत् गृह्यते प्रत्यक्षादिप्रमाणैः, श्रितं आश्रितं स्थितमित्यर्थः। * शंकर.

**तस्य प्राची दिग्जुहूर्नाम। सहमाना नाम दक्षिणा। राज्ञी नाम प्रतीची। सुभूता नामोदीची। तासां वायुर्वत्सः। स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोद्ँ रोदिति। सोऽहमेतमेवं वायुं दिशां वत्सं वेद। मा पुत्ररोद्ँ रुदम्॥**

(१) तस्यास्य प्राची दिक् प्राग्गतो भागः जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिणः प्राङ्मुखाः सन्त इति जुहूर्नाम। सहमाना नाम सहन्तेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना नाम दक्षिणा दिक्। तथा राज्ञी नाम प्रतीची पश्चिमा दिक् राज्ञी राजा वरुणेनाधिष्ठिता संध्यारागयोगाद्वा। सुभूतानाम भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात्सुभूता नाम उदीची। तासां दिशां वायुर्वत्सः, दिग्जत्वाद्वायोः, पुरोवात इत्यादिदर्शनात्। स यः कश्चित्पुत्रदीर्घजीवितार्थी एवं यथोक्तगुणं वायुं दिशां वत्सं अमृतं वेद, स न पुत्ररोदं पुत्रनिमित्तं रोदनं न रोदिति, पुत्रो न म्रियत इत्यर्थः। यत एवं विशिष्टं कोशदिग्वत्सविषयं विज्ञानं, अतः सोऽहं पुत्रजीवितार्थी एवमेतं वायुं दिशां वत्सं वेद जाने। अतः पुत्ररोदं मा रुदं पुत्रमरणनिमित्तम्। पुत्ररोदो मम मा भूदित्यर्थः। शंकर.

(२) 'काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्' — अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम्—यासु पुनः काम्यासु विद्यासु 'स य एतमेवं वायुं दिशां......' 'स यो नाम ब्रह्मेत्युपास्ते... ..' (छाउ. ७।१।५) इति चैवमाद्यासु क्रियावददृष्टेनाऽऽत्मना आत्मीयं फलं साधयन्तीषु साक्षात्करणापेक्षा नास्ति, ता यथाकामं समुच्चीयेरन्, न वा समुच्चीयेरन्, पूर्वहेत्वभावात् पूर्वस्य अविशिष्टफलत्वादित्यस्य विकल्पहेतोरभावात्। * ब्रशंकर. ३।३।६०

(३) पुत्ररोदं रोदितीति। पाकं पचतीतिवदयं निर्देशः। रोदमिति णमुलन्तो वा। + रंग.

**अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना। प्राणं प्रपद्येऽमुनाऽमुनाऽमुना। भूः प्रपद्येऽमुनाऽमुनाऽमुना। भुवः प्रपद्येऽमुनाऽमुनाऽमुना। स्वः प्रपद्येऽमुनाऽमुनाऽमुना॥**

अरिष्टं अविनाशिनं कोशं यथोक्तं प्रपद्ये प्रपन्नोऽस्मि पुत्रायुषे। अमुनाऽमुनाऽमुनेति त्रिर्नाम गृह्णाति पुत्रस्य। तथा प्राणं प्रपद्येऽमुनाऽमुनाऽमुना, भूः प्रपद्येऽमुनाऽमुनाऽमुना, स्वः प्रपद्येऽमुनाऽमुनाऽमुना। सर्वत्र प्रपद्ये इति त्रिर्नाम गृह्णाति पुनः पुनः। ‡ शंकर.

**स यदवोचं प्राणं प्रपद्य इति। प्राणो वा इद्ँ सर्वं भूतं यदिदं किंच। तमेव तत्प्रापत्सि॥**

* रंग शंकरवत्।

(१) छाउ. ३।१५।१.

(२) छाउ. ३।१५।२; ब्रशंकर. ३।३।६०; भास्कर. ३।३।६० पुत्ररोद्ँ (पुत्ररोदनं).

* भास्कर. ब्रशंकरवत्।

+ शेषं शंकरेण गतार्थम्।

‡ रंग. शंकरवत्।

(१) छाउ. ३।१५।३; ब्रशंकर. ३।३।२५.

(२) छाउ. ३।१५।४.

स यदवोचं प्राणं प्रपद्ये इति व्याख्यानार्थमुपन्यासः। प्राणो वा इदं सर्वं भूतं यदिदं जगत्। 'यथा वा अरा नाभौ' (छाउ. ७।१५।१) इति वक्ष्यति। अतस्तमेव सर्वं तत् तेन प्राणप्रतिपादनेन प्रापत्सि प्रपन्नोऽभूवम्।

* शंकर.

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम्॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम्॥

अथ यदवोच९ं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम्॥

(१) तथा भूः प्रपद्ये इति त्रींल्लोकान्भूरादीन्प्रपद्ये इति तदवोचम्। अथ यदवोचं भुवः प्रपद्ये इति, अग्न्यादीन्प्रपद्ये इति तदवोचम्। अथ यदवोचं स्वः प्रपद्ये इति, ऋग्वेदादीन् प्रपद्ये इत्येव तदवोचमिति। उपरिष्टात् मन्त्रान् जपेत्ततः पूर्वोक्तमजरं कोशं सदिग्वत्सं यथावद्ध्यात्वा। द्विर्वचनमादरार्थम्।

शंकर.

(२) भूः प्रपद्ये इत्यस्य त्रीन् लोकान्प्रपद्ये इत्यर्थः। द्विरुक्तिर्विद्यासमाप्त्यर्था।

रंग.

पुरुषरूपयज्ञोपासनं आत्मनि दीर्घजीवनाय

पुरुषो वाव यज्ञः। तस्य यानि चतुर्वि९ंशतिवर्षाणि तत्प्रातःसवनम्। चतुर्वि९ंशत्यक्षरा गायत्री। गायत्रं प्रातःसवनम्। तदस्य वसवोऽन्वायत्ताः। प्राणा वाव वसवः। एते हीद९ं सर्वं वासयन्ति॥

(१) पुत्रायुष उपासनमुक्तं जपश्च। अथेदानीमात्मनो दीर्घजीवनायेदमुपासनं जपं च विदधदाह। जीवन्हि स्वयं पुत्रादिफलेन युज्यते, नान्यथा, इत्यत आत्मानं यज्ञं संपादयति पुरुषः—पुरुषः जीवनविशिष्ट कार्यकरणसंघातो यथा प्रसिद्ध एव। वावशब्दोऽवधारणार्थः। पुरुष एव यज्ञ इत्यर्थः। तथा हि सामान्यैः संपादयति यज्ञत्वम्। कथम्। तस्य पुरुषस्य यानि चतुर्विंशतिवर्षाण्यायुषः तत्प्रातःसवनं पुरुषाख्यस्य यज्ञस्य। केन सामान्येनेत्याह—चतुर्विंशत्यक्षरा गायत्री छन्दः। गायत्रं गायत्रीछन्दस्कं हि विधियज्ञस्य प्रातःसवनम्। अतः प्रातःसवनसंपन्नेन चतु[illegible]तिवर्षायुषा युक्तः पुरुषः। अतो विधियज्ञसादृश्या[illegible] उत्तरयोरप्यायुषोः सवनद्वयसंपत्तिस्त्रिष्टुब्ज[illegible]संख्यासामान्यतो वाच्या। किंच तत् अस्य पुरुषयज्ञस्य प्रातःसवनं विधियज्ञस्येव वसवो देवा अन्वायत्ताः अनुगताः। सवनदेवतात्वेन स्वामिन इत्यर्थः। पुरुषयज्ञेऽपि विधियज्ञ इवाग्न्यादयो वसवो देवाः प्राप्ता इत्यतो विशिनष्टि—प्राणा वाव वसवः वागादयो वायवश्च। ते हि यस्मादिदं पुरुषादिप्राणिजातमेते वासयन्ति। प्राणेषु हि देहे वसत्सु सर्वमिदं वसति, नान्यथा। इत्यतो वसनाद्वासनाच्च वसवः।

* शंकर.

(२) 'पुरुषविद्यायामिव चेतरेषामनाम्नानात्'—अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या। तत्र पुरुषो यज्ञः कल्पितः। तदीयमायुस्त्रेधा विभज्य सवनत्रयं कल्पितम्। अशिशिषादीनि च दीक्षादिभावेन कल्पितानि। अन्ये च धर्मास्तत्र समधिगता आशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कंचित्पुरुषयज्ञं कल्पयन्ति 'तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी' (नाउ. २५।१) इत्येतेनानुवाकेन। तत्र संशयः—किमितरत्रोक्ताः पुरुषयज्ञस्य धर्मास्तैत्तिरीयकेषूपसंहर्तव्याः, किंवा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषादुपसंहारप्राप्तौ आचक्ष्महे नोपसंहर्तव्या इति। कस्मात्। तद्रूपप्रत्यभिज्ञानाभावात्। तदाहाऽऽचार्यः—पुरुषविद्यायामिवेति। यथा एकेषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामाम्नानं, नैवमितरेषां तैत्तिरीयाणामाम्नानमस्ति। तेषां हीतरविलक्षणमेव यज्ञसंपादनं दृश्यते,

---

* रंग. शंकरवत्।

(१) छाउ. ३।१५।५, ६, ७.

(२) छाउ. ३।१६।१; ब्रशंकर. ३।३।२४; रामानुज. ३।३।२४; निंबार्क. ३।३।२४; श्रीकंठ. ३।३।२४; श्रीकर. ३।३।२४.

(५)

* रंग शंकरवत्

पत्नीयजमानवेदिवेद्यबर्हिर्यूपाद्यवयवनिगाद्यनुक्रमणात् । यदपि सवनसंपादनं, तदपि इतरविलक्षणमेव 'यन्प्रातर्मध्यंदिन॰ सायं च तानि सवनानि' ( नाउ. २५।१ ) इति । यदपि किंचित् मरणावभृथत्वादिसामान्यं, तदप्यल्पीयस्त्वात् भूयसा वैलक्षण्येनाभिभूयमानं न प्रत्यभिज्ञापनक्षमम् । न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते । विदुषो यज्ञस्येति हि न चैते समानाधिकरणे षष्ठ्यौ विद्वानेव यो यज्ञस्तस्येति । न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति । व्यधिकरणे त्वेते षष्ठ्यौ विदुषो यो यज्ञस्तस्येति । भवति हि पुरुषस्य मुख्यो यज्ञसंबन्धः । सत्यां च गतौ मुख्य एवार्थ आश्रयितव्यः, न भाक्तः । आत्मा यजमान इति च यजमानत्वं पुरुषस्य निर्ब्रुवन् वैयधिकरण्येनैवास्य यज्ञसंबन्धं दर्शयति । अपि च तस्यैवं विदुष इति सिद्धवदनुवादश्रुतौ सत्यां पुरुषस्य यज्ञभावं आत्मादीनां च यजमानादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात् । अपि च ससंन्यासामात्मविद्यां पुरस्तादुपदिश्य अनन्तरं तस्यैवं विदुष इत्याद्यनुक्रमणं पश्यन्तः पूर्वशेष एवैष आम्नायः, न स्वतन्त्र इति प्रतीमः । तथा च एकमेव फलमुभयोरप्यनुवाकयोरुपलभामहे 'ब्रह्मणो महिमानमाप्नोति' ( नाउ. २५।१ ) इति । इतरेषां त्वनन्यशेषः पुरुषविद्याम्नायः । आयुरभिवृद्धिफलो ह्यसौ, 'प्र ह षोडशं वर्षशतं जीवति य एवं वेद' ( छाउ. ३।१६।७ ) इति समभिव्याहारात् । तस्मात् शाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनां अप्राप्तिस्तैत्तिरीयके ।

* ब्रशंकर. ३।३।२४

[1]तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात् । प्राणा वसव इदं मे प्रातःसवनं माध्यंदिन॰ सवनमनुसंतनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एत्यगदो ह भवति ॥

( १ ) तं चेद्यज्ञसंपादिनमेतस्मिन्प्रातःसवनसंपन्ने वयसि किंचित् व्याध्यादि मरणशङ्काकारणमुपतपेत् दुःखमुत्पादयेत्, स तदा यज्ञसंपादी पुरुष आत्मानं यज्ञं मन्यमानो ब्रूयात् जपेदित्यर्थः, इमं मन्त्रं—हे प्राणा वसवः, इदं मे प्रातःसवनं मम यज्ञस्य वर्तते, तत् माध्यंदिन सवनमनुसंतनुतेति, माध्यंदिनेन सवनेनाऽऽयुषा सहितमेकीभूतं संततं कुरुतेत्यर्थः । माऽहं यज्ञो युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये विलोप्सीय विलुप्येय विच्छिद्येयेत्यर्थः । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः । स तेन जपेन ध्यानेन च ततः तस्मादुपतापात् उदेति उद्गच्छति । उद्गम्य विमुक्तः सन् अगदो ह अनुपतापो भवत्येव ।

शंकर.

( २ ) छान्दसो माङि लुङभावः । मा शब्दो वा ।

* रंग.

अथ यानि चतुश्चत्वारि॰शद्वर्षाणि तन्माध्यंदिन॰ सवनम् । चतुश्चत्वारि॰शदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यंदिन॰ सवनम् । तदस्य रुद्रा अन्वायत्ताः । प्राणा वाव रुद्राः । एते हीद॰ सर्व॰ रोदयन्ति ॥

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात् । प्राणा रुद्रा इदं मे माध्यंदिन॰ सवनं तृतीयसवनमनुसंतनुतेति माऽहं प्राणाना॰ रुद्राणां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एत्यगदो ह भवति ॥

अथ यान्यष्टाचत्वारि॰शद्वर्षाणि तत्तृतीयसवनम् । अष्टाचत्वारि॰शदक्षरा जगती । जागतं तृतीयसवनम् । तदस्याऽऽदित्या अन्वायत्ताः । प्राणा वावाऽऽदित्याः । एते हीद॰ सर्वमाददते ॥

तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात् । प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेति । उद्धैव तत एत्यगदो हैव भवति ॥

अथ यानि चतुश्चत्वारिंशद्वर्षाणीत्यादि समानम् । रुदन्ति रोदयन्तीति प्राणा रुद्राः । क्रूरा हि ते मध्यमे वयस्यतो रुद्राः । तथा आदित्याः प्राणाः । ते हीदं शब्दादिजातमाददते अत आदित्याः ।

* रामानुजनिंबार्कश्रीकंठश्रीकराः ब्रशंकरवत् ।

(१) छाउ. ३।१६।२.

* शेषं शंकरवत् ।

(१) छाउ. ३।१६।३—६.

तृतीयसवनमायुः षोडशोत्तरवर्षशतं समापयत अनुसंतनुत, यज्ञं समापयतेत्यर्थः। समानमन्यत्।

* शंकर.

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः। स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति। स ह षोडशं वर्षशतमजीवत्। प्र ह षोडशं वर्षशतं जीवति य एवं वेद॥**

(१) निश्चिता हि विद्या फलायेत्येतद्दर्शयन्नुदाहरति—एतत् यज्ञदर्शनं ह स्म वै किल तद्विद्वानाह महिदासो नामतः, इतराया अपत्यमैतरेयः। किं कस्मात् मे मम एतदुपतपनमुपतपसि स त्वं हे रोग, योऽहं यज्ञोऽनेन त्वत्कृतेनोपतापेन न प्रेष्यामि न मरिष्यामि, अतो वृथा तव श्रम इत्यर्थः। इत्येवमाह स्मेति पूर्वेण संबन्धः। स एवंनिश्चयः सन् षोडशं वर्षशतमजीवत्। अन्योऽप्येवंनिश्चयः षोडशं वर्षशतं प्रजीवति य एवं यथोक्तं यज्ञसंपादनं वेद जानाति स इत्यर्थः। शंकर.

(२) हे रोग, स त्वं मे मां किं कस्मात् उपतपसि, योऽहं त्वत्कृतेनोपतापेन न प्रैष्यामि न मरिष्यामि, अतस्तव श्रमो वृथैव इत्येतत् पुरुषविज्ञानस्वरूपं विद्वान् इतरपुत्र ऐतरेयः महिदासो नाम आह स्मेत्यर्थः। शुभ्रादित्वात् इतरशब्दादपत्यार्थे ठक्। स महिदासः षोडशं षोडशाधिकं वर्षशतमजीवदित्यर्थः। 'तदस्मिन्नधिकमिति दशान्ताड्डः' (पा. सू. ५।२।४५) इति षोडशशब्दात् डप्रत्ययः। अतो विद्यायां फलप्रापकत्वनिश्चयवतोऽवश्यं फलप्राप्तिर्भवतीति भावः। अन्योऽप्येवंवित् षोडशं वर्षशतं जीवतीत्याह—प्र ह षोडशमिति। स्पष्टोऽर्थः। रंग.

**स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः॥**

स यदशिशिषतीत्यादियज्ञसामान्यनिर्देशः पुरुषस्य पूर्वेणैव संबध्यते। यदशिशिषति अशितुमिच्छति, तथा पिपासति पातुमिच्छति, यन्न रमते इष्टाद्यप्राप्तिनिमित्तं यदेवंजातीयकं दुःखमनुभवति, ता अस्य दीक्षाः दुःखसामान्याद्विधियज्ञस्येव।

* शंकर.

**अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति॥**

अथ यदश्नाति यत्पिबति यद्रमते रतिं चानुभवति इष्टादिसंयोगात्, तदुपसदैः समानतामेति। उपसदां च पयोव्रतत्वनिमित्तं सुखमस्ति, अल्पभोजनीयानि चाहान्यासन्नानीति प्रश्वासः, अतोऽशनादीनामुपसदां च सामान्यम्।

* शंकर.

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति॥**

अथ यद्धसति यज्जक्षति भक्षयति यन्मैथुनं चरति, स्तुतशस्त्रैरेव तत्समानतामेति, शब्दवत्त्वसामान्यात्।

* शंकर.

**अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः॥**

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति, ता अस्य दक्षिणाः, धर्मपुष्टिकरत्वसामान्यात्।

* शंकर.

**तस्मादाहुः सोष्यत्यसोष्टेति। पुनरुत्पादनमेवास्य तत्। मरणमेवावभृथः॥**

यस्माच्च यज्ञः पुरुषस्तस्मात्तं जनयिष्यति माता यदा, तदाऽऽहुरन्ये सोष्यतीति तस्य मातरं, यदा च प्रसूता भवति तदा असोष्ट पूर्णिकेति (?), विधियज्ञे इव सोष्यति सोमं देवदत्तः, असोष्ट सोमं यज्ञदत्त इति, अतः शब्दसामान्याद्वा पुरुषो यज्ञः। पुनरुत्पादनमेवास्य तत्पुरुषाख्यस्य यज्ञस्य यत्सोष्यत्यसोष्टेतिशब्दसंबन्धित्वं विधियज्ञस्येव। किंच तन्मरणमेवास्य पुरुषयज्ञस्यावभृथः, समाप्तिसामान्यात्। * शंकर.

* रंग. शंकरेण गतार्थम्।

(१) छान्दो. ३।१६।७; भसंकर. ३।३।२४; रंग. प्रेष्या (प्रैष्या); रामानुज. ३।३।२४ प्र ह (प्राह); श्रीकंठ. ३।३।२४; श्रीकर. ३।३।२४.

(२) छान्दो. ३।१७।१.

* रंग. शंकरवत्।

(१) छान्दो. ३।१७।२.

(२) छान्दो. ३।१७।३.

(३) छान्दो. ३।१७।४.

(४) छान्दो. ३।१७।५.

पुरुषयज्ञविदो मरणसमये जपः

**तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच । अपिपास एव स बभूव । सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति । तत्रैते द्वे ऋचौ भवतः ॥**

( १ ) तद्धैतद्यज्ञदर्शनं घोरो नामतः आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच । तदेतत्त्रयमित्यादिव्यवहितेन संबन्धः । स चैतद्दर्शनं श्रुत्वा अपिपास एवान्याभ्यो विद्याभ्यो बभूव । इत्थं च विशिष्टेयं विद्या यत्कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रति तृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति । घोर आङ्गिरसः कृष्णायोक्त्वेमां विद्यां किमुवाचेति तदाह—सः एवं यथोक्तयज्ञवित् अन्तवेलायां मरणकाले एतन्मन्त्रत्रयं प्रतिपद्येत जपेदित्यर्थः । किं तत्, अक्षितं अक्षीणं अक्षतं वाऽसीत्येकं यजुः । सामर्थ्यादादित्यस्थं प्राणं चैकीकृत्याऽऽह । तथा तमेवाऽऽह—अच्युतं स्वरूपादप्रच्युतं असीति द्वितीयं यजुः । प्राणसंशितं प्राणश्च स संशितं सम्यक्तनूकृतं च सूक्ष्मं तत्त्वं असीति तृतीयं यजुः । तत्रैतस्मिन्नर्थे विद्यास्तुतिपरे द्वे ऋचौ मन्त्रौ भवतः, न जपार्थे, त्रयं प्रतिपद्येतेति । त्रित्वसंख्याबाधनात् । पञ्चसंख्या हि तदा स्यात् ।

शांकर.

( २ ) घोरनामा अङ्गिरोगोत्रस्तदेतत्पुरुषयज्ञदर्शनं देवकीपुत्राय कृष्णाय । इतिशब्दोऽध्याहर्तव्यः । तच्छेषभूतं तत्प्रीत्यर्थमित्युक्त्वा इत्यनुसंधाय उवाच अनुष्ठितवानित्यर्थः । वचेर्लक्षणयाऽनुष्ठानार्थत्वम् । स घोरनामा भगवच्छेषत्वानुसंधानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन ब्रह्मविद्यां प्राप्य अपिपासः मुक्तः बभूवेत्यर्थः । ततश्च षोडशाधिकवर्षशतजीवनफलकस्यापि पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसंधानपूर्वकमनुष्ठितस्य ब्रह्मविद्योपयोगित्वमप्यस्तीति भावः । स बभूवेत्यस्य स भवतीत्यर्थः । सोऽन्तवेलायामित्यत्र स इत्यस्य य इत्यर्थः । ततश्च योऽन्तवेलायामेतत्त्रयं प्रतिपद्येत सोऽपिपासो भवतीत्युवाचेत्युत्तरत्रान्वयः । स भगवच्छेषत्वानुसंधानपूर्वकपुरुषविद्यासाधितचिरायुष्ट्वानुगृहीतब्रह्मविद्यानिष्ठः पुरुषः मरणकाले एतन्मन्त्रत्रयं जपेदित्यर्थः । अक्षितमसि क्षयशून्यमसि । अच्युतमसि स्वरूपात्प्रच्युतिशून्यमसि । प्राणसंशितमसि जगत्प्राणविधृत्वे सति सूक्ष्मतत्त्वमसीति ब्रह्मसंबोधनम् । शो तनूकरणे इति हि धातुः । तत्र परब्रह्मविषये एतौ ऋङ्मन्त्रौ भवतः ।

रंग.

*** आदित्प्रत्नस्य रेतसः । उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥**

( १ ) आदित् इत्यत्र आकारस्यानुबन्धस्तकारोऽनर्थकः इच्छब्दश्च । प्रत्नस्य चिरंतनस्य पुराणस्येत्यर्थः । रेतसः कारणस्य बीजभूतस्य जगतः सदाख्यस्य ज्योतिः प्रकाशं पश्यन्ति । आसमन्तादुत्कृष्टानुबन्धः पश्यन्तीत्यनेन संबध्यते । किं तज्ज्योतिः पश्यन्ति—वासरं अहः अह्नरिव तत्सर्वतो व्याप्तं ब्रह्मणो ज्योतिः । निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधनैः शुद्धान्तःकरणाः आ समन्ततः ज्योतिः पश्यन्तीत्यर्थः । परः परं इति लिङ्गव्यत्ययेन, ज्योतिष्परत्वात् । यदिध्यते दीप्यते दिवि द्योतनवति परस्मिन्ब्रह्मणि वर्तमानम् । येन ज्योतिषेद्धः सविता तपति, चन्द्रमा भाति, विद्युद्विद्योतते, ग्रहतारागणा विभासन्ते ।

किंचान्यो मन्त्रदृगाह यथोक्तं ज्योतिः पश्यन्— उद्वयं तमसोऽज्ञानलक्षणात्परि परस्तादिति शेषः । तमसो वाऽपनेतृ यज्ज्योतिरुत्तरमादित्यस्थं परिपश्यन्तो वयमुदगन्मेति व्यवहितेन संबन्धः । तज्ज्योतिः स्वः स्वं आत्मीयं अस्मद्धृदि स्थितम् । आदित्यस्थं च तदेकं ज्योतिः । यदुत्तरं उत्कृष्टतरं ऊर्ध्वतरं वाऽपरं ज्योतिरपेक्ष्य पश्यन्त उदगन्म वयम् । कमुदगन्मेत्याह — देवं द्योतनवन्तं

(१) छान्द. ३।१७।६ ; ब्रशांकर. ४।१।१२.

* ' आदित्प्रत्नस्य रेतसः ' इति प्रतीकमात्रग्रहणमिति आनन्दगिरिटीकायां रंगभाष्ये च स्पष्टम् । एकस्मिन्मूलमात्रोपनिषत्पुस्तके समस्तो मन्त्रः पठितोऽस्ति । इतरेषु तु प्रतीकमात्रम् । सकलो मन्त्रः रंगभाष्यतो ज्ञेयः । शांकरभाष्यतट्टीकानुसारेण ' यदिध्यते दिवा ' इत्यत्र ' दिवि ' इति पाठः स्पष्टं प्रतीयते ।

(१) छान्द. ३।१७।७.

देवत्रा देवेषु सर्वेषु सूर्ये रसानां रश्मीनां प्राणानां च जगत ईरणात्सूर्यः तं, उदगन्म गतवन्तः ज्योतिरुत्तमं सर्वज्योतिर्भ्य उत्कृष्टतमं अहो प्राप्ता वयमित्यर्थः । इदं तज्ज्योतिर्यदृग्भ्यां स्तुतं, यद्यजुस्त्रयेण प्रकाशितम् । द्विरभ्यासो यज्ञकल्पनापरिसमाप्त्यर्थः ।

शंकर.

( २ ) तयोर्ऋचोरयमाद्यो मन्त्रः प्रतीकेन गृहीतः । 'आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥' इति । प्रत्नस्य पुरातनस्य रेतसो जगद्बीजभूतस्याव्यक्तस्याऽऽदिभूतं संसारसंतमसनिवारकतया ज्योतिःशब्दितं परं ब्रह्म 'सदा पश्यन्ति सूरयः' इत्युक्तरीत्या नित्यसूरयो वासरं नित्यप्रकाशरूपं सर्वकालं पश्यन्तीत्यर्थः । यज्ज्योतिः 'अथ यदतः परो दिवो ज्योतिर्दीप्यति' इत्युक्तरीत्या भगवल्लोके परत्वेन इध्यते निरतिशयदीतियुक्तविग्रहयुक्तमित्यर्थः ।

तमसः प्रकृतेः परस्तादुत्तरं ज्योतिः परिपश्यन्तः । उत्तरं स्वः भगवल्लोकं परिपश्यन्तः । अत्र परिपश्यन्त इत्युभयत्र हेत्वर्थे शतृप्रत्ययः । भगवल्लोकस्य तद्गतपरमात्मनश्च दर्शनायेति यावत् । देवत्रा देवेषु 'देवमनुष्य ०' ( पा. सू. ५।४।५६ ) इत्यादिना सप्तम्यन्तात्त्राप्रत्ययः । देवं द्योतमानं उत्तमं अर्चिरादिपर्वभूतं सूर्यरूपं ज्योतिर्वयमुदगन्म प्राप्ताः स्मेत्यर्थः । द्विरभ्यासो यज्ञकल्पनासमाप्त्यर्थः ।

रंग.

मनसि आकाशे च समस्तब्रह्मोपासनम्

**मनो ब्रह्मेत्युपासीत । इत्यध्यात्मम् । अथाधिदैवतम् । आकाशो ब्रह्म । इत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥**

( १ ) मनोमय ईश्वर उक्तः आकाशात्मेति च ब्रह्मणो गुणैकदेशत्वेन । अथेदानीं मनआकाशयोः समस्तब्रह्मदृष्टिविधानार्थ आरम्भः—मनो ब्रह्मेत्यादि । मनः मनुते अनेनेत्यन्तःकरणं, तद्ब्रह्म परमित्युपासीत इति एतत् आत्मविषयं दर्शनमध्यात्मम् । अथाधिदैवतं देवताविषयमिदं वक्ष्यामः—आकाशो ब्रह्मेत्युपासीत । एवमुभयं अध्यात्ममधिदैवतं चोभयं ब्रह्मदृष्टिविषयं आदिष्टं उपदिष्टं भवति । *आकाशमनसोः सूक्ष्मत्वात् मनसोपलभ्यत्वाच्च ब्रह्मणः, योग्यं मनो ब्रह्मदृष्टेः, आकाशश्च सर्वगतत्वात्सूक्ष्मत्वादुपाधिहीनत्वाच्च ।

† शंकर.

( २ ) न चेदं ब्रह्मात्मैकत्वविज्ञानं संपद्रूपं, यथा 'अनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति' ( बृउ. ३।१।९ ) इति । न चाध्यासरूपं, यथा 'मनो ब्रह्मेत्युपासीत' 'आदित्यो ब्रह्मेत्यादेशः' ( छाउ. ३।१९।१ ) इति च मनआदित्यादिषु ब्रह्मदृष्ट्यध्यासः । नापि विशिष्टक्रियायोगनिमित्तं, 'वायुर्वाव संवर्गः' ( छाउ. ४।३।१ ) 'प्राणो वाव संवर्गः' ( छाउ. ४।३।३ ) इतिवत् । नाप्याज्यावेक्षणादिकर्मवत् कर्माङ्गसंस्काररूपम् । संपदादिरूपे हि ब्रह्मात्मैकत्वविज्ञाने अभ्युपगम्यमाने 'तत्त्वमसि' ( छाउ. ६।८।७ ) 'अहं ब्रह्मास्मि' ( बृउ. १।४।१० ) 'अयमात्मा ब्रह्म' ( बृउ. २।५।१९ ) इत्येवमादीनां वाक्यानां ब्रह्मात्मैकत्ववस्तुप्रतिपादनपरः पदसमन्वयः पीड्येत ।

१।१।४

[ संपन्नाम अल्पे वस्तुन्यालम्बने सामान्येन केनचिन्महतो वस्तुनः संपादनम् । मनस्यनन्तवृत्तिमत्याालम्बनेऽल्पपरिमाणे विश्वेषां देवानामनन्तानां महतामनन्तत्वसामान्येन संपादनम् । अध्यासः शास्त्रतोऽतस्मिंस्तद्धीः । संपदि संपद्यमानस्य प्राधान्येनानुध्यानं, अध्यासे त्वालम्बनस्य । यथा संहरणक्रियायोगाद्वायोः प्राणस्य च संवर्गत्वं, तथा जीवब्रह्मणोर्बृंहणक्रियायोगादैक्यज्ञानमित्यपि नेत्यर्थः । कर्तृत्वेनाङ्गे क्रतौ आत्मनि

(१) छाउ. ३।१८।१ ; ब्रशंकर. १।१।४ ( पृ.६३ ), १।२।२६, ४।१।१, ३, ४; भास्कर. ४।१।४, ४।३।१४; रामानुज. १।१।१ ( पृ.९ ), १।१।४ (पृ. १६७), ४।१।१, ४; निंबार्क. ३।२।३३; श्रीकंठ. ४।१।१, ४; श्रीकर. २।४।७; विज्ञान. ३।३।१०, ४।१।५; बलदेव. ४।१।४.

* 'आकाशमनसोः सूक्ष्मत्वात्' इत्ययं ग्रन्थः टीकां आकाशसूक्ष्मत्वस्य पुनरुक्तिं चाऽऽलोचयतामधिक इति प्रतिभाति ।

† रंग. शंकरवत् ।

द्रष्टव्यादिवाक्येन दृष्टेः कर्मणो विधानात् कर्माङ्गात्मसंस्कारकत्वेनैकवाक्यतानिश्चये नेत्यर्थः—आनन्दगिरीया ]

‘ न प्रतीके न हि सः ’— ‘ मनो ब्रह्मेत्युपासीत... आकाशो ब्रह्म ’ इति, तथा ‘ आदित्यो ब्रह्मेत्यादेशः ’ ( छाउ. ३।१९।१ ) ‘ स यो नाम ब्रह्मेत्युपास्ते ’ ( छाउ.७।१।५ ) इत्येवमादिषु प्रतीकोपासनेषु संशयः—किं तेष्वात्मग्रहः कर्तव्यो न वेति । किं तावत्प्राप्तम् । तेष्वात्मग्रह एव युक्तः । कस्मात् । ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात् प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सत्यात्मत्वोपपत्तेरिति । एवं प्राप्ते ब्रूमः— न प्रतीकेष्वात्ममतिं बध्नीयात् । न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाऽऽकलयेत् । यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं ततश्चाऽऽत्मत्वमिति, तदसत् , प्रतीकाभावप्रसङ्गात् । विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाऽऽश्रितं भवति । स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा । न च ब्रह्मण आत्मत्वाद्ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात् । कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशः, तदनिराकरणेन चोपासनविधानम् । अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते । न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति । सुवर्णात्मनेव तु ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रियते । ४।१।४

‘ ब्रह्मदृष्टिरुत्कर्षात् ’ — तेष्वेवोदाहरणेष्वन्यः संशयः— किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः, किंवा ब्रह्मदृष्टिरादित्यादिष्विति । तत्र अनियमः, नियमकारिणः शास्त्रस्याभावात् , इत्येवं प्राप्तम् । अथ वा आदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तम् । एवं ह्यादित्यादिदृष्टिभिर्ब्रह्मोपासितं भवति । ब्रह्मोपासनं च फलवदिति शास्त्रमर्यादा । तस्मात् न ब्रह्मदृष्टिरादित्यादिष्विति । एवं प्राप्ते ब्रूमः—ब्रह्मदृष्टिरेव आदित्यादिषु स्यादिति । कस्मात् । उत्कर्षात् । एवमुत्कर्षेणाऽऽदित्यादयो दृष्टा भवन्ति, उत्कृष्टदृष्टेस्तेष्वध्यासात् । तथा च लौकिको न्यायोऽनुमतो भवति । उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति लौकिको न्यायः, यथा राजदृष्टिः क्षत्तरि । स चानुसर्तव्यः, विपर्यये प्रत्यवायप्रसङ्गात् । न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात् ।

प्राथम्याच्चाऽऽदित्यादिशब्दानां मुख्यार्थत्वं अविरोधाद्ग्रहीतव्यम् । तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवात् ब्रह्मदृष्टिविधानार्थतैवावतिष्ठते । इतिपरत्वादपि ब्रह्मशब्दस्य एष एवार्थो न्याय्यः । तथा हि— ‘ ब्रह्मेत्यादेशः ’ ‘ ब्रह्मेत्युपासीत ’ ‘ब्रह्मेत्युपास्ते’ इति च सर्वत्र इतिपरं ब्रह्मशब्दमुच्चारयति, शुद्धांस्त्वादित्यादिशब्दान् । ततश्च यथा ‘ शुक्तिकां रजतमिति प्रत्येति ’ इत्यत्र शुक्तिवचन एव शुक्तिकाशब्दः, रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः, प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति । एवमत्रापि आदित्यादीन् ब्रह्मेति प्रतीयादिति गम्यते । वाक्यशेषोऽपि च द्वितीयानिर्देशेन आदित्यादीनेव उपास्तिक्रियया व्याप्यमानान् दर्शयति— ‘ स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते ’ ( छाउ. ३।१९।४ ), ‘ यो वाचं ब्रह्मेत्युपास्ते ’ ( छाउ. ७।२।२ ) ‘ यः संकल्पं ब्रह्मेत्युपास्ते ’ ( छाउ. ७।४।३ ) इति च । यत्तूक्तं ब्रह्मोपासनमेवात्राऽऽदरणीयं फलवत्त्वायेति, तदयुक्तं, उक्तेन न्यायेन आदित्यादीनामेवोपास्यत्वावगमनात् । फलं त्वतिथ्याद्युपासन इव आदित्याद्युपासनेऽपि ब्रह्मैव दास्यति, सर्वाध्यक्षत्वात् । वर्णितं चैतत् ‘ फलमत उपपत्तेः ’ ( ब्रसू. ३।२।३८ ) इत्यत्र । ईदृशं चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणं प्रतिमादिष्विव विष्ण्वादीनाम् ।

* ब्रशंकर. ४।१।५

**तदेतच्चतुष्पाद्ब्रह्म । वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पादः । इत्यध्यात्मम् । अथाधिदैवतम् । अग्निः पादो वायुः पाद आदित्यः पादो दिशः**

---

* भास्कर. ४।१।४ तात्पर्यं ब्रशंकरवत् । ४।१।५ ब्रशंकरेण गतार्थम् । रामानुजनिंबार्कभाष्ये ब्रशंकरेण गतार्थे ।

(१) छाउ. ३।१८।२; ब्रशंकर. १।३।३१; रंग. चैवाधि ( चाधि ); रामानुज. ३।२।३० , ३२ ; निंबार्क. ३।२।३३ ; श्रीकंठ. ३।२।३० , ३२ ; श्रीकर. १।३।३१ , ३।२।३० , ३२.

पादः। इत्युभयमेवाऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥

(१) तदेतन्मनआख्यं चतुष्पाद्ब्रह्म चत्वारः पादा अस्येति। कथं चतुष्पात्त्वं मनसो ब्रह्मण इत्याह— वाक्प्राणश्चक्षुः श्रोत्रमित्येते पादाः। इत्यध्यात्मम्। अथाधिदैवतमाकाशस्य ब्रह्मणोऽग्निर्वायुरादित्यो दिश इत्येते। एवमुभयमेव चतुष्पाद्ब्रह्माऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च।

* वाचा हि पादेनेव गवादि, वक्तव्यविषयं प्रति तिष्ठति। अतो मनसः पाद इव वाक्। तथा प्राणो घ्राणः पादः। तेनापि गन्धविषयं प्रति च क्रामति। तथा चक्षुः पादः श्रोत्रं पाद इत्येवमध्यात्मं चतुष्पात्त्वं मनसो ब्रह्मणः। अथाधिदैवतमग्निवाय्वादित्यदिश आकाशस्य ब्रह्मण उदर इव गोः पादा विलग्ना उपलभ्यन्ते। तेन तस्याऽऽकाशस्याग्न्यादयः पादा उच्यन्ते। एवमुभयमध्यात्मं चैवाधिदैवतं च चतुष्पादादिष्टं भवति।

† शंकर.

(२) वागादीनां चतुर्णां मनोनियाम्यत्वान्मनःपादत्वाध्यासो युज्यते इति भावः। अग्न्यादयः चत्वारो ब्रह्मरूपाकाशस्योदरलग्नाः पादा इव भान्तीत्यर्थः।

रंग.

वागेव ब्रह्मणश्चतुर्थः पादः। सोऽग्निना ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥

(१) तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पादः इतरपादत्रयापेक्षया। सोऽग्निनाऽधिदैवतेन ज्योतिषा भाति च दीप्यते तपति च संतापं च औष्ण्यं करोति। अथवा तैलघृताद्याग्नेयाशनेनेद्धा वाक् भाति च तपति च वदनायोत्साहवती स्यादित्यर्थः। विद्वत्फलं—भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं यथोक्तं वेद।

शंकर.

(२) वितरणविक्रमरूपहेतुभेदात्कीर्तियशसोर्भेदः। ब्रह्मवर्चसं वृत्ताध्ययनसमृद्धिः।

* रंग.

प्राण एव ब्रह्मणश्चतुर्थः पादः। स वायुना ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः। स आदित्येन ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥

[3]श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः। स दिग्भिर्ज्योतिषा भाति च तपति च। भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥

(१) तथा प्राण एव ब्रह्मणश्चतुर्थः पादः। स वायुना गन्धाय भाति च तपति च। तथा चक्षुरादित्येन रूपग्रहणाय, श्रोत्रं दिग्भिः शब्दग्रहणाय। विद्याफलं समानं सर्वत्र। ब्रह्मसंपत्तिरदृष्टं फलम्। य एवं वेद। द्विरुक्तिर्दर्शनसमाप्त्यर्था।

‡ शंकर.

(२) 'न वायुक्रिये पृथगुपदेशात्'—स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते। तत्र प्राप्तं तावच्छ्रुतेर्वायुः प्राण इति। एवं हि श्रूयते— 'यः प्राणः स वायुः। स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' (ऐआ. २।३।३) इति। अथवा तन्त्रान्तरीयाभिप्रायात्समस्तकरणवृत्तिः प्राण इति प्राप्तम्। एवं हि तन्त्रान्तरीया आचक्षते— 'सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च' इति। अत्रोच्यते—न वायुः प्राणः, नापि

---

* 'वाचा हि पादेनेव' इत्यादि भाष्यं केषुचित् पुस्तकेषु उत्तरस्मिन्वाक्ये मुद्रितं, परन्तु संगतिलोभेन पुस्तकान्तरसंवादाच्च अत्रैव गृहीतम्।

† ब्रसंकर. छाउ. ३।१।१ (पृ. ७९२) इत्यत्र द्रष्टव्यम्।

(१) छाउ. ३।१८।३; ब्रसंकर. २।४।१४, ४।१।१; रामानुज. १।१।१ (पृ. ९); श्रीकंठ. ४।१।१.

* शेषं शंकरवत्।

‡ रंग. शंकरवत्।

(१) छाउ. ३।१८।४; ब्रशंकर. २।४।९; भास्कर. २।४।९ षा भाति (षावति); श्रीकर. २।४।७; विज्ञान. २।४।९, १०;

(२) छाउ. ३।१८।५.

(३) छाउ. ३।१८।६.

करणव्यापारः। कुतः। पृथगुपदेशात्। वायोरेतस्मात्प्राणस्य पृथगुपदेशो भवति 'प्राण एव ब्रह्मणश्चतुर्थः पादः। स वायुना ज्योतिषा भाति च तपति च' इति। नहि वायुरेव सन् वायोः पृथगुपदिश्येत।

तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात्, वृत्तिवृत्तिमतोरभेदात्।

कथं तर्हीयं श्रुतिः 'यः प्राणः स वायुः' इति। उच्यते—वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरं, नापि वायुमात्रम्। अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते। * ब्रशांकर. २।४।९

आदित्यब्रह्मोपासनं, असतः सृष्टिः

आदित्याण्डम्

**आदित्यो ब्रह्मेत्यादेशः। तस्योपव्याख्यानम्। असदेवेदमग्र आसीत्। तत्सदासीत्। तत्समभवत्। तदाण्डं निरवर्तत। तत्संवत्सरस्य मात्रामशयत। तन्निरभिद्यत। ते आण्डकपाले रजतं च सुवर्णं चाभवताम्॥**

आदित्यो ब्रह्मणः पाद उक्त इति तस्मिन्सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते—आदित्यो ब्रह्मेत्यादेशः उपदेशः। तस्योपव्याख्यानं क्रियते स्तुत्यर्थम्। असत् अव्याकृतनामरूपं इदं जगदशेषं अग्रे प्रागवस्थायामुत्पत्तेः आसीत्, न त्वसदेव, 'कथमसतः सज्जायेत' (छाउ. ६।२।२) इत्यसत्कार्यत्वस्य प्रतिषेधात्। नन्विहासदेवेति विधानाद्विकल्पः स्यात्। न, क्रियास्विव वस्तुनि विकल्पानुपपत्तेः। कथं तर्हीदमसदेवेति। नन्ववोचाम अव्याकृतनामरूपत्वादसदिवासदिति। नन्वेवशब्दोऽवधारणार्थः। सत्यमेवं, न तु सत्त्वाभावमवधारयति। किं तर्हि, व्याकृतनामरूपाभावमवधारयति। नामरूपव्याकृतविषये सच्छब्दप्रयोगो दृष्टः। तच्च नामरूपव्याकरणमादित्यायत्तं प्रायशो जगतः। तदभावे ह्यन्धं तम इवेदं न प्रज्ञायेत किंचन, इत्यतस्तत्स्तुतिपरे वाक्ये सदेवेदं प्रागुत्पत्तेर्जगदसदेवेत्यादित्यं स्तौति ब्रह्मदृष्ट्यर्हत्वाय। आदित्यनिमित्तो हि लोके सदिति व्यवहारः। यथा असदेवेदं राज्ञः कुलं सर्वगुणसंपन्ने पूर्णवर्मणि राजन्यसतीति, तद्वत्। न च सत्त्वमसत्त्वं वेह जगतः प्रतिपिपादयिषितं, आदित्यो ब्रह्मेत्यादेशपरत्वात्। उपसंहरिष्यत्यन्ते 'आदित्यं ब्रह्मेत्युपास्ते' इति। तत्सदासीत् तत् असच्छब्दवाच्यं प्रागुत्पत्तेः स्तिमितमनिस्पन्दमसदिव सत् कार्याभिमुखमीषदुपजातप्रवृत्ति सत् आसीत्। ततो लब्धपरिस्पन्दं तत् समभवत् अल्पतरनामरूपव्याकरणेन अङ्कुरीभूतमिव बीजम्। ततोऽपि क्रमेण स्थूलीभवत् तत् अद्भ्यः आण्डं समवर्तत* संवृत्तम्। आण्डमिति दैर्घ्यं छान्दसम्। तदण्डं संवत्सरस्य कालस्य प्रसिद्धस्य मात्रां परिमाणं अभिन्नस्वरूपमेव अशयत स्थितं बभूव। तत् ततः संवत्सरपरिमाणात्कालादूर्ध्वं निरभिद्यत निर्भिन्नं वयसामिवाण्डम्। तस्य निर्भिन्नस्याण्डस्य कपाले द्वे रजतं च सुवर्णं चाभवतां संवृत्ते। ‡ शंकर.

**तेयद्रजतं[१] सेयं पृथिवी। यत्सुवर्णं[१] सा द्यौः। यज्जरायु ते पर्वताः। यदुल्बं[१] समेघो नीहारः। या धमनयस्ता नद्यः। यद्वास्तेयमुदकं[१] स समुद्रः॥**

तत् तयोः कपालयोः यद्रजतं कपालमासीत् सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थः। यत्सुवर्णं कपालं सा द्यौः द्युलोकोपलक्षितमूर्ध्वं कपालमित्यर्थः। यज्जरायु गर्भपरिवेष्टनं स्थूलमण्डस्य द्विशकलीभावकाले आसीत् ते पर्वता बभूवुः। यदुल्बं सूक्ष्मं गर्भपरिवेष्टनं तत्सह मेघैः समेघो नीहारः अवश्यायः बभूवेत्यर्थः। या गर्भस्य जातस्य देहे धमनयः शिराः ता नद्यो बभूवुः।

---

* भास्करश्रीकरविज्ञानभाष्याणि ब्रशंकरवत्।

(१) छाउ. ३।१९।१; ब्रशंकर. १।१।४, १।३।३१, १।४।१४, २।१।१७, ४।१।३, ४; भास्कर. २।१।१७; रामानुज. १।४।१४, १५, २।१।१८; निंबार्क. १।४।१५, २।१।१७; श्रीकंठ. ४।१।४; श्रीकर. २।१।१७, ४।१।५, ६; विज्ञान. ३।३।१०, ४।१।५.

* सर्वेषु पुस्तकेषु मूले 'निरवर्तत' इति, भाष्ये च 'समवर्तत' इति पाठः।

‡ ब्रशंकर. छाउ. ३।१।१ (पृ. ७९२), ३।१८।१ (पृ. ८१८) इत्यत्र द्रष्टव्यम्। रंग शंकरवत्। भास्करादिभाष्ये असच्छब्दार्थः शंकरवत्।

(१) छाउ. ३।१९।२.

यत्तस्य वस्तौ भवं वास्तेयमुदकं स समुद्रः ।

§ शंकर.

**अथ यत्तदजायत सोऽसावादित्यः । तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्सर्वाणि च भूतानि सर्वे च कामाः । तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥**

अथ यत्तदजायत गर्भरूपं तस्मिन्नण्डे सोऽसावादित्यः । तमादित्यं जायमानं घोषाः शब्दाः उलूलवः उरूरवः विस्तीर्णरवाः उदतिष्ठन् उत्थितवन्तः ईश्वरस्येवेह प्रथमपुत्रजन्मनि, सर्वाणि च स्थावरजङ्गमानि भूतानि, सर्वे च तेषां भूतानां कामाः काम्यन्ते इति विषयाः स्त्रीवस्त्रान्नादयः । यस्मादादित्यजन्मनिमित्ता भूतकामोत्पत्तिः, तस्मादद्यत्वेऽपि तस्याऽऽदित्यस्योदयं प्रति प्रत्यायनं प्रति अस्तमनं च प्रति, अथवा पुनः पुनः प्रत्यागमनं प्रत्यायनं, तत्प्रति, तन्निमित्तीकृत्येत्यर्थः । सर्वाणि च भूतानि सर्वे च कामाः घोषा उलूलवश्चानूत्तिष्ठन्ति । प्रसिद्धं ह्येतदुदयादौ सवितुः ।

* शंकर.

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते । अभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥**

( १ ) स यः कश्चिदेतमेवं यथोक्तमहिमानं विद्वान् सन्नादित्यं ब्रह्मेत्युपास्ते, स तद्भावं प्रतिपद्यते इत्यर्थः । किंच दृष्टं फलं — अभ्याशः क्षिप्रं तद्विदः, यदिति क्रियाविशेषणं, एनमेवंविदं साधवः शोभना घोषाः । साधुत्वं घोषादीनां यदुपभोगे पापानुबन्धाभावः । आ च गच्छेयुः आगच्छेयुश्च उप च निम्रेडेरन् उपनिम्रेडेरंश्च । न केवलमागमनमात्रं घोषाणां, उपसुखयेयुश्च, उपसुखं च कुर्युरित्यर्थः । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थ आदरार्थश्च ।

‡ शंकर.

( २ ) ह शब्दः प्रसिद्धौ । एतमादित्यब्रह्मोपासकं अभ्याशः क्षिप्रं यत् ये इत्यर्थः । ये साधवः शोभना घोषास्ते सर्वे उप समीपे आ च गच्छेयुः आगच्छेयुश्च, निम्रेडेरन् सुखं च कुर्युरित्यर्थः । मृड सुखे चेति धातुरन्तर्भावितण्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था । रंग.

इति तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः

( संवर्गविद्या )

वायुप्राणयोर्ब्रह्मोपासना साख्याना, वायुरूपः सर्वदेवात्मा भुवनगोप्ता

**जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽन्नमत्स्यन्तीति ॥**

( १ ) वायुप्राणयोर्ब्रह्मणः पाददृष्ट्यध्यासः पुरस्ताद्दर्शितः । अथेदानीं तयोः साक्षाद्ब्रह्मत्वेनोपास्यत्वायोत्तरमारभ्यते । सुखावबोधार्था आख्यायिका, विद्यादानग्रहणविधिप्रदर्शनार्था च । श्रद्धान्नदानानुद्धतत्वादीनां च विद्याप्राप्तिसाधनत्वं प्रदर्श्यते आख्यायिकया — जानश्रुतिः जनश्रुतस्यापत्यम् । ह ऐतिह्यार्थः । पुत्रस्य पौत्रः पौत्रायणः स एव श्रद्धादेयः, श्रद्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयः । बहुदायी प्रभूतं दातुं शीलमस्येति बहुदायी । बहुपाक्यः बहु पक्तव्यं अहन्यहनि गृहे यस्यासौ बहुपाक्यः । भोजनार्थिभ्यो बहु अस्य गृहेऽन्नं पच्यते इत्यर्थः । एवंगुणसंपन्नोऽसौ जानश्रुतिः पौत्रायणः विशिष्टे

---

§ रंग. शंकरवत् ।

* रंग. शंकरवत् । प्रत्यायनशब्दस्य द्वितीयार्थो न कृतः ।

(१) छाउ. ३।१९।३.

(२) छाउ. ३।१९।४; ब्रशांकर. ४।१।५; वल्लभ. ४।१।६.

‡ वल्लभ. छाउ. ३।१।१ ( पृ. ७९३ ) इत्यत्र द्रष्टव्यम् ।

(१) छाउ. ४।१।१; ब्रशांकर. ३।४।२३; रंग. मत्स्यन्तीति ( मत्स्यन्ति ); रामानुज. १।३।३४ मेऽन्नमत्स्यन्तीति ( मेऽत्स्यन्ति ); श्रीकंठ. १।३।३४ रंगवत्; श्रीकर. १।३।३५; वल्लभ. १।३।३४; बलदेव. ३।४।२३.

देशे ग्रामे च कस्मिंश्चित् आस बभूव । स ह सर्वतः सर्वासु दिक्षु ग्रामेषु नगरेषु चाऽऽवसथानेव, वसन्ति येषु इति आवसथाः, तान् मापयांचक्रे कारितवानित्यर्थः । सर्वत एव मे ममान्नं तेष्वावसथेषु वसन्तः अत्स्यन्ति भोक्ष्यन्त इत्येवमभिप्रायः । शंकर.

(२) 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' (बृउ. ४।५।१) 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' (कौउ. ३।१) 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' (छाउ. ४।१।१) इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः — किमिमानि पारिप्लवप्रयोगार्थानि, आहोस्वित्संनिहितविद्याप्रतिपत्त्यर्थानीति । पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामान्यात्, आख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात् । ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत् प्रयोगशेषत्वादिति चेत् । तन्न । कस्मात् । विशेषितत्वात् । 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य, 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेव आख्यानानि तत्र विशेष्यन्ते । आख्यानसामान्याच्चेत् सर्वसंग्रहः स्यात्, अनर्थकमेवेदं विशेषणं भवेत् । तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः । ब्रशंकर. ३।४।२३

[ पारिप्लवप्रयोगो नामाश्वमेधे पुत्रामात्यपरिवृताय राज्ञे 'पारिप्लवमाचक्षीत' इत्यादिना नानाविधाख्यानकथनं विहितम् । आनन्दगिरिटीका ]

(३) विद्यास्तुत्यर्था आख्यायिका — जानश्रुतिरिति । हशब्दः प्रसिद्धौ ।

* रंग.

(४) बहुदायीति दानपतित्वेन बहुपाक्य इत्यादिना 'सर्वत एव मेऽत्स्यन्ति' (छाउ. ४।१।१) इत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेः 'स ह संजिहान एव क्षत्तारमुवाच' (छाउ. ४।१।५) इति क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ।

‡ रामानुज. १।३।२४

* शेषं शंकरवत् ।

‡ श्रीकंठ. वल्लभ. रामानुजवत् ।

अथ ह हꣳसा निशायामतिपेतुः । तद्धैवꣳ हꣳसो हꣳसमभ्युवाद । हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥

(१) तत्रैवं सति राजनि धर्मिष्ठेतस्मिन्काले हर्म्यतलस्थे अथ ह हंसा निशायां रात्रावतिपेतुः । ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः सन्तः हंसरूपा भूत्वा राज्ञो दर्शनगोचरे अतिपेतुः पतितवन्तः । तत् तस्मिन्काले तेषां पततां हंसानां एकः पृष्ठतः पतन् अग्रतः पतन्तं हंसं अभ्युवाद अभ्युक्तवान् । हो होऽयीति भो भो इति संबोध्य भल्लाक्ष भल्लाक्षेत्यादरं दर्शयन् यथा पश्य पश्याश्चर्यमिति तद्वत् । भल्लाक्षेति मन्ददृष्टित्वं सूचयन्नाह । अथवा सम्यग्ब्रह्मदर्शनाभिमानवत्त्वात्तस्य असकृदुपालब्धस्तेन पीड्यमानोऽमर्षितया तत्सूचयति भल्लाक्षेति । जानश्रुतेः पौत्रायणस्य समं तुल्यं दिवा द्युलोकेन ज्योतिः प्रभास्वरं अन्नदानादिजनितप्रभावजं आततं व्याप्तं द्युलोकस्पृगित्यर्थः । दिवा अह्ना वा समं ज्योतिरित्येतत् । तन्मा प्रसाङ्क्षीः, सञ्जनं सक्तिं तेन ज्योतिषा संबन्धं मा कार्षीरित्यर्थः । तत्प्रसञ्जनेन तत् ज्योतिस्त्वा त्वां मा प्रधाक्षीः मा दहत्वित्यर्थः । पुरुषव्यत्ययेन मा प्रधाक्षीदिति ।

शंकर.

(२) संभ्रमेण द्विवारं संबोधनम् । तत्तस्मिंस्तेजसि मा प्रसाङ्क्षीः मा प्रसक्तो भूः ।

* रंग.

तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्कमात्थेति । यो नु कथꣳ सयुग्वा रैक्क इति ॥

* शेषं शंकरवत् ।

(१) छाउ. ४।१।२; रंग. हो होऽयि ( भो भोऽयि ) प्रधाक्षीरिति ( प्रधाक्षीदिति ); रामानुज. १।३।२३ हो होऽयि ( भो भो ) प्रसाङ्क्षीस्त ( प्रसाङ्क्षीत्त ) प्रधाक्षीरिति ( प्रधाक्षीदिति ); श्रीकर. १।३।२४.

(२) छाउ. ४।१।३; ब्रशंकर. भास्कर. १।३।२४; रामानुज. १।३।२३; ब्रमध्व. श्रीकर. वल्लभ. विज्ञान. १।३।२४.

तं एवमुक्तवन्तं परः इतरोऽग्रगामी प्रत्युवाच—अरे निकृष्टोऽयं राजा वराकः, तं कमु एनं सन्तं केन माहात्म्येन युक्तं सन्तमिति कुत्सयति एनमेवं सबहुमानमेतद्वचनमात्थ रैक्वमिव सयुग्वानं, सह युग्वना गन्त्या वर्तते इति सयुग्वा रैक्वः, तमिव आत्थ एनम्। अननुरूपमस्मिन्नयुक्तमीदृशं वक्तुं रैक्व इवेत्यभिप्रायः। इतरश्च आह—यो नु कथं त्वयोच्यते सयुग्वा रैक्वः। इत्युक्तवन्तं भल्लाक्ष आह—शृणु यथा स रैक्वः।

‡ शंकर.

यथा कृतायविजितायाधरेयाः * संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति। यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥

(१) यथा लोके कृतायः कृतो नामायो द्यूतसमये प्रसिद्धश्चतुरङ्कः, स यदा जयति द्यूते प्रवृत्तानां, तस्मै विजिताय तदर्थमितरे त्रिद्व्येकाङ्का अधरेयाः त्रेताद्वापरकलिनामानः संयन्ति संगच्छन्तेऽन्तर्भवन्ति। चतुरङ्के कृताये त्रिद्व्येकाङ्कानां विद्यमानत्वात्तदन्तर्भवन्तीत्यर्थः। यथा अयं दृष्टान्तः, एवमेनं रैक्वं कृतायस्थानीयं त्रेताद्यायस्थानीयं सर्वं तदभिसमेति अन्तर्भवति रैक्वे। किं तत्, यत्किंच लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति, तत्सर्वं रैक्वस्य धर्मेऽन्तर्भवति, तस्य च फले सर्वप्राणिधर्मफलमन्तर्भवतीत्यर्थः। तथाऽन्योऽपि कश्चिद्यस्तद्वेद्यं वेद। किं तत्, यद्वेद्यं सः रैक्वः वेद। तद्वेद्यमन्योऽपि यो वेद, तमपि सर्वप्राणिधर्मजातं तत्फलं च रैक्वमिवाभिसमेतीत्यनुवर्तते। स एवंभूतो मया विद्वानेतदुक्तः एवमुक्तः, रैक्ववत्स एव कृतायस्थानीयो भवतीत्यभिप्रायः। शंकर.

(२) यथा लोके कृतनामाऽयो द्यूतसमयप्रसिद्धश्चतुरङ्कायस्तत्रविजितं जयो यस्य स कृतायविजितः पुरुषः। अथवा विजितं विजयस्तस्मा इत्यर्थः। स रैक्वो यद्वेद तदेवान्योऽपि यः कश्चिद्वेद तज्ज्ञातमेवान्ये जानन्ति। तज्ज्ञाने सर्वं ज्ञानमन्तर्गतमित्यर्थः। स तादृशो रैक्वो मयैतादिदानीं सयुग्वानमिव रैक्वमात्थेत्युक्त इत्यर्थः।

‡ रंग.

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव। स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति। यो नु कथꣳ सयुग्वा रैक्व इति ॥

यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति। यस्तद्वेद यत्स वेद स मयैतदुक्त इति * ॥

(१) तदु ह तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य विदुषो रैक्वादेः प्रशंसारूपं उपशुश्राव श्रुतवान् हर्म्यतलस्थो राजा जानश्रुतिः पौत्रायणः। तच्च हंसवाक्यं स्मरन्नेव पौनःपुन्येन रात्रिशेषमतिवाहयामास। ततः स बन्दिभी राजा स्तुतियुक्ताभिर्वाग्भिः प्रतिबोध्यमानः उवाच क्षत्तारं संजिहान एव शयनं निद्रां वा परित्यजन्नेव, हेऽङ्ग वत्स अरे ह सयुग्वानमिव रैक्वमात्थ किं माम्। स एव स्तुत्यर्हो नाहमित्यभिप्रायः। अथवा सयुग्वानं रैक्वमात्थ गत्वा मम तद्दिदृक्षां, तदा इवशब्दोऽवधारणार्थोऽनर्थको वा वाच्यः। स च क्षत्ता प्रत्युवाच रैक्वानयनकामो राज्ञोऽभिप्रायज्ञः—यो नु कथं सयुग्वा रैक्व इति, राज्ञा एवं चोक्तः आनेतुं तच्चिह्नं ज्ञातुमिच्छन् यो नु कथं सयुग्वा रैक्व इत्यवोचत्। स च भल्लाक्ष वचनमेवावोचत्। शंकर.

(२) 'वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते। जीविकावृत्तिरेतस्य राजान्तःपुररक्षणम् ॥' इत्युक्तरीत्या राज्ञोऽन्तःपुररक्षकः प्रतिलोमजातिविशेषः क्षत्ता। अरेऽङ्ग वत्सेति तं क्षत्तारं राजा संबोध्य रात्रावेवं हंसयोः संलापः समजनीति सयुग्वानमिव रैक्वमात्थेत्यादि

---

‡ रंग. शंकरवत्।

* 'अधरेयाः' इत्यत्र अवग्रहचिह्नं कुत्रापि पुस्तके नास्ति। 'अधरेयान् व्याकरोति' इतिटीकानुसारेणापि 'अधरेयाः' इत्यस्य अखण्डपदत्वमभिमतमिति प्रतिभाति।

(१) छाउ. ४।१।४; अशंकर. ४।१।१; रामानुज. १।१।१ (पृ. ९), ४।१।१.

‡ शेषं शंकरवत्।

* रामानुज. छाउ. ४।१।१ इत्यत्र द्रष्टव्यम्। अमध्व. श्रीकंठ. रामानुजवत्।

(१) छाउ. ४।१।५, ६; रंग. याधरेयाः (याधरेऽयाः); रामानुज. अमध्व. श्रीकंठ. १।३।३४; श्रीकर. ४।३।[illegible]

हंसोक्तिप्रत्युक्तिवाक्यानुवादपूर्वकं रैक्कस्य चिह्नमुक्तवानित्यर्थः । रंग.

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय । तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ॥

तस्य स्मरन् स ह क्षत्ता नगरं ग्रामं वा गत्वा अन्विष्य रैक्वं नाविदं न व्यज्ञासिषमिति प्रत्येयाय प्रत्यागतवान् । तं होवाच क्षत्तारम् — अरे यत्र ब्राह्मणस्य ब्रह्मविद एकान्ते अरण्ये नदीपुलिनादौ विविक्ते देशे अन्वेषणा अनुमार्गणं भवति, तत् तत्र एनं रैक्वं अर्च्छ ऋच्छ गच्छ, तत्र मार्गणं कुर्वित्यर्थः । * शंकर.

[2]सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश । तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इति । अहꣳ ह्यरा३ इति ह प्रतिजज्ञे । स ह क्षत्ताऽविदमिति प्रत्येयाय ॥

इत्युक्तः क्षत्ता अन्विष्य तं विजने देशेऽधस्ताच्छकटस्य गन्त्र्याः पामानं खर्जूं कषमाणं कण्डूयमानं दृष्ट्वा, अयं नूनं सयुग्वा रैक्व इति उप समीपे उपविवेश विनयेनोपविष्टवान् । तं च रैक्वं हाभ्युवाद उक्तवान् । त्वमसि हे भगवः भगवन् सयुग्वा रैक्व इति । एवं पृष्टोऽहमस्मि ह्यरा३ अरे इति ह अनादर एव प्रतिजज्ञेऽभ्युपगतवान् । स तं विज्ञाय अविदं विज्ञातवानस्मीति प्रत्येयाय प्रत्यागत इत्यर्थः । ‡ शंकर.

[3]तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे । तꣳ हाभ्युवाद ॥

(१) तत् तत्र ऋषेर्गार्हस्थ्यं प्रति अभिप्रायं बद्ध्वा धनार्थितां च उ ह एव जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कं कण्ठहारं अश्वतरीरथं अश्वतरीभ्यां युक्तं रथं तदादाय धनं गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान् । तं च गत्वा अभ्युवाद ह अभ्युक्तवान् । * शंकर.

(२) उ इत्यनर्थको निपातः । तत् तत्र जानश्रुतिः गवां षट्शतानि निष्कं कण्ठाभरणं अश्वतरीयुक्तरथं तदा गृहीत्वा रैक्वं प्रति गतवान् । गत्वा च राजा तं रैक्वमित्युवाचेत्यर्थः । रंग.

[1]रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथः । अनु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ॥

हे रैक्व गवां षट् शतानि इमानि तुभ्यं मया आनीतानि, अयं निष्कः अश्वतरीरथश्चायं एतद्धनमादत्स्व । भगवोऽनुशाधि च मे मामेतां, यां च देवतां त्वमुपास्से तद्देवतोपदेशेन मामनुशाधीत्यर्थः । ‡ शंकर.

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति । तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥

(१) तं एवमुक्तवन्तं राजानं प्रत्युवाच परो रैक्वः । अहेत्ययं निपातो विनिग्रहार्थीयोऽन्यत्र, इह त्वनर्थकः, एवशब्दस्य पृथक् प्रयोगात् । हारेत्वा हारेण युक्ता इत्वा गन्त्री सेयं हारेत्वा गोभिः सह तवैवास्तु तवैव तिष्ठतु न मम अपर्याप्तेन कर्मार्थमनेन प्रयोजनमित्यभिप्रायः । हे

---

* रंग. शंकरवत् ।

‡ रंग. शंकरवत् । अनादरत्वकल्पना नास्ति ।

(१) छाउ. ४।१।७.

(२) छाउ. ४।१।८.

(३) छाउ. ४।२।१; बलदेव. १।३।३४.

* ' तदादाय ' इत्यत्र ' तत् ' इति पदच्छेदः शंकराभिप्रेत इति भाति । रंगभाष्ये तु ' तदा ' इति छेदः स्पष्ट एव । अवग्रहचिह्नं तु कुत्रापि न कृतम् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ४।२।२; अशंकर. ४।१।१; रामानुज. १।१।१ ( पृ. ९ ), १।३।३३, ४।१।१; अमध्व. १।३।३५; श्रीकंठ. श्रीकर. ४।१।१; वल्लभ. १।३।३४ रैक्वे ( रयिक्के ).

(२) छाउ. ४।२।३; अशंकर. भास्कर. १।३।३४; रंग. रस्त्विति ( रस्तु ); रामानुज. १।३।३३; अमध्व. श्रीकर. वल्लभ. १।३।३४; विज्ञान. १।३।३४ चाह हारेत्वा ( चाहहाऽरे त्वा ).

शूद्रेति। ननु राजाऽसौ क्षत्तृसंबन्धात्, स ह क्षत्तारमुवाचेत्युक्तम्। विद्याग्रहणाय च ब्राह्मणसमीपोपगमात् शूद्रस्य च अनधिकारात् कथमिदमननुरूपं रैक्केणोच्यते, हे शूद्रेति। तत्राऽऽहुराचार्याः — हंसवचनश्रवणात् शुगेनमाविवेश। तेनासौ शुचा श्रुत्वा रैक्वस्य महिमानं वा द्रवतीति ऋषिरात्मनः परोक्षज्ञतां दर्शयन् शूद्रेत्याहेति। शूद्रवद्वा धनेनैव एनं विद्याग्रहणायोपजगाम न च शुश्रूषया। न तु जात्यैव शूद्र इति। अपरे पुनराहुरल्पं धनमाहृतमिति रुषैव एनमुक्तवान् शूद्रेति। लिङ्गं च बह्वाहरणे उपादानं धनस्येति। तदु ह ऋषेर्मतं ज्ञात्वा पुनरेव जानश्रुतिः पौत्रायणो गवां सहस्रमधिकं जायां च ऋषेरभिमतां दुहितरमात्मनः तदादाय प्रतिचक्रमे क्रान्तवान्।

शंकर.

(२) यथा मनुष्याधिकारनियमममपोह्य देवादीनामपि विद्यास्वधिकार उक्तः, तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते। तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम्। अर्थित्वसामर्थ्ययोः संभवात्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तैसं. ७।१।१।६) इतिवत् शूद्रो विद्यायामनवक्लृप्त इति च निषेधाश्रवणात्। यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं, न तद्विद्यास्वधिकारस्यापवादकं लिङ्गम्। न हि आहवनीयादिरहितेन विद्या वेदितुं न शक्यते। भवति च श्रौतं लिङ्गं शूद्राधिकारस्योपोद्बलकम्। संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति— 'अह हारेत्वा शूद्र तवैव सह गोभिरस्तु' इति। विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते। तस्मादधिक्रियते शूद्रो विद्यास्वित्येवं प्राप्ते ब्रूमः— न शूद्रस्याधिकारः, वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते। न च शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य, उपनयनस्य च वर्णत्रयविषयत्वात्। यत्तु अर्थित्वं, न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति। शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्, शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात्। यच्चेदं 'शूद्रो यज्ञेऽनवक्लृप्तः' (तैसं. ७।१।१।६) इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति न्यायस्य साधारणत्वात्। यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तल्लिङ्गं, न्यायाभावात्। न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति। न चात्र न्यायोऽस्ति। कामं चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात्, तद्विषयत्वात्, न सर्वासु विद्यासु। अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते। शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुम्। कथमित्युच्यते—'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थ' (छाउ. ४।१।३) इत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य 'शुक्' उत्पेदे, तामृषी रैक्वः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते, जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इत्युच्यते 'तदाद्रवणात्' शुचमभिदुद्राव, शुचा वा अभिदुद्रुवे, शुचा वा रैक्वमभिदुद्राव इति शूद्रः। अवयवार्थसंभवात्, रूढ्यर्थस्य चासंभवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम्।

* ब्रशंकर. १।३।३४

(३) आवासार्थं तत्रत्यं ग्रामं चोपाजहारेत्यर्थः।

† रंग.

(४) शोचतीति हि शूद्रः। 'शुचेर्दश्च' (उणा. सू. २।२१) इति रप्रत्यये धातोश्च दीर्घे चकारस्य दकारे शूद्र इति भवति। अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते न जातियोगः।

‡ रामानुज. १।३।३३

(५) 'अहहारे त्वा शूद्र तवैव सह गोभिरस्त्विति' अस्यार्थः—अरे शूद्र शूद्राचार त्वां अहहा धिगस्तु। किंच स त्वया आनीतो रथादिर्हं गोभि-

* भास्कर. ब्रशंकरवत्। ब्रमध्व. ब्रशंकरेण गतार्थम्। वल्लभ. ब्रशंकरवत्। संवर्गविद्याविषयत्वमात्रं विशेषः।

† शेषं शंकरेण गतार्थम्।

‡ ब्रशंकरवत्।

विदिष्टस्त्वैवास्तु नानेन मम प्रयोजनमिति ।

+ विज्ञान.

तं᳡ हाभ्युवाद । रैकेद᳡ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्से अन्वेव मा भगवः शाधीति ॥

तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति । ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास । तस्मै होवाच ॥

(१) रैक्व इह गवां सहस्रं अयं निष्कः अयमश्वतरीरथः इयं जाया जायार्थं मम दुहिता आनीता अयं च ग्रामः यस्मिन्नास्से तिष्ठसि स च त्वदर्थे मया कल्पितः । तदेतत्सर्वमादाय अनुशाध्येव मा मां हे भगवः, इत्युक्तः तस्या जायार्थमानीताया राज्ञो दुहितुः ह एव मुखं द्वारं विद्याया दाने तीर्थं उपोद्गृह्णन् जानन्नित्यर्थः । ‘ ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः । विद्यया वा विद्यां प्राह तानि तीर्थानि षण्मम ॥ ’ इति विद्याया वचनं विज्ञायते हि । एवं जानन् उपोद्गृह्णन् उवाच उक्तवान् । आजहार आहृतवान् भवान् यदिमाः गाः यच्चान्यद्धनं तन्मा-स्त्विति वाक्यशेषः । शूद्रेति पूर्वोक्तानुकृतिमात्रं न तु कारणान्तरापेक्षया पूर्ववत् । अनेनैव मुखेन विद्याग्रहण-तीर्थेन आलापयिष्यथाः आलापयसीति मां भाणयसी-त्यर्थः । ते हैते ग्रामा रैक्वपर्णा नाम विख्याता महा-वृषेषु देशेषु यत्र येषु ग्रामेषु उवास उषितवान् रैक्वः, तान् असौ ग्रामानदात् अस्मै रैक्वाय राजा । तस्मै राज्ञे धनं दत्तवते ह किल उवाच विद्यां स रैक्वः ।

शंकर.

(२) तस्या मुखमुपायनरूपोपायमङ्गीकुर्वन् उक्तवानित्यर्थः । इमा दक्षिणा आजहर्थ, आजहारेति व्यत्ययश्छान्दसः । अनेनैव मुखेनोपायेन मां ब्रह्मोप-देशरूपं वाक्यं आलापयिष्यसे ब्रह्मविद्योपदेष्टारं करि-ष्यसीत्यर्थः । ‘ शूद्रः ते ’ इत्येतद्भाव्यश्छान्दसः ।

* रंग.

वायुर्वाव संवर्गः । यदा वा अग्निरुद्वायति वायुमेवाप्येति । यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥

वायुर्वाव संवर्गः । वायुर्वाह्यः । वावेत्यवधारणार्थः । संवर्गः, संवर्जनात्संग्रहणात्संग्रसनाद्वा संवर्गः । वक्ष्य-माणा अग्न्याद्या देवता आत्मभावमापादयतीत्यतः संवर्गः । संवर्जनाख्यो गुणो ध्येयो वायोः, कृतायान्त-र्भावदृष्टान्तात् । कथं संवर्गत्वं वायोरित्याह — यदा यस्मिन्काले वा अग्निरुद्वायति उद्वासनं प्राप्नोति उप-शाम्यति, तदा असौ अग्निः वायुमेव अप्येति वायु-स्वाभाव्यमपिगच्छति । तथा यदा सूर्योऽस्तमेति, वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति । ननु कथं सूर्याचन्द्रमसोः स्वरूपावस्थितयोर्वायावपि-गमनम् । नैष दोषः । अस्तमनेऽदर्शनप्राप्तेर्वायुनिमित्त-त्वात् । वायुना हि अस्तं नीयते सूर्यः, चलनस्य वायु-कार्यत्वात् । अथवा प्रलये सूर्याचन्द्रमसोः स्वरूपभ्रंशे तेजोरूपयोर्वायावेव अपिगमनं स्यात् ।

+ शंकर.

यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति । वायुर्ह्येवैतान् सर्वान् संवृङ्क्ते । इत्यधिदैवतम् ॥

(१) तथा यदा आपः उच्छुष्यन्ति उच्छोषमा-प्नुवन्ति तदा वायुमेव अपियन्ति । वायुर्हि यस्मादेव एतान् अग्न्याद्यान् महाबलान् संवृङ्क्ते, अतो वायुः संवर्गगुण उपास्य इत्यर्थः । इत्यधिदैवतं देवतासु संवर्गदर्शनमुक्तम् ।

शंकर.

---

+ शेषं अशंकरवत् ।

(१) छाउ. ४।२।४, ५; रामानुज. १।३।३३; श्रीकंठ. १।३।३३, ३४; श्रीकर. १।३।३४, ३५.

* शेषं शंकरवत् । श्रीकंठ. पूर्ववाक्यगतअशंकरवत् ।

+ अशंकर ३।१।१ ( पृ. ७९२ ), ३।१८।१ ( पृ. ८१८) इत्यत्र द्रष्टव्यम् । भास्कर. ३।३।४३ अशंकरवत् । रंग शंकरेण गतार्थम् ।

(१) छाउ. ४।३।१; अशंकर. १।१।४, १।३।३१, ३।३।४३, ३।४।२४; भास्कर. ३।३।४३; श्रीकर. १।३।३१.

(२) छाउ. ४।३।२.

(२) प्रक्रमे हि 'एनꣳ सर्वं तदभिसमेति' इत्यादिब्रह्मविद्याप्रशंसावगमाद्वक्ष्यमाणलिङ्गानुपपत्तेश्च वायुशब्देन वायुशरीरकः परमात्मोच्यते।

† रंग.

**[४]अथाध्यात्मम्। प्राणोवाव संवर्गः। स यदा स्वपिति प्राणमेव वागप्येति। प्राणं चक्षुः। प्राणꣳ श्रोत्रम्। प्राणं मनः। प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति॥**

(१) अथ अनन्तरं अध्यात्मं आत्मनि संवर्गदर्शनमिदमुच्यते। प्राणो मुख्यः वाव संवर्गः। स पुरुषः यदा यस्मिन्काले स्वपिति, प्राणमेव वागप्येति वायुमिवाग्निः। प्राणं चक्षुः। प्राणं श्रोत्रम्। प्राणं मनः। प्राणो हि यस्मादेवैतान् वागादीन् सर्वान् संवृङ्क्ते इति।

* शंकर.

(२) अत्रापि प्राणशब्दस्तच्छरीरकपरमात्मपरो द्रष्टव्यः।

† रंग.

**[२]तौ वा एतौ द्वौ संवर्गौ। वायुरेव देवेषु प्राणः प्राणेषु॥**

तौ वा एतौ द्वौ संवर्गौ संवर्जनगुणौ। वायुरेव देवेषु संवर्गः प्राणः प्राणेषु वागादिषु मुख्यः।

शंकर.

**[३]अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे। तस्मा उ ह न ददतुः॥**

(१) अथ एतयोः स्तुत्यर्थमियमाख्यायिका आरभ्यते। हेत्यैतिह्यार्थः। शौनकं च शुनकस्यापत्यं शौनकं कापेयं कपिगोत्रमभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं भोजनायोपविष्टौ परिविष्यमाणौ सूपकारैः ब्रह्मचारी ब्रह्मविच्छौण्डो बिभिक्षे भिक्षितवान्। ब्रह्मचारिणो ब्रह्मविन्मानितां बुद्ध्वा तं जिज्ञासमानौ तस्मै उ भिक्षां न ददतुः न दत्तवन्तौ ह किमयं वक्ष्यतीति।

* शंकर.

(२) इतश्च न जातिशूद्रो जानश्रुतिः। यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्य 'उत्तरत्र चैत्ररथेन' अभिप्रतारिणा क्षत्रियेण समभिव्याहारात् 'लिङ्गात्' गम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः संकीर्त्यते—'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' इति। चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम्। कापेययोगो हि चित्ररथस्यावगतः—'एतेन वै चित्ररथं कापेया अयाजयन्' (ताब्रा. २०।१२।५) इति। समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति। 'तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत' (ताब्रा. २०।१२।५) इति च क्षत्रपतित्वावगमात् क्षत्रियत्वमस्यावगन्तव्यम्। तेन क्षत्रियेणाभिप्रतारिणा सह समानायां संवर्गविद्यायां संकीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति। समानानामेव हि प्रायेण समभिव्याहारा भवन्ति। क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः। अतो न शूद्रस्याधिकारः।

+ ब्रशंकर. १।३।३५

(३) कथं पुनरभिप्रतारिणश्चैत्ररथत्वं कापेयेन शौनकेन योगात् 'एतेन वै चैत्ररथं कापेया अयाजयन् ...'। ‡ भास्कर. १।३।३५

(४) अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायामुत्तरत्रकीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेण अस्य क्षत्रियत्वं गम्यते। कथम्। 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' (छाउ. ४।३।५) इत्यादिना 'ब्रह्मचारिन्नेदमुपास्महे' (छाउ. ४।३।७)

---

† शेषं शंकरवत्।

* ब्रशंकर. ३।१८।१ (पृ. ७१७) इत्यत्र द्रष्टव्यम्।

(१) छाउ. ४।३।३; ब्रशंकर. १।१।४, ३।३।५८.

(२) छाउ. ४।३।४; ब्रशंकर. भास्कर. ३।३।४३.

(३) छाउ. ४।३।५; ब्रशंकर. भास्कर. रामानुज. निंबार्क. श्रीकंठ. श्रीकर. वल्लभ. विज्ञान. १।३।३५.

* रंग शंकरवत्।

+ इतश्चेति चकारसमुच्चितोऽर्थः छाउ. ४।२।३ इत्यत्र द्रष्टव्यः।

‡ शेषं ब्रशंकरवत्। निंबार्क. भास्करवत्।

इत्यनेन कापेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासंबन्धित्वं प्रतीयते। तेषु चाभिप्रतारी क्षत्रियः इतरौ ब्राह्मणौ। अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते न शूद्रस्य। अतोऽस्यां विद्यायामन्वितादेकाद्ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तं न चतुर्थवर्णत्वम्। * रामानुज. १।३।३५

( ५ ) तथापि संवर्गविद्यायां शूद्रस्यैवाधिकार मन्वानस्य निराकरणार्थं हेतुमाह — उत्तरत्र चैत्ररथेन लिङ्गात्। 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं' इत्युत्तरत्र ब्राह्मणक्षत्रियौ तौ निर्दिष्टौ। कक्षा सेना यस्येति। कक्षसेनस्यापत्यं काक्षसेनिरिति। अस्य व्याख्यानं, चैत्ररथ इति। चित्रा रथा यस्य तस्यापत्यं, तेन चैत्ररथेन। कक्षारूपा रथा इति व्याख्यानम्। 'एतेन वै चित्ररथं कापेया अयाजयन्' इति। शौनकश्च कापेयो याजकश्च। याज्यश्च चित्ररथस्य पुत्रः काक्षसेनिरिति। ब्रह्मचारी ब्रह्मवित्। इमौ तु संवर्गविद्योपासकौ। प्राणाय हि भिक्षा। तस्मान्न ददतुः। उभावपि श्लोकौ भगवतः। तेन प्रकृतेऽप्येतौ गुरुशिष्यौ ब्राह्मणक्षत्रियावेवेति गम्यते। तस्मान्न जातिशूद्रः संवर्गविद्यायामधिकारी। वल्लभ. १।३।३५

[ टीका — काक्षसेनिपदस्य कथं चित्ररथपदव्याख्यानत्वमित्यत आहुः। कक्षारूपा इत्यादि। 'कक्षः स्यादन्तरीयस्य पश्चादञ्चलपल्लवे। स्पर्धापदे च दोर्मूले' इति कोशे स्पर्धास्थानं कक्षापदेनोच्यते। तथा च चित्रत्वात् स्पर्धास्थानरूपा रथा इति हेतोः कक्षापदं चित्रपदव्याख्यानम्। सेनापदं च रथपदव्याख्यानमित्यर्थः। भाष्यप्रकाशः ]

( ६ ) 'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्' इति जानश्रुतेः समभिव्याहारोऽस्ति। तत्र बहुदृश्वाचार्यवचनात् शौनकाभिप्रतारिणोरन्यतरश्चैत्ररथः क्षत्रिय इत्यनुमेयम्।

+ विज्ञान. १।३।१५

स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः। तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तम्। यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥

( १ ) स होवाच ब्रह्मचारी। महात्मनश्चतुर इति द्वितीयाबहुवचनम्। देव एकः अग्न्यादीन्वायुर्वागादीन् प्राणः। कः स प्रजापतिः, जगार ग्रसितवान्। कः स जगारेति प्रश्नमेके। भुवनस्य, भवन्त्यस्मिन् भूतानीति भुवनं भूरादिः सर्वो लोकः, तस्य गोपाः गोपायिता रक्षिता गोप्तेत्यर्थः। तं कं प्रजापतिं हे कापेय नाभिपश्यन्ति न जानन्ति मर्त्याः मरणधर्माणोऽविवेकिनो वा हे अभिप्रतारिन् बहुधाऽध्यात्माधिदैवताधिभूतप्रकारैर्वसन्तम्। यस्मै वै एतत् अहन्यहनि अन्नं अदनाय आह्रियते संस्क्रियते च, तस्मै प्रजापतये एतदन्नं न दत्तमिति। शंकर.

( २ ) अतः केऽपि न जानन्तीत्युपासनादार्ढ्यायत्तोपास्यैक्यबुद्ध्या भिक्षमाणाय स्वस्मा अप्रदानमेव स्वोपास्यदेवताया अप्रदानं मत्वा तस्मा एतन्न दत्तमिति तौ निन्दितवानित्यर्थः। * रंग.

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय। आत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिः। महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे। दत्तास्मै भिक्षामिति ॥

( १ ) तदु ह ब्रह्मचारिणो वचनं शौनकः कापेयः प्रतिमन्वानः मनसा आलोचयन् ब्रह्मचारिणं प्रत्येयाय आजगाम। गत्वा च आह यं त्वमवोचः नाभिपश्यन्ति मर्त्या इति, तं वयं पश्यामः। कथम्। आत्मा सर्वस्य स्थावरजङ्गमस्य। किं च देवानामग्न्यादीनां आत्मनि संहृत्य ग्रसित्वा पुनर्जनिता उत्पादयिता वायुरूपेणाधिदैवतमग्न्यादीनाम्। अध्यात्मं च प्राणरूपेण वागादीनां प्रजानां च जनिता। अथवा आत्मा देवा-

---

* शेषं भास्करवत्। श्रीकंठ. उद्धृतरामानुजवत्, शेषं ब्रशंकरवच्च।

+ शेषं ब्रशंकरेण गतार्थम्। बहुदृश्वाचार्यः, तद्वचनं

* शंकरवत्।

(१) छाउ. ४।३।६; ब्रसंकर. १।३।४३.

(२) छाउ. ४।३।७; रामानुज. १।३।३५.

नामग्निवागादीनां जनिता प्रजानां स्थावरजङ्गमानाम्। हिरण्यदंष्ट्रः अमृतदंष्ट्रः अभग्नदंष्ट्र इति यावत्। बभसो भक्षणशीलः। अनसूरिः सूरिर्मेधावी न सूरिरसूरिः तत्प्रतिषेधोऽनसूरिः सूरिरेवेत्यर्थः। महान्तमतिप्रमाणमप्रमेयमस्य प्रजापतेर्महिमानं विभूतिं आहुर्ब्रह्मविदः। यस्मात् स्वयमन्यैरनद्यमानः अभक्ष्यमाणः यदनन्नं अग्निवागादिदेवतारूपं अत्ति भक्षयतीति। वा इति निरर्थकः। वयं हे ब्रह्मचारिन्, आ, इदमेवं यथोक्तलक्षणं ब्रह्म वयमा उपास्महे। वयमिति व्यवहितेन संबन्धः। अन्ये न वयमिदमुपास्महे। किं तर्हि, परमेव ब्रह्म उपास्महे इति वर्णयन्ति। दत्तास्मै भिक्षामित्यवोचद्भृत्यान्।

शंकर.

(२) कापेयः शौनकः तद्ब्रह्मचारिणोक्तं प्रतिमन्वानः मनसा आलोचयंस्तत्समीपं प्रत्यागत्योवाच—आत्मा देवानामिति। देवानां नियन्ता प्रजानामुत्पादकः कमनीयदंष्ट्रायुक्तो हिरण्यविदारकदंष्ट्रायुक्त इति वा। बभसो भक्षणशीलोऽसुरसंहारक इति यावत्। असूरिः अविपश्चिन्न भवतीत्यनसूरिः विपश्चिदिति यावत्। अस्य च नृसिंहस्य परमात्मनो महिमानं महान्तमाहुः। यत्स्वयमन्यैरनद्यमानोऽनाश्यमानोऽनन्नं वागादिकं नाशयत्येवंभूतः परमात्मैव संवर्गो न त्वदुक्तः प्रजापतिरित्यर्थः। अतो वयं न त्वदुक्तं प्रजापतिरूपं संवर्गमुपास्महे। अपि तु परमात्मानमेव। अतस्त्वं संवर्गं यथावन्न जानासीत्युक्त्वाऽस्मै भिक्षां प्रयच्छतेति परिचारकानाहतुरित्यर्थः। अनेन संवर्गविद्याया वायुप्राणशरीरकपरत्वमाविष्कृतं भवति।

रंग.

**तस्मा उ ह ददुः। ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्। तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतम्। सैषा विराडन्नादी। तयेद्ँ सर्वं दृष्टम्। सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद॥**

(१) तस्मा उ ह ददुस्ते हि भिक्षाम्। ते वै ये अश्नन्ते अग्न्यादयः यश्च तेषां अशिता वायुः पञ्चान्ये वागादिभ्यः, तथाऽन्ये तेभ्यः पञ्चाध्यात्मं वागादयः प्राणश्च, ते सर्वे दश भवन्ति संख्यया, दश सन्तस्तत्कृतं भवति ते, चतुरङ्क एकायः एवं चत्वारः, त्र्यङ्कायः एवं त्रयोऽपरे, द्व्यङ्कायः एवं द्वावन्यौ, एकाङ्कायः एवमेकोऽन्यः इत्येवं दश सन्तस्तत्कृतं भवति। यत एवं, तस्मात्सर्वासु दिक्षु दशस्वप्यग्न्याद्या वागाद्याश्च दशसंख्यासामान्यादन्नमेव, 'दशाक्षरा विराट्' 'विराडन्नम्' इति हि श्रुतिः। अतोऽन्नमेव, दशसंख्यत्वात्। तत एव दश कृतं कृतेऽन्तर्भावाच्चतुरङ्कायत्वेनेत्यवोचाम। सैषा विराट् दशसंख्या सती अन्नं च अन्नादी अन्नादिनी च कृतत्वेन। कृते हि दशसंख्याऽन्तर्भूता, अतोऽन्नमन्नादिनी च सा। तथा विद्वान् दशदेवतात्मभूतः सन् विराट्त्वेन दशसंख्यया अन्नं कृतसंख्यया अन्नादी च। तयाऽन्नान्नादिन्या इदं सर्वं जगत् दशदिक्संस्थं दृष्टं कृतसंख्याभूतयोपलब्धम्। एवंविदोऽस्य सर्वं कृतसंख्याभूतस्य दशदिक्संबद्धं दृष्टमुपलब्धं भवति। किंच अन्नादश्च भवति, य एवं वेद यथोक्तदर्शी। द्विरभ्यासः उपासनसमाप्त्यर्थः।

शंकर.

(२) तदुपासकस्य सार्वज्ञ्यं ब्रह्मलक्षणान्नानुभवश्च भवतीत्यर्थः।

* रंग.

(षोडशकलविद्या)

षोडशधाप्रविभक्तजगद्विषयिणी

ब्रह्मोपासना साख्याना

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे। ब्रह्मचर्यं भवति विवत्स्यामि। किंगोत्रो न्वहमस्मीति॥**

सर्वं वागाद्यग्न्यादि च अन्नान्नादत्वसंस्तुतं जगदेकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिर्विधातव्येत्यारभ्यते। श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनाय आख्यायिका। सत्यकामो ह नामतः, हशब्दः ऐतिह्यार्थः, जबालाया अपत्यं जाबालः जबालां स्वां मातरं आमन्त्रयांचक्रे आमन्त्रितवान्। ब्रह्मचर्यं स्वाध्यायग्रहणाय हे भवति विवत्स्यामि आचार्यकुले, किंगोत्रोऽहं

(१) छाउ. ४।३।८; ब्रसंकर. १।१।२५, ३।३।४३; भास्कर. १।१।२५; रामानुज, श्रीकंठ. १।१।२६.

* शेषं शंकरवत्।

(१) छाउ. ४।४।१; वल्लभ. १।३।३७.

किमस्य मम गोत्रं सोऽहं किंगोत्रो नु अहमस्मीति।

* शंकर.

सा हैनमुवाच। नाहमेतद्वेद तात यद्गोत्रस्त्वमसि। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नाम त्वमसि। स सत्यकाम एव जाबालो ब्रुवीथा इति ॥

एवं पृष्टा जबाला सा ह एनं पुत्रमुवाच—नाहमेतत्तव गोत्रं वेद, हे तात यद्गोत्रस्त्वमसि। कस्मान्न वेत्सीत्युक्ताऽऽह—बहु भर्तृगृहे परिचर्याजातमतिथ्यभ्यागतादि चरन्ती अहं परिचारिणी परिचरन्तीति परिचरणशीलैवाहं, परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत्। यौवने च तत्काले त्वामलभे लब्धवत्यस्मि। तदैव ते पितोपरतः। अतोऽनाथा अहं साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि, सत्यकामो नाम त्वमसि, स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः। यद्याचार्येण पृष्ट इत्यभिप्रायः।

* शंकर.

स ह हारिद्रुमतं गौतममेत्योवाच[1]। ब्रह्मचर्यं भगवति वत्स्यामि। उपेयां भगवन्तमिति ॥

तँ होवाच किंगोत्रो नु सोम्यासीति। स होवाच। नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि। अपृच्छं मातरम्। सा मा प्रत्यब्रवीत्। बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि। सत्यकामो नाम त्वमसीति। सोऽहँ सत्यकामो जाबालोऽस्मि भो इति ॥

(१) स ह सत्यकामः हारिद्रुमतं, हरिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रतः एत्य गत्वा उवाच—ब्रह्मचर्यं भगवति पूजावति त्वयि वत्स्यामि, अतः उपेयां उपगच्छेयं शिष्यतया भगवन्तं इत्युक्तवन्तं तं ह उवाच गौतमः—किंगोत्रो नु सोम्यासीति, विज्ञातकुलगोत्रः शिष्य उपनेतव्यः। इति पृष्टः सत्यकामः। स होवाच—नाहमेतद्वेद भो, यद्गोत्रोऽहमस्मि। किं त्वपृच्छं पृष्टवानस्मि मातरम्। सा मया पृष्टा मां प्रत्यब्रवीन्माता। बह्वहं चरन्तीत्यादि पूर्ववत्। तस्या अहं वचः स्मरामि। सोऽहं सत्यकामो जाबालोऽस्मि भो इति।

शंकर.

(२) ज्ञातकुलगोत्र उपनेतव्यः। अन्ततः शूद्रत्वाभावो हि निश्चेतव्य इत्यभिप्रायः।

* रंग.

तँ होवाच। नैतदब्राह्मणो विवक्तुमर्हति। समिधँ सोम्याऽऽहर। उप त्वा नेष्ये न सत्यादगा इति। तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति। ताः अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तेयेति। स ह वर्षगणं प्रोवास। ता यदा सहस्रँ संपेदुः ॥

(१) तं ह उवाच गौतमः—नैतद्वचः अब्राह्मणो विशेषेण वक्तुमर्हति आर्जवार्थसंयुक्तम्। ऋजवो हि ब्राह्मणा नेतरे स्वभावतः। यस्मान्न सत्यात् ब्राह्मणजातिधर्मात् अगाः नापेतवानसि। अतो ब्राह्मणं त्वामुपनेष्ये। अतः संस्कारार्थं होमाय समिधं सोम्य आहर, इत्युक्त्वा तमुपनीय कृशानामबलानां गोयूथान्निराकृत्य अपकृष्य चतुःशता चत्वारि शतानि गवामुवाच—इमा गाः सोम्य अनुसंव्रज अनुगच्छ। इत्युक्तस्ता अरण्यं प्रत्यभिप्रस्थापयन्नुवाच — नासहस्रेण अपूर्णेन सहस्रेण नाऽऽवर्तेय न प्रत्यागच्छेयम्। स एवमुक्त्वा गाः अरण्यं तृणोदकबहुलं द्वन्द्वरहितं प्रवेश्य स ह वर्षगणं दीर्घं प्रोवास प्रोषितवान्। ताः सम्यग्गावः रक्षिताः यदा यस्मिन्काले सहस्रं संपेदुः संपन्ना बभूवुः।

शंकर.

(२) अत्र ब्राह्मणशब्दस्त्रैवर्णिकमात्रपरः। अत्रैवर्णिकः शूद्र इति यावत्। शूद्रो न विवक्तुमर्हति, शूद्राणां कुटिलस्वभावत्वादिति भावः।

* रंग.

---

* रंग. शंकरवत्।

(१) छाउ. ४।४।२; बलदेव. १।३।३७.

(२) छाउ. ४।४।३.

(३) छाउ. ४।४।४; ब्रमध्व. श्रीकर. १।३।३७.

* शेषं शंकरवत्।

(१) छाउ. ४।४।५; ब्रशांकर. भास्कर. १।३।३७; रामानुज. १।३।३६, ३७; ब्रमध्व. १।३।३७; श्रीकंठ. १।३।३६, ३७; श्रीकर. विज्ञान. १।३।३७.

[१]अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव । प्राप्ताः सोम्य सहस्रँ स्मः । प्रापय न आचार्यकुलम् ॥

(१) तमेतं श्रद्धातपोभ्यां सिद्धं वायुदेवता दिक्संबन्धिनी तुष्टा सती ऋषभमनुप्रविश्य ऋषभभावमापन्ना अनुग्रहाय अथ हैनमृषभोऽभ्युवाद अभ्युक्तवान् सत्यकाम३ इति संबोध्य । तं असौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ । प्राप्ताः सोम्य सहस्रं स्मः, पूर्णा तव प्रतिज्ञा, अतः प्रापय नः अस्मान् आचार्यकुलम् ।

शंकर.

(२) एनं गवां संरक्षणेन प्रीतदेवताविशेषाधिष्ठितर्षभः सत्यकाम३ इत्यामन्त्रितवान् ।

* रंग.

[२]ब्रह्मणश्च ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । प्राची दिक्कला । प्रतीची दिक्कला । दक्षिणा दिक्कला । उदीची दिक्कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥

(१) किंच अहं ब्रह्मणः परस्य ते तुभ्यं पादं ब्रवाणि कथयानि । इत्युक्तः प्रत्युवाच—ब्रवीतु कथयतु मे मह्यं भगवान् । इत्युक्तः ऋषभः तस्मै सत्यकामाय होवाच—प्राची दिक्कला ब्रह्मणः पादस्य चतुर्थो भागः । तथा प्रतीची दिक्कला दक्षिणा दिक्कला उदीची दिक्कला, एष वै सोम्य ब्रह्मणः पादश्चतुष्कलः, चतस्रः कला अवयवा यस्य सोऽयं चतुष्कलः, पादो ब्रह्मणः प्रकाशवान्नाम प्रकाशवानित्येव नाम अभिधानं यस्य । तथोत्तरेऽपि पादास्त्रयश्चतुष्कला ब्रह्मणः ।

शंकर.

(२) एकैकस्य हि गोः पादस्य चत्वारोऽवयवाः, पुरतः खुरद्वयं पृष्ठतः पार्ष्णिद्वयं च, अतः पादश्चतुष्कलो भवति ।

* रंग.

[१]स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति । प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥

स यः कश्चित् एवं यथोक्तमेतं ब्रह्मणश्चतुष्कलं पादं विद्वान् प्रकाशवानित्यनेन गुणेन विशिष्टमुपास्ते, तस्येदं फलम्—प्रकाशवानस्मिंल्लोके भवति प्रख्यातो भवतीत्यर्थः । तथाऽदृष्टं फलम्—प्रकाशवतः ह लोकान् देवादिसंबन्धिनः मृतः सन् जयति प्राप्नोति । य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ।

* शंकर.

[२]अग्निष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयांचकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥

सोऽग्निः ते पादं वक्तेत्युपरराम ऋषभः । स सत्यकामः ह श्वोभूते परेद्युर्नैत्यकं नित्यं कर्म कृत्वा गाः अभिप्रस्थापयांचकार आचार्यकुलं प्रति । ताः शनैश्चरन्त्यः आचार्यकुलाभिमुख्यः प्रस्थिताः यत्र यस्मिन्काले देशेऽभि सायं निशायामभिसंबभूवुः एकत्राभिमुख्यः संभूताः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङ्मुख उपविवेश ऋषभवचो ध्यायन् ।

* शंकर.

[३]तमग्निरभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥

तमग्निरभ्युवाद सत्यकाम३ इति संबोध्य । तं असौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ ।

‡ शंकर.

[४]ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । पृथिवी कला । अन्तरिक्षं कला । द्यौः कला । समुद्रः कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥

---

* शेषं शंकरवत् ।

(१) छाउ. ४।५।१.

(२) छाउ. ४।५।२.

* रंग. शंकरवत् ।

‡ रंग. इत आरभ्य आऽष्टमखण्डसमाप्तेः न व्याख्यातम् ।

(१) छाउ. ४।५।३.

(२) छाउ. ४।६।१.

(३) छाउ. ४।६।२.

(४) [redacted]

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच, पृथिवी कला अन्तरिक्षं कला द्यौः कला समुद्रः कलेत्यग्निगोचरमेव दर्शनमग्निरब्रवीत् । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ।

शंकर.

[1]स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवति । अनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥

स यः कश्चिद्यथोक्तं पादं अनन्तवत्त्वेन गुणेनोपास्ते स तथैव तद्गुणो भवत्यस्मिंल्लोके, मृतश्च अनन्तवतो ह लोकान् स जयति । य एतमेवमित्यादि पूर्ववत् ।

शंकर.

हꣳसस्ते पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयांचकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥

सोऽग्निः हंसः ते पादं वक्तेत्युक्त्वोपरराम । हंसः आदित्यः, शौक्ल्यात्पतनसामान्याच्च । स ह श्वोभूते इत्यादि समानम् ।

शंकर.

[3]ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । अग्निः कला । सूर्यः कला । चन्द्रः कला । विद्युत्कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति । ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥

अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्येति ज्योतिर्विषयमेव च दर्शनं प्रोवाच । अतो हंसस्याऽऽदित्यत्वं प्रतीयते । विद्युत्कलम् — ज्योतिष्मान् दीप्तियुक्तोऽस्मिंल्लोके भवति । चन्द्रादित्यादीनां ज्योतिष्मत एव च मृत्वा लोकान् जयति । समानमन्यत् ।

शंकर.

[1]मद्गुष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थापयांचकार । ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥

हंसोऽपि मद्गुष्टे पादं वक्तेत्युपरराम । मद्गुः उदकचरः पक्षी, स चाप्संबन्धात्प्राणः । स ह श्वोभूते इत्यादि पूर्ववत् ।

शंकर.

[2]तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच । प्राणः कला । चक्षुः कला । श्रोत्रं कला । मनः कला । एष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥

स च मद्गुः प्राणः स्वविषयमेव च दर्शनमुवाच प्राणः कलेत्यादायतनवानित्येवं नाम । आयतनं नाम मनः सर्वकरणोपहृतानां भोगानां तद्यस्मिन्पादे विद्यते इत्यायतनवान्नाम पादः ।

शंकर.

[3]स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवति । आयतनवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥

तं पादं तथैवोपास्ते यः स आयतनवान् आश्रयवानस्मिंल्लोके भवति । तथाऽऽयतनवत एव सावकाशाँल्लोकान् मृतो जयति । य एतमेवमित्यादि पूर्ववत् ।

शंकर.

(१) छाउ. ४।६।४.
(२) छाउ. ४।७।१, २.
(३) छाउ. ४।७।३, ४.

(१) छाउ. ४।८।१.
(२) छाउ. ४।८।२, ३.
(३) छाउ. ४।८।४.

प्राप हाऽऽचार्यकुलम् । तमाचार्योऽभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥

स एवं ब्रह्मवित्सन् प्राप ह प्राप्तवानाचार्यकुलम् । तमाचार्योऽभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव । शंकर.

ब्रह्मविदिव वै सोम्य भासि । को नु त्वाऽनुशशासेति । अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे । भगवाꣳस्त्वेव मे कामे ब्रूयात् ॥

ब्रह्मविदिव वै सोम्य भासि । प्रसन्नेन्द्रियः प्रहसितवदनश्च निश्चिन्तः कृतार्थो ब्रह्मविद्भवति । अत आह आचार्यो ब्रह्मविदिव भासीति । को न्विति वितर्कयन्नुवाच —कस्त्वामनुशशासेति । स च आह सत्यकामः अन्ये मनुष्येभ्यः । देवता मामनुशिष्टवत्यः । कोऽन्यो भगवच्छिष्यं मां मनुष्यः सन्ननुशासितुमुत्सहेतेत्यभिप्रायः । अतोऽन्ये मनुष्येभ्य इति ह प्रतिजज्ञे प्रतिज्ञातवान् । भगवांस्त्वेव मे कामे ममेच्छायां ब्रूयात्किमन्यैरुक्तेन, नाहं तद्गणयामीत्यभिप्रायः । * शंकर.

श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति । तस्मै हैतदेवोवाच । अत्र ह न किंचन वीयायेति वीयायेति ॥

( १ ) किंच श्रुतं हि यस्मान्मम विद्यते एवास्मिन्नर्थे भगवद्दृशेभ्यो भगवत्समेभ्य ऋषिभ्यः । आचार्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापति प्राप्नोतीति । अतो भगवानेव ब्रूयादित्युक्त आचार्यः अब्रवीत्तस्मै तामेव दैवतैरुक्तां विद्याम् । अत्र ह न किंचन षोडशकलविद्यायाः किंचिदेकदेशमात्रमपि न वीयाय न विगतमित्यर्थः । द्विरभ्यासो विद्यापरिसमाप्त्यर्थः । शंकर.

( २ ) तदेवान्यूनानतिरिक्तमुवाचेत्यर्थः । तत्र हेतुमाह— अत्र ह नेति । अत्र षोडशकलविद्यायां किंचिदपि न वीयाय वैविध्यं न प्राप्तम् । अतो हेतोर्विद्याप्रकारे भेदाभावादन्यूनानतिरिक्तं तदेवोवाचेत्यर्थः । + रंग.

( ३ ) गुरुप्रसादः स्वप्रयत्नो वा बलवानिति निगद्यते—‘ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ’ — ऋषभादिभ्यो विद्यां ज्ञात्वाऽपि सत्यकामेन भगवांस्त्वेव मे कामं ब्रूयात् ‘ श्रुतं ह्येव मे भगवद्दृशेभ्यः आचार्याद्धयेव विद्या विदिता साधिष्ठं प्रापयति’ इति वचनात् । ‘अत्र ह न किंचन वीयाय ’ इत्यनुज्ञानादुपकोसलवचनाच्च लिङ्गभूयस्त्वाद्गुरुप्रसाद एव बलवान् । तर्हि तावता अलमिति न मन्तव्यम् । ‘श्रोतव्यो मन्तव्यः ’ इत्यादेतस्दपि कर्तव्यम् । वाराहे च–‘ गुरुप्रसादो बलवान्न तस्माद्बलवत्तरम् । तथापि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये ॥ ’ इति । ब्रमध्व. ३।३।४५

( उपकोसलविद्या )

४।१०–१५

प्राणकखान्यालम्ब्य ब्रह्मोपासना

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार । स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥

( १ ) पुनर्ब्रह्मविद्यां प्रकारान्तरेण वक्ष्यामीत्यारभते गतिं च तद्विदोऽग्निविद्यां च । आख्यायिका पूर्ववच्छ्रद्धातपसोर्ब्रह्मविद्यासाधनत्वप्रदर्शनार्था । उपकोसलो ह वै नामतः कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य, ह ऐतिह्यार्थः, तस्य आचार्यस्य द्वादश वर्षाण्यग्नीन् परिचचार अग्नीनां परिचरणं कृतवान् । स ह स्म आचार्यः अन्यान् ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयन् तमेवोपकोसलमेकं न समावर्तयति स्म ह । शंकर.

( २ ) स्वाध्यायार्थिन इतरान् ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयन् तं ब्रह्मविद्यार्थिनं

---

* रंग शंकरवत् ।

(१) छाउ. ४।९।१; बलदेव. ३।३।४५.

(२) छाउ. ४।९।२; ब्रमध्व. ३।३।४५.

(३) छाउ. ४।९।३; रंग. प्रापतीति ( प्रापदिति ); रामानुज. १।२।१५ प्रापतीति ( प्रापयति ); ब्रमध्व. ३।३।४५ रामानुजवत्.

+ शेषं शंकरवत् ।

(१) छाउ. ४।१०।१; रंग. कोसलो ( कोशलो ); बलदेव. ३।३।४५.

ज्ञात्वा चिरसेवामन्तरेण ब्रह्मविद्या नोपदेष्टव्येति मत्वा तमेव न समावर्तयति स्म।

* रंग.

[१]तं जायोवाच । तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीत् । मा त्वाऽग्नयः परिप्रवोचन् । प्रब्रूह्यस्मा इति । तस्मै हाप्रोवाच्यैव प्रवासांचक्रे ॥

तमाचार्यं जायोवाच—ततो ब्रह्मचारी कुशलं सम्यगग्नीन् परिचचारीत् परिचरितवान् । भगवांश्च अग्निनु भक्त न समावर्तयति। अतोऽस्मद्भक्तं न समावर्तयतीति ज्ञात्वा त्वां अग्नयः मा परिप्रवोचन् गर्हां तव मा कुर्युः । अतः प्रब्रूह्यस्मै विद्यामिष्टां उपकोसलायेति । तस्मै एवं जाययोक्तोऽपि ह अप्रोच्यैव अनुक्त्वैव किंचित्प्रवासांचक्रे प्रवसितवान्।

+ शंकर.

[२]स ह व्याधिनाऽनशितुं दध्रे । तमाचार्यजायोवाच । ब्रह्मचारिन्नशान । किं नु नाश्नासीति । स होवाच । बहव इमेऽस्मिन्पुरुषे कामा नानात्ययाः। व्याधिभिः प्रतिपूर्णोऽस्मि । नाशिष्यामीति ॥

(१) स ह उपकोसलः व्याधिना मानसेन दुःखेन अनशितुं अनशनं कर्तुं दध्रे धृतवान्मनः। तं तूष्णीमग्न्यागारेऽवस्थितमाचार्यजायोवाच— हे ब्रह्मचारिन् अशान भुङ्क्ष्व किं नु कस्मान्नु कारणान्नाश्नासीति । स होवाच —बहवः अनेकेऽस्मिन्पुरुषेऽकृतार्थे प्राकृते कामाः इच्छाः कर्तव्यं प्रति नाना अत्ययः अतिगमनं येषां व्याधीनां कर्तव्यचिन्तानां ते नानात्ययाः व्याधयः कर्तव्यताप्राप्तिनिमित्तानि चित्तदुःखानीत्यर्थः । तैः प्रतिपूर्णोऽस्मि । अतो नाशिष्यामीति ।

शंकर.

(२) स उपकोसलो मानसेन दुःखेन पीडितः सन् अनशनायावतस्थे । धृङवस्थाने इति हि धातुः। तमिति । स्पष्टोऽर्थः। अस्मिन् जीवे ब्रह्मप्राप्तिव्यतिरिक्ताः काम्यन्त इति विषयाः नानाविधकर्मजन्मजरामरणादिलक्षणफलजनकाः मनसि विपरिवर्तमानाः सन्ति । अनन्तदुःखमयरूपव्याधिभिः पूर्णोऽस्मि । अतो न भुञ्जे इति प्रत्युवाचेत्यर्थः ।

रंग.

[१]अथ हाग्नयः समूदिरे । तप्तो ब्रह्मचारी कुशलं नः पर्यचारीत् । हन्तास्मै प्रब्रवामेति । तस्मै होचुः । प्राणो ब्रह्म । कं ब्रह्म । खं ब्रह्मेति ॥

(१) उक्त्वा तूष्णींभूते ब्रह्मचारिणि, अथ ह अग्नयः शुश्रूषयाऽऽवर्जिताः कारुण्याविष्टाः सन्तः त्रयोऽपि समूदिरे संभूयोक्तवन्तः—हन्त इदानीं अस्मै ब्रह्मचारिणेऽस्मद्भक्ताय दुःखिताय तपस्विने श्रद्दधानाय सर्वेऽनुशास्मः अनुप्रब्रवाम ब्रह्मविद्यामिति । एवं संप्रधार्य तस्मै ह ऊचुः उक्तवन्तः—प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ।

शंकर.

(२) तत्र सूत्रात्मा समस्तजगद्विधारयिता प्राण इति निर्दिश्यते । तद्विशिष्टं ब्रह्म उपास्यमित्यर्थः ।

भास्कर. १।२।१५

(३) अत्रायमभिप्रायः—न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिधीयते, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्मोक्षोपदेशाय प्रवृत्तत्वात् । अतो ब्रह्मैवोपास्यमुपदिष्टम् ।

* रंग.

[२]स होवाच । विजानाम्यहं यत्प्राणो ब्रह्म । कं च तु खं च न विजानामीति । ते होचुः । यद्वाव कं तदेव खम् । यदेव खं तदेव कमिति । प्राणं च हास्मै तदाकाशं चोचुः ॥

---

* शेषं शंकरेण गतार्थम् ।

+ रंग. शंकरवत् ।

(१) छाउ ४।१०।२; रंग. परिचचारीत् (पर्यचारीत्).

(२) छाउ. ४।१०।३; रामानुज. १।२।१५.

* शंकरवत् ।

(१) छाउ. ४।१०।४; ब्रशंकर. १।१।२२, १।२।१५, ३।३।५८, ५९, ४।३।१४; भास्कर. रामानुज. निंबार्क. १।२।१५; ब्रमध्व. १।२।१५, ३।३।२; श्रीकंठ. १।२।१५, १६; श्रीकर. १।१।२३, १।२।१५, २।१।२१, २।२।३०, ३१, ४१, ३।१।१, २, ३।३।१०, ४।१।६; बलदेव. १।२।१५.

(२) छाउ. ४।१०।५; ब्रशंकर. भास्कर. १।२।१५; निंबार्क. श्रीकंठ. १।२।१६; श्रीकर. १।२।१५.

(१) स ह उवाच ब्रह्मचारी—विजानाम्यहं यद्भवद्भिरुक्तं प्रसिद्धपदार्थकत्वात्प्राणो ब्रह्मेति । सः यस्मिन् सति जीवनं यदपगमे च न भवतीति तस्मिन् वायुविशेषे लोके रूढः, अतो युक्तं ब्रह्मत्वं तस्य । तेन प्रसिद्धपदार्थकत्वाद्विजानाम्यहं यत्प्राणो ब्रह्मेति । कं च तु खं च न विजानामीति । ननु कंखंशब्दयोरपि सुखाकाशविषयत्वेन प्रसिद्धपदार्थकत्वमेव, कस्माद्ब्रह्मचारिणोऽज्ञानम् । नूनं, सुखस्य कंशब्दवाच्यस्य क्षणप्रध्वंसित्वात्, खंशब्दवाच्यस्य चाऽऽकाशस्याचेतनस्य कथं ब्रह्मत्वमिति मन्यते, कथं च भवतां वाक्यमप्रमाणं स्यादिति । अतो न विजानामीत्याह ।

तं एवमुक्तवन्तं ब्रह्मचारिणं ते हाग्नय ऊचुः—यद्वाव यदेव वयं कमवोचाम, तदेव खं आकाशं, इति । एवं खेन विशेष्यमाणं कं विषयेन्द्रियसंयोगजात्सुखान्निवर्तितं स्यात् नीलेनेव विशेष्यमाणमुत्पलं रक्तादिभ्यः । यदेव खमित्याकाशमवोचाम, तदेव च कं सुखमिति जानीहि । एवं च सुखेन विशेष्यमाणं खं भौतिकादचेतनात्खान्निवर्तितं स्यान्नीलोत्पलवदेव । सुखमाकाशस्थं, नेतरल्लौकिकं, आकाशं च सुखाश्रयं, नेतरद्भौतिकमित्यर्थः । नन्वाकाशं चेत् सुखेन विशेषयितुमिष्टं, अस्त्वन्यतरदेव विशेषणं यद्वाव कं तदेव खमिति । अतिरिक्तमितरत् यदेव खं तदेव कमिति, पूर्वविशेषणं वा । ननु सुखाकाशयोरुभयोरपि लौकिकसुखाकाशाभ्यां व्यावृत्तिरिष्टेत्यवोचाम । सुखेनाऽऽकाशे विशेषिते व्यावृत्तिरुभयोरर्थप्राप्तैवेति चेत् ; सत्यमेवं, किंतु सुखेन विशेषितस्यैवाऽऽकाशस्य ध्येयत्वं विहितं, न त्वाकाशगुणस्य विशेषणस्य सुखस्य ध्येयत्वं विहितं स्यात्, विशेषणोपादानस्य विशेष्यनियन्तृत्वेनैवोपक्षयात् । अतः खेन सुखमपि विशेष्यते ध्येयत्वाय । कुतश्चैतन्निश्चीयते । कंशब्दस्यापि ब्रह्मशब्दसंबन्धात् कं ब्रह्मेति । यदि हि सुखगुणविशिष्टस्य खस्य ध्येयत्वं विवक्षितं स्यात्, कं खं ब्रह्मेति ब्रूयुरग्नयः प्रथमम् । न चैवमुक्तवन्तः । किं तर्हि, कं ब्रह्म खं ब्रह्मेति । अतो ब्रह्मचारिणो मोहापनयनाय कंखंशब्दयोरितरेतरविशेषणविशेष्यत्वनिर्देशो युक्त एव यद्वाव कमित्यादिः । तदेतदग्निभिरुक्तं वाक्यार्थमसद्बोधाय श्रुतिराह—प्राणं च हास्मै ब्रह्मचारिणे, तस्य आकाशः तदाकाशः । प्राणस्य संबन्ध्याश्रयत्वेन हार्द आकाश इत्यर्थः, सुखगुणवत्त्वनिर्देशात् । तं चाऽऽकाशं सुखगुणविशिष्टं ब्रह्म तत्स्थं च प्राणं ब्रह्मसंपर्कादेव ब्रह्मेत्युभयं प्राणं चाऽऽकाशं च समुच्चित्य ब्रह्मणी ऊचुः अग्नय इति ।

शंकर.

(२) तत्र प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम् । तत्र सकलजगत्प्राणयितृत्वयोगेन प्राणशब्दितस्य ब्रह्मण उपपन्नत्वाद्यत्प्राणो ब्रह्मेत्युक्तं तज्जानामि, कं ब्रह्म खं ब्रह्मेत्युक्तं तु न विजानामि । यद्यपि कंशब्दस्य सुखमर्थः खमित्यस्य चाऽऽकाशोऽर्थः । ततश्च वैषयिकसुखशरीरकमाकाशशरीरकं च ब्रह्मेत्यभिप्रायः, उत कमित्यनेन सुखमभिधीयते खमित्यनेनाऽऽकाशवाचिनाऽपरिच्छिन्नत्वमभिधीयते । तयोरन्योन्यविशेषणविशेष्यभावे अपरिच्छिन्नसुखं ब्रह्मेत्यप्यर्थो लभ्यते । ततश्चानयोर्मध्ये कस्मिन्नर्थे तात्पर्यमिति न जाने इति । ते होचुरिति । तदभिप्रायज्ञा अग्नयः कं खं इत्यनयोर्विशेषणविशेष्यभावोऽभिप्रेत इति स्वाभिप्रायमुक्तवन्त इत्यर्थः । ननु यद्वाव कं तदेव खमित्यनेनैव विशेषणविशेष्यभावप्रतिपादनेनापरिच्छिन्नसुखं ब्रह्मेत्यस्यार्थस्य लाभाद्यदेव खं तदेव कमिति पुनरुक्तिर्व्यर्थेति चेत् न, दार्ढ्यार्थं वाऽपरिच्छिन्नसुखत्वेन सुखरूपापरिच्छिन्नत्वेन चोपासनासिद्ध्यर्थं वा । परस्परविशेषणविशेष्यभावोपदेशसार्थक्यात् । अतो जगत्प्राणयितृत्वेन प्राणत्वविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेत्यग्नय उक्तवन्त इत्यर्थः ।

रंग.

अग्नित्रयविद्या

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥**

(१) संभूयाग्नयः ब्रह्मचारिणे ब्रह्म उक्तवन्तः । अथ अनन्तरं प्रत्येकं स्वस्वविषयां विद्यां वक्तुमारेभिरे । तत्र आदौ एनं ब्रह्मचारिणं गार्हपत्योऽग्निः अनुशशास—पृथिव्यग्निरन्नमादित्य इति ममैताश्चतस्रः

(१) छान्द. ४।११।१; रामानुज. १।२।१५.

ग्नयः । तत्र य आदित्ये एष पुरुषो दृश्यते, सो-ऽहमस्मि गार्हपत्योऽग्निः, यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मि, इति पुनः परावृत्त्य स एवाहमस्मीति वचनम् । पृथिव्यन्नयोरिव भोज्यत्व-लक्षणयोः संबन्धो न गार्हपत्यादित्ययोः । अन्नत्व-पक्तृत्वप्रकाशनधर्मा अविशिष्टा इत्यत एकत्वमेवानयोर-त्यन्तम् । पृथिव्यन्नयोस्तु भोज्यत्वेन आभ्यां संबन्धः ।

शंकर.

( २ ) अथशब्दश्च प्रकृतविषयत्वद्योतनार्थः । अत्र चार्थैनमितिशब्दाभ्यां वक्ष्यमाणाग्निविद्यायाः प्रकृत-ब्रह्मविद्याङ्गत्वमनुच्यते । * रंग.

स य एतमेवं विद्वानुपास्ते । अपहते पापकृ-त्याम् । लोकी भवति । सर्वमायुरेति । ज्योग्जी-वति । नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च । य एतमेवं विद्वानुपास्ते ॥

( १ ) स यः कश्चित् एवं यथोक्तं गार्हपत्यमग्निं अन्नान्नादत्वेन चतुर्धा प्रविभक्तं उपास्ते, सोऽपहते विनाशयति पापकृत्या पापं कर्म । लोकी लोकवांश्चास्म-दीयेन लोकेनाऽग्नेयेन तद्वान्भवति यथा वयम् । इह च लोके सर्वं वर्षशतमायुरेति प्राप्नोति । ज्योक् उज्ज्वलं जीवति नाप्रख्यात इत्येतत् । न च अस्य अवराश्च ते पुरुषाश्च अस्य विदुषः संततिजा इत्यर्थः । न क्षीयन्ते संतत्युच्छेदो न भवतीत्यर्थः । किंच तं वयं उपभुञ्जामः पालयामोऽस्मिंश्च लोके जीवन्तममुष्मिंश्च परलोके । य एतमेवं विद्वानुपास्ते, यथोक्तं तस्यैतत्फलमित्यर्थः ।

शंकर.

( २ ) ब्रह्मप्राप्तिविरोधि पापकर्मापहन्ति । तद्विरो-धिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोतीत्यर्थः । यद्यपि ब्रह्मप्राप्तिविरोधिपापनिवृत्तिर्ब्रह्मप्राप्तेश्च प्रधानभूतब्रह्म-विद्याफलत्वमेव तथाऽप्यङ्गिफलेनाङ्गं स्तूयते इति द्रष्टव्यम् । यद्वा पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकपाप-परः । लोकशब्दो ब्रह्मलोकप्राप्तिमार्गभूताग्निलोकपरो द्रष्टव्यः । ब्रह्मोपासनमन्तरेणैव यदनुष्ठितं तत्सर्वमेति । व्याध्यादिभिरनुपद्रुतो यावद्ब्रह्मज्ञानमुज्ज्वलो जीवति । अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि न क्षीयन्ते ब्रह्मविद एव भवन्तीत्यर्थः । संततौ ब्रह्मविद्यानुवृत्तेः, 'नास्य अब्रह्म-वित्कुले भवति' ( मुड. ३।२।९ ) इति श्रुत्यन्तरे ब्रह्म-विद्याफलत्वेन श्रवणात् । य एवमुपास्ते तमस्मिंल्लोकेऽ-मुष्मिंश्च वयमन्नदाः उपभुञ्जामः यावद्ब्रह्मप्राप्तिविघ्नेभ्यः परिपालयामः । एवमुत्तरत्रापि द्रष्टव्यम् ।

रंग.

अथ हैनमन्वाहार्यपचनोऽनुशशासाऽऽपो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥

स य एतमेवं विद्वानुपास्ते । अपहते पापकृ-त्याम् । लोकी भवति । सर्वमायुरेति । ज्योग्जी-वति । नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं भुञ्जा-मोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च । य एतमेवं विद्वानुपास्ते ॥

अथ ह एनं अन्वाहार्यपचनः अनुशशास दक्षिणाग्निः —आपो दिशो नक्षत्राणि चन्द्रमा इत्येताः मम चतस्र-स्तनवः चतुर्धाऽहमन्वाहार्यपचने आत्मानं प्रविभ-ज्यावस्थितः । तत्र य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि, स एवाहमस्मीति पूर्ववत् । अन्नसंबन्धा-ज्ज्योतिष्ट्वसामान्याच्च अन्वाहार्यपचनचन्द्रमसोरेकत्वं दक्षिणदिक्संबन्धाच्च । अपां नक्षत्राणां च पूर्ववदन्नत्वेनैव संबन्धः, नक्षत्राणां चन्द्रमसो भोग्यत्वप्रसिद्धेः । अपा-मन्नोत्पादकत्वादन्नत्वं दक्षिणाग्नेः, पृथिवीवद्गार्हपत्यस्य । समानमन्यत् । * शंकर.

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति । य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥

स य एतमेवं विद्वानुपास्ते । अपहते पापकृ-त्याम् । लोकी भवति । सर्वमायुरेति । ज्योग्जी-वति । नास्यावरपुरुषाः क्षीयन्ते । उप वयं तं

---

* शेषं शंकरवत् ।

(१) छाउ. ४।११।२; रामानुज. १।२।१५.

* रंग शंकरेण गतार्थम् ।

(१) छाउ. ४।१२।१, २.

(२) छाउ. ४।१३।१, २.

भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च । य एतमेवं विद्वानुपास्ते ॥

अथ ह एनं आहवनीयः अनुशशास — प्राण आकाशो द्यौर्विद्युदिति ममाप्येताश्चतस्रस्तनवः । य एष विद्युति पुरुषो दृश्यते, सोऽहमस्मीत्यादि पूर्ववत् सामान्यात् । द्युव्याकाशयोः स्वाश्रयत्वात् विद्युदाहवनीययोर्भोग्यत्वेनैव संबन्धः । समानमन्यत् ।

† शंकर.

अपुनरावृत्तिकारणं पापाश्लेषनिवारणं अक्षिस्थपुरुषस्य आत्मरूपस्य अमृताभयब्रह्मरूपस्योपासनं देवपथरूपम्

ते होचुः । उपकोसलैषा सोम्य तेऽस्मद्विद्यामविद्या च । आचार्यस्तु ते गतिं वक्तेति । आजगाम हास्याऽऽचार्यः । तमाचार्योऽभ्युवादोपकोसल३ इति ॥

(१) ते पुनः संभूयोचुः ह उपकोसल एषा सोम्य ते तव अस्मद्विद्या अग्निविद्येत्यर्थः । आत्मविद्या पूर्वोक्ता प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति च । आचार्यस्तु ते गतिं वक्ता विद्याफलप्राप्तये इत्युक्त्वोपेरमुरग्नयः । आजगाम ह अस्य आचार्यः कालेन । तं च शिष्यमाचार्योऽभ्युवाद उपकोसल३ इति ।

शंकर.

(२) एवं वदतामग्नीनामयमभिप्रायः—हे उपकोसल ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासं त्वामुज्जीवयितुं ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्यां चोपादिक्षाम । आचार्यादेव विदिताया विद्यायाः साधिष्ठत्वादाचार्य एव संयद्वामत्वादिगुणकं ब्रह्माक्षिरूपं च तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति । ततश्च गतिं वक्ता इत्यस्यावशिष्टं वक्ता इत्यर्थः, न तु गतिमात्रमिति द्रष्टव्यम् । * रंग.

[२] भगव इति ह प्रतिशुश्राव । ब्रह्मविद् इव सोम्य ते मुखं भाति । को नु त्वाऽनुशशासेति । को नु माऽनुशिष्याद्भो इतीहापेव निह्नुते । इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे । किं नु सोम्य किल तेऽवोचन्निति ॥

इदमिति ह प्रतिजज्ञे । लोकान्वाव किल सोम्य तेऽवोचन् । अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति । ब्रवीतु मे भगवानिति । तस्मै होवाच ॥

(१) भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं प्रसन्नं भाति, को नु त्वाऽनुशशास इत्युक्तः प्रत्याह—को नु मा, अनुशिष्यात् अनुशासनं कुर्यात् भो भगवंस्त्वयि प्रोषिते, इतीहापेव निह्नुते अपनिह्नुत इवेति व्यवहितेन संबन्धः । न च अपनिह्नुते, न च यथावदग्निभिरुक्तं ब्रवीतीत्यभिप्रायः । कथं इमेऽग्नयः मया परिचरिता उक्तवन्तो नूनं, यतस्त्वां दृष्ट्वा वेपमाना इव ईदृशा दृश्यन्ते पूर्वमन्यादृशाः सन्तः, इतीहाग्नीनभ्यूदे अभ्युक्तवान् काक्काऽग्नीन्दर्शयन् । किं नु सोम्य किल ते तुभ्यमवोचन्नग्नयः, इति पृष्टः इत्येवमिदमुक्तवन्तः इत्येवं ह प्रतिजज्ञे प्रतिज्ञातवान् प्रतीकमात्रं किंचित्, न सर्वं यथोक्तमग्निभिरुक्तमवोचत् । यत आहाऽऽचार्यः — लोकान् वाव पृथिव्यादीन् हे सोम्य किल तेऽवोचन्, न ब्रह्म साकल्येन । अहं तु ते तुभ्यं तद्ब्रह्म यदिच्छसि त्वं श्रोतुं, वक्ष्यामि, शृणु तस्य मयोच्यमानस्य ब्रह्मणो ज्ञानमाहात्म्यं—यथा पुष्करपलाशे पद्मपत्रे आपो न श्लिष्यन्ते, एवं यथा वक्ष्यामि ब्रह्म, एवंविदि पापं कर्म न श्लिष्यते न संबध्यते इति । एवमुक्तवति आचार्ये आहोपकोसलः— ब्रवीतु मे भगवानिति । तस्मै ह उवाच आचार्यः ।

शंकर.

(२) हेति खेदे । अपनिह्नुते इवेत्यर्थः । नाप-

† रंग शंकरेण गतार्थम् ।

* शेषं शंकरवत् ।

(१) छाउ. ४।१४।१; ब्रशंकर. रामानुज. १।२।१५; ब्रमध्व. ४।२।१७; श्रीकर. १।२।१५; वल्लभ. १।२।१३.

(२) छाउ. ४।१४।२.

(१) छाउ. ४।१४।३; ब्रशंकर. १।२।१५, ४।१।१३; भास्कर. १।२।१५, ४।१।१३; रामानुज. १।२।१५, ४।१।१३, ४।३।१; निंबार्क. ४।१।१३; ब्रमध्व. १।२।१३, ४।१।१३; श्रीकंठ. ४।१।१३; श्रीकर. १।२।१५, ४।१।१३, ४।३।१; वल्लभ. १।२।१३; विज्ञान. बलदेव. ४।१।१३.

निह्नुते न त्वपह्नुतेऽग्निभिरुक्तमित्यभिप्रायः । कंचित्कालमपह्नुत्य अथ अग्नीन् निर्दिश्य इमे एव नूनमनुशिष्टवन्त इत्याह— इमे नूनमिति । इदानीं ईदृशा ज्वलनाकारतया दृश्यमाना एते अग्नयः पूर्वमन्याकाराः सन्तो मामनुशिष्टवन्त इत्युक्तवानित्यर्थः। आचार्य आह— किं नु सोम्येति । इतर आह— इद-मिति । एतावदुपदिष्टमिति प्रतिज्ञातवान्। इतर आह— लोकानिति । अग्नयः पृथिव्यादींल्लोकानेव कात्स्न्र्येन तवोक्तवन्तः, अङ्गभूतामग्निविद्यां कात्स्न्र्येनोक्तवन्त इत्यर्थः । न तु ज्ञातव्यं ब्रह्म कात्स्न्र्येन । अहं तु ते पद्मपत्रजलाश्लेषवत्सर्वपापाश्लेषजनक-विद्याविषयभूतं ब्रह्म वक्ष्यामि यदि शुश्रूषसे इत्यर्थः । पापाश्लेषो नाम पापहेतुभूतकर्माचरणेऽपि पापोत्पत्ति-प्रतिबन्धकशक्तिमत्त्वम् । इदं च प्रामादिकपापविषयम्। पापशब्दश्च सुकृतदुष्कृतसाधारणः । एतच्च तत्र तत्रोक्तं तत्रैवानुसंधेयम्। इतर आह— ब्रवीतु मे भगवानिति । रंग.

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥

(१) य एषोऽक्षिणि पुरुषो दृश्यते निवृत्तचक्षुर्भिर्ब्रह्म-चर्यादिसाधनसंपन्नैः शान्तैर्विवेकिभिः दृष्टेर्द्रष्टा, 'चक्षु-षश्चक्षुः' इत्यादिश्रुत्यन्तरात्। ननु अग्निभिरुक्तं वितथं, यतः आचार्यस्तु ते गतिं वक्तेति गतिमात्रस्य वक्तेत्यवो-चन्, भविष्यद्विषयापरिज्ञानं चाग्नीनाम्। नैष दोषः, सुखाकाशस्यैव अक्षिणि दृश्यते इति द्रष्टुरनुवादात् *। एष आत्मा प्राणिनामिति होवाच । एवमुक्तवान्। एतद्यदेवाऽऽत्मतत्त्वमवोचाम, एतदमृतं अमरणधर्मि अविनाशि अत एवामृत, यस्य हि विनाशाशङ्का तस्य भयोपपत्तिस्तदभावादभयं, अत एवैतद्ब्रह्म बृह-दनन्तमिति । किंच, अस्य ब्रह्मणोऽक्षिपुरुषस्य माहात्म्यं तत् तत्र पुरुषस्य स्थानेऽक्षिणि यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी एव गच्छति * पक्ष्मावेव गच्छति, न चक्षुषा संबध्यते पद्मपत्रेणेवोदकम्। स्थानस्याप्येतन्मा-हात्म्यं, किं पुनः स्थानिनोऽक्षिपुरुषस्य निरञ्जनत्वं वक्तव्यमित्यभिप्रायः । शंकर.

(२) योगिभिर्योऽन्तर्वर्ती पुरुषो दृश्यते, अय-मेवाऽऽत्मा नियन्तेत्यर्थः । अमृतत्वं निरतिशयभोग्य-त्वम्। अभयत्वं दुःखासंभिन्नत्वम्। ब्रह्मत्वं निरतिशय-बृहत्त्वम्। तस्मात्रिर्लेपस्थानिप्रभावादस्मिन्नक्षिणि यद्यपि सर्पिर्वोदकं वा कश्चित्सिञ्चेत्, तत्पार्श्वद्वयमेव गच्छति न तत्र लिप्यते । रंग.

एतꣳ संयद्वाम इत्याचक्षते । एतꣳ हि सर्वाणि वामान्यभिसंयन्ति । सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥

एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते । कस्मात्। यस्मादेतं सर्वाणि वामानि वननीयानि संभजनीयानि शोभनानि अभिसंयन्ति अभिसंगच्छन्तीत्यतः संयद्वामः । तथा एवंविदमेनं सर्वाणि वामान्यभिसंयन्ति य एवं वेद । + शंकर.

एष उ एव वामनीः । एष हि सर्वाणि वामानि नयति । सर्वाणि वामानि नयति य एवं वेद ॥

एष उ एव वामनीः यस्मादेष हि सर्वाणि वामानि पुण्यकर्मफलानि पुण्यानुरूपं प्राणिभ्यो नयति प्रापयति वहति चाऽऽत्मधर्मत्वेन । विदुषः फलं — सर्वाणि वामानि नयति य एवं वेद ।

शंकर.

* 'इति द्रष्टुरनुवादात्' इत्यत्र 'द्रष्टुरक्षिणि दृश्यते इत्यनुवादात्' इत्यन्वयः ।

(१) छाउ. ४।१५।१; ब्रशंकर. १।२।१३, ३।३।२३, ३।३।३८; भास्कर. १।२।१३; रामानुज. १।२।१३, १।३।१२; निंबार्क. १।२।१३; ब्रमध्व. १।२।१३, १।२।१४ तद्यद्यप्यस्मि (तद्यदस्मि), १।२।१८; श्रीकंठ. १।२।१३; श्रीकर. १।२।१३, १।२।१७; वल्लभ. १।२।१३; बलदेव. १।२।१३, ४।३।१.

* 'पक्ष्मौ' इत्यत्र अकारान्तत्वपुंस्त्वे चिन्तनीये ।

+ रंग शंकरवत्।

(१) छाउ. ४।१५।२; ब्रशंकर. भास्कर. रामानुज. निंबार्क. श्रीकर. १।२।१३; वल्लभ. १।२।१४.

(२) छाउ. ४।१५।३; ब्रशंकर. भास्कर. रामानुज. श्रीकर. १।२।१३; वल्लभ. १।२।१४.

**एष उ एव भामनीः । एष हि सर्वेषु लोकेषु भाति । सर्वेषु लोकेषु भाति य एवं वेद ॥**

( १ ) एष उ एव भामनीः, एष हि यस्मात्सर्वेषु लोकेष्वादित्यचन्द्राग्न्यादिरूपैर्भाति दीप्यते, 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । अतो भामानि नयतीति भामनीः । य एवं वेद असावपि सर्वेषु लोकेषु भाति । शंकर.

( २ ) भामनीत्वं सर्वलोकव्यातदीप्तिमद्ग्रहयुक्तत्वम् । उपासकस्यापि तद्वत्त्वपेक्षायामित्यर्थः । अत्र संयद्वामत्ववामनीयत्वभामनीत्वेषु फलकथनं फलरूपतात्पर्यलिङ्गोपन्यासेन तेषु गुणेषु तात्पर्यप्रदर्शनार्थं, न तु सर्पिर्वोदकं वा सिञ्चतीत्यत्रेवार्थवादमात्रतया स्तुतिरूपत्वमिति प्रदर्शनार्थम् । सर्पिर्वेति वाक्यस्य स्तुतित्वं व्यासार्यैरुक्तम् । रंग.

**अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान् । मासेभ्यः संवत्सरम् । संवत्सरादादित्यम् । आदित्याच्चन्द्रमसम् । चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते नाऽऽवर्तन्ते ॥**

( १ ) अथेदानीं यथोक्तब्रह्मविदो गतिरुच्यते । यत् यदि उ च एव अस्मिन् एवंविदि शव्यं शवकर्म मृते कुर्वन्ति, यदि च न कुर्वन्ति ऋत्विजः, सर्वथाऽप्येवंवित्तेन शवकर्मणाऽकृतेनापि प्रतिबद्धो न ब्रह्म न प्राप्नोति । न च कृतेन शवकर्मणाऽस्य कश्चनाभ्यधिको लोकः, 'न कर्मणा वर्धते नो कनीयान्' इति श्रुत्यन्तरात् । शवकर्मण्यनादरं दर्शयन् विद्यां स्तौति, न पुनः शवकर्म एवंविदो न कर्तव्यमिति । अक्रियमाणे हि शवकर्मणि कर्मणां फलारम्भे प्रतिबन्धः कश्चिदनुमीयतेऽन्यत्र । यत इह विद्याफलारम्भकाले शवकर्म स्याद्वा न वेति विद्यावतः अप्रतिबन्धेन फलारम्भ दर्शयति । ये सुखाकाशमक्षिस्थं संयद्वामो वामनीर्भामनीरित्येवंगुणमुपासते प्राणसहितामग्निविद्यां च, तेषामन्यत्कर्म भवतु मा वा भूत्सर्वथाऽपि तेऽर्चिषमेवाभिसंभवन्ति अर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते इत्यर्थः । अर्चिषः अर्चिर्देवताया अहः अहरभिमानिनीं देवताम् । अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवताम् । आपूर्यमाणपक्षात् यान् षण्मासान् उदङ् उत्तरां दिशमेति सविता तान्मासान् उत्तरायणदेवताम् । तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवताम् । ततः संवत्सरादादित्यम् । आदित्याच्चन्द्रमसम् । चन्द्रमसो विद्युतम् । तत् तत्रस्थान तान् पुरुषः कश्चिद्ब्रह्मलोकादेत्य अमानवः, मानव्यसृष्टौ भवः मानवः, न मानवः अमानवः, स पुरुष एनान् ब्रह्म सत्यलोकस्थं गमयति गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः, सन्मात्रब्रह्मप्राप्तौ तदनुपपत्तेः 'ब्रह्मैव सन्ब्रह्माप्येति' इति हि तत्र वक्तुं न्याय्यम् । सर्वभेदनिरासेन सन्मात्रप्रतिपत्तिं वक्ष्यति । न चादृष्टो मार्गोऽगमनायोपतिष्ठते, 'स एनमविदितो न भुनक्ति' इति श्रुत्यन्तरात् । एष देवपथः देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपलक्षितः पन्था देवपथ उच्यते ब्रह्म गन्तव्यं, तेन चोपलक्षित इति ब्रह्मपथः एतेन प्रतिपद्यमाना गच्छन्तो ब्रह्म इमं मानवं मनुसंबन्धिनं मनोः सृष्टिलक्षणमावर्तं नाऽऽवर्तन्ते ।

(१) छांउ. ४।१५।४; ब्रशंकर. १।२।१३, ३।३।२३; भास्कर. १।२।१३, ३।३।२३; रामानुज. श्रीकर. १।२।१३; वल्लभ. १।२।१४.

(२) छांउ. ४।१५।५; ब्रशंकर. १।२।१६, ४।२।२०, ४।३।२, ३, ४, ५, ६, ७, १०, १२, ४।४।२२; भास्कर. १।२।१६, ३।३।२९, ४।२।७, ४।३।३, ४, ५, ६, ९, १३, १४, ४।४।२२ एनान् ( एतान् ); रामानुज. १।२।१७, ४।३।१, २, ३, ८, ११, १३, १४; निंबार्क. १।२।१७, ४।३।१, ३, ४, ८, ११, ४।४।२२ एनान् ( एतान् ); ब्रमध्व. १।२।१६, ४।३।६, ४।४।२०; श्रीकंठ. १।२।१७, ३।३।२९, ४।३।४, ५, ८, १०; श्रीकर. १।२।१६, ३।३।२९, ४।३।३, ४, ५, ९, १०, १२; वल्लभ. १।२।१६, ४।३।२, ३, ४, ५, ८, १३, ४।४।२२ चैवा ( वै वा ) च्छव्यं+ ( कर्म ) वाभिसंभवन्ति ( वाभियन्ति ) एनान् ( एतान् ) एतेन ( इत्येतेन ); विज्ञान. ४।३।३, ४, ७, १२ वाभिसंभवन्ति ( वाभिसंविशन्ति ) एनान् ( एतान् ); बलदेव. ४।३।३, ४, ६, ७, ४।४।२२.

मावर्तन्तेऽस्मिञ्जननमरणप्रबन्धचक्रारूढाः घटीयन्त्रवत्पुनःपुनरित्यावर्तस्तं न प्रतिपद्यन्ते। नावर्तन्ते इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रदर्शनार्था।

शंकर.

( २ ) ‘ अतश्चायनेऽपि दक्षिणे ’— अत एव च प्रतीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च विद्यायाः, अनियतकालत्वाच्च मृत्योः, दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम्। उत्तरायणमरणप्राशस्त्यप्रसिद्धेः, भीष्मस्य च प्रतीक्षादर्शनात्, ‘ आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् ’ ( छा उ. ४।१५।५ ) इति च श्रुतेरपेक्षितव्यमुत्तरायणमित्येतामाशङ्कामनेन सूत्रेणापनुदति। प्राशस्त्यप्रसिद्धिः अविद्वद्विषया। भीष्मस्य तु उत्तरायणप्रतिपालनं आचारपरिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थं च। श्रुतेस्त्वर्थं वक्ष्यति ‘ आतिवाहिकास्तल्लिङ्गात् ’ ( ब्र. सू. ४।३।४ ) इति।

४।२।२०

‘ अर्चिरादिना तत्प्रथितेः ’ — आसृत्युपक्रमात्समानोत्क्रान्तिरित्युक्तम्। सृतिस्तु श्रुत्यन्तरेष्वनेकधा श्रूयते — नाडीरश्मिसंबन्धेनैका ‘ अथैतैरेव रश्मिभिरूर्ध्व आक्रमते ’ ( छा उ. ८।६।५ ) इति। अर्चिरादिकैका ‘ तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः ’ ( बृ उ. ६। २।१५) इति। ‘ स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति ’ ( कौउ. १।३ ) इत्यन्या। ‘ यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति ’ ( बृउ. ५।१०।१ ) इत्यपरा। ‘ सूर्यद्वारेण ते विरजाः प्रयान्ति ’ ( मुउ. १।२।११) इति चापरा। तत्र संशयः — किं परस्परं भिन्नाः एताः सृतयः, किं वैकैवानेकविशेषणेति। तत्र प्राप्तं तावद्भिन्ना एताः सृतय इति, भिन्नप्रकरणत्वात्, भिन्नोपासनशेषत्वाच्च। अपि च ‘ अथैतैरेव रश्मिभिः’ ( छाउ. ८।६।५ ) इत्यवधारणं अर्चिराद्यपेक्षायां उपरुध्येत, त्वरावचनं च पीड्येत ‘ स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति ’ ( छाउ. ८।६।५ ) इति। तस्मादन्योन्यभिन्ना एवैते पन्थान इति। एवं प्राप्ते, अभिदध्महे — अर्चिरादिनेति। सर्वो ब्रह्म प्रेप्सुरर्चिरादिनैवाध्वना रंहतीति प्रतिजानीमहे। कुतः। तत्प्रथितेः। प्रथितो ह्येष मार्गः सर्वेषां विदुषाम्। तथा हि पञ्चाग्निविद्याप्रकरणे ‘ ये चामी अरण्ये श्रद्धां सत्यमुपासते ’ ( बृउ. ६।२।१५ ) इति विद्यान्तरशीलिनामप्यर्चिरादिका सृतिः श्राव्यते। स्यादेतत्। ननु विद्यासु न काचिद्गतिरुच्यते, तासु इयमर्चिरादिका गतिरुच्यतां, यासु तु अन्या श्राव्यते, तासु किमित्यर्चिराद्याश्रयणमिति। अत्रोच्यते — भवेदेतदेवं, यद्यत्यन्तभिन्ना एवैताः सृतयः स्युः। एकैव त्वेषा सृतिः अनेकविशेषणा ब्रह्मलोकप्रपदनी क्वचित्केनचिद्विशेषणेनोपलक्षितेति वदामः। सर्वत्रैकदेशप्रत्यभिज्ञानात् इतरेतरविशेषणविशेष्यभावोपपत्तेः। प्रकरणभेदेऽपि हि विद्यैकत्वे भवति इतरेतरविशेषणोपसंहारवद्गतिविशेषणानामप्युपसंहारः। विद्याभेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानाद्गन्तव्याभेदाच्च गत्यभेद एव। तथा हि ‘ ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति ’ ( बृउ. ६।२।१५ ) ‘ तस्मिन्वसति शाश्वतीः समाः ’ ( बृउ. ५।१०।१ ) ‘ सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते ’ ( कौउ. १।४ ) ‘तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति’ ( छाउ. ८।४।३ ) इति च तत्र तत्र तदेवैकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते। यत्तु ‘ एतैरेव ’ इत्यवधारणं अर्चिराद्याश्रयणे न स्यादिति। नैष दोषः। रश्मिप्राप्तिपरत्वादस्य। न हि एक एव शब्दो रश्मींश्च प्रापयितुमर्हति, अर्चिरादींश्च व्यावर्तयितुम्। तस्माद्रश्मिसंबन्ध एवायमवधार्यत इति द्रष्टव्यम्। त्वरावचनं तु अर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया क्षैप्र्यार्थत्वान्नोपरुध्यते, यथा निमेषमात्रेणात्राऽऽगम्यत इति। अपि च ‘अथैतयोः पथोर्न कतरेणचन’ (छाउ.५।१०।८) इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति। भूयांस्यर्चिरादिसृतौ मार्गपर्वाणि, अल्पीयांसि त्वन्यत्र। भूयसां च आनुगुण्येन अल्पीयसां नयनं न्याय्यमित्यतोऽप्यर्चिरादिना तत्प्रथितेरित्युक्तम्।

४।३।१

‘ वायुमब्दादविशेषविशेषाभ्याम् ’ — केन पुनः संनिवेशविशेषेण गतिविशेषणानामितरेतरविशेषणविशेष्यभाव इति तदेतत्सुहृद्भूत्वाऽऽचार्यो ग्रथयति। ‘ स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति। स वायुलोकम्। स वरुणलोकम्। स इन्द्रलोकम्। स प्रजापतिलोकम्।

स ब्रह्मलोकम्' ( कौ. १।३ ) इति कौषीतकिनां देवयानः पन्थाः पठ्यते। तत्रार्चिरग्निलोकशब्दौ तावदेकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः क्वचिदन्वेष्यः। वायुस्त्वर्चिरादौ वर्त्मनि न श्रुतः कतमस्मिन् स्थाने निवेशयितव्य इति। उच्यते— 'तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यम्' ( छाउ. ५।१०।१,२ ) इत्यत्र संवत्सरात्पराञ्चं आदित्यादर्वाञ्चं वायुमभिसंभवन्ति। कस्मात्। अविशेषविशेषाभ्याम्। तथा हि 'वायुलोकम्' ( कौ. १।३ ) इत्यत्राविशेषोपदिष्टस्य वायोः श्रुत्यन्तरे विशेषोपदेशो दृश्यते 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति' ( बृउ. ५।१०।१ ) इति। एतस्मादादित्याद्वायोः पूर्वत्वदर्शनात् विशेषात् अब्दादित्ययोरन्तराले वायुर्निवेशयितव्यः। कस्मात्पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते। नैषोऽस्ति विशेष इति वदामः। ननूदाहृता श्रुतिः—'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम्' ( कौउ. १।३ ) इति। उच्यते—केवलोऽत्र पाठः पौर्वापर्येणावस्थितः, नात्र क्रमवचनः कश्चिच्छब्दोऽस्ति। पदार्थोपदर्शनमात्रं ह्यत्र क्रियते 'एतमेतं चाऽऽगच्छति' इति। इतरत्र पुनर्वायुप्रत्तेन रथचक्रमात्रेण छिद्रेणोर्ध्वमाक्रम्याऽऽदित्यमागच्छतीत्यवगम्यते क्रमः। तस्मात्सूक्तमविशेषविशेषाभ्यामिति। वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' ( बृउ. ६।२।१५ ) इति समामनन्ति। तत्राऽऽदित्यानन्तर्याय देवलोकाद्वायुमभिसंभवेयुः। वायुमब्दादिति तु छन्दोगश्रुत्यपेक्षयोक्तम्। छान्दोग्यवाजसनेयकयोस्तु एकत्र देवलोको न विद्यते परत्र संवत्सरः। तत्र श्रुतिद्वयप्रत्ययादुभावप्युभयत्र श्रयितव्यौ। तत्रापि माससंबन्धात्संवत्सरः पूर्वः पश्चिमो देवलोक इति विवेक्तव्यम्। ४।३।२

'तडितोऽधि वरुणः संबन्धात्' — 'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' ( छाउ. ४।१५।५ ) इत्यस्या विद्युत उपरिष्टात् 'स वरुणलोकम्' इत्ययं वरुणः संबध्यते। अस्ति हि संबन्धो विद्युद्वरुणयोः। यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्ति, अथाऽऽपः प्रपतन्ति। 'विद्योतते स्तनयति वर्षिष्यति वा' ( छाउ. ७।११।१ ) इति च ब्राह्मणम्। अपां चाधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः। वरुणादधि इन्द्रप्रजापती, स्थानान्तराभावात्पाठसामर्थ्याच्च। आगन्तुकत्वादपि वरुणादीनामन्ते एव निवेशः, वैशेषिकस्याभावात्। विद्युच्चान्त्या अर्चिरादौ वर्त्मनि। ४।३।३

'वैद्युतेनैव ततस्तच्छ्रुतेः' — कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः। विद्युतो ह्यधि वरुणादय उपक्षिताः, विद्युतस्त्वनन्तरमा ब्रह्मप्राप्तेरमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतमित्यत उत्तरं पठति—वैद्युतेनैवेति। ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यं, तान्वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकं गमयतीति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्तु तस्यैवाप्रतिबन्धकरणेन साहाय्यानुष्ठानेन वा केनचिदनुग्राहका इत्यवगन्तव्यम्। तस्मात्साधूक्तं आतिवाहिका देवतात्मानोऽर्चिरादय इति।

४।३।६

'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' —ननु कार्यप्राप्तौ अनावृत्तिश्रवणं न घटते। न हि परस्माद्ब्रह्मणोऽन्यत्र क्वचिन्नित्यतां संभावयन्ति। दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिम्—'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते' ( छाउ. ४।१५।५ ) इति तेषामिह न पुनरावृत्तिरस्ति 'तयोर्ध्वमायन्नमृतत्वमेति' ( छाउ. ८।६।६, काउ. ६।१६ ) इति चेत्। अत्र ब्रूमः—कार्यात्यय इति। कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तः तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्त इति। इत्थं क्रममुक्तिः अनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या। न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीत्युपपादितम्।

४।३।१०

परं जैमिनिर्मुख्यत्वात् ' — जैमिनिस्त्वाचार्यः
नान्ब्रह्म गमयति ' ( छाउ. ४।१५।५ ) इत्यत्र
ब्रह्म प्रापयतीति मन्यते कुतः । मुख्यत्वात् ।
ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बन गौणमपरं,
गयोश्च मुख्ये संप्रत्ययो भवति । ४।३।१२
अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽ-
क्रतुश्च '—स्थितमेतत् कार्यविषया गतिः, न
रेति । इदमिदानीं संदिह्यते— किं सर्वान् विका-
नान् अविशेषेणैव अमानवः पुरुषः प्रापयति
त्, उत कांश्चिदेवेति । किं तावत्प्राप्तम् ।
सर्वेषां विदुषां अन्यत्र परस्माद्ब्रह्मणो गतिः स्यात् ।
हे ' अनियमः सर्वासाम् ' इत्यत्र अविशेषेणैव
विद्यान्तरेष्ववतारितेति । एवं प्राप्ते प्रत्याह—
कालम्बनानिति । प्रतीकालम्बनान्वर्जयित्वा सर्वा-
( विकारालम्बनान् नयति ब्रह्मलोकमिति बाद-
आचार्यो मन्यते । न ह्येवमुभयथाभावाभ्युपगमे
दोषोऽस्ति, अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्व-
नेपपत्तेः । तत्क्रतुश्च अस्योभयथाभावस्य
ो हेतुर्द्रष्टव्यः । यो हि ब्रह्मक्रतुः स ब्राह्म-
मासीदेदेति श्लिष्यते, ' तं यथा यथोपासते तदेव
' इति श्रुतेः । न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति,
प्रधानत्वादुपासनस्य । ननु अब्रह्मक्रतुरपि ब्रह्म
ीति श्रूयते, यथा पञ्चाग्निविद्यायां ' स एनान्
गमयति ' इति । भवतु यत्रैवमाहत्यवाद
यते । तदभावे त्वौत्सर्गिकेण तत्क्रतुन्यायेन
नामेव तत्प्राप्तिः, नेतरेषामिति गम्यते ।

* ब्रशंकर. ४।३।१५

२ ) अत्र द्वौ पक्षौ दर्शयित्वा निर्णयार्थमाह—
ीकालम्बनानिति । ' स एतान् ब्रह्म गमयति'
उ. ४।१५।५ ) इति प्रतीकालम्बनान् वर्जयित्वा
' मनो ब्रह्मेत्युपासीत ' ( छाउ. ३।१८।१ ) इत्येव-
मादिप्रतीकालम्बनान्वर्जयित्वा कार्यब्रह्मोपासकाः ये च
परब्रह्मोपासकाः तानुभयप्रकारान्नयतीति बादरायण
आचार्यो मन्यते स्म । कस्मात् , उभयथाऽदोषात् ।
कथं न दोषः, तत्र हेतुमाह— तत्क्रतुश्च । ' यथा
क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति '
( छाउ. ३।१४।१ ) 'तं यथा यथोपासते ' इति
च श्रुतेः । परमात्मक्रतुः परमात्मानं प्रतिपद्यते
कार्यब्रह्मक्रतुः कार्यम् । * भास्कर. ४।३।१४

( ४ ) अथशब्दः प्रकृतविषयत्वद्योतनार्थः ।
अस्मिन् ब्रह्मविदि । सामान्याभिप्रायत्वादस्यैकवचनस्य
उत्तरत्र अभिसंभवन्तीति बहुवचनेन न विरोधः । अत्र
केचिदुपकोसलविद्याङ्गभूताग्निविद्यावैभवेन शवदहनादि-
वैगुण्येऽप्युपकोसलविद्यानिष्ठस्य न क्षतिः, विद्यान्तरनिष्ठस्य
दहनादिवैगुण्ये किंचिद्वैगुण्यमस्तीति वदन्ति । तन्न । ' न
लिप्यते कर्मणा ' ( बृउ. ४।४।२३ ) इति श्रुति-
सिद्धार्थानुवादित्वादस्य वाक्यस्य एतादृशार्थप्रत्यायकत्वा-
भावात् । अतः ' अथ यदु चैवास्मिन् ' इत्येतत्सर्वब्रह्म-
विद्यासाधारणमेव । † रंग.

( ५ ) 'अप्रतीकालम्बनान्नयतीति बादरायण उभ-
यथा च दोषात्तत्क्रतुश्च ' — इदानीं बादरायणस्तु
भगवान्स्वमतेन सिद्धान्तमाह — अप्रतीकालम्बनान्
प्रतीकालम्बनव्यतिरिक्तान् नयत्यर्चिरादिरातिवाहिको
गण इति भगवान्बादरायणो मेने । एतदुक्तं भवति ।
कार्यमुपासीनान्नयतीति नायं पक्षः संभवति । परमेवोपा-
सीनानित्ययमपि नियमो नास्ति । न च प्रतिकाल-
म्बनानपि नयति । अपि तु ये परं ब्रह्मोपासते ये
चात्मानं प्रकृतिवियुक्तं ब्रह्मात्मकमुपासते, तानुभयविधा-
न्नयति । ये तु ब्रह्मकार्यान्तर्भूतं नामादिकं वस्तु देवदत्ता-
दिषु सिंहादिदृष्टिवद्ब्रह्मदृष्ट्या केवलं वा तत्तद्वस्तूपासते न
तान्नयति । अतः परं ब्रह्मोपासीनानात्मानं च प्रकृति-

ब्रसू. ४।३।१ इत्यत्र यद्यपि इदं वाक्यं साक्षान्नो-
तं, तथापि तस्योपलक्षितत्वेनेतरेषु भाष्येपूल्लेखाच्चा-
गृहीतम् । श्रीकंठ. कार्यं हिरण्यगर्भः, परं नारायणः,
पि परं विरूपाक्षरूपं ब्रह्म । तत्र गतेः कार्यपरविषयत्वं
ः । विरूपाक्षरूपब्रह्मविषयत्वं सिद्धान्तः, इति विशेषः ।
तरद्ब्रशंकरवत् ।

* ' कार्यं बादरिः ' इति पूर्वपक्षः । ' परं जैमिनिः '
इति सिद्धान्तः । तत्रापि कार्यपरोभयविषयत्वं गति-
श्रुतेरिति परमसिद्धान्तः, इति विशेषः । अन्यत्सर्वं
ब्रशंकरवत् ।

† शंकरवत् ।

वियुक्तं ब्रह्मात्मकमुपासीनान्नयतीति । कुतः । उभयथा च दोषात् । कार्यमुपासीनान्नयतीति पक्षे 'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य' (छाउ. ८।३।४, ८।१२।३) इत्यादिकाः श्रुतयः प्रकुप्येयुः । परमेवोपासीनानिति च नियमे 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' (छाउ. ५।१०।१) इति पञ्चाग्निविदोऽर्चिरादिगणो नयतीति श्रुतिः प्रकुप्येत् । अतः उभयस्मिन्नपि पक्षे दोषः स्यात् । तस्मादुभयविधान्नयतीति ।

तदेतदाह—तत्क्रतुश्चेति । तत्क्रतुस्तथोपासीनस्तथैव प्राप्नोतीत्यर्थः । 'यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छाउ. ३।१४।१), 'तं यथा यथोपासते' इति न्यायात् । पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणादर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव तत्क्रतुन्यायात्प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसंधानं सिद्धम् । नामादिप्राणपर्यन्तप्रतीकालम्बनानां तूभयविधश्रुतिसिद्धोपासनाभावादचिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते । * रामानुज. ४।३।१४

(६) 'वायुशब्दाद०'— आर्चिषो वायुं गच्छति, 'स वायुमागच्छति' (बृउ. ५।१०।१) इति सामान्यवचनात्, 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह आपूर्यमाणपक्षम्' इति विशेषवचनाच्च । ४।३।२

'तटितोऽधि०'—'मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात्प्रजापतिलोकम्' इति कौण्डिन्यश्रुतिः, 'संवत्सरात्तटितमागच्छति तटितः प्रजापतिलोकम्' इति च गौपवनश्रुतिः । तत्र तटितो वरुणं गच्छति, 'तटिता ह्यूह्यते वरुणलोकस्तटिदुपरि मुक्तामयो राजते, तत्रासौ वरुणो राजा सत्यानृते विविञ्चति' इत्युपरि संबद्धत्वश्रुतेः । ४।३।३

'आतिवाहिकस्तल्लिङ्गात्'—पूर्वोक्तस्त्वातिवाहिको वायुः, पूर्वगमनलिङ्गात् । कुतः— ४।३।४

'उभयव्यामोहात्तत्सिद्धेः'—'स वायुमागच्छति' इति प्रथममुच्यते, 'उत्क्रान्तो विद्वान्परमभिगच्छन्विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' इत्यन्तेऽपि वायुगमनश्रुतेः पूर्वोक्त आतिवाहिकः परो वेति व्यामोहे उत्तरे 'दिवस्पतिः' इति विशेषणात् पूर्वत्रातिवाहिकस्यैव सिद्धेः । ब्रह्मतर्के च —'उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः । ततोऽह्नः पूर्वपक्षं चाप्युदक्संवत्सरं तथा । तटितं वरुणं चैव प्रजापं सूर्यमेव च । सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥' इति । ४।३।५

'वैद्युतेनैव०'— प्रकारान्तरेण तत्रतत्रोच्यमानत्वाद्वायोरपि परतो ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीति नाशङ्कनीयं, विद्युत्पतिना वायुनैव 'स एनान् ब्रह्म गमयति' इति ब्रह्मगमनश्रुतेः । 'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः । कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम् ॥' इति बृहत्तन्त्रे । ४।३।६

'अप्रतीकालम्बनान्नयतीति०'— 'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् । न तु व्याप्ततया क्वाऽपि प्रतीकालम्बनास्तु ते । अप्रतीका देवतास्तु ऋषीणां शतमेव च । राज्ञां च शतमुद्दिष्टं गन्धर्वाणां शतं तथा । एतेऽधिकारिणो व्याप्तदर्शनेऽन्ये न तु क्वचित् । अयोग्यदर्शने यत्नाद्भ्रंशः पूर्वस्य चापि तु । अप्रतीकाश्रया ये हि ते यान्ति परमेव तु । स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद्ब्रह्मसलोकताम् । ब्रह्मणा सह संप्राप्ते संहारे परमं पदम् ॥' इति गारुडवचनात् उभयत्रोक्तदोषाच्चाप्रतीकालम्बनान् परं नयति । 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते' इति श्रुतेश्च । अत्र कर्म उपासनमेव । अन्यान् कार्यं नयतीति भगवन्मतम् । ब्रमध्व. ४।३।१५

(७) अत्रेदं ज्ञेयम् । अग्निहोत्राऽऽदिकर्मभिश्चित्तशुद्धौ उपासनाभिर्ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा भुक्त्वा अन्ते ब्रह्म प्राप्नोति । कर्म त्वग्निसाध्यं भूलोक एव च भवति, अत आदौ तत्रत्यो भोगः, ततस्तदुपरितनलोकानाम् । 'पृथिवी दीक्षा । तयाऽग्निर्दीक्षया दीक्षितः' (तैब्रा. ३।७।७।५), 'यथा पृथिव्यग्निगर्भा' इत्यादिश्रुतिभ्यो प्रथितमात्रा भवति अग्नेः-

* अन्यत ब्रशंकरवत । निंबार्क रामानुजवत ।

र्चिरादयस्वमिलोकमनदं तदुक्तम् । ततः अर्चीरादिलोक-इत्यादिसंवत्सरान्ते वायौ विहितमन्नत्र तत्र तथा युज्यते। तथा च संवत्सरादित्ययोः पूर्वनिर्दिष्टत्वेन विहितत्वात् तन्मध्ये वायोर्न प्रवेशः । भूर्लोकादुपर्यन्तरिक्षलोकः तदुपरि द्युलोकः, तथा च 'वायुरन्तरिक्षस्याधिपतिः' इति श्रुतेः, 'सूर्यो दिवोऽधिपतिः' इति श्रुतेस्तयोः पौर्वापर्ये विशेषो हेतुरतोऽप्यादित्यलोकात् पूर्वमुक्तरीत्या भूर्लोक-मध्यपातित्वमस्य तस्माच्च वायुर्निवेशयितव्य इत्यर्थः । ननु 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः' इत्यादिश्रुतिरत्रयुक्तमनुवादानन्तर्यं वदन्ती पूर्वा-परयोरव्यवधानं सूचयतीति नोक्तमादरणीयमिति चेत् । सत्यम् । यस्योपासकस्य न वायुलोकभोगस्तं प्रति सोक्तिः, यस्य तु तद्भोगस्तस्योक्तरीतिः मार्गैक्यात्, इति नाऽनुपपत्तिः काचित् ।

वाजसनेयिनस्तु 'मासेभ्यो देवलोकं देवलोकादादित्यम्' इति पठन्ति । तत्राप्यादित्यात् पूर्वो देवलोकात् परो वायुर्ज्ञेयः । एकत्वादित्यात् पूर्वत्वे सिद्धे मार्गैक्याद-न्यत्रापि तथात्वस्य न्यायप्राप्तत्वात्, सूत्रकारेण तु छन्दो-गश्रुत्यपेक्षयोक्तं, वायुमब्दादिति । एवं सति मासेभ्यः परस्ताद्देवनिवेशनं कार्यम् । न च वायुमब्दादिति सूत्रात् मार्गभेदापत्तिः । देवलोकस्यादित्याधिष्ठेयत्वेनादित्य-मध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती । तद-नुसारेण न्यासोऽपि, अतो नानुपपत्तिः ।

४।३।२

'वरुणाच्चाधीन्द्रप्रजापती' — स्पष्टमिदम् । अर्चि-रादिपाठे विद्युदनन्तरं 'तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति' इति पठ्यते । अत्र यस्योपासकस्य वरुणादि-लोकगमनापेक्षा नास्ति तमेवेश्येति ज्ञेयम् । मार्गैक्यनिय-मनभिप्रेत्य सूत्राकारोऽन्यत्रोक्तानामन्येषामपि लोकानां तत्रैव निवेशनमाह । ४।३।४

'आतिवाहिकास्तल्लिङ्गात्' — विद्युदनन्तरं स 'तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति' इत्यत्र भवति संशयः । उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते । स च विद्युदनन्तरमेव पठ्यते । एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन गमयित्रप्राप्तेर्ब्रह्मप्राप्तिर्भवति, न वेति । तत्र वाच-निकस्य गमयितृवचनस्याभावेन सा न भवतीति प्राप्ते आह — आतिवाहिका इति । एतदुक्तं भवति । यस्योपासकस्य यावल्लोकभोगानन्तरं ब्रह्मप्राप्ति-र्भवति तस्य तावल्लोकभोगानन्तरं ब्रह्मप्राप्तिर्भवति, अत एव कौषीतकिश्रुतौ प्रजापतिलोकानन्तरं ब्रह्मलोकः पठ्यते । अन्यथा ज्ञानसाधनवैयर्थ्ये, तेषां ब्रह्मप्राप्ति-साधनत्वबोधकश्रुतिविरोधश्च स्यात् । तथा च यत्राऽऽ-तिवाहिकश्रुतिर्नास्ति, तत्राप्यातिवाहिको भगवदीय एव ब्रह्म प्रापयतीति ज्ञेयम् । वस्तुतस्तु बहव एव तादृशाः सन्तीति ज्ञापनाय बहुवचनमत्रोक्तम् । तन्मध्ये कश्च-नाप्येक एव भवतीति ज्ञापनाय श्रुतावेकवचनम् । तत्र हेतुः—तल्लिङ्गात् । 'तत्पुरुषोऽमानवः' इत्यत्र ब्रह्मसम्बन्धित्वं लिङ्गमुच्यते । तेनेदं ज्ञायते, यथा विद्या-बलात् तत्तल्लोकप्राप्तिस्तथैव ब्रह्मप्राप्तिरपीति । न । किन्तु भगवदीयपुरुषाऽनुग्रहेणैवेति । न च पूर्वपूर्वलोकाधि-ष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा, तथा ब्रह्म-प्राप्त्यव्यवहितपूर्वलोकदेवा एव ब्रह्मप्रापका इति तत्प-देन स लोक एवोच्यते इति वाच्यम् । तदेतरलोकेषु तदकथनं यथा, तथाऽत्रापि न कथयेत् । लोकाधिष्ठातृ-देवानामातिवाहिकत्वोक्तौ अर्चिर्लोकप्रापकाऽऽतिवाहि-कस्याभावात् तत्प्राप्तिर्न स्यात् । तथा सति देवयानमार्ग एवोच्छिद्येत । अतो यथा विद्याबलेनैवार्चिषः प्राप्ति-स्तथेतरेषामपीति बुध्यस्व । कस्यचिद्ब्रह्मलोकगत्यनन्तरमेव ब्रह्मप्राप्तिः । कस्यचित् बहुलोकगत्यनन्तरं सोच्यते इति । भोगभूमित्वमेव तेषामवगन्तव्यम् । सर्वेषां सर्वत्र गमने देवयाने पन्थानं वदन्त्याः श्रुतेः सामितत्कथनमनुपपन्नं स्यात्, अत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्तमुत्पश्यामः । ४।३।५

वाजसनेयके ब्रह्मलोकानामयतीति पठ्यते । छान्दोग्ये तु ब्रह्मेति । तत्रायं भावः—भक्तं तु वैकुण्ठलोकं नयति, ते बहुविधाः, इति ब्रह्मलोकानित्युक्तम् । ज्ञानमार्गीयं त्वक्षरं ब्रह्म प्रापयतीति ब्रह्मेत्युक्तम् । ४।३।७

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वाऽमानवेन पुरुषेण प्रापिताः परमेव ब्रह्म प्राप्नुवन्तीति सिद्धम् । तत्रेदं संदिह्यते — अर्चिरादिलोकप्राप्तिरुपासनाविशेष-फलम् । एवं सति अमानवः पुरुषस्तान् सर्वान् ब्रह्म

प्रापयति, उत कांश्चिदेवेति। किमत्र युक्तम्। सर्वानेवेति। यतोऽर्चिरादिमार्गगतानामन्ते ब्रह्मप्रापणार्थमेव स नियुक्तः, ततोऽन्यथा करणे हेत्वभावात्तथैव स कर्तेति प्राप्ते, उच्यते—श्रुतौ ब्रह्मत्वेनैव सर्वत्रोपासनाया उक्तत्वादुपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वप्यतथात्वं ज्ञात्वा श्रुतिर्ब्रह्मत्वोपासनायाः फलसाधनत्वं वदति, न तूपास्ये ब्रह्मतामपीति मन्वाना य उपासते ते प्रतीकालम्बना इत्युच्यन्ते। तथा च सत्यपि वेदविहितत्वेनोपासनायाः कृतत्वेन सफलत्वात् तत्फलत्वेनोपासकानामर्चिरादिलोकप्राप्तावपि तानमानवः पुरुषो ब्रह्म न प्रापयति, किन्तु शुद्धब्रह्मत्वं ज्ञात्वा य उपासते तानेव ब्रह्म प्रापयतीति बादरायण आचार्यो मन्यते। तत्र हेतुमाह—उभयथा दोषादिति। वस्तुतो यद्ब्रह्मरूपं तत्राऽब्रह्मत्वनिश्चयः उपासनार्थं च ब्रह्मत्वेन भावनं एवमुभयथा करणे दोषः संपद्यते, इति तस्य न ब्रह्मप्राप्तावधिकारोऽस्तीति युक्तं तदनयनमित्यर्थः। तथाच श्रुतिः 'असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्' (तैउ. २।६) इति, 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा॥' इति। एवं ज्ञानमार्गीयव्यवस्थामुक्त्वा भक्तिमार्गीयस्यापि तामाह—तत्क्रतुश्चेति। 'सर्वं मद्भक्तियोगेन' इति वाक्यान्न तस्योपासनापेक्षा, इति न प्रतीकादिसंभावना। तत्र कथंचित् 'यदि वाञ्छति' इति वाक्यादिच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभगवद्भजनलक्षणक्रतुश्च नीयते इत्यर्थः। वस्तुतस्तु भक्तस्याऽमानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोति इति ज्ञापनाय प्रथमान्त उक्तः।

वल्लभ. ४।३।१६

(७) तत्तल्लोकगमनं तत्तल्लोकेषु भोगश्चाचार्येण न निराक्रियते, श्रुतिस्मृतिभ्यस्तयोरवगमात्। ननु भोगार्थे विलम्बे 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छेत्' इति श्रुतिविरोध इति चेत्। न। वर्त्मनि भोगमनिच्छोरुपासकस्य क्षिप्रगमनसंभवात् इति।

४।३।५

तदिदं बादरिजैमिन्योर्मतद्वयमुपासकभेदेन समञ्जसीकरोत्याचार्यः—अप्रतीकालम्बनानिति। ये ब्रह्मविष्णुरुद्रान् चतुर्विंशतितत्त्वानि वा ब्रह्मदृष्ट्योपासते ते प्रतीकोपासकाः प्रतीकालम्बनाः, प्रतीकशब्दस्याङ्गवाचित्वात्। ये तु ब्रह्म विशेष्यं कृत्वा तैर्विशेषणैरुपासते, ये वा केवलब्रह्मविद्वांसः, तेऽप्रतीकालम्बनाः तयोर्मध्येऽप्रतीकालम्बनानेव विदुषो जैमिन्युक्तं प ब्रह्म नयति ब्रह्मलोकात् तत्रत्यदेवगणः, अर्थात् प्रतीकालम्बनान् हिरण्यगर्भादिषु ब्रह्मोपासकान् नादयुक्तं कार्यब्रह्मलोके भोगार्थं प्रलयपर्यन्तं स्थापयति, इति बादरायणो मतद्वयव्यवस्थायै मन्यते।

ननु परब्रह्मणो व्यापकत्वात्तत्प्राप्तये गतिर्विफलेत्युक्तं 'गत्युपपत्तेः' इत्यत्र, इति चेत्। न। आवरणेभ्यो बहिर्गत्वा प्रकृष्टभोग्यं भुञ्जानः कारणद्रव्यापूरेण हिरण्यगर्भादीन् प्रत्यपि ईश्वरवदेवेष्टे इत्यस्यैव फलत्वसंभवात्, शास्त्रावगतस्यार्थस्य स्वर्गादिवत् तर्काविषयत्वेऽप्यक्षतेश्चेति।

* विज्ञान. ४।३।१५

यज्ञक्षतपूर्तिकरं प्रायश्चित्तं, ऋत्विजो ब्रह्मणो मौनविधिः

**एष ह वै यज्ञो योऽयं पवते। एष ह यन्निदꣳ सर्वं पुनाति। यदेष यन्निदꣳ सर्वं पुनाति तस्मादेष एव यज्ञः। तस्य मनश्च वाक्च वर्तनी॥**

(१) रहस्यप्रकरणे प्रसङ्गात् आरण्यकत्वसामान्याच्च यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चित्तार्थां विधातव्याः, तदभिज्ञस्य चर्त्विजो ब्रह्मणो मौनमित्यत इदमारभ्यते। एष ह वै एष वायुः योऽयं पवते अयं यज्ञः। ह वै इति प्रसिद्धार्थावद्योतकौ निपातौ। वायुप्रतिष्ठो हि यज्ञः प्रसिद्धः श्रुतिषु। 'स्वाहा वातेधाः' 'अयं वै यज्ञो योऽयं पवते' इत्यादिश्रुतिभ्यः। वात एव हि चलनात्मकत्वात्क्रियासमवायी, 'वात एव यज्ञस्याऽऽरम्भको वातः प्रतिष्ठा' इति च श्रवणात्। एष ह यन् गच्छन् चलन् इदं सर्वं जगत् पुनाति, पावयति शोधयति। न ह्यचलतः शुद्धिरस्ति। दोषनिरसनं चलतो हि दृष्टं, न स्थिरस्य। यत् यस्माच्च

* अमानवः पुरुषो विद्युल्लोकस्थ इति विशेषः। शेषं शंकरवत्।

(१) छाउ. ४।१६।१.

यत् एष इदं सर्वं पुनाति, तस्मादेष एव यज्ञः पुनातीति। तस्यैवं विशिष्टस्य यज्ञस्य वाक्च मन्त्रोच्चारणे व्यापृता, मनश्च यथाभूतार्थज्ञाने व्यापृतं, ते एते वाङ्मनसे वर्तनी मार्गौ, याभ्यां यज्ञस्तायमानः प्रवर्तते ते वर्तनी। 'प्राणापानपरिचलनवत्या हि वाचश्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञः' इति हि श्रुत्यन्तरम्। अतो वाङ्मनसाभ्यां यज्ञो वर्तते, इति वाङ्मनसे वर्तनी उच्येते यज्ञस्य।

शंकर.

( २ ) पुनातीति यज्ञपवनयोरैक्यकरणकार्यो-र्यज्ञशब्दे प्रत्यभिज्ञानात् जकारस्य नकारविकारस्य यज-शब्दस्य पुनातीति निर्वचनमिति भावः। उक्तमेवो-पसंहरति — यदेष इति। एवं यज्ञस्य वायोश्चाभेदो-पपादनेन यज्ञस्य गन्तृत्वं संपाद्य गन्तुर्यज्ञस्य मार्ग-माह — तस्य मनश्चेति। प्रवृत्तिसाधनभूतौ वाङ्-मनसयोर्मार्ग इति यावत्। * रंग.

तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा। वाचा होताऽध्वर्युरुद्गाताऽन्यतराम्। स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति॥

अन्यतरामेव वर्तनीꣳ सꣳस्करोति। हीयतेऽन्यतरा। स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति। यज्ञꣳ रिष्यन्तं यजमानोऽनुरिष्यति। स इष्ट्वा पापीयान्भवति॥

( १ ) तयोर्वर्तन्योरन्यतरां वर्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मा ऋत्विक्। वाचा वर्तन्या होताऽध्वर्युरुद्गातेत्येते त्रयोऽपि ऋत्विजः अन्यतरां वाग्लक्षणां वर्तनीं वाचैव संस्कुर्वन्ति। तत्रैवं सति वाङ्मनसे वर्तनी संस्कार्ये यज्ञे। अथ स ब्रह्मा यत्र यस्मिन्काले उपाकृते प्रारब्धे प्रातरनुवाके शस्त्रे, पुरा पूर्वं परिधानीयाया ऋचो ब्रह्मा एतस्मिन्नन्तरे काले व्यववदति मौनं परित्यजति यदि, तदाऽन्यतरामेव वाग्वर्तनीं संस्करोति। ब्रह्मणाऽसंस्क्रियमाणा मनोवर्तनी हीयते विनश्यति छिद्रीभवति अन्यतरा। न यज्ञः उभयवर्तन्यैव अन्यतरया वर्तितुमशक्नुवन् रिष्यति। कथमिवेति, आह—स यथैकपात् पुरुषः व्रजन् गच्छन् अध्वानं रिष्यति, रथो वैकेन चक्रेण वर्तमानो गच्छन् रिष्यति, एवमस्य यजमानस्य कुब्रह्मणा यज्ञो रिष्यति विनश्यति। यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति; यज्ञप्राणो हि यजमानः। अतो युक्तो यज्ञरेषे रेषस्तस्य। स तं यज्ञमिष्ट्वा तादृशं पापीयान् पापतरो भवति। शंकर.

( २ ) अवदतीत्यत्र क्षेपार्थौ 'नञो नलोपस्तिङि क्षेपे' इति नलोपः। यत्र यज्ञे प्रातरनुवाकशस्त्रे उपाकृते आरब्धे सति परिधानीयया ऋचः प्राग्ब्रह्मा व्यवदति। विशब्दो विविधार्थो नञ्श्च निन्दितत्वमर्थः। विविधं निन्दितं च वदति मौनं त्यजति वेदित्यर्थः। * रंग.

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी सꣳस्कुर्वन्ति। न हीयतेऽन्यतरा॥

स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति। यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति। स इष्ट्वा श्रेयान्भवति॥

( १ ) अथ पुनर्यत्र ब्रह्मा विद्वान् मौनं परिगृह्य वाग्विसर्गमकुर्वन् वर्तते यावत्परिधानीयाया न व्यववदति, तथैव सर्वर्त्विजः, उभे एव वर्तनी संस्कुर्वन्ति, न हीयतेऽन्यतराऽपि। किमिवेति, आह—पूर्वोक्तविपरीतौ दृष्टान्तौ। एवमस्य यजमानस्य यज्ञः स्ववर्तनीभ्यां वर्तमानः प्रतितिष्ठति स्वेनाऽऽत्मनाऽविनश्यन् वर्तते इत्यर्थः। यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति। स यजमानः एवं मौनविज्ञानवद्ब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान् भवति श्रेष्ठो भवतीत्यर्थः।

शंकर.

( २ ) वर्तन्याविति वक्तव्ये 'सुपां सुलुक् ०' (पा. सू. ७।१।३९) इति छान्दसो लुक्। * रंग.

---

* शेषं शंकरवत्।

(१) छाउ. ४।१६।२, ३; रंग. व्यववदति ( व्यवदति ) सꣳस्करोति। ही ( सꣳस्कुर्वन्ति। ही ).

* शेषं शंकरवत्।

(१) छाउ. ४।१६।४, ५; रंग. व्यववदत्युभे ( व्यवदत्युभे ).

प्रायश्चित्तहोमाङ्गव्याहृतयः

प्रँजापतिर्लोकानभ्यतपत् । तेषां तप्यमानानाꣳ रसान्प्रावृहत् । अग्निं पृथिव्याः । वायुमन्तरिक्षात् । आदित्यं दिवः ॥

अत्र ब्रह्मणो मौनं विहितं, तद्रेषे ब्रह्मत्वकर्मणि चान्यस्मिंश्च हौत्रादिकर्मरेषे व्याहृतिहोमः प्रायश्चित्तमिति, तदर्थं व्याहृतयो विधातव्या इत्याह—प्रजापतिरिति । प्रजापतिर्लोकानभ्यतपत् लोकानुद्दिश्य तत्र सारजिघृक्षया ध्यानलक्षणं तपश्चचार । तेषां तप्यमानानां लोकानां रसान् साररूपान् प्रावृहत् उद्धृतवान् जग्राहेत्यर्थः । कान् ? अग्निं रसं पृथिव्याः । वायुमन्तरिक्षात् । आदित्यं दिवः । * शंकर.

सं एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानाꣳ रसान् प्रावृहत् । अग्नेर्ऋचः । वायोर्यजूꣳषि । सामान्यादित्यात् ॥

पुनरप्येवमेवाग्न्याद्याः स एतास्तिस्रो देवता उद्दिश्याभ्यतपत् । ततोऽपि सारं रसं त्रयीविद्यां जग्राह । शंकर.

सँ एतां त्रयीं विद्यामभ्यतपत् । तस्यास्तप्यमानाया रसान्प्रावृहत् । भूरित्यृग्भ्यः । भुवरिति यजुर्भ्यः । स्वरिति सामभ्यः ॥

स एतां पुनरभ्यतपत् त्रयीं विद्याम् । तस्यास्तप्यमानाया रसं भूरिति व्याहृतिमृग्भ्यो जग्राह । भुवरिति व्याहृतिं यजुर्भ्यः । स्वरिति व्याहृतिं सामभ्यः । अत एव लोकदेववेदरसा महाव्याहृतयः । शंकर.

तँद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयात् । ऋचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टꣳ संदधाति ॥

( १ ) अतः तत् तत्र यज्ञे यदि ऋक्तः ऋक्संबन्धादृङ्निमित्तं रिष्येत् यज्ञः क्षतं प्राप्नुयात्, भूः स्वाहेति गार्हपत्ये जुहुयात् । सा तत्र प्रायश्चित्तिः । कथम् । ऋचामेव, तदिति क्रियाविशेषणं, रसेन ऋचां वीर्येण ओजसा ऋचां यज्ञस्य ऋक्संबन्धिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतरूपमुत्पन्नं संदधाति प्रतिसंधत्ते । शंकर.

( २ ) तत्तस्माद्धेतोः । यदृचामृक्संबन्धि तद्विरिष्टम् । + रंग.

अँथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् । यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टꣳ संदधाति ॥

अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात् । साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति ॥

अथ यदि यजुष्टो यजुर्निमित्तं रिष्येत्, भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् । तथा सामनिमित्ते रेषे स्वः स्वाहेत्याहवनीये जुहुयात् । तथा पूर्ववद्यज्ञं संदधाति । ब्रह्मनिमित्ते तु रेषे त्रिष्वग्निषु, तिसृभिर्व्याहृतिभिर्जुहुयात् । त्रय्या हि विद्यायाः स रेषः, ' अथ केन ब्रह्मत्वमित्यनयैव त्रय्या विद्यया ' इति श्रुतेः । न्यायान्तरं वा मृग्यं ब्रह्मत्वनिमित्ते रेषे । शंकर.

तँद्यथा लवणेन सुवर्णꣳ संदध्यात् । सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥

एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति । भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥

( १ ) तद्यथा लवणेन सुवर्णं संदध्यात् । क्षारेण टङ्कणादिना खरे मृदुत्वकरं हि तत् । सुवर्णेन रजतमशक्यसंधानं संदध्यात् । रजतेन तथा त्रपु, त्रपुणा सीसं, सीसेन लोहं, लोहेन दारु, दारु चर्मणा चर्मबन्धनेन । एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं संदधाति ।

* रंग शंकरवत् ।

(१) छाउ. ४।१७।१.

(२) छाउ. ४।१७।२.

(३) छाउ. ४।१७।३.

(४) छाउ. ४।१७।४.

+ शेषं शंकरवत् ।

(१) छाउ. ४।१७।५, ६.

(२) छाउ. ४।१७।७, ८.

भेषजकृतो ह वा एष यज्ञः। रोगार्त इव पुमांश्चिकित्सकेन सुशिक्षितेनैव यज्ञो भवति। कोऽसौ। यत्र यस्मिन्यज्ञे एवंवित् यथोक्तव्याहृतिहोमप्रायश्चित्तवित् ब्रह्मा ऋत्विग्भवति स यज्ञ इत्यर्थः।

शंकर.

( २ ) कृतभेषजः कृतौषधः।

* रंग.

**एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवति। एवंविदꣳ ह वा एषा ब्रह्माणमनुगाथा। यतो यत आवर्तते तत्तद्गच्छति—।**

( १ ) किंच, एष ह वा उदक्प्रवण उदङ्निम्नो दक्षिणोच्छ्रायो यज्ञो भवति। उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः। यत्रैवंविद्ब्रह्मा भवति। एवंविदं ह वै ब्रह्माणं ऋत्विजं प्रत्येषा अनुगाथा ब्रह्मणः स्तुतिपरा। यतो यत आवर्तते कर्म प्रदेशादृत्विजां यज्ञः क्षतीभवन्, तत्तद्यज्ञस्य क्षतरूपं प्रतिसंदधत्प्रायश्चित्तेन गच्छति परिपालयतीत्येतत्। शंकर.

( २ ) यतो यतो यत्र यत्र यज्ञस्य क्षतमावर्तते, आ समन्ताद्यान्य वर्तते, आ ईषद्वा वर्तते, तत्सर्वं मननशीलो ब्रह्मा गच्छति समाधत्त इत्यर्थः।

* रंग.

**मानवः। ब्रह्मैवैक ऋत्विक्कुरूनश्वाऽभिरक्षति। एवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्वाꣳश्चर्त्विजोऽभिरक्षति। तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम्॥**

( १ ) मानवो ब्रह्मा मौनाचरणान्मननाद्वा ज्ञानवत्त्वात्, ततो ब्रह्मैवैकः ऋत्विक् कुरून् कर्तॄन् योद्धॄन् अश्वारूढान् अश्वा वडवा यथाऽभिरक्षति, एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति, तत्कृतदोषापनयनात्। यत एवं विशिष्टो ब्रह्मा विद्वान्, तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीत, नानेवंविदं कदाचनेति। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः। + शंकर.

( २ ) 'न वा तत्सहभावाश्रुतेः'—न वेति पक्षव्यावर्तनम्। न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति। कुतः। तत्सहभावाश्रुतेः। यथा हि त्रिवेदविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति, स्तोत्रमनुशंसति, प्रस्तोतः साम गाय, होतरेतद्यज' इत्यादिना। नैवमुपासनानां सहभावश्रुतिरस्ति। ननु प्रयोगवचन एषां सहभावं प्रापयेत्। नेति ब्रूमः। पुरुषार्थत्वादुपासनानाम्। प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयेत्। उद्गीथाद्युपासनानि क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत् पुरुषार्थानीत्यवोचाम 'पृथग्ध्यप्रतिबन्धः फलम्' ( ब्र. सू. ३।३।४२ ) इत्यत्र। ३।३।६५

'दर्शनाच्च'—दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्—'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति' इति। सर्वप्रत्ययोपसंहारे हि, 'सर्वे सर्वविदः' इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत। तस्माद्यथाकाममुपासनानां समुच्चयो विकल्पो वेति।

* ब्रशंकर. ३।३।६६

इति चतुर्थोऽध्यायः॥

---

## पञ्चमोऽध्यायः

प्राणसंवादयुक्ता प्राणोपासना ज्येष्ठत्वश्रेष्ठत्वादिगुणविषयिणी

**[1]यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च॥**

---

* शेषं शंकरवत्।

(१) छाउ. ४।१७।९.

(२) छाउ. ४।१७।१०; ब्रशंकर. ३।३।६६, ४।४।१८; भास्कर. ३।३।६६ ( वै० ); रामानुज. निबार्क. श्रीकंठ. श्रीकर. ३।३।६४.

+ रंग. शंकरवत्।

* भास्कर. रामानुज. निंबार्क. श्रीकंठ. ब्रशंकरवत्।

(१) छाउ. ५।१।१; ब्रशंकर. २।४।८, ३।३।१, ५८; भास्कर. ३।३।१०; रामानुज. ३।३।१०; निंबार्क. २।४।८; श्रीकंठ. ३।३।१०, १८; श्रीकर. ३।३।१०, १८; विज्ञान. २।४।८; बलदेव. २।४।११.

(१) सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता। अथेदानीं पञ्चमेऽध्याये पञ्चाग्निविदो गृहस्थस्योर्ध्वरेतसां च श्रद्धालूनां विद्यान्तरशीलिनां तामेव गतिमनूद्यान्या दक्षिणदिक्संबन्धिनी केवलकर्मिणां धूमादिलक्षणा पुनरावृत्तिरूपा तृतीया च ततः कष्टतरा संसारगतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते। 'प्राणः श्रेष्ठो वागादिभ्यः' 'प्राणो वाव संवर्गः' इत्यादि च बहुशोऽतीते ग्रन्थे प्राणग्रहणं कृतं, स कथं श्रेष्ठो वागादिषु सर्वैः संहत्यकारित्वाविशेषे, कथं च तस्योपासनमिति तस्य श्रेष्ठत्वादिगुणविधित्सयेदमनन्तरमारभ्यते — यो ह वै कश्चिज्ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणैरभ्यधिकं वेद, स ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। फलेन पुरुषं प्रलोभ्याभिमुखीकृत्याऽऽह — प्राणो वाव ज्येष्ठश्च वयसा वागादिभ्यः। गर्भस्थे हि पुरुषे प्राणस्य वृत्तिर्वागादिभ्यः पूर्वं लब्धात्मिका भवति, यया गर्भो विवर्धते। चक्षुरादिस्थानावयवनिष्पत्तौ सत्यां पश्चाद्वागादीनां वृत्तिलाभ इति प्राणो ज्येष्ठो वयसा भवति। श्रेष्ठत्वं तु प्रतिपादयिष्यति 'सुहय' इत्यादिनिदर्शनेन। अतः प्राण एव ज्येष्ठश्च श्रेष्ठश्चास्मिन्कार्यकरणसंघाते। * शंकर.

(२) 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' — सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिन्तस्मिन्वेदान्ते तानि तान्येव भवितुमर्हन्ति। कुतः। चोदनाद्यविशेषात्। आदिग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते। संयोगरूपचोदनाख्याविशेषादित्यर्थः। यथैकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुषप्रयत्नस्तादृश एव चोद्यते 'जुहुयात्' इति। एवं 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' (छाउ. ५।१।१, बृउ. ६।१।१) इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना। प्रयोजनसंयोगोऽप्यविशिष्ट एव 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' (बृउ. ६।१।१) इति। रूपमप्युभयत्र तदेव विज्ञानस्य यदुत ज्येष्ठश्रेष्ठादिविशेषणान्वितं प्राणतत्त्वम्। यथा च द्रव्यदेवते यागस्य रूपमेवं विज्ञेयं विज्ञानस्य, तेन हि तद्रूप्यते। समाख्यापि सैव प्राणविद्येति। तस्मात्सर्ववेदान्तप्रत्ययत्वं विज्ञानस्य। एवं पञ्चाग्निविद्या वैश्वानरविद्या शाण्डिल्यविद्येत्येवमादिषु योजयितव्यम्। ब्रशंकर. ३।३।१

* रंग. शंकरेण गतार्थम्।

[1]यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति। वाग्वाव वसिष्ठः॥

यो ह वै वसिष्ठं वसितृतममाच्छादयितृतमं वसुमत्तमं वा यो वेद स तथैव वसिष्ठो ह भवति स्वानां ज्ञातीनाम्। कस्तर्हि वसिष्ठ इत्याह। वाग्वाव वसिष्ठः, वाग्मिनो हि पुरुषा वसन्त्यभिभवन्त्यन्यान् वसुमत्तमाश्च, अतो वाग्वसिष्ठः। + शंकर.

[2]यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च। चक्षुर्वाव प्रतिष्ठा॥

यो ह वै प्रतिष्ठां वेद स अस्मिँल्लोकेऽमुष्मिंश्च परे प्रतितिष्ठति ह। का तर्हि प्रतिष्ठेत्याह— चक्षुर्वाव प्रतिष्ठा। चक्षुषा हि पश्यन् समे च दुर्गे च प्रतितिष्ठति यस्मात्, अतः प्रतिष्ठा चक्षुः।

* शंकर.

[3]यो ह वै संपदं वेद सꣳ हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च। श्रोत्रं वाव संपत्॥

यो ह वै संपदं वेद तस्मा अस्मै दैवाश्च मानुषाश्च कामाः संपद्यन्ते ह। का तर्हि संपदित्याह—श्रोत्रं वाव संपत्। यस्माच्छ्रोत्रेण वेदा गृह्यन्ते तदर्थविज्ञानं च, ततः कर्माणि क्रियन्ते, ततः कामसंपदित्येवं, कामसंपद्धेतुत्वाच्छ्रोत्रं वाव संपत्।

* शंकर.

[4]यो ह वा आयतनं वेदाऽऽयतनꣳ ह स्वानां भवति। मनो ह वा आयतनम्॥

यो ह वा आयतनं वेद आयतनं ह स्वानां भवत्याश्रयो भवतीत्यर्थः। किं तदायतनमित्याह—मनो ह वा आयतनम्। इन्द्रियोपहृतानां विषयाणां भोक्त्रर्थानां

+ रंग. शंकरवत्। वसितृतममित्यर्थो न कृतः।

* रंग. शंकरवत्।

(१) छाउ. ५।१।२; भास्कर. ३।३।१०.

(२) छाउ. ५।१।३; भास्कर. ३।३।१०.

(३) छाउ. ५।१।४; भास्कर. ३।३।१०.

(४) छाउ. ५।१।५; भास्कर. ३।३।१०.

प्रत्ययत्वानां मन आयतनमाश्रयः । अतो मनो ह वा आयतनमित्युक्तम् । * शंकर.

अथ ह प्राणा अहꣳश्रेयसि व्यूदिरे । अहꣳश्रेयानस्म्यहꣳश्रेयानस्मीति ॥

अथ ह प्राणा एवं यथोक्तगुणाः सन्तोऽहंश्रेयस्यहं श्रेयानस्म्यहं श्रेयानस्मीत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिरे उक्तवन्तः । * शंकर.

ते ह प्राणाः प्रजापतिं पितरमेत्योचुः । भगवन्को नः श्रेष्ठ इति । तान्होवाच । यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥

ते ह ते हैवं विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारं कंचिदेत्य ऊचुरुक्तवन्तो हे भगवन्को नोऽस्माकं मध्ये श्रेष्ठोऽभ्यधिको गुणैरित्येवं पृष्टवन्तः । तान्पितोवाच ह—यस्मिन्वो युष्माकं मध्ये उत्क्रान्ते शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि समुत्क्रान्तप्राणं ततोऽपि पापिष्ठतरमिवातिशयेन दृश्येत, कुणपमस्पृश्यमशुचि दृश्येत, स वो युष्माकं श्रेष्ठ इत्यवोचत्, काका तद्दुःखं परिजिहीर्षुः । * शंकर.

सा ह वागुच्चक्राम । सा संवत्सरं प्रोष्य पर्येत्योवाच । कथमशकतर्ते मज्जीवितुमिति । यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति । प्रविवेश ह वाक् ॥

चक्षुर्होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच । कथमशकतर्ते मज्जीवितुमिति । यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति । प्रविवेश ह चक्षुः ॥

श्रोत्रꣳहोच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच । कथमशकतर्ते मज्जीवितुमिति । यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति । प्रविवेश ह श्रोत्रम् ॥

मनो होच्चक्राम । तत्संवत्सरं प्रोष्य पर्येत्योवाच । कथमशकतर्ते मज्जीवितुमिति । यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति । प्रविवेश ह मनः ॥

तथोक्तेषु पित्रा प्राणेषु सा ह वागुच्चक्राम उत्क्रान्तवती । सा चोत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्येत्य इतरान्प्राणानुवाच । कथं केन प्रकारेणाशकत शक्तवन्तो यूयं, मदृते मां विना, जीवितुं धारयितुमात्मानमिति । ते होचुर्यथा कला इत्यादि । कला मूका यथा लोकेऽवदन्तो वाचा जीवन्ति । कथम् । प्राणन्तः प्राणेन, पश्यन्तश्चक्षुषा, शृण्वन्तः श्रोत्रेण, ध्यायन्तो मनसैवं सर्वकरणचेष्टां कुर्वन्त इत्यर्थः । एवं वयमजीविष्मेत्यर्थः । आत्मनोऽश्रेष्ठतां प्राणेषु बुद्ध्वा प्रविवेश ह वाक् पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः । समानमन्यत्, चक्षुर्होच्चक्राम, श्रोत्रं होच्चक्राम, मनो होच्चक्रामेत्यादि । यथा बाला अमनसोऽप्ररूढमनस इत्यर्थः । * शंकर.

अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत् । तꣳहाभिसमेत्योचुः । भगवन्नेधि । त्वं नः श्रेष्ठोऽसि । मोत्क्रमीरिति ॥

एवं परीक्षितेषु वागादिषु, अथानन्तरं ह स मुख्यः प्राण उच्चिक्रमिषन्नुत्क्रमितुमिच्छन् किमकरोदित्युच्यते—यथा लोके सुहयः शोभनोऽश्वः पड्वीशशङ्कून्पादबन्धनकीलान्परीक्षणायाऽऽरूढेन कशया हतः सन् संखिदेत्समुत्खनेत्समुत्पाटयेत्, एवमितरान्वागादीन्प्राणान् समखिदत्समुद्धृतवान् । ते प्राणाः संचालिताः सन्तः स्वस्थाने

---

* रंग. शंकरवत् ।

(१) छाउ. ५।१।६; ब्रशंकर. २।४।११; रामानुज. ३।३।१० अथ ह प्राणा ( एता ह वै देवता ); श्रीकर. ३।३।१०

(२) छाउ. ५।१।७; ब्रशंकर. २।१।५, २।४।११; भास्कर. ३।३।१०; रामानुज. २।४।१०; श्रीकंठ. २।४।१०; श्रीकर. २।४।९, ३।३।१०; विज्ञान. २।४।१, ८.

(३) छाउ. ५।१।८-११; भास्कर. ३।३।१०.

* रंग. शंकरवत् ।

(१) छाउ. ५।१।१२; भास्कर. ३।३।१०.

स्थातुमनुत्सहमाना अभिसमेत्य मुख्यं प्राणं तमूचुः। हे भगवन्नेधि, भव नः स्वामी। यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि। मा चास्माद्देहादुत्क्रमीरिति। * शंकर.

**[१] अथ हैनं वागुवाच। यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति। अथ हैनं चक्षुरुवाच। यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति॥**

**[२] अथ हैनꣳ श्रोत्रमुवाच। यदहꣳ संपदस्मि त्वं तत्संपदसीति। अथ हैनं मन उवाच। यदहमायतनमस्मि त्वं तदायतनमसीति॥**

अथ हैनं वागादयः प्राणस्य श्रेष्ठत्वं कार्येणाऽऽपादयन्त आहुः—बलिमिव हरन्तो राज्ञे विशः। कथं, वाक् तावदुवाच—यदहं वसिष्ठोऽस्मि, यदिति क्रियाविशेषणं, यद्वसिष्ठत्वगुणाऽस्मीत्यर्थः। त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन त्वं तद्वसिष्ठोऽसि, तद्गुणस्त्वमित्यर्थः। अथवा तच्छब्दोऽपि क्रियाविशेषणमेव। त्वत्कृतस्त्वदीयोऽसौ वसिष्ठत्वगुणोऽज्ञानान्ममेति मयाऽभिमत इत्येतत्। तथोत्तरेषु योज्यं चक्षुःश्रोत्रमनःसु। * शंकर.

**[३] न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनाꣳसीत्याचक्षते। प्राणा इत्येवाऽऽचक्षते। प्राणो ह्येवैतानि सर्वाणि भवति॥**

श्रुतेरिदं वचः। युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं, यस्मान्न वै लोके वाचो न चक्षूंषि न श्रोत्राणि न मनांसीति वागादीनि करणान्याचक्षते लौकिका आगमज्ञा वा। किं तर्हि, प्राणा इत्येवाऽऽचक्षते कथयन्ति। यस्मात्प्राणो ह्येवैतानि सर्वाणि वागादीनि करणजातानि भवति। अतो मुख्यं प्राणं प्रत्यनुरूपमेव वागादिभिरुक्तमिति प्रकरणार्थमुपसंजिहीर्षति। शंकर.

**[४] स होवाच किं मेऽन्नं भविष्यतीति। यत्किंचिदिदमा श्वभ्य आ शकुनिभ्य इति होचुः। तद्वा एतदनस्यान्नम्। अनो ह वै नाम प्रत्यक्षम्। न ह वा एवंविदि किंचनानन्नं भवतीति॥**

(१) स होवाच मुख्यः प्राणः किं मेऽन्नं भविष्यतीति। मुख्यं प्राणं प्रष्टारमिव कल्पयित्वा वागादीन्प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह—यदिदं लोकेऽन्नजातं प्रसिद्धं आ श्वभ्यः श्वभिः सह आ शकुनिभ्यः सह शकुनिभिः, सर्वप्राणिनां यदन्नं तत्तवान्नमिति होचुर्वागादय इति। प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्वस्यान्नस्येत्येवं प्रतिपत्तये कल्पिताख्यायिकारूपाद्व्यावृत्य स्वेन श्रुतिरूपेणाऽऽह—तद्वा एतद्यत्किंचिल्लोके प्राणिभिरन्नमद्यतेऽनस्य प्राणस्य तदन्नं प्राणेनैव तदद्यते इत्यर्थः। सर्वप्रकारचेष्टाव्याप्तिगुणप्रदर्शनार्थमन इति प्राणस्य प्रत्यक्षं नाम। प्राद्युपसर्गपूर्वत्वे हि विशेषगतिरेव स्यात्। तथाच सर्वान्नानामत्तुर्नामग्रहणमितीदं प्रत्यक्षं नाम अन इति सर्वान्नानामत्तुः साक्षादभिधानम्। न ह वा एवंविदि यथोक्तप्राणविदि प्राणोऽहमस्मि सर्वभूतस्थः सर्वान्नानामत्तेति तस्मिन्नेवंविदि ह वै किंचन किंचिदपि प्राणिभिराद्यं सर्वैरनन्नमनाद्यं न भवति, सर्वमेवंविद्यन्नं भवतीत्यर्थः। प्राणभूतत्वाद्विदुषः। 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इत्युपक्रम्य— 'एवंविदो ह वा उदेति सूर्य एवंविद्यस्तमेति' इति श्रुत्यन्तरात्। † शंकर.

(२) 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्'—प्राणसंवादे श्रूयते छन्दोगानाम्—'न ह वा एवंविदि॰' इति। तथा वाजसनेयिनाम् 'न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्' (बृउ. ६।१।१४) इति। सर्वमस्यादनीयमेव भवतीत्यर्थः। किमिदं सर्वान्नानुज्ञानं शमादिवद्विद्याङ्गं विधियते, उत स्तुत्यर्थं संकीर्त्यते इति संशये विधिरिति तावत्प्राप्तम्। तथा हि प्रवृत्तिविशेषकर उपदेशो भवत्यतः प्राणविद्यासंनिधानात्तदङ्गत्वेनेयं नियमनिवृत्तिरुपदिश्यते। नन्वेवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्। नैष दोषः। सामान्यविशेषभावाद्बाधोपपत्तेः। यथा प्राणिहिंसाप्रतिषे-

---

* रंग. शंकरवत्।

(१) छाउ. ५।१।१३; भास्कर. रामानुज. श्रीकंठ. श्रीकर. ३।३।१०.

(२) छाउ. ५।१।१४; श्रीकंठ. ३।३।१०.

(३) छाउ. ५।१।१५; बलदेव. १।१।३०.

(४) छाउ. ५।२।१; शंकर. ३।४।२८; भास्कर. ३।३।१०, ३।४।२८; रामानुज. निंबार्क. श्रीकंठ. श्रीकर. ३।४।२८; वल्लभ. ३।४।२७; विज्ञान. ३।४।२८; बलदेव. ३।४।२८.

† रंग. शंकरेण गतार्थम्।

धस्य पशुसंज्ञपनविधिना बाधः । यथा च 'न कांचन स्त्रियं परिहरेत्तद्व्रतम्' (छाउ. २।१३।२) इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन तत्सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते । एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेति । एवं प्राप्ते ब्रूमः । नेदं सर्वान्नानुज्ञानं विधीयते इति । न ह्यत्र विधायकः शब्द उपलभ्यते, 'न ह वा एवंविदि किंचनानन्नं भवति' इति वर्तमानापदेशात् । न चासत्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्वलोभेनैव विधिरभ्युपगन्तुं शक्यते । अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वेदमुच्यते नैवंविदः किंचिदनन्नं भवतीति । न च श्वादिमर्यादमन्नं मानुषेण देहेनोपभोक्तुं शक्यते । शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुम् । तस्मात्प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादो न सर्वान्नानुज्ञानविधिः । तद्दर्शयति—'सर्वान्नानुमतिश्च प्राणात्यये' इति । एतदुक्तं भवति—प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते तद्दर्शनात् । तथा हि श्रुतिश्चाक्रायणस्यर्षेः कष्टायामवस्थायामभक्ष्यभक्षणे प्रवृत्तिं दर्शयति 'मटचीहतेषु कुरुषु' ( छाउ. १।१०।१ ) इत्यस्मिन् ब्राह्मणे । * ब्रशंकर ३।४।२८

( ३ ) देवानां परोक्षप्रियत्वात्प्रत्यक्षं 'अन' इति नाम परित्यज्य 'प्राणः' इति परोक्षेण नाम्ना व्यवहारः । यद्वा, अन इत्यस्य नकारान्तरयुक्तस्यान्नत्वेनान्नस्यानसंबन्धित्वादन इत्यस्य प्राणनामत्वस्य प्रत्यक्षत्वादन्नं तत्संबन्धीत्यर्थः । ‡ रंग.

**स होवाच किं मे वासो भविष्यतीति । आप इति होचुः । तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति । लम्भुको ह वासो भवति । अनग्नो ह भवति ॥**

( १ ) स होवाच पुनः प्राणः । पूर्ववदेव कल्पना । किं मे वासो भविष्यतीति । आप इति होचुर्वागादयः । यस्मात्प्राणस्य वास आपस्तस्माद्वा एतदशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा विद्वांस एतत्कुर्वन्ति । किम् । अद्भिर्वासस्थानीयाभिः पुरस्ताद्भोजनात्पूर्वं, उपरिष्टाच्च भोजनादूर्ध्वं च, परिदधति परिधानं कुर्वन्ति मुख्यस्य प्राणस्य । लम्भुको लम्भनशीलो वासो ह भवति । वाससो लब्धैव भवतीत्यर्थः । अनग्नो ह भवति । वाससो लम्भुकत्वेनार्थसिद्धैवानग्नतेत्यनग्नो ह भवतीत्युत्तरीयवान् भवतीत्येतत् । * शंकर.

( २ ) 'कार्याख्यानादपूर्वम्'—छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्यान्नमाम्नाय तस्यैवापो वास आमनन्ति । अनन्तरं च छन्दोगा आमनन्ति—'तस्माद्वा एतदशिष्यन्तः' इति । वाजसनेयिनश्चाऽऽमनन्ति — 'तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाऽऽचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' ( बृउ. ६।१।१४ ) 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाऽऽचामेदेतमेव तदनमनग्नं कुरुते' इति । तत्र चाऽऽचमनमनग्नताचिन्तनं च प्राणस्य प्रतीयते । तत् किमुभयमपि विधीयते उताऽऽचमनमेवोतानग्नताचिन्तनमेवेति विचार्यते । किं तावत्प्राप्तमुभयमपि विधीयत इति । कुतः । उभयस्याप्यवगम्यमानत्वात् । उभयमपि चैतदपूर्वत्वाद्विध्यर्हम् । अथवाऽऽचमनमेव विधीयते । विस्पष्टा हि तस्मिन्विधिविभक्तिः 'तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाऽऽचामेत्' इति । तस्यैव स्तुत्यर्थमनग्नतासंकीर्तनमिति । एवं प्राप्ते ब्रूमः—नाऽऽचमनस्य विधेयत्वमुपपद्यते कार्याख्यानात् । प्राप्तमेव हीदं कार्यत्वेनाऽऽचमनं प्रायत्यार्थं स्मृतिप्रसिद्धमन्वाख्यायते । नन्वियं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात् । नेत्युच्यते । विषयनानात्वात् । सामान्यविषया हि स्मृतिः पुरुषमात्रसंबद्धं प्रायत्यार्थमाचमनं प्रापयति । श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेवाऽऽचमनं विदधती विदध्यात् । न च भिन्नविषययोः श्रुतिस्मृत्योर्मूलमूलिभावोऽवकल्पते । न चेयं श्रुतिः प्राणविद्यासंयोग्यपूर्वमाचमनं विधास्यतीति

---

* भास्कर. रामानुज. निंबार्क. श्रीकंठ. वल्लभ. विज्ञान. ब्रशंकरवत् ।

‡ शेषं शंकरवत् ।

(१) छाउ. ५।२।२, ब्रशंकर. ३।३।१८; भास्कर. ३।३।१०, १८; रामानुज. श्रीकंठ. ३।३।१८.

* रंग. शंकरवत् ।

शक्यमाश्रयितुम् । पूर्वस्यैव पुरुषमात्रसंयोगिनः आचमनस्येह प्रत्यभिज्ञायमानत्वात् । अत एव च नोभयविधानम् । उभयविधाने च वाक्यं भिद्येत । तस्मात् प्राप्तमेवाशिशिषतामशितवतां चोभयत आचमनमनूद्य 'एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते' ( बृउ. ६।१।१४ ) इति प्राणस्यानग्नताकरणसंकल्पोऽनेन वाक्येनाऽऽचमनीयास्वप्सु प्राणविद्यासंबन्धित्वेनापूर्व उपदिश्यते । न चायमनग्नतावादः आचमनस्तुत्यर्थ इति न्याय्यम् । आचमनस्याविधेयत्वात् । स्वयं चानग्नतासंकल्पस्य विधेयत्वप्रतीतेः । न चैवं सत्येकस्याऽऽचमनस्योभयार्थताऽभ्युपगता भवति प्रायत्यार्थता परिधानार्थता चेति । क्रियान्तरत्वाभ्युपगमात् । क्रियान्तरमेव ह्याचमनं नाम प्रायत्यार्थं पुरुषस्याभ्युपगम्यते । तदीयासु त्वप्सु वासःसंकल्पनं नाम क्रियान्तरमेव परिधानार्थं प्राणस्याभ्युपगम्यते इत्यनवद्यम् ।

* ब्रशंकर. ३।३।१८

[१]तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच । यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥

तदेतत्प्राणदर्शनं स्तूयते । कथम् । तद्धैतत्प्राणदर्शनं सत्यकामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यः तस्मै गोश्रुत्याख्यायोक्त्वोवाच अन्यदपि वक्ष्यमाणं वचः । किं तदुवाचेत्याह— यद्यपि शुष्काय स्थाणव एतद्दर्शनं ब्रूयात्प्राणवित्, जायेरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि पत्राणि, किमु जीवते पुरुषाय ब्रूयादिति ।

‡ शंकर.

महत्त्वप्राप्तिकामस्य कर्म

[२]अथ यदि महज्जिगमिषेत् । अमावास्यायां दीक्षित्वा पौर्णमास्याꣳ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥

अथानन्तरं यदि महत् महत्त्वं जिगमिषेत् गन्तुमिच्छेत् महत्त्वं प्राप्तुं यदि कामयेतेत्यर्थः । तस्येदं कर्म विधीयते । महत्त्वे हि सति श्रीरुपनमते । श्रीमतो ह्यर्थप्राप्तं धनं, ततः कर्मानुष्ठानं, ततश्च देवयानं पितृयाणं वा पन्थानं प्रतिपत्स्यत इत्येतत्प्रयोजनमुररीकृत्य महत्त्वप्रेप्सोरिदं कर्म, न विषयोपभोगकामस्य । तस्यायं कालादिविधिरुच्यते—अमावास्यायां दीक्षित्वा दीक्षित इव भूमिशयनादिनियमं कृत्वा तपोरूपं सत्यवचनं ब्रह्मचर्यमित्यादिधर्मवान्भूत्वेत्यर्थः । न पुनर्दैक्षमेव कर्मजातं सर्वमुपादत्ते । अतद्विकारत्वान्मन्थाख्यस्य कर्मणः । 'उपसद्व्रती' इतिश्रुत्यन्तरात्पयोमात्रभक्षणं च शुद्धिकारणं तप उपादत्ते । पौर्णमास्यां रात्रौ कर्माऽऽरभते, सर्वौषधस्य ग्राम्यारण्यानामोषधीनां यावच्छक्त्यल्पमल्पमुपादाय तद्वितुषीकृत्य आममेव पिष्टं दधिमधुनोरौदुम्बरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यन्तरात् प्रक्षिप्योपमथ्याग्रतः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावावसथ्ये आज्यस्याऽऽवापस्थाने हुत्वा स्रुवसंलग्नं मन्थे संपातमवनयेत् संस्रवमधः पातयेत् ।

* शंकर.

[१]वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । आयतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥

समानमन्यत् । वसिष्ठाय प्रतिष्ठायै संपद आयतनाय स्वाहेति, प्रत्येकं तथैव संपातमवनयेद्धुत्वा ।

शंकर.

[२]अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति । अमो नामासि । अमा हि ते सर्वमिदम् । स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः । स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयतु । अहमेवेदꣳ सर्वमसानीति ॥

---

* भास्कर. रामानुज. निंबार्क. श्रीकंठ. ब्रसंकरवत् ।
‡ रंग. शंकरवत् ।
(१) छाउ. ५।२।३.
(२) छाउ. ५।२।४.

* रंग. शंकरेण गतार्थम् ।
(१) छाउ. ५।२।५.
(२) छाउ. ५।२।६.

(१) अथ प्रतिमन्त्रमनेनोपस्थानमन्त्रेणोपतिष्ठते मन्थम् । अमो नामास्यमा हि ते । अम इति प्राणस्य नाम । अन्नेन हि प्राणः प्राणिति देहे इत्यतो मन्थद्रव्यं प्राणस्यान्नत्वात्प्राणत्वेन स्तूयतेऽमो नामासीति । कुतः । यतोऽमा सह हि यस्मात्ते तव प्राणभूतस्य सर्वं समस्तं जगदिदमतः । स हि प्राणभूतो मन्थो ज्येष्ठः श्रेष्ठश्च । अत एव च राजा दीप्तिमानधिपतिश्चाधिष्ठाय पालयिता सर्वस्य । स मा मामपि मन्थः प्राणो ज्यैष्ठ्यादिगुणपूगमात्मनो गमयत्वहमेवेदं सर्वं जगदसानि भवानि प्राणवत् । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ।

शंकर.

(२) प्रतिरूप्याभिगम्य प्रदक्षिणं कृत्वेति वाऽर्थः । अम इति नाम यस्य सोऽमोनामाऽसीत्यर्थः । ननु अम इति प्राणस्य नाम । कथमप्राणस्य मन्थस्यामोनामत्वमित्यत्राऽऽह — अमा हीति । त्वं प्राणोऽसीत्यर्थः । मन्थस्य प्राणत्वमुपपादयति — ते सर्वमिदमिति । इदं जगत्सर्वं ते त्वदधीनं मन्थलक्षणान्नाधीनत्वाज्जगत इति भावः ।

* रंग.

अथ खल्वेतयर्चा पच्छ आचामति । तत्सवितुर्वृणीमह इत्याचामति । वयं देवस्य भोजनमित्याचामति । श्रेष्ठꣳ सर्वधातममित्याचामति । तुरं भगस्य धीमहीति सर्वं पिबति । निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति । चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः । स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात् ॥

(१) अथानन्तरं खल्वेतया वक्ष्यमाणयर्चा पच्छः पादश आचामति भक्षयति , मन्त्रस्यैकैकेन पादेनैकैकं ग्रासं भक्षयति । तद्भोजनं सवितुः सर्वस्य प्रसवितुः । प्राणमादित्यं चैकीकृत्योच्यते । आदित्यस्य वृणीमहे प्रार्थयेमहि मन्थरूपम् । येनान्नेन सावित्रेण भोजनेनोपभुक्तेन वयं सवितृस्वरूपापन्ना भवेमेत्यभिप्रायः । देवस्य सवितुरिति पूर्वेण संबन्धः । श्रेष्ठं प्रशस्ततमं सर्वान्नेभ्यः सर्वधातमं सर्वस्य जगतो धारयितृतममतिशयेन विधातृतममिति वा । सर्वथा भोजनविशेषणम् । तुरं त्वरं तूर्णं शीघ्रमित्येतत् । भगस्य देवस्य सवितुः स्वरूपमिति शेषः । धीमहि चिन्तयेमहि विशिष्टभोजनेन संस्कृताः शुद्धात्मानः सन्त इत्यभिप्रायः । अथवा भगस्य श्रियः कारणं महत्त्वं प्राप्तुं कर्म कृतवन्तो वयं तद्धीमहि चिन्तयेमहीति सर्वं च मन्थलेपं पिबति, निर्णिज्य प्रक्षाल्य कंसं कंसाकारं चमसं चमसाकारं वौदुम्बरं पात्रम् । पीत्वाऽऽचम्य पश्चादग्नेः प्राक्शिराः संविशति चर्मणि वाऽजिने स्थण्डिले केवलायां वा भूमौ । वाचंयमो वाग्यतः सन्नित्यर्थः । अप्रसाहो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन यथा तथा संयतचित्तः सन्नित्यर्थः । स एवंभूतो यदि स्त्रियं पश्येत्स्वप्नेषु, तदा विद्यात् समृद्धं ममेदं कर्मेति ।

शंकर.

(२) अथवा संबन्धसामान्ये षष्ठी । सवितारं ध्यायेमेत्यर्थः ।

* रंग.

तदेष श्लोकः । यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥

तदेतस्मिन्नर्थे एष श्लोको मन्त्रोऽपि भवति । यदा कर्मसु काम्येषु कामार्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति । समृद्धिं तत्र जानीयात् कर्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः । तस्मिन् स्त्र्यादिप्रशस्तस्वप्नदर्शने सतीत्यभिप्रायः । द्विरुक्तिः कर्मसमाप्त्यर्था ।

‡ शंकर.

( पञ्चाग्निविद्या )

( ५।३–१० )

परलोकगतिः पुनरावृत्तिर्देवयानपितृयाणौ तद्वियोगस्थानमाहुतिपञ्चकञ्च पुरुषसंज्ञकाहुत्यन्तम्

[२]श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानाꣳ समिति-

* शेषं शंकरवत् ।

(१) छाउ. ५।२।७; बलदेव. ३।२।४.

* शेषं शंकरवत् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ५।२।८; अशंकर. २।१।१४, ३।२।४; भास्कर. ३।२।४; रामानुज. ३।२।६; निंबार्क. ममध्व ३।२।४; श्रीकंठ. श्रीकर. ३।२।६; वल्लभ. बलदेव ३।२।४. (२) छाउ. ५।३।१

**मेयाय । त᳸ ह प्रवाहणो जैवलिरुवाच । कुमारानु त्वाऽशिषत्पितेति । अनु हि भगव इति ॥**

ब्रह्मादिस्तम्बपर्यन्ताः संसारगतयो वक्तव्या वैराग्यहेतोर्मुमुक्षूणामित्यत आख्यायिकाऽऽरभ्यते— श्वेतकेतुर्हाऽऽरुणेय इति । श्वेतकेतुर्नामतः, ह इत्यैतिह्यार्थः । अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयः । पञ्चालानां जनपदानां समितिं सभां एयाय आजगाम । तमागतवन्तं प्रवाहणो नामतो जीवलस्य अपत्यं जैवलिः उवाचोक्तवान् । हे कुमारानु त्वा त्वां अशिषत् अन्वशिषत्पिता । किमनुशिष्टस्त्वं पित्रेत्यर्थः । इत्युक्तः स आहानु हि अनुशिष्टोऽस्मि भगव इति सूचयन्नाह ।

* शंकर.

**[1]वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । न भगव इति । वेत्थ यथा पुनरावर्तन्त३ इति । न भगव इति । वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति । न भगव इति ॥**

तं होवाच यद्यनुशिष्टोऽसि, वेत्थ यदितोऽस्माल्लोकात् अधि ऊर्ध्वं यत्प्रजाः प्रयन्ति यद्गच्छन्ति तत्किं जानीषे इत्यर्थः । न भगव इत्याहेतरो न जानेऽहं तद्यत्पृच्छसि । एवं तर्हि वेत्थ जानीषे यथा येन प्रकारेण पुनरावर्तन्त इति । न भगव इति प्रत्याह । वेत्थ पथोर्मार्गयोः सहप्रयाणयोर्देवयानस्य पितृयाणस्य च व्यावर्तनमितरेतरवियोगस्थानं सह गच्छतामित्यर्थः । न भगव इति ।

* शंकर.

**[2]वेत्थ यथाऽसौ लोको न संपूर्यत३ इति । न भगव इति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । नैव भगव इति ॥**

( १ ) वेत्थ यथाऽसौ लोकः पितृसंबन्धी यं प्राप्य पुनरावर्तन्ते बहुभिः प्रयद्भिरपि येन कारणेन न संपूर्यत इति । न भगव इति प्रत्याह । वेत्थ यथा येन क्रमेण पञ्चम्यां पञ्चसंख्याकायामाहुतौ हुतायामाहुतिनिर्वृत्ता आहुतिसाधनाश्चाऽऽपः पुरुषवचसः पुरुष इत्येवं वचोऽभिधानं यासां हूयमानानां क्रमेण षष्ठाहुतिभूतानां ताः पुरुषवचसः पुरुषशब्दवाच्या भवन्ति पुरुषाख्यां लभन्त इत्यर्थः । इत्युक्तो नैव भगव इत्याह । नैवाहमत्र किंचन जानामीत्यर्थः ।

शंकर.

( २ ) ' तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् '—तदन्तरप्रतिपत्तौ देहाद्देहान्तरप्रतिपत्तौ देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तो रंहति गच्छतीत्यवगन्तव्यम् । कुतः । प्रश्ननिरूपणाभ्याम् । तथा हि प्रश्नः ' वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' इति । निरूपणं च प्रतिवचनं, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्टयन्नरेतोरूपाः पञ्चाऽऽहुतीर्दर्शयित्वा ' इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' ( छाउ. ५।९।१ ) इति । तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति गम्यते ।

* ब्रशंकर. ३।१।१

( ३ ) रंहत्यधिकरणे ( ब्र० सू० ३।१।१ ) भगवता भाष्यकृता — कर्मिणां गन्तव्यदेशं, पुनरावृत्तिप्रकारं, देवयानपितृयाणपथव्यावर्तने, अमुष्य लोकस्याप्रासारं च वेत्थेति पृष्ट्वा ' वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ' पप्रच्छेति भाषितम् ।

‡ रंग॰

**[1]अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् । कथ᳸ सोऽनुशिष्टो ब्रुवीतेति । स हाऽऽयस्तः पितुरर्धमेयाय । त᳸ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥**

( १ ) अथैवमज्ञः सन् किमनु कस्मात् त्वमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि । यो हीमानि मया पृष्टान्यर्थजातानि न विद्यान्न विजानीयात्कथं स विद्वत्स्वनुशिष्टोऽ-

* रंग. शंकरवत् ।

(१) छाउ. ५।३।२; श्रीकर. ३।१।१.

(२) छाउ. ५।३।३; ब्रशंकर. ३।१।१, ५, १७, १८, ४।२।६; भास्कर. ३।१।१, १७; रामानुज. ३।१।१, ५, १८; निंबार्क. ३।१।१; ब्रमध्व. ३।१।१; श्रीकंठ. ३।१।१, २; श्रीकर. ३।१।१, २, ५, २०, २१; वल्लभ. ३।१।१; बलदेव. ३।१।१, ४।२।६.

* भास्कर. रामानुज. निंबार्क. ब्रमध्व. श्रीकंठ. ब्रशंकरवत् ।

‡ शेषं शंकरवत् ।

(१) छाउ. ५।३।४.

स्मीति ब्रुवीत । इत्येवं स श्वेतकेतू राज्ञाऽवसित आया-सितः सन् पितुरर्धं स्थानमेयाय आगतवान्, तं च पितर-मुवाच—अननुशिष्य अनुशासनमकृत्वैव मा मां किल भगवान्समावर्तनकालेऽब्रवीदुक्तवान् अनु त्वाऽशिषमन्व-शिषं त्वामिति । शंकर.

(२) यद्वा किमनुशिष्टः किमर्थमनुशिष्ट इत्यर्थः । * रंग.

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् । तेषां नैकंचनाशकं विवक्तुमिति । स होवाच । यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकंचन वेद । यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥

स ह गौतमो राज्ञोऽर्धमेयाय । तस्मै ह प्राप्ता-यार्हां चकार । स ह प्रातः सभाग उदेयाय । तꣳ होवाच । मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति । स होवाच । तवैव राजन्मानुषं वित्तम् । यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति । स ह कृच्छ्री बभूव ॥

यतः पञ्च पञ्चसंख्याकान्प्रश्नान्राजन्यबन्धुः राजन्या बन्धवोऽस्येति राजन्यबन्धुः स्वयं दुर्वृत्त इत्यर्थः । अप्राक्षीत्पृष्टवांस्तेषां प्रश्नानां नैकंचनैकमपि नाशकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः । स होवाच पिता यथा मा मां वत्स त्वं तदाऽऽगतमात्र एवैतान्प्रश्नानवदः उक्तवानसि, तेषां नैकंचनाशकं विवक्तुमिति, तथा मां जानीहि त्वदीयाज्ञानेन लिङ्गेन मम तद्विषयमज्ञानं जानीहीत्यर्थः । कथं, यथा अहमेषां प्रश्नानामेकंचनैकमपि न वेद न जाने इति । यथा त्वमेवाङ्गैतान्प्रश्नान्न जानीषे तथाऽहमप्येतान्न जाने इत्यर्थः । अतो मय्यन्यथाभावो न कर्तव्यः । कुतः, एत-देवं यतो न जाने । यद्यहमिमान् प्रश्नानवेदिष्यं विदितवा-नस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्तनकाले पुरा नावक्ष्यं नोक्तवानस्मीत्युक्त्वा स ह गौतमो गोत्रतो राज्ञो जैवलेरर्धं स्थानमेयाय गतवान् । तस्मै ह गौत-माय प्राप्तायार्हामर्हणां चकार कृतवान् । स च गौतमः कृतातिथ्य उषित्वा परेद्युः प्रातःकाले सभागे सभां गते राज्ञि उदेयाय । सभागः पूजां सेवां सह भागेन वर्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतमः उदेयाय राजानमुद्गतवान् । तं होवाच गौतमं राजा, मानुषस्य भगवन् गौतम मनुष्यसम्बन्धिनो वित्तस्य ग्रामा-देर्वरं वरणीयं काम वृणीथाः प्रार्थयेथाः । स होवाच गौतमः, तवैव तिष्ठतु राजन्मानुषं वित्तम् । यामेव कुमारस्य मम पुत्रस्यान्ते समीपे वाचं पञ्चप्रश्नलक्षणा-मभाषथा उक्तवानसि तामेव वाचं मे मह्यं ब्रूहि कथयेत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूव । कथं त्विदमिति । * शंकर.

तꣳ ह चिरं वसेत्याज्ञापयांचकार । तꣳ होवाच । यथा मा त्वं गौतमावदः । यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति । तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति । तस्मै होवाच ॥

(१) स ह कृच्छ्रीभूतोऽप्रत्याख्येयं ब्राह्मणं मन्वानो न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्याज्ञापयांचकाराऽऽज्ञप्तवान् । यत्पूर्वं प्रत्याख्यातवान् राजा विद्यां यच्च पश्चाच्चिरं वसेत्याज्ञ-प्तवान् । तन्निमित्तं ब्राह्मणं क्षमापयति हेतु-वचनोक्त्या । तं होवाच राजा, सर्वविदो ब्राह्म-णोऽपि सन् यथा येन प्रकारेण मा मां हे गौतमाव-दस्त्वं तामेव विद्यालक्षणां वाचं मे ब्रूहीत्यज्ञानात्तेन त्वं जानीहि । तत्रास्ति वक्तव्यं यथा येन प्रकारेणेयं विद्या प्राक्त्वत्तो ब्राह्मणान्न गच्छति न गतवती, न च ब्राह्मणा अनया विद्ययाऽनुशासितवन्तः, तथैतत्प्रसिद्धं लोके यतः, तस्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रजातेरेवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्या-णामभूद्बभूव । क्षत्रियपरंपरयैवेयं विद्यैतावन्तं कालमा-गता । तथाऽप्यहमेतां तुभ्यं वक्ष्यामि त्वत्संप्रदानादूर्ध्वं ब्राह्मणान्गमिष्यति । अतो मया यदुक्तं तत्क्षन्तुमर्हसी-त्युक्त्वा तस्मै होवाच विद्यां राजा । शंकर.

(२) तं च गौतमं विद्यार्थं चिरं वसेत्याज्ञप्त-वान् । हे गौतम त्वं मां यथाऽवदः, तथा करिष्या-

* शेषं शंकरवत् ।

(१) छाउ. ५।३।५, ६.

* रंग. शंकरवत् । द्वितीययथाशब्दस्य यथावत्–सत्यं, इत्यर्थः ।

(१) छाउ. ५।३।७.

मीति शेषः। इयं वक्ष्यमाणा विद्या पुरा विद्यमानाऽपि यथा येन प्रकारेण यस्माद्धेतोरिति यावत्, त्वत्तः प्राग्ब्राह्मणान्न प्राप्तवती, तस्मात्सर्वेषु लोकेषु क्षत्रियजातेरेवैतद्विद्योपदेष्टृत्वम्। अतो ब्राह्मणेष्वेतद्विद्याया अभावाद्ब्राह्मणानामेव समीपं गमिष्यामीति बुद्धिर्न कार्या। चिरवासाज्ञापनमपि सोढव्यमिति भावः। तत्र चिरकालमुषितवते तस्मै राजा विद्यामुपदिदेशेत्यर्थः। रंग.

**असौ वाव लोको गौतमाग्निः। तस्याऽऽदित्य एव समित्। रश्मयो धूमः। अहरर्चिः। चन्द्रमा अङ्गाराः। नक्षत्राणि विस्फुलिङ्गाः॥**

(१) पञ्चम्यामाहुतावाप इत्ययं प्रश्नः प्राथम्येनापाक्रियते। तदपाकरणमन्वितरेषामपाकरणमनुकूलं भवेदिति। अग्निहोत्राहुत्योः कार्यारम्भो यः स उक्तो वाजसनेयके—'तं प्रति प्रश्नाः। उत्क्रान्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायी' इति। तेषां चापाकरणमुक्तं तत्रैव—'ते वा एते आहुती हुते उत्क्रामतः। ते अन्तरिक्षमाविशतः। ते अन्तरिक्षमेवाऽऽहवनीयं कुर्वाते। वायुं समिधम्। मरीचीरेव शुक्लामाहुतिम्। ते अन्तरिक्षं तर्पयतः। ते तत उत्क्रामतः' इत्याद्येवमेव पूर्ववत्। 'दिवं तर्पयतस्ते तत आवर्तेते। इमामाविश्य तर्पयित्वा पुरुषमाविशतः। ततः स्त्रियमाविश्य लोकं प्रत्युत्थायी भवति' इति। तत्राग्निहोत्राहुत्योः कार्यारम्भमात्रमेवंप्रकारं भवति इत्युक्तम्। इह तु तं कार्यारम्भमग्निहोत्रापूर्वविपरिणामंलक्षणं पञ्चधा प्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाह — असौ वाव इति। असौ वाव लोको गौतमाग्निरित्यादि। इह सायंप्रातरग्निहोत्राहुती हुते पयआदिसाधने श्रद्धापुरःसरे आहवनीयाग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गभाविते कर्त्रादिकारकभाविते चान्तरिक्षक्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते अप्समवायित्वादप्शब्दवाच्ये श्रद्धाहेतुत्वाच्च श्रद्धाशब्दवाच्ये तयोरधिकरणोऽग्निरन्यच्च तत्संबन्धं समिदादीत्युच्यते। या चासावग्न्यादिभावनाऽऽहुत्योः साऽपि तथैव निर्दिश्यते। असौ वाव लोकोऽग्निर्हे गौतम, यथाऽग्निहोत्राधिकरणमाहवनीय इह। तस्याग्नेर्द्युलोकाख्यस्याऽऽदित्य एव समित्तेन हीद्धोऽसौ लोको दीप्यते। अतः समिन्धनात्समिदादित्यः। रश्मयो धूमः तदुत्थानात्, समिधो हि धूम उत्तिष्ठति। अहरर्चिः प्रकाशसामान्यात् आदित्यकार्यत्वाच्च। चन्द्रमा अङ्गाराः अहःप्रशमेऽभिव्यक्तेः। अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते। नक्षत्राणि विस्फुलिङ्गाश्चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात्। * शंकर.

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः सोमो राजा संभवति॥**

(१) तस्मिन्नेतस्मिन्यथोक्तलक्षणेऽग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदैवतम्। श्रद्धामग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते। 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इत्यपां होम्यतया प्रश्ने श्रुतत्वात्। 'श्रद्धा वा आपः, श्रद्धामेवाऽऽरभ्य प्रणीय प्रचरन्ति' इति च विज्ञायते। तां श्रद्धामब्रूपां जुह्वति। तस्या आहुतेः सोमो राजाऽपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा संभवति। यथर्ग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्त आदित्ये यशआदिकार्यं रोहितादिरूपलक्षणमारभन्त इत्युक्तं तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्योः। यजमानाश्च तत्कर्तार आहुतिमया आहुतिभावनाभाविता आहुतिरूपेण कर्मणाऽऽकृष्टाः श्रद्धाप्समवायिनो द्युलोकमनुप्रविश्य सोमभूता भवन्ति। तदर्थं हि तैरग्निहोत्रं हुतम्। अत्र त्वाहुतिपरिणाम एव पञ्चाग्निसंबन्धक्रमेण प्राधान्येन विवक्षित उपासनार्थं, न यजमानानां गतिः। तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति विदुषां चोत्तरां विद्याकृताम्। शंकर.

---

(१) छाउ. ५।४।१; ब्रशंकर. ३।१।५, ३।३।५१; रामानुज. १।२।३६ वाव लोको गौतमाग्निः ( वै लोकोऽग्निः ); निंबार्क. ३।३।४९; वल्लभ. ३।१।१, ५.

* रंग. शंकरेण गतार्थम्।

(१) छाउ. ५।४।२; ब्रशंकर. ३।१ ५, ६; भास्कर. ३।१।५, ६; रामानुज. ३।१।१, ५; ब्रमध्व. ३।१।५; श्रीकंठ. ३।१।५, ६; श्रीकर. ३।१।१, ५, ६; वल्लभ. ३।१।५; विज्ञान. ३।१।२; बलदेव. ३।१।६.

(२) न चेन्द्रियाणां द्युलोकाग्नौ भूतसूक्ष्मत्वस्य द्युलि-प्रवेशकर्तृत्वं कथमिति वाच्यम् । इन्द्रियाणामभावे भूत-सूक्ष्माणां जीवं परिष्वज्य द्युलोकगमनासम्भवादिन्द्रियाणां होतृत्वमुपपद्यत इति द्रष्टव्यम् । द्युलोकादिप्रापककर्मणा-मिन्द्रियाधीनत्वाद्वा तथोक्तिरिति द्रष्टव्यम् । एवं स्वक-र्मभिर्द्युलोकं गतो जीवः स्वर्गभोगयोग्यदिव्यदेहयुक्तो भव-तीत्यर्थः । न चाप्शब्दितानां भूतसूक्ष्माणां सोमराजभावे कथिते कथं जीवस्य सोमराजभाव उपपद्यत इति वाच्यम् । उत्तरत्र पितृयाणे 'एष सोमो राजा' (छाउ. ५।१०।४) इति चन्द्रमसं प्राप्तस्य जीवस्य सोमराजभावश्रवणादत्र निर्दिश्यमानसोमराजभावस्यापि भूतसूक्ष्मपरिष्वक्तजीवविषयत्वात् ।

* रंग.

[1]पर्जन्यो वाव गौतमाग्निः । तस्य वायुरेव समित् । अभ्रं धूमः । विद्युदर्चिः । अशनिरङ्गाराः । ह्रादनयो विस्फुलिङ्गाः ॥

द्वितीयहोमपर्यायार्थमाह—पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवता-विशेषः । तस्य वायुरेव समित् । वायुना हि पर्ज-न्योऽग्निः समिध्यते, पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं धूमो धूमकार्यत्वाद्धूमवच्च लक्ष्यमाणत्वात् । विद्यु-दर्चिः, प्रकाशसामान्यात् । अशनिरङ्गाराः, काठि-न्याद्विद्युत्संबन्धाद्वा । ह्रादनयो विस्फुलिङ्गाः, ह्रादनयो गर्जितशब्दाः, मेघानां विप्रकीर्णत्वसामान्यात् ।

‡ शंकर.

[2]तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति । तस्या आहुतेर्वर्षꣳ संभवति ॥

(१) तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत् सोमं राजानं जुह्वति । तस्या आहुतेर्वर्षं संभवति । श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते ।

शंकर.

(२) द्युलोके भोगनिमित्तकर्मक्षये सोमराज-शब्दितः स देहो द्रवीभूय सह जीवेन मेघमण्डले पततीत्यर्थः । शिष्टं स्पष्टम् ।

रंग.

[1]पृथिवी वाव गौतमाग्निः । तस्याः संवत्सर एव समित् । आकाशो धूमः । रात्रिरर्चिः । दिशोऽङ्गाराः । अवान्तरदिशो विस्फुलिङ्गाः ॥

पृथिवी वाव गौतमाग्निरित्यादि पूर्ववत् । तस्याः पृथिव्याख्यस्याग्नेः संवत्सर एव समित् । संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवति । आकाशो धूमः पृथिव्या इवोत्थित आकाशो दृश्यते, यथाऽग्नेर्धूमः । रात्रिरर्चिः, पृथिव्या ह्यप्रकाशात्मिकाया अनुरूपा रात्रिः, तमोरूपत्वात् । अग्नेरिवानुरूपमर्चिः । दिशोऽङ्गाराः, उपशान्तत्वसामान्यात् । अवान्तर-दिशो विस्फुलिङ्गाः, क्षुद्रत्वसामान्यात् ।

* शंकर.

[2]तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति । तस्या आहुतेरन्नꣳ संभवति ॥

तस्मिन्नित्यादि समानम् । तस्या आहुतेरन्नं व्रीहिय-वादि संभवति । ‡ शंकर.

[3]पुरुषो वाव गौतमाग्निः । तस्य वागेव समित् । प्राणो धूमः । जिह्वाऽर्चिः । चक्षुरङ्गाराः । श्रोत्रं विस्फुलिङ्गाः ॥

पुरुषो वाव गौतमाग्निः । तस्य वागेव समित् । वाचा हि मुखेन समिध्यते पुरुषो न मूकः । प्राणो धूमः, धूम इव मुखान्निर्गमनात् । जिह्वार्चिः, लोहितत्वात् । चक्षुरङ्गाराः, भास आश्रयत्वात् । श्रोत्रं विस्फुलिङ्गाः, विप्रकीर्णत्वसाम्यात् । * शंकर.

[4]तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति । तस्या आहुते रेतः संभवति ॥

---

* शेषं शंकरेण गतार्थम् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ५।५।१.

(२) छाउ. ५।५।२.

* रंग. शंकरेण गतार्थम् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ५।६।१.

(२) छाउ. ५।६।२.

(३) छाउ. ५।७।१; ब्रशंकर. १।१।४.

(४) छाउ. ५।७।२; वल्लभ. ३।१।२५.

समानमन्यत् । अन्नं जुह्वति व्रीह्यादिसंस्कृतम् । तस्या आहुते रेतः संभवति ।

* शंकर.

**योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् । यदुपमन्त्रयते स धूमः । योनिरर्चिः । यदन्तः करोति तेऽङ्गाराः । अभिनन्दा विस्फुलिङ्गाः ॥**

योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् । तेन हि सा पुत्राद्युत्पादनाय समिध्यते । यदुपमन्त्रयते स धूमः, स्त्रीसंभवादुपमन्त्रणस्य । योनिरर्चिः, लोहितत्वात् । यदन्तः करोति तेऽङ्गाराः, अग्निसंबन्धात् । अभिनन्दाः सुखलवाः विस्फुलिङ्गाः, क्षुद्रत्वात् । * शंकर.

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः संभवति ॥**

( १ ) तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः संभवतीति । एवं श्रद्धासोमवर्षान्नरेतोहवनपर्यायक्रमेणाऽऽप एव गर्भीभूतास्ताः । तत्रापामाहुतिसमवायित्वात्प्राधान्यविवक्षा, 'आपः पञ्चम्यामाहुतौ पुरुषवचसो भवन्ति' इति । न त्वाप एव केवलाः सोमादिकार्यमारभन्ते । न चाऽऽपः अत्रिवृत्कृताः सन्तीति । त्रिवृत्कृतत्वेऽपि विशेषसंज्ञालाभो दृष्टः पृथिवीयमिमा आपोऽयमग्निरित्यन्यतमबाहुल्यनिमित्तः । तस्मात्समुदितान्येव भूतान्यब्बाहुल्यात्कर्मसमवायीनि सोमादिकार्यारम्भकाण्याप इत्युच्यन्ते । दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु । बहुद्रवं च शरीरं यद्यपि पार्थिवं, तत्र पञ्चम्यामाहुतौ हुतायां रेतोरूपा आपो गर्भीभूताः ।

‡ शंकर.

( २ ) 'योनेः शरीरम्' — हूयमानं निरूप्य फलं निरूपयति । तस्या आहुतेर्गर्भः संभवतीत्युच्यते । तत्र संदेहः — योनावन्तःस्थितमेव फलं, बहिर्निर्गतं वेति ? तत्र गर्भशब्देनान्तःस्थित एव । शरीरपरत्वे श्रुतिबाधः स्यात् । उपसंहारोऽप्यग्रे कर्तव्यभावादुपपद्यते । ततश्च षण्मासानन्तरं गर्भे ज्ञानसंभवाज्जननानन्तरं न गुरूपसत्त्यादि कर्तव्यमित्याशङ्क्य परिहरति । योनेर्निर्गतं शरीरं गर्भशब्देनोच्यते । अग्नेरुत्थितस्यैव फलरूपत्वात्, मध्यभावस्याप्रयोजकत्वात् । मातृपरिपाल्यत्वाय गर्भवचनम् । कलिलादिभावे पुरुषवचनत्वाभावादुपसंहारानुपपत्तिश्च । शरीरशब्देन वैराग्यादियुक्तः सूचितः, न तु स्वयं तदभिमानेन जात इति । तस्मात् योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः ।

वल्लभ. ३।१।२७

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते ॥**

इति त्वेवं तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यात एकः प्रश्नः । यत्तु द्युलोकादिमां प्रत्यावृत्तयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेणाऽऽविश्य लोकं प्रत्युत्थायी भवतीति वाजसनेयके उक्तं तत्प्रासङ्गिकमिहोच्यते । इह च प्रथमे प्रश्न उक्तं, वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । तस्य चायमुपक्रमः । स गर्भोऽपां पञ्चमः परिणामविशेष आहुतिकर्मसमवायिनीनां श्रद्धाशब्दवाच्यानां, उल्बावृत उल्बेन जरायुणा आवृतो वेष्टितः, दश वा नव वा मासानन्तर्मातुः कुक्षौ शयित्वा, यावद्वा यावता कालेन न्यूनेनातिरिक्तेन वा, अथानन्तरं, जायते । उल्बावृत इत्यादि वैराग्यहेतोरिदमुच्यते । कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य लोहितरेतोऽशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धशक्तिबलवीर्यतेजःप्रज्ञाचेष्टस्य शयनम् । ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति । मुहूर्तमप्य-

* रंग. शंकरवत् ।

‡ रंग. शंकरेण गतार्थम् ।

(१) छाउ. ५।८।१; श्रसंकर. १।१।४.

(२) छाउ. ५।८।२; वल्लभ. ३।१।२७.

(१) छाउ. ५।९।१; ब्रशंकर. ३।१।१; भास्कर. ३।१।१, ४।२।६; रंग. ( नव वा० ); रामानुज. ३।१।१, १८; ब्रमध्व. ३।१।१, ५; श्रीकंठ. वल्लभ. विज्ञान. ३।१।१.

सर्वं दश वा नव वा मासानन्तर्निर्देशः इति सेति च ।

† शंकर.

स जातो यावदायुषं जीवति । तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति, यत एवेतो यतः संभूतो भवति ॥

( १ ) स एवं जातो यावदायुषं पुनः पुनर्घटीयन्त्रवदागमनागमनाय कर्म कुर्वन् कुलालचक्रवद्वा तिर्यग्भ्रमणाय यावत्कर्मणोपात्तमायुस्तावज्जीवति । तमेनं क्षीणायुषं, प्रेतं मृतं, दिष्टं कर्मणा निर्दिष्टं परलोकं प्रति, यदि चेज्जीवन्वैदिके कर्मणि ज्ञाने वाऽधिकृतस्तमेनं मृतं, इतोऽस्माद्ग्रामात्, अग्नयेऽग्न्यर्थं, ऋत्विजो हरन्ति पुत्रा वाऽन्त्यकर्मणे । यत एवेत आगतोऽग्नेः सकाशाच्छ्रद्धाद्याहुतिक्रमेण, यतश्च पञ्चभ्योऽग्निभ्यः संभूत उत्पन्नो भवति, तस्मा एवाग्नये हरन्ति स्वामेव योनिमग्निमापादयन्तीत्यर्थः ।

शंकर.

( २ ) आयुःक्षयसमय एव तं प्रेतं पुरुषं दिष्टं परलोकाय निर्दिष्टम् । यद्वा दिष्टं कर्मानुसृत्य यतो द्युलोकपर्जन्याद्यग्नेरिहाऽऽगतो यतश्च योषिद्रूपाग्नेरुत्पन्नस्तस्मादग्नय एव देवा हरन्ति । ततश्च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पुनरपि संभवतीत्यर्थः ।

रंग.

* तद्य इत्थं विदुः । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते । तेऽर्चिषमभिसंभवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् ॥

मासेभ्यः संवत्सरम् संवत्सरादादित्यम् । आदित्याच्चन्द्रमसम् । चन्द्रमसो विद्युतम् । तत्पुरुषोऽमानवः । स एनान्ब्रह्म गमयति । एष देवयानः पन्था इति ॥

( १ ) वेत्थ यदितोऽधि प्रजाः प्रयन्तीत्ययं प्रश्नः प्रत्युपस्थितोऽपाकर्तव्यतया । तत्र लोकं प्रत्युत्थितानामधिकृतानां गृहमेधिनां ये इत्थमेवं यथोक्तं पञ्चाग्निदर्शनं द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पञ्चाग्न्यात्मान इत्येवं विदुर्जानीयुः । कथमवगम्यते इत्थं विदुरिति गृहस्था एवोच्यन्ते नान्य इति । गृहस्थानां ये त्वनित्थंविदः केवलेष्टापूर्तदत्तपरास्ते धूमादिना चन्द्रं गच्छन्तीति वक्ष्यति । ये चारण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धा तप इत्युपासते तेषां चेत्थंविद्भिः सहार्चिरादिना गमनं वक्ष्यति, पारिशेष्यादग्निहोत्राहुतिसंबन्धाच्च गृहस्था एव लक्ष्यन्ते इत्थं विदुरिति ।

ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्याऽरण्यश्रुत्या चानुपलक्षिता विद्यन्ते, कथं पारिशेष्यसिद्धिः । नैष दोषः । पुराणस्मृतिप्रामाण्यादूर्ध्वरेतसां नैष्ठिकब्रह्मचारिणामुत्तरेणार्यम्णः पन्थाः प्रसिद्धः । अतस्तेऽप्यरण्यवासिभिः सह गमिष्यन्ति । उपकुर्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्देशार्हाः । अतः पञ्चाग्निविदो गृहस्था ये चेमेऽरण्ये वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः श्रद्धा तप इत्येवमाद्युपासते श्रद्दधानास्तपस्विनश्चेत्यर्थः । उपासनशब्दस्तात्पर्यार्थः । इष्टापूर्ते दत्तमित्युपासत इति यद्वत् । श्रुत्यन्तरात् ये च सत्यं ब्रह्म हिरण्यगर्भाख्यमुपासते ते सर्वेऽर्चिषमर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते । समानमन्यच्चतुर्थगतिव्याख्यानेन । एष देवयानः पन्थाः व्याख्यातः सत्यलोकावसानो नाण्डाद्बहिः, ' यदन्तरा पितरं मातरं च ' इति मन्त्रवर्णात् ।

शंकर.

---

† रंग. शंकरेण गतार्थम् ।

* अनयोः केचित् स्थलाङ्काः भाष्याणि च छाउ. ४।१५।५ ( पृ. ८४० ) इत्यत्र द्रष्टव्यानि ।

(१) छाउ. ५।९।२; ब्रशंकर. ३।१।२; विज्ञान. ३।१।२.

(२) छाउ. ५।१०।१; ब्रशंकर. ३।३।३१, ३।४।१७, १८; भास्कर. ३।१।१७, ३।३।३१, ३।४।१७, ३९, ४।३।१; रामानुज. ३।१।१७, ३।३।३२, ३।४।१७, १९, २५, ४।३।३, १४; निंबार्क. ३।१।१७, ४।३।१४; ब्रमध्व. ४।३।१; श्रीकंठ. ३।१।१७, ३।३।३२, ४।२।८, ४।३।१, २; श्रीकर. ३।१।१८, ३।३।३२, ३।४।१७, २५, ४।३।१, २३; वल्लभ. ३।१।१, ४।३।१, १४; विज्ञान. ३।३।२९, ४।३।१, २; बलदेव. ३।१।१८, ४।३।१, १५.

(१) छाउ. ५।१०।२. अन्यस्थलादिनिर्देशः छाउ. ४।१५।५ ( पृ. ८४० ) इत्यत्र द्रष्टव्यः ।

( २ ) ' अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् '—सगुणासु विद्यासु गतिरर्थवती न निर्गुणायां परमात्मविद्यायामित्युक्तम् । सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते, यथा पर्यङ्कविद्यायामुपकोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायामिति । नान्यासु, यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति । तत्र संशयः, किं यास्वेषा गतिः श्रूयते तास्वेव नियम्येत, उतानियमेन सर्वाभिरेवंजातीयकाभिर्विद्याभिरभिसंबध्येतेति । किं तावत्प्राप्तम् । नियम इति । यत्रैव श्रूयते तत्रैव भवितुमर्हति । प्रकरणस्य नियामकत्वात् । यद्यन्यत्राश्रूयमाणाऽपि गतिर्विद्यान्तरं गच्छेच्छ्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात् । अपि चार्चिरादिकैकैव गतिरुपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत्पठ्यते, तत्सर्वार्थत्वे अनर्थकं पुनर्वचनं स्यात् । तस्मान्नियम इत्येवं प्राप्ते पठति । अनियम इति । सर्वासामेवाभ्युदयप्राप्तिफलानां सगुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति । नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः । नैषोऽस्ति विरोधः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथा हि श्रुतिः — ' तद्य इत्थं विदुः ' इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती ' ये चेमेऽरण्ये श्रद्धा तप इत्युपासते ' इति विद्यान्तरशीलिनामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति । कथं पुनरवगम्यते विद्यान्तरशीलिनामियं गतिरिति । ननु श्रद्धातपःपरायणानामेव स्यात्तन्मात्रश्रवणात् । नैष दोषः । न हि केवलाभ्यां श्रद्धातपोभ्याम्, अन्तरेण विद्याबलं, एषा गतिर्लभ्यते, ' विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥' इति श्रुत्यन्तरात् । तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम् । वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते ' य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते ' ( बृउ. ६।२।१५ ) इति । तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम् । सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात् । पञ्चाग्निविद्याविदां चेत्थंवित्तयैवोपात्तत्वाद्विद्यान्तरपरायणानामेवैतदुपादानं न्याय्यम् । ' अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ' ( बृउ. ६।२।१६ ) इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिर्देवयानपितृयाणयोरेवैनानन्तर्भावयति । तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः । स्मृतिरपि—शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥' ( भ. गी. ८।२६ ) इति यत्पुनर्देवयानस्य पथो द्विराम्नानमुपकोसलविद्यायां पञ्चाग्निविद्यायां च तदुभयत्राप्यनुचिन्तनार्थम् । तस्मादनियमः । * ब्रशांकर. ३।३।३१

( ३ ) अथ वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति तृतीयं प्रश्नं प्रतिवक्ति — तद्य इत्थमिति । प्राक्प्रस्तुतस्य संसरतो जीवस्य स्वरूपं तदित्यनेन परामृश्यते । तत्प्रत्यगात्मस्वरूपं य इत्थमुक्तप्रकारेण द्युपर्जन्यपृथिवीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतःशरीरकतया देहादिलक्षणप्रकृतिविविक्ततया च य विदुरित्यर्थः । तत्र ब्रह्मात्मकतया चेत्यपि योजनीयम् । भाष्यकृता — ' अप्रतीकालम्बनान् ' ( ब्र. सू. ४।३।१५ ) इति सूत्रे पञ्चाग्निविदोऽप्यर्चिरादिना गतिश्रवणादर्चिरादिना गतस्य ब्रह्मप्राप्त्यपुनरावृत्तिश्रवणाच्च । अत एव तत्क्रतुन्यायेन प्रकृतिविनिर्मुक्तब्रह्मात्मकात्मानुसंधानं सिद्धमिति भाषितम् । अरण्ये स्थित्वा श्रद्धां पुरस्कृत्य तपःशब्दितं ब्रह्मोपासत इत्यर्थः । वाजसनेयके समानप्रकरणे ' श्रद्धां सत्यमुपासते ' ( बृउ. ६।२।१५ ) इति श्रवणात्सत्यशब्दस्य ब्रह्मपरत्वात्तपःशब्दोऽपि ब्रह्मपरः । उक्तं च व्यासार्यैः — परमं यो महत्तप इत्यादिषु तपःशब्दस्य ब्रह्मपरत्वमिति । अत्र वाजसनेयके ' श्रद्धां सत्यम् ' ( बृउ. ६।२।१५ ) इति श्रद्धाशब्दस्य द्वितीयान्तत्वश्रवणादिहापि श्रद्धाशब्दो द्वितीयान्तः । छान्दसत्वात्सुपां सुलुगिति सुपो

---

* ' विद्यया तदारोहन्ति ' इत्यस्य ब्रह्मलोकपरत्वमत्राभिसंहितम् । प्रकृतोपनिषद्भाष्ये तु आत्यन्तिकामृतत्वपरत्वमस्याभिहितम् । तथा बृहदारण्यकस्थ-सत्य-शब्दो हिरण्यगर्भपर इति प्रकृतोपनिषद्भाष्यात्स्पष्टम् । अत्र तु टीकाकृद्भिः ' सत्यं ज्ञानमनन्तं ब्रह्म ' ' तत्सत्यं स आत्मा ' ' सत्यस्य सत्यम् ' इत्यादिवाक्यान्यसकृदभ्यासे उदाहरद्भिस्तस्य परब्रह्मविषयताऽभिप्रेयते । भास्कर. रामानुज. श्रीकंठ-ब्रशांकरवत् ।

त्वम् । ततश्च पुरस्कारेत्यस्यार्थः । श्रद्धां पुरस्कृत्य ब्रह्मोपासत इत्यर्थः । इतिस्वविवक्षितः । अथ वैव-कारोऽप्यध्याहर्तव्यः । ब्रह्मैव य उपासत इत्यर्थः । ततश्च ब्रह्मोपासनत्ववृत्तिरूपकोऽयमितिशब्दो द्रष्टव्यः । यद्वा श्रद्धातपःशब्दयोः प्रसिद्ध एवार्थः । श्रद्धातपःपरायणानां च ब्रह्मविद्यानिष्ठत्वमर्थसिद्धम् । ततश्च ब्रह्मविद्यानिष्ठ इत्यर्थः फलति । असमर्थस्तत्पदविरुद्ध-नार्थत्वादपि शाब्दत्वं संभवतीत्युक्तमिति वदतां व्यास-दर्शनानुगत एव ।

* रंग.

(४) ननु ज्ञानमार्गनिष्ठस्यैव सर्वदा मार्गचिन्तनकरणा-दर्चिरादिमार्गेणैव गमनम्, उत सद्योमुक्तिरेव भवतीति संशयः । तत्र यथा ज्ञानिनो नियमाभावस्तथाऽत्रापीति प्राप्ते आह । अर्चिरादिमार्गेण तस्य ज्ञानमार्गनिष्ठस्यैवोत्क-र्षकथनात् स एव तेन मार्गेण गच्छति, न तु भक्तोऽ-पीत्यर्थः । तथाहि पञ्चाग्निविद्याप्रकरणे 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसं-भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षं' इत्यत्र उपक्रमे भक्ता-तिरिक्तानेव अधिकृत्य तथा गतिरुच्यते । स्मृतावपि 'अग्निर्ज्योतिरहः शुक्लः' इत्यत्र, 'ब्रह्मविदो जनाः' इति वचनेन ज्ञानमार्गनिष्ठस्यैव स पन्था इत्युच्यते ।

वल्लभ. ४।३।१

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते । ते धूममभिसंभवन्ति । धूमाद्रात्रिम् । रात्रेरपरपक्षम् । अपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान् । नैते संव-त्सरमभिप्राप्नुवन्ति ॥

(१) अथेत्यर्थान्तरप्रस्तावनार्थः । य इमे गृहस्था ग्रामे । ग्राम इति गृहस्थानामसाधारणं विशेषणमरण्य-वासिभ्यो व्यावृत्त्यर्थम् । यथा वानप्रस्थपरिव्राजकानाम-रण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थं तद्वत् । इष्टापूर्ते, इष्टमग्निहोत्रादि वैदिकं कर्म, पूर्तं वापीकूपतडागारामा-दिकरणम् । दत्तं, बहिर्वेदि यथाशक्ति अर्हेभ्यो द्रव्यसं-

विभागो नास्ति । इत्येवंविधं परिचरणविज्ञानाद्युपासते, इतिकर्तव्यप्रकारदर्शनार्थमित्यर्थम् । ते दर्शनवर्जितत्वात् धूमं धूमाभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते । तयाऽतिवाहिता धूमाद्रात्रिं रात्रिदेवतां, रात्रेरपरपक्ष-देवतामेव कृष्णपक्षाभिमानिनीं, अपरपक्षाद्यान्षण्मासान्द-क्षिणा दक्षिणां दिशमेति सविता, तान् मासान्दक्षिणायन-षण्मासाभिमानिनीर्देवताः प्रतिपद्यन्ते इत्यर्थः । संघ-चारिण्यो हि षण्मासदेवता इति मासानिति बहुवचन-प्रयोगस्तासु । नैते कर्मिणः प्रकृताः संवत्सरं संवत्सराभि-मानिनीं देवतामभिप्राप्नुवन्ति । कुतः पुनः संवत्सरप्रा-प्तिप्रसङ्गो यतः प्रतिषिध्यते । अस्ति हि प्रसङ्गः । संवत्स-रस्य ह्येकस्यावयवभूते दक्षिणोत्तरायणे । तत्रार्चिरादिमार्ग-प्रवृत्तानामुदगयनमासेभ्योऽवयविनः संवत्सरस्य प्राप्ति-रुक्ता । अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिरा-पन्ना । इत्यतस्तत्प्राप्तिः प्रतिषिध्यते, 'नैते संवत्सरमभि-प्राप्नुवन्ति' इति ।

शंकर.

(२) यद्वा श्रद्धापूर्वकत्वरूपोक्तप्रकारवाचीतिशब्दः ।

* रंग.

मासेभ्यः पितृलोकम् । पितृलोकादाकाशम् । आकाशाच्चन्द्रमसम् । एष सोमो राजा । तद्देवाना-मन्नम् । तं देवा भक्षयन्ति ॥

(१) मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशा-च्चन्द्रमसम् । कोऽसौ यस्तैः प्राप्यते चन्द्रमाः, य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानां, तदन्नं देवानां, तं चन्द्रमसमन्नं देवा इन्द्रादयो भक्षयन्ति । अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्मिणो देवैर्भक्ष्यन्ते । नन्वनर्थायेष्टा-दिकरणं यद्यन्नभूता देवैर्भक्ष्येरन् । नैष दोषः, अन्नमि-त्युपकरणमात्रस्य विवक्षितत्वात् । न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते । किं तर्हि, उपकरणमात्रं देवानां भवन्ति ते स्त्रीपशुभृत्यादिवत् । दृष्टश्चान्नशब्द उपकरणेषु, स्त्रियोऽन्नं,

---

* शेषं पूर्ववत् ।

(१) छाउ. ५।१०।३; अशंकर. भास्कर. रामानुज. निंबार्क. श्रीकंठ. ३।१।६, १७; श्रीकर. ३।१।६. १८; विज्ञान. ३।१।६; बलदेव. ३।१।६, ९ १८.

* यद्वेति पक्षान्तरम् । प्रथमः पक्षः शंकरवत् । शेषं शंकरवत् ।

(१) छाउ. ५।१०।४; अशंकर. ३।१।६, ७; भास्कर. ३।१।६, ७; रामानुज. ३।१।६; निंबार्क. ३।१।६, ७; श्रीकंठ. ३।१।६; श्रीकर. ३।१।६, ७; वल्लभ. ३।१।७; विज्ञान. ३।१।६; बलदेव. ३।१।६, ९.

पशवोऽन्नं, विशोऽन्नं राज्ञामित्यादि। न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति । तस्मात् कर्मिणो देवानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ति। शरीरं च तेषां सुखोपभोगयोग्यं चन्द्रमण्डले आप्यमारभ्यते। तदुक्तं पुरस्ताच्छ्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा संभवतीति। ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति। अन्त्यायां च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सहोर्ध्वं यजमानमावेष्ट्य चन्द्रमण्डलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारम्भिका भवन्ति। तदारब्धेन च शरीरेणेष्टादिफलमुपभुञ्जाना आसते।

शंकर.

( २ ) अत्रैष इत्यनेन नाभिसंभाव्यश्चन्द्रमाः परामृश्यते, चन्द्रमसः सोमराजभावोपदेशस्य व्यर्थत्वात्। अपि त्विष्टादिकार्यभिसंभविता परामृश्यते। 'तस्या आहुतेः सोमो राजा संभवति' ( छाउ. ५।४।२ ) इति न्यायेन स्वभोगयोग्यदिव्यदेहो भवतीत्यर्थः।

* रंग.

**तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्। आकाशम्। आकाशाद्वायुम्। वायुर्भूत्वा धूमो भवति। धूमो भूत्वाऽभ्रं भवति॥**

( १ ) यावत्तदुपभोगनिमित्तस्य कर्मणः क्षयः, संपतन्ति येनेति संपातः कर्मणः क्षयः, यावत्संपातं यावत्कर्मणः क्षय इत्यर्थः। तावत्तस्मिंश्चन्द्रमण्डल उषित्वाऽथानन्तरमेतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्ते। पुनर्निवर्तन्त इति प्रयोगात् पूर्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्चाऽऽसन्निति गम्यते। तस्मादिह लोक इष्टादिकर्मोपचित्य चन्द्रं गच्छन्ति। तत्क्षये चाऽऽवर्तन्ते। क्षणमात्रमपि तत्र स्थातुं न लभ्यते, स्थितिनिमित्तकर्मक्षयात्, स्नेहक्षयादिव प्रदीपस्य।

कोऽसावध्वा यं प्रति निवर्तन्त इत्युच्यते। यथेतं यथागतं निवर्तन्ते। ननु मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमिति गमनक्रम उक्तो न तथा निवृत्तिः। किं तर्ह्याकाशाद्वायुमित्यादि, कथं यथेतमित्युच्यते। नैष दोषः। आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च। न चात्र यथेतमेवेति नियमोऽनेवंविधमपि निवर्तन्ते, पुनर्निवर्तन्ते इति तु नियमः। अत उपलक्षणार्थमेतद्यथेतमिति। अतो भौतिकमाकाशं तावत्प्रतिपद्यन्ते। यास्तेषां चन्द्रमण्डले शरीरारम्भिका आप आसंस्तास्तेषां तत्रोपभोगनिमित्तानां कर्मणां क्षये विलीयन्ते। घृतसंस्थानमिवाग्निसंयोगे ता विलीना अन्तरिक्षस्था आकाशभूता इव सूक्ष्मा भवन्ति ता अन्तरिक्षाद्वायुर्भवन्ति। वायुप्रतिष्ठा वायुभूता इतश्चामुतश्चोह्यमानास्ताभिः सह क्षीणकर्मा वायुभूतो भवति। वायुर्भूत्वा ताभिः सहैव धूमो भवति। धूमो भूत्वाऽभ्रं अब्भरणमात्ररूपो भवति।

* शंकर.

( २ ) 'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च' — इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते 'तस्मिन्यावत्संपातम्...' इत्यारभ्य यावद्रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिं इति। तत्रेदं विचार्यते। किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्त्याहोस्वित्सानुशया इति। किं तावत्प्राप्तम्। निरनुशया इति। कुतः। यावत्संपातमिति विशेषणात्। संपातशब्देनात्र कर्माशय उच्यते। संपतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति। यावत्संपातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति। 'तेषां यदा तत्पर्यवैति' ( बृउ. ६।२।१६ ) इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते।

---

* शेषं शंकरवत्।

(१) छाउ. ५।१०।५; ब्रशंकर. १।१।४, ३।१।८, २२; भास्कर. २।३।१९, ३।१।८, २२; रामानुज. ३।१।६, ८, २२, ४।१।१७, ४।२।१९; निंबार्क. ३।१।२२; ब्रमध्व. ३।१।२४, २६; श्रीकंठ. ३।१।६, ८, २२; श्रीकर. ३।१।६, ८, २२, २३; वल्लभ. ३।१।२२; विज्ञान. १।२।५, २।३।४३, ३।१।७, ८, २२; बलदेव. ३।१।८, २३.

* रंग. शंकरवत्।

तस्मात्तेऽनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः । कृतात्ययेऽनुशयवानिति । येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षपिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायाऽऽरब्धं तदुपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते, सवितृकिरणसंपर्कादिव हिमकरकाः, हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम् । ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति । केन हेतुना, दृष्टस्मृतिभ्यामित्याह । तथाहि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति—'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा' (छाउ. ५।१०।७) इति । चरणशब्देनानुशयः सूच्यत इति वर्णयिष्यति । दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति । अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात् । स्मृतिरपि 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति सानुशयानामेवावरोहं दर्शयति । कः पुनरनुशयो नामेति । तस्मादामुष्मिकफले कर्मजाते उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः, तद्वन्तोऽवरोहन्तीति ।

३।१।८

'साभाव्यापत्तिरुपपत्तेः'—इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम् । अथावरोहप्रकारः परीक्ष्यते । तत्रेयमवरोहश्रुतिर्भवति—'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं०' इति । तत्र संशयः । किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते, किंवाऽऽकाशादिसाम्यमिति । तत्र प्राप्तं तावदाकाशादिस्वरूपमेव प्रतिपद्यन्त इति । कुतः । एवं श्रुतिर्भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तथाच वायुर्भूत्वा धूमो भवतीत्येवमादीन्यपि वाक्यान्येवमेवोपपद्यन्ते । तस्मादाकाशादिस्वरूपतामापद्यन्त इति । एवं प्राप्ते ब्रूमः—आकाशादिसाम्यं प्रतिपद्यन्त इति । चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति ततो वायोर्वशमेति ततो धूमादिभिः संपृच्यत इति । तदेतदुच्यते—'यथेतमाकाशमाकाशाद्वायुम्' इत्येवमादिना । कुत एतत् । उपपत्तेः । एवं ह्येतदुपपद्यते । न ह्यन्यस्यान्यभावो मुख्य उपपद्यते । आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते विभुत्वाच्चाऽऽकाशेन नित्यसंबन्धत्वात् । न तस्मादूर्ध्वापत्तेरन्यस्तत्संबन्धो घटते । श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव । अत आकाशादितुल्यतापत्तिरेवाऽऽकाशादिभाव इत्युपचर्यते ।

* ब्रशांकर. ३।१।२२

(३) अनुशयशब्दार्थश्च भुक्तफलस्य कर्मणो योऽन्यतरातिरेकेणाल्पफलेनावशिष्टता प्रेत्यकर्मफलमनुभूय ततः शेषेणेत्युक्तस्मृतेः स्वर्गनरकप्रापकस्यैव कर्मण इह लोके रमणीयकपूययोनिप्राप्तिपर्यन्तफलनिष्पत्तिं यावदवस्थानात्तु न काप्यनुपपत्तिः । अत एव ब्रह्महत्यादीनां सकलस्थावरयोनिप्राप्त्यादिपर्यन्तमेव फलं श्रूयते इति । आधुनिकास्तु आमुष्मिकफलकर्मणः फलजाते उपभुक्ते अवशिष्टमैहिकफलकं कर्मान्तरमनुशय इति कल्पयन्ति । तत्र, ततः शेषेणेत्युक्तवाक्यस्य यथाश्रुतार्थपरित्यागानौचित्यात्, । अवरोहमात्रेऽनुशयवानिति विशेषोक्त्यनौचित्यापत्तेश्च । आरोहेऽपि भवदुक्तानुशयजन्यत्वाविशेषात् । कर्मान्तरकल्पनाया अनौचित्याच्चेति ।

‡ विज्ञान. ३।१।८

दीर्घः कठिनश्च मार्गः पुरुषत्वं प्रति

**अभ्रं भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति**

---

* भास्कर. रामानुज. निंबार्क. ब्रमध्व. श्रीकंठ. ब्रशांकरवत् ।

‡ शेषं ब्रशांकरवत् ।

(१) छाउ. ५।१०।६; ब्रशांकर. ३।१।२३, २४, २६; भास्कर. ३।१।२३, २४, २६; रामानुज. ३।१।६, २२, २३, २४, २६ (इति० ) यो रेतः ( यो यो रेतः );

**जायन्ते। अतो वै खलु दुर्निष्प्रपतरम्। यो यो ह्यन्नमत्ति, यो रेतः सिञ्चति, तद्भूय एव भवति॥**

(१) अभ्रं भूत्वा ततः सेचनसमर्थो मेघो भवति। मेघो भूत्वोन्नतेषु प्रदेशेष्वथ प्रवर्षति। वर्षधारारूपेण शेषकर्मा पततीत्यर्थः। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्येवंप्रकारा जायन्ते। क्षीणकर्मणामनेकत्वाद्बहुवचननिर्देशः। मेघादिषु पूर्वेष्वेकरूपत्वादेकवचननिर्देशः। यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसंनिवेशसहस्राणि वर्षधाराभिः पतितानाम्। अतस्तस्माद्धेतोर्वै खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणम्। यतो गिरितटादुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति ततः समुद्रं ततो मकरादिभिर्भक्ष्यन्ते। तेऽप्यन्येन। तत्रैव च सह मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटे वाऽगम्ये पतितास्तिष्ठन्ति कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैः। तेऽप्यन्यैरित्येवंप्रकाराः परिवर्तेरन्। कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन्। भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबन्धो दुर्लभ एव बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणत्वम्।

अथवा अतोऽस्माद्व्रीहियवादिभावाद्दुर्निष्प्रपतरं दुर्निर्गमतरम्। दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः। व्रीहियवादिभावो दुर्निष्प्रपतस्तस्मादपि दुर्निष्प्रपताद्रेतःसिग्देहसंबन्धो दुर्निष्प्रपततर इत्यर्थः। यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा भक्षिता अन्तराले शीर्यन्ते। अनेकत्वादन्नादानाम्। कदाचित्काकतालीयवृत्त्या रेतःसिग्भिर्भक्ष्यन्ते यदा तदा रेतःसिग्भावं गतानां कर्मणो वृत्तिलाभः। कथम्। यो यो ह्यन्नमत्त्यनुशयिभिः संश्लिष्टं रेतःसिग्यश्च रेतः सिञ्चत्यृतुकाले योषिति, तद्भूय एव तदाकृतिरेव भवति। * तदवयवाकृतिभूयस्त्वं भूय इत्युच्यते, रेतोरूपेण योषितो गर्भाशयेऽन्तः प्रविष्टोऽनुशयी। रेतसो रेतःसिगाकृतिभावितत्वात्। 'सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्' इति हि श्रुत्यन्तरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः।

तथा हि—पुरुषात्पुरुषो जायते गोर्गवाकृतिरेव न जात्यन्तराकृतिस्तस्माद्युक्तं तद्भूय एव भवतीति। ये त्वन्येऽनुशयिभ्यश्चन्द्रमण्डलमनारुह्येहैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते, पुनर्मनुष्यादिभावं, तेषां नानुशयिनामिव दुर्निष्प्रपतरम्। कस्मात्। कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदुपभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलूकावत्संक्रमन्ते सविज्ञाना एव, 'सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति' इति श्रुत्यन्तरात्।

यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति, तथाऽपि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति, श्रुतिप्रामाण्यात्। तथार्चिरादिना धूमादिना च गमनं स्वप्न इवोद्भूतविज्ञानेन। लब्धवृत्तिकर्मनिमित्तत्वाद्गमनस्य। न तथाऽनुशयिनां व्रीह्यादिभावेन जातानां सविज्ञानमेव रेतःसिग्योषिद्देहसंबन्ध उपपद्यते। न हि व्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानां स्थितिरस्ति।

ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वाज्जलूकावत् सविज्ञानतैव युक्ता। तथा सति घोरो नरकानुभव इष्टापूर्तादिकारिणां चन्द्रमण्डलादारभ्य प्राप्तो यावद्ब्राह्मणादिजन्म। तथा च सत्यनर्थायैवेष्टापूर्ताद्युपासनं विहितं स्यात्। श्रुतेश्चाप्रामाण्यं प्राप्तं, वैदिकानां कर्मणामनर्थानुबन्धित्वात्।

न, वृक्षारोहणपतनवद्विशेषसंभवात्। देहाद्देहान्तरं प्रतिपित्सोः कर्मणो लब्धवृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तम्। वृक्षाग्रमारोहत इव फलं जिघृक्षोः। तथाऽर्चिरादिना गच्छतां सविज्ञानत्वं भवेत्। धूमादिना च चन्द्रमण्डलमारुरुक्षताम्। न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पततां सचेतनत्वम्। यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा, तथा

---

* 'तदवयवाकृतिभूयस्त्वं भूय इत्युच्यते' इति पाठेऽनुशयीत्यस्यानन्वयापत्तेः 'तदवयवाकृतिभूयस्तद्भूय इत्युच्यते' इति पाठं संभावयामः।

**निंबार्क.** ३।१।२३, २४, २६; **ब्रमध्व.** ३।१।२६; **श्रीकंठ.** ३।१।६, २२, २३, २४, २६ (इति०); **श्रीकर.** ३।१।६, २२, २३, २४, २६; **विज्ञान.** ३।१।२६, २७; **बलदेव.** ३।१।८, २७.

चन्द्रमण्डलान्निपततां देहिनामनुशयिनां स्वर्गभोगनिमित्तकर्मक्षयान्मूर्छितदेहानां प्रतिबद्धकरणानाम् । अतस्तेऽनभिव्यक्तदेहबीजभूता मिश्रीभूता मूर्छिता इवाऽऽकाशादिक्रमेणागत्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतयाऽननुभूतविज्ञाना एव ।

तथा लवनकण्डनपेषणसंस्कारभक्षणरसादिपरिणामरेतःसेककालेषु मूर्छितवदेव । देहान्तरारम्भकस्य कर्मणोऽलब्धवृत्तित्वात् । देहबीजभूतान्संबन्धानपरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति मूर्छावच्चेतनावत्त्वं न विरुध्यते । अन्तराले चाविज्ञानं मूर्छितवदेवेत्यदोषः ।

न च वैदिकानां कर्मणां हिंसायुक्तत्वेनाधर्महेतुत्वं शक्यमनुमातुम् । हिंसायाः शास्त्रचोदितत्वात् । ' अहिंसन्सर्वभूतानि अन्यत्र तीर्थेभ्यः ' इति श्रुतेः शास्त्रचोदिताया हिंसाया नाधर्महेतुत्वमभ्युपगम्यते । अभ्युपगतेऽप्यधर्महेतुत्वे मन्त्रैर्विषादिवत्तन्नाशोपपत्तेर्न दुःखकार्यारम्भकत्वोपपत्तिर्वैदिकानां कर्मणां मन्त्रेणेव विषभक्षणस्येति ।

* शंकर.

( २ ) ' नातिचिरेण विशेषात् ' — तत्राऽऽकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः । किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्त्युताल्पमल्पमिति । तत्रानियमः, नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्त इदमाह— नातिचिरेणेति । अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति । कुत एतत् । विशेषदर्शनात् । तथाहि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि 'अतो वै खलु दुर्निष्प्रपतरम्' इति । तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः । दुर्निष्प्रपततरं दुर्निष्क्रमतरं दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः । तदत्र दुःखं निष्प्रपतनं प्रदर्शयन्पूर्वेषु सुखं निष्प्रपतनं दर्शयति । सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः । तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासंभवात् । तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति । † ब्रशंकर. ३।१।२३

† भास्कर. रामानुज. निंबार्क. ब्रमध्व. श्रीकंठ. ब्रशंकरवत् ।

( ३ ) यद्वा ' अतो वै खलु ' ' छन्दसि व्यत्ययः ' इति छन्दसि विहितविहितलक्षणयुक्तस्य एवं शब्दः । रेफस्य वर्णविकारश्छान्दसः । ननु ... मात्रे पूर्वनिर्दिष्टाकाशादिभ्योऽतिशयत्वेनाचिरत्वस्थानं वा कथं सिध्येदिति वाच्यम् । वैशब्दस्यावधारणार्थत्वेनातःशब्दिताद्व्रीह्यादिभावादेव चिरं निष्क्रमणे कथिते ततः पूर्वनिर्दिष्टेभ्य आकाशादिभ्योऽचिरान्निष्क्रमणं सिध्यति । तकारलोपश्छान्दस इति भाष्यस्यापि वर्णलोपेन वा वर्णविकारेण वा यथाकथंचित्साधुत्वं समर्थनीयमित्यत्र तात्पर्यम् ।

अत्र स इत्यध्याहारः । यो व्रीह्यादिसंश्लिष्टोऽवरोहञ्जीवः स योऽन्नमत्ति, रेतः सिञ्चति, भूयः पश्चात्तद्भवति, रेतःसिग्भावं प्राप्नोति, आकाशादिभाववद्रेतःसिग्भावोऽप्यौपचारिकः । रेतःसिग्योगी भवतीत्यर्थः । एवमेव व्यासार्यैरुक्तम् ।

* रंग.

( ४ ) ' रेतःसिग्योगोऽथ '— अन्याधिष्ठित इत्यनुवर्तते । अन्यथा संशयाभावेन सूत्रवैयर्थ्यापत्तेः । अथ अवरोहानन्तरं यो रेतः सिञ्चति तद्भूय एव भवतीति श्रुत्युक्तो रेतःसेक्तृपुरुषसंयोगोऽपि जीवे परमेश्वराधिष्ठित एव भवति न स्वत इत्यर्थः । सर्वकर्तेत्यादिश्रुतेरिति भावः । विज्ञान. ३।१।२६

जातिरूपा रमणीयाचरणपरिपाकयोनिः कपूयाचरणविपाकयोनिश्च

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥**

* शेषं शंकरेण गतार्थम् ।

(१) छाउ. ५।१०।७; ब्रशंकर. ३।१।८, ९, २७; भास्कर. ३।१।८, २६; रामानुज. ३।१।८, २४; निंबार्क. ३।१।८; ब्रमध्व. ३।१।१०, २५; श्रीकंठ. २।१।३४, ३।१।८, ९, ११, २४; श्रीकर. ३।१।८, ९, ११, २४; वल्लभ. २।४।४३, ३।१।९; विज्ञान. ३।१।८, १२; बलदेव. ३।१।८, २५,२८.

( १ ) तत्तत्र तेष्वनुशयिनां ये इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणा रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणा उच्यन्ते। क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः। तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेण, अभ्याशो ह क्षिप्रमेव, यदिति क्रियाविशेषणं, ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन्प्राप्नुयुर्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण। अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणोऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन्कपूयामेव धर्मसंबन्धवर्जितां जुगुप्सितां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा स्वकर्मानुरूपेणैव।

शंकर.

( २ ) 'चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः'— अथापि स्यात्। या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता 'तद्य इह रमणीयचरणाः' इति सा खलु चरणाद्योन्यापत्तिं दर्शयति नानुशयात्। अन्यच्चरणमन्योऽनुशयः। चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम्। अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम्। श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति 'यथाकारी यथाचारी तथा भवति' (बृउ. ४।४।५) इति, 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि' (तैउ. १।११।२) इति च। तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत्। नैष दोषः। यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते। ३।१।९

'आनर्थक्यमिति चेन्न तदपेक्षत्वात्'— स्यादेतत्। कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते। ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति। अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम्। अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत्। नैष दोषः। कुतः। तदपेक्षत्वात्। इष्टादि हि कर्मजातं चरणापेक्षम्। न हि सदाचारहीनः कश्चिदधिकृतः स्यात्, 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः। पुरुषार्थत्वेऽप्याचारस्य नाऽऽनर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाऽऽचारस्तत्रैव कंचिदतिशयमारप्स्यते। कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः। तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्। न हि कर्मणि संभवति शीलाद्योन्यापत्तिर्युक्ता। न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति।

३।१।१०

'सुकृतदुष्कृते एवेति तु बादरिः'— बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरम्। तथा ह्यविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते। यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते धर्मं चरत्येष महात्मेति। आचारोऽपि च धर्मविशेष एव। भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते। तस्माद्रमणीयचरणाः प्रशस्तकर्माणः कपूयचरणा निन्दितकर्माणः इति निर्णयः।

* ब्रशंकर. ३।१।११

( ३ ) तत्तेषु येऽभ्याशोऽभ्यागन्तारः। अभ्याङ्पूर्वादशेर्धातोः क्विबन्ताद्बहुवचनान्तोऽयं शब्दः। परलोकादिह लोकं प्रत्यवतरन्त इत्यर्थः। हेति प्रसिद्धौ। यद्यदा। अत्र यदाशब्दानुरोधेन तदेत्यप्यध्याहर्तव्यम्। तदा ते रमणीयां ब्राह्मणादियोनिमाप्नुवन्तीत्यर्थः।

‡ रंग.

( ४ ) तर्हि रमणीयाः कपूया इत्येव स्यात्। चरणशब्दस्यानर्थक्यमिति चेन्न। चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः।

† ब्रमध्व. ३।१।११

( ५ ) किंचिदाशङ्क्य परिहरति। ननु नात्रोत्तमजन्मार्थमनुशयोऽपेक्ष्यते, चरणादेव भविष्यति। 'तद्य इह रमणीयचरणा अभ्याशो ह यत् ते रमणीयां योनिमापद्येरन्' इत्यादिना यः पूर्वजन्मनि विहिताचरणं

* भास्कर. रामानुज. निंबार्क. श्रीकंठ. ब्रशंकरवत्।
‡ शेषं शंकरवत्।
† अन्यत् ब्रशंकरवत्।

कर्मेति न कृतं तत्र भवेति, तत्तु निषिद्धाचरणं करोति स कपूयादियोनिं प्राप्नोति साधुकारी साधुर्भवतीत्यादिश्रुत्या च प्रतिपाद्यते । प्रकृते तु तस्य रमणीयचरणस्य चरणादेव तत्र सम्यक् जन्म भविष्यति किमनुशयसहभावेनेतिचेत्, न । चरणश्रुतौ या योनिरुक्ता सा उपलक्षणार्था, अनेन पूर्वजन्मनि समीचीनं कृतमिति ज्ञापिका । न तु तस्मिञ्जन्मनि समीचीनकरणे नियामिका । अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात् । तस्मादनुशयोऽभ्युपेत आनन्दयोगार्थमिति कार्ष्णाजिनिराचार्यो मन्यते । कार्ष्णाजिनिमतं ब्रह्मविद्यायां भिन्नप्रकारज्ञापनार्थम् । तस्मादस्य स्वमते भिन्नत्वान्न शङ्का, न चोत्तरम् । न हि ब्रह्मविद्यायां पुण्यादन्यभावः संभवति । प्रकरणपरिगृहीता श्रुतिर्नान्यत्र न्यायसंपादिका । ३।१।९

नन्वेवं सति चरणश्रुतिरनर्थिका । ज्ञापनायां प्रयोजनाभावात् । अतो विधायकत्वं श्रुतेरिष्टानिष्टफलबोधकश्रुतिवत् । अतः कर्मतारतम्येन फलविधानान्निष्कामकर्मकर्तुर्ज्ञानोपयोगिदेहविधानं भविष्यतीति अनुशयसहभावो व्यर्थ इति चेन्न । तदपेक्षत्वात् । धूमादिमार्गस्य तस्याः श्रुतेरपेक्षत्वात् काम्येष्टादिकारिणः स्वकर्मभोगानन्तरमुपचितौ सुखानन्तरं दुःखमिति न्यायेन नापत्स्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिर्मा भवत्विति रमणीयानुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते, न न्यायेनाऽसमीचीनशरीरमिति । तस्मादन्यनिषेधार्थं सार्थकत्वान्नानुशयप्रतिषेधिका ।

किंच, रमणीययोनिः किमाकस्मिकी, सकारणा वा । नाद्या वेदवादिनाम् । द्वितीये तु स्वकर्मणा पितृलोक इति वस्वादित्यरूपता च वक्तव्या । ‘ प्रजामनुप्रजायन्ते श्मशानान्तक्रियाकृतः ’ इति च । ‘ त्रैविद्या मां सोमपाः’ इत्यादिना इन्द्रलोकभोगानन्तरं तथैव पुनर्भवनं च वक्तव्यम् । न च सर्वेषामैक्यम् । भिन्नरूपत्वात् । तस्मात् कर्मकर्तृवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्याः, न त्वेकमपरत्र निविशते । उपरोधप्रसङ्गात् । तथा च प्रकृतेऽपि अनुशयाभावे भक्षणभवनयोर्नियमो न स्यात् । ब्राह्मणादीनामप्यन्ने बलिहरणे श्वचाण्डालयोर्भक्षणम् । ब्राह्मणभक्षणेऽपि मलभावे शूकरभक्षणम् । अनुशयस्य नियामकत्वे तुषादिष्वन्नभाव एव यावत् समीचीनरेतो-

न वा तत्तदुपभोगेनैव चावृत्तेर्युक्ता । तस्मादनुशयसहित एव इहैतव्यं भवतीति सिद्धम् ।

३।१।१०

फलाश्रय एवानुशय इति तु स्वमतम् । कर्म फलं च द्वयमेवेश्वरेच्छया नियतम् । कर्म पुनर्भगवत्प्रेरणमेव ब्रह्मवादे । सोऽनिष्पन्नः फलपर्यन्तं तदादिसंयोग इति स्वमतम् । अन्तसंयोगलक्षणाद्वैकदेशित्वज्ञापनाय । सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशय इति बादरिराचार्यो मन्यते । तेन मोक्षपर्यन्तमनुशयोऽनुवर्तिष्यत इति सूत्रफलम् । तुशब्देन निरनुशयपक्षशङ्कैव नास्तीत्युक्तम् । एवं द्वितीयाऽऽहुतिर्निर्धारिता ।

वल्लभ. ३।१।११

( ६ ) बादरिस्त्वाचार्योऽनुदिक्षयद्वारा यागाङ्गत्ववदहष्टद्वारा शुभाशुभयोनिहेतुत्वं चरणस्येच्छन् सुकृतदुष्कृते एव चरणस्यार्थः प्रयोजनमिति मन्यते । तथा चोभयोरेवाचारयज्ञादिकर्मणोः समसमुच्चयेन योन्यादिप्राप्तिहेतुत्वमित्यर्थः ।

* विज्ञान. ३।१।११

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति । एतत्तृतीयꣳ स्थानम् । तेनासौ लोको न संपूर्यते । तस्माज्जुगुप्सेत । तदेष श्लोकः ॥**

( १ ) ये तु रमणीयचरणा द्विजातयस्ते स्वकर्मस्थाश्रेष्ठिद्विजादिकारिणस्ते धूमादिगत्या गच्छन्त्यागच्छन्ति च पुनः पुनर्घटीयन्त्रवत् । विद्यां चेत्प्राप्नुयुस्तदाऽर्चिरादिना गच्छन्ति । यदा तु न विद्यासेविनो नापीष्टादिकर्म सेवन्ते तदाऽथैतयोः पथोर्यथोक्तयोरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण चनापि यन्ति । तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवन्ति । अत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः ।

---

* अन्यत् प्रशंकरवत् ।

(१) छाउ. ५।१०।८; प्रशंकर. ३।१।१७, १८, ४।३।१; भास्कर. ३।१।१७, १८, ४।३।१; रामानुज. ३।१।१८; निंबार्क. ३।१।१७; प्रमध्व. ३।१।१८ क्षुद्राण्य ( क्षुद्रमिश्राण्य ); श्रीकंठ. ३।१।१८; श्रीकर. ३।१।२०; वल्लभ. ३।१।१७, १८; विज्ञान. ३।१।१८.

प्युपासनं स्याद्व्यस्तस्य समस्तस्य चोत समस्तस्यैवेति । किं तावत्प्राप्तम् । प्रत्यवयवं सुतेजःप्रभृतिषूपास्ते इति क्रिया-पदश्रवणात् 'तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते' ( छाउ. ५।१२।१ ) इत्यादिफलभेदश्रवणाच्च व्यस्ता-न्युपासनानि स्युरिति प्राप्ते; ततोऽभिधीयते, भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्येनास्मिन्वाक्ये विवक्षितं भवितुमर्हति न प्रत्येकमवयवोपासनानामपि । क्रतुवत् । यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एवैको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रयाजादीनां, नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य, तद्वत् । कुत एतत्, भूम्न ज्यायस्त्वमिति । तथा हि श्रुतिर्भूम्नो ज्यायस्त्वं दर्शयति, एकवाक्यतावगमात् । एकं हीदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात्प्रतीयते । तथा हि प्राचीनशाल्यप्रभृतयः उद्दालकावसानाः षट् ऋषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमाना अश्वपतिं कैकेयं राजानमभ्याजग्मुरित्युपक्रम्यैकैकस्यर्षेरुपास्यं द्युप्र-भृतीनामेकैकं श्रावयित्वा 'मूर्धा त्वेष आत्मन इति होवाच' ( छाउ. ५।१२।२ ) इत्यादिना मूर्धादि-भावं तेषां विदधाति । 'मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽ-गमिष्यः' ( छाउ. ५।१२।२ ) इत्यादिना च व्यस्तो-पासनमपवदति । पुनश्च व्यस्तोपासनं व्यावर्त्य समस्तो-पासनमेवानुवर्त्य 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्म-स्वन्नमत्ति' ( छाउ. ५।१८।१ ) इति भूमाश्रयमेव फलं दर्शयति । यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणं तदेवं सति अङ्गफलानि प्रधान एवाभ्युपगतानीति द्रष्टव्यम् । तथा उपास्स इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रा-यानुवादार्थं न व्यस्तोपासनविधानार्थम् । तस्मात्समस्तो-पासनपक्ष एव श्रेयानिति । केचित्त्वत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य ज्यायस्त्ववचनादेव किल व्यस्तोपास-नपक्षमपि सूत्रकारोऽनुमन्यत इति कथयन्ति । तद-युक्तम् । एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्या-न्याय्यत्वात्, 'मूर्धा ते व्यपतिष्यत्' ( छाउ. ५।१२।२ ) इति चैवमादिनिन्दाविरोधात् । स्पष्टे चोपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, गौणस्य च ज्यायस्त्ववचनस्य प्रमाण-वत्त्वाभिप्रायेणाप्युपपद्यमानत्वात् ।

* प्रशंकर. ३।३।५७.

( ३ ) शर्कराक्ष्यसुतो जननामा ।

‡ रंग.

ते ह संपादयांचक्रुः । उद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति । तं हन्ताभ्यागच्छामेति । तं हाभ्याजग्मुः ॥

( १ ) ते ह मीमांसन्तोऽपि निश्चयमलभमानाः संपादयांचक्रुः संपादितवन्तः आत्मन उपदेष्टारम् । उद्दालको वै प्रसिद्धो नामतो भगवन्तः पूजावन्तोऽयमारुणिररुणस्यापत्यं संप्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति । तं हन्तेदानीमभ्यागच्छामेत्येवं निश्चित्य तं हाभ्याजग्मुर्गतवन्तस्तमारुणिम् ।

शंकर.

( २ ) त एवं मीमांसित्वा निश्चयमलभमाना आत्मभूतब्रह्मोपदेष्टारं कंचित्संपादितवन्तो निश्चितवन्त इत्यर्थः । किमिति तत्राऽऽह — उद्दालको वै इति । हे भगवन्तः । अरुणसुत उद्दालकनामेदानीं वैश्वानरमात्मानमध्येति, इक् स्मरणे, उपास्त इत्यर्थः । यद्वा, इण् गताविति गत्यर्थानां ज्ञानार्थत्वादवगच्छतीत्यर्थः । तमुद्दालकमभ्यागच्छामेति तं हाभ्याजग्मुस्तमभ्यागतवन्त इत्यर्थः ।

रंग.

स ह संपादयांचकार । प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियाः । तेभ्यो न सर्वमिव प्रतिपत्स्ये । हन्ताहमन्यमभ्यनुशासानीति ॥

( १ ) स ह तान् दृष्ट्वैव तेषामागमनप्रयोजनं बुद्ध्वा संपादयांचकार । कथम् । प्रक्ष्यन्ति मां वैश्वानरमिमे महाशाला महाश्रोत्रियास्तेभ्योऽहं न सर्वमिव पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे । अतो हन्ताहमिदानीं

---

* भास्कर. रामानुज. प्रशंकरवत् ।

‡ शंकरेण गतार्थम् ।

(१) छाउ. ५।११।२; रामानुज. १।२।२५, ३।३।५५; श्रीकर. ३।३।५५.

(२) छाउ. ५।११।३; रंग. प्रतिपत्स्ये ( प्रतिपद्ये ) मभ्यनुशासानीति ( मुपदिशानीति ).

अन्येनाननुशासनानि वक्ष्याम्युक्त्वेति ।

शंकर.

(२) स ह उद्दालकस्तानागतान्दृष्ट्वैते महाशाला महाश्रोत्रिया मां वैश्वानरमात्मानं प्रक्ष्यन्ति नाहं सर्वं प्रतिपद्ये तेभ्यो वक्तुं शक्नोमि । अतोऽन्यं तदभिज्ञं कंचिदुपदिशानीत्येवं संपादितवान्निश्चितवानित्यर्थः ।

रंग.

[1]तान्होवाच । अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति । तꣳ हन्ताभ्यागच्छामेति । तꣳ हाभ्याजग्मुः ॥

(१) एवं सत्याह तान्होवाच — अश्वपतिर्वै नामतो भगवन्तोऽयं केकयस्यापत्यं कैकेयः संप्रति सम्यगिममात्मानं वैश्वानरमध्येतीत्यादि समानम् ।

शंकर.

(२) तमश्वपतिं उद्दालकप्रधानास्तेऽभ्यागतवन्त इत्यर्थः ।

* रंग.

[2]तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार । स ह प्रातः संजिहान उवाच । न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः । यक्ष्यमाणो वै भगवन्तोऽहमस्मि । यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि । वसन्तु भगवन्त इति ॥

[3]ते होचुः । येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेत् । आत्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि । तमेव नो ब्रूहीति ॥

तान्होवाच । प्रातर्वः प्रतिवक्तास्मीति । ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान्हानुपनीयैवैतदुवाच ॥

तेभ्यो ह राजा प्राप्तेभ्यः पृथक्पृथगर्हाण्यर्हणानि पुरोहितैर्भृत्यैश्च कारयांचकार आतिथ्यम् । स हान्येद्यु राजा प्रातः संजिहान उवाच विनयेनोपगम्यैतद्धनं मत्त उपादध्वमिति । तैः प्रत्याख्यातः, नूनं दोषं पश्यन्ति मत्तो यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वानः, आत्मनः सद्वृत्ततां प्रतिपिपादयिषन्नाह— न मे मम जनपदे स्तेनः परस्वहर्ता विद्यते । न कदर्योऽदाता सति विभवे । न मद्यपो द्विजोत्तमः सन् । नानाहिताग्निः शतगुः । नाविद्वानधिकारानुरूपम् । न स्वैरी परदारेषु गन्ता । अत एव स्वैरिणी कुतः, दुष्टचारिणी न संभवतीत्यर्थः । तैश्च न वयं धनेनार्थिन इत्युक्त आह— अल्पं मत्वैते धनं न गृह्णन्तीति । यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तोऽस्मि । तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै यथोक्तमृत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि । वसन्तु भगवन्तः पश्यन्तु च मम यागमित्युक्तास्ते होचुः । येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत् पुरुषस्तं हैवार्थं वदेत् । इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सताम् । वयं वैश्वानरज्ञानार्थिनः । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि सम्यग्जानासि । अतस्तमेव नोऽस्मभ्यं ब्रूहीत्युक्तस्तान्होवाच । प्रातर्वो युष्मभ्यं प्रतिवक्ताऽस्मि प्रतिवाक्यं दाताऽस्मीत्युक्तास्ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः । यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः, तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यम् । तेभ्यश्चाददाद्विद्यामनुपनीयैवोपनयनमकृत्वैव तान् । यथा योग्येभ्यो विद्यामदात्तथाऽन्येनापि विद्या दातव्येत्याख्यायिकार्थः । एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन संबन्धः । * शंकर.

* शेषं शंकरवत् ।

(१) छाउ. ५।११।४; रामानुज. १।२।२५.

(२) छाउ. ५।११।५; अशंकर. ३।४।३; रामानुज. १।२।२५, ३।४।३; श्रीकंठ. ३।४।३; श्रीकर. ३।४।२; बलदेव. ३।४।३.

(३) छाउ. ५।११।६; अशंकर. १।२।२४; भास्कर. १।२।२४; रामानुज. १।२।२५, २६, ३।३।५५; श्रीकंठ. १।२।२५; श्रीकर. १।२।२४; वल्लभ. १।२।२४; विज्ञान. १।२।२४; बलदेव. १।२।२५.

* रंग. शंकरवत् । धनदानतत्प्रत्याख्यानाद्यध्याहारो न कृतः ।

(१) छाउ. ५।११।७; अशंकर. श्रीकर. वल्लभ. १।२।२६.

**औपमन्यव कं त्वमात्मानमुपास्स इति । दिवमेव भगवो राजन्निति होवाच । एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥**

(१) स क्रमनुवाचेत्याह—औपमन्यव हे कमात्मानं वैश्वानरं त्वमुपास्से इति पप्रच्छ । नन्वयमन्याय्यः आचार्यः सन् शिष्यं पृच्छतीति । नैष दोषः । यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति न्यायदर्शनात् । अन्यत्राप्यनभिमानवति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः, क्वैष तदाऽभूत् कुत एतदागादिति । दिवमेव द्युलोकमेव वैश्वानरमुपासे भगवो राजन्निति होवाच । एष वै सुतेजाः शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्मा आत्मनोऽवयवभूतत्वाद्यं त्वमात्मानमेकदेशमुपास्से तस्मात्सुतेजसो वैश्वानरस्योपासनात्तव सुतमभिषुतं सोमरूपं कर्मणि प्रसुत प्रकर्षेण च सुतमासुतं चाहर्गणादिषु तव कुले दृश्यतेऽतीव कर्मिणस्त्वत्कुलीना इत्यर्थः ।

शंकर.

(२) हे भगवः, द्युलोकशरीरकं वैश्वानरमहमुपास्ये इत्युवाचेत्यर्थः । अत्र सुतप्रसुतासुतशब्दा एकाहाहीनसत्रकर्मगताभिषवणपराः सुतशब्दवत्त्वसाम्यात् । सुतेजस्त्वोपासनायाः सुतादिफलकत्वोपपत्तिः ।

* रंग.

**अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । मूर्धा त्वेष आत्मन इति होवाच । मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्य इति ॥**

(१) अत्स्यन्नं दीप्ताग्निः सन्, पश्यसि च पुत्रपौत्रादि प्रियमिष्टम् । अन्योऽप्यत्त्यन्नं, पश्यति च प्रियं, भवत्यस्य सुतं प्रसुतमासुतमित्यादि कर्मित्वं ब्रह्मवर्चसं कुले, यः कश्चिदेतं यथोक्तमेवं वैश्वानरमुपास्ते । मूर्धा त्वात्मनो वैश्वानरस्यैव न समस्तो वैश्वानरः । अतः समस्तबुद्ध्या वैश्वानरस्योपासनान्मूर्धा शिरस्ते विपरीतग्राहिणो व्यपतिष्यत् विपतितमभविष्यत् । यद्यदि मां नाऽऽगमिष्यो नाऽऽगतोऽभविष्यः । साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः ।

शंकर.

(२) तदुपासनावैभवेनान्नं लौकिकं भोग्यमनुभवति । एवं तदुक्तमर्थमङ्गीकुर्वन्निव फलदर्शनेन तमभिमुखीकृत्य तत्र वक्तव्यमंशमुपदिशति ।

* रंग.

**अथ होवाच सत्ययज्ञं पौलुषिम् । प्राचीनयोग्य कं त्वमात्मानमुपास्स इति । आदित्यमेव भगवो राजन्निति होवाच । एष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥**

(१) अथ होवाच सत्ययज्ञं पौलुषिं, हे प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच; शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य सर्वरूपत्वाद्वा । सर्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा विश्वरूप आदित्यस्तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले । ‡ शंकर.

(२) प्राचीनयोग्येति सत्ययज्ञस्य नामान्तरम् । रूप्यत इति रूपं विश्वं रूपं प्रकाश्यं यस्य स विश्वरूपः । आदित्यस्य विश्वप्रकाशकत्वाद्विश्वरूपत्वम् । एतदुपासनात्तव कुले बहु विश्वरूपं विश्वप्रकाशकं पुत्ररत्नादिकं दृश्यते ।

रंग.

**प्रवृत्तोऽश्वतरीरथो दासीनिष्कः । अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते ।**

---

* शेषं शंकरवत् ।

(१) छाउ. ५।१२।१; ब्रशंकर. ३।३।५७; भास्कर. ३।३।५७; रामानुज. १।२।२६, ३।३।५५; श्रीकंठ. ३।३।५५.

(२) छाउ. ५।१२।२; ब्रशंकर. ३।३।५७; भास्कर. ३।३।५७; रामानुज. निंबार्क. श्रीकंठ. ३।३।५५; श्रीकर. ३।३।१, ५५.

* शंकरवत् ।

‡ वल्लभ. छाउ. ३।१।१ (पृ. ७९२) इत्यत्र द्रष्टव्यम् ।

(१) छाउ. ५।१३।१; श्रीकंठ. ३।३।५५; वल्लभ. ४।१।६.

(२) छाउ. ५।१३।२; रामानुज. ३।३।५५.

चक्षुष्ट्वेतदात्मन इति होवाच । अन्धोऽभविष्यो यन्मां नाऽऽगमिष्य इति ॥

किंच त्वामनु प्रह्वोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथः, दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः । अत्स्यन्नमित्यादि समानम् । चक्षुर्वैश्वानरस्य तु सविता । तस्य सन्तत्वबुद्ध्योपासनादन्धोऽभविष्यश्चक्षुर्हीनोऽभविष्यो यन्मां नागमिष्य इति पूर्ववत् । * शंकर.

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम् । वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति । वायुमेव भगवो राजन्निति होवाच । एष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वां पृथग्बलय आयन्ति, पृथग्रथश्रेणयोऽनुयन्ति ॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्से इत्यादि समानम् । पृथग्वर्त्मा नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैर्वर्तनानात्व सोऽयं पृथग्वर्त्मा वायुः । तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात्पृथङ्नानादिक्कास्त्वां बलयः वस्त्रान्नादिलक्षणा बलयः आयन्त्यागच्छन्ति । पृथग्रथश्रेणयो रथपङ्क्तयोऽपि त्वामनुयन्ति ।

‡ शंकर.

अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । प्राणस्त्वेष आत्मन इति होवाच । प्राणस्त उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ॥

अत्स्यन्नमित्यादि समानम् । प्राणस्त्वेष आत्मन इति होवाच । प्राणस्ते तवोदक्रमिष्यदुत्क्रान्तोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ।

शंकर.

अथ होवाच जनम् । शार्कराक्ष्य कं त्वमात्मानमुपास्स इति । आकाशमेव भगवो राजन्निति होवाच । एष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥

अथ होवाच जनमित्यादि समानम् । एष वै बहुल आत्मा वैश्वानरः । बहुलत्वमाकाशस्य सर्वगतत्वाद्बहुलगुणोपासनाच्च । त्वं बहुलोऽसि प्रजया च पुत्रपौत्रादिलक्षणया धनेन च हिरण्यादिना ।

* शंकर.

अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । संदेहस्त्वेष आत्मन इति होवाच । संदेहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ॥

संदेहस्त्वेष संदेहो मध्यमं शरीरं वैश्वानरस्य । दिहिरुपचयार्थस्तस्मान्मांसरुधिरास्थ्यादिभिरुपचितं बहुलं शरीरं तत्संदेहस्ते तव शरीरं व्यशीर्यच्छीर्णमभविष्यद्यन्मां नाऽऽगमिष्य इति । शंकर.

अथ होवाच बुडिलमाश्वतराश्विम् । वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति । अप एव भगवो राजन्निति होवाच । एष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वं रयिमान्पुष्टिमानसि ॥

(१) अथ होवाच बुडिलमाश्वतराश्विमित्यादि समानम् । एष वै रयिरात्मा वैश्वानरो धनरूपः । अद्भ्योऽन्नं ततो धनमिति । तस्माद्रयिमान्धनवांस्त्वं पुष्टिमांश्च शरीरेण पुष्टेश्चान्ननिमित्तत्वात् ।

शंकर.

(२) अपां वेगवत्त्वाद्रयित्वम् । विसर्गश्छान्दसः । धनप्राप्तिहेतुत्वाद्वा रयित्वं रयिमान्धनवानित्यर्थः ।

§ रंग.

अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं

---

* रंग. शंकरवत् ।

‡ रंग. शंकरवत् । बल्लभ. छाउ. ३।१।१ ( पृ. ७९३ ) इत्यत्र द्रष्टव्यम् ।

(१) छाउ. ५।१४।१; बल्लभ. ४।१।६.

(२) छाउ. ५।१४।२.

(३) छाउ. ५।१५।१.

* रंग शंकरेण गतार्थम् ।

§ रयः अस्यास्तीति रयी । रयिरित्यत्र विसर्गश्छान्दसः । न्दसस्तु ‘ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ’ ( पा. सू. ६।१।१२७ ) इतिसूत्रेण लोकवेदसाधारण एव ।

(१) छाउ. ५।१५।२.

(२) छाउ. ५।१६।१.

(३) छाउ. ५।१६।२.

वैश्वानरमुपास्ते । वस्तिस्त्वेष आत्मन इति होवाच । वस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥

वस्तिस्त्वेष आत्मनो वैश्वानरस्य । वस्तिर्मूत्रसंग्रहस्थानम् । वस्तिस्ते व्यभेत्स्यत् भिन्नोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ।

* शंकर.

अथ होवाचोद्दालकमारुणिम् । गौतम कं त्वमात्मानमुपास्स इति । पृथिवीमेव भगवो राजन्निति होवाच । एष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से । तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥

अत्स्यन्नं पश्यसि प्रियम् । अत्त्यन्नं, पश्यति प्रियं, भवत्यस्य ब्रह्मवर्चसं कुले, य एतमेवमात्मानं वैश्वानरमुपास्ते । पादौ त्वेतावात्मन इति होवाच । पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥

अथ होवाचोद्दालकमित्यादि समानम् । पृथिवीमेव भगवो राजन्निति होवाच । एष वै प्रतिष्ठा पादौ वैश्वानरस्य । पादौ ते व्यम्लास्येतां विम्लानावभविष्यतां श्लथीभूतौ यन्मां नाऽऽगमिष्य इति ।

* शंकर.

तान्होवाच । एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते । स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥

(१) तान्यथोक्तवैश्वानरदर्शनवतो होवाच—एते यूयं, वै खल्वित्यनर्थकौ । यूयं पृथगिवापृथक्सन्तमिममेकं वैश्वानरमात्मानं विद्वांसोऽन्नमत्थ, परिच्छिन्नात्मबुद्धयेत्येतद्धस्तिदर्शन इव जात्यन्धाः । यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्धादिभिः पृथिवीपादान्तैर्विशिष्टमेकं, प्रादेशमात्रं प्रादेशैर्द्युमूर्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम् । मुखादिषु वा करणेष्वत्तृत्वेन मीयत इति प्रादेशमात्रः । द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः । प्रकर्षेण शास्त्रेणाऽऽदिश्यन्त इति प्रादेशा द्युलोकादय एव तावत्परिमाणः प्रादेशमात्रः । शाखान्तरे तु मूर्धादिश्चिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति । इह तु न तथाऽभिप्रेतः, 'तस्य ह वा एतस्याऽऽत्मनः' इत्याद्युपसंहारात् । प्रत्यगात्मतयाऽभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं, वैश्वानरं—विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं सर्वात्मैष ईश्वरो वैश्वानरः, विश्वो नर एव वा सर्वात्मत्वात्, विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः — तमेवमुपास्ते यः सोऽदन्नन्नादी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु, तेषु ह्यात्मकल्पनाव्यपदेशः, प्राणिनामन्नमत्ति । वैश्वानरवित्सर्वात्मा सन् अन्नमत्ति । न यथा अज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः ।

शंकर.

(२) 'वैश्वानरः साधारणशब्दविशेषात्' — 'को न आत्मा किं ब्रह्म' (छाउ. ५।११।१) इति 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहि' इति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च वैश्वानरं प्रत्येषां मूर्धादिभावमुपदिश्याऽऽम्नायते — 'यस्त्वेतमेवं प्रादेशमात्रमभिविमान......' इत्यादि । तत्र संशयः—किं वैश्वानरशब्देन जाठरोऽग्निरुपदिश्यत उत भूताग्निरथ तदभिमानिनी देवताऽथवा शारीर आहोस्वित्परमेश्वर इति । किं पुनरत्र संशयकारणम् । वैश्वानरः इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयोः । तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः । किं तावत्प्राप्तम् । जाठरोऽग्निरिति । कुतः । तत्र हि विशेषेण क्वचित्प्रयोगो दृश्यते — 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते यदिदमद्यते' (बृउ. ५।९)

* रंग. शंकरवत् ।

(१) छाउ. ५।१७।१, २.

(२) ब्रसू. ५।१८।१; ब्रसंकर. १।२।२४, ३।३।४, ५७; भास्कर. १।२।२४, ३।३।५७; रामानुज. १।२।२५, ३०, ३१, ३।३।५५; ब्रमध्व. १।२।२४; श्रीकंठ. १।२।२५, ३०, ३।३।५५; श्रीकर. १।२।२४, ३१, ३।३।५५; वल्लभ. १।२।२४; विज्ञान. १।२।२४; बलदेव १।२।२५-

इत्यादौ । अग्निनार्थं वा स्यात्, तत्रापि प्रयोगदर्शनात् — 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन् ' ( ऋसं. १०।८८।१२ ) इत्यादौ अग्निशरीरा वा देवता स्यात्, तस्यामपि प्रयोगदर्शनात् — 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ' ( ऋसं. १।९८।१ ) इत्येवमाद्यायाः श्रुतेर्देवतायामैश्वर्याद्युपेतायां संभवात् । अथाऽऽत्मशब्दसामानाधिकरण्यादुपक्रमे च — 'को न आत्मा किं ब्रह्म ' इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन वैश्वानरशब्दः परिणेय इत्युच्यते, तथाऽपि शारीर आत्मा स्यात्, तस्य भोक्तृत्वेन वैश्वानरसंनिकर्षात्, प्रादेशमात्रमिति च विशेषणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात् । तस्मान्नेश्वरो वैश्वानरः । इत्येवं प्राप्ते तत इदमुच्यते — वैश्वानरः परमात्मा भवितुमर्हतीति । कुतः, साधारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः । यद्यप्येतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ, वैश्वानरशब्दस्तु त्रयस्य साधारणः, आत्मशब्दश्च द्वयस्य, तथाऽपि विशेषो दृश्यते येन परमेश्वरपरत्वं तयोरभ्युपगम्यते — 'तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाः ' इत्यादिः । अत्र हि परमेश्वर एव द्युमूर्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते, कारणत्वात् । कारणस्य हि सर्वाभिः कार्यगताभिरवस्थाभिरवस्थावत्त्वाद्द्युलोकाद्यवयवत्वमुपपद्यते । 'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ' इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे संभवति । 'एवं हास्य सर्वे पाप्मानः प्रदूयन्ते ' ( छाउ. ५।२४।३ ) इति तद्विदः सर्वपाप्मप्रदाहश्रवणम् । 'को न आत्मा किं ब्रह्म' इति चाऽऽत्मब्रह्मशब्दाभ्यामुपक्रमः, इत्येवमेतानि ब्रह्मलिङ्गानि परमेश्वरमेव गमयन्ति । तस्मात्परमेश्वर एव वैश्वानरः ।

१।२।२४

'शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा-दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ' — न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम् । कुतः । तथा जाठरापरित्यागेन दृष्ट्युपदे-

वत् । परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यते 'मनो ब्रह्मेत्युपासीत ' ( छाउ. ३।१८।१ ) इत्यादिवत् । अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते—'मनोमयः प्राणशरीरो भारूपः ' ( छाउ. ३।१४।२ ) इत्यादिवत् । १।२।२६

'अत एव न देवता भूतं च '—अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः । तथा भूताग्निरपि न वैश्वानरः । न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते, विकारस्य विकारान्तरात्मत्वासंभवात् । तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना संभवति, अकारणत्वात् परमेश्वराधीनैश्वर्यत्वाच्च । आत्मशब्दासंभवश्च सर्वेष्वेषु पक्षेषु स्थित एव ।

१।२।२७

'साक्षादप्यविरोधं जैमिनिः '—पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन । इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते । ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुध्येरन्निति । अत्रोच्यते—अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते । न हीह ' पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद ' ( शब्रा. १०।६।१।११ ) इति जाठराग्न्यभिप्रायेणेदमुच्यते, तस्याप्रकृतत्वादसंशब्दितत्वाच्च । कथं तर्हि यत्प्रकृतं मूर्धादिचुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं, तदभिप्रायेणेदमुच्यते — 'पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद ' इति ।

१।२।२८

'अभिव्यक्तेरित्याश्मरथ्यः ' — अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् । अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते । प्रदेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते । अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते । १।२।२९

'अनुस्मृतेर्बादरिः ' — प्रादेशमात्रहृदयप्रतिष्ठितेन वाऽयं मनसाऽनुस्मर्यते, तेन प्रादेशमात्र इत्युच्यते ।

यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत्। यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसंबन्धाद् व्यज्यते, न चेह परमेश्वरगतं किंचित्परिमाणमस्ति यद्धृदयसंबन्धाद्व्यज्येत, तथाऽपि प्रयुक्तायाः प्रादेशमात्रश्रुतेः संभवति यथाकथंचिदनुस्मरणमालम्बनमित्युच्यते। प्रादेशमात्रत्वेन वाऽयमप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै। एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्यो मन्यते।

१।२।३०

'संपत्तेरिति जैमिनिस्तथा हि दर्शयति — संपत्तिनिमित्ता वा स्यात्प्रादेशमात्रश्रुतिः। कुतः। तथा हि समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति — 'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एतान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति। स होवाच मूर्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति। चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति। नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मा वैश्वानर इति। मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति। मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति। चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति' ( शब्रा. १०।६।१।१०–११ ) इति। चुबुकमित्यधरं मुखफलकमुच्यते। यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायते, आदित्यश्च सुतेजस्त्वगुणः, छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समाम्नायते आदित्यश्च विश्वरूपत्वगुणस्तथाऽपि नैतावता विशेषेण किंचिद्धीयते, प्रादेशमात्रश्रुतेरविशेषात्, सर्वशाखाप्रत्ययत्वाच्च। संपत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते। * शंकर. १।२।३१

( ३ ) आभिमुख्येनापि चित्रं जगन्निर्मिमीते अभिगतश्चासौ विगतमानश्चेति वाभिविमानः।

§ भास्कर. १।२।२८

( ४ ) पूर्वत्रात्त्यन्नं पश्यसीति प्रतिपुरुषमुक्तस्यात्रात्येति बहुवचनेन निर्देशः। अत्रान्नमत्येत्येतत्प्रियं पश्यत्येतस्याप्युपलक्षणम्। सर्वाभिव्याप्ततया विगतमानं विश्वेषां नराणां नेतारमेतमात्मानं प्रादेशमात्रं द्युलोकादिप्रदेशसंबन्धिनी प्रादेशी। प्रादेशी मात्रा यस्य तं द्युप्रभृतिप्रदेशपरिच्छिन्नं य उपास्ते स सर्वलोकसर्वभूतसर्वात्मवर्तिब्रह्मरूपमन्नमत्ति, अनुभवतीत्यर्थः। अनेन वैश्वानरोपासनस्य ब्रह्मप्राप्तिफलकत्वमुक्तं भवति। अत्र वाजसनेयकोक्तमूर्धचुबुकान्तरालप्रतिष्ठितत्वलभ्यं प्रादेशमात्रत्वं नोपजीव्यं, द्युप्रभृतिप्रदेशसबन्धित्वमात्रस्य यौगिकार्थस्य प्रकरणतः प्रतीतेः। उक्तं च व्यासार्यैः सर्ववेदान्तप्रत्ययाधिकरणे — यस्त्वेतमिति न वाजसनेयिकोक्तानुवादः, स्वशाखावाक्य एव पूर्वप्रतिपादितस्यानुवादेन फलसमर्पकत्वोपपत्तेरिति।

* रंग.

( ५ ) स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति। सर्वत्र वर्तमानं खलु एवानवधिकातिशयानन्दं ब्रह्मानुभवति। यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते।

\+ रामानुज. १।२।३१

( ६ ) व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित्। अन्ये व्यवहरन्त्येतान्यूरीकृत्य गृहादिवदिति। स्कान्दवचनान्न मतानां परस्परविरोधः।

‡ ब्रमध्व. १।२।२८

( ७ ) विश्वस्य जडस्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वात् 'देवता द्वन्द्वे च' इति विश्वानरौ, तौ निवासो यस्येति, 'तस्य निवासः' इत्यण्, तेन परमेश्वर एव वैश्वानरो भवति नान्यः।

वल्लभ. १।२।२४

( ८ ) कार्यैः कारणमभिव्यज्यते लिङ्गरूपेण। तथा च वैश्वानराख्यमुख्यकार्येण परमात्मनोऽभिव्यक्त्या तस्य नामगुणादीनां परमात्मन्यविरोध इत्याश्मरथ्य

* निंबार्क. श्रीकंठ. ब्रशंकरेण गतार्थम्।
§ शेषं ब्रशंकरेण गतार्थम्।

* शेषं शंकरवत्।
\+ शेषं ब्रशंकरेण गतार्थम्।
‡ वैश्वानरः परमात्मेति निर्णयः।

आचार्यो मन्यते ।

[illegible]

तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥

(१) कस्माच्चैवम् । यस्मात्तस्य ह वै प्रकृतस्यैवैतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ । अथवा विध्यर्थमेतद्वचनमेवमुपास्य इति । अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह—एतस्य वैश्वानरस्य भोक्तुर एव वेदिः, आकारसामान्यात् । लोमानि बर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते । हृदयं गार्हपत्यो हृदयाद्धि मनः प्रणीतमिवानन्तरीभवति । अतोऽन्वाहार्यपचनोऽग्निर्मनः । आस्यं मुखमाहवनीय इवाऽऽहवनीयो हूयतेऽस्मिन्नन्नमिति । शंकर.

(२) वेद्यादिनिर्देशाच्च स्थण्डिलमात्रेऽनग्नावर्थो द्रष्टव्यः, सुखरूपहोत्रे वेदनात्वात् । यद्वासौ चेद गनिमादनिलिङ्गत्वात् । [illegible] ३.३.४१

(३) अथ प्राणाहुत्याधारत्वविविधाग्निरूपपरिकल्पितजाठराग्निशरीरकद्युमूर्धत्वादिविशिष्टात्मभाविते स्वशरीरे क्रियमाणप्राणाद्याहुतिभिर्वैश्वानरविद्यानिष्ठेन परमात्मा समाराधनीय इति प्रतिपादयति— तस्य ह वा इति । एतस्याऽऽत्मन उपासकस्याऽऽत्मनो मूर्धैव तस्य वैश्वानरस्य, 'मूर्धा ह्येष आत्मनः' (छाउ. ५।१२।२) इति वैश्वानरात्ममूर्धत्वेन निर्दिष्टः सुतेजा इत्यर्थः । न चात्र तस्य ह वा एतस्येति पदयोः सामानाधिकरण्यमेवास्तु न त्वेतस्येति शब्दस्योपासकात्मनोऽभिमानित्वादुपचर्यते उर एव वेदिरित्यादाकारसाम्येन... मूर्धैव सुतेजस्त्व मूर्धैव ... इत्यस्योपासकशरीरत्वेन निर्देशः । हृदयं गार्हपत्यः । हृदयस्थानावच्छिन्नजाठराग्निर्गार्हपत्यः । मनोऽन्वाहार्यपचनः । मनइन्द्रियावच्छिन्नजाठराग्निर्दक्षिणाग्निः । आस्यमाहवनीयः; आस्यावच्छिन्नजाठराग्निराहवनीय इत्यर्थः । अत्र च हृदयादिस्थानावच्छिन्नजाठराग्निशरीरकपरमात्मवर्णना इति द्रष्टव्यम् । रंग.

(४) 'आननन्ति चैनमग्निन्' —एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वादाननन्ति च । 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः' इत्यादिना । अयमर्थः—'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छाउ. ५।१८।१) इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय 'सर्वेषु लोकेषु' (छाउ. ५।१८।१) इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य तस्योपासनस्याङ्गभूतं प्राणाग्निहोत्रं 'तस्य ह वा एतस्य' इत्यादिनोपदिशति । यः पूर्वमुपास्यत्वेनोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन्सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु संपादयतीति मूर्धैव सुतेजाः । उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा, वायुरित्यर्थः । संदेहो बहुलः, उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । बस्तिरेव रयिः, अस्य बस्तिरेव तदवयवभूता आप इत्यर्थः । पृथिव्येव पादौ, अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकः, स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसंधाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान्परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोप-

§ वैश्वानरः परमात्मा ।

(१) छाउ. ५।१८।२; ब्रशंकर. १।२।२४, ३।३।४१, ५७; रामानुज. १।२।२७, ३३; ब्रमध्व. १।२।२६; श्रीकंठ. १।२।२६, २७, ३२; श्रीकर. १।२।२४, २५, २६, २७, ३१, ३।३।४०; वल्लभ. १।२।२४; विज्ञान. १।२।२४; बलदेव. १।२।२७.

ह्रियते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ।

रामानुज. १।२।३३

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति । प्राणस्तृप्यति ॥

(१) तत्रैवं सति यद्भक्तं प्रथमं भोजनकाल आगच्छेद्भोजनार्थे तद्धोमीयं तद्धोतव्यम् । अग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नाग्निहोत्राङ्गेतिकर्तव्यताप्राप्तिरिह । स भोक्ता यां प्रथमाहुतिं जुहुयात्तां कथं जुहुयादित्याह—प्राणाय स्वाहेत्यनेन मन्त्रेण आहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः । तेन प्राणस्तृप्यति ।

शंकर.

(२) 'आदरादलोपः' —छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इत्यादि । तत्र पञ्च प्राणाहुतयो विहिताः । तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः 'य एतदेवं विद्वानग्निहोत्रं जुहोति' (छाउ. ५।२४।२) इति, 'यथेह क्षुधिता बाला मातरं पर्युपासते । एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' (छाउ. ५।२४।५) इति च । तत्रेदं विचार्यते । किं भोजनलोपे लोपः प्राणाग्निहोत्रस्योतालोप इति। यद्भक्तमिति भक्तागमनसंयोगश्रवणाद्भक्तागमनस्य च भोजनार्थत्वाद्भोजनलोपे लोपः प्राणाग्निहोत्रस्येति। एवं प्राप्ते न लुप्येतेति तावदाह । कस्मात् । आदरात् । तथा हि वैश्वानरविद्यायामेव जाबालानां श्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात् । यथा ह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रं आदरं करोति । या हि न प्राथम्यलोपं सहते नतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते । ननु भोजनार्थभक्तागमनसंयोगाद्भोजनलोपे लोपः प्रापितः । न । तस्य द्रव्यविशेषविधानार्थत्वात् । प्राकृते ह्यग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वादिहापि अग्निहोत्रशब्दात्कौण्डपायिनामयनवत्तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यतागुणविशेषविधानार्थमिदं वाक्यं तद्यद्भक्तमिति । अतो गुणलोपे न मुख्यस्येत्येवं प्राप्तम् । भोजनलोपेऽप्यद्भिर्वाऽन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ।

३।३।४०

अत उत्तरं पठति—'उपस्थितेऽतस्तद्वचनात्' — उपस्थिते भोजनेऽतस्तस्मादेव भोजनद्रव्यात्प्रथमोपनिपतितात्प्राणाग्निहोत्रं निर्वर्तयितव्यम्। कस्मात्। तद्वचनात् । तथा हि 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति। कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति विध्युद्देशगतोऽग्निहोत्रशब्दस्तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः । इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति । तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धरणादयोऽपि प्राप्येरन् । न चास्ति संभवः । अग्न्युद्धरणं तावद्धोमाधिकरणभावाय । न चायमग्नौ होमो भोजनार्थताव्याघातप्रसङ्गात् । भोजनोपनीतद्रव्यसंबन्धाच्चाऽऽस्य एवैष होमः । तथा च जाबालश्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात्' इत्यास्याधारामेवेमां होमनिर्वृत्तिं दर्शयति । अत एव चेहापि सांपादिकान्येवाग्निहोत्राङ्गानि दर्शयति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छाउ. ५।१८।२) इति । भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसंभवः । एवमन्येऽप्युपस्थानादयो धर्माः केचित्कथंचिदिरुध्यन्ते । तस्माद्भोजनपक्ष एवैते मन्त्रद्रव्यदेवतासंयोगात्पञ्च होमा निर्वर्तयितव्याः । यस्त्वादरदर्शनवचनं तद्भोजनपक्षे प्राथम्यविधानार्थम् । न ह्यस्ति वचनस्यातिभारः । न त्वनेनास्य नित्यता शक्यते

(१) छाउ. ५।१९।१; शंकर. १।२।२६, ३।३।४०; भास्कर. ३।३।४०; रामानुज. १।२।२७; मध्व ३।३।४०; श्रीकंठ. १।२।२७; श्रीकर. १।२।२६, ३।३।४०; वल्लभ. १।२।२६; विज्ञान. १।२।२४.

दर्शयितुम् । तस्माद्भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ।

* अशंकर. ३।३।४१

( ३ ) तत्तस्य पुंसः ।

‡ रंग.

प्राणे तृप्यति चक्षुस्तृप्यति । चक्षुषि तृप्यत्यादित्यस्तृप्यति । आदित्ये तृप्यति द्यौस्तृप्यति । दिवि तृप्यन्त्यां यत्किंच द्यौश्चाऽऽदित्यश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

( १ ) प्राणे तृप्यति चक्षुस्तृप्यति । चक्षुरादित्यो द्यौश्चेत्यादि तृप्यति । यच्चान्यत् द्यौश्चादित्यश्च स्वामित्वेनाधितिष्ठतस्तच्च तृप्यति । तस्य तृप्तिमनु स्वयं भुञ्जानस्तृप्यत्येवं प्रत्यक्षम् । किंच प्रजादिभिश्च । तेजः शरीरस्था दीप्तिः उज्ज्वलत्वं प्रागल्भ्यं वा, ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ।

शंकर.

( २ ) अत्र प्राणचक्षुरादिशब्दास्तत्तदभिमानिदेवतापराः अचेतनानां तृप्तेरसंभवादिति । एवमुत्तरत्रापि द्रष्टव्यम् ।

+ रंग.

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति । व्यानस्तृप्यति ॥

व्याने तृप्यति श्रोत्रं तृप्यति । श्रोत्रे तृप्यति चन्द्रमास्तृप्यति । चन्द्रमसि तृप्यति दिशस्तृप्यन्ति । दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेति । अपानस्तृप्यति ॥

अपाने तृप्यति वाक्तृप्यति । वाचि तृप्यन्त्यामग्निस्तृप्यति । अग्नौ तृप्यति पृथिवी तृप्यति । पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति । समानस्तृप्यति ॥

समाने तृप्यति मनस्तृप्यति । मनसि तृप्यति पर्जन्यस्तृप्यति । पर्जन्ये तृप्यति विद्युत्तृप्यति । विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेति । उदानस्तृप्यति ॥

उदाने तृप्यति त्वक्तृप्यति । त्वचि तृप्यन्त्यां वायुस्तृप्यति । वायौ तृप्यत्याकाशस्तृप्यति । आकाशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चाधितिष्ठतस्तत्तृप्यति । तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥

अथ यां द्वितीयां तृतीयां चतुर्थीं पञ्चमीमिति समानम् ।

शंकर.

स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥

( १ ) स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान् सन् अग्निहोत्रं प्रसिद्धं जुहोति, यथा अङ्गारानाहुतियोग्यानपोह्याहुतिस्थाने भस्मनि जुहुयात्तादृक् तत्तुल्यं तस्य तदग्निहोत्रहवनं स्याद्वैश्वानरविदोऽग्निहोत्रमपेक्ष्येति प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते ।

शंकर.

( २ ) उरःप्रभृतीनामग्निहोत्रोपकरणवेद्यादितामजानन्यः प्राणाग्निहोत्रमनुतिष्ठतीत्यर्थः ।

* रंग.

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥

---

* भास्कर. अशंकरवत् ।

‡ शेषं शंकरेण गतार्थम् ।

+ शेषं शंकरवत् ।

(१) छाउ. ५।१९।२.

(२) छाउ. ५।२०—२३.

* शेषं शंकरवत् ।

(१) छाउ. ५।२४।१; रामानुज. १।२।३२.

(२) छाउ. ५।२४।२; अशंकर. ३।३।४०; भास्कर. ३।३।४०; रामानुज. १।२।३२; निंबार्क. १।२।३२; श्रीकंठ. १।२।३२; श्रीकर. १।२।३१.

(१) अतश्चैतद्विशिष्टमग्निहोत्रम्। कथम्। अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य यथोक्तवैश्वानरविज्ञानवतः सर्वेषु लोकेष्वित्याद्युक्तार्थम्। हुतमन्नमत्तीत्यनयोरेकार्थत्वात्। शंकर.

(२) सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः। रंग.

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥

किंच तद्यथेषीकायास्तूलमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रं, एवं हास्य विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः सर्वे निरवशिष्टाः पाप्मानो धर्माधर्माख्याः अनेकजन्मसंचिता इह च प्राग्ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च प्रदूयन्ते प्रदह्येरन्वर्तमानशरीरारम्भकपाप्मवर्जं, लक्ष्यं प्रति मुक्तेषुवत्प्रवृत्तफलत्वात्तस्य न दाहः। य एतदेवं विद्वानग्निहोत्रं जुहोति भुङ्क्ते। * शंकर.

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेत्। आत्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति। तदेष श्लोकः ॥

स यद्यपि चण्डालायोच्छिष्टानर्हायोच्छिष्टं प्रयच्छेत् उच्छिष्टं दद्यात्प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्यात्। आत्मनि हैवास्य चण्डालदेहस्थे वैश्वानरे तद्धुतं स्यान्नाधर्मनिमित्तमिति विद्यामेव स्तौति। तदेतस्मिन् स्तुत्यर्थे श्लोको मन्त्रोऽप्येष भवति। § शंकर.

* रंग. शंकरवत्। ब्रशंकर. मुड. ३।२।८ इत्यत्र द्रष्टव्यम्।

§ रंग शंकरवत्।

(१) छाउ. ५।२४।३; ब्रशंकर. १।२।२४, ४।१।१३; भास्कर. १।१।२४, ४।१।१३; रामानुज. १।२।२५, ३२, ४।१।१३, १५; निंबार्क. ४।१।१३; ब्रमध्व. ४।१।१३ हास्य (हैवास्य); श्रीकंठ. ४।१।१३; श्रीकर. १।२।२४, ४।१।१३; वल्लभ. ४।१।१३; बलदेव. १।२।२५, ४।१।१३.

(२) छाउ. ५।२४।४.

यथेह क्षुधिता बाला मातरं पर्युपासते। एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥

यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते कदा नो माताऽन्नं प्रयच्छतीति, एवं सर्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोक्ष्यते इति, जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था। * शंकर.

इति पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः

### (विश्वात्मरूपसत्तत्त्वविद्या)

६।१–१६

श्वेतकेतवे पुत्राय पित्रोपदिष्ट आदेशः सर्वाविज्ञातविज्ञानकारणम्

(२)श्वेतकेतुर्हाऽऽरुणेय आस। तꣳ ह पितोवाच। श्वेतकेतो वस ब्रह्मचर्यम्। न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥

श्वेतकेतुर्हाऽऽरुणेय आस इत्याद्यध्यायसंबन्धः। 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छाउ. ३।१४।१) इत्युक्तं, कथं तस्माज्जगदिदं जायते, तस्मिन्नेव च लीयते, अनिति च तेनैव, इत्येतद्वक्तव्यम्। अनन्तरं चैकस्मिन्भुक्ते विदुषि सर्वं जगत्तृप्तं भवतीत्युक्तं, तत् एकत्वे सति आत्मनः सर्वभूतस्थस्योपपद्यते, नात्मभेदे। कथं च तदेकत्वं, इति तदर्थोऽयं षष्ठोऽध्याय आरभ्यते। पितापुत्राख्यायिका विद्यायाः सारिष्ठत्वप्रदर्शनार्था। श्वेतकेतुरिति नामतः। ह इत्यैतिह्यार्थः।

* रंग. शंकरवत्।

(१) छाउ. ५।२४।५; ब्रशंकर. ३।३।४०; भास्कर. ३।३।४०.

(२) छाउ. ६।१।१; रामानुज. ३।४।२३; बलदेव. १।४।२३.

आरुणेयः अरुणस्य पौत्रः आस बभूव। तं पुत्रं ह आरुणिः पिता योग्यं विद्याभाजनं मत्वा, तस्योपनयनकालात्ययं च पश्यन् उवाच— हे श्वेतकेतो अनुरूपं गुरुं कुलस्य नो गत्वा वस ब्रह्मचर्यम्। न चैतद्युक्तं यदस्मत्कुलीनो हे सोम्य अननूच्य अनधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान् बन्धून् व्यपदिशति, न स्वयं ब्राह्मणवृत्त इति। तस्य अतः प्रवासोऽनुमीयते पितुः। येन स्वयं गुणवान् सन् पुत्र नोपनेष्यति।

* शंकर.

**स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय। तꣳह पितोवाच॥**

स पित्रोक्तः श्वेतकेतुः ह द्वादशवर्षः सन् उपेत्याऽऽचार्यं यावच्चतुर्विंशतिवर्षो बभूव, तावत् सर्वान् वेदान् चतुरोऽप्यधीत्य तदर्थं च बुद्ध्वा, महामनाः महत् गम्भीरं मनो यस्य असममात्मानमन्यैर्मन्यमानं मनः यस्य सोऽयं महामनाः, अनूचानमानी, अनूचानमात्मानं मन्यते इत्येवंशीलो यः सोऽनूचानमानी स्तब्धः अप्रणतस्वभावः, एयाय गृहम्। तमेवंभूतं ह आत्मनोऽननुरूपशीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा पितोवाच सद्धर्मावतारचिकीर्षया।

शंकर.

**[1]श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽसि। उत तमादेशमप्राक्ष्यः येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति। कथं नु भगवः स आदेशो भवतीति॥**

(१) श्वेतकेतो यन्नु इदं महामनाः अनूचानमानी स्तब्धोऽसि, कस्तेऽतिशयः प्राप्तः उपाध्यायात्, उत अपि तमादेशं आदिश्यते इत्यादेशः केवलशास्त्राचार्योपदेशगम्यमित्येतत्, येन वा परं ब्रह्माऽऽदिश्यते स आदेशः, तं अप्राक्ष्यः पृष्टवानसि आचार्यम्, तमादेशं विशिनष्टि —येन आदेशेन श्रुतेन अश्रुतमपि अन्यच्छ्रुतं भवति, अमतं मतं अतर्कितं तर्कितं भवति, अविज्ञातं विज्ञातं अनिश्चितं निश्चितं भवतीति। सर्वानपि वेदानधीत्य सर्वं च अन्यद्वेद्यमधिगम्यापि अकृतार्थ एव भवति यावदात्मतत्त्वं न जानाति इति आख्यायिकातोऽवगम्यते। तदेतदद्भुतं श्रुत्वा आह, कथं न्वेतदप्रसिद्धं अन्यविज्ञानेनान्यद्विज्ञातं भवति, इत्येवं मन्वानः पृच्छति—कथं नु केन प्रकारेण हे भगवः स आदेशो भवतीति।

शंकर.

(२) 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'— यथाऽभ्युदयहेतुत्वाद्धर्मो जिज्ञास्य एवं निःश्रेयसहेतुत्वाद्ब्रह्म जिज्ञास्यमित्युक्तम्। ब्रह्म च 'जन्माद्यस्य यतः' इति लक्षितम्। तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः—किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति। तत्र निमित्तकारणमेव तावत्केवलं स्यादिति प्रतिभाति। कस्मात्। ईक्षापूर्वककर्तृत्वश्रवणात्। ईक्षापूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते 'स ईक्षांचक्रे' (प्रउ. ६।३) 'स प्राणमसृजत' (प्रउ. ६।४) इत्यादिश्रुतिभ्यः। ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टम्। अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा, स च न्याय आदिकर्तर्यपि युक्तः संक्रमयितुम्। ईश्वरत्वप्रसिद्धेश्च। ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम्। कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृशेनैव भवितव्यं, कार्यकारणयोः सारूप्यदर्शनात्। ब्रह्म च

---

* रंग. शंकरेण गतार्थम्।

(१) छाउ. ६।१।२.

(१) छाउ. ६।१।३; ब्रशांकर. १।१।८, १।४।२३, २।१।१८, २०, २।३।६, २।४।४, ३।२।१७; भास्कर. १।१।८, १।४।२२, २।३।६, २।४।२; रामानुज. १।१।५, १३, १।४।२३, २।१।१५, २।३।५, १८, ३।२।३५; निंबार्क. १।४।२३; आमध्व. १।४।१९; श्रीकंठ. १।१।१, १।४।२३, २।३।५; श्रीकर. १।१।१ (पृ. २०), ४ (पृ. ४५), ९, १।४।२३, २।१।१४, २।३।५, १६, ३।३।३५; वल्लभ. १।४।२३, २।३।६ त्यमतं + (भवति); बलदेव. १।४।२३.

नैवंलक्षणमवगम्यते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वेउ. ६।१९) इत्यादिश्रुतिभ्यः। पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकारणमनुक्तमपि स्मृतिप्रसिद्धमभ्युपगन्तव्यम्। ब्रह्मकारणत्वश्रुतेर्निमित्तत्वमात्रे पर्यवसानादिति। एवं प्राप्ते ब्रूमः — प्रकृतिश्च उपादानकारणं च ब्रह्माभ्युपगन्तव्यं निमित्तकारणं च; न केवलं निमित्तकारणमेव। कस्मात्। प्रतिज्ञादृष्टान्तानुपरोधात्। एवं प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते। प्रतिज्ञा तावत् 'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति। तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते। तच्चोपादानकारणविज्ञाने सर्वविज्ञानं संभवति, उपादानकारणाव्यतिरेकात्कार्यस्य। निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात्। दृष्टान्तोऽपि 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छाउ. ६।१।४) इत्युपादानकारणगोचर एवाऽऽम्नायते। तथा 'एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' (छाउ. ६।१।५) इति। 'एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' (छाउ. ६।१।६) इति च। तथाऽन्यत्रापि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मुउ. १।१।३) इति प्रतिज्ञा। 'यथा पृथिव्यामोषधयः संभवन्ति' (मुउ. १।१।७) इति दृष्टान्तः। 'तथा आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' (बृउ. ४।५।६) इति प्रतिज्ञा। 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' (बृउ. ४।५।८) इति दृष्टान्तः। एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वसाधनौ प्रत्येतव्यौ।

* ब्रशांकर. १।४।२३

* भास्कर. रामानुज. निंबार्क. वल्लभ. ब्रशंकरवत्। मुउ. १।१।३ द्रष्टव्यम्।

(३) अत्र व्यासार्याः। उपक्रमे तावत् — 'उत तमादेशमप्राक्ष्यः' इत्यत्राऽऽदेशशब्देन प्रशासिताऽभिधीयते। अत्र श्लोकावाचार्यपादैरुक्तौ —

छान्दोग्ये केचिदाहुर्दिशतिरुत तमादेशमप्राक्ष्य इत्यत्राऽऽङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्ति घञन्तः।
नो कर्तर्यस्ति कर्मण्यगणि घञिह सत्कर्तृशास्तौ न कर्म स्यात्तत्कर्मोपदेश्ये तदिदमुत तमादेशवाचोपदेश्यम्॥
अत्र ब्रूमः प्रशास्ति वदति दिशिरसावाङ्मुखो नोपदेशं शास्ता सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः।
युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं शब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा॥

इति। किंच उपदेश्यत्वं लौकिकालौकिकधर्मब्रह्मभागार्थसाधारणम्। शासितृत्वं तु ब्रह्मणोऽसाधारणम्। 'अन्तः प्रविष्टः शास्ता जनानाम्' (तैआ. ३।११।२) 'एतस्य वा अक्षरस्य प्रशासने गार्गि' (बृउ. ३।८।९) इत्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात्।

येनाश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत्। निमित्तान्तरे सति ह्येकविज्ञानेन सर्वविज्ञानं नोपपद्यते। अतः प्रतिपिपादयिषितवस्तुनोऽपेक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम्।

उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यमर्थानौचित्यं च। प्रशासनपक्षे प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्। अतः प्रशासनमेवाऽऽदेशशब्दाभिधेयमिति स्वीकर्तुं युक्तमिति।

आदेशनमादेश इति घञन्ताद्भाववाचिन आदेशशब्दात् अर्शआद्यजन्तादपि प्रशासितृत्वार्थकत्वमेवाऽऽदेशशब्दस्य युक्तमिति वयमुत्पश्यामः।

प्रशासनेन च धारकत्वलक्षणमात्मत्वं फलितम्। ततश्च आदेशशब्दः आत्मत्वपर्यन्तः।

ब्रह्मस्वरूपसत्तामात्रस्याश्रुतश्रुतत्वादिहेतुत्वाभावादश्रुतामतादिशब्दानाम् 'इदं सर्वं विदितं भवति' इति श्रुत्यन्तरानुसारात् सर्वार्थकत्वं द्रष्टव्यम्। ततश्च येन श्रुतेन सर्वं श्रुतं भवतीत्यर्थः। ततश्चाश्रुतं श्रुतं भवतीत्यश्रुतस्य श्रुतत्वप्रतिपादनं कथमिति शङ्काया नावकाशः। अश्रुतशब्दस्य सर्वपरत्वात्।

स्त्वश्रुतं विज्ञातमविज्ञातं स्वतेन श्रुतं भवतीत्यर्थः । अत्र विज्ञानशब्दो निदिध्यासनपरः, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति क्रमप्राप्तमिति द्रष्टव्यम् ।
रंग.

( ८ ) 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके' — परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः । 'कथं नु भगवः स आदेशो भवतीति । यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिना प्रश्नव्याख्यानाभ्याम् । ब्रसू. १।४।१८

**यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्यात् । वाचाऽऽरम्भणं विकारो नामधेयं, मृत्तिकेत्येव सत्यम् ॥**

(१) यथा स आदेशो भवति, तच्छृणु हे सोम्य— यथा लोके एकेन मृत्पिण्डेन रुचककुम्भादिकारणभूतेन विज्ञातेन सर्वमन्यत्तद्विकारजातं मृन्मयं मृद्विकारजातं विज्ञातं स्यात् । कथं मृत्पिण्डे कारणे विज्ञाते कार्यमन्यद्विज्ञातं स्यात् । नैष दोषः । कारणेनानन्यत्वात्कार्यस्य । यन्मन्यसेऽन्यस्मिन्विज्ञातेऽन्यन्न ज्ञायते इति । सत्यमेवं स्यात्, यद्यन्यत्कारणात्कार्यं स्यात्, न त्वेवमन्यत्कारणात्कार्यम् । कथं तर्हीदं लोके, इदं कारणमयमस्य विकार इति । शृणु । * वाचाऽऽरम्भणं वागारम्भणं वागालम्बनमित्येतत् । कोऽसौ, विकारो नामधेयं, नामैव नामधेयं, स्वार्थे धेयप्रत्ययः । वागालम्बनमात्रं नामैव केवलं, न विकारो नाम वस्त्वस्ति परमार्थतः, मृत्तिकेत्येव तु मृत्तिकैव सत्यं वस्त्वस्ति ।
शंकर.

[ वाचारम्भणमित्यत्र वाचेति तृतीया षष्ठ्यर्थे द्रष्टव्या ।
आनन्दगिरिटीका ]

( २ ) यतो वाचारम्भणं विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते । ब्रशांकर. २।१।१४

( ३ ) यथा सोम्यैकेनेति । वागिन्द्रियस्योभयमारम्भणं विकारो नामधेयं च विकारोऽभिधेयोपपत्तिस्तदभिधेयं नामधेयं उभयमालम्ब्य वाग्व्यवहारः प्रवर्तते घटेन उदकमाहरेति । मृन्मयमित्यस्येदं व्याख्यानम् । यदि तर्हि व्यवहारहेतुः कार्यं न तर्हि कार्यकारणयोरनन्यत्वमित्याशङ्क्याह, मृत्तिकेत्येव सत्यमिति । कारणमेव कार्यात्मना घटवदवतिष्ठते, मृत्त्वमन्वितं हि कार्यमुपलभ्यते । त्रिष्वपि कालेषु कारणाधीनं कार्यं नाश्वमहिषवद्देशतः कालतो वा व्यतिरिक्तमुपलभ्यते । कारणस्यावस्थामात्रं कार्यं व्यतिरिक्ताव्यतिरिक्तं शुक्तिरजतवदागमापायधर्मित्वाच्चानृतमनित्यमिति च व्यवह्रियते । तदर्थमेव मृत्तिकेत्येव सत्यमित्युक्तम् । प्रत्यक्षसिद्धमेव हि सत्यत्वमनूद्यते, न विधीयते, दृष्टान्तत्वेनोपादानात् । प्रमाणान्तरसिद्धो हि दृष्टान्तो भवति । तथा च न्यायसूत्रम्— 'लौकिकपरीक्षकाणां यत्र बुद्धिसाम्यं स दृष्टान्तः' इति । भास्कर. २।१।१४

( ४ ) घटत्वादिलक्षणो विकारो घटशरावादिनामधेयं च । आरभ्यते स्पृश्यते इत्यारम्भणं, कर्मणि ल्युट् । तेनैव मृद्द्रव्येण घटशरावादिलक्षणो विकारो घटशरावादिनामधेयं च स्पृश्यत इत्यर्थः । आरम्भणशब्दस्य पुंनपुंसकलिङ्गान्तविकारनामधेयविशेषत्वेऽपि नपुंसकैकशेषैकवद्भावाभ्यां वा लिङ्गसामान्यादिविवक्षया वाऽऽरम्भणमिति नपुंसकैकवचननिर्देशः । मृद्द्रव्येण विकारनामधेये कस्मै प्रयोजनाय

* 'वाचारम्भणं' इत्यस्य 'वागारम्भणं' इति कृत्वा भावछान्दसत्वप्रदर्शनमात्रफलकेन विवरणेन 'वाचारम्भणं' इत्येकं समस्तं पदं भाष्याभिप्रेतमिति विज्ञायते । तथा चोद्धृता टीका असङ्गतेव भाति । ब्रह्मसूत्रभाष्यं तु स्वरसतः पदव्यासमेवाभिसंधत्ते इति विभावयामः । तत्र चेयं टीका संगतापि न विहिता । उभयत्राप्यर्थभेदाच्छब्दगोचराभिप्रायभेदो भाष्यकृतां न दोषाय ।

(१) छाउ. ६।१।४; ब्रशांकर. १।१।८, १।४।२३, २।१।१४; भास्कर. १।४।२२, २।१।१४ मृन्मयं ( मृण्मयं ); रामानुज. १।१।१ ( पृ. १४ ), ५, १।४।२३, २।१।१५, २।३।१८; निंबार्क. १।४।२३, २।१।१४; मध्व. १।४।१९; श्रीकंठ. १।४।२३, २।१।१५, १६; श्रीकर. १।१।१ (पृ. ६), ४ ( पृ. ४५), ५ ( पृ. ५२ ), ९, १।४।२२ ( पृ. १७५ ), २३, २।१।३, ११, १३, १४, २१, २।३।१६, ३।२।२९, ३।३।१८, ४।४।९; वल्लभ. १।१।३ ( पृ. ११९ ), १।४।२३ ( सोम्य० ); विज्ञान. १।१।१ ( पृ. २३ ), ४ ( पृ. १०१ ), २।१।१४, १८, ३।२।३६; बलदेव. १।४।२३.

स्पृश्येते इत्यत्राऽऽह — वाचेति । प्रयोजनस्य हेतुत्वविवक्षया तृतीया । वाक्शब्दश्च जहल्लक्षणया वागादिव्यवहारपरः । ततश्च वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते मृत्पिण्ड एव नानारूपनामभवतीत्यर्थः । अत्र यद्यपि मृत्पिण्डमृन्मयाभेदप्रतिपादनं वाचाऽऽरम्भणं विकार इत्येतावन्मात्रेणापि सिध्यति, न नामधेयस्यापि स्पृश्यत्वं वक्तव्यं, तथाऽपि संज्ञाभेदादुपादानोपादेययोर्भेदशङ्काव्युदासाय नामापि मृद्द्रव्येण स्पृश्यत इत्युक्तिरपेक्षितेति द्रष्टव्यम् । कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह—मृत्तिकेत्येव सत्यम् । मृन्मयं घटादिकं मृत्तिकेत्येव प्रमाणप्रतिपन्नं न तु तद्भिन्नत्वेनेत्यर्थः । यद्वा मृन्मयं मृत्तिकेति वाक्यमेव सत्यमबाधितार्थकमित्यर्थः । ततश्चोपादानोपादेययोरभेदादुपादाने ज्ञाते उपादेयस्य ज्ञातता भवतीत्यर्थः ।

ननु सर्वं मृन्मयं विज्ञातं स्यादित्यत्र विकारार्थमयट्प्रत्ययेन घटत्वशरावत्वाद्यवस्थावद्द्रव्यरूपो विकार एवाभिधातव्यो न तु घटत्वशरावत्वाद्यवस्थारूपो विकारः । तस्य मृत्पिण्डादेरत्यन्तं भिन्नत्वेन तज्ज्ञानेन ज्ञातत्वासंभवात् । ततश्च तदुपपादके वाचाऽऽरम्भणं विकार इति वाक्येऽपि विकारशब्देनावस्थावद्द्रव्यलक्षणस्यैव विकारस्याभिधानमुचितं न त्ववस्थालक्षणविकारस्येति चेत्सत्यम् । तस्यैवाभिधानमुचितम् । तथाऽपि मृद्द्रव्येण घटशरावादिलक्षणस्यावस्थावतो द्रव्यस्य स्पर्शासंभवात् । न ह्यात्मैवाऽऽत्मना स्प्रष्टुं शक्यः । अतो मृन्मयमित्यत्र विकारवाचिमयट्प्रत्ययेनावस्थावतोऽभिधानेऽपि तदुपपादके वाचारम्भणं विकार इति वाक्ये विकारशब्देनावस्थाया एव ग्रहणमुचितम् । तथा मृत्तिकेत्येव सत्यमित्यत्र विशेष्याकाङ्क्षायां सत्यमिति नपुंसकलिङ्गानुरोधादवस्थावद्द्रव्यवाचि मृन्मयमित्येतद्विशेष्यतया अनुषज्यते । ततश्च सर्वं मृन्मयं मृत्तिकेत्येव सत्यमित्यत्रावस्थावद्द्रव्यमेव विकारवाचिना मयट्प्रत्ययेनाभिधीयते इति न कश्चिद्दोष इति द्रष्टव्यम् ।

* रंग.

( ५ ) अथवा — 'वाचाऽऽरम्भणं विकारो०' विकारो घटो वाचारम्भणं घटोऽयमिति वागारम्भविषयमात्रम् । मृद्द्रव्य एव व्यवहारसिद्ध्यर्थं जायमानमवस्थान्तरं, न तु मृदो द्रव्यान्तरम् । 'मृत्तिकेत्येव नामधेयं सत्यं' घटादिकं मृत्तिकेति कृत्वैव तत्र सर्वं मृत्पिण्डादिनामधेयं सत्यं सति प्रामाणिकेऽर्थे साधु, न तु द्रव्यान्तरमिति कृत्वा । यतो घटो मृदेवेति ।

† श्रीकंठ. २।१।१६

( ६ ) यतः प्रलये च ब्रह्मणि सर्वं विकारजातमव्याकृतत्वरूपामसत्तां गच्छति, अतो वाचानां कार्यो नाममात्रशेषश्चेत्यसत्यो भङ्गुरो विकारः, कारणं ब्रह्मैव सत्यं नित्यमिति । अतीतानागतावस्थयोः कार्याणां नाममात्रेणावशेषता तु 'नामैवैनं जहाति' इति श्रवणात् । न तु नामधेयशब्दस्यात्यन्ततुच्छत्वमर्थः । मृद्विकारस्य तुच्छताया असाधितत्वेन दृष्टान्तत्वासंभवात्, पक्षसमत्वात् 'अपागादग्नेरग्नित्वम्' इति वाक्यशेषे विनाशमात्रश्रवणाच्चेति स्वयमूह्यम् ।

अनुत्पन्नज्ञानस्य सत्यां शक्तौ देवताराधनरूपबाह्याभ्यन्तरसर्वकर्मत्यागे ज्ञानमेव नोत्पद्येत, देवकृतविघ्नसंभवात् 'तदेतद्देवानां न प्रियं यदेतन्मनुष्या विदुः' इति श्रुतेः। विज्ञान. १।१।१ ( पृ. २३ )

**यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्यात् । वाचाऽऽरम्भणं विकारो नामधेयं, लोहमित्येव सत्यम् ॥**

( १ ) यथा सोम्यैकेन लोहमणिना सुवर्णपिण्डेन सर्वमन्यद्विकारजातं कटकमुकुटकेयूरादि विज्ञातं स्यात् । वाचाऽऽरम्भणमित्यादि समानम् ।

शंकर.

( २ ) लोहमणिः स्वर्णपिण्डविशेषः ।

रंग.

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्यात् । वाचाऽऽरम्भणं विकारो**

* रामानुज. रंगवत् ।

† रामानुजव्याख्यायेदमपरं व्याख्यानम् । प्रथमे आवन्तवाचाशब्दघटितं समस्तं पदमिति विशेषः ।

(१) छाड. ६।१।५; रामानुज. १।४।२३; श्रीकर. १।१।१, १।४।२३.

(२) छाड. ६।१।६; रंग. कृष्णायस ( कार्ष्णायस ); रामानुज. १।४।२३; श्रीकर. १।४।२३.

नामधेयं, कृष्णायसमित्येव सत्यम् । एवꣳ सोम्य स आदेशो भवतीति ॥

न वै नूनं भगवन्तस्त एतदवेदिषुः । यद्ध्येतदवेदिष्यन्कथं मे नावक्ष्यन् । इति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति । तथा सोम्येति होवाच ॥

यथा सोम्यैकेन नखनिकृन्तनेनोपलक्षितेन कृष्णायसपिण्डेनेत्यर्थः । सर्वं कार्ष्णायसं कृष्णायसविकारजातं विज्ञातं स्यात् । समानमन्यत् । अनेकदृष्टान्तोपादानं दार्ष्टान्तिकानेकभेदानुगमनार्थं दृढप्रतीत्यर्थं च । एवं सोम्य स आदेशो यो मयोक्तो भवति ।

इत्युक्तवति पितर्याहेतरः—न वै नूनं भगवन्तः पूजावन्तो गुरवो मम ये, त एतद्यद्भवदुक्तं वस्तु, नावेदिषुर्न विज्ञातवन्तो नूनम् । यत् यदि, ह्यवेदिष्यन् विदितवन्त एतद्वस्तु, कथं मे गुणवते भक्तायानुगताय नावक्ष्यन्नोक्तवन्तः, तेनाहं मन्ये न विदितवन्त इति । अवाच्यमपि गुरोर्न्यग्भावमवादीत्पुनर्गुरुकुलं प्रति प्रेषणभयात् । अतो भगवांस्त्वेव मे मह्यं, तद्वस्तु, येन सर्वज्ञत्वं ज्ञातेन मे स्यात्, तद्ब्रवीतु कथयतु, इत्युक्तः पितोवाच, तथाऽस्तु सोम्येति ।

*शंकर.

जगतः सन्मूलत्वमेव नासन्मूलत्वम्

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतः सज्जायत ॥

( १ ) सदेव, सदित्यस्तितामात्रं वस्तु, सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः । एवशब्दोऽवधारणार्थः । किं तद्वधार्यत इत्याह—इदं नामरूपक्रियावद्विकृतमुपलभ्यते यत्, तत्सदेवासीदिति अग्रशब्देन संबध्यते । कदा सदेवेदमासीदित्युच्यते । अग्रे जगतः प्रागुत्पत्तेः ।

किं नेदानीमिदं सत्, येनाग्र आसीदिति विशेष्यते । न । कथं तर्हि विशेषणम् । इदानीमपीदं सदेव, किन्तु नामरूपविशेषणवदिदंशब्दबुद्धिविषयं चेतीदं च भवति । प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते । न हि प्रागुत्पत्तेः नामवद्रूपवद्वेदमिति ग्रहीतुं शक्यं वस्तु, सुषुप्तकाल इव । यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते, सन्मात्रमेव केवलं वस्त्विति, तथा प्रागुत्पत्तेरित्यभिप्रायः ।

यथेदमुच्यते लोके, पूर्वाह्णे घटादि सिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा प्रत्यागतोऽपराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्यमु-

---

* रंग. शंकरवत् ।

(१) छाउ. ६।१।७; रामानुज. निंबार्क. श्रीकर. ३।३।३५.

(२) छाउ. ६।२।१; ब्रशंकर. १।१।४, ५, ६, १।४।१४, २२, २।१।१६, १८, ३५, २।३।१, ५, ६, ३।२।३२, ३।३।१२, १७; भास्कर. १।१।१ ( पृ. ३, ७ ), ४, ५, १।४।१५, २।१।१६, १८, २।२।८, २।३।१, ६, ३।३।१६, १७, ४।४।१७; रामानुज. १।१।१ ( पृ. ६, १३, २०, ६०, ११९ ), २ ( पृ. १३४ ), ४ ( पृ. १४६, १५१ ), ५, १३, २१, २३, १।३।२५, १।४।१४, २३, २।१।८, १५ (पृ. ४३९, ४४१, ४४६), १७, १८, २३, २४, २६, ३५, २।२।३५, २।३।६, २।४।१, ४।४।१७; निंबार्क. २।१।१७, ३४; ब्रमध्व. १।३।१२, २।१।८, २।३।६, ३।२।३१; श्रीकंठ. १।१।२ ( पृ. १२०, १२४ ), ४ ( पृ. १८० ), ५ ( पृ. १९१, १९४ ), ६, २।१।१५, २४, ३५, २।३।१, ९, १३, १८, २।४।२, १७, ३।३।४३; श्रीकर. १।१।१ ( पृ. ६, १९, २६ ), २ ( पृ. २९, ३०, ३१, ३५ ), ४ ( पृ. ४४, ४५, ४८ ), ५ ( पृ. ५३, ५४ ), ६, ११, १३ ( पृ. ६३ ), २३, १।२।८, १।३।६, ७, १।४।१४, २।१।७, ८, १५, १६, २४, ३५, ३६, २।२।२७, २।३।१, ३, ८, १६, २।४।१, ६, १६, ३।२।७, १२, २६, ३०, ३।३।४३, ४।४।८, ६, १०, १३, १७; वल्लभ. १।१।३ (पृ. ११९), ४, १।४।१५, २७, २।१।१६, २।३।१, १८, २।४।३, ३।१।२१; विज्ञान. १।१।४ ( पृ. ९४, १०७, ११३ ), ५ ( पृ. १२३ ), ६ ( पृ. १४० ), २।१।१४, १५, १६, ३५, २।३।६, ९, ३।१।२२, ३।३।१; बलदेव. १।१।१, १।४।१४, १५, २३, २।१।१८, ३५, २।३।१, ५-

पलभ्य मृदेवेदं घटशरावादि केवलं पूर्वाह्ण आसीदिति, तथेहाप्युच्यते—सदेवेदमग्र आसीदिति । एकमेवेति । स्वकार्यपतितमन्यन्नास्तीत्येकमेवेत्युच्यते । अद्वितीयमिति । मृद्व्यतिरेकेण मृदो यथाऽन्यत् घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं, तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यतेऽद्वितीयमिति । नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम् । ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्वस्योपपद्यते । द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तेः । सद्द्रव्यं, सन्गुणः, सत्कर्मेत्यादिदर्शनात् । सत्यमेवं स्यादिदानीं, प्रागुत्पत्तेस्तु नैवेदं कार्यं सदेवाऽऽसीदित्यभ्युपगम्यते वैशेषिकैः, प्रागुत्पत्तेः कार्यस्यासत्त्वाभ्युपगमात् । न चैकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छन्ति । तस्माद्वैशेषिकपरिकल्पितात्सतोऽन्यत्कारणमिदं सदुच्यते मृदादिदृष्टान्तेभ्यः ।

तत्तत्र, हैतस्मिन्प्रागुत्पत्तेर्वस्तुनिरूपणे, एके वैनाशिकाः, आहुर्वस्तु निरूपयन्तः, असदभावमात्रं प्रागुत्पत्तेः, इदं जगत्, एकमेवाग्रे आद्वितीयमासीदिति । सदभावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयन्ति बौद्धाः । न तु सत्प्रतिद्वन्द्वि वस्त्वन्तरमिच्छन्ति, यथा * सच्च सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवतीति नैयायिकाः । ननु सदभावमात्रं प्रागुत्पत्तेश्चेदमभिप्रेतं वैनाशिकैः, कथं प्रागुत्पत्तेरिदमासीदसदेकमेवाद्वितीयं चेति कालसंबन्धः संख्यासंबन्धोऽद्वितीयत्वं चोच्यते तैः । बाढं, न युक्तं तेषां भावाभावमात्रमभ्युपगच्छताम् । असत्त्वमात्राभ्युपगमोऽप्ययुक्त एव, अभ्युपगन्तुरनभ्युपगमानुपपत्तेः । इदानीमभ्युपगन्ताऽभ्युपगम्यते, न प्रागुत्पत्तेः, इति चेत्, न, प्रागुत्पत्तेः सदभावस्य प्रमाणाभावात् प्रागुत्पत्तेरसदेवेतिकल्पनानुपपत्तिः ।

ननु कथं वस्त्वाकृतेः शब्दार्थत्वेऽसदेकमेवाद्वितीयमितिपदार्थवाक्यार्थोपपत्तिः, तदनुपपत्तौ चेदं वाक्यमप्रमाणं प्रसज्येतेति चेत् । नैष दोषः । सद्ग्रहणनिवृत्तिपरत्वाद्वाक्यस्य । सदित्ययं तावच्छब्दः सदाकृतिवाचकः । एकमेवाद्वितीयमित्येतौ च सच्छब्देन समानाधिकरणौ । तथेदमासीदिति च । तत्र नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेवावलम्ब्य सद्वाक्यार्थविषयां बुद्धिं सदेकमेवाद्वितीयमिदमासीदित्येवंलक्षणां ततः सद्वाक्यार्थान्निवर्तयति, अश्वारूढ इवाश्वालम्बनोऽश्वं तदभिमुखविषयान्निवर्तयति तद्वत् । न तु पुनः सदभावमेवाभिधत्ते । अतः पुरुषस्य विपरीतग्रहणनिवृत्त्यर्थपरमिदमसदेवेत्यादि वाक्यं प्रयुज्यते । दर्शयित्वा हि विपरीतग्रहणं ततो निवर्तयितुं शक्यत इत्यर्थवत्त्वादसदादिवाक्यस्य श्रौतत्वं प्रामाण्यं च सिद्धमित्यदोषः । तस्मादसतः सर्वाभावरूपात्सद्विद्यमानं जायत समुत्पन्नम् । अडभावश्छान्दसः । शंकर.

( २ ) ' न कर्माविभागादिति चेन्नानादित्वात् '— ' सदेव सोम्येदमग्र० ' इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म यदपेक्ष्य विषमा सृष्टिः स्यात् । सृष्ट्युत्तरकालं हि शरीरादिविभागापेक्षं कर्म कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत । अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम । प्राग्विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाऽऽद्या सृष्टिः प्राप्नोति, इति चेत् न एष दोषः । अनादित्वात् संसारस्य । भवेदेष दोषो यद्यादिमान्संसारः स्यात् । अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते । २।१।३५

' आत्मगृहीतिरितरवदुत्तरात् '— आत्मगृहीतिः ' सदेव सोम्येदमग्र आसीत् ' इत्यत्र छन्दोगानामपि भवितुमर्हति, इतरवत् , यथा ' कतम आत्मा ' (बृउ. ४।३।७) इत्यत्र वाजसनेयिनामात्मगृहीतिस्तथैव । कस्मात् । उत्तरात्तादात्म्योपदेशात् ।

ब्रशंकर. ३।३।१७

( ३ ) इदं विभक्तनामरूपं बहुत्वावस्थं जगदग्रे सृष्टेः प्रागेकमेवाविभक्तनामरूपतयैकत्वावस्थापन्नमेवाद्वितीयमधिष्ठानान्तरशून्यं सदेवाऽऽसीदित्यर्थः । अत्र सच्छब्दो नामसंबन्धयोग्यत्वलक्षणं सत्त्वं प्रवृत्तिनिमित्ती-

---

* ' सच्चासदिति गृह्यमाणं यथाभूतं तद्विपरीतं तत्त्वं भवतीति नैयायिकाः ' इति तु सर्वत्र पुस्तकेषु पाठः । तदर्थानाकलनादस्माभिर्न्यायभाष्यं ( १।१।१ ) अनुसंधाय संशोधितः ।

कृत्य परमात्मनि वर्तते । अयं च सच्छब्दो विशेषणानुप-परमात्मवाचकोऽपि कारणविषयत्वेनासम्यक्कारणत्वौ-पयिकगुणविशिष्टप्रकृतिपुरुषकालाद्यतिरिक्तं परमात्मान-मुपस्थापयति ।

अत्र सदेवेत्येवकारेण नैयायिकाभिमतमनुत्पन्नेः प्राग्ज-गतोऽसत्त्वं व्यावर्त्यते । सदेवेत्येवकारस्य नैयायिका-भिमतोत्पत्तिप्राक्कालीनकार्यासत्त्वव्यावर्तकत्वं 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यसत्कार्यवादिदर्शनप्रति-क्षेपपरोत्तरवाक्यसंदर्भाऽवसीयते । एकमेवेत्येवकारेण 'बहु स्याम्' (छाउ. ६।२।३) इति वक्ष्यमाणा वक्ष्यमाणकार्यबहुत्वावस्था व्युदस्यते । 'तदैक्षत' 'तत्तेजोऽसृजत' (छाउ. ६।२।३) इत्युत्तरवाक्य-संदर्भे सच्छब्दितस्यैव निमित्तत्वकथनादद्वितीयमित्य-नेन निमित्तान्तरं निषिध्यते । ततश्चैकमद्वितीयमितिप-दाभ्यामभिन्ननिमित्तोपादानत्वं सिद्धं भवति । ततश्चाय-मर्थः— इदं बहुत्वावस्थं विभक्तनामरूपं प्रत्यक्षतया दृश्यमानं जगत्सृष्टेः प्राङ्निमित्तान्तरशून्यमविभक्त-नामरूपतयैकं सच्छब्दितं ब्रह्मैवाऽऽसीदित्यर्थः । यद्यपी-दानीमपि जगत्सदेव तथाऽप्यविभक्तनामरूपसद्भावानुवृत्तिः सृष्टेः प्रागेवेत्यग्र इत्यस्य नानुवृत्तिः ।

एतेनैकमेवाद्वितीयमित्येतस्य ब्रह्मनिष्ठत्वे प्रमाणानन्तः परे प्रत्युक्ताः ।

सदेवाऽऽसीदिति सृष्टिप्राक्काले ब्रह्माभेदप्रतिपादनमुखेन सत्कार्यवादमुक्त्वा तद्विरोध्यसत्कार्यवादं नैयायिकाभिमतं वाचारम्भणमित्यादिना प्रतिक्षिप्तमपि कण्ठतः प्रतिक्षेप्तुं तन्मतमुपन्यस्यति— तद्धैक आहुरसदेवेदमग्र आसी-देकमेवाद्वितीयमिति । इदं जगदग्रे सृष्टेः प्रागसदेवाऽऽ-सीन्न तु सदासीदित्यर्थः । नामरूपविभागाभावलक्षण-स्यासत्त्वस्य सिद्धान्तेऽपि संमतत्वादाह — एकमेवा-द्वितीयम् । प्रागभावव्यतिरेकेणावस्थाया वाऽवस्थाश्र-यस्य वा कस्यापि सत्त्वं नास्तीत्यर्थः । यद्वाऽसदेवेत्यत्र, अ, इत्येतत्सत्पदेनासमस्तं सत् 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति वाक्यार्थप्रतिक्षेपकम् ।

असदिति भावप्रधानो निर्देशः । यस्माद्धेतोरुत्पत्तेः प्रागसत्त्वात्रयस्याप्यभावस्तस्माद्धेतोरसतः सत्त्वरूपोत्पत्ति-रुत्पत्त्यभावदित्यर्थः । पर्यवसन्नमिति यावत् । जायते-स्यथाऽन्यच्छान्दसः

रङ्ग.

(४) सदेव सोम्येदमग्र आसीदित्यनेन इन्द्र-विभागावस्थायामविद्युत्पत्तिर्ब्रह्मणः सूक्ष्म-रूपेणावस्थानमवस्थान्तरमुच्यते । 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' । 'न कर्माविभागादिति चेन्नानादित्वा-दुपपद्यते चाप्युपलभ्यते च' (ब्र. सू. २।१।३४–३५) इति सूत्रद्वयोदितत्वात्तदानीमपि सूक्ष्मरूपेणाव-स्थानस्य । अविभागस्तु नामरूपविभागाभावादुपपद्यते ।

* रामानुज. २।१।२३

(५) किंच 'सदेव सोम्येदमग्र आसीदेकमेवाद्वि-तीयम्' इत्यत्र कथं निर्विशेषत्वं ब्रह्मणः । आसी-दिति हि क्रियाविशेषः । अग्र इति हि काल-विशेषः । एकमेवेत्यवधारणमधिष्ठात्रन्तरनिषेधपर-म् । अद्वितीयमिति जगदुपादानत्वमुच्यते । अत एव सर्वज्ञमनन्तशक्तिविशिष्टं च । कथं सर्वज्ञ-त्वसर्वशक्तित्वविशेषमन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवति । अथवा प्रकृतिप्रत्ययात्मकत्वं सत्पदस्य नैक-वस्तुपरत्वं युक्तम् । प्रकृत्या प्रत्ययेन च सत्पदस्य वस्तुद्वयप्रतिपादनपरत्वात् । तथा ह्यभियुक्तसूक्तिः— 'शक्तिः शिवश्च सच्छब्दप्रकृतिप्रत्ययोदितौ । तौ ब्रह्म सामरस्येन समस्तजगदात्मकौ ॥' इति । स्थूलसूक्ष्म-चिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्य-कारणरूपः सत्पदविषय इति निर्णयः ।

* श्रीकण्ठ. १।१।५

(६) तेन च वाक्येन प्रलये सदनुगततया जगद-वस्थानेन वक्ष्यमाणजगत्कारणत्वं कूटस्थस्यापि ब्रह्मण उपपादितम् ।

१।१।४ (पृ. ९४)

यत्तु पूर्वसूत्रे निराकृता आधुनिका आहुः, एताभ्यां सूत्राभ्यामुच्यमाना प्रलये कार्यसत्तामात्ररूपा, न तु कारणे सूक्ष्मतयाऽवस्थानमिति । तदसत् । तथा सति एताभ्यां सूत्राभ्यां कारणसत्तामात्रस्य सिद्ध्या-पत्त्या तदनन्यत्वस्यासिद्ध्यापत्तेः । 'तम एवेदमग्र

* संसारानादित्वं भशंकरवत् ।

आसीत्तत्तः परं स्यात्' इत्यादिश्रुतिषु, 'प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत्। तस्मात्प्राकृतसंक्षोभमुच्यते प्रति संचर ॥' इत्यादिस्मृतिषु च प्रलयेऽपि कार्यकारणयोराधाराधेयभावेन स्वरूपेणावसिद्धेश्च, तथा च पूर्वोत्तरकल्पकार्याणामव्यक्तावस्थारूपेणावस्थानं सिद्धमिति।

२।१।१६

अनादित्वं चात्र स्वसजातीयानधिकरणकालवृत्तिप्रागभावाप्रतियोगित्वं बोध्यम्। तच्च कर्मप्रकृत्यादिसाधारणं, घटादिध्वंसव्यावृत्तं, स्वजातीयानधिकरणे प्रलये स्वस्य सत्त्ववृत्तेरिति।

२।१।३५

'असंभवस्तु सतोऽनुपपत्तेः'— सदेव सोम्येदमग्र आसीदित्यादिश्रुतिषु तप्तायःपिण्डवद्वह्निब्रह्माभेदेनोपन्यस्तं सूक्ष्मं जगत् सत्, तस्य सतोऽव्यक्तस्य परमसूक्ष्माकाशादिकरणगुणत्रयात्मकस्य प्रधानस्य तु संभव उत्पत्तिर्नास्ति, कुतः, अनुपपत्तेः, तस्य कारणभावेन विकाररूपत्वाभावात्कारणकल्पने चाऽनवस्थानादित्यर्थः।

२।३।९

यथा छान्दोग्ये सद्विद्यायां 'सदेव सोम्येदमग्र आसीत्' इत्यादिरूपायां विध्यश्रवणेऽपि तदविलक्षणया काण्वस्थाव्याकृतविद्यया 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिरूपया सहैकवाक्यतया विधिः कल्प्यते।

विज्ञान. २।३।१

**[1]कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच। कथमसतः सज्जायेतेति। सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥**

(१) तदेतद्विपरीतग्रहणं महावैनाशिकपक्षं दर्शयित्वा प्रतिषेधति। कुतस्तु प्रमाणात्खलु हे सोम्य एवं स्यादसतः सज्जायेतेत्येवं कुतो भवेत्, न कुतश्चित्प्रमाणादेवं संभवतीत्यर्थः। यदपि बीजोपमर्देऽङ्कुरो जायमानो दृष्टोऽभावादेवेति, तदप्यभ्युपगमविरुद्धं तेषाम्। कथम्। ये तावद्बीजावयवा बीजसंस्थानविशिष्टाः, तेऽङ्कुरेऽप्यनुवर्तन्त एव, न तेषामुपमर्दोऽङ्कुरजन्मनि। यत्पुनर्बीजाकारसंस्थानं, तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युपगम्यते, यदङ्कुरजन्मन्युपमृद्येत। अथ तदस्त्यवयवव्यतिरिक्तं वस्तुभूतं, तथा च सत्यभ्युपगमविरोधः। अथ संवृत्याऽभ्युपगतं बीजसंस्थानरूपमुपमृद्यत इति चेत्। केयं संवृतिर्नाम, किमसावभाव उत भाव इति। यद्यभावः, दृष्टान्ताभावः। अथ भावस्तथाऽपि नाभावादङ्कुरोत्पत्तिर्बीजावयवेभ्यो ह्यङ्कुरोत्पत्तिः। अतः कुतस्तु खलु सोम्यैवं स्यादिति होवाच। कथं केन प्रकारेणासतः सज्जायेतेति। असतः सदुत्पत्तौ न कश्चिदपि दृष्टान्तप्रकारोऽस्तीत्यभिप्रायः। एवमसद्वादिपक्षमुन्मथ्योपसंहरति सत्त्वेव सोम्येदमग्र आसीदिति स्वपक्षसिद्धिम्।

ननु निरवयवं सत्, 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' इत्यादिश्रुतिभ्यः। निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते? नैष दोषः, रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तेः। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' एवं सदेव सत्यमिति श्रुतेः। एकमेवाद्वितीयं परमार्थतः इदंबुद्धिकालेऽपि।

शंकर.

(२) तन्मतं प्रतिक्षिपति — कुतस्तु खल्विति। केन प्रमाणेनासत उत्पत्तिः प्रतीयेत तदेवेदमिति प्रत्यभिज्ञाविरोधेन प्रमाणस्यानवतारादिति भावः। अतः कथमसतो द्रव्यस्य सत्ता भवेत्। अतोऽसतः सत्त्वमुत्पत्तिर्न भवति, अपि तु सत एव द्रव्यस्य प्रथमक्षणावच्छिन्नावस्थान्तरसंबन्ध एवोत्पत्तिरित्यर्थः। एवं परपक्षं प्रतिक्षिप्य स्वमतमुपसंहरति।

रंग.

सतः ईक्षणपूर्विका तेजोबन्नसृष्टिः, भूतबीजत्रयम्

**तदैक्षत। बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत। तत्तेज ऐक्षत। बहु स्यां प्रजायेयेति। तदपो-**

(१) छान्दो. ६।२।२; ब्रशांकर. १।४।१४, २।३।९; भास्कर. १।४।१४, २।१।१८; रंग. सत्त्वेव ( सदेव ); श्रीकंठ. २।३।९; वल्लभ. २।१।७, ३।२।३; विज्ञान. २।१।६, १५; बलदेव. २।३।१.

(१) छान्दो. ६।२।३; ब्रशांकर. १।१।५, ६, १।४।१४, २।१।५, २।३।१, ६, २।४।१, ३।४।८; भास्कर. १।१।५,

ऽसृजत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥

(१) तत्सदैक्षत ईक्षां दर्शनं कृतवत्। अतश्च न प्रधानं सांख्यपरिकल्पितं जगत्कारणम्। प्रधानस्याचेतनत्वाभ्युपगमात्। इदं तु सच्चेतनमीक्षितृत्वात्। तत्कथमैक्षतेत्याह — बहु प्रभूतं, स्यां भवेयं, प्रजायेय प्रकर्षेणोत्पद्येय। यथा मृद्घटाद्याकारेण यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेन। असदेव तर्हि सर्वं यद्गृह्यते रज्जुरिव सर्पाद्याकारेण। न। सत एव द्वैतभेदेनान्यथागृह्यमाणत्वान्नासत्त्वं कस्यचित्क्वचिदिति ब्रूमः। यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य, पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमसत्त्वं ब्रुवते तार्किकाः, न तथाऽस्माभिः कदाचित्क्वचिदपि सतोऽन्यदभिधानमभिधेयं वा वस्तु परिकल्प्यते। सदेव तु सर्वमभिधानमभिधीयते च यदन्यबुद्ध्या, यथा रज्जुरेव सर्पबुद्ध्या सर्प इत्यभिधीयते, यथा वा पिण्डघटादि मृदोऽन्यबुद्ध्या पिण्डघटादिशब्देनाभिधीयते लोके। रज्जुविवेकदर्शिनां तु सर्पाभिधानबुद्धी निवर्तेते, यथा च मृद्विवेकदर्शिनां घटादिशब्दबुद्धी, तद्वत्सद्विवेकदर्शिनामन्यविकारशब्दबुद्धी निवर्तेते। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति, 'अनिरुक्तेऽनिलयने' इत्यादिश्रुतिभ्यः।

एवमीक्षित्वा तत्तेजोऽसृजत तेजः सृष्टवत्। ननु 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुत्यन्तरे आकाशाद्वायुस्ततस्तृतीयं तेजः श्रुतम्, इह कथं प्राथम्येन तस्मादेव तेजः सृज्यते, तत एव चाकाशमिति विरुद्धम्। नैष दोषः। आकाशवायुसर्गानन्तरं तत्सत्तेजोऽसृजतेति कल्पनोपपत्तेः। अथवाऽविवक्षित इह सृष्टिक्रमः, सत्कार्यमिदं सर्वम्। अतः सदेकमेवाद्वितीयमित्येतद्विवक्षितम्। मृदादिदृष्टान्तात्। अथवा त्रिवृत्करणस्य विवक्षितत्वात्तेजोबन्नानामेव सृष्टिमाचष्टे। तेज इति प्रसिद्धं लोके दग्धृ पक्तृ प्रकाशकं रोहितं चेति। तत्सत्सृष्टं तेज ऐक्षत तेजोरूपसंस्थितं सदैक्षतेत्यर्थः। बहु स्यां प्रजायेयेति पूर्ववत्। तदपोऽसृजत, आपो द्रवाः स्निग्धाः स्यन्दिन्यः शुक्लाश्चेति प्रसिद्धा लोके। यस्मात्तेजसः कार्यभूता आपस्तस्माद्यत्र क्व च देशे काले वा, शोचति संतप्यते, स्वेदते प्रस्विद्यते, वा पुरुषस्तेजस एव तत्तदा, आपोऽधिजायन्ते।

* शंकर.

(२) तदैक्षतेत्यत्र सच्छब्दवाच्यं परं ब्रह्म विचित्रानन्तचिदचिन्मिश्रसमष्टिजगद्रूपेणाहमेव बहु स्यां तदर्थं तेजोबन्नादिसमष्टिरूपेण प्रजायेयेति संकल्प्य तेजः ससर्ज। अत्राचेतनस्य तेजआदेरीक्षितृत्वासंभवात्तेजआदिशब्दास्तच्छरीरकपरमात्मपरा द्रष्टव्याः। न च 'तत्तेज ऐक्षत' इत्यत्र तेजःशब्दस्य तेजःशरीरकब्रह्मपरत्वे 'तत्तेजोऽसृजत' इति वाक्येऽपि तेजःशब्दस्य ब्रह्मपरत्वं स्यात्। न चेष्टापत्तिर्ब्रह्मणः सृज्यत्वाभावादिति चेन्न। तेजःशरीरकब्रह्मणः कार्यत्वेन सृज्यत्वे दोषाभावात्। ‡ रंग.

(३) 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छान्दो. ६।८।७) इति चेतनाचेतनात्मकप्रपञ्चोद्देशेन 'स आत्मेति' आत्मत्वोपदेशोऽयं नाचेतने प्रधाने संगच्छत इति। अतस्तेजोबन्नानामपि परमात्मै-

---

६, १।८।१४, २३, २।१।५, १४, २।३।१०, १३: रंग. क्व ( क्वचन ); रामानुज. १।१।१ ( पृ. ५२, ६०, ६१, ६४, ११०, ११९, १२१ ), २ ( पृ. १३४ ), ५, ६, १३, २३, १।३।२५, १।४।१४, २४, २।१।१५ (पृ. ४४२, ४८३), २।२।३५, २।३।१, ३, ११, १२, १४, २।४।१७, ३।४।८, ४।४।१७; निंबार्क. १।४।२४, २।३।६; मध्व. १।३।१३, २।३।१०; श्रीकंठ. १।१।५ ( पृ. १९१, १९३ ), ६, १।४।२४, २।१।१५, २।३।१, ३, ६, १४, १७, २।४।१७; श्रीकर. १।१।४ ( पृ. ५२), ५ ( पृ. ५४ ), ६ ( पृ. ५५ ), १३ ( पृ. ६२ ), २३, १।३।२, १।४।१४, २३, २४, २।१।१५, २।२।४१, ४५, २।३।१, ३, ५, ९, १०, ११, १३, २।४।२, १६, ३।४।८, ४।४।१७; वल्लभ. १।१।४, १।४।१४, २।१।५, २।३।१, ३।१।२१; विज्ञान. १।१।२ ( पृ. ५२ ), ४ ( पृ. ९४ ), ५ ( पृ. १२३ ), ६ ( १४० ), १।४।९, २।१।१३, २।३।१३, १५; बलदेव. १।४।२३, २।१।५, २।३।१.

* भास्कर. शंकरवत्। श्रीकंठ. तैत्त. २।१ ( पृ. ७१२ ) इत्यत्र द्रष्टव्यम्।

‡ शेषं शंकरवत्।

वात्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः । तथा हि 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' ( छान्दो. ६।३।२ ) इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' इत्यपि मुख्य एवेक्षणव्यपदेशः ।

रामानुज. १।१।६

(४) एके कौथुमा अधीयते 'तत्तेज ऐक्षत बहु स्यां प्रजायेय, तदपोऽसृजत' इत्यादि । अत्रेक्षितृचेतनस्य शरीरविषयैव तेजआदीनां स्रष्टृत्वं पठ्यते इत्यर्थः । अतस्तद्दृष्टान्तेनाकाशस्रष्टृत्वमपि चेतनब्रह्मशरीरविषयमेव ग्राह्यमिति । न चाकाशप्रधानाभिमानिदेवतादारीरविषयाऽशंकाः सकलस्रष्टृत्वं संभवति, देवानां युद्धयुगाधिकतया बुद्धिपूर्वमहत्तत्त्वस्रष्टावकारणत्वादिति ।

विज्ञान. १।४।९

ता आप ऐक्षन्त । बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त । तस्माद्यत्र क्व च वर्षति । तदेव भूयिष्ठमन्नं भवति । अद्भ्य एव तदध्यन्नाद्यं जायते ॥

( १ ) ता आप ऐक्षन्त, पूर्ववदेवाबाकारसंस्थितं सदैक्षतेत्यर्थः । बह्व्यः प्रभूताः, स्याम भवेम, प्रजायेमह्युत्पद्येमहीति । ता अन्नमसृजन्त पृथिवीलक्षणम् । पार्थिवं ह्यन्नं, यस्मादप्कार्यमन्नं तस्माद्यत्र क्व च वर्षति देशे, तत्रैव, भूयिष्ठं प्रभूतमन्नं भवति । अतोऽद्भ्य एव तदन्नाद्यमधिजायते । ता अन्नमसृजन्तेति पृथिव्युक्ता पूर्वं, इह तु दृष्टान्तेऽन्नं च तदाद्यं चेति विशेषणात् व्रीहियवाद्या उच्यन्ते । अन्नं च गुरु स्थिरं धारणं कृष्णं च रूपतः प्रसिद्धम् । ननु तेजःप्रभृतिष्वीक्षणं न गम्यते, हिंसादिप्रतिषेधाभावात् त्रासादिकार्यानुपलम्भाच्च, तत्र कथं तत्तेज ऐक्षतेत्यादि । नैष दोषः । ईक्षितृकारणपरिणामत्वात्तेजःप्रभृतीनां, सत एवेक्षितुर्नियतक्रमविशिष्टकार्योत्पादकत्वाच्च तेजःप्रभृतीक्षत इवेक्षत इत्युच्यते भूतम् ।

शंकर.

( २ ) तस्मात्पृथिव्येकदेशस्य व्रीहियवादिलक्षणस्यान्नस्य वृष्टिप्रभवत्वदर्शनादेव हेतोरन्नाद्यमन्नप्रभृति पृथिवीत्वावच्छिन्नमप्यद्भ्य एवाभिजायत इत्यर्थः ।

* रंग.

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥

( १ ) तेषां जीवाविष्टानां खल्वेषां पक्ष्यादीनां भूतानां, एषामिति प्रत्यक्षनिर्देशात्, न तु तेजःप्रभृतीनां, तेषां त्रिवृत्करणस्य वक्ष्यमाणत्वात् असति त्रिवृत्करणे प्रत्यक्षनिर्देशानुपपत्तिः, देवताशब्दप्रयोगाच्च तेजःप्रभृतिषु, 'इमास्तिस्रो देवताः' इति । तस्मात्तेषां भूतानां पक्षिपशुस्थावरादीनां त्रीण्येव, नातिरिक्तानि, बीजानि कारणानि भवन्ति । कानि तानीत्युच्यन्ते । आण्डजमण्डाज्जातमण्डजं, अण्डजमेवाऽऽण्डजं, पक्ष्यादि । पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते । तेन पक्षी पक्षिणां बीजं, सर्पः सर्पाणां, तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः ।

नन्वण्डाज्जातमण्डजमुच्यते, अतोऽण्डमेव बीजमिति युक्तं, कथमण्डजं बीजमुच्यते । सत्यमेवं स्यात्, यदि त्वदिच्छातन्त्रा श्रुतिः स्यात्, स्वतन्त्रा तु श्रुतिर्यत आह, अण्डजाद्येव बीजं, नाण्डादि । दृश्यते चाण्डजाद्यभावे तज्जातीयसंतत्यभावः, नाण्डाद्यभावे । अतोऽण्डजादीन्येव बीजान्यण्डजादीनाम् । तथा जीवाज्जातं जीवजं, जरायुजमित्येतत्, पुरुषपश्वादि । उद्भिज्जमुद्भिनत्तीत्युद्भित्स्थावरं, ततो जातमुद्भिज्जं, धाना वोद्भित् ततो जायते इत्युद्भिज्जं स्थावरबीजं, स्थावराणां

(१) छान्दो. ६।२।४; ब्रसंकर. १।१।६, २।१।५, २।३।१२; भास्कर. २।३।१२; रामानुज. १।१।६, २।३।१४, ४।२।३, निंबार्क. २।३।११; ब्रमध्व. २।३।१२; श्रीकंठ. २।३।१४, २।४।१७; श्रीकर. १।१।६ ( पृ. ५५ ), २।३।११, १२, २।४।१६, ४।२।३; वल्लभ. २।३।१२, ३।१।२१; विज्ञान. १।१।६ ( पृ. १४० ), २।३।१२; बलदेव. २।१।५, २।३।१.

* शेषं शंकरवत् । सर्वेषु भाष्येषु अन्नशब्दः पृथिवीपरः ।

(१) छान्दो. ६।३।१; ब्रसंकर. ३।१।२१; भास्कर. ३।१।२१; रंग. ( खल्वेषां० ); रामानुज. ३।१।२० आण्डजं ( अण्डजं ); निंबार्क. ३।१।२१ रामानुजवत्; श्रीकंठ. २।३।१७, ३।१।२० रामानुजवत्; श्रीकर. ३।१।२१; विज्ञान. ३।१।२१; बलदेव. ३।१।२१.

बीजानीत्यर्थः। स्वेदजसंशोकजयोरण्डजोद्भिज्जयोरेव यथासंभवमन्तर्भावः। एवं ह्यवधारणं त्रीण्येव बीजानीत्युपपन्नं भवति।

शंकर.

( २ ) सर्वस्येश्वरत्वात् तेजोबन्नात्मकबीजत्रयजन्यत्वं दर्शयति—तेषां भूतानामिति। अण्डजादिशब्दनिर्दिष्टानामेषां भूतानां तेजोबन्नानि त्रीण्येव बीजानीत्यर्थः। तदेव परस्माद्ब्रह्मणोऽनन्यत्वं जगतोऽभ्युपगन्तव्यमिति स्थितम्।

* रंग.

परमदेवतायाः सतो जीवात्मत्वेन नामरूपव्याकरणार्थं त्रिवृत्करणार्थं च तेजोबन्नेषु प्रवेशः

[१]सेयं देवतैक्षत। हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति॥

( १ ) सेयं प्रकृता सदाख्या तेजोबन्नयोनिर्देवतोक्ता, ऐक्षत ईक्षितवती यथापूर्वं, बहु स्यामिति। तदेव बहुभवनं प्रयोजनं नाद्यापि निर्वृत्तमित्यत ईक्षां पुनः कृतवती बहुभवनमेव प्रयोजनमुररीकृत्य। कथम्। हन्तेदानीमहमिमा यथोक्तास्तेजआद्यास्तिस्रो देवताः, अनेन जीवेनेति, स्वबुद्धिस्थं पूर्वसृष्ट्यनुभूतप्राणधारणमात्मानमेव स्मरन्त्याह—अनेन जीवेनाऽऽत्मनेति, प्राणधारणकर्त्राऽऽत्मनेति वचनात्स्वात्मनोऽव्यतिरिक्तेन चैतन्यस्वरूपतयाऽविशिष्टेनेत्येतद्दर्शयति। अनुप्रविश्य तेजोबन्नभूतमात्रासंसर्गेण लब्धविशेषविज्ञाना सती, नाम च रूपं च नामरूपे, व्याकरवाणि विस्पष्टमाकरवाणि, असौनामाऽयमिदंरूप इति व्याकुर्यामित्यर्थः।

शंकर.

( २ ) यथैव हि ब्रह्मणो जगदुत्पत्तिः श्रूयते एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते, प्रकृतिविकारयोर्भेदेन व्यपदेशात्, 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति।

२।१।२७

श्रुतौ तावत् 'अनेन जीवेनाऽऽत्मना' इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिः संसार इति दर्शयति। आदिमत्त्वे तु प्रागनवधारितप्राणः सन् कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत।

२।१।३६

'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्'—सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते—'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति। तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति। तत्र संशयः। किं जीवकर्तृकमिदं नामरूपव्याकरणमाहोस्वित्परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावज्जीवकर्तृकमेवेदं नामरूपव्याकरणमिति। कुतः। अनेन जीवेनाऽऽत्मनेति विशेषणात्। यथा लोके 'चारेणाहं परसैन्यमनुप्रविश्य संकलयानि' इत्येवंजातीयके प्रयोगे चारकर्तृकमेव तत्सैन्यसंकलनं हेतुकर्तृत्वाद्राजाऽऽत्मन्यध्यारोपयति संकलयानीत्युत्तमपुरुषप्रयोगेण, एवं जीवकर्तृकमेव सन्नामरूपव्याकरणं हेतुकर्तृत्वात् देवता आत्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अपि च डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम्। तस्माज्जीवकर्तृकमेवेदं नामरूपव्या-

* शेषं शंकरवत्।

(१) छाउ. ६।३।२; ब्रशंकर. १।१।६, १।३।४१, १।४।१५, २२. २।१।१४, २१, २७, ३६, २।३।१७, २।४।२०, ३।२।६, २१; भास्कर. १।१।६, १।४।२१, २।१।१४, २७, ३६, २।४।२०, ३।२।२२; रामानुज. १।१।१ ( पृ. ५२, ६१, १०३, ११२, ११९ ), १।१।६, १२, १३, ३१, १।३।२५, ४२, १।४।१५, २२, २।१।५, १५ ( पृ. ४४२ ), २।४।१७, ३।२।१४, २६, ३।३।३७, ४।२।६; लिंबार्क. २।१।५, २।४।१९, ३।२।१४, ३।३।३७; श्रीकंठ. १।१।२०, ३१, १।३।४२, २।१।५, २।३।१७, ४२, २।४।१७, ३।३।३७, ४।२।१४; श्रीकर. १।१।४ ( पृ. ४५ ), १।१।६, ११, १३ ( पृ. ६१, ६३ ), १।१।१९, ३०, १।३।४१, १।४।१५, २।१।५, १५, २१, २।३।१५, २।४।१६, ३।२।२६, ४।२।६; वल्लभ. १।२।११, १।४।९, २।१।२१, ३६, २।३।१८, २०, २।४।१४, २०; विज्ञान. १।१।२ ( पृ. ३८ ), १।४।१७, २।१।२१, २।३।१३, १७, ३३, ४१, २।४।१४, १५, २०; बलदेव. १।३।४१. २।४।२०.

करणमित्येवं प्राप्तेऽभिधत्ते संज्ञामूर्तिक्लृप्तिस्त्विति । तुशब्देन पक्षं व्यावर्तयति । संज्ञामूर्तिक्लृप्तिरिति नामरूपव्याक्रियेत्येतत् । त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात् । येयं संज्ञाक्लृप्तिर्मूर्तिक्लृप्तिश्चाग्निरादित्यश्चन्द्रमा विद्युदिति तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा सा खलु परमेश्वरस्यैव तेजोऽबन्नानां निर्मातुः कृतिर्भवितुमर्हति । कुतः। उपदेशात् । तथाहि सेयं देवतेत्युपक्रम्य व्याकरवाणीत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते । ननु जीवेनेति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्याध्यवसितम् । नैतदेवम् । जीवेनेत्येतत् अनुप्रविश्येत्यनेन संबध्यते आनन्तर्यात्, न व्याकरवाणीत्यनेन । तेन हि संबन्धे व्याकरवाणीत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत । न च गिरिनदीसमुद्रादिषु नानाविधेषु नामरूपेष्वनीश्वरस्य जीवस्य व्याकरणसामर्थ्यमस्ति । येष्वपि चास्ति सामर्थ्यं तेष्वपि परमेश्वरायत्तमेव तत् । न च जीवो नाम परमेश्वरादत्यन्तभिन्नश्चार इव राज्ञः, आत्मनेति विशेषणात् । उपाधिमात्रनिबन्धनत्वाच्च जीवभावस्य । तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति । परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः । ' आकाशो ह वै नाम नामरूपयोर्निर्वहिता' (छाउ. ८।१४।१) इत्यादिश्रुतिभ्यः। तस्मात्परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपव्याकरणम् । त्रिवृत्करणपूर्वकमेवेदमिह नामरूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोऽबन्नोत्पत्तिवचनेनैवोक्तत्वात् । * ब्रशांकर. २।४।२०

( ३ ) तदेवोपपादयति — सेयं देवतैक्षतेति । अत्र ' संज्ञामूर्तिक्लृप्तिः ' ( ब्र. सू. २।४।२० ) इत्यधिकरणे भगवता भाष्यकृता — ' सेयं देवतेत्यादिवाक्यस्यायमर्थः—सेयं सच्छब्दिता परदेवता, इमास्तेजोऽबन्नरूपास्तिस्रो देवता अनेन जीवेन जीवसमष्टिविशिष्टेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि देवादिविचित्रसृष्टिं तन्नामधेयानि च करवाणि ' इति भाषितम् । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ' ( ब्र. सू. २।१।५ ) इति सूत्रे—' हन्ताहमिमास्तिस्रो देवताः इति तेजोबन्नानि देवताशब्देन विशेष्यन्ते ' इति भाषितत्वादत्र देवता इत्यभिमानिदेवतापरत्वं द्रष्टव्यम् । ततश्चेमास्तिस्रो देवता इत्यस्यायमर्थः—स्वस्वाभिमानिदेवताधिष्ठितानि तेजोबन्नानीति । तेजोबन्नाभिमानिदेवतानां परमात्मव्यतिरिक्तत्वे प्रमाणाभावात्परमात्मनश्च सर्वाभिमानिदेवतात्वसंभवाच्च परमात्मरूपदेवताधिष्ठिता इत्यर्थः । परमात्मव्यतिरिक्तदेवताभ्युपगमेऽपि देवताशब्दस्य तदधिष्ठितत्वमेवार्थः । जीवेनाऽऽत्मनेति जीवशरीरकेण मयेत्यर्थः । आत्मशब्दः स्वरूपपरः । यद्यपि जीवशरीरकं स्वरूपं व्याकरणकर्तुर्न भिद्यते तथाऽपि ' व्यपदेशिवदेकस्मिन्बुद्ध्या नानार्थकल्पना ' इति न्यायेन कल्पितभेदमादायानभिहिताधिकारविहिततृतीयोपपत्तेः । घटः स्वेन रूपेणेतरव्यावृत्तिं करोतीत्यादिप्रयोगदर्शनात्करोति इति तिङा कर्तुरभिहितत्वात् । ननु तत्र करणार्थे तृतीया करणं च न तिङाऽभिहितमिति चेत्तर्हि प्रकृतेऽपि तथाऽस्तु ।

यद्वाऽऽरम्भणाधिकरणे—' अनेन जीवेनाऽऽत्मना मदात्मकजीवेनाऽऽत्मतयाऽनुप्रविश्य , एतद्विचित्रनामरूपमाकरवाणि ' इति भाषितत्वेन जीवशब्दस्य परमात्मपर्यन्तत्वाभावस्यापि प्रदर्शितत्वात्तदनुसारेण जीवेनेत्यस्य जीव एवार्थः । आत्मशब्दस्य शरीरमित्यर्थः। शरीरभूतेनानेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीत्यर्थः । आत्मशब्दस्य शरीरवाचित्वमभिप्रेत्यैव मदात्मकजीवेनेति भाषितम् । आत्मतयाऽनुप्रविश्येति भाष्यस्यायमर्थः—आत्मतयेति हेतौ तृतीया हेतुत्वं च प्रयोजनत्वेन विवक्षितमात्मत्वार्थमनुप्रविश्येत्यर्थः । प्रविश्य नियन्तृत्वाभाव आत्मत्वासंभवाच्च चारेणानुप्रविश्य परबलं संकलयानीतिवदिति । यद्वा ' अनेन जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ' ( छाउ. ६।११।१ ) इत्यत्रेवानेन जीवेनाऽऽत्मनाऽनुप्रविश्येत्यत्रापि जीवात्मनेत्येवार्थः । अस्मिन्पक्षेऽनेनेतिशब्दस्य प्रमाणप्रतिपन्नपुरोवर्तिवाचिनो मच्छरीरभूतेनेत्यर्थः । अनयोः पक्षयोः ' चारेणानु-

* भास्कर. ब्रशांकरवत् ।

प्रविश्य परमैन्यं संकल्पयति', 'एकैकेन स्वस्था दैवेन युज्यते' इत्यत्र त्रिविधिरपदैकसनत्वं परमात्मना अन्वियत्यस्य जीवात्मनः करणतया तृतीयासंबन्धपूर्विका नानुपपत्तिः। इयांस्तु विशेषः—नामरूपव्याकरणस्य 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति' इति वक्ष्यमाणेन त्रिवृत्करणेन समानकर्तृकत्ववचनात्तनामरूपव्याकरणांशे साक्षात्कर्तृत्वमप्यस्ति। प्रवेशे तु सर्वव्यापकस्य परमात्मनः साक्षात्कर्तृत्वासंभवात्प्रयोजककर्तृत्वेनैव। एवं चानुप्रवेशनामरूपव्याकरणयोः समानकर्तृकत्वसंभवात् क्त्वाप्रत्ययस्यापि नानुपपत्तिरिति द्रष्टव्यम्। एतेनान्तःकरणविशिष्टस्याहमर्थत्वं वदन्तः परे प्रत्युक्ताः। बहु स्यां हन्ताहमिमा इति संकल्पसमये तस्याभावादित्यास्तां तावत्।

रंग.

(४) अत्रापि 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च प्रतिपादितम्। 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यनेनैकार्थ्यात्। जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते। अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेति निश्चीयते।

* रामानुज. १।१।१ (पृ. ११२)

(५) 'अंशो नानाव्यपदेशात्०' — सिद्धान्तस्तु जीवात्मा परमेश्वरस्यांशो मूर्त्येकदेश एव। 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' 'य आत्मनि तिष्ठन्' 'पृथगात्मानं प्रेरितारं च मत्वा' 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥' इत्यादिषु नानाव्यपदेशात्।

२।३।४२

त्रिवृत्कुर्वत एव परमेश्वरस्य वाय्वादिरूपस्य तिस्रो देवतास्तेजोऽबन्नात्मिकाः ब्रह्मविष्णुरुद्ररूपजीवात्मनानुप्रविश्य नामरूपक्लृप्तिरवगम्यते। अतस्त्रिवृत्कुर्वत एव चतुर्मुखाद्यात्मनः सकलनामरूपक्लृप्तिरिति युक्तम्। त्रिवृत्करणं तु केवलं चतुर्मुखस्य न संभवति। त्रिवृत्कृतैर्हि तेजोऽबन्नैरण्डमुत्पद्यते। तत्र तस्माच्चतुर्मुखसृष्टिः। 'अण्डं हिरण्मयं मध्ये समुद्रे तस्य वीर्यात्प्रथमं संबभूव, तत्र ब्रह्मा विष्णुर्जातो जातवेदाः' इति श्रुतेः।

२।४।१७

'सेयं देवतैक्षत' 'द्यावाभूमी जनयन् देव एकः' इति स महादेव एव सकलभूतकारणं परब्रह्म श्रूयते।

श्रीकंठ. ४।२।१४

(६) गुहा हृदयाकाशस्तत्र सकृदेकस्मिन् प्रविष्टौ जीवपरमात्मानावेव अनेन जीवेनात्मनानुप्रविश्येत्युभयोः प्रवेशश्रवणात्। १।२।११

जीवत्वं कल्पितमिति चेन्न। अनेन जीवेनात्मनेति श्रुतिविरोधात्। न चानादिरयं जीवब्रह्मविभागो बुद्धिकृतः, प्रमाणाभावात्। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति श्रुतिविरोधश्च। न च जीवातिरिक्तं ब्रह्म नास्ति। सर्वश्रुतिसूत्रनाशप्रसंगात्। 'यः सर्वज्ञः सर्वशक्तिः' 'अयमात्मा अपहतपाप्मा' 'अधिकं तु भेदनिर्देशात्' इत्यादिबाधः। वल्लभ. २।३।१८

(७) 'सेयं देवतैक्षत...व्याकरवाणीति' तत्रेयमाशङ्का, किं चारेण परसैन्यं प्रविश्याकलयामीतिवज्जीवस्यैव प्रवेशः ईश्वरस्तु स्वांशभूतजीवस्य प्रवेशयितैव किं वा अंशेन पादेन वा ग्रामं प्रविश्य विचरामीतिवदीश्वरस्यापि प्रवेश इति। तत्रायं सिद्धान्तः। प्रकृतस्य ब्रह्मणो ज्योतिरादिषु विराड्देहबीजेषु भुवसंघेषु अधिष्ठानप्रवेशोऽस्ति। कुतः, तदामननात् 'यदिदं किंच, तत्सृष्ट्वा तदेवानुप्राविशत्' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते' इत्यादिश्रुतिषु। जीववदीश्वरस्यापि देहबीजेषु देहेषु च जीवात्पृथक् प्रवेशामननादित्यर्थः। विभोरीश्वरस्य प्रवेशश्च ज्ञानेच्छाकृत्यादिरूपमायावृत्त्यौपाधिक इत्युक्तं प्राक्। (अतो हिरण्यगर्भादीनामप्यन्तर्यामिप्रेरणयैव विराडादिस्वपरदेहनिर्मातृत्वं न स्वातन्त्र्येणेति सिद्धम्।)

२।४।१४

'प्राणवता शब्दात्'—अनेन जीवेनात्मनेत्यादिर्हि शब्दः 'जीव बलप्राणधारणयोः' इति व्युत्पत्त्या प्राणवता करणेन ब्रह्मणः प्रवेशं बोधयतीत्यर्थः।

२।४।१५

* अन्यद्रंगभाष्ये समाविष्टम्।

' संज्ञामूर्ति० ' — यदिदं संज्ञामूर्तिकल्पनरूपं नामरूपव्याकरणं, किमिदं त्रिवृत्करणापूर्वं पाठक्रमात्, अथ वा श्रुत्यनुरोधेनेन पश्चात्। तत्रापि किं व्यापाराव्यवधानेन, उताव्यवधानेनेति। तत्रायं निर्णयः। संज्ञामूर्ती नामरूपे, नाम गिरिइत्यादि, रूपं चतुर्दशभुवनचतुर्मुखादि। तयोः क्लृप्तिर्निर्माणं त्रिवृत्कुर्वत एव परमेश्वरान्मन्तव्यम्। न त्रिवृत्करिष्यतः, नापि त्रिवृत्कृतवतः। तथा च त्रिवृत्करणाव्यवहितोत्तरकाल एव नामरूपे स्वष्टीनवत इत्यर्थः। कुतः। उपदेशात्। नामरूपव्याकरणस्योपादाकाङ्क्षायां त्रिवृत्करणमात्रस्योपदेशादित्यर्थः।

विज्ञान. २।४।२०

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति। सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत्॥**

(१) सैवं तिस्रो देवता अनुप्रविश्य स्वात्मावस्थे बीजभूते अव्याकृते नामरूपे व्याकरवाणीतीक्षित्वा तासां च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणि। एकैकस्यास्त्रिवृत्करणे एकैकस्याः प्राधान्यं, द्वयोर्द्वयोर्गुणभावः। अन्यथा हि रज्ज्वा इवैकमेव त्रिवृत्करणं स्यात्। न तु तिसृणां पृथक्पृथक् त्रिवृत्करणमिति। एवं हि तेजोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्, तेज इदं, इमा आपः, अन्नमिदमिति च। सति च पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात्। एवमीक्षित्वा सेयं देवतेमास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्यबिम्बवदन्तः प्रविश्य वैराजं पिण्डं प्रथमं देवादीनां च पिण्डाननुप्रविश्य यथासंकल्पमेव नामरूपे व्याकरोत्, असौनामाऽयमिदंरूप इति।

शंकर.

(१) छाउ. ६।३।३; अशंकर. १।१।२४; भास्कर. २।१।१४ मेकैकां ( मेकैकं ); रामानुज. १।४।१०, २।१।१५ ( पृ. ४४२ ), २।४।१८, ३।१।२, ४।२।६; निंबार्क २।४।१६, ४।२।६; श्रीकंठ. २।४।१७; श्रीकर. १।१।२५, २।४।१६, १७, ४।२।६; वल्लभ. १।४।९, २।४।२०; विज्ञान. २।४।२०; बलदेव. २।४।२०.

(२) अत्र त्रिवृत्करणाधीनत्वान्नामरूपव्याकरणस्यार्थक्रमानुरोधेन पाठक्रमो बाध्यते। तत्र तेजोबन्नदेवतास्वेकैकां त्रिवृतं त्रिवृतं कृत्वा नामरूपव्याकरणमकरोदित्यर्थः। अत्र व्यापकस्य परमात्मनः स्वरूपेण स्वापृथक्सिद्धसर्ववस्तुप्रवेशस्य सर्वदा सत्त्वेऽपि स्वशरीरभूतजीवेनानुप्रवेशस्य पूर्वमभावाज्जीवेनानुप्रविश्य नामरूपे व्याकरोदित्यस्य नानुपपत्तिः। चारस्य राजशरीरत्वाभावान्न ' चारेणानुप्रविश्य ' इति वाक्यसाम्यं च।

रंग.

(३) यदेव हि नामरूपे व्याकरवाणीत्युक्तं तदेव विवृणोति ' तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति ' न तु व्याकरणैकीकरणयोः कार्यकारणभावादिभेदो विवक्षितः, गौरवात् त्रिवृत्करणस्य नामरूपव्याकरणहेतुत्वे तस्यैव प्राग्वचनौचित्याच्च। नामरूपव्याकरणकार्यत्वासंभवाच्चेत्यर्थः। अत एव ' यदविज्ञातमिवाभूदित्येतासामेव देवतानां समासः ' इत्येव वाक्यशेषे श्रूयते न तु समासकार्यमिति। अत्र च त्रिवृत्करणं पञ्चीकरणस्याप्युपलक्षणं, श्रुतेस्तौल्याच्छरीरादौ पञ्चभूतगुणदर्शनाच्चेति बोध्यम्। यत्तु पञ्चीकृतभूतेभ्यो ब्रह्माण्डादिसृष्टिरिति प्रलपनमाधुनिकानां तदप्रामाणिकम्। महाभूतेभ्योऽपञ्चीकृतेभ्य एव तदुत्पत्तिसंभवात् श्रुतिस्मृत्यभावाच्चेति ध्येयम्। याऽपि तैः पञ्चीकरणे व्यवस्था कल्पिता, अर्धं एकस्य भूतस्यापरार्धं च सप्तभागैः(?)भूतचतुष्टयस्येत्येवं मिलितं पञ्चीकृतं भवतीति, साप्यप्रामाणिकी व्यभिचरिता च। सुवर्णादौ तैजसे तैलादौ च पार्थिवे पृथिवीजलादीनामितरभूतापेक्षयाऽऽधिक्यदर्शनादिति दिक्।

विज्ञान. २।४।२०

त्रिवृत्करणं, तद्द्वारा नामधेयरूपविकारासत्यस्य विवेकः, एकविज्ञानात्सर्वविज्ञानप्रतिज्ञापूर्तिः

**तासां त्रिवृतं त्रिवृतमेकैकामकरोत्। यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति॥**

(१) तासां च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतमेकैकामकरोत् कृतवती देवता। तिष्ठतु तावत्

(१) छाउ. ६।३।४; अशंकर. २।४।२०; श्रीकर. २।४।१६, १७; बलदेव. २।४।२०.

देवतादिविज्ञानं नामरूपाभ्यां व्याकृतानां तेजोऽन्न-मयत्वेन त्रिवृत्त्वं, यथा तु खल्विमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति, तन्मे मम निगदतो विजानीहि विस्पष्टमवधारयेत्युक्तवान् । शंकर.

( २ ) देवताधिष्ठितानां तेजोऽबन्नानां त्रिवृत्करण-प्रकारं मे निगदतः शृण्वित्यर्थः । व्यष्टिसृष्टिप्रकरणे — ' अनुप्रविश्य नामरूपे व्याकरवाणि ' इत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वमवगम्यते । ' तत्सृष्ट्वा तदेवानुप्राविशत् ' ( तैउ. २।६।१ ) इत्यत्रानुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते । तत्सृष्टिपूर्वकत्वमेव विवक्षितं न पौर्वापर्यमपि । अत एव हि ' तस्य यथा विदधद्रूपमेति ' इति सृष्टयनुप्रवेशयोः समानकालीनत्वमेव प्रतीयते । अथवा ' तत्सृष्ट्वा तदेवानुप्राविशत् ' इति सृष्ट्यनन्तरत्वेन श्रूयमाणानुप्रवेशः स्थित्यर्थोऽन्य एव—इत्युक्तम् । व्यापकस्यापि परमात्मनोऽन्तर्यामि-विग्रहद्वाराऽनुप्रवेश उपपद्यत इति केचित् । जीवद्वारैवानुप्रवेशो न तु स्वत इति केचित् । प्रविश्य तु तत्तद्वस्तुमात्रपूर्णपरमात्मकार्यकारित्वात्तत्र प्रविष्ट इवेत्युक्तिरिति केचित् । रंग.

यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपाम् । यत्कृष्णं तदन्नस्य । अपागादग्नेरग्नित्वम् । वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् * ॥१॥

( १ ) यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते — उदाहरणं नामैकदेशप्रसिद्ध्याऽशेषप्रसिद्ध्यर्थमुदाह्रियत इति । तदेतदाह— यदग्नेस्त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके, तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि । तथा यच्छुक्लं रूपमग्नेरेव तदपामत्रिवृत्कृतानां, यत्कृष्णं तस्यैवाग्नेः रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया इति विद्धि । तत्रैवं सति रूपत्रयव्यतिरेकेणाग्निरिति यन्मन्यसे त्वं, तस्याग्नेरग्नित्वमिदानीमपागादपगतम् । प्राग्रूपत्रयविवेकविज्ञानाद्याऽग्निबुद्धिरासीत्, साऽग्निबुद्धिरपगताऽग्निशब्दश्चेत्यर्थः । यथा दृश्यमानरक्तोपधानसंयुक्तः स्फटिको गृह्यमाणः पद्मरागोऽयमिति शब्दबुद्ध्योः प्रयोजको भवति प्रागुपधानस्फटिकयोर्विवेकविज्ञानात्, तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्तेते तद्विवेकविज्ञातुः, तद्वत् । ननु किमत्र बुद्धिशब्दकल्पनया क्रियते, प्राग्रूपत्रयविवेककरणादग्निरेवाऽऽसीत्, तदग्नेरग्नित्वं रोहितादिरूपविवेककरणादपागादिति युक्तं, यथा तन्त्वपकर्षणे पटाभावः । नैवम् । बुद्धिशब्दमात्रमेव ह्यग्निः, यत आह वाचाऽऽरम्भणमग्निर्नाम विकारो नामधेयं नाममात्रमित्यर्थः । अतोऽग्निबुद्धिरपि मृषैव । किं तर्हि तत्र सत्यं, त्रीणि रूपाणीत्येव सत्यं, नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः ।

शंकर.

( २ ) तत्राग्निरितीदं रूपं व्याक्रियते, इति च रूपव्याकरणे विषयप्रतिलम्भादग्निरितीदं नाम व्याक्रियते ।

ब्रशंकर. २।४।२०

( ३ ) अपागादग्नेरग्नित्वमिति च कारणात्मना निरीक्ष्यमाणं कार्यं चातिरिक्तं नोपलभ्यते, कारणात्मन्येव तिरोहितं भवतीत्यभिप्रायेण उक्तम् ।

भास्कर. २।१।१४

( ४ ) अग्नेस्तेजोबन्नसमुदायरूपत्वे यावत्तेजोबन्ना-वस्थानमग्निरूपेणोपलम्भः प्राप्नोतीत्यत्राह — अपागादग्नेरग्नित्वमिति । तेष्वेव तेजोबन्नेष्वग्न्याद्यवस्थानायकसामग्रीसंनिधानेऽग्नित्वावस्थाऽपेता भवत्यवस्थान्तरं प्रादुर्भवति । अतस्तेजोबन्नैरेवाग्नित्वाद्यवस्थालक्षणो विकारोऽग्न्यादिनामधेयं च वाक्पूर्वकव्यवहारसिद्धये तेजोबन्नैरेव स्पृश्यते । अतस्तेजोबन्नस्वरूपाण्येवाग्निरिति सत्यमित्यर्थः । * रंग.

यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपम् । यच्छुक्लं तदपाम् । यत्कृष्णं तदन्नस्य । अपागादादित्यादादित्यत्वम् । वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम् ॥

---

* विज्ञान. छाउ. ६।१।४ ( पृ.८८६ ) इत्यत्र द्रष्टव्यम् ।

(१) छाउ. ६।४।१; ब्रशंकर. १।४।९, २।१।१४, २।४।२०; भास्कर. १।४।९, २।१।१४, २।३।१२; रामानुज. २।३।१३, २।४।१८; निंबार्क. २।३।१२; श्रीकंठ. २।३।१३; श्रीकर. १।४।९, २।४।१६; वल्लभ. १।४।९; विज्ञान. १।१।१ ( पृ. २४ ), २।३।१२.

* शेषं शांकरवत्

(१) छाउ. ६।४।२–४.

यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपम्। यच्छुक्लं तदपाम्। यत्कृष्णं तदन्नस्य। अपागाच्चन्द्राच्चन्द्रत्वम्। वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम्॥

यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपम्। यच्छुक्लं तदपाम्। यत्कृष्णं तदन्नस्य। अपागाद्विद्युतो विद्युत्त्वम्। वाचाऽऽरम्भणं विकारो नामधेयं, त्रीणि रूपाणीत्येव सत्यम्॥

तथा यच्चन्द्रमसो यद्विद्युत इत्यादि समानम्। ननु 'यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि' इत्युक्त्वा तेजस एव चतुर्भिरप्युदाहरणैरग्न्यादिभिस्त्रिवृत्करणं दर्शितं, नाबन्नयोरुदाहरणं दर्शितं त्रिवृत्करणे। नैष दोषः। अबन्नविषयाण्यप्युदाहरणान्येवमेव च द्रष्टव्यानीति मन्यते श्रुतिः। तेजस उदाहरणमुपलक्षणार्थम्। रूपवत्त्वात्स्पष्टार्थत्वोपपत्तेश्च। गन्धरसयोरनुदाहरणं त्रयाणामसंभवात्। न हि गन्धरसौ तेजसि स्तः। स्पर्शशब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात्। यदि सर्वं जगत्त्रिवृत्कृतमित्यग्न्यादिवत्त्रीणि रूपाणीत्येव सत्यं, अग्नेरग्नित्ववदपागाज्जगतो जगत्त्वम्। तथाऽन्नस्याप्यप्शुङ्गत्वादाप इत्येव सत्यं, वाचारम्भणमात्रमन्नम्। तथा अपामपि तेजःशुङ्गत्वाद्वाचारम्भणत्वं, तेज इत्येव सत्यम्। तेजसोऽपि सच्छुङ्गत्वाद्वाचारम्भणत्वं, सदित्येव सत्यं, इत्येषोऽर्थो विवक्षितः। ननु वाय्वन्तरिक्षे त्वत्रिवृत्कृते तेजःप्रभृतिष्वनन्तर्भूतत्वादवशिष्येते। एवं गन्धरसशब्दस्पर्शाश्चावशिष्टाः, इति कथं सता विज्ञानेन सर्वमन्यद्विज्ञातं भवेत्, तद्विज्ञाने वा प्रकारान्तरं वाच्यम्। नैष दोषः। रूपवद्द्रव्ये सर्वस्य दर्शनात्। कथम्। तेजसि तावद्रूपवति शब्दस्पर्शयोरप्युपलम्भाद्वाय्वन्तरिक्षयोस्तत्र स्पर्शशब्दगुणवतोः सद्भावोऽनुमीयते। तथाऽबन्नयोः रूपवतो रसगन्धान्तर्भाव इति। रूपवतां त्रयाणां तेजोबन्नानां त्रिवृत्करणप्रदर्शनेन सर्वं तदन्तर्भूतं सद्विकारत्वात्त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुतिः। न हि मूर्तं रूपवद्द्रव्यं प्रत्याख्याय वाय्वाकाशयोस्तद्गुणयोर्गन्धरसयोर्वा ग्रहणमस्ति। अथवा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिः। यथा तु त्रिवृत्कृते त्रीणि रूपाणीत्येव सत्यं, तथा पञ्चीकरणेऽपि समानो न्यायः, इत्यतः सर्वस्य सद्विकारत्वात् सता विज्ञानेन सर्वमिदं विज्ञातं स्यात्, सदेकमेवाद्वितीयं सत्यमिति सिद्धमेव भवति। तदेकस्मिन्सति विज्ञाते सर्वमिदं विज्ञातं भवतीति सूक्तम्।

शंकर.

एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रियाः। न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यति। इति ह्येभ्यो विदांचक्रुः॥

(१) एतद्विद्वांसो विदितवन्तः पूर्वेऽतिक्रान्ता महाशाला महाश्रोत्रिया आहुर्ह स्म वै किल। किमुक्तवन्त इत्याह—न नोऽस्माकं कुले, अद्येदानीं, यथोक्तविज्ञानवतां कश्चन कश्चिदपि, अश्रुतममतमविज्ञातमुदाहरिष्यति नोदाहरिष्यति, सर्वं विज्ञातमेवास्मत्कुलीनानां सद्विज्ञानवत्त्वादित्यभिप्रायः। ते पुनः कथं सर्वं विज्ञातवन्त इत्याह—एभ्यस्त्रिभ्यो रोहितादिरूपेभ्यस्त्रिवृत्कृतेभ्यो विज्ञातेभ्यः सर्वमप्यन्यच्छिष्टमेवमेवेति विदांचक्रुः विज्ञातवन्तो यस्मात् तस्मात्सर्वज्ञा एव सद्विज्ञानात्ते आसुरित्यर्थः। अथवैभ्यो विदांचक्रुरित्यग्न्यादिभ्यो दृष्टान्तेभ्यो विज्ञातेभ्यः सर्वमन्यद्विदांचक्रुरित्येतत्।

शंकर.

(२) उपादानादुपादेयं न भिद्यत इत्येतत्स्वरूपज्ञा मद्गुरुस्थाः सर्ववेदपारगा वक्ष्यमाणप्रकारेणोक्तवन्त इत्यर्थः। 'लट् स्मे' इति स्मयोगाद्भूतार्थेऽप्याहुरिति लडुपपत्तिः। तेजोबन्नान्येव ज्ञातवता नोऽस्मत्कुलेऽस्मत्तेजोबन्नेभ्योऽतिरिक्तमश्रुतममतमविज्ञातं कोऽपि नोदाहर्तुं शक्नोतीति तेजोबन्नेभ्य एव सर्वं ज्ञातवन्त इत्यर्थः।

रंग.

[२]यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुः। यदु शुक्लमिवाभूदित्यपाꣳ रूपमिति तद्विदांचक्रुः। यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः॥

---

(१) छान्द. ६।४।५.

(२) छान्द. ६।४।६.

यदु विज्ञातमिवाभूदित्येतासामेव देवतानां समास इति तद्विदांचक्रुः। यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥

(१) कथम्? यदन्यद्रूपेण संदिह्यमाने कपोतादिरूपे लोहितमिव यद् गृह्यमाणमभूत्पूर्वेषां ब्रह्मविदां, तत्तेजसो रूपमिति विदांचक्रुः। तथा यच्छुक्लमिवाभूद् गृह्यमाणं तदपां रूपं, यत्कृष्णमिव गृह्यमाणं तदन्नस्येति विदांचक्रुः; एवमेवात्यन्तदुर्लक्ष्यं यदु अप्यविज्ञातमिव विशेषतोऽगृह्यमाणमभूत्तदप्येतासामेव तिसृणां देवतानां समासः समुदाय इति विदांचक्रुः। एवं तावद्बाह्यं वस्त्वग्न्यादिवद्विज्ञातं, तथेदानीं यथा नु खलु हे सोम्येमा यथोक्तास्तिस्रो देवताः पुरुषं शिरःपाण्यादिलक्षणं कार्यकरणसंघातं प्राप्य पुरुषेणोपयुज्यमानास्त्रिवृत्त्रिवृदेकैका भवति, तन्मे आध्यात्मिकं विजानीहि निगदत इत्युक्त्वाऽऽह।

* शंकर.

(२) सर्वस्यापि तत्रान्तर्भावमेव प्रदर्शयति— यदु रोहितमिवाभूदिति। रोहितशुक्लकृष्णत्वेन भासमानं तेजोबन्नात्मकमेवेति ज्ञातवन्तः। यदुक्तेन कपोतादावयुक्तमनभूतरूपं पीतनीलादिरूपेणावभासमानमपि लोहितशुक्लकृष्णतेजोबन्नसमुदायात्मकमेव, न तु ततोऽतिरिक्तमिति ज्ञातवन्त इत्यर्थः। एवं सर्वस्यापि प्रपञ्चस्य त्रिवृत्कृततेजोबन्नरूपत्वेन तदभेदं प्रसाध्य, अध्यात्मं मांसलोहितमज्जास्थिलक्षणस्य देहस्येन्द्रियमनःप्राणानां च त्रिवृत्कृततेजोबन्नाभेदं दर्शयितुं प्रस्तौति — यथा तु खलु इत्यादि। तेजोबन्नानि पुरुषेण भुज्यमानानि पुरुषं प्राप्य यथा त्रिधा त्रिधा परिणमन्ते, तं परिणामप्रकारं शृणिवत्यर्थः।

रंग.

* विज्ञान. छाउ. ६।३।३ (पृ. ८९६) इत्यत्र द्रष्टव्यम्।

(१) छाउ. ६।४।७; रंग. नु (तु); रामानुज. २।४।१८ (नु०); श्रीकंठ. २।४।१७ (नु०); श्रीकर. २।४।१६; विज्ञान. २।४।२०, २१ यद्वविज्ञा (यद्विज्ञा) नु (तु).

षष्ठाध्याये पञ्चमः खण्डः

६।५।१ मन्त्रः

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति। यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ॥

(१) अन्नमशितं भुक्तं, त्रेधा विधीयते जाठरेणाग्निना पच्यमानं त्रिधा विभज्यते। कथं, तस्यान्नस्य त्रिधा विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलतमं वस्तु विभक्तस्य स्थूलांशः, तत्पुरीषं भवति। यो मध्यमोऽंशो धातुरन्नस्य, तद् रसादिक्रमेण परिणम्य मांसं भवति। योऽणिष्ठोऽणुतमो धातुः, स ऊर्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीष्वनुप्रविश्य वागादिकरणसंघातस्य स्थितिमुत्पादयन्, मनो भवति मनोरूपेण विपरिणमन् मनस उपचयं करोति। तस्मादन्नोपचितत्वान्मनसो भौतिकत्वमेव, न वैशेषिकतन्त्रोक्तलक्षणं नित्यं निरवयवं चेति गृह्यते। यदपि मनोऽस्य दैवं चक्षुरिति वक्ष्यति, तदपि न नित्यत्वापेक्षया, किं तर्हि, सूक्ष्मव्यवहितविप्रकृष्टादिसर्वेन्द्रियविषयव्यापकत्वापेक्षया। यच्चान्येन्द्रियविषयापेक्षया नित्यत्वं तदप्यापेक्षिकमेवेति वक्ष्यामः, 'सदेकमेवाद्वितीयम्' इति श्रुतेः।

शंकर.

(२) अशितांशस्तु मनस आप्यायकतामापद्यते। मनस आहंकारिकत्वेनान्नविकारत्वाभावादिति भावः।

* रंग.

(३) 'मांसादि भौमं यथाशब्दमितरयोश्च'—यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवतादिविषयोऽयं 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' (छाउ. ६।३।४) इति त्रिवृत्करणोपदेशः, इति तन्नोपपद्यते। 'अन्नमशितं त्रेधा विधीयते' इत्यत्र मांसमनसोः पुरीषादणुत्वेनाग्नीयस्त्वेन च व्यपदिष्टयोः कारणानुविधायित्वेनाप्यतैजसत्वप्रसङ्गात्। 'आपः पीताः' (छाउ. ६।५।२) इत्यत्रापि मूत्र-

* शेषं शंकरेण गतार्थम्।

(१) छाउ. ६।५।१; ब्रसंकर. २।४।२१; भास्कर. २।४।२१; रामानुज. २।४।१८; श्रीकंठ. २।४।१८; श्रीकर. २।४।१६, १७; वल्लभ. २।४।२१; विज्ञान. १।२।११, २।४।२१; बलदेव. २।४।२०.

म[illegible]ः स्थविष्ठाणीयसोः पार्थिवत्वैकत्वप्रसङ्गाच्च । न चैवमिष्यते । मांसमेव हि भौमत्वमिष्यते पुरीषवत् । तन्मनसी अपि भौमे पार्थिवे इष्येते, अन्नमशितं त्रेधा इति प्रकरणात् । [illegible] । इतरयोरपां तेजसश्च [illegible] यथाशब्दं विकारा दृश्यन्ते । 'आपः पीतास्त्रेधा विधीयन्ते' (छा.उ. ६।५।२) इत्यत्रैव त्रिधा परिणामः शब्देन दर्श्यते, तथा 'तेजोऽशितं त्रेधा विधीयते' (छा.उ.६।५।३) इत्यपि तेजस एव त्रिधा परिणामः शब्देन दर्श्यते । अतः पुरीषमांसमनांसि पृथिवीविकाराः, मूत्रलोहितप्राणा अब्विकाराः । अस्थिमज्जावाचस्तेजोविकाराः इति प्रतिपत्तव्यम् । 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' (छा.उ. ६।५।४) इति वाक्यशेषाविरोधाच्च । 'आसां तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' (छा.उ. ६।३।४) इत्युक्तत्रिवृत्करणप्रकारः 'अन्नमशितम्' इत्यादिना न प्रदर्श्यते । तथा सति मनःप्राणवाचां त्रयाणाम-प्यणीयस्त्वेन तैजसत्वात् 'अन्नमयं हि सोम्य मनः' (छा.उ. ६।५।४) इत्यादिर्विरुध्यते । प्रागेव त्रिवृत्कृतानां पृथिव्यादीनां पुरुषं प्राप्तानां 'अन्नमशितम्' इत्यादिनैकैकस्य त्रेधा परिणाम उच्यते । अण्डसृष्टेः प्रागेव च तेजोबन्नानां त्रिवृत्करणेन भवितव्यं, अत्रिवृत्कृतानां तेषां कार्यारम्भसामर्थ्यात् । अन्योन्यसंयुक्तानामेव हि कार्यारम्भसामर्थ्यम् । तदेव च त्रिवृत्करणम् । तथा च स्मर्यते—'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ॥' इति । अत एव च 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' (छा.उ. ६।३।३,४) इति पाठक्रमोऽर्थक्रमेण बाध्यते । अण्डान्तर्वर्तिष्वग्न्यादित्यादिषु त्रिवृत्करणप्रदर्शनं श्वेतकेतोः शुश्रूषोरण्डान्तर्वर्तित्वेन तस्य बहिष्ठवस्तुषु त्रिवृत्करणप्रदर्शनायोगात्त्रिवृत्कृतानां कार्येष्वग्न्यादित्यादिषु क्रियते ।

*रामानुज. २।४।१८

(४) 'वैशेष्यात्तु तद्वादस्तद्वादः' — अन्नादिभिर्विशेष्यते । मनःप्रभृति सम्यक् कार्यक्षमं भवति । तथा दर्शनादनुवादनाच्च । अतो वैशेष्यादेव भौतिकत्वव्यपदेशः । ननु कथमेतदवगम्यते । वैशेष्यात् भौतिकत्व इत्युच्यते । अथ मनोऽन्नमयमित्यादिश्रुत्या [illegible] एव सर्वत्वादन्यत्र निर्दिष्टः । स कथं तद्वैशिष्ट्यकार्यं स्यात् । प्राणादयश्च तत्र तदर्थमनुप्रविष्टाः । सृष्टौ प्रथमतो भिन्नतया निर्देशात् । अतो न भौतिकानि मनःप्रभृतीनि, किन्तु तत्त्वान्तराणीति सिद्धम् । वल्लभ. २।४।२२

(५) अत्र च त्रिविधो भोगोऽवगम्यते । एको विपाकान्तर्गतो मनोनिष्ठः, स चान्नपानस्रक्चन्दनादिसूक्ष्मांशैः सुखाद्यात्मकस्य मनसः पोषणं शब्दाद्याकारवृत्तिश्च, 'अन्नमशितं त्रेधा विधीयते तस्य योऽणिष्ठस्तन्मनो भवति' इत्यादिश्रुतेः, 'भुज पालनाभ्यवहारयोः' इत्यनुशासनाच्च । एतेन देहप्राणयोरपि भोग उदाहृतश्रुतिशेषादेव बोध्यः । उक्तश्रुतौ च मनःशब्दो मनःप्रधानलिङ्गशरीरवचनस्तेन चक्षुरादीनामपि संग्रहः ।

१।२।११

'मांसादि भौमं यथाशब्दमितरयोश्च' — अधिदैवं त्रिवृत्करणं प्रतिपाद्याध्यात्ममपि तेजोबन्नानां त्रिवृत्करणं प्रतिपादयति 'यथा नु खलु ...... योऽणिष्ठस्तन्मनः' इत्यादिना । तत्र पुरीषस्य मूत्रस्य च शरीरारम्भकत्वं न संभवतीत्याशङ्क्यामाह — पुरीषमूत्रे प्रसङ्गादेवोक्ते, न तु पुरुषारम्भकत्वेन । पुरुषे च पुरीषं विहाय मांसमनसी अन्नाख्यभूमिविकारौ मन्तव्यौ । एवं यथाशब्दं शरीरघटकपदार्थविवेचकश्रुत्यन्तरानुसारेण इतरयोरप्तेजसोरपि विकारा मन्तव्याः । तत्रापि जलविकारमध्ये मूत्रं परित्यज्य लोहितप्राणौ जलस्य, अस्थिमज्जावचांसि तेजसो विकार इत्यर्थः । तथा चाध्यात्मं पुरुषाकारेणान्नजलतेजसां त्रिवृत्करणं सिद्धमिति भावः । अत्र च श्रुतिवाक्ये 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति मनआदीनां भूतकार्यत्ववचनमन्नाद्यनुगतैः करणप्राणसूक्ष्मांशैरभिव्यक्त्यैवेति व्याख्यातं 'गौण्यसंभवात्' इति सूत्रेणेति स्मर्तव्यम् । विज्ञान. २।४।२१

---

* श्रीकंठ. रामानुजवत् ।

आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितम् । योऽणिष्ठः स प्राणः ।

तथाऽऽपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितं भवति । योऽणिष्ठः स प्राणो भवति । वक्ष्यति हि 'आपोमयः प्राणो न पिबतो विच्छेत्स्यते' इति ।

शंकर.

तेजोऽशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तदस्थि भवति । यो मध्यमः स मज्जा । योऽणिष्ठः सा वाक् ।

(१) तथा तेजोऽशितं तैलघृतादि भक्षितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तदस्थि भवति । यो मध्यमः स मज्जाऽस्थ्यन्तर्गतः स्नेहः । योऽणिष्ठः सा वाक् । तैलघृतादिभक्षणाद्धि वाग्विशदा भाषणे समर्था भवतीति प्रसिद्धं लोके । शंकर.

( २ ) घृततैलादेः पीतस्य सूक्ष्मांशो वागाप्यायक इत्यर्थः । रंग.

अन्नमयं‡ हि सोम्य मनः । आपोमयः प्राणः । तेजोमयी वागिति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच * ॥

( १ ) यत एवं, अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् । ननु केवलान्नभक्षिण आखुप्रभृतयो वाग्मिनः प्राणवन्तश्च, तथाऽब्मात्रभक्षाः सामुद्रा मीनमकरप्रभृतयो मनस्विनो वाग्मिनश्च, तथा स्नेहपानामपि प्राणवत्त्वं मनस्वित्वं चानुमेयम् । यदि सन्ति, तत्र प्राणवत्त्वं हि तेषां तत्र इत्युक्तं ! तेन दोषः । सर्वस्य त्रिवृत्कृतत्वात्सर्वोपपत्तेः । न ह्यत्रिवृत्कृतमन्नमश्नाति कश्चित्, आपो वाऽत्रिवृत्कृताः पीयन्ते, तेजो वाऽत्रिवृत्कृतमश्नाति कश्चित्, इत्यन्नादानामाखुप्रभृतीनां वाग्मित्वं प्राणवत्त्वं चेत्याद्यविरुद्धम् । इत्येवं प्रत्यायितः श्वेतकेतुराह—भूय एव पुनरेव, मा मां, भगवान् 'अन्नमयं हि सोम्य मनः' इत्यादि विज्ञापयतु दृष्टान्तेनावगमयतु, नाद्यापि ममास्मिन्नर्थे सम्यङ्निश्चयो जातः । यस्मात्तेजोऽबन्नमयत्वेनाविशिष्टे देहे एकस्मिन्नुपयुज्यमानान्यन्नाप्तेजांसि स्वजात्यनतिक्रमेण मनःप्राणवाच उपचिन्वन्ति स्वजात्यनतिक्रमेणेति दुर्विज्ञेयमित्यभिप्रायः, अतो भूय एवेत्याह—तमेवमुक्तवन्तं तथास्तु सोम्येति होवाच पिता, श्रूयत्र दृष्टान्तं यथैतदुपपद्यते यन्मां पृच्छसि ।

शंकर.

( २ ) यदि तावद्भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवतः, इति नैतयोः क्रमान्तरं मृग्यम् । भवति च भौतिकत्वे लिङ्गं करणानां, 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इत्येवंजातीयकम् । व्यपदेशोऽपि क्वचिद्भूतानां करणानां च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः । अथ त्वभौतिकानि करणानि तथाऽपि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते ।

ब्रशंकर. २।३।१५

[ प्रौढवादेन तेषामभौतिकत्वमुपेत्यापि ब्रवीति—अथ त्विति । आनन्दगिरिटीका ]

( ३ ) भूतानुग्रहं च दर्शयति, 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति । शरीरप्रदेशो रूपादिग्रहणशक्तियुक्तो बाह्यमिन्द्रियं, अध्यवसायात्मिका बुद्धिः, संकल्पस्मृतिचिन्तादिवृत्तिहेतुर्मन इति विवेकः ।

भास्कर. २।३।१५

( ४ ) उक्तरीत्या मनःप्राणवाचामन्नजलतेजःसूक्ष्मां-

‡ शेषं शंकरवत् ।

* वल्लभ. विज्ञान. छाउ. ६।५।१ इत्यत्र द्रष्टव्यम् ।

(१) छाउ. ६।५।२; रामानुज. २।४।१८; श्रीकर. २।४।१७; वल्लभ. २।४।२१; बलदेव. २।४।२०.

(२) छाउ. ६।५।३; रामानुज. २।४।१८; श्रीकर. २।४।१७; वल्लभ. २।४।२१; बलदेव. २।४।२०.

(३) छाउ. ६।५।४; ब्रशंकर. २।३।१५, २।४।४, ३।३।३६, ४।२।३; भास्कर. २।३।१५, २।४।४; रामानुज. २।४।१८, ३।३।३५, ४।२।३; लिंबार्क. २।४।४; श्रीकंठ. २।३।१५, २।४।१८, ४।२।३; श्रीकर. २।३।१३, २।४।३, १७, ३।३।३५, ४।२।३; वल्लभ. २।३।१२, २।४।२१; विज्ञान. २।३।१६, २।४।२, ४, २१; बलदेव. २।४।२०.

शाप्यायितत्वान्मनोऽन्नमयं प्राणोऽम्मयस्तेजोमयी वागित्यर्थः। * रंग.

( ५ ) मनःप्राणयोरन्नेनाद्भिश्चाप्यायनमुच्येत न तत्प्रकृतित्वम्। आहङ्कारिकत्वान्मनस आकाशविकारत्वाच्च प्राणस्य।

रामानुज. ४।२।३

( ६ ) 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति प्राणादीनां भौतिकत्वश्रवणात् भूतेष्वन्तर्भावाच्च पृथक् क्रमापेक्षा।

श्रीकण्ठ. २।३।१५

**[१]दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति। तत्सर्पिर्भवति॥**

दध्नः सोम्य मथ्यमानस्य योऽणिमाऽणुभावः स ऊर्ध्वः समुदीषति संभूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्भवति। ‡ शंकर.

**[२]एवमेव खलु सोम्यान्नस्याद्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति। तन्मनो भवति॥**

यथाऽयं दृष्टान्तः, एवमेव खलु सोम्यान्नस्यौदनादेरद्यमानस्य भुज्यमानस्यौदर्येणाग्निना वायुसहितेन खजेनेव मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति, तन्मनो भवति मनोवयवैः सह संभूय मन उपचिनोतीत्येतत्। ‡ शंकर.

**[३]अपां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति। स प्राणो भवति॥**

**[४]तेजसः सोम्याद्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति। सा वाग्भवति॥**

**[५]अन्नमयं हि सोम्य मनः। आपोमयः प्राणः। तेजोमयी वागिति। भूय एव मा भवान्विज्ञापयत्विति। तथा सोम्येति होवाच॥**

* शेषं शंकरवत्।

‡ रंग शंकरवत्।

(१) छान्द. ६।६।१.

(२) छान्द. ६।६।२.

(३) छान्द. ६।६।३; विज्ञान. २।४।२.

(४) छान्द. ६।६।४.

(५) छान्द. ६।६।५.

अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति युक्तमेव मयोक्तमित्यभिप्रायः। अतोऽत्तेजसोरस्त्वेतत्सर्वमेव। मनस्त्वन्नमयमित्यत्र नैकान्तेन मम निश्चयो जातः। अतो भूय एव मा भगवान्मनसोऽन्नमयत्वं दृष्टान्तेन विज्ञापयत्विति। तथा सोम्येति होवाच पिता।

* शंकर.

**[१]षोडशकलः सोम्य पुरुषः। पञ्चदशाहानि माऽशीः। काममपः पिब। आपोमयः प्राणो नपिबतो विच्छेत्स्यत इति॥**

( १ ) अन्नस्य भुक्तस्य योऽणिष्ठो धातुः स मनसि शक्तिमधात्, साऽन्नोपचिता मनसः शक्तिः षोडशधा प्रविभज्य पुरुषस्य कलात्वेन निर्दिदिक्षिता। तया मनस्यन्नोपचितया शक्त्या षोडशधा प्रविभक्तया संयुक्तस्तद्वान्कार्यकरणसंघातलक्षणो जीवविशिष्टः पुरुषः षोडशकल उच्यते। यस्यां सत्यां द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञाता सर्वक्रियासमर्थः पुरुषो भवति। हीयमानायां च यस्यां सामर्थ्यहानिः। वक्ष्यति च 'अथान्नस्याऽऽयै द्रष्टा' इत्यादि। सर्वस्य कार्यकरणस्य सामर्थ्यं मनःकृतमेव। मानसेन हि बलेन संपन्ना बलिनो दृश्यन्ते लोके ध्यानाहाराश्च केचिदन्नस्य सर्वात्मकत्वात्। अतः अन्नकृतं मानसं वीर्यम्। षोडश कला यस्य पुरुषस्य सोऽयं षोडशकलः पुरुषः, एतच्चेत्प्रत्यक्षीकर्तुमिच्छसि, पञ्चदशसंख्याकानि अहानि माऽशीरशनं मा कार्षीः, काममिच्छातोऽपः पिब, यस्मान्नपिबतोऽपस्ते प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते, यस्मादापोमयोऽब्विकारः प्राण इत्यवोचाम। न हि कार्यं स्वकारणोपष्टम्भमन्तरेणाविभ्रंशमानं स्थातुमुत्सहते।

शंकर.

( २ ) षोडशांशयुक्तमनआदिकलायुक्तः पुरुषः। ततश्च मनआदिषोडशांशाः प्रत्यहं प्रत्यहं भुज्यमानैरन्नादिभिराप्यायिता भवन्ति। तत्र पञ्चदश दिनानि मा भुङ्क्थाः। यथेष्टं जलं पिब। जलपानेन प्राणविच्छेदोऽपि न भविता, जलमयत्वात्प्राणस्य, इत्याचार्य उवाचेत्यर्थः। रंग.

* रंग. शंकरवत्।

(१) छान्द. ६।७।१; रंग. नपिब ( न पिब ).

सꣳ ह पञ्चदशाहानि नाऽऽश । अथ हैनमुपससाद, किं ब्रवीमि भो इति । ऋचः सोम्य यजूꣳषि सामानीति । स होवाच, न वै मा प्रतिभान्ति भो इति ।

स हैवं श्रुत्वा, मनसोऽन्नमयत्वं प्रत्यक्षीकर्तुमिच्छन्, पञ्चदशाहानि नाऽऽश अशनं न कृतवान् । अथ षोडशेऽहनि हैनं पितरमुपससादोपगतवान्, उपगम्य चोवाच, किं ब्रवीमि भो इति । इतर आह, ऋचः सोम्य यजूंषि सामान्यधीष्वेति । एवमुक्तः पित्राऽऽह, न वै मा मां, ऋगादीनि प्रतिभान्ति मम मनसि न दृश्यन्ते इत्यर्थः, हे भो भगवन्निति ।

* शंकर.

तꣳ होवाच । यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् । तेन ततोऽपि न बहु दहेत् । एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात् । तयैतर्हि वेदान्नानुभवसि । अशान । अथ मे विज्ञास्यसीति ॥

एवमुक्तवन्तं पिताऽऽह, शृणु तत्र कारणं, येन ते तान्यृगादीनि न प्रतिभान्ति इति । तं होवाच, यथा लोके हे सोम्य, महतो महत्परिमाणस्य, अभ्याहितस्योपचितस्येन्धनैः, अग्नेरेकोऽङ्गारः खद्योतमात्रः खद्योतपरिमाणः शान्तस्य, परिशिष्टोऽवशिष्टः स्याद्भवेत्, तेनाङ्गारेण ततोऽपि तत्परिमाणादीषदपि, न बहु दहेत्, एवमेव खलु सोम्य ते तव, अन्नोपचितानां षोडशानां कलानां, एका कलाऽवयवः, अतिशिष्टा अवशिष्टा स्यात्, तया त्वं खद्योतमात्राङ्गारतुल्यया, एतर्हीदानीं, वेदान्नानुभवसि न प्रतिपद्यसे, श्रुत्वा च मे मम वाचमथार्थं विज्ञास्यसि, अशान भुङ्क्ष्व तावत् ।

* शंकर.

सꣳ हाऽऽश । अथ हैनमुपससाद । तꣳ ह यत्किंच पप्रच्छ सर्वꣳह प्रतिपेदे ॥

स ह तथैव आश भुक्तवान् । अथ अनन्तरं ह एनं पितरं शुश्रूषुः उपससाद । तं ह उपगतं पुत्रं यत्किंच ऋगादिषु पप्रच्छ ग्रन्थरूपमर्थजातं वा पिता । स श्वेतकेतुः सर्वं ह तत्प्रतिपेदे ऋगाद्यर्थतो ग्रन्थतश्च ।

* शंकर.

तꣳ होवाच । यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत् । तेन ततोऽपि बहु दहेत् ॥

तं होवाच पुनः पिता, यथा सोम्य महतोऽभ्याहितस्येत्यादि समानम् । एकमङ्गारं शान्तस्याग्नेः खद्योतमात्रं परिशिष्टं, तं तृणैश्चूर्णैश्चोपसमाधाय, प्राज्वलयेद्वर्धयेत्, तेनेद्धेनाङ्गारेण ततोऽपि पूर्वपरिमाणाद्बहु दहेत् ।

* शंकर.

एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत् । साऽन्नेनोपसमाहिता प्राज्वाली । तयैतर्हि वेदाननुभवसि । अन्नमयꣳ हि सोम्य मनः । आपोमयः प्राणः । तेजोमयी वागिति । तद्धास्य विजज्ञाविति विजज्ञाविति ॥

(१) एवं सोम्य ते षोडशानामन्नकलानां सामर्थ्यरूपाणां, एका कलाऽतिशिष्टाऽभूत् अतिशिष्टाऽऽसीत्, पञ्चदशाहान्यभुक्तवत एकैकेनाह्नैकैका कला चन्द्रमस इवापरपक्षे क्षीणा, साऽतिशिष्टा कला तवान्नेन भुक्तेनोपसमाहिता वर्धितोपचिता प्राज्वाली, दैर्घ्यं छान्दसं, प्रज्वलिता वर्धितेत्यर्थः । प्राज्वालीदिति पाठान्तरं, तदा तेनोपसमाहिता स्वयं प्रज्वलितवतीत्यर्थः । तया वर्धितयैतर्हीदानीं, वेदाननुभवस्युपलभसे । एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरत्यन्नमयं हि सोम्य मन इत्यादि । यथैतन्मनसोऽन्नमयत्वं तव सिद्धं, तथाऽऽपोमयः प्राणस्तेजोमयी वागित्येतदपि सिद्धमेवेत्यभिप्रायः । तदेतद्धास्य पितुरुक्तं मनआदीनामन्नादिमयत्वं, विजज्ञौ विज्ञातवान्

* रंग. शंकरवत् ।

(१) छाउ. ६।७।२.

(२) छाउ. ६।७।३.

(३) छाउ. ६।७।४.

* रंग. शंकरवत् ।

(१) छाउ. ६।७।५; रंग. प्राज्व ( प्राज्वा ).

(२) छाउ. ६।७।६; रंग. प्राज्वाली । त ( प्राज्वालीत्त ); विज्ञान. २।३।१६, ४।४।१५ रामानुजवत्.

श्वेतकेतुः । द्विरभ्यासस्त्रिवृत्करणप्रकरणसमाप्त्यर्थः ।
शंकर.

(२) तत् मनआदीनामन्नमयत्वादिकमस्योपदेशाज्ज्ञातवानित्यर्थः । * रग.

(३) अत्र हि मनस एका कलाऽवशिष्टा, सा ह्यन्नेन प्राज्वालीदित्येवोक्तं, न तूत्पन्नमिति, अतोऽन्ननिमित्तकवृद्ध्याख्यविकारादन्नमयं मन इत्युक्तम्। एवमेव ' आपोमयः प्राणस्तेजोमयी वाक् ' इत्यादिश्रुतेरप्यर्थोऽवधारणीयः ।

२।३।१६

ननु प्रदीपस्यावयवित्वादंशाः संभवन्ति। मनसस्तु 'यावदात्मभावित्वाच्च न दोषः' इत्यनेन नित्यत्वस्योक्तत्वान्नावयवित्वं, ततश्च नांशित्वमिति चेन्न। अन्तःकरणस्य विभुत्वमते गगनस्य श्रोत्रादिवदंशसंभवात्। अणुत्वमते प्रतिनियतमनसो नित्यनिरंशत्वेऽपि तस्यैवोदासीनमनोभिः संहत्य महापृथिव्यादिवदवयविनो महामनसः स्वीकर्तव्यत्वेनांशसंभवात् । अन्यथा 'एवं सोम्य ते षोडशानां कलानामेका कला अतिशिष्टा अभूत्। सान्नेनोपसमाहिता तयैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मनः' इत्यादिश्रुतिविरोधापत्तेरिति ।

विज्ञान. ४।४।१५

सुषुप्तौ सत्संपत्तिः मनसः प्राणाश्रयता च, अन्नादिकार्यकारणपरंपरया जगन्मूलस्य विज्ञेयता

**उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच । स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति । स्वमपीतो भवति । तस्मादेनꣳ स्वपितीत्याचक्षते । स्वꣳ ह्यपीतो भवति ॥**

(१) यस्मिन्मनसि जीवेनाऽऽत्मनाऽनुप्रविष्टा परा देवता आदर्शे इव पुरुषः प्रतिबिम्बेन, जलादिष्विव च सूर्यादयः प्रतिबिम्बैः, तन्मनोऽन्नमयं तेजोऽम्मयाभ्यां वाक्प्राणाभ्यां संगतमधिगतम् । यन्मनो यत्स्थश्च जीवो मननदर्शनश्रवणादिव्यवहाराय कल्पते, तदुपरमे च स्वं देवतारूपमेव प्रतिपद्यते, तदुक्तं श्रुत्यन्तरे ' ध्यायतीव लेलायतीव ' ' सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति ' ' स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः ' इत्यादि, 'स्वप्नेन शारीरम्' इत्यादि, 'प्राणन्नेव प्राणो भवति' इत्यादि च। तस्यास्य मनस्थस्य मनआख्यां गतस्य मनउपशमद्वारेणेन्द्रियविषयेभ्यो निवृत्तस्य यस्यां परस्यां देवतायां स्वात्मभूतायां यदवस्थानं तत्पुत्रायाऽऽचिख्यासुरुद्दालको ह किलाऽऽरुणिः, श्वेतकेतुं पुत्रमुवाचोक्तवान्। स्वप्नान्तं स्वप्नमध्यं, स्वप्न इति दर्शनवृत्तेः स्वप्नस्याऽऽख्या, तस्य मध्यं स्वप्नान्तं सुषुप्तमित्येतत् । अथवा स्वप्नान्तं स्वप्नसतत्त्वमित्यर्थः । तत्राप्यर्थात्सुषुप्तमेव भवति । 'स्वमपीतो भवति' इति वचनात् । न ह्यन्यत्र सुषुप्तात्स्वमपीतिं जीवस्येच्छन्ति ब्रह्मविदः । तत्र ह्यादर्शापनयने पुरुषप्रतिबिम्बः आदर्शगतो यथा स्वमेव पुरुषमपीतो भवत्येवं मनआद्युपरमे चैतन्यप्रतिबिम्बरूपेण जीवेनाऽऽत्मना मनसि प्रविष्टा नामरूपव्याकरणाय परा देवता, सा स्वमेवाऽऽत्मानं प्रतिपद्यते जीवरूपतां मनआख्यां हित्वा । अतः सुषुप्त एव स्वप्नान्तशब्दवाच्य इत्यवगम्यते । यत्र तु सुप्तः स्वप्नान्पश्यति तत्स्वाप्नं दर्शनं सुखदुःखसंयुक्तमिति पुण्यापुण्यकार्यम् । पुण्यापुण्ययोर्हि सुखदुःखारम्भकत्वं प्रसिद्धम् । पुण्यापुण्ययोश्चाविद्याकामोपष्टम्भेनैव सुखदुःखतद्दर्शनकार्यारम्भकत्वमुपपद्यते नान्यथा, इत्यविद्याकामकर्मभिः संसारहेतुभिः संयुक्त एव स्वप्ने इति न स्वमपीतो भवति । ' अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ' ( बृउ. ४।३।२२ ) 'तद्वा अस्यैतदतिच्छन्दाः ' ( बृउ. ४।३।२१ ) ' एष परम आनन्दः ' ( बृउ. ४।३।३२ ) इत्यादिश्रुतिभ्यः ।

* रंग. शंकरवत् ।

(१) छाउ. ६।८।१; अशंकर. १।१।९, १।३।१५, २।१।२२, २७, २।३।३१, ३।२।७, १०, ३१, ४।२।७, ४।४।१६; भास्कर. १।१।९, १।३।१५, १।४।१७, २।१।२२, ३।२।७, ३२, ४।४।१६; रामानुज. १।१।१०, १।४।१८, ३।२।७; निंबार्क. १।१।१०, १।३।१५ स्वप्नान्तं मे ( स्वप्नान्तमेव ); ब्रमध्व. १।३।१५, ३।२।७; श्रीकंठ. १।१।१०, १।४।१८, ३।२।७, ९; श्रीकर. १।१।१०, १।४।१८, २।१।२२, ३।२।७, ९, ४।२।१६; वल्लभ. १।१।८, १।३।४०, १।४।१८, ४।४।१६ ( स्वमपीतो भवति० ); विज्ञान. १।१।९ ( पृ. १४२ ), १।३।१५, ३।२।७, ४।४।१६; बलदेव. ४।४।१६.

सुषुप्त एव स्वं देवतारूपं जीवत्वविनिर्मुक्तं दर्शयिष्यामी-त्याह––स्वप्नान्तं मे मम निगदतः, हे सोम्य, विजानीहि विस्पष्टमवधारयेत्यर्थः ।

कदा स्वप्नान्तो भवतीत्युच्यते । यत्र यस्मिन्काले एतन्नाम भवति पुरुषस्य स्वप्स्यतः । प्रसिद्धं हि लोके स्वपितीति । गौणं चेदं नामेत्याह । यदा स्वपितीत्युच्यते पुरुषः, तदा तस्मिन्काले, सता सच्छब्दवाच्यया प्रकृतया देवतया, संपन्नो भवति संगत एकीभूतो भवति । मनसि प्रविष्टं मनआदिसंसर्गकृतं जीवरूपं परित्यज्य स्वं सद्रूपं यत्परमार्थसत्यमपीतोऽपिगतो भवति । अतस्तस्मात्स्वपितीत्येनमाचक्षते लौकिकाः । स्वमात्मानं हि यस्मादपीतो भवति गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिर्गम्यत इत्यभिप्रायः । कथं पुनर्लौकिकानां प्रसिद्धा स्वात्मसंपत्तिः । जाग्रच्छ्रमनिमित्तोद्भवत्वात्स्वापस्येत्याहुः । जागरिते हि पुण्यापुण्यनिमित्तसुखदुःखाद्यनेकायासानुभवाच्छ्रान्तो भवति, ततश्चाऽऽयस्तानां करणानामनेकव्यापारनिमित्तग्लानानां स्वव्यापारेभ्य उपरमो भवति । श्रुतेश्च 'श्राम्यत्येव वाक् श्राम्यति चक्षुः' इत्येवमादि* । तथा च 'गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः' इत्येवमादीनि करणानि प्राणग्रस्तानि । प्राण एकोऽश्रान्तो देहे कुलाये यो जागर्ति, तदा जीवः श्रमापनुत्तये स्वं देवतारूपमात्मानं प्रतिपद्यते । नान्यत्र स्वरूपावस्थानाच्छ्रमापनोदः स्यादिति युक्ता प्रसिद्धिर्लौकिकानां स्वं ह्यपीतो भवतीति । दृश्यते हि लोके ज्वरादिरोगग्रस्तानां तद्विनिर्मोके स्वात्मस्थानां विश्रमणं, तद्वदिहापि स्यादिति युक्तम् । 'तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः' इत्यादिश्रुतेश्च शंकर.

( २ ) 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्'—ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम् । 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति वचनात्, कृत्स्नविकारप्रलयाभ्युपगमाच्च । तत्कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येत्यत्रोच्यते—पुंस्त्वादिवत्त्वस्येति । यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति, नाविद्यमानान्युत्पद्यन्ते, षण्ढादीनामपि तदुत्पत्तिप्रसङ्गात् । एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति । एवं ह्येतद्युज्यते । न ह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति, अतिप्रसङ्गात् । दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्––'सति संपद्य न विदुः सति संपद्यामह इति' ( छाउ. ६।९।२ ) 'त इह व्याघ्रो वा सिंहो वा' ( छाउ. ६।९।३ ) इत्यादिना । तस्मात्सिद्धमेतद्यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ।

२।३।३१

एवमेतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि नाड्यः पुरीतद्ब्रह्म चेति । तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकं सुषुप्तिस्थानम् । अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति तत्रास्य करणानि वर्तन्त इति । न ह्युपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित्संभवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात् । ब्रह्माधारत्वमप्यस्य सुषुप्ते नैव आधाराधेयभेदाभिप्रायेण उच्यते । कथं तर्हि ? तादात्म्याभिप्रायेण । यत आह — 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' इति । स्वशब्देन आत्मा अभिलप्यते, स्वरूपमापन्नः सुप्तो भवतीत्यर्थः । अपि च न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति, स्वरूपस्यानपायित्वात् । स्वप्नजागरितयोस्तूपाधिसंपर्कवशात् पररूपापत्तिमिवापेक्ष्य तदुपशमात्सुषुप्तेः स्वरूपापत्तिर्विवक्ष्यते । अतश्च सुप्तावस्थायां कदाचित्सता संपद्यते, कदाचिन्न संपद्यत इत्युक्तम् ।

* ब्रशंकर. ३।२।७

( ३ ) एकविज्ञानेन सर्वविज्ञानसिद्ध्यर्थं ब्रह्मव्यतिरिक्तस्य तदुपादेयत्वं वक्तुं प्रवृत्तस्तेजोबन्नात्मकसकलाचेतनवर्गस्य तदुपादेयत्वमुक्त्वा चेतनवर्गस्यापि तदुपादेयतां प्रतिपादयितुं प्रस्तौति––उद्दालक इति । अत्र स्वशब्दस्तावन्न जीवमात्रपरः । 'सता सोम्य

* 'श्रुतेश्च' इतिपञ्चमीसमानाधिकृतत्वात् 'इत्येवमादेः' इति पञ्चम्यन्तेन भवितव्यम् । सर्वेषु पुस्तकेषु क्लीबप्रथमान्त एव पाठः ।

* भास्कर. ब्रशंकरवत् । निंबार्क. ३।२।७, श्रीकंठ. ३।२।७ ब्रशंकरवत् ।

तदा संपन्नो भवति स्वमपीतो भवति ' इति स्थान-प्रमाणेन सच्छब्दस्वशब्दयोरेकविषयत्वावश्यंभावात् । सच्छब्दस्य चास्मिन्प्रकरणे परमात्मविषयत्वात्स्वशब्दोऽपि तत्पर एव । ननु जीवभिन्नत्वात्परमात्मनस्तस्य कथं जीवं प्रति स्वत्वमिति चेदुच्यते—देवमनुष्यादिनामरूपाभिमानरागलोभाद्यगुणवहिर्दुःखाज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यरहितजीवशरीरकः सन् आत्मन्यन्तर्भूत इत्यर्थ इति 'स्वाप्ययात्' ( ब्रसू. १।१।९ ) इति सूत्रे व्यासार्यैर्व्याख्यातत्वान्नानुपपत्तिः ।

* रंग.

( ४ ) सुप्तस्य हि जीवस्य, यत्रोषितस्य जागरितस्वप्नदशासंबन्धिविचित्रसुखदुःखानुभवकालुष्यविरहेण संप्रसन्नस्य स्वस्थतापत्तिः, पुनरप्यस्य यस्माद्भोगाय निष्क्रमणं, सोऽयं परमात्मा । तथा हि ' सता सोम्य तदा संपन्नो भवति ' । ' प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ' ( बृउ. ४।३।२१ ) इति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा । अतः प्रश्नप्रतिवचनाभ्यां जीवसंकीर्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते ।

‡ रामानुज. १।४।१८

( ५ ) जाग्रत्स्वप्नाभावः सुप्तिः नाडीस्थे परमात्मनि । ब्रमध्व. ३।२।७

( ६ ) स्वपितीति न क्रियापदं, किन्तु जीवस्य नाम । वल्लभ. १।१।८

[ तथा च सत्संपत्तिरहितस्वापदशायां तु स्वपितीति यत्र प्रयोगस्तत्रास्य क्रियापदत्वमेव । सत्संपत्तिदशायां तु स्वशब्दस्यात्मवाचकत्वेन सति स्वशब्दवाच्य आत्मनि अपीतिं लयं प्राप्नोति । तदा तस्मिन् पितिर्लयो यस्यासौ स्वपितिः । पृषोदरादित्वादकारनाश ईकारस्य विकृतौ च सत्यां स्वपिति नाम्नः सिद्धिः । वस्तुतस्तु केवलयौगिकत्वे नामत्वाभावात् योगरूढोऽयं शब्द इत्यर्थः । भाष्यप्रकाशः ]

* शेषं शंकरवत् ।

‡ ३।२।७ शंकरवत् ।

( ७ ) 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च'—तस्य स्वप्नप्रपञ्चस्य जीवस्य वाऽभावो लयः सुषुप्तिरिति यावत् । स नाडीषु देहान्तःस्थितासु भवति । तथा आत्मनि परमात्मनि च पुरीतद्वेष्टितहृदयाकाशावच्छिन्ने भवति । बुद्धौ हि नाडीविशेषगतयां स्वप्नप्रपञ्चस्य लयो भवतीति नाड्यस्तदाधाराः । नाड्यभ्यन्तराकाशस्येव परमात्माधिष्ठितकारणोपाधावेकतां बुद्धिर्गच्छति समुद्रे नदीवत् पृथक् वृत्त्यभावान्नद्याः । तदवच्छेदेनैवोपाधिविलयात्तदवच्छिन्ने परमात्मस्वरूपे जीवस्वरूपं साजात्यादेकतां गच्छतीत्यतः परमात्मापि सुषुप्त्याधार इत्यर्थः । विज्ञान. ३।२।७

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयते । एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते । प्राणबन्धनꣳ हि सोम्य मन इति ॥**

( १ ) तत्रायं दृष्टान्तो यथोक्तेऽर्थे, स यथा शकुनिः पक्षी, शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितः दिशं दिशं बन्धनमोक्षार्थी सन् प्रतिदिशं, पतित्वाऽन्यत्र बन्धनात्, आयतनमाश्रयं, विश्रमणायालब्ध्वाऽप्राप्य, बन्धनमेवोपश्रयते । एवमेव यथाऽयं दृष्टान्तः, खलु हे सोम्य, तन्मनस्तत्प्रकृतं षोडशकलमन्नोपचितं मनो निर्धारितं, तत्प्रविष्टस्तत्स्थस्तदुपलक्षितो जीवस्तन्मन इति निर्दिश्यते मञ्चाक्रोशनवत् । स मनआख्योपाधिर्जीवोऽविद्याकामकर्मोपदिष्टां दिशं दिशं सुखदुःखादिलक्षणां, जाग्रत्स्वप्नयोः पतित्वा गत्वाऽनुभूयेत्यर्थः । अन्यत्र सदाख्यात्स्वात्मनः, आयतनं विश्रमणस्थानमलब्ध्वा, प्राणमेव — प्राणेन सर्वकार्यकरणाश्रयेणोपलक्षिता प्राण इत्युच्यते सदाख्या परा देवता । ' प्राणस्य प्राणं ' ' प्राणशरीरो भारूपः ' इत्यादिश्रुतेः । — अतस्तां देवतां प्राणं प्राणाख्यामेवोपश्रयते, प्राणो बन्धनं यस्य मनसः तत्प्राणबन्धनं हि यस्मात्सोम्य मनः

(१) छाउ. ६।८।२; ब्रशंकर. १।१।२३, १।४।१७; भास्कर. १।१।२३, ३१; श्रीकर. १।४।१७; वल्लभ. ४।२।३.

प्राणोपलक्षितेऽवताश्रयं, मन इति तदुपलक्षितो जीव इति। शंकर.

(२) 'प्राणस्य प्राणं प्राणबन्धनं सोम्य मनः' इति परस्मिन्नपि प्राणशब्दप्रयोगात्। प्रकर्षेण अणिति स्थितिं लभते तस्मिन् कृत्स्नं जगदिति प्राणः। भास्कर. १।१।२३

(३) तत् 'अन्नमयं हि सोम्य मनः' (छाउ. ६।५।४) इति प्राङ्निर्दिष्टं मनो मुख्यप्राणेन संश्लेषविश्लेषमापद्यते, अतश्च सुषुप्तिदशायां वागादीन्द्रियसंहितं मनः 'वाङ्मनसि संपद्यते मनः प्राणे' (छाउ. ६।८।६) इति प्रयाणकालोक्तन्यायेन प्राणे संश्लेषविश्लेषमापन्नं सदुपरतव्यापारं भवति। सुषुप्तिदशायां प्राणमात्रमनुपरतव्यापारमास्ते, 'स यदा स्वपिति, प्राणमेव वागप्येति, प्राणं चक्षुः, प्राणं श्रोत्रं, प्राणं मनः' (छाउ. ४।३।३) इति श्रुतेः। * रंग.

**अशनापिपासे मे सोम्य विजानीहीति। यत्रैतत्पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते। तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति। तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि। नेदममूलं भविष्यतीति॥**

एवं स्वपितिनामप्रसिद्धिद्वारेण यज्जीवस्य सत्यस्वरूपं जगतो मूलं तत्पुत्रस्य दर्शयित्वाऽऽहाद्यादिकार्यकारणपरंपरयाऽपि जगतो मूलं सद्दिदर्शयिषुः। अशनापिपासे, अशितुमिच्छाऽशना यालोपेन। पातुमिच्छा पिपासा, ते अशनापिपासे अशनापिपासयोः सतत्त्वं विजानीहीत्येतत्। यत्र यस्मिन्काल एतन्नाम पुरुषो भवति। किं तदशिशिषत्यशितुमिच्छति। तदा तस्य पुरुषस्य किंनिमित्तं नाम भवतीत्याह—यत्तत्पुरुषेणाशितमन्नं कठिनं पीता आपो नयन्ते द्रवीकृत्य रसादिभावेन विपरिणमयन्ते तदा भुक्तमन्नं जीर्यति। अथ च भवत्यस्य नामाशिशिषतीति गौणम्। जीर्णे ह्यन्नेऽशितुमिच्छति सर्वो हि जन्तुः। तत्रापामशितनेतृत्वादशनाया इति नाम प्रसिद्धमित्येतस्मिन्नर्थे। यथा गोनायो गां नयतीति गोनाय इत्युच्यते गोपालः। तथाऽश्वान्नयतीत्यश्वनायोऽश्वपाल इत्युच्यते। पुरुषनायः पुरुषान्नयतीति राजा सेनापतिर्वा। एवं तत्तदाऽप आचक्षते लौकिका अशनायेति विसर्जनीयलोपेन। तत्रैवं सत्यद्भिः रसादिभावेन नीतेनाशितेनान्नेन निष्पादितमिदं शरीरं वटकणिकायामिव शुङ्गोऽङ्कुर उत्पतित उद्गतस्तमिमं शुङ्गं कार्यं शरीराख्यं वटादिशुङ्गवदुत्पतितं हे सोम्य विजानीहि। किं तत्र विज्ञेयमित्युच्यते—शृणु, इदं शुङ्गवत्कार्यत्वाच्छरीरं नामूलं मूलरहितं भविष्यतीत्युक्त आह श्वेतकेतुः। * शंकर.

**तस्य क मूलꣳ स्यादन्यत्रान्नात्। एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छ। अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ। तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ। सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः॥**

(१) यद्येवं समूलमिदं शरीरं वटादिशुङ्गवत्, तस्यास्य शरीरस्य क मूलं स्याद्भवेदित्येवं पृष्ट आह पिता—तस्य क मूलं स्यादन्यत्रान्नात्, अन्नं मूलमित्यभिप्रायः। कथम्। अशितं ह्यन्नमद्भिर्द्रवीकृतं जाठरेणाग्निना पच्यमानं रसभावेन परिणमते। रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जायाः शुक्रम्। तथा योषिद्भुक्तं चान्नं रसादिक्रमेणैवं परिणतं लोहितं भवति। ताभ्यां शुक्रशोणिताभ्यामन्यकार्याभ्यां संयुक्ताभ्यामन्नेनैवं प्रत्यहं भुज्यमानेनाऽऽपूर्यमाणाभ्यां कुड्यमिव मृत्पिण्डैः प्रत्यहमुपचीयमानोऽन्नमूलो देहशुङ्गः परिनिष्पन्न इत्यर्थः। यत्तु देहशुङ्गस्य मूलमन्नं निर्दिष्टं तदपि देहवद्विनाशोत्पत्तिमत्त्वात्कस्माच्चिन्मूलादुत्पतितं शुङ्ग एवेति कृत्वाऽऽह— यथा देहशुङ्गोऽन्नमूल एवमेव खलु सोम्यान्नेन शुङ्गेन कार्यभूतेनापो मूलमन्नस्य शुङ्गस्यान्विच्छ

---

* शेषं शंकरवत्। वल्लभ. मनःप्राणशब्दार्थौ रंगवत्।

(१) छाउ. ६।८।३; ब्रशंकर. १।१।९, ४।२।७, ४।३।१४; रंग. अशनापि (अशनायापि).

* रंग. शंकरेण गतार्थम्।

(१) छाउ. ६।८।४; ब्रशंकर. १।३।१, १।४।१४; भास्कर. २।३।१४; रामानुज. १।१।१ (पृ. ११२, ११६), १।१।१२, १३, २।१।१५, २।३।१८, ४।१।३; श्रीकर. १।३।१, १।४।१४, २।१।१३, १५, २।३।१६.

प्रतिपद्यस्व । अपामपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमेवेति अद्भिः सोम्य शुङ्गेन कार्येण कारणं तेजो मूलमन्विच्छ । तेजसोऽपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमिति तेजसा सोम्य शुङ्गेन सन्मूलमेकमेवाद्वितीयं परमार्थसत्यम् । यस्मिन्सर्वमिदं वाचाऽऽरम्भणं विकारो नामधेयमनृतं रज्ज्वामिव सर्पादिविकल्पजातमध्यस्तमविद्यया तदस्य जगतो मूलम् । अतः सन्मूलाः सत्कारणा हे सोम्येमाः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः । न केवलं सन्मूला एव, इदानीमपि स्थितिकाले सदायतनाः सदाश्रया एव । न हि मृदमनाश्रित्य घटादेः सत्त्वं स्थितिर्वाऽस्ति । अतो मृद्वत्सन्मूलत्वात्प्रजानां सत् आयतनं यासां ताः सदायतनाः प्रजाः । अन्ते च सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः समाप्तिरवसानं परिशेषो यासां ताः सत्प्रतिष्ठाः । शंकर.

( २ ) अत्र व्यासार्यैः ' सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ' इति वाक्ये सर्वशब्देन प्रजानां विशेषितत्वात्प्रजाशब्दस्य चाचित्संसृष्टचेतनविशेषपरत्वात् । ' इदं सर्वमसृजत ' ( बृउ. १।२।५ ) इति वाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्वशब्देन निर्देशाच्च प्रजाशब्देन सजीवं जगन्निर्दिश्यते । सन्मूलाः सत्प्रतिष्ठा इत्यपि पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयत्वपरम् । प्रतिष्ठा निष्ठा पर्यवसानं लय इति यावत् । सदायतना इति सदाधारकत्वमुच्यते । अनेन जगतः शरीरत्वं फलितम् ।

' सन्मूलाः सोम्येमाः सर्वाः प्रजाः सत्प्रतिष्ठाः ' इति द्वाभ्यां सदुपादानकत्वं, सदायतना इत्यनेन सदन्तर्यामिकत्वं, उपादानोपादेयभावस्याभिन्ननिष्ठत्वात् । प्रजाशब्देनाचित्संसृष्टजीवमात्रपरामर्शे तस्य सदुपादानकत्वासंभवात्प्रजाशब्देनापि प्रजाशरीरकं ब्रह्मवोच्यते । सदायतना इत्यत्र सदन्तर्यामिकत्वस्य शरीरभूतचिदचिन्मात्रनिष्ठत्वेन चिदचिच्छरीरकब्रह्मनिष्ठत्वाभावात् सदायतना इतिवाक्यानुषक्तप्रजाशब्देन शरीरभूतचेतनाचेतनमात्रमेवाभिधीयते । तथा ' सन्मूलाः सत्प्रतिष्ठाः ' इत्युपादानत्वप्रतिपादकवाक्ये विशिष्टस्यैवोपादानत्वात्सच्छब्देन सूक्ष्मचिदचिद्विशिष्टमेवोच्यते । सदायतना इत्यन्तर्यामित्वप्रतिपादकवाक्ये विशिष्टस्यान्तर्यामित्वासंभवात्सच्छब्देन विशेष्यमात्रमेवाभिधीयते ।

* रंग.

**अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते । तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति । तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि । नेदममूलं भविष्यतीति ॥**

अथेदानीमप्शुङ्गद्वारेण सतो मूलस्यानुगमः कार्य इत्याह——यत्र यस्मिन्काले एतन्नाम पिपासति पातुमिच्छतीति पुरुषो भवति । अशिशिषतीतिवत् इदमपि गौणमेव नाम भवति । द्रवीकृतस्याशितस्यान्नस्य नेत्र्य आपोऽन्नशुङ्गं देहं क्लेदयन्त्यः शिथिलीकुर्युः अब्बाहुल्याद्यदि तेजसा न शोष्यन्ते । नितरां च तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु पातुमिच्छा पुरुषस्य जायते, तदा पुरुषः पिपासति नाम । तदेतदाह——तेज एव तत्तदा पीतमबादि शोषयेद्देहगतलोहितप्राणभावेन नयते परिणमयति । तद्यथा गोनाय इत्यादि समानं, एवं तत्तेज आचष्टे लोकः उदन्येति, उदकं नयतीत्युदन्यम् । उदन्येतीति च्छान्दसं तत्रापि पूर्ववत् । अपामप्येतदेव शरीराख्यं शुङ्गं नान्यदित्येवमादि समानमन्यत् । † शंकर.

म्रियमाणस्य सत्संपत्तिक्रमः, अणुः सद्रूपो विश्वात्मा विश्वात्मरूपसत्यस्य त्वंपदार्थस्य चैक्यम्

( ६।८-१६ )

**तस्य क्व मूलꣳ स्यादन्यत्राद्भ्यः । अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ । तेजसा सोम्य शुङ्गेन**

* शेषं शंकरेण गतार्थम् । उद्धृतं व्याख्यानं छाउ. ६।८।१ इत्यत्र शास्त्रार्थप्रसङ्गेन विहितम् ।

† रंग. शंकरवत् ।

(१) छाउ. ६।८।५; ब्रशंकर. १।१।९, ४।२।७.

(२) छाउ. ६।८।६; ब्रशंकर. ४।२।१, ३, ८; भास्कर. ४।२।१, १५, ४।४।१६; रामानुज. ३।३।३७, ४।२।१, ३, ४, १४, १५, ४।४।१६; निंबार्क. ३।३।३७, ४।२।१, १४; श्रीकंठ. ४।२।२, ३, ४, ५, १४, १६; श्रीकर. ३।३।३७, ४।२।१, ३, ४, ५, ७, ८, १६,

सन्मूलमन्विच्छ । सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति । अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥

( १ ) सामर्थ्यात्तेजसोऽप्येतदेव शरीराख्यं शुङ्गम् । अतोऽप्शुङ्गेन देहेनाऽऽपो मूलं गम्यते । अद्भिः शुङ्गेन तेजोमूलं गम्यते । तेजसा शुङ्गेन सन्मूलं गम्यते पूर्ववत् । एवं हि तेजोबन्नमयस्य देहशुङ्गस्य वाचारम्भणमात्रस्यान्नादिपरम्परया परमार्थसत्यं सन्मूलमभयमसंत्रासं निरायासं सन्मूलमन्विच्छेति पुत्रं गमयित्वाऽशिशिषति पिपासतीति नामप्रसिद्धिद्वारेण यदन्यदिहास्मिन्प्रकरणे तेजोबन्नानां पुरुषेणोपयुज्यमानानां कार्यकरणसंघातस्य देहशुङ्गस्य स्वजात्यसांकर्येणोपचयकरत्वं वक्तव्यं प्राप्तं, तदिहोक्तमेव द्रष्टव्यमिति पूर्वोक्तं व्यपदिशति । यथा नु खलु येन प्रकारेणेमास्तेजोबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति, तदुक्तं पुरस्तादेव भवति 'अन्नमशितं त्रेधा विधीयते' इत्यादि तत्रैवोक्तम् । अन्नादीनामशितानां ये मध्यमा धातवस्ते साप्तधातुकं शरीरमुपचिन्वन्तीत्युक्तम् । मांसं भवति लोहितं भवति मज्जा भवत्यस्थि भवति ये त्वणिष्ठा धातवो मनः प्राणं वाचं देहस्यान्तःकरणसंघातमुपचिन्वन्तीति चोक्तं, तन्मनो भवति, स प्राणो भवति, स वाग्भवतीति ।

सोऽयं प्राणकरणसंघातो देहे विशीर्णे देहान्तरं जीवाधिष्ठितो येन क्रमेण पूर्वदेहात्प्रच्युतो गच्छति तदाह— अस्य हे सोम्य पुरुषस्य प्रयतो म्रियमाणस्य वाङ्मनसि संपद्यते मनस्युपसंह्रियते । अथ तदाऽऽहुर्ज्ञातयो न वदतीति । मनःपूर्वको हि वाग्व्यापारः, 'यद्वै मनसा ध्यायति तद्वाचा वदति' इति श्रुतेः । वाच्युपसंहृतायां मनसि मनो मननव्यापारेण केवलेन वर्तते । मनोऽपि यदोपसंह्रियते तदा मनः प्राणे संपन्नं भवति सुषुप्तकाल इव, तदा पार्श्वस्था ज्ञातयो न विजानातीत्याहुः । प्राणश्च तदोर्ध्वोच्छ्वासी स्वात्मन्युपसंहृतबाह्यकरणः संवर्गविद्यायां दर्शनाद्वस्तारयादीन् विच्छिन्नमर्मस्थानानि निकृन्तन्निवोत्सर्जनक्रमेणोपसंहृतस्तेजसि संपद्यते । तदाऽऽहुर्ज्ञातयो न चलतीति । मृतो नेति वा विचिकित्सन्तो देहमालभमाना उष्णं चोपलभमाना देह उष्णो जीवतीति । यदा तदप्यौष्ण्यलिङ्गं तेज उपसंह्रियते, तदा तत्तेजः परस्यां देवतायां प्रशाम्यति ।

तदेवं क्रमेणोपसंहृते स्वमूलं प्राप्ते च मनसि तत्स्थो जीवोऽपि सुषुप्तकालवन्निमित्तोपसंहारादुपसंह्रियमाणः सन्सत्याभिसंधिपूर्वकं चेदुपसंह्रियते सदेव संपद्यते, न पुनर्देहान्तराय सुषुप्तादिवोत्तिष्ठति । यथा लोके सभये देशे वर्तमानः कथंचिदिवाभयं देशं प्राप्तस्तद्वत् । इतरस्त्वनात्मज्ञस्तस्मादेव मूलात्सुषुप्तादिवोत्थाय मृत्वा पुनर्देहजालमाविशति ।



शंकर.

( २ ) 'वाङ्मनसि दर्शनाच्छब्दाच्च'— किमिह वाच एव वृत्तिमत्या मनसि संपत्तिरुच्यत उत वाग्वृत्तेरिति विशयः । तत्र वागेव तावन्मनसि संपद्यत इति प्राप्तम् । तथा हि श्रुतिरनुगृहीता भवति । इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्माद्वाच एवायं मनसि प्रलय इति । एवं प्राप्ते ब्रूमः—वाग्वृत्तिर्मनसि संपद्यत इति ।

ननु श्रुतिसामर्थ्याद्वाच एवायं मनस्यप्ययो युक्त इत्युक्तम् । नेत्याह । अतत्प्रकृतित्वात् । यस्य हि यत उत्पत्तिस्तस्य तत्र प्रलयो न्याय्यो मृदीव शरावस्य । न च मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति । वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते । पार्थिवेभ्यो हीन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवत्यप्सु चोपशाम्यति । कथं तर्हि अस्मिन्पक्षे शब्दः 'वाङ्मनसि संपद्यते' इति । अत आह—शब्दाच्चेति । शब्दोऽप्यस्मत्पक्षेऽवकल्पते वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः ।

४।२।१

'तन्मनः प्राण उत्तरात्' — तदप्यागृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इत्युत्तराद्वाक्यादवगन्तव्यम् । तथा हि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायां मनोवृत्तीनामुप-

शमो दृश्यते। न च मनसः स्वरूपाप्ययः प्राणे संभवति, अतत्प्रकृतित्वात्। ननु दर्शितं मनसः प्राणप्रकृतित्वम्। नैतत्सारम्। न हीदृशेन प्राणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति। एवमपि ह्यन्ने मनः संपद्येताप्सु चान्नमप्स्वेव च प्राणः। न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति। तस्मान्न मनसः प्राणे स्वरूपाप्ययः। वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम्।

४।२।३

'सोऽध्यक्षे तदुपगमादिभ्यः'—इदमिदानीं प्राणस्तेजसीत्यत्र चिन्त्यते। किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः किंवा देहेन्द्रियपञ्जराध्यक्षे जीव इति। तत्र श्रुतेरनतिशङ्क्यत्वात्प्राणस्य तेजस्येव संपत्तिः स्यादश्रुतकल्पनाया अन्याय्यत्वादिति। एवं प्राप्ते प्रतिपद्यते—सोऽध्यक्ष इति। स प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते। तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः। कुतः। तदुपगमादिभ्यः। 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' इति हि श्रुत्यन्तरमध्यक्षोपगामिनः सर्वान्प्राणानविशेषेण दर्शयति। विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृउ. ४।४।२) इति पञ्चवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति तदनुवृत्तितां चेतरेषाम् 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' (बृउ. ४।४।२) इति। 'सविज्ञानो भवति' इति चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति। ननु 'प्राणस्तेजसि' इति श्रूयते, कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियते। नैष दोषः। अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात्।

४।२।४

'भूतेषु तच्छ्रुतेः'— कथं तर्हि प्राणस्तेजसीति श्रुतिरित्यत आह— स प्राणसंपृक्तोऽध्यक्षस्तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेष्ववतिष्ठत इत्यवगन्तव्यम्। 'प्राणस्तेजसि' इति श्रुतेः। ननु चेयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति न प्राणसंपृक्तस्याध्यक्षस्य। नैष दोषः। सोऽध्यक्ष इत्यध्यक्षस्याप्यन्तरालेऽप्युपसंख्यातत्वात्। योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति सोऽपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते वदितुम्। तस्मात् 'प्राणस्तेजसि' इति प्राणसंपृक्तस्याध्यक्षस्यैवैतत्तेजःसहचरितेषु भूतेष्ववस्थानम्।

४।२।५

'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य'—समाना चैषोत्क्रान्तिर्वाङ्मनसीत्याद्या विद्वदविदुषोरासृत्युपक्रमात् भवितुमर्हति, अविशेषश्रवणात्। अविद्वान्देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवन्संसरति, विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते। तदेतदासृत्युपक्रमादित्युक्तम्। नन्वमृतत्वं विदुषा प्राप्तव्यं न च तद्देशान्तरायत्तं, तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति। अत्रोच्यते—अनुपोष्य चेदमदग्ध्वाऽत्यन्तमविद्यादीन्क्लेशानपरविद्यासामर्थ्यादापेक्षिकममृतत्वं प्रेप्सते, संभवति तत्र सृत्युपक्रमो भूताश्रयत्वं च। न हि निराश्रयाणां प्राणानां गतिरुपपद्यते, तस्माददोषः। ४।२।७

'तदापीतेः संसारव्यपदेशात्'—'तेजः परस्यां देवतायाम्' इत्यत्र प्रकरणसामर्थ्यात्तद्यथा प्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति। कीदृशी पुनरियं संपत्तिः स्यादिति चिन्त्यते। तत्रात्यन्तिक एव तावत्स्वरूपप्रविलय इति प्राप्तम्। तत्प्रकृतित्वोपपत्तेः। सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्। तस्मादात्यन्तिकीयमविभागापत्तिरिति। एवं प्राप्ते ब्रूमः—तत्तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतमाऽपीतेरासंसारमोक्षात्सम्यग्ज्ञाननिमित्तादवतिष्ठते—'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्॥' (काउ. ५।७) इत्यादिसंसारव्यपदेशात्। अन्यथा हि सर्वः प्रायणसमय एवोपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म संपद्येत। तत्र विधिशास्त्रमनर्थकं स्याद्विद्याशास्त्रं च। मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति। तस्मात्तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवद्बीजभावावशेषैवैषा सत्संपत्तिरिति। ४।२।८

'सूक्ष्मं प्रमाणतश्च तथोपलब्धेः' —तच्चेतरभूतसहितं तेजो जीवस्यास्माच्छरीरात्प्रवसत आश्रयभूतं स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति। तथा हि नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते। तत्र तनुत्वात्संचारोपपत्तिः। स्वच्छत्वाच्चाप्रतीघातोपपत्तिः। अत एव च देहान्निर्गच्छत्पार्श्वस्थैर्नोपलभ्यते।

४।२।९

'स्पष्टो ह्येकेषाम्' —नैतदस्ति यदुक्तं, परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिरुत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वादिति। यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते। तथा ह्यार्तभागप्रश्ने 'यत्रायं पुरुषो म्रियत उदस्मात्प्राणा उत्क्रामन्त्याहो नेति' (बृउ. ३।२।११) इत्यत्र 'नेति होवाच याज्ञवल्क्यः' (बृउ. ३।२।११) इत्यनुत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृत इत्यस्यामाशङ्कायां 'अत्रैव समवनीयन्ते' इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' (बृउ. ३।२।११) इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेरुच्छ्वयनादीनि समामनन्ति। देहस्य चैतानि स्युर्न देहिनः। तत्सामान्यात् 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते' इत्यत्राप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः।

तस्मादविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योर्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशार्थवत्त्वाय। न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिर्गतिर्वोपपद्यते निमित्ताभावात्। 'अत्र ब्रह्म समश्नुते' इति चैवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति।

ब्रशांकर. ४।२।१३

(३) 'प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम्' —'अथाकामयमानो योऽकामो निष्काम आप्तकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति शरीरादुत्क्रान्तिप्रतिषेधादासृत्युपक्रमादिति यदुक्तं तन्नोपपद्यते इति चेन्नायं विरोधः। शारीरादयमुत्क्रान्तिप्रतिषेधो न शरीरात्। कथं गम्यत इति प्रतिज्ञातेऽर्थे हेतुमाह—स्पष्टो ह्येकेषां शाखिनां माध्यन्दिनानाम्। 'न तस्मात्प्राणा उत्क्रामन्ति' इति शाखान्तरे पञ्चमीप्रयोगात् शारीरात्प्राणानामुत्क्रान्तिनिषेधः स्पष्टः। षष्ठीप्रयोगे हि संबन्धसामान्यं प्रतीयते। यदि च शरीरादुत्क्रान्तिः प्रतिषिध्येत 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' इति नोपपद्येत। प्रत्यक्षविरोधश्च स्यात्। विज्ञानात्मनः शारीरात् प्रतिषेधो युक्तः, विवक्षितार्थोपपत्तेः। कथं कृत्वा। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति संसारगतिं प्रदर्श्य 'इति च कामयमानः' इत्युपसंहरति। 'अथाकामयमानः' इति विदुष उत्क्रान्तिः प्रतिषिध्यते, तेषां संसारावस्थायां शरीरारम्भायोत्क्रान्तिः प्राप्ता, सा प्रतिषिध्यते, प्राप्तविषयत्वात् प्रतिषेधानाम्। विदुषः शरीरानारम्भाच्चोत्क्रान्तिर्नास्ति प्राणानां, तेन सहैव गच्छन्तीत्यर्थाद्गत्वा च परे ब्रह्मणि प्रलीयन्त इति। गतिश्रुतेश्च। प्रागेव लिङ्गस्य प्रलयो नास्ति, संसारमण्डलं हिरण्यगर्भपर्यन्तमतिक्रम्य प्रलयो भवतीति गम्यते। ज्ञानकर्मसामर्थ्याच्च गमनसिद्धिः सेवादिलब्धग्रामफलप्राप्तिवत्। उक्तोपनिषत्काः क्व गमिष्यन्तीति च प्रश्नपूर्वकमस्यामप्युपनिषदि गतिर्दर्शिता। तस्मात् 'अत्रैव समवलीयन्ते' इति सूत्रार्थान्तरात् मात्रेति निर्दिश्यते इति द्रष्टव्यम्। उत्तरत्र चायमर्थो मन्त्रैः स्पष्टीक्रियते। 'तेन धीरा अपि यन्ति ब्रह्मविदः' उत्क्रम्य 'स्वर्गलोकमितो विमुक्ताः' 'तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च' इति आर्तभागप्रश्नस्य साकाङ्क्षत्वादिह परिसमाप्तिः। प्रत्यभिज्ञानादेकार्थता युक्ता। अन्यथेदं तद्वाक्यं चानर्थकं स्यात्। ये तूत्क्रान्तिर्नास्तीति वर्णयन्ति तेषां हेतुकथनार्थं सूत्रमवाचकम्। न्यायश्च नास्ति, उत्क्रान्तिं प्रतिषिध्य गतिप्रतिषेधे वाक्यभेदात्।

* भास्कर. ४।२।१२

(४) अत्र वाचो मनःप्रकृतिकत्वासंभवाद्व्यापारोपरमहेतुभूतसंश्लेषविशेष एव वाचो मनसि लयः। मनसः प्राणे लयोऽपि तादृश एव। एतादृशः सच्छब्दितः

* अन्यत् ब्रशांकरवत्। श्रीकंठ. भास्करवत्।

स एषोऽणिमाऽणुवद्दुर्विज्ञेयो मानान्तरागोचर इत्यर्थः।

* रंग.

( ५ ) 'वाङ्मनसि दर्शनाच्छब्दाच्च'—अत्र वाङ्मनसि संपद्यते इति वाचो मनसि संपत्तिश्रुतिः किं वाग्वृत्तिमात्रविषयोत वाग्विषयेति विशये वृत्तिमात्रविषयेति युक्तम्। कुतः। मनसो वाक्प्रकृतित्वाभावात्तत्र वाक्स्वरूपसंपत्त्यसंभवात्। वागादिवृत्तीनां मनोधीनत्वेन वृत्तिसंपत्तिश्रुतिः कथंचिदुपपद्यत इति एवं प्राप्तेऽभिधीयते— वाङ्मनसीति। वाक्स्वरूपमेव मनसि संपद्यते। कुतः। तद्दर्शनात्। दृश्यते हि वागिन्द्रिये उपरतेऽपि मनःप्रवृत्तिः। वृत्तिमात्रसंपत्त्यापि तदुपपद्यत इति चेत्तत्राह—शब्दाच्चेति। 'वाङ्मनसि संपद्यते' इति वाक्स्वरूपसंपत्तावेव हि शब्दो न वृत्तिमात्रसंपत्तौ। न हि तदानीं वृत्त्युपरमे वागिन्द्रियं प्रमाणान्तरेणोपलभ्यते येन वृत्तिमात्रं संपद्यत इत्युच्येत। यदुक्तं मनसो वाक्प्रकृतित्वाभावाद्वाचो मनसि संपत्तिर्नोपपद्यत इति, तत् 'वाङ्मनसि संपद्यते' इति वचनान्मनसा वाक्संयुज्यते न तु तत्र लीयते इति परिहर्तव्यम्।

४।२।१

'तन्मनः प्राण उत्तरात्'— तत्सर्वेन्द्रियसंयुक्तं मनः प्राणे संपद्यते प्राणेन संयुज्यते। न मनोवृत्तिमात्रम्। कुतः। उत्तरात्। 'मनः प्राणे' इति वाक्यात्।

‡ रामानुज. ४।२।३

( ६ ) वागभिमानिन्युमा मनोभिमानिनि रुद्रे विलीयते, वाचो मनोवशत्वदर्शनात्। 'तस्य यावन्न वाङ्मनसि संपद्यते' इति शब्दाच्च। 'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दांपत्याद्विहीयते॥' इति स्कान्दे। ४।२।१

'मनः प्राणे' इत्युत्तराद्वचनान्मनोभिमानी रुद्रः प्राणे वायौ विलीयते। 'वायोर्वा रुद्र उदेति, वायौ विलीयते, तस्मादाहुर्वायुर्देवानां श्रेष्ठः' इति चण्डकौण्डिन्यश्रुतिः।

४।२।३

'सोऽध्यक्षे तदुपगमादिभ्यः'— स प्राणः परमात्मनि विलीयते। 'सर्वे प्राणमुपगच्छन्ति, प्राणः परमुपगच्छति, प्राणं देवा अनुप्राणन्ति, प्राणः परमनुप्राणिति, तस्मादाहुः प्राणस्य प्राण इति' 'प्राणः परस्यां देवतायाम्'। 'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते। अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु। आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान्। न ह्यानन्दो निजस्तेषां परैर्लभ्यः कथंचन। किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः। प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम्। सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम्॥' इत्यादिश्रुतिस्मृतिभ्यः।

ब्रमध्व. ४।२।४

( ७ ) 'अत एव सर्वाण्यनु'—अत एव दर्शनाच्छब्दाच्च हेतोः सर्वाणीन्द्रियाणि, अनु सांनिध्याद्वाचः, पश्चान्मनसि संगतानि भगवदानन्देन संपद्यन्त इत्यर्थः। केचित्त्वत्र छान्दोग्यस्थं 'वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति वाक्यं विषयत्वेन उक्त्वा सूत्रे वाक्पदस्य तद्वृत्तिपरत्वं वदन्ति संपत्तिं तन्नाशं च। तन्न साधीयः। तथाहि वाक्पदस्य वृत्तिपरत्वं चेच्छ्रुत्यभिमतं स्यात् सूत्रकारस्तदा तथैव वदेन्न तु तत्स्वरूपमेव वाक्यम्। तन्निर्णयार्थमेव प्रवृत्तेः। मुख्यार्थत्यागो लक्षणापत्तिश्च। किञ्चैवं मनसीति पदवैयर्थ्यं स्यात्, विषयवाक्योक्तक्रमत्यागानुपपत्तेश्च।

४।२।२

'सोऽध्यक्षे तदुपगमादिभ्यः'— सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राणोऽध्यक्षे पुरो हृदि वा प्रकटे भगवति संपद्यत इत्यर्थः। अत्र हेतुः— उपगमादिभ्यः इति। उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकार इति यावत्। ततस्तथेत्यर्थः। आदिपदात् भगवद्वशीकरणसमर्थः स्नेहः प्रभ्वनिङ्गितार्थत्यागस्तदनुरूपं भजनं च।

वल्लभ. ४।२।४

( ८ ) 'अस्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते' इत्यादिश्रुतावपि संमिश्रणवाचकात्संपत्तिशब्दात् अविभागस्यैवावगमात्।

२।३।६

---

* शेषं शंकरेण गतार्थम्।

‡ काउ. २।३।१४ द्रष्टव्यम्। अन्यद्भास्करवत्। निंबार्क. रामानुजवत्।

तद्भूतपञ्चकं करणप्राणजीवाश्रयभूतं सूक्ष्मदेहाख्यं आप्रपीतेः प्राकृतप्रलयपर्यन्तं जीवन्मुक्तानां तिष्ठति न तु स्थूलदेहेन सह नश्यति । ४।२।८

‘ प्रतिषेधादिति चेन्न शारीरात् ’ — ननु अपीतिपर्यन्तं लिङ्गशरीराधारभूतपञ्चकमेव पुनः पुनः संसरतीति न युक्तम् । प्रतिषेधात् । अविदुषोऽपि काण्डे उत्क्रान्तिप्रतिषेधात् । ‘ यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मातो मृतः शेते ’ ( बृउ. ३।२।११ ) इति । तस्मात् सामान्यतः सर्वपुरुषसाधारण्येनोत्क्रान्त्यभावान्न संसरणं सूक्ष्मदेहस्येति चेत् न, शारीराज्जीवादेवायं प्राणानामुत्क्रान्तिप्रतिषेधो न शरीरात् । अस्मादित्यत्र ‘ अत्रैव समवनीयन्ते ’ इत्यत्र चेदमाप्रकृति पुरुषस्यैव परामर्शादित्यर्थः । तथा च मरणकाले जीवस्य प्राणवियोगो नास्तीति तच्छ्रुत्यर्थः । तस्मादविदुषः करणवर्गस्य शरीरादुत्क्रान्तिरस्त्येवेति । प्राणस्य देहादनुत्क्रमणे बाधकमप्याह—

‘स्पष्टो ह्येकेषाम्’—एकेषां शाखिनां शरीरादुत्क्रमो हि स्पष्ट एवास्ति । यथा ‘ चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ’ इति । ४।२।१२,१३

‘स्मर्यते च’—नन्वेवं परब्रह्मविदः परममुक्तावपि गति श्रवणादुत्क्रान्तिः स्यात् । यथा भारते—‘शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे । ततश्च पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव ’ इति । न च तदप्यभ्युपगन्तुं शक्यते ‘ न तस्य प्राणा उत्क्रामन्ति ’ इत्यादिश्रुतेः । तथा च यथा सा गतिश्रुतिर्गौणत्वादिनोपपादनीया, तथैवाविदुषोऽप्युत्क्रान्तिश्रुतिरुपपाद्यतामिति । मैवं, सशरीरस्यैव शुकस्य योगबलेन विशिष्टदेशप्राप्तौ तदनन्तरमेव देहोत्सर्गस्य तत्रावगमात् । ‘ शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥ ’ इत्युत्तरवाक्यात् ।

४।२।१४

‘ अविभागो वचनात् ’ — आकाशे वायोरिवाविलक्षणानन्यत्वमेव संपत्तिः, न त्वेकत्वं, भिन्नयोरखण्डतारूपैक्यासंभवात् । नापि विनाशो गतिश्रवणात् । अत्र प्रमाणमाह वचनादिति, ‘तेजः परस्यां देवतायाम्’ इत्यस्याव्यवधानेन अविभागस्यैव मधुसमुद्रादिदृष्टान्ते श्रुत्या स्वयं वचनात् । * विज्ञान. ४।२।१६

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥

( १ ) यस्मान्मूलादुत्थाय देहमाविशति जीवः स यः सदाख्य एव उक्तोऽणिमाऽणुभावो जगतो मूलं

---

* अन्यत् ब्रशंकरवत् ।

(१) छाउ. ६।८।७; ब्रशंकर. १।१।४ ( पृ. ४९, ६४ ), १।२।१३, २।१।१४, २१, २।३।६, १७, ३०, ४८, २।४।४, ३।२।६, २७, ३।३।१७, ३६, ३।४।८, ४।१।२, ३, ४।४।४; भास्कर. १।१।१, ६, १।३।२०, २।१।१४, २१, २।३।६, २९, ३।२।६, २८, ४।१।१, ३, ४।४।४; रामानुज. १।१।१ ( पृ. ६, १७, १०३, ११२, ११३, ११९ ), १।१।४ ( पृ. १५१, १५५, १६१ ), १।१।६, ७, ८, १२, १३, ३१, १।३।३९, १।४।२३, २।१।१५, २१, २।३।६, १८, ४२, ४५, ३।३।३५, ३७, ३।४।२, ४।१।३, ४।४।४; निंबार्क. २।१।१४, २।३।५, ६, ४२, ३।३।३५, ३७; ब्रमध्व. १।१।१७, २।३।२८, ४।१।१; श्रीकंठ. १।१।४ ( पृ. १८०, १८२ ), १।१।६, ८, १।३।४३, २।१।१५, २१, २।३।७, ४२, ३।३।३६, ३७, ३।४।२, ४।१।३; श्रीकर. १।१।१ (पृ. ३, ४, ५, ६, १६, १८, २०, २१), १।१।२ ( पृ. ३३ ), १।१।४ ( पृ. ४५, ४८, ५२ ), १।१।६, ७, ८, १३ ( पृ. ६१, ६३ ), १।१।१५ ( पृ. ६५ ), १।१।२०, १।२।२ ( पृ. ९९ ), १।२।३, ५ ( पृ. १०४ ), १।२।८, ११, १।३।२, १।४।२१, २२, २।१।३, ८, १४, १५, २३, २४, २।२।२५, २।३।५, १६, २५, ३६, ४०, ४३, ३।२।११, २६, २९, ३०, ३४, ३६, ३।३।१७, ३।३।३५, ३७, ४१, ४३, ५१, ६०, ३।४।१, ३, ४।१।३, ४।२।५, १४, ४।३।१५, ४।४।३, ४।४।४, ५, १२, १६, २२; वल्लभ. १।१।२९, ३।२।३, ४।१।१; विज्ञान. १।१।२ ( पृ. ३८, ४२, ४४, ४८, ५८, ६७), १।१।६ (पृ. १४०), १।१।७ (पृ. १४१), १।१।१७, ३०, २।३।४१, ३।३।४, ४।१।३; बलदेव. २।३।५, ४१, ३।२।८, ४।१।१.

ऐतदात्म्यमेतत्, सदात्मा यस्य सर्वस्य तत् एतदात्म तस्य भाव ऐतदात्म्यम्। एतेन सदाख्येनाऽऽत्मनाऽऽत्मवत्सर्वमिदं जगत्। नान्योऽस्त्यस्याऽऽत्मा संसारी, 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ' इत्यादिश्रुत्यन्तरात्। येन चाऽऽत्मनाऽऽत्मवत्सर्वमिदं जगत्तदेव सदाख्यं कारणं सत्यं परमार्थसत्। अतः स एवात्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यम्। आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढत्वात्। अतस्तत्सत् त्वमसीति हे श्वेतकेतो। इत्येवं प्रत्यायितः पुत्र आह, भूय एव मा भगवान्विज्ञापयतु, यद्भवदुक्तं तत्संदिग्धं मम, अहन्यहनि सर्वाः प्रजाः सुषुप्ते सत्संपद्यन्त इत्येतद्येन सत्संपद्य न विदुः सत्संपन्ना वयमिति। अतो दृष्टान्तेन मां प्रत्याययत्वित्यर्थः। एवमुक्तस्तथाऽस्तु सोम्येति होवाच पिता। शंकर.

(२) यथा हि लोके यजेतेत्युक्ते, किं केन कथमित्याकाङ्क्ष्यते। नैवं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किंचिदन्यदाकाङ्क्ष्यमस्ति सर्वात्मैकत्वविषयत्वादवगतेः। २।१।१४

'उभयव्यपदेशात्त्वहिकुण्डलवत्' — तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्ततो गृह्यते, भेदव्यपदेशो निरालम्बन एव स्यात्। अत उभयव्यपदेशदर्शनादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति। यथाऽहिरित्यभेदः, कुण्डलाभोगप्रांशुत्वादीनीति च भेदः, एवमिहापीति। ३।२।२७

'प्रकाशाश्रयवद्वा तेजस्त्वात्' — अथ वा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम्। यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नौ, उभयोरपि तेजस्त्वाविशेषात्। अथ च भेदव्यपदेशभाजौ भवतः, एवमिहापीति। ३।२।२८

'पूर्ववद्वा' — यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैवैतद्भवितुमर्हति। तथा ह्यविद्याकृतत्वाद्बन्धस्य, विद्यया मोक्ष उपपद्यते। यदि पुनः परमार्थत एव बद्धः कश्चिदात्माऽहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन चैकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत। न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति। अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति। भेदं तु पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया। तस्मात्प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः। ३।२।२९

एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः। तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानश्चैतन्यपर्यन्तत्वेनावधारितः। तत्र येषामेतौ पदार्थावज्ञानसंशयविपर्ययप्रतिबद्धौ, तेषां तत्त्वमसीत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थपूर्वकत्वाद्वाक्यार्थस्य इत्यतस्तान्प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। ४।१।२

यत्तूक्तं न विरुद्धगुणयोरन्योन्यात्मत्वसंभव इति नायं दोषः। विरुद्धगुणताया मिथ्यात्वोपपत्तेः। यत्पुनरुक्तमीश्वराभावप्रसङ्ग इति, तदसत्। शास्त्रप्रामाण्यादनभ्युपगमाच्च। न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः। किं तर्हि। संसारिणः संसारित्वापोहेनेश्वरात्मत्वं प्रतिपिपादयिषितमिति। एवं च सत्यद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता विपरीतगुणता त्वितरस्य मिथ्येति व्यवतिष्ठते। * ब्रशंकर. ४।१।३

(३) जीवपरयोश्च भेदः पुरस्तात् प्रतिष्ठापितः, नेश्वर एव संसारीति। यथा वाऽत्यन्तभिन्नो जीवो न भवति तथा वक्ष्यामः। ननु भेदाभेदौ कथं परस्परविरुद्धौ संभवेतां, नैषः दोषः। 'प्रमाणतश्चेत् प्रतीयते को विरोधोऽयमुच्यते। विरोधे चाविरोधे च प्रमाणं कारणं मतम्॥' २।१।२२

'तत्त्वमसि' इति श्रुतेर्भिन्नाभिन्नो जीवः। स्वाभाविकं नित्यसिद्धमभिन्नं रूपं, इतरदौपाधिकं प्रवाहनित्यमिति विवेकः। भास्कर. ३।२।६

(४) ऐतदात्म्यमिदं सर्वमिति वाक्येऽपीदं सर्वमिति केवलचिदचिदात्मकः प्रपञ्चः परामृश्यते। एतच्छब्देनापि केवलं विशेष्यमिति न पूर्ववाक्यवैरूप्यम्। आत्मशब्दो व्याप्यवचनः 'अदृश्येऽनात्म्येऽनिरुक्ते' (तैउ. २।७।१) इत्यत्रात्मशब्दस्य व्याप्यार्थकत्वा-

---

* छाउ. ३।१८।१ (पृ. ८१८) इत्यत्र द्रष्टव्यम्।

श्रवणात् । ऐतदात्म्यनुपादानभूतेनान्तर्यामिभूतेन च ब्रह्मणा व्याप्यमित्यर्थः । मृदा कुम्भादिकं यथेत्युपादानस्यापि व्यापकत्वप्रसिद्धेः । एतदात्मैवैतदात्म्यं, स्वार्थे ष्यञ् । एष आत्मा यस्येति पक्षेऽपि स्वार्थे ष्यञः आश्रयणीयत्वात् । अस्मिंश्च पक्षे 'ऐतदात्म्यमिदं सर्वम्' 'स आत्मा' इत्यनयोर्न पौनरुक्त्यशङ्का । अत एव रामानुजं लक्ष्मणपूर्वजातमितिवदादरातिशयादुपपद्यत इति परिहाराश्रयणक्लेशोऽपि नाऽऽश्रयणीयः । 'तत्सत्यम्' एतदात्मकत्वमेव सत्यं प्रमाणस्य प्रामाणिकमित्यर्थः। 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति वाक्यस्यैवं वार्थः— सत्यं प्रमाणप्रतिपन्नं तदिदं सर्वं जगदैतदात्म्यमनेन ब्रह्मणा व्याप्तमित्यर्थः । अत्रासत्यस्य शशशृङ्गादेस्तुच्छस्य व्याप्तत्वाभावेऽपि प्रमाणप्रतिपन्नस्य सर्वस्यापि ब्रह्मव्याप्तत्वमस्तीति भावः । स आत्मा नियन्तेत्यर्थः ।

* रंग.

(५) न हि 'तत्त्वमसि' इति जीवपरयोरैक्योपदेशे सति सर्वज्ञसत्यसंकल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते । ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छाउ. ६।३।२) इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम्। अतो न ब्रह्माज्ञानपरिकल्पनम् । (पृ. १०३)

'तत्त्वमसि' इत्यत्रोद्देश्योपादेयविभागः कथमिति चेत् । नात्र किंचिदुद्दिश्य किमपि विधीयते । 'ऐतदात्म्यमिदं सर्वं' इत्यनेनैव प्राप्तत्वात् । अप्राप्ते हि शास्त्रमर्थवत् । इदं सर्वमिति सजीवं जगन्निर्दिश्यैतदात्म्यमिति तस्यैष आत्मेति तत्र प्रतिपादितम् ।

तस्माद्ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोऽपिशब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यावगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति 'ऐतदात्म्यमिदं सर्वम्' इति प्रतिज्ञातार्थस्य 'तत्त्वमसि' इति सामानाधिकरण्येन विशेषेणोपसंहारः ।

१।१।१ (पृ. ११२, ११३)

अत एव जीवोऽपि ब्रह्मणो नात्यन्तभिन्नः । अपि तु ब्रह्मांशत्वेन भिन्नाभिन्नः । तत्राभेद एव स्वाभाविको भेदस्त्वौपाधिकः । कथमिदमवगम्यत इति चेत् 'तत्त्वमसि' 'नान्योऽतोऽस्ति द्रष्टा' (बृउ. ३।७।२३) 'अयमात्मा ब्रह्म' (बृउ. २।५।१९) इत्यादिभिः श्रुतिभिः । रामानुज. १।१।४ (पृ. १६१)

(६) 'भेदव्यपदेशाच्च'— स यश्चायं पुरुष इत्यादिभेदव्यपदेशात् । न च 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिश्रुतिविरोधः । 'नामानि सर्वाणि यमाविशन्ति' इति तत्तच्छब्दवाच्यत्वोक्तेः । १।१।१७

'पृथगुपदेशात्' 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिषु जीवस्य परेणाभेदः प्रतीयते । 'नित्यो नित्यानां चेतनश्चेतनानाम्' 'द्वा सुपर्णा' इत्यादिषु भेदः । अत उच्यते— पृथगिति । 'भिन्नोऽचिन्त्यः परमो जीवसंघात् पूर्णः परो जीवसंघो ह्यपूर्णः । यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेत् ॥' इति सोपपत्तिककौशिकश्रुतेर्भिन्न एव जीवः। ब्रमध्व. २।३।२८

(७) जीवो ब्रह्मणोंऽशभूत एव तत्स्वरूपं प्रतिपद्यते । ब्रह्मण एवाज्ञानाज्जीवभावकल्पने बहुश्रुतिविरोधादिदोषप्रसक्तिर्दुर्वारा । २।३।४२

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'—पूर्वत्र ब्रह्मण उपासनमावृत्तिमदभिहितम् । तदात्मनस्तद्भावेनोपासनमुत तदर्थान्तरत्वेनेति विचारः । एवं सति 'विश्वाधिको रुद्रो महर्षिः' 'अधिकं तु भेदनिर्देशात्' इत्यादिश्रुतिसूत्रेषु प्रत्यगात्मनः पशोर्जीवात् पत्युः परब्रह्मणोऽर्थान्तरत्वेन निरूपितत्वात् सर्वज्ञत्वादिना जीवस्य ब्रह्मभावाघटनाच्च ब्रह्मोपासनं जीवस्य तद्भि (स्वभि)न्नत्वेनैव युज्यत इति पूर्वः पक्षः । सिद्धान्तस्तु यद्यपि जीवादधिकमेव शिवाख्यं परं ब्रह्म, तथाऽप्युपासिताऽहं ब्रह्मास्मीति तदुपासीत । यतः पूर्वेऽप्युपासितारः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यात्मेत्येवावगच्छन्ति । उपासितुरर्थान्तरत्वेऽपि तानुपासितॄननुगृह्णाति स्वस्वरूपतया परं ब्रह्म । ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यान्

---

* शेषं शंकरवत् ।

'तत्त्वमसि' इत्यादिना । निरवधिकपरमानन्दमयनिष्कलङ्कशिवत्वप्राप्तिर्हि मुक्तिः । शिवत्वप्राप्तिरात्मनः पशुत्वनिवृत्तिमन्तरेण न संभवति । पशुत्वनिवृत्तिश्च न तद्भावनां विना । अतो निरन्तरं शिवोऽहमिति भावनाप्रवाहेण शिथिलितपाशतयाऽपगतपशुभाव उपासकः शिव एव भवति । निरस्तसमस्तदोषकलङ्कशङ्कानिरतिशयमङ्गलास्पदं हि शिवत्वम् । परं ब्रह्म च तादृगेव । तद्भावनयोपासकश्च तथैव भवति । अत एव तदन्यस्य मुमुक्षुध्येयत्वं निषिध्यते । 'शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य' इत्यादिश्रुतिषु । निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतिशयस्वरूपानन्दसाक्षिस्वप्रकाशशिवरूपपराहंभावापत्तिर्मुक्तिरिति सर्वश्रुतितात्पर्यात् । ब्रह्मभावेनोपासनमुपासकस्य मुक्तिकरं, अन्यथा संसारावृत्तिरिति ।

* श्रीकंठ. ४।१।३

(८) अयमाशयः—श्रुतिः सृष्टिमेवाह, न तस्य सत्यत्वमपि । यथा 'ऐतदात्म्यमिदं सर्वं, तत् सत्यम्' इति 'आत्मानं स्वयमकुरुत' 'तत् सत्यमित्याचक्षते' 'कथमसतः सज्जायेत' इत्यादिश्रुतिसहस्रेभ्योऽस्य सत्यत्वं प्रतीयते । नैवं स्वप्नप्रपञ्चस्य श्रुतिराह ।

वल्लभ. ३।२।३

(९) न च 'ऐतदात्म्यमिदं सर्वं स आत्मा' इति पूर्वभागेनैव ब्रह्मात्मत्वं लब्धमिति वाच्यम् । यत ऐतदात्म्यमित्यनेन प्रपञ्चस्य ब्रह्मणि स्वरूपत्वलक्षणमेवात्मत्वमविभागलक्षणाभेदो वा घटस्य मृदात्मत्ववत्, न त्वध्यक्षत्वरूपं चेतनत्वरूपं वा । 'स आत्मा' इत्यनेन वा साक्षित्वरूपमात्मत्वमुक्तम् । ताभ्यां च हेतुभ्यां 'तत्त्वमसि' इत्यनेन चाध्यक्षत्वरूपमात्मत्वमिति विभागः अध्यक्षत्वरूपात्मत्वस्यैव त्वमहंशब्दार्थत्वात् ।

(पृ. ५८)

'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्येवंविधान्येव वेदान्तमहावाक्यानि च न जीवब्रह्माभेदं बोधयन्ति नाप्येतेषु वाक्येषु त्वमहंशब्दार्थौ जीवः किन्तु संघातान्तर्गतस्य षड्विंशतितत्त्वस्य मध्ये कोऽहंशब्दार्थ इत्याकाङ्क्षायां प्रवृत्ततया तत्त्वमस्यादिवाक्यानि ब्रह्मोद्दिश्य त्वमहंशब्दार्थत्वं विदधति को घटः कम्बुग्रीवादिमान् घटः इत्यादिवाक्यवत् । तदनन्तरमेव च शिष्यस्त्वमहंशब्दार्थमवधारयति, ब्रह्मैव मुख्यस्त्वमहंशब्दार्थौ न पञ्चविंशतितत्त्वानीति ।

* विज्ञान. १।१।२ (पृ. ६७–६८)

* छाउ. ६।३।२ (पृ. ८९५) द्रष्टव्यम् ।

मधुनदीदृष्टान्तद्वारा सर्वप्राणिनां सत्संपत्तिसदागमाविवेकसमर्थनम्

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान्समवहारमेकताꣳ रसं गमयन्ति ॥**

(१) यत्पृच्छसि अहन्यहनि सत्संपद्य न विदुः सत्संपन्नाः स्म इति तत्कस्मादित्यत्र शृणु दृष्टान्तम् । यथा लोके हे सोम्य मधुकृतो मधु कुर्वन्तीति मधुकृतः मधुकरमक्षिकाः मधु निस्तिष्ठन्ति मधु निष्पादयन्ति तत्पराः सन्तः । कथम् । नानात्ययानां नानागतीनां नानादिक्कानां वृक्षाणां रसान् समवहारं समाहृत्यैकतामेकभावं मधुत्वेन रसान् गमयन्ति मधुत्वमापादयन्ति ।

‡ शंकर.

(२) 'यथा मधु ... ... लभन्ते' इत्यादिदृष्टान्तप्रदर्शनेनाविभागलक्षणाद्वैत एव श्रुतेस्तात्पर्यावधारणात् । विज्ञान. २।३।६

**[२]ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीति । एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥**

* काउ. २।१।११ द्रष्टव्यम् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ६।९।१; रामानुज. ३।३।३७; निंबार्क. ३।३।३७; श्रीकर. ३।३।३७; विज्ञान. १।१।४ (पृ. ९६, १०७), १।१।११ (पृ. १४३), २।३।६, ४।२।१६; बलदेव. ३।२।८.

(२) छाउ. ६।९।२; ब्रशंकर. २।१।९, २।३।३१, ३।२।७; भास्कर. ३।२।७; रामानुज. १।३।१४; श्रीकंठ. १।३।१४ संपद्यामह (संपत्स्यामह); श्रीकर. ३।२।७; वल्लभ. १।३।४०, ३।२।७; विज्ञान. १।१।२ (पृ. ५१), १।१।५ (पृ. १२४), १।३।९, २।१।१४, २।३।२०, ३।२।७, ३१, ४।२।१६; बलदेव. १।३।१५, ३।२।८.

(१) ते रसा यथा मधुत्वेनैकतां गतास्तत्र मधुनि विवेकं न लभन्ते। कथम्। अमुष्याहमाम्रस्य पनसस्य वा वृक्षस्य रसोऽस्मीति। यथा हि लोके बहूनां चेतनावतां समेतानां प्राणिनां विवेकलाभो भवति, अमुष्याहं पुत्रोऽमुष्याहं नप्ताऽस्मीति। ते च लब्धविवेकाः सन्तो न संकीर्यन्ते, न तथेहानेकप्रकारवृक्षरसानामपि मधुराम्लतिक्तकटुकादीनां मधुत्वेनैकतां गतानां मधुरादिभावेन विवेको गृह्यते इत्यभिप्रायः। यथाऽयं दृष्टान्तः, इत्येवमेव खलु सोम्येमाः सर्वाः प्रजा अहन्यहनि सति संपद्य सुषुप्तिकाले मरणप्रलययोश्च न विदुर्न विजानीयुः सति संपद्यामह इति संपन्ना इति वा। * शंकर.

(२) 'स्वात्मना चोत्तरयोः' — अयमर्थः, स्वात्मना स्वस्यात्मना सदाख्येन विभुना विशिष्टयोः संबद्धयोः उत्तरयोर्गत्यागत्योः प्रतिपादिकाः श्रुतयः सन्ति, 'सति संपद्य न विदुः सति संपद्यामहे' इत्याद्याः 'सत आगत्य न विदुः सत आगच्छामहे' इत्याद्याश्च। न हीदं ब्रह्मणि गमनागमनं विभुत्वे सति जीवस्य संभवति द्वयोर्विभुनोः संयोगविभागासंभवात्। न चान्तःकरणद्वारा भविष्यति, अन्तःकरणे प्रमाणाभावात्, अन्यद्वारकत्वकल्पने गौरवाच्चेति।

विज्ञान. २।३।२०

**त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥**

यस्माच्चैवमात्मनः सद्रूपतामज्ञात्वैव सत्संपद्यन्ते। अतस्त इह लोके यत्कर्मनिमित्तां यां यां जातिं प्रतिपन्ना आसुर्व्याघ्रादीनां व्याघ्रोऽहं सिंहोऽहमित्येवं, ते तत्कर्मज्ञानवासनाङ्किताः सन्तः सत्प्रविष्टा अपि तद्भावेनैव पुनराभवन्ति पुनः सत आगत्य व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यत्पूर्वमिह लोके भवन्ति बभूवुरित्यर्थः, तदेव पुनरागत्य भवन्ति। युगसहस्रकोट्यन्तरिताऽपि संसारिणो जन्तोर्या पुरा भाविता वासना, सा न नश्यतीत्यर्थः। 'यथाप्रज्ञं हि संभवाः' इति श्रुत्यन्तरात्।

* शंकर.

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान्विज्ञापयत्विति। तथा सोम्येति होवाच ॥**

ताः प्रजाः यस्मिन्प्रविश्य पुनराविर्भवन्ति, ये त्वितोऽन्ये सत्सत्यात्माभिसंधाः यमणुभावं सदात्मानं प्रविश्य नाऽऽवर्तन्ते, स य एषोऽणिमेत्यादि, व्याख्यातम्। यथा लोके स्वकीये गृहे सुप्तः उत्थाय ग्रामान्तरं गतो जानाति स्वगृहादागतोऽस्मीत्येवं सत आगतोऽस्मीति च जन्तूनां कस्माद्विज्ञानं न भवतीति भूय एव मा भगवान्विज्ञापयत्वित्युक्तस्तथा सोम्येति होवाच पिता।

* शंकर.

**इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यः। ताः समुद्रात्समुद्रमेवापियन्ति। स समुद्र एव भवति। ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥**

(१) शृणु तत्र दृष्टान्तं—यथा सोम्येमा नद्यो गङ्गाद्याः पुरस्तात्पूर्वां दिशं प्रति प्राच्यः प्रागञ्चनाः स्यन्दन्ते स्रवन्ति। पश्चात्प्रतीचीं दिशं प्रति सिन्ध्वाद्याः। प्रतीचीमञ्चन्ति गच्छन्तीति प्रतीच्यः, ताः समुद्रादम्भोनिधेर्जलधरैराक्षिताः पुनर्वृष्टिरूपेण पतिताः गङ्गादिनदीरूपिण्यः पुनः समुद्रमम्भोनिधिमेवापियन्ति। स समुद्र एव भवति। ता नद्यो यथा तत्र समुद्रे समुद्रात्मनैकतां गता न विदुर्न जानन्तीयं गङ्गाऽहमस्मीयं यमुनाऽहम-

---

* रंग. शंकरवत्।

(१) छाउ. ६।९।३; ब्रशंकर. २।१।९, २।३।३१, ३।२।९; रामानुज. १।१।१०, ३।२।९; निंबार्क. ३।२।९ (कीटो वा पतङ्गो वा० ) तदाभ ( तत्तथा भ ); श्रीकंठ. ३।२।९; श्रीकर. १।१।१०, ३।२।९; विज्ञान. २।१।१४, ३।२।९, ४।२।१६ ( वराहो वा कीटो वा पतङ्गो वा० ); बलदेव. ३।२।९.

* रंग. शंकरवत्।

(१) छाउ. ६।९।४; विज्ञान. ४।२।१६; बलदेव. ३।२।८.

(२) छाउ. ६।१०।१; विज्ञान. १।२।५.

स्मीतीयं मह्यहमस्मीति च ।

शंकर.

( २ ) पुनश्च ताः समुद्रात्समुद्रं गच्छन्ति समुद्रपर्यन्तदेशात्समुद्रमध्यं गत्वा समुद्रेणैकीभूताः सत्यः इयं गङ्गाऽहमस्मीयं यमुनाऽहमस्मीत्येवं प्रत्यभिज्ञातुमसमर्था भवन्ति । रंग.

एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति । त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥

स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥

( १ ) एवमेव खलु सोम्येमाः सर्वाः प्रजाः यस्मात्सति संपद्य न विदुस्तस्मात्सत आगम्य न विदुः सत आगच्छामहे आगता इति वा । त इह व्याघ्र इत्यादि समानमन्यत् । दृष्टं लोके जले वीचीतरङ्गफेनबुद्बुदादय उत्थिताः पुनस्तद्भावं गता विनष्टा इति । जीवास्तु तत्कारणभावं प्रत्यहं गच्छन्तोऽपि सुषुप्ते मरणप्रलययोश्च न विनश्यन्तीत्येतद्भूय एव मा भगवान्विज्ञापयतु दृष्टान्तेन । तथा सोम्येति होवाच पिता ।

* शंकर.

( २ ) ' अतः प्रबोधोऽस्मात्'— अतः श्रवणादेव, अस्मादुक्तात् परमात्मनः सकाशात्, प्रबोधो बुद्धेरिन्द्रियद्वारिका विषयाकारतया सृष्टिर्भवति, सुवर्णस्येव कटकाकारतयेत्यर्थः । सा च श्रुतिः ' सत आगत्य न विदुः सत आगच्छामहे ' इति । ‡ विज्ञान. ३।२।८

* रंग. शंकरवत् ।

‡ छाउ. ६।९।२ द्रष्टव्यम् ।

(१) छाउ. ६।१०।२; ब्रशंकर. ३।२।८; निंबार्क. ३।२।८; श्रीकंठ. ३।२।८, ९; श्रीकर. ३।२।८; विज्ञान. २।३।२०, ३।२।८ आगम्य ( आगत्य ); बलदेव. १।३।१५.

(२) छाउ. ६।१०।३.

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत् । स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥

(१) शृणु दृष्टान्तमस्य—हे सोम्य, महतोऽनेकशाखादियुक्तस्य वृक्षस्यास्येत्यग्रतः स्थितं वृक्षं दर्शयन्नाह—यदि यः कश्चिदस्य मूलेऽभ्याहन्यात्परश्वादिना सकृद्घातमात्रेण, न शुष्यतीति जीवन्नेव भवति, तदा तस्य रसः स्रवेत् । तथा यो मध्येऽभ्याहन्याज्जीवन्स्रवेत्तथा योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत् । स एष वृक्षः इदानीं जीवेनाऽऽत्मनाऽनुप्रभूतोऽनुव्याप्तः पेपीयमानोऽत्यर्थं पिबन्नुदकं भौमांश्च रसान् मूलैर्गृह्णन् मोदमानो हर्षं प्राप्नुवंस्तिष्ठति । शंकर.

( २ ) व्यासार्यैस्तु ' ज्ञोऽत एव ' ( ब्रसू. २।३।१८ ) इत्यधिकरणे — अस्य सोम्य महतो वृक्षस्येति वृक्षशब्देन शरीरं निर्दिश्यते इत्युक्तम् ।

* रंग.

जीवस्यामर्त्यत्वम्

अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति । द्वितीयां जहात्यथ सा शुष्यति । तृतीयां जहात्यथ सा शुष्यति । सर्वं जहाति सर्वः शुष्यति ॥

तस्यास्य यदेकां शाखां रोगग्रस्तामाहतां वा जीवो जहात्युपसंहरति शाखाया विप्रसृतमात्मांशं, अथ सा शुष्यति । वाङ्मनःप्राणकरणग्रामानुप्रविष्टो हि जीव इति तदुपसंहारे उपसंह्रियते । जीवेन च प्राणयुक्तेनाशितं पीतं च रसतां गतं जीवच्छरीरं वृक्षं च वर्धयद्रसरूपेण जीवस्य सद्भावे लिङ्गं भवति । अशितपीताभ्यां हि देहे जीवस्तिष्ठति, ते चाशितपीते जीवकर्मानुसारिणी इति तस्यैकाङ्गवैकल्यनिमित्तं कर्म यदोपस्थितं भवति, तदा जीव एकां शाखां जहाति शाखाया आत्मानमुपसंहरति । अथ तदा सा शाखा शुष्यति । जीवस्थितिनिमित्तो

* शंकरवत् ।

(१) छाउ. ६।११।१.

(२) छाउ. ६।११।२; ब्रमध्व. १।४।१८.

रसो जीवकर्मक्षिप्तो जीवोपसंहारे न तिष्ठति। रसापगमे च शाखा शोषमुपैति। तथा सर्वं वृक्षमेव यदायं जहाति तदा सर्वोऽपि वृक्षः शुष्यति। वृक्षस्य रसस्रवणशोषणादिलिङ्गाज्जीववत्त्वं दृष्टान्तश्रुतेश्च चेतनावन्तः स्थावरा इति बौद्धकाणादमतमचेतनाः स्थावरा इत्येतदसारमिति दर्शितं भवति।

* शंकर.

ऐवमेव खलु सोम्य विद्धीति होवाच। जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति। स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान्विज्ञापयत्विति। तथा सोम्येति होवाच ॥

यथाऽस्मिन् वृक्षदृष्टान्ते दर्शितं जीवेन युक्तो वृक्षोऽशुष्को रसपानादियुक्तो जीवतीत्युच्यते, तदपेतश्च म्रियत इत्युच्यते। एवमेव खलु सोम्य विद्धीति होवाच। जीवापेतं जीववियुक्तं वाव किलेदं शरीरं म्रियते न जीवो म्रियत इति। कार्यशेषे च सुप्तोत्थितस्य ममेदं कार्यशेषमपरिसमाप्तमिति स्मृत्वा समापनदर्शनात्। जातमात्राणां च जन्तूनां स्तन्याभिलाषभयादिदर्शनाच्चातीतजन्मान्तरानुभूतस्तन्यपानदुःखानुभवस्मृतिर्गम्यते। अग्निहोत्रादीनां च वैदिकानां कर्मणामर्थवत्त्वान्न जीवो म्रियत इति। स य एषोऽणिमेत्यादि समानम्। कथं पुनरिदमत्यन्तस्थूलं पृथिव्यादि नामरूपवज्जगदत्यन्तसूक्ष्मात्सद्रूपान्नामरूपरहितात्सतो जायते, इत्येतद्दृष्टान्तेन भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्येति होवाच पिता।

* शंकर.

न्यग्रोधफललवणदृष्टान्तेन श्रद्धेयाणुतत्त्वसिद्धिः

[२]न्यग्रोधफलमत आहरेति। इदं भगव इति। भिन्द्धीति। भिन्नं भगव इति। किमत्र पश्यसीति। अण्व्य इवेमा धाना भगव इति। आसामङ्गैकां भिन्द्धीति। भिन्ना भगव इति। किमत्र पश्यसीति। न किंचन भगव इति ॥

(१) यद्येतत्प्रत्यक्षीकर्तुमिच्छसि अतोऽस्मान्महतो न्यग्रोधात्फलमेकमाहरेत्युक्तस्तथा चकार सः। इदं भगव उपहृतं फलमिति दर्शितवन्तं प्रत्याह— फलं भिन्द्धीति। भिन्नमित्याहेतरः। तमाह पिता —किमत्र पश्यसि, इत्युक्त आह—अण्व्योऽणुतरा इवेमा धाना बीजानि पश्यामि भगव इति। आसां धानानामेकां धानामङ्ग हे वत्स भिन्द्धि, इत्युक्त आह—भिन्ना भगव इति। यदि भिन्ना धाना तस्यां भिन्नायां किं पश्यसि, इत्युक्त आह—न किंचन पश्यामि भगव इति।

शंकर.

(२) इमानि बीजान्यणून्येव पश्यामीत्यर्थः। इवशब्दः एवार्थः।

* रंग.

तꣳ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति। श्रद्धत्स्व सोम्येति ॥

(१) तं पुत्रं होवाच — वटधानायां भिन्नायां यं वटबीजाणिमानं, हे सोम्यैतं, न निभालयसे न पश्यसि। तथाप्येतस्य वै किल सोम्यैष महान्यग्रोधो बीजस्याणिम्नः सूक्ष्मस्यादृश्यमानस्य कार्यभूतः स्थूलशाखास्कन्धफलपलाशवांस्तिष्ठत्युत्पन्नः सन्, उत्तिष्ठतीति वा, उच्छब्दोऽध्याहार्यः। अतः श्रद्धत्स्व सोम्य, सत एवाणिम्नः स्थूलं नामरूपादिमत्कार्यं जगदुत्पन्नमिति। यद्यपि न्यायागमाभ्यां निर्धारितोऽर्थः तथैवेत्यवगम्यते, तथाऽप्यत्यन्तसूक्ष्मेष्वर्थेषु बाह्यविषयासक्तमनसः स्वभावप्रवृत्तस्यासत्यां गुरुतरायां श्रद्धायां दुरवगमत्वं स्यादित्याह—श्रद्धत्स्वेति। श्रद्धायां तु सत्यां मनसः समाधानं बुभुत्सितेऽर्थे भवेत्ततश्च तदर्थावगतिः, 'अन्यत्रमना अभूवम्' इत्यादिश्रुतेः।

शंकर.

---

* रंग. शंकरवत्।

(१) छाउ. ६।११।३; ब्रशंकर. २।३।१६, १७; भास्कर. २।३।१७; विज्ञान. २।३।१७; बलदेव. २।३।१६

(२) छाउ. ६।१२।१; रंग. अण्व्य (अणव्य); श्रीकर. १।४।२८.

* शेषं शंकरवत्।

(१) छाउ. ६।१२।२; रंग. स्य वै+ (किल); श्रीकर. १।४।२८; विज्ञान. १।४।२८, २।२।११, १२, २।४।१३.

( २ ) हे सोम्य, एवं यमेतं वटबीजाणिमानं न नेभालयसे न पश्यसि किमित्यर्थः ।

* रंग.

( ३ ) 'यं वै सोम्य ०' इत्यादिश्रुतिः पार्थिवाणुप्रतिपादिका सकलमहाभूतसूक्ष्मे तस्यान्तरालोत्पत्तौ च लिङ्गम् ।

विज्ञान. २।४।१३

स[१] य एषोऽणिमैतदात्म्यमिद॰ं सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥

( १ ) स य इत्याद्युक्तार्थम् । यदि तत्सज्जगतो मूलं, कस्मान्नोपलभ्यते, इत्येतद्दृष्टान्तेन मा भगवान् भूय एव विज्ञापयत्विति । तथा सोम्येति होवाच पिता ।

शंकर.

( २ ) यदि परमात्मा कारणानुगतः कथं तर्हि तदनुपलम्भः । अनुपलम्भे च तत्र तस्यानुगतत्वे किं मानमित्यभिप्रायेण प्रार्थितस्तथेत्युक्तवानित्यर्थः ।

रंग.

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा[२] इति । स ह तथा चकार । त॰ं होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति । तद्धावमृश्य न विवेद ॥

विद्यमानमपि वस्तु नोपलभ्यते, प्रकारान्तरेण तूपलभ्यते, इति शृण्वत्र दृष्टान्तम् । यदि चेममर्थं प्रत्यक्षीकर्तुमिच्छसि पिण्डरूपं लवणमेतत् घटादावुदके, अवधाय प्रक्षिप्य, अथ मा मां, श्वः प्रातरुपसीदथा उपगच्छेथा इति । स ह पित्रोक्तमर्थं प्रत्यक्षीकर्तुमिच्छंस्तथा चकार । तं होवाच, परेद्युः प्रातर्यल्लवणं दोषा रात्रौ, उदकेऽवाधा निक्षिप्तवानस्यङ्ग हे वत्स, तदाहरेत्युक्तस्तल्लवणमाजिहीर्षुर्ह किल, अवमृश्योदके न विवेद न विज्ञातवान्, यथा तल्लवणं विद्यमानमेव सदप्सु लीनं संश्लिष्टमभूत् ।

‡ शंकर.

यथा विलीनमेव । अङ्गास्यान्तादाचामेति । कथमिति । लवणमिति । मध्यादाचामेति । कथमिति । लवणमिति । अन्तादाचामेति । कथमिति । लवणमिति । अभिप्रास्यैतदथ मोपसीदथा इति । तद्ध तथा चकार । तच्छश्वत्संवर्तते । त॰ं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥[१]

यथा विलीनं लवणं न वेत्थ, तथाऽपि तच्चक्षुषा स्पर्शनेन च पिण्डरूपं लवणमगृह्यमाणं विद्यते एवाप्सु, उपलभ्यते चोपायान्तरेण, इत्येतत्पुत्रं प्रत्याययितुमिच्छन्नाह—अङ्गास्योदकस्यान्तादुपरि गृहीत्वा आचामेत्युक्त्वा पुत्रं तथाकृतवन्तमुवाच—कथमिति । इतर आह—लवणं स्वादुत इति । तथा मध्यादुदकस्य गृहीत्वा आचामेति । कथमिति । लवणमिति । तथाऽन्तादधोदेशाद्गृहीत्वाऽऽचामेति । कथमिति । लवणमिति । यद्येवमभिप्रास्य परित्यज्यैतदुदकं, आचम्याथ मोपसीदथा इति । तद्ध तथा चकार । लवणं परित्यज्य पितृसमीपमाजगामेत्यर्थः, इदं वचनं ब्रुवन्—तल्लवणं तस्मिन्नेवोदके यन्मया रात्रौ क्षिप्तं शश्वन्नित्यं संवर्तते विद्यमानमेव सत्सम्यग्वर्तते । इत्येवमुक्तवन्तं तं होवाच पिता—यथेदं लवणं दर्शनस्पर्शनाभ्यां पूर्वं गृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमाणमपि विद्यत एव, उपायान्तरेण जिह्वयोपलभ्यमानत्वात् । एवमेव अत्रैवास्मिन्नेव तेजोबन्नादिकार्ये शुङ्गे देहे, वाव किलेत्याचार्योपदेशस्मरणप्रदर्शनार्थौ, सत्तेजोबन्नादिशुङ्गकारणं वटबीजाणिमवद्विद्यमानमेवेन्द्रियैर्नोपलभसे न निभालयसे । यथाऽत्रैवोदके दर्शनस्पर्शनाभ्यामनुपलभ्यमानं लवणं विद्यमानमेव जिह्वयोपलब्धवानसि, एवमेवात्रैव किल विद्यमानं सज्जगन्मूलमुपायान्तरेण लवणाणिमवदुपलप्स्यसे इति वाक्यशेषः ।

† शंकर.

---

* शेषं शंकरेण गतार्थम् ।

(१) छान्द. ६।१२।३.

(२) छान्द. ६।१३।१.

‡ रंग. शंकरवत् ।

† रंग. शंकरवत् । अन्तशब्दयोः शांकरव्यत्यासेनार्थः ।

(१) छान्द. ६।१३।२; विज्ञान. २।१।१६.

स[1] य एषोऽणिमैतदात्म्यमिदꣳ सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो इति। भूय एव मा भगवान्विज्ञापयत्विति। तथा सोम्येति होवाच ॥

स य इत्यादि समानम्। यद्येवं लवणाणिमवदिन्द्रियैरनुपलभ्यमानमपि जगन्मूलं सत् उपायान्तरेणोपलब्धुं शक्यते, यदुपलम्भात्कृतार्थः स्यामनुपलम्भाच्चाकृतार्थः स्यामहं, तस्यैवोपलब्धौ क उपाय इत्येतत् भूय एव मा भगवान्विज्ञापयतु दृष्टान्तेन। तथा सोम्येति होवाच।

* शंकर.

य[2]था सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्। स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥

यथा लोके हे सोम्य पुरुषं यं कंचिद्गन्धारेभ्यो जनपदेभ्योऽभिनद्धाक्षं बद्धचक्षुषं आनीय द्रव्यहर्ता तस्करः तमभिनद्धाक्षमेव बद्धहस्तमरण्ये ततोऽप्यतिजनेऽतिगतजनेऽत्यन्तविगतजने देशे विसृजेत्, स तत्र दिग्भ्रमोपेतो यथा प्राङ्वा प्रागञ्चनः प्राङ्मुखो वेत्यर्थः, तथोदङ्वाऽधराङ्वा प्रत्यङ्वा, प्रध्मायीत शब्दं कुर्याद्विक्रोशेत् — अभिनद्धाक्षोऽहं गन्धारेभ्यस्तस्करेणाऽऽनीतोऽभिनद्धाक्ष एव विसृष्ट इति। * शंकर.

ज्ञानप्राप्तये आचार्यः

त[3]स्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति। स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येत। एवमेवेहाऽऽचार्यवान्पुरुषो वेद। तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ॥

(१) एवं विक्रोशतस्तस्य यथाभिनहनं यथाबन्धनं प्रमुच्य मुक्त्वा कारुणिकः कश्चिदेतां दिशमुत्तरतो गन्धाराः एतां दिशं व्रजेति प्रब्रूयात्। स एवं कारुणिकेन बन्धनान्मोक्षितो ग्रामाद्ग्रामान्तरं पृच्छन् पण्डित उपदेशवान् मेधावी परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः सन् गन्धारानेवोपसंपद्येत, नेतरो मूढमतिर्देशान्तरदर्शनतृड्वा। यथायं दृष्टान्तो वर्णितः—स्वविषयेभ्यो गन्धारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेको दिङ्मूढोऽशनायापिपासादिमान् व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतं अरण्यं प्रवेशितो दुःखार्तो विक्रोशन् बन्धनेभ्यो मुमुक्षुस्तिष्ठति, स कथंचिदेव कारुणिकेन केनचिन्मोक्षितः स्वदेशान्गन्धारानेवाऽऽपन्नो निर्वृतः सुख्यभूत्। एवमेव सतो जगदात्मस्वरूपात्तेजोबन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रकृमिमूत्रपुरीषवच्छीतोष्णाद्यनेकद्वन्द्वदुःखवच्चेदं मोहपटाभिनद्धाक्षो भार्यापुत्रमित्रपशुबन्ध्वादिदृष्टादृष्टानेकविषयतृष्णापाशितः पुण्यापुण्यादितस्करैः प्रवेशितः, अहममुष्य पुत्रः ममैते बान्धवाः, सुख्यहं दुःखी मूढः पण्डितो धार्मिको बन्धुमाञ्जातो मृतो जीर्णः पापी, पुत्रो मे मृतः, धनं मे नष्टं, हा हतोऽस्मि, कथं जीविष्यामि, का मे गतिः, किं मे त्राणमित्येवमनेकशतसहस्रानर्थजालवान्विक्रोशन् कथंचिदेव पुण्यातिशयात्परमकारुणिकं कंचित्सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदा आसादयति, तेन च ब्रह्मविदा कारुण्याद्दर्शितसंसारविषयदोषदर्शनमार्गो विरक्तः संसारविषयेभ्यः, नासि त्वं संसार्यमुष्य पुत्रत्वादिधर्मवान्, किं तर्हि, सद्यत्तत्त्वमसि इत्यविद्यामोहपटाभिनहनान्मोक्षितो गन्धारपुरुषवच्च स्वं सदात्मानमुपसंपद्य सुखी निर्वृतः स्यादित्येतमेवार्थमाह—आचार्यवान्पुरुषो वेदेति। तस्याऽस्यैव-

* रंग. शंकरवत्।

(१) छाउ. ६।१३।३.

(२) छाउ. ६।१४।१.

(३) छाउ. ६।१४।२; ब्रशंकर. १।१।२, ७, ३।३।३२, ३।४।१, ४।१।१५, १९; भास्कर. १।१।७, ४।१।१५; रामानुज. १।१।४ ( पृ. १५८ ), १।१।७, ८, २९, ३।३।२७, ४।१।१५, १९, ४।२।८, १२, १८; निंबार्क. ३।४।५१, ४।१।१५, ४।२।८, १८; ब्रमध्व. ३।३।४४; श्रीकंठ. १।१।७, ३।३।२७, ४।१।१५, ४।२।१८; श्रीकर. १।१।७, १।३।८, ३।२।५, ३।३।२७, ४१, ४।१।१५, १९, ४।२।८, १२, २०; वल्लभ. ३।४।२३, २५, ५१, ४।१।१५; विज्ञान. १।१।३ ( पृ. ७१ ), १।१।७ ( पृ. १४० ), १।१।८ ( पृ. १४२ ), ३।३।४४, ४।१।१५, १९ तस्य यथाभिनहनं ( स यथा हि हननं ) गन्धारा ( गान्धारा ) ग्रामं पृच्छन् ( ग्रामान्तरं व्रजन् ); बलदेव. ३।३।४४, ३।४।२६, ५२, ४।१।१५.

माचार्यवतो मुक्ताविद्याभिनहनस्य, तावदेव तावानेव कालश्चिरं क्षेपः, सदात्मस्वरूपसंपत्तेरिति वाक्यशेषः। कियान्कालश्चिरमित्युच्यते, यावन्न विमोक्ष्ये न विमोक्ष्यत इत्येतत्पुरुषव्यत्ययेन, सामर्थ्यात्। येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद्देहपातो यावदित्यर्थः। अथ तदैव सत्संपत्स्ये संपत्स्यते इति पूर्ववत्। न हि देहमोक्षस्य सत्संपत्तेश्च कालभेदोऽस्ति, येनाथशब्द आनन्तर्यार्थः स्यात्।

शंकर.

(२) सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते। श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात्। तथा हि 'श्रोतव्यो मन्तव्यः' (बृउ. २।४।५) इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाऽऽचार्यवान् पुरुषो वेद' इति च पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति, न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम्। किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं, अनुभवावसानत्वात् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य। १।१।२

'अनारब्धकार्ये एव तु पूर्वे तदवधेः'— अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तरसंचिते अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते सुकृतदुष्कृते ज्ञानाधिगमात्क्षीयेते, न त्वारब्धकार्ये सामिभुक्तफले, याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम्। कुत एतत्। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति शरीरपातावधिकरणात् क्षेमप्राप्तेः।

* ब्रशंकर. ४।१।१५

(३) तैस्तैरुपदिष्टमार्गो मेधाव्युक्तार्थाविस्मरणशीलः पण्डितः ऊहापोहक्षमधीयुक्तः, एवमाचार्योपदेशेन ब्रह्मात्मकत्वमस्यतस्तदात्मकतया स्वात्मानमनुसंधत्स्वेत्युपदिष्टस्तदात्मकत्वमनुसंधत्ते। तस्यैतादृशानुसंधाननिष्ठस्य तावानेव विलम्बः यावत्प्रारब्धकर्मारब्धशरीरान्न विमोक्ष्यते। अथ तदनन्तरं तु सद्रूपं ब्रह्म संपत्स्यते। केचित्तु तस्य तावदेव चिरमित्यत्र मे इत्यध्याहारः। तस्य मे तावानेव विलम्बो यावत्कर्मभिर्न विमोक्ष्येऽतः परं ब्रह्म संपत्स्य इत्युपासकस्यानुसंधानप्रकारोऽनेन वाक्येनोच्यते इति वदन्ति।

* रंग.

(४) 'तस्य ... संपत्स्ये' इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्षे इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति। १।१।४ (पृ. १५८)

जगत्कारणोपासनस्यैवामृतत्वप्राप्त्युपायता 'तस्य... संपत्स्ये' इत्यवगता। † रामानुज। १।२९

(५) 'तथा चैकवाक्यतोपबन्धात्'—त्या। केवलश्रुतेर्विद्याप्राधान्यं तथैवोपाख्यानश्रुतीनामित्यर्थः। चकारेण प्रश्नोत्तरैर्निर्णीतार्थप्रतिपादनं, महतामेवात्र प्रवृत्तिः, साऽपि बह्वायासपूर्विकेति विद्यामाहात्म्यज्ञापनं प्ररोचनञ्चाधिकमुपाख्यानानामुपाख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशादित्युच्यते। तत्र हेतुरेकवाक्यतोपबन्धादिति। 'आचार्यवान् पुरुषो वेद' इति श्रुत्यैकवाक्यताज्ञानमाख्यानं विना न भवतीति तदर्थमुपबन्धात् गुरुशिष्यकथोपबन्धादित्यर्थः। ३।४।२३

'एवं मुक्तिफलानियमस्तदवस्थाधृतेस्तदवस्थाधृतेः'— ननु 'तस्य ... संपत्स्ये' इति श्रुतौ मुक्त्यनन्तरं ब्रह्मसंपत्तिः श्रूयते। सा तु पुरुषोत्तमसङ्गे लीलारसानुभवातिरिक्ता वक्तुमशक्या। मुक्तोपसृप्यव्यपदेशात्। 'मुक्तानामपि सिद्धानां नारायणपरायणः। सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥' इति स्मृतेश्च। मुक्तेः फलं भक्तिरसानुभव एवं सत्युक्तग्रहिणस्तत्फलं भवति न वेति संशये निर्णयमाह। एवं भूतस्योक्तरूपस्य मुक्तस्य मुक्तेर्यत्फलं भक्तिरसानुभवस्तस्यानियमस्तस्य भगवदिच्छाधीनत्वात्, साधनाप्राप्यत्वात्। अत एव 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम्' इति शुकवाक्यम्। अत्रौत्सर्गिकहेतुमाह—तदवस्थेति। न स पुनरावर्तत इत्यस्यावृत्त्या मुक्त्यवस्थाया एव सार्वदिकत्वेन निर्धारः

* भास्कर. ब्रशंकरवत्।

* शेषं शंकरवत्।

† निंबार्क. श्रीकंठ. रामानुजवत्। विज्ञान. तैउ. २।९ (पृ. ७३५) इत्यत्रोद्धृतं व्याख्यानं द्रष्टव्यम्।

क्रियते । यद्यप्येवं मुक्तिफलभावनियम एवायाति, न तु तदनियमस्तथापि 'तस्य तावदेव चिरम्' इत्यादिप्रमाणैः 'न स पुनरावर्तते' इति श्रुत्या सम विरोधाभावायौत्सर्गिकी तदवस्था । तत्फलं तु कस्यचिदत्यनुग्रहेण पुष्टौ प्रवेशने भवतीति स्वाभिप्रायं प्रकटीकुर्वता बादरायणेन अनियम इत्युक्तम् । एवं सति 'न स पुनरावर्तते' इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति, न तु तदतीतेऽपीति ज्ञेयम् । समाप्तिज्ञापनायावृत्तिः । अथवा श्रुतौ तदवस्थावधृतेर्हेतोरस्माकमपि तदवस्थावधृतिर्यतोऽतः फलाऽनियमनिश्चयोऽपीत्यर्थः । एवं सति मुक्तिपर्यन्तं साधनं भगवद्भाव इति निर्णयः संपन्नः ।

वल्लभ. ३।४।५१

[१]स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥

( १ ) स य इत्याद्युक्तार्थम् । आचार्यवान्विद्वान् येन क्रमेण सत्संपद्यते, तं क्रमं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ।

शंकर.

( २ ) ननु देहविमोक्षानन्तरं ब्रह्मसंपत्तिरित्ययुक्तम् । देवोऽहं मनुष्योऽहमित्यभिमानस्य कदाऽप्यनुपरततया यावदात्मभावित्वेन देवादिशरीरसंबन्धस्यापि यावदात्मभावित्वादतो देहराहित्योपजीविनी ब्रह्मसंपत्तिरपि न श्रद्धेयेति मन्वानेन श्वेतकेतुना भूय एव मा भगवान् विज्ञापयत्विति प्रार्थितस्तथेत्युवाचेत्यर्थः ।

रंग.

म्रियमाणस्य सत्संपत्तिः

[२]पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति । तस्य यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥

(१) छाउ. ६।१४।३.

(२) छाउ. ६।१५।१; रंग. सोम्योतोपता ( सोम्यो- पता ); ब्रमध्व. ४।२।१.

पुरुषं हे सोम्योतोपतापिनं ज्वराद्युपतापवन्तं ज्ञातयो बान्धवाः परिवार्योपासते मुमूर्षुं, जानासि मां तव पितरं पुत्रं भ्रातरं वेति पृच्छन्तस्तस्य मुमूर्षोर्यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया-मित्येतदुक्तार्थम् ।

* शंकर.

[१]अथ यदाऽस्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥

( १ ) संसारिणो यो मरणक्रमः स एवायं विदुषोऽपि सत्संपत्तिक्रम इत्येतदाह — परस्यां देवतायां तेजसि संपन्नेऽथ न जानाति । अविद्वांस्तु सत उत्थाय प्राग्भावितं व्याघ्रादिभावं देवमनुष्यादिभावं वा विशति । विद्वांस्तु शास्त्राचार्योपदेशजनितज्ञानदीपप्रकाशितं सद्ब्रह्मात्मानं प्रविश्य न आवर्तते इत्येष सत्संपत्तिक्रमः । अन्ये तु मूर्धन्यया नाड्योत्क्रम्य आदित्यादिद्वारेण सद्गच्छन्तीत्याहुस्तदसत् । देशकालनिमित्तफलाभिसंधानेन गमनदर्शनात् । न हि सदात्मैकत्वदर्शिनः सत्याभिसंधस्य देशकालनिमित्तफलाद्यनृताभिसंधिरुपपद्यते, विरोधात् । अविद्याकामकर्मणां च गमननिमित्तानां सद्विज्ञानहुताशनविप्लुष्टत्वाद्गमनानुपपत्तिरेव, 'पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः' इत्याद्याथर्वणे, नदीसमुद्रदृष्टान्तश्रुतेश्च ।

शंकर.

( २ ) सत्संपत्त्यनन्तरं तु तान्न जानातीत्यर्थः । ततश्च सर्वेषां मरणदशायां सत्संपत्तौ देहाभिमानानानुवृत्तेस्तत्प्रयुक्तदेहसंबन्धनित्यताशङ्काया असंभवात् 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति देहसंबन्धात्यन्तनिवृत्तिप्रतिपादकश्रुतेर्नानुपपत्तिरिति भावः ।

रंग.

[२]स य एषोऽणिमैतदात्म्यमिदꣳ सर्वम् । तत्सत्यम् । स आत्मा । तत्त्वमसि श्वेतकेतो इति । भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच ॥

* रंग. शंकरवत् । ब्रमध्व. छाउ. ६।८।६ (पृ. ९१२ ) इत्यत्र द्रष्टव्यम् ।

(१) छाउ. ६।१५।२. (२) छाउ. ६।१५।३.

(१) स य इत्यादि समानम्। यदि मरिष्यतो मुमुक्षतश्च तुल्या सत्संपत्तिस्तत्र विद्वान् सत्संपन्नो न आवर्तते, आवर्तते त्वविद्वानित्यत्र कारणं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच। शंकर.

(२) प्रारब्धविमोक्षानन्तरभाविसंपत्तिकर्मत्वेन पूर्वखण्डिकानिर्दिष्टः सच्छब्दितः स एषोऽणुरित्यर्थः। ननु देवमनुष्यादिरूकृत्यात्मकत्वाभिसंधानादनर्थो भवति सदात्मकत्वाभिसंधानादनर्थनिवृत्तिरिति न श्रद्धेयम्। न ह्यभिसंधिभेदमात्रेण महापुरुषार्थापुरुषार्थौ दृष्टचराविति मन्यमानेन श्वेतकेतुना भूय एव मा भगवान्विज्ञापयत्विति प्रार्थितस्तथाऽस्त्वित्युवाचेत्यर्थः।

रंग.

सत्याभिसंधस्य मोक्षः

[१]पुरुषꣳ सोम्योत हस्तगृहीतमानयन्ति। अपहार्षीत्, स्तेयमकार्षीत्, परशुमस्मै तपतेति। स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते। सोऽनृताभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स दह्यते। अथ हन्यते॥

शृणु यथा सोम्य पुरुषं चौर्यकर्मणि संदिह्यमानं निग्रहाय परीक्षणाय चोतापि हस्तगृहीतं बद्धहस्तमानयन्ति राजपुरुषाः। किं कृतवानयमिति पृष्टाश्च आहुः अपहार्षीद्धनमस्यायम्। ते चाहुः किमपहरणमात्रेण बन्धनमर्हतीति। अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गादित्युक्ताः पुनराहुः—स्तेयमकार्षीच्चौर्येण धनमपहार्षीदिति। तेष्वेवं वदत्स्वितरोऽपह्नुते नाहं तत्कर्तेति। ते चाहुः—संदिह्यमानं स्तेयमकार्षीस्त्वमस्य धनस्येति। तस्मिंश्चापह्नुवाने आहुः—परशुमस्मै तपतेति शोधयत्वात्मानमिति। स यदि तस्य स्तैन्यस्य कर्ता भवति, बहिश्चापह्नुते, स एवंभूतस्तत एवानृतमन्यथाभूतं सन्तमन्यथाऽऽत्मानं कुरुते, स तथाऽनृताभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात्प्रतिगृह्णाति, स दह्यते, अथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसंधिदोषेण। * शंकर.

* रंग. शंकरवत्।

(१) छाउ. ६।१६।१; विज्ञान. ३।३।४८.

[१]अथ यदि तस्याकर्ता भवति। तत एव सत्यमात्मानं कुरुते। स सत्याभिसंधः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति। स न दह्यते। अथ मुच्यते॥

अथ यदि तस्य कर्मणोऽकर्ता भवति, तत एव सत्यमात्मानं कुरुते, स सत्येन तथा स्तैन्याकर्तृतयाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति, स सत्याभिसंधः सन्न दह्यते सत्यव्यवधानादथ मुच्यते च मृषाभियोक्तृभ्यः। तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसंधो दह्यते न तु सत्याभिसंधः। * शंकर.

[२]स यथा तत्र नादाह्येत। ऐतदात्म्यमिदꣳ सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो इति। तद्धास्य विजज्ञाविति विजज्ञाविति॥

(१) स यथा सत्याभिसंधस्तप्तपरशुग्रहणकर्मणि सत्यव्यवहितहस्ततलत्वान्नादाह्येत न दह्येतेत्येतत्, एवं सद्ब्रह्म सत्याभिसंधेतरयोः शरीरपातकाले च तुल्यायां सत्संपत्तौ विद्वान् सत्संपद्य न पुनर्व्याघ्रदेवादिदेहग्रहणायाऽऽवर्तते। अविद्वांस्तु विकारानृताभिसंधः पुनर्व्याघ्रादिभावं देवतादिभावं वा यथाकर्म यथाश्रुतं प्रतिपद्यते। यदात्माभिसंध्यनभिसंधिकृते मोक्षबन्धने, यच्च मूलं जगतः, यदायतना यत्प्रतिष्ठाश्च सर्वाः प्रजाः, यदात्मकं च सर्वं, यच्चाजममृतमभयं शिवमद्वितीयं, तत्सत्यं स आत्मा तव, अतस्तत्त्वमसि हे श्वेतकेतो इत्युक्तार्थमसकृद्वाक्यम्। कः पुनरसौ श्वेतकेतुस्त्वंशब्दार्थः योऽहं श्वेतकेतुरुद्दालकस्य पुत्र इति वेदाऽऽत्मानमादेशं श्रुत्वा मत्वा विज्ञाय च, अश्रुतममतमविज्ञातं विज्ञातुं पितरं पप्रच्छ, 'कथं नु भगवः स आदेशो भवति' इति। स एषोऽविकृतः श्रोता मन्ता विज्ञाता तेजोबन्नमयं कार्यकरणसंघातं प्रविष्टा परैव देवता नामरूपव्याकरणायाऽऽदर्शे इव पुरुषः सूर्यादिरिव

* रंग. शंकरवत्।

(१) छाउ. ६।१६।२; विज्ञान. ३।३।४८.

(२) छाउ. ६।१६।३; ब्रशंकर. ३।१।१४; रंग. नादाह्येत (न दाह्येत); विज्ञान. ३।३।४८.

जलादौ प्रतिबिम्बरूपेण । स आत्मानं कार्यकरणेभ्यः प्रविभक्तं सद्रूपं सर्वात्मानं प्राक् पितुः श्रवणान्न विजज्ञौ । अथेदानीं पित्रा प्रतिबोधितस्तत्त्वमसीति दृष्टान्तैर्हेतुभिश्च, तत् पितुरस्य ह किलोक्तं सदेवाहमस्मि इति विजज्ञौ विज्ञातवान् । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ।

शंकर.

( २ ) अत्र व्याचार्यैस्तद्धास्य विजज्ञाविस्यत्र विजज्ञाविति पदमविज्ञातं विज्ञातमिति प्रक्रमश्रुतविज्ञानशब्दस्योपासनार्थकत्व उपासनावचनमित्युक्तम् । तत्तु सम्भवाभिप्रायेण । पूर्वत्राष्टमखण्डेऽभ्यस्तेन भूय एव मा भगवान्विज्ञापयत्विति वाक्येन तन्मे विजानीहीति वाक्येन च प्रस्तुतविज्ञानविषयत्वादस्य विजज्ञाविति पदस्य तत्र च वाक्य उपासनप्रसक्तेरभावात् ।

केचित्तु त्रिवृत्करणप्रकरण इवात्र श्रुतानां विज्ञानशब्दानामुपासनार्थत्वे दोषाभावादेतेषां विज्ञानशब्दानामुपासनार्थत्वमेव । अथ वा मध्ये विज्ञानशब्दानामतथात्वेऽप्युपक्रमोपसंहारैकरूप्यार्थमुपक्रमस्थविज्ञानशब्दवदुपसंहारस्थं विजज्ञाविति पदमुपासनार्थमेवेति वदन्ति ।

* रंग.

इति षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः

( भूमब्रह्मविद्या )

ब्रह्मत्वेनोपास्यानि नामवाङ्मनःसंकल्पचित्तध्यान-
विज्ञानबलान्नतेजआकाशस्मराशाप्राणरूपाणि
तत्त्वानि उत्तरोत्तरविशिष्टानि

**अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तꣳ होवाच । यद्वेत्थ तेन मोपसीद । ततस्त ऊर्ध्वं वक्ष्यामीति । स होवाच ॥**

( १ ) तत्त्वमर्थतत्त्वोपदेशप्रधानपरः षष्ठोऽध्यायः सदात्मैकत्वनिर्णयपरतयैवोपयुक्तः । न सतोऽर्वाग्विकारलक्षणानि तत्त्वानि निर्दिष्टानि । इत्यतस्तानि नामादीनि प्राणान्तानि क्रमेण निर्दिश्य तद्द्वारेणापि भूमाख्यं निरतिशयं तत्त्वं निर्देक्ष्यामि शाखाचन्द्रदर्शनवदितीदं सप्तमं प्रपाठकमारभ्यते । अनिर्दिष्टेषु हि सतोऽर्वाक् तत्त्वेषु सन्मात्रे च निर्दिष्टेऽन्यदप्यविज्ञातं स्यादित्याशङ्का कस्यचित्स्यात्, सा मा भूदिति वा तानि निर्दिदिक्षति । अथवा सोपानारोहणवत्स्थूलादारभ्य सूक्ष्मं सूक्ष्मतरं च बुद्धिविषयं ज्ञापयित्वा तदतिरिक्ते स्वाराज्येऽभिषेक्ष्यामीति नामादीनि निर्दिदिक्षति । अथवा नामाद्युत्तरोत्तरविशिष्टानि तत्त्वान्यतितरां च तेषामुत्कृष्टतमं भूमाख्यं तत्त्वमिति तत्स्तुत्यर्थं नामादीनां क्रमेणोपन्यासः । आख्यायिका तु परविद्यास्तुत्यर्था । कथम् । नारदो देवर्षिः कृतकर्तव्यः सर्वविद्योऽपि सन्ननात्मज्ञत्वाच्छुशोचैव, किमु वक्तव्यमन्योऽल्पविज्जन्तुरकृतपुण्यातिशयोऽकृतार्थ इति । अथवा नान्यदात्मज्ञानान्निरतिशयश्रेयःसाधनमस्तीत्येतत्प्रदर्शनार्थं सनत्कुमारनारदाख्यायिका आरभ्यते । येन सर्वविज्ञानसाधनशक्तिसंपन्नस्यापि नारदस्य देवर्षेः श्रेयो न बभूव, येनोत्तमाभिजनविद्यावृत्तसाधनशक्तिसंपत्तिनिमित्ताभिमानं हित्वा प्राकृतपुरुषवत्सनत्कुमारमुपससाद श्रेयःसाधनप्राप्तये, अतः प्रख्यापितं भवति निरतिशयश्रेयःप्राप्तिसाधनत्वमात्मविद्याया इति । अधीह्यधीष्व, भगवो भगवन्, इति ह किलोपससाद । अधीहि भगव इति मन्त्रः । सनत्कुमारं योगीश्वरं ब्रह्मिष्ठं नारदः उपसन्नवान् । तं न्यायतः उपसन्नं होवाच, यदात्मविषये किंचिद्वेत्थ तेन तत्प्रख्यापनेन मामुपसीद, इदमहं जाने इति, ततोऽहं भवतो विज्ञानात् ते तुभ्यमूर्ध्वं वक्ष्यामीत्युक्तवति स होवाच नारदः ।

* शंकर.

( २ ) ‘ संस्कारपरामर्शात्तदभावाभिलापाच्च ’— इतश्च न शूद्रस्याधिकारो यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते । ‘ तं होपनिन्ये ’ ( शब्रा. ११।५।३।१३ ) इति । ‘ अधीहि भगव इति

---

* शेषं शंकरवत् ।

(१) छाउ. ७।१।१; ब्रशंकर. १।३।३६; श्रीकर. १।३।३६; वल्लभ. १।३।८, ३६, ३।३।४४, ३।४।१२, २२, २३; बलदेव. ३।३।२०, ३।४।१२.

* रंग. शंकरेण गतार्थम् । ‘ स होवाच ’ इत्यादि द्वितीयं वाक्यम् ।

ह्योपससाद ' इति । ' ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषणमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ' ( प्रउ. १।१ ) इति च । 'तान् हानुपनीयैव' (छाउ. ५।११।७) इत्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति । शूद्रस्य संस्काराभावोऽभिलप्यते । शूद्रश्चतुर्थो वर्ण एकजातिः ( मस्मृ. १०।४ ) इत्येकजातित्वस्मरणात् । ' न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ' (मस्मृ. १०।१२६ ) इत्यादिभिश्च ।

' तदभावनिर्धारणे च प्रवृत्तेः ' — इतश्च न शूद्रस्याधिकारः । यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते — ' नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः ' ( छाउ. ४।४।५ ) इति श्रुतिलिङ्गात् । * ब्रशांकर. १।३।३६, ३७

( ३ ) ' लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ' — ननु प्रतिबन्धककालादृष्टादिसद्भावेऽपि वरणकार्यं स्यादुत तन्निवृत्ताविति संशये प्रतिबन्धकाभावस्य सर्वत्र हेतुत्वात् तन्निवृत्तावेव तथेति पूर्वपक्षे सिद्धान्तमाह—लिङ्गेत्यादिना । सामोपनिषत्सु नवमे प्रपाठके सनत्कुमारनारदसंवादे प्रथमतः एव मुख्या ब्रह्मविद्योपदेशार्हा न भवतीति ज्ञात्वा सनत्कुमारो नारदाधिकारं च ज्ञातुं यद्वेत्थ तेन मोपसीदेत्युक्तवान् । नारदः स्वयंविदितमृग्वेदादिसर्पदेवजनविद्यान्तमुक्त्वा, ' सोऽहं भगवो मन्त्रविदेवास्मि ' इति स्वाधिकारमुक्त्वाह—' नात्मविच्छ्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचिमि तं मां भगवाञ्छोकस्य पारं तारयतु ' इति । नारदेनोक्तः सनत्कुमारः पूर्वस्मात्पूर्वस्मात् भूयो वदेति पृष्टः—भूयःपदमधिकार्थकं—नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नापस्तेजआकाशस्मराऽऽशाप्राणान् ब्रह्मत्वेनोपासनाविषयत्वेनोक्त्वा प्राणोपासकस्यातिवादित्वं सत्यवादित्वेनोक्त्वा विजिज्ञासितव्यत्वेन सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनोत्तरोत्तराण्युक्त्वा सुखस्वरूपजिज्ञासायामाह, ' यो वै भूमा तत्सुखम् ' इति । भूम्नः स्वरूपजिज्ञासायामाह—'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ' इति । एतेन सर्वात्मभावस्वरूपमेवोक्तं भवति । तत्र विरहभावेऽतिविगाढभावेन सर्वत्र तदेव स्फुरतीति, स एवाधस्तादित्यादिनोक्त्वा कदाचित् स्वस्मिन्नेव भगवत्स्वस्फूर्तिरपि भवतीत्यथाहङ्कारादेश इत्यादिना तामुक्त्वैतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिमाह—अथात आत्मादेश इत्यादिना । ततः संयोगभावे सति पूर्वभावेन सर्वोपमर्दिना स्वप्राणादिसर्वतिरोधानेनाऽग्रिमलीलाऽनुपयोगित्वं न शङ्कनीयम् । यतो भगवत एव सर्वसंपत्तिरित्याशयेन ' तस्य ह वा एतस्यैवं पश्यतः' इत्युपक्रम्य आत्मन एवेदं सर्वमित्युक्तवान् । ततः श्लोकैस्तद्भावस्वरूपमुक्त्वैतस्य मूलकारणमाह—आहारशुद्धावित्यादिना । प्राणपोषको ह्याहारस्तस्य सदोषत्वे तु न किंचित् सिध्यति । एवं सति भगवदतिरिक्तस्य स्वतो निर्दोषत्वाभावाद्भगवानेव चेत् प्राणपोषको भवेत्तदा सर्वं संपद्यते । स च सर्वात्मभावे सत्येव भवति । स च तथा तद्वरणं विना न भवति । तच्चोक्तकार्यानुमेयमिति वरणलिङ्गं सर्वात्मभावस्तस्यैव भूयस्त्वात् सर्वतोऽधिकत्वात्तद्वरणमेव सर्वतः कालादेर्बलीय इत्यर्थः । यल्लिङ्गमेव सर्वतोऽधिकं तस्य तथात्वे किं वाच्यमिति कैमुतिकन्यायोऽपि सूचितः । ज्ञानमार्गीयज्ञानेन प्रतिबन्धशङ्कायामाह — तदपीति । उक्तमिति शेषः । ' अन्तरा भूतग्रामवत् स्वात्मनः ' इति सूत्रेण तच्चोपपादितमस्माभिः ।

* वल्लभ. ३।३।४४

[१]ऋग्वेदं भगवोऽध्येमि यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्याम् । एतद्भगवोऽध्येमि ॥

---

* श्रीकर. ब्रशांकरवत् ।

* व्याख्यानमिदं सकलसप्तमाध्यायार्थसंग्रहालोचनरूपमित्यत्रानुसंधेयम् ।

(१) छाउ. ७।१।२; रामानुज. २।२।४२; बलदेव. ३।४।१२.

(१) ऋग्वेदं भगवोऽध्येमि स्मरामि, यद्वेत्थेति विज्ञानस्य पृष्टत्वात्। तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदं, वेदशब्दस्य प्रकृतत्वादितिहासपुराणं पञ्चमं वेदं वेदानां भारतपञ्चमानां, वेदं व्याकरणमित्यर्थः। व्याकरणेन हि पदादिविभागशः ऋग्वेदादयो ज्ञायन्ते। पित्र्यं श्राद्धकल्पम्। राशिं गणितम्। दैवमुत्पातज्ञानम्। निधिं महाकालादिनिधिशास्त्रम्। वाकोवाक्यं तर्कशास्त्रम्। एकायनं नीतिशास्त्रम्। देवविद्यां निरुक्तम्। ब्रह्मण ऋग्यजुःसामाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पच्छन्दश्चितयः। भूतविद्यां भूततन्त्रम्। क्षत्रविद्यां धनुर्वेदम्। नक्षत्रविद्यां ज्यौतिषम्। सर्पदेवजनविद्यां सर्पविद्यां गारुडं, देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि। एतत्सर्वं हे भगवोऽध्येमि।

शंकर.

(२) एकायनमेकायनशाखाम्। देवविद्या देवतोपासनप्रकारविद्या। सर्पविद्या गारुडविद्या। देवविद्या गान्धर्वशास्त्रम्। जनविद्याऽऽयुर्वेदः। * रंग.

**सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मवित्। श्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति। सोऽहं भगवः शोचामि। तं मा भगवाञ्छोकस्य पारं तारयत्विति। तꣳ होवाच, यद्वै किंचैतदध्यगीष्ठा नामैवैतत्॥**

(१) सोऽहं भगव एतत्सर्वं जानन्नपि मन्त्रविदेवास्मि शब्दार्थमात्रविज्ञानवानेवास्मीत्यर्थः। सर्वो हि शब्दोऽभिधानमात्रं, अभिधानं च सर्वं मन्त्रेष्वन्तर्भवति। मन्त्रविदेवास्मि, मन्त्रवित्कर्मविदित्यर्थः। 'मन्त्रेषु कर्माणि' इति हि वक्ष्यति। नाऽऽत्मविन्नाऽऽत्मानं वेद्मि। सोऽहं मन्त्रवित्कर्मविदेवास्मि, कर्मकार्यं च सर्वं विकार इति विकारज्ञ एवास्मि, नात्मविन्नाऽऽत्मप्रकृतिस्वरूपज्ञ इत्यर्थः। अत एवोक्तम् 'आचार्यवान्पुरुषो वेद' इति, 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिभ्यश्च। श्रुतमागमज्ञानमस्त्येव, हि यस्मात्, मे मम, भगवद्दृशेभ्यो युष्मत्सदृशेभ्यः, तरति अतिक्रामति शोकं मनस्तापमकृतार्थबुद्धितामात्मवित्, इत्यतः, सोऽहमनात्मवित्त्वाद्धे भगवः, शोचाम्यकृतार्थबुद्ध्या संतप्ये सर्वदा, तं मा मां, शोकस्य शोकसागरस्य, पारमन्तं, भगवांस्तारयत्वात्मज्ञानोडुपेन कृतार्थबुद्धिमापादयत्वभयं गमयत्वित्यर्थः। तमेवमुक्तवन्तं होवाच—यद्वै किंचैतदध्यगीष्ठा अधीतवानसि। अध्ययनेन तदर्थज्ञानमुपलक्ष्यते। ज्ञातवानसीत्येतत्। नामैवैतत्। 'वाचाऽऽरम्भणं विकारो नामधेयम्' इति श्रुतेः।

शंकर.

(२) मन्त्रविदेवास्मि शब्दब्रह्मनिष्ठ एवास्मि। यद्वा मन्त्रप्रधानकर्मनिष्ठ इति वाऽर्थः। अत्र तेषां नामैवाऽऽत्मेति प्रतिवचने दातव्ये नामैवैतदित्यधीतग्वेदादिसामानाधिकरण्येन प्रतिवक्तुः सामानाधिकरण्यनिर्देशाईत्वमेवाऽऽत्मत्वमिति भावः।

* रंग.

(३) दुःखनिवृत्तिरेव पुरुषार्थः स्यात् 'तरति शोकमात्मवित्' 'अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' 'विद्वान्हर्षशोकौ जहाति' इत्यादिश्रुतेः। अविद्यानिवृत्त्यादीनां पुरुषार्थत्ववचनं च तद्धेतुतयैव। लोके सुखदुःखाभावयोरेव स्वत इष्यमाणत्वादिति। १।१।२ (पृ. ६५)

'विभागः शतवत्' — यथा शतं दीयतामित्येकवाक्योपात्तस्यैकस्यैव शतस्य संप्रदानभेदेनानेकधा विभागो भवति, तथैव 'तरति शोकमात्मवित्' इत्याद्येकवाक्योपात्ताया एकरूपाया अपि विद्यायाः अधिकारिभेदेन फलभेदेन चाङ्गत्वप्रधानत्वसमुच्चितत्वविभाग इत्यर्थः। विज्ञान. ३।४।११

---

* शेषं शंकरवत्। 'वेदानां' इति पदं उत्तरान्वयि।

(१) छाउ. ७।१।३; ब्रशंकर. १।१।४ (पृ. ६२), १।३।८, १।४।१४, ३।४।१; भास्कर. १।३।८, ३।४।१; रामानुज. १।१।४ (पृ. १५४), १।३।७, २।२।४२; श्रीकंठ. १।१।२ (पृ. १२७); श्रीकर. १।१।१ (पृ. १९), १।१।२ (पृ. ३१), १।३।८, २।१।६, ३।१।२०, ३।२।४, ३।३।५१, ३।४।१, ४२, ५१, ४।४।२२; वल्लभ. १।३।८, ३।३।३३, ४४, ४५, ४९, ३।४।१२; विज्ञान. १।१।२ (पृ. ६६), १।१।७ (पृ. १४१), ३।४।१, ११, ४।१।१४; बलदेव. ३।४।१.

* शेषं शंकरवत्। वल्लभ. छाउ. ७।१।१ (पृ. ९००) इत्यत्र द्रष्टव्यम्।

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या । नामैवैतत् । नामोपास्स्वेति ॥**

नाम वा, ऋग्वेदो यजुर्वेद इत्यादि नामैवैतत् । नामोपास्स्व ब्रह्मेति ब्रह्मबुद्ध्या । यथा प्रतिमां विष्णुबुद्ध्योपास्ते, तद्वत् ।

* शंकर.

**स यो नाम ब्रह्मेत्युपास्ते । यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्ते । अस्ति भगवो नाम्नो भूय इति । नाम्नो वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥**

(१) स यस्तु नाम ब्रह्मेत्युपास्ते, तस्य यत्फलं भवति, तच्छृणु — यावन्नाम्नो गतं नाम्नो गोचरं, तत्र तस्मिन्नामविषये, अस्य यथाकामचारः कामचरणं राज्ञ इव स्वविषये भवति । यो नाम ब्रह्मेत्युपास्त इत्युपसंहारः । किमस्ति भगवो नाम्नो भूयोऽधिकतरं यद्ब्रह्मदृष्ट्यर्हमन्यदित्यभिप्रायः । सनत्कुमार आह— नाम्नो वाव भूयोऽस्त्येव इत्युक्त आह— यद्यस्ति तन्मे भगवान्ब्रवीत्विति ।

शंकर.

(२) 'विशेषं च दर्शयति' — नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात्फलविशेषमुत्तरस्मिन्नुत्तरस्मिन्नुपासने दर्शयति—'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' 'वाग्वाव नाम्नो भूयसी' (छाउ. ७।२।१) 'यावद्वाचो गतं तत्रास्य यथाकामचारो भवति' (छाउ. ७।२।२) 'मनो वाव वाचो भूयः' (छाउ. ७।३।१) इत्यादिना । स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते । ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात्कथं फलविशेषः स्यात् । तस्मान्न प्रतीकालम्बनानामितरैस्तुल्यफलत्वमिति ।

‡ ब्रशंकर. ४।३।१६

(३) आत्मानं जिज्ञासमानं प्रति ब्रह्मत्वेन नामोपदर्शनस्याऽऽत्मत्वब्रह्मत्वे अन्यूनातिरिक्तवृत्तिधर्माविति भावः । ब्रह्मशब्दप्रवृत्तिनिमित्तं बृहत्त्वं नाम्नि न पुष्कलमिति मत्वा नामोपदेशेनापरितुष्टः सन्नारदः पृच्छति— अस्ति भगवो नाम्नो भूय इति । वैपुल्यार्थाद्बहुशब्दादातिशायनिक ईयसुन्प्रत्यये भूय इति रूपम् । किं नाम्नोऽपि विपुलतरं किंचिदस्तीति प्रश्नार्थः । वैपुल्यं च गुणोत्कर्षकृतं द्रष्टव्यं न तु परिमाणात्कृतं तथैवोत्तरत्र प्रपञ्चनादिति द्रष्टव्यम् । अत्र नाम्नो बृहत्त्वलक्षणब्रह्मत्वे कथिते ततोऽपि किं बृहदस्तीति प्रष्टव्ये ततोऽपि किं भूयोऽस्तीति प्रश्नाद्भूयस्त्वं बृहत्त्वं चैकमिति ज्ञाप्यते ।

* रंग.

(४) नाम ब्रह्मेत्युपास्त इत्यादिना शब्दभ्रान्त्या न प्रतिके ब्रह्मदृष्टिः कार्या । किंतु तत्स्थत्वेनैवोपासनं कार्यम् । ब्रह्मतर्के च — 'नामादिप्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति । नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते । सर्वार्था प्रथमा यस्मात्सप्तम्यर्था ततो मता ॥' इति ।

ब्रमध्व. ४।१।४

(५) ननु ब्रह्मणोऽधिकं न किञ्चिदस्ति । 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वेउ. ६।८) इति श्रुतेः।एवं सति छान्दोग्ये सनत्कुमारनारदसंवादे 'स यो नाम ब्रह्मेत्युपास्ते' इत्यादिना नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानादीनां ब्रह्मत्वेनोपासनमुत्तरोत्तरं पूर्वस्मात् पूर्वस्मात् भूयस्त्वं चोच्यतेऽतो न ब्रह्मत्वं सर्वेषामुपास्यानां वक्तुं शक्यमिति चेत् । मैवम् । विभूतिरूपाणां

---

* रंग. शंकरवत् ।

(१) छाउ. ७।१।४; रंग. जनविद्या (जनविद्याः); वल्लभ. ३।३।४६.

(२) छाउ. ७।१।५; ब्रशंकर. १।३।८, ३।३।६०, ४।१।४, ४।३।१६; भास्कर. १।३।८, ३।३।६०, ४।१।४, ४।३।१५; रामानुज. १।२।१६, १।३।७, ४।१।४, ४।३।१५; निंबार्क. ४।३।१५, ब्रमध्व. ४।१।४; श्रीकंठ. १।३।७; श्रीकर. १।३।८, ३।३।५५, ५६, ५९; वल्लभ. ४।३।१६; विज्ञान. ४।३।१६; बलदेव. ४।३।१५.

‡ छाउ. ३।१५।२ (पृ. ८९३), ३।१८।१ (पृ. ८१९) इत्यत्रापि द्रष्टव्यम् । भास्कररामानुजौ ब्रशंकरवत् ।

* शेषं शंकरवत् ।

नियतफलदातृत्वात् येन रूपेणाल्पफलदानं तत्राधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्रगुणप्रकटनं येन रूपेण ततोऽधिकफलदानं तत्र ततोऽधिकगुणप्रकटनमिति पूर्वस्मादाधिक्यमुच्यते । एवमेव सर्वत्र । नियतफलदानं तु स्वतन्त्रेच्छत्वाल्लीलारूपमिति नानुपपन्नं किञ्चित् ।

वल्लभ. ४।३।१६

वाग्वाव नाम्नो भूयसी । वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्श्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च । यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञः । वागेवैतत्सर्वं विज्ञापयति । वाचमुपास्स्वेति ॥

वाग्वाव । वागितीन्द्रियं जिह्वामूलादिष्वष्टसु स्थानेषु स्थितं वर्णानामभिव्यञ्जकम् । वर्णाश्च नाम, इति नाम्नो वाग्भूयसीत्युच्यते । कार्याद्धि कारणं भूयो दृष्टं लोके, यथा पुत्रात्पिता तद्वत् । कथं च वाङ्नाम्नो भूयसीत्याह—वाग्वा ऋग्वेदं विज्ञापयति, अयमृग्वेद इति । तथा यजुर्वेदमित्यादि समानम् । हृदयज्ञं हृदयप्रियम् । तद्विपरीतमहृदयज्ञम् । यत् यदि, वाङ्नाभविष्यत्, धर्मादि न व्यज्ञापयिष्यत्, वागभावेऽध्ययनाभावोऽध्ययनाभावे तदर्थश्रवणाभावस्तच्छ्रवणाभावे धर्मादि न व्यज्ञापयिष्यत् न विज्ञातमभविष्यदित्यर्थः । तस्माद्वागेवैतच्छब्दोच्चारणेन सर्वं विज्ञापयति, अतो भूयसी वाङ्नाम्नः, तस्माद्वाचं ब्रह्मेत्युपास्स्व । *शंकर.

स यो वाचं ब्रह्मेत्युपास्ते । यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते । अस्ति भगवो वाचो भूय इति । वाचो वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥

समानमन्यत् । *शंकर.

मनो वाव वाचो भूयः । यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति । स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते । कर्माणि कुर्वीयेत्यथ कुरुते । पुत्राꣳश्च पशूꣳश्चेच्छेयेत्यथेच्छते । इमं च लोकममुं चेच्छेयेत्यथेच्छते । मनो ह्यात्मा । मनो हि लोकः । मनो हि ब्रह्म । मन उपास्स्वेति ॥

मनो मनस्यनविशिष्टमन्तःकरणं वाचो भूयः । तद्धि मनस्यनव्यापारवद्वाचं वक्तव्ये प्रेरयति । तेन वाक् मनस्यन्तर्भवति । यच्च यस्मिन्नन्तर्भवति तत्तस्य व्यापकत्वात्ततो भूयो भवति । यथा वै लोके द्वे वा आमलके फले, द्वे वा कोले बदरफले, द्वौ वा अक्षौ विभीतकफले, मुष्टिरनुभवति मुष्टिस्ते फले व्याप्नोति मुष्टौ हि ते अन्तर्भवतः । एवं वाचं च नाम च आमलकादिवन्मनोऽनुभवति, स यदा पुरुषो यस्मिन्काले मनसा अन्तःकरणेन मनस्यति । मनस्यनं विवक्षाबुद्धिः । कथं मन्त्रानधीयीयोच्चारयेयमित्येवं विवक्षां कृत्वाऽथाधीते । तथा कर्माणि कुर्वीयेति चिकीर्षाबुद्धिं कृत्वाऽथ कुरुते । पुत्रांश्च पशूंश्चेच्छेयेति प्राप्तीच्छां कृत्वा तत्प्राप्त्युपायानुष्ठानेनाथेच्छते, पुत्रादीन्प्राप्नोतीत्यर्थः । तथेमं च लोकममुं चोपायेनेच्छेयेति तत्प्राप्त्युपायानुष्ठानेनाथेच्छते प्राप्नोति । मनो ह्यात्मा, आत्मनः कर्तृत्वं भोक्तृत्वं च सति मनसि नान्यथेति मनो ह्यात्मेत्युच्यते । मनो हि लोकः, सत्येव हि मनसि लोको भवति तत्प्राप्त्युपायानुष्ठानं

* ब्रशंकर. छाउ. ७।१।५ ( पृ. ९२८ ) इत्यत्र द्रष्टव्यम् । भास्कर. ब्रशंकरवत् । रंग. शंकरवत् ।

(१) छाउ. ७।२।१; ब्रशंकर. ४।३।१६; भास्कर. ४।१।४, ४।३।१५; रामानुज. १।३।७; श्रीकंठ. १।३।७;

(१) छाउ. ७।२।२; ब्रशंकर. ४।१।५, ४।३।१६ भास्कर. ४।३।१५; रामानुज. १।३।७; श्रीकर. १।३।८ ३।३।५५, ५६, ५७, ५९, ४।१।३, ५, ४।३।१६.

(२) छाउ. ७।३।१; ब्रशंकर. ४।३।१६; रामानुज १।३।७; श्रीकर. १।३।८; वल्लभ. ४।३।१६.

चेति। मनो हि लोको यस्मात्तस्मान्मनो हि ब्रह्म। यत एवं तस्मान्मन उपास्स्वेति। * शंकर.

[२]स यो मनो ब्रह्मेत्युपास्ते । यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्ते। अस्ति भगवो मनसो भूय इति। मनसो वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति ॥

(१) स यो मन इत्यादि समानम्। † शंकर.

(२) ननु मनःप्रभृतीनां शुद्धब्रह्मत्वे मनो ब्रह्मोपास्त इति वदेन्न तु प्रकारवाचि इतिशब्दशिरस्कं ब्रह्मपदमत उपासनाप्रकारावच्छेदकत्वमेव ब्रह्मपदस्य, न तु स्वरूपनिरूपकत्वमिति चेत् हन्तेदंशब्दार्थानवगमविजृम्भितमेव। यतः 'मन उपास्स्व' इत्युक्त्वा तदुपासनाफलं 'यावन्मनोगतं तत्रास्य कामचारो भवति' इति वदिष्यंस्तदुपासनाया एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायामाह— मनो ब्रह्मेति। इतिशब्दोऽत्र हेतुत्ववाची। तथाच यतो मनो ब्रह्म, अतो हेतोस्तदुपासनं तादृक्फलसाधकमित्यर्थः। अत एव 'मनो हि ब्रह्म मन उपास्स्व' इति पूर्वमुक्तम्। सर्वत्रैवमेव ज्ञेयम्। वल्लभ. ४।३।१६

[२]संकल्पो वाव मनसो भूयान्। यदा वै संकल्पयतेऽथ मनस्यति। अथ वाचमीरयति। तामु नाम्नीरयति। नाम्नि मन्त्रा एकं भवन्ति। मन्त्रेषु कर्माणि ॥

(१) संकल्पो वाव मनसो भूयान्। संकल्पोऽपि मनस्यनवदन्तःकरणवृत्तिः, कर्तव्याकर्तव्यविषयविभागेन समर्थनम्। विभागेन हि समर्थिते विषये चिकीर्षाबुद्धिर्मनस्यनं भवति। कथम्। यदा वै संकल्पयते कर्तव्यादिविषयान्विभजते इदं कर्तुं युक्तमिति, अथ मनस्यति मन्त्रानधीयीयेत्यादि। अथानन्तरं वाचमीरयति मन्त्राद्युच्चारणे। तां च वाचमु नाम्नि नामोच्चारणनिमित्तं विवक्षां कृत्वेरयति। नाम्नि नामसामान्ये मन्त्राः शब्दविशेषाः सन्त एकं भवन्त्यन्तर्भवन्तीत्यर्थः। सामान्ये हि विशेषोऽन्तर्भवति। मन्त्रेषु कर्माण्येकं भवन्ति। मन्त्रप्रकाशितानि कर्माणि क्रियन्ते, न अमन्त्रकमस्ति कर्म। * यद्धि मन्त्रप्रकाशनेन लब्धसत्ताकं सत् कर्म ब्राह्मणेनेदं कर्तव्यमस्मै फलायेति विधीयते, याप्युत्पत्तिर्ब्राह्मणेषु कर्मणां दृश्यते, साऽपि मन्त्रेषु लब्धसत्ताकानामेव कर्मणां स्पष्टीकरणम्। न हि मन्त्राप्रकाशितं कर्म किंचिद्ब्राह्मणे उत्पन्नं दृश्यते। त्रयीविहितं कर्मेति प्रसिद्धं लोके। त्रयीशब्दश्च ऋग्यजुःसामसमाख्या। 'मन्त्रेषु कर्माणि कवयो यान्यपश्यन्' इति चाऽऽथर्वणे। तस्माद्युक्तं मन्त्रेषु कर्माण्येकं भवन्तीति। शंकर.

(२) तच्च वागिन्द्रियं शब्दोच्चारणविषये नियुङ्क्ते। ‡ रंग.

[१]तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि। समक्लृपतां द्यावापृथिवी। समकल्पेतां वायुश्चाऽऽकाशं च। समकल्पन्ताऽऽपश्च तेजश्च। तेषाँ संक्लृप्त्यै वर्षँ संकल्पते। वर्षस्य संक्लृप्त्या अन्नँ संकल्पते। अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते। प्राणानाँ संक्लृप्त्यै मन्त्राः संकल्पन्ते। मन्त्राणाँ संक्लृप्त्यै कर्माणि संकल्पन्ते। कर्मणाँ संक्लृप्त्यै लोकः संकल्पते। लोकस्य संक्लृप्त्यै सर्वँ संकल्पते। स एष संकल्पः। संकल्पमुपास्स्वेति ॥

(१) तानि ह वा एतानि मनआदीनि, संकल्पैकायनानि संकल्पः एकोऽयनं गमनं प्रलयो येषां तानि संकल्पैकायनानि, संकल्पात्मकान्युत्पत्तौ, संकल्पे प्रति-

---

* ब्रशंकर. छाउ. ३।१८।१ (पृ. ८१९), ७।१।५ (पृ. ९२८) इत्यत्र च द्रष्टव्यम्। रंग. पूर्ववत्।

† ब्रशंकर. छाउ. ७।१।५ (पृ. ९२८) इत्यत्र द्रष्टव्यम्। रंग. शंकरवत्।

(१) छाउ. ७।३।२; रामानुज. १।२।१६; श्रीकर. ३।३।५५, ५६, ५९, ४।१।१, ३, ५, ४।३।१६; वल्लभ. ४।३।१६.

(२) छाउ. ७।४।१.

* यद्धि यस्मादित्यर्थः। अथवा अग्रे तच्छब्दस्थाने सच्छब्दो लेखकादिप्रमादात् द्रष्टव्यः।

‡ शेषं शंकरेण गतार्थम्।

(१) छाउ. ७।४।२.

ष्ठितानि स्थितौ। समकॢपतां संकल्पं कृतवत्याविव हि द्यौश्च पृथिवी च द्यावापृथिवी, द्यावापृथिव्यौ निश्चले लक्ष्येते। तथा समकल्पेतां वायुश्चाऽऽकाशं च एतावपि संकल्पं कृतवन्ताविव। तथा समकल्पन्ताऽऽपश्च तेजश्च, स्वेन रूपेण निश्चलानि लक्ष्यन्ते। यतस्तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै संकल्पनिमित्तं वर्षं संकल्पते समर्थीभवति। तथा वर्षस्य संक्लृप्त्यै संकल्पनिमित्तं अन्नं संकल्पते। वृष्टेर्ह्यन्नं भवति। अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते। अन्नमया हि प्राणा अन्नोपष्टम्भकाः। 'अन्नं दाम' इति हि श्रुतिः। तेषां हि संक्लृप्त्यै मन्त्राः संकल्पन्ते। प्राणवान् हि मन्त्रानधीते नाबलः। मन्त्राणां हि संक्लृप्त्यै कर्माण्यग्निहोत्रादीनि संकल्पन्तेऽनुष्ठीयमानानि मन्त्रप्रकाशितानि समर्थीभवन्ति फलाय। ततो लोकः फलं संकल्पते कर्मकर्तृसमवायितया समर्थीभवतीत्यर्थः। लोकस्य संक्लृप्त्यै सर्वं जगत्संकल्पते स्वरूपावैकल्याय। एतद्धीदं सर्वं जगत् यत्फलावसानं तत्सर्वं संकल्पमूलम्। अतो विशिष्टः स एष संकल्पः। अतः संकल्पमुपास्स्वेत्युक्त्वा फलमाह तदुपासकस्य।

शंकर.

(२) तान्येतानि नामादीनि संकल्प एकमयनं मार्गो येषां तानि संकल्पैकायनानि संकल्पानुसारीणीति यावत्। संकल्प आत्मा कर्ता येषां तानि संकल्पात्मकानि संकल्पकर्तृकाणीत्यर्थः। यद्वा संकल्प आत्मा व्यापको येषां तानि संकल्पव्याप्तानीति यावत्। संकल्पे प्रतिष्ठितानि, असति संकल्पे येषां न सत्ता। अतः संकल्पाधीनसत्ताकानि इति यावत्। द्यौश्च पृथिवी च निश्चलतया वर्तावहे इति संकल्पं कृतवत्यावित्यर्थः। तथा वाय्वाकाशादयोऽपि स्वेन रूपेण वर्तामहे इति स्वस्वकार्यं च करवामहा इति संकल्पं कृतवन्त इत्यर्थः। तथा संकल्पाभावे तथा प्रवृत्त्यसंभवादिति भावः। अतेजोधीनत्वाद्वर्षणस्याऽऽपस्तेजांसि च सम्यक्कल्पन्तां स्वस्वकार्यसमर्थानि भवन्त्वित्येवं तत्सिद्ध्यै वर्षं संकल्पते। अन्नस्य वर्षाधीनत्वादन्नं वर्षसिद्ध्यै संकल्पते। अन्नसमृद्धिं प्राणाः संकल्पन्ते इत्यर्थः। मन्त्रोच्चारणस्य प्राणायत्तत्वान्मन्त्रास्तत्सिद्धिमाशंसन्ते। अग्निहोत्रादीनां कर्मणां मन्त्रजन्यस्मृत्यधीनानुष्ठानत्वादिति भावः। स्वर्गादिलोकस्य कर्माधीनसिद्धिकत्वादिति भावः। सर्वस्यापि भूतजातस्य लोकाधीनत्वादिति भावः। अत्राऽचेतनेषु संकल्पकथनं स्तुत्यर्थतया चेतनत्वारोपेण वा तदभिमानिदेवतापरतया वोपपन्नमिति द्रष्टव्यम्। एतादृशमहिमशाली संकल्प इत्यर्थः। रंग.

**स[1] यः संकल्पं ब्रह्मेत्युपास्ते। कॢप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति। यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्ते। अस्ति भगवः संकल्पाद्भूय इति। संकल्पाद्वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति॥**

स यः संकल्पं ब्रह्मेति ब्रह्मबुद्ध्योपास्ते। कॢप्तान्वै धात्राऽस्येमे लोकाः फलमिति कॢप्तान् समर्थितान् संकल्पितान्। स विद्वान् ध्रुवान् नित्यान् अत्यन्ताध्रुवापेक्षया। ध्रुवश्च स्वयं, लोकिनो ह्यध्रुवत्वे लोके ध्रुवक्लृप्तिर्व्यर्थेति ध्रुवः सन्। प्रतिष्ठितानुपकरणसंपन्नानित्यर्थः। पशुपुत्रादिभिः प्रतितिष्ठतीति दर्शनात्स्वयं च प्रतिष्ठितः आत्मीयोपकरणसंपन्नः, अव्यथमानानमित्रादित्रासरहितान्, अव्यथमानश्च स्वयमभिसिध्यत्यभिप्राप्नोतीत्यर्थः। यावत्संकल्पस्य गतं संकल्पगोचरः, तत्रास्य यथाकामचारो भवति। आत्मनः संकल्पस्य न तु सर्वेषां संकल्पस्येति, उत्तरफलविरोधात्। यः संकल्पं ब्रह्मेत्युपास्ते इत्यादि पूर्ववत्। * शंकर.

**[2]चित्तं वाव संकल्पाद्भूयः। यदा वै चेतयतेऽथ संकल्पयते। अथ मनस्यति। अथ वाचमीरयति। तामु नाम्नीरयति। नाम्नि मन्त्रा एकं भवन्ति। मन्त्रेषु कर्माणि॥**

चित्तं वाव संकल्पाद्भूयः। चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वं अतीतानागतविषयप्रयोजननिरू-

---

* ब्रशंकर. छाउ. ३।१८।१ (पृ. ८१९) इत्यत्र द्रष्टव्यम्। रंग शंकरेण गतार्थम्।

(१) छाउ. ७।४।३; ब्रशंकर. ४।१।५; रंग. कॢप्तान्वै (संक्लृप्तान्वै).

(२) छाउ. ७।५।१.

पणसामर्थ्यं च तत्संकल्पादपि भूयः। कथम्। यदा वै प्राप्तं वस्तु इदमेवं प्राप्तमिति चेतयते, तदा तदादानाय वाऽपोहाय वाऽथ संकल्पयते। अथ मनस्यतीत्यादि पूर्ववत्। * शंकर.

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि। तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुः। यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादिति। अथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते। चित्तꣳ ह्येवैषामेकायनम्। चित्तमात्मा। चित्तं प्रतिष्ठा। चित्तमुपास्स्वेति ॥

तानि संकल्पादीनि कर्मफलान्तानि चित्तैकायनानि चित्तात्मानि चित्तोत्पत्तीनि चित्ते प्रतिष्ठितानि चित्तस्थितानीत्यपि पूर्ववत्। किंच चित्तस्य माहात्म्यम्। यस्माच्चित्तं संकल्पादिमूलं, तस्मात् यद्यपि बहुविद्बहुशास्त्रादिपरिज्ञानवान् सन् अचित्तो भवति प्राप्तादिचेतयितृत्वसामर्थ्यविरहितो भवति, तं निपुणा लौकिकाः नायमस्ति विद्यमानोऽप्यसत्सम एवेत्येनमाहुः। यच्चायं किंचिच्छास्त्रादि वेद श्रुतवांस्तदप्यस्य वृथैवेति कथयन्ति। कस्मात्। यद्ययं विद्वान् स्यात्, इत्थमेवं, अचित्तो न स्यात् तस्मादस्य श्रुतमप्यश्रुतमेवेत्याहुरित्यर्थः। अथाल्पविदपि यदि चित्तवान्भवति, तस्मा एतस्मै तदुक्तार्थग्रहणायैवोतापि शुश्रूषन्ते श्रोतुमिच्छन्ति। तस्माच्च चित्तं ह्येवैषां संकल्पादीनामेकायनमित्यादि पूर्ववत्।

* शंकर.

[१]स यश्चित्तं ब्रह्मेत्युपास्ते। चित्तान्वै स लोकान् ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति। यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्ते। अस्ति भगवश्चित्ताद्भूय इति। चित्ताद्वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति ॥

चित्तानुपचितान्बुद्धिमद्गुणैः, स चित्तोपासकः। ध्रुवानित्यादि चोक्तार्थम्। * शंकर.

[१]ध्यानं वाव चित्ताद्भूयः। ध्यायतीव पृथिवी। ध्यायतीवान्तरिक्षम्। ध्यायतीव द्यौः। ध्यायन्तीवाऽऽपः। ध्यायन्तीव पर्वताः। ध्यायन्तीव देवमनुष्याः। तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादाꣳशा इवैव ते भवन्ति। अथ येऽल्पाः कलहिनः पिशुना उपवादिनस्ते। अथ ये प्रभवो ध्यानापादाꣳशा इवैव ते भवन्ति। ध्यानमुपास्स्वेति ॥

[२]स यो ध्यानं ब्रह्मेत्युपास्ते। यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते। अस्ति भगवो ध्यानाद्भूय इति। ध्यानाद्वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति ॥

(१) ध्यानं वाव चित्ताद्भूयः। ध्यानं नाम शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितः प्रत्ययसंतानः। एकाग्रतेति यमाहुः। दृश्यते च ध्यानस्य माहात्म्यं फलतः। कथम्। यथा योगी ध्यायन्निश्चलो भवति ध्यानफललाभे। एवं ध्यायतीव निश्चला दृश्यते पृथिवी। ध्यायतीवान्तरिक्षमित्यादि समानमन्यत्। देवाश्च मनुष्याश्च देवमनुष्याः, मनुष्या एव वा देवसमा देवमनुष्याः। शमादिगुणसंपन्नाः मनुष्याः देवस्वरूपं न जहतीत्यर्थः। यस्मादेवं विशिष्टं ध्यानं तस्माद्य इह लोके मनुष्याणामेव धनैर्विद्यया गुणैर्वा महत्तां महत्त्वं प्राप्नुवन्ति धनादिमहत्त्वहेतुं लभन्ते इत्यर्थः। ध्यानापादांशा इव ध्यानस्य आपादनमापादः ध्यानफललाभ इत्येतत्, तस्यांशोऽवयवः कला काचित् ध्यानफललाभकलावन्त इवैवेत्यर्थः, ते भवन्ति, निश्चला इव लक्ष्यन्ते न क्षुद्रा इव। अथ ये पुनरल्पाः, क्षुद्राः किंचिदपि धनादिमहत्त्वैकदेशमप्राप्तास्ते पूर्वोक्तविपरीताः, कलहिनः कलहशीलाः, पिशुनाः परदोषोद्भासकाः, उपवादिनः परदोषं सामीप्ययुक्तमेव वदितुं शीलं येषां

---

* रंग शंकरवत्।

(१) छाउ. ७।५।२.

(२) छाउ. ७।५।३.

* रंग. शंकरवत्।

(१) छाउ. ७।६।१; ब्रंशंकर. भास्कर. रामानुज. निंबार्क. श्रीकंठ. बलदेव. ४।१।९.

(२) छाउ. ७।६।२.

ते उपवादिनश्च भवन्ति। अथ ये महत्त्वं प्राप्ताः धनादिनिमित्तं तेऽन्यान्प्रति प्रभवन्तीति प्रभवः विद्याचार्यराजेश्वरादयः, ध्यानपादांशा इवेत्याद्युक्तार्थम्। अतो दृश्यते ध्यानस्य महत्त्वं फलतः, अतो भूयश्चित्तात्, अतस्तदुपास्स्वेत्याद्युक्तार्थम्।

शंकर.

(२) 'अचलत्वं चापेक्ष्य'—अपि च 'ध्यायतीव पृथिवी' इत्यत्र पृथिव्यादिषु अचलत्वमेवापेक्ष्य ध्यायतिवादः, भवति तच्च लिङ्गमुपासनस्याऽऽसीनकर्मत्वे। * ब्रशंकर. ४।१।९

(३) ध्यानमापन्ना ध्यानाभावा ये मनुष्याणां मध्ये धनादिभिर्महान्तस्ते ध्यानापादानां ध्यातॄणामंशा इव सदृशा इव भवन्ति। यथा ध्यातारोऽवचना एवं महान्तोऽप्यवचनतया ध्यातृसादृश्यं प्रतिपद्यन्त इत्यर्थः। तन्न्यूनत्वे सति तत्सदृशत्वं तदंशत्वम्। महान्तोऽपि मनुष्या यतो ध्यातॄणामंशा अतो ध्यानं श्रेष्ठमित्यर्थः। अथ येऽल्पाः क्षुद्रास्ते कलहशीलाः परदोषोद्भावकाः परेषां समीपे तद्दोषवदनशीला वाचाटा भवन्ति, न तु ध्यातृसादृश्यलेशमपि प्रतिपद्यन्त इत्यर्थः। अथ ये तु प्रभवो महान्तस्ते अजल्पकाः सन्तो ध्यातृसदृशा भवन्ति। ‡ रंग.

**[१]विज्ञानं वाव ध्यानाद्भूयः। विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकम्। धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति। विज्ञानमुपास्स्वेति॥**

विज्ञानं वाव ध्यानाद्भूयः। विज्ञानं शास्त्रार्थविषयं ज्ञानं तस्य ध्यानकारणत्वाद्ध्यानाद्भूयस्त्वम्। कथं च तस्य भूयस्त्वमित्याह—विज्ञानेन वा ऋग्वेदं विजानात्ययमृग्वेद इति प्रमाणतया, तस्यार्थज्ञानं ध्यानकारणम्। तथा यजुर्वेदमित्यादि। किंच पश्वादींश्च, धर्माधर्मौ शास्त्रसिद्धौ, साध्वसाधुनी लोकतः स्मार्ते वा, अदृष्टविषयं च सर्वं विज्ञानेनैव विजानातीत्यर्थः। तस्माद्युक्तं ध्यानाद्विज्ञानस्य भूयस्त्वम्। अतो विज्ञानमुपास्स्वेति। * शंकर.

**स यो विज्ञानं ब्रह्मेत्युपास्ते। विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति। यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्ते। अस्ति भगवो विज्ञानाद्भूय इति। विज्ञानाद्वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति॥**

(१) शृणूपासनफलं विज्ञानवतः विज्ञानं येषु लोकेषु तान्विज्ञानवतो लोकान् ज्ञानवतश्च अभिसिध्यति अभिप्राप्नोति। विज्ञानं शास्त्रार्थविषयं, ज्ञानमन्यविषयं नैपुण्यं, तद्वद्भिर्युक्तांल्लोकान् प्राप्नोतीत्यर्थः। यावद्विज्ञानस्येत्यादि पूर्ववत्। शंकर.

(२) ज्ञानविज्ञानशब्दयोः सामान्यविशेषरूपत्वाद्विज्ञानवतो ज्ञानवतो लोकानित्युपपत्तिः। शिष्टं स्पष्टम्। रंग.

**[२]बलं वाव विज्ञानाद्भूयः। अपि ह शतं विज्ञानवतामेको बलवानाकम्पयते। स यदा बली भवत्यथोत्थाता भवति। उत्तिष्ठन्परिचरिता भवति। परिचरन्नुपसत्ता भवति। उपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति। बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकम्। बलेन लोकस्तिष्ठति। बलमुपास्स्वेति॥**

---

* भास्कररामानुजनिंबार्कश्रीकंठाः ब्रशंकरवत्।

‡ शेषं शंकरेण गतार्थम्।

(१) छाउ. ७।७।१.

* रंग. शंकरेण गतार्थम्।

(१) छाउ. ७।७।२.

(२) छाउ. ७।८।१, २.

स यो बलं ब्रह्मेत्युपास्ते । यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्ते । अस्ति भगवो बलाद्भूय इति । बलाद्वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥

(१) बलं वाव विज्ञानाद्भूयः । बलमित्यन्नोपयोगजनितं मनसो विज्ञेये प्रतिभानसामर्थ्यम् । अनशनादृगादीनि 'न वै मा प्रतिभान्ति भोः' इति श्रुतेः । शरीरेऽपि तदेवोत्थानादिसामर्थ्यं, यस्माद्विज्ञानवतां शतमपि एकः प्राणी बलवानाकम्पयते, यथा हस्ती मत्तो मनुष्याणां शतं समुदितमपि । यस्मादेवमन्नाद्युपयोगनिमित्तं बलं, तस्मात्स पुरुषो यदा बली बलेन तद्वान्भवति, अथोत्थातोत्थानस्य कर्ता उत्तिष्ठंश्च गुरूणामाचार्यस्य च परिचरिता परिचरणस्य शुश्रूषायाः कर्ता भवति । परिचरन्नुपसत्ता तेषां समीपगोऽन्तरङ्गः प्रियो भवतीत्यर्थः । उपसीदंश्च सामीप्यं गच्छन्नेकाग्रतयाऽऽचार्यस्यान्यस्य चोपदेष्टुर्गुरोर्द्रष्टा भवति । ततस्तदुक्तस्य श्रोता भवति । तत इदमेभिरुक्तमेवमुपपद्यते इत्युपपत्तितो मन्ता भवति । मन्वानश्च बोद्धा भवत्येवमेवेदमिति । तत एवं निश्चित्य तदुक्तार्थस्य कर्ताऽनुष्ठाता भवति । विज्ञाताऽनुष्ठानफलस्यानुभविता भवतीत्यर्थः । किंच बलस्य माहात्म्यं, बलेन वै पृथिवी तिष्ठतीत्याद्युज्ज्वर्यम् ।

शंकर.

(२) एको हि बलवान्हस्ती विज्ञानवतां मनुष्याणां शतमप्याकम्पयते । किंच सति बले गुर्वादिषु दृष्टेष्वभ्युत्थानं, परिचर्या, उपसदनं, श्रवणमनननिदिध्यासनसाक्षात्काराः, कर्मविषयकर्तृत्वं, कृतविषयकज्ञानं, एतत्सर्वं बले सत्येव भवति । अतो विज्ञानापेक्षया बलमेव भूय इत्यर्थः ।

रंग.

अन्नं वाव बलाद्भूयः । तस्माद्यद्यपि दशरात्रीर्नाश्नीयात् । यद्यु ह जीवेत् । अथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवति । अथान्नस्याऽऽयै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति । अन्नमुपास्स्वेति ॥

(१) अन्नं वाव बलाद्भूयः, बलहेतुत्वात् । कथमन्नस्य बलहेतुत्वमित्युच्यते । यस्माद्बलकारणमन्नं तस्माद्यद्यपि कश्चिद्दशरात्रीर्नाश्नीयात्, सोऽन्नोपयोगनिमित्तस्य बलस्य हान्या म्रियते । न चेन्म्रियते यद्यु ह जीवेत्, दृश्यन्ते हि मासमप्यनश्नन्तो जीवन्तः । अथवा, स जीवन्नप्यद्रष्टा भवति गुरोरपि, तत एवाश्रोतेत्यादि पूर्वविपरीतं सर्वं भवति । अथ यदा बहून्यहान्यनशितो दर्शनादिक्रियास्वसमर्थः सन्नन्नस्याऽऽयी, आगमनमायोऽन्नस्य प्राप्तिरित्यर्थः, सा यस्य विद्यते सोऽन्नस्याऽऽयी । आय इत्येतद्वर्णव्यत्ययेन । अथाऽन्नस्यऽऽया इत्यपि पाठे एवमेवार्थः, द्रष्टेत्यादिकार्यश्रवणात् । दृश्यते ह्यन्नोपयोगे दर्शनादिसामर्थ्यं न तदप्राप्तौ अतः अन्नमुपास्स्वेति ।

शंकर.

(२) अन्नस्याऽऽये लाभे सति । अन्नस्याऽऽयै इति पाठे छान्दस एकारस्यैकारः । अन्नस्याऽऽयीति पाठेऽप्यायो लाभः । अन्नस्याऽऽयी, अन्नं लब्धवानित्यर्थः ।

* रंग.

स योऽन्नं ब्रह्मेत्युपास्ते । अन्नवतो वै स लोकान्पानवतोऽभिसिध्यति । यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्ते । अस्ति भगवोऽन्नाद्भूय इति । अन्नाद्वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥

(१) फलं चान्नवतः प्रभूतान्नान्वै स लोकान्पानवतः प्रभूतोदकांश्चान्नपानयोर्नित्यसंबन्धाल्लोकानभिसिध्यति । समानमन्यत् ।

शंकर.

(२) पानवतः पेयप्रचुरानित्यर्थः ।

रंग.

आपो वावान्नाद्भूयस्यः । तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीति । अथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीति । आप एवेमा मूर्ता

(१) छाउ. ७।९।१.

* शेषं शंकरवत् ।

(१) छाउ. ७।९।२.

(२) छाउ. ७।१०।१; रंग. वावान्ना (वा अन्ना)

येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देव-मनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकम् । आप एवेमा मूर्ताः । अप उपास्स्वेति ॥

आपो वावान्नाद्भूयस्योऽन्नकारणत्वात् । यस्मादेवं तस्माद्यदा यस्मिन्काले सुवृष्टिः सस्यहिता शोभना वृष्टिर्न भवति, तदा व्याधीयन्ते प्राणाः दुःखिनो भवन्ति । किंनिमित्तमित्याह— अन्नमस्मिन्संवत्सरे नः कनीयोऽल्पतरं भविष्यतीति । अथ पुनर्यदा सुवृष्टिर्भवति, तदाऽऽनन्दिनः सुखिनो हृष्टाः प्राणाः प्राणिनो भवन्ति, अन्नं बहु प्रभूतं भविष्यतीति । अप्संभवत्वान्मूर्तस्यान्नस्य, आप एवेमा मूर्तामूर्तभेदाकारपरिणता इति मूर्ताः येयं पृथिवी यदन्तरिक्षमित्यादि । आप एवेमा मूर्ताः, अतोऽप उपास्स्वेति ।

* शंकर.

स[1] योऽपो ब्रह्मेत्युपास्ते । आप्नोति सर्वान्कामाꣳस्तृप्तिमान्भवति । यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्ते । अस्ति भगवोऽद्भ्यो भूय इति । अद्भ्यो वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥

फलं, स योऽपो ब्रह्मेऽत्युपास्ते आप्नोति सर्वान्कामान् काम्यान् मूर्तिमतो विषयानित्यर्थः । अप्संभवत्वाच्च तृप्तेरम्बूपासनात्तृप्तिमांश्च भवति । समानमन्यत् ।

‡ शंकर.

[2]तेजो वावाद्भ्यो भूयः । तद्वा एतद्वायुमागृह्याऽऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते । तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति । तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते । तेज उपास्स्वेति ॥

* रंग. शंकरवत् ।

‡ रंग. शंकरेण गतार्थम् ।

(१) छाउ. ७।१०।२.

(२) छाउ. ७।११।१; ब्रशंकर. ४।३।३; रंग. वावा- [illegible]

(१) तेजो वावाद्भ्यो भूयः, तेजसोऽप्कारणत्वात् । कथमप्कारणत्वमित्याह—यस्मात्तद्वै निस्तेजः, तस्मात्तद्वा एतत्तेजो वायुनाऽवष्टभ्य स्वात्मना निश्चलीकृत्य वायुं, आकाशमभितपत्याकाशमभिव्याप्नुवत्तपति यदा, तदाऽऽहुर्लौकिकाः, निशोचति संतपति सामान्येन जगन्नितपति देहान् अतो वर्षिष्यति वा इति । प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्यं भविष्यतीति विज्ञानम् । तेज एव तत्पूर्वमात्मानमुद्भूतं दर्शयित्वाऽथानन्तरमपः सृजते, अतोऽप्स्रष्टृत्वाद्भूयोऽद्भ्यस्तेजः । किंचान्यत्तदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति । कथम् । ऊर्ध्वाभिश्चोर्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च सहाऽऽह्रादाः स्तननशब्दाश्चरन्ति । तस्मात्तद्दर्शनादाहुर्लौकिकाः, विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थम् । अतस्तेज उपास्स्वेति ।

शंकर.

(२) तेजः कर्तृ जगन्निशोचति नितरां शोचति, नितपति नितरां तपति च ।

* रंग.

स[1] यस्तेजो ब्रह्मेत्युपास्ते । तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति । यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्ते । अस्ति भगवस्तेजसो भूय इति । तेजसो वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥

तस्य तेजस उपासनफलं—तेजस्वी वै भवति । तेजस्वत एव च लोकान् भास्वतः प्रकाशवतोऽपहततमस्कान् बाह्याध्यात्मिकाज्ञानाद्यपनीततमस्कानभिसिध्यति । ऋज्वर्थमन्यत् ।

† शंकर.

[2]आकाशो वाव तेजसो भूयान् । आकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निः । आकाशेनाऽऽह्वयति । आकाशेन शृणोति । आकाशेन प्रतिशृणो-

* शेषं शंकरवत् ।

† रंग. शंकरवत् ।

(१) छाउ. ७।११।२; रंग. वै स ते ( वै ते ).

(२) छाउ. ७।१२।१.

ति। आकाशे रमते। आकाशे न रमते। आकाशे जायते। आकाशमभिजायते। आकाशमुपास्स्वेति॥

आकाशो वाव तेजसो भूयान्, वायुसहितस्य तेजसः कारणत्वात् व्योम्नः। 'वायुमागृह्य' इति तेजसा सहोक्तो वायुरिति पृथगिह नोक्तस्तेजसः। कारणं हि लोके कार्याद्भूयो दृष्टं—यथा घटादिभ्यो मृत्। तथा आकाशो वायुसहितस्य तेजसः कारणमिति ततो भूयान्। कथम्। आकाशे वै सूर्याचन्द्रमसावुभौ तेजोरूपौ विद्युन्नक्षत्राण्यग्निश्च तेजोरूपाण्याकाशेऽन्तः। यच्च यस्यान्तर्वर्ति तदल्पं, भूय इतरत्। किंचाऽऽकाशेनाऽऽह्वयति चान्यमन्यः, आहूतश्चेतर आकाशेन शृणोति, अन्योक्तं च शब्दमन्यः प्रतिशृणोति, आकाशे रमते क्रीडत्यन्योन्यं सर्वः तथा न रमते चाऽऽकाशे बध्वादिवियोगे, आकाशे जायते न मूर्तेनावष्टब्धे। तथाऽऽकाशमभिलक्ष्याङ्कुरादि जायते न प्रतिलोमम्। अत आकाशमुपास्व।

* शंकर.

सं य आकाशं ब्रह्मेत्युपास्ते। आकाशवतो वै स लोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति। यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्ते। अस्ति भगव आकाशाद्भूय इति। आकाशाद्वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति॥

(१) फलं शृणु — आकाशवतो वै विस्तारयुक्तान् स विद्वांल्लोकान्। प्रकाशवतः प्रकाशाकाशयोर्नित्यसंबन्धात्प्रकाशवतश्च लोकान् असंबाधान्, संबाधनं संबाधः, संबाधोऽन्योन्यपीडा, तद्रहितानसंबाधान्, उरुगायवतः विस्तीर्णगतीन् विस्तीर्णप्रचारांल्लोकान् अभिसिध्यति। यावदाकाशस्येत्याद्युक्तार्थम्।

शंकर.

(२) उरुगायवतः कीर्तिमतः।

‡ रंग.

[१]स्मरो वावाऽऽकाशाद्भूयः। तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्। यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्। स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्। स्मरमुपास्स्वेति॥

स यः स्मरं ब्रह्मेत्युपास्ते। यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्ते। अस्ति भगवः स्मराद्भूय इति। स्मराद्वाव भूयोऽस्तीति। तन्मे भगवान्ब्रवीत्विति॥

स्मरो वावाऽऽकाशाद्भूयः। स्मरणं स्मरोऽन्तःकरणधर्मः। स आकाशाद्भूयानिति द्रष्टव्यं लिङ्गव्यत्ययेन। स्मर्तुः स्मरणे हि सत्याकाशादि सर्वमर्थवत्, स्मरणवतो भोग्यत्वात्। असति तु स्मरणे सदप्यसदेव, सत्त्वकार्याभावात्। नापि सत्त्वं स्मृत्यभावे शक्यमाकाशादीनामवगन्तुमित्यतः स्मरणस्याऽऽकाशाद्भूयस्त्वम्। दृश्यते हि लोके स्मरणस्य भूयस्त्वं यस्मात्तस्माद्यद्यपि समुदिता बहव एकस्मिन्नासीरन्नुपविशेयुः, ते तत्राऽऽसीना अन्योन्यभाषितमपि न स्मरन्तश्चेत्स्युः, नैव ते कंचन शब्दं शृणुयुः। तथा न मन्वीरन्। मन्तव्यं चेत्स्मरेयुस्तदा मन्वीरन्। स्मृत्यभावान्न मन्वीरन्। तथा न विजानीरन्। यदा वाव ते स्मरेयुर्मन्तव्यं विज्ञातव्यं श्रोतव्यं च, अथ शृणुयुः, अथ मन्वीरन्, अथ विजानीरन्। तथा स्मरेण वै मम पुत्रा एते इति पुत्रान्विजानाति, स्मरेण पशून्। अतो भूयस्त्वात् स्मरमुपास्स्वेति। उक्तार्थमन्यत्।

* शंकर.

[२]आशा वाव स्मराद्भूयसी। आशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छते। आशामुपास्स्वेति॥

आशा वाव स्मराद्भूयसी। आशा अप्राप्तवस्त्वाकाङ्क्षा, आशा तृष्णा काम इति यामाहुः पर्यायैः। सा च स्मराद्भूयसी। कथम्। आशया ह्यन्तःकरणस्थया स्मरति स्मर्तव्यम्। आशाविषयरूपं स्मरन्नसौ

---

* रंग. शंकरवत्।

* शेषं शंकरवत्।

(१) छाउ. ७।१२।२.

* रंग. शंकरेण गतार्थम्।

(१) छाउ. ७।१३।१, २.

(२) छाउ. ७।१४।१.

स्मरो भवति, अतः आशेद्धः आशयाऽभिवर्धितः स्मरभूतः स्मरन् ऋगादीन्मन्त्रानधीते, अधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्माणि कुरुते तत्फलाशयैव । पुत्रांश्च पशूंश्च कर्मफलभूतानिच्छतेऽभिवाञ्छति, आशयैव तत्साधनान्यनुतिष्ठति । इमं च लोकमाशेद्ध एव स्मरंल्लोकसंग्रहहेतुभिरिच्छते । अमुं च लोकमाशेद्धः स्मरंस्तत्साधनानुष्ठानेनेच्छते । अतः आशारशनावबद्धं स्मराकाशादिनामपर्यन्तं जगच्चक्रीभूतं प्रतिप्राणि । अतः आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व । * शंकर.

स[3] य आशां ब्रह्मेत्युपास्ते । आशयाऽस्य सर्वे कामाः समृध्यन्ति । अमोघा ह्यस्याऽऽशिषो भवन्ति । यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्ते । अस्ति भगव आशाया भूय इति । आशाया वाव भूयोऽस्तीति । तन्मे भगवान्ब्रवीत्विति ॥

यस्त्वाशां ब्रह्मेत्युपास्ते, शृणु तस्य फलम् । आशया सदोपासितयाऽस्योपासकस्य सर्वे कामाः समृध्यन्ति समृद्धिं गच्छन्ति । अमोघा ह्यस्याऽऽशिषः प्रार्थनाः सर्वाः भवन्ति, यत्प्रार्थितं सर्वं तदवश्यं भवतीत्यर्थः । यावदाशाया गतमित्यादि पूर्ववत् ।

‡ शंकर.

प्राणस्य सर्वात्मत्वं सोपपत्तिकं, प्राणवादिनोऽतिवादित्वम् ।

प्राणो[1] वा आशाया भूयान् । यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वꣳ समर्पितम् । प्राणः प्राणेन याति । प्राणः प्राणं ददाति । प्राणाय ददाति । प्राणो ह पिता । प्राणो माता । प्राणो भ्राता । प्राणः स्वसा । प्राण आचार्यः । प्राणो ब्राह्मणः ॥

(१) नामाद्याशान्तं कार्यकारणत्वेन निमित्तनैमित्तिकत्वेन चोत्तरोत्तरभूयस्त्वयाऽवस्थितं स्वनिमित्तसद्भावमाशारशनापाशैर्विनिबद्धं सर्वं सर्वतो बिसमिव तन्तुभिर्यस्मिन्प्राणे समर्पितं, येन च सर्वतो व्यापिनाऽन्तर्बहिर्गतेन सूत्रे मणिगणा इव सूत्रेण ग्रथितं विधृतं च, स एष प्राणो वा आशाया भूयान् । कथमस्य भूयस्त्वमित्याह दृष्टान्तेन समर्थयस्तद्भूयस्त्वम् । यथा वै लोके रथचक्रस्यारा रथनाभौ समर्पिताः संप्रोताः संप्रवेशिता इत्येतत्, एवमस्मिँल्लिङ्गसंघातरूपे प्राणे प्रज्ञात्मनि दैहिके मुख्ये, यस्मिन्परा देवता नामरूपव्याकरणायाऽऽदर्शादौ प्रतिबिम्बवज्जीवेनाऽऽत्मनाऽनुप्रविष्टाः यश्च महाराजस्येव सर्वाधिकारीश्वरस्य, ‘कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत’ इति श्रुतेः । यस्तु छायेवानुगत ईश्वरम् । ‘तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा’ (कौ. ३।८) इति कौषीतकिनां, अत एवमस्मिन्प्राणे सर्वं यथोक्तं समर्पितम् । अतः स एष प्राणोऽपरतन्त्रः प्राणेन स्वशक्त्यैव याति, नान्यकृतं गमनादिक्रियास्वस्य सामर्थ्यमित्यर्थः । सर्वं क्रियाकारकफलभेदजातं प्राण एव, न प्राणाद्बहिर्भूतमस्तीति प्रकरणार्थः । प्राणः प्राणं ददाति । यद्ददाति तत्स्वात्मभूतमेव । यस्मै ददाति तदपि प्राणायैव । अतः पित्राद्याख्योऽपि प्राण एव ।

शंकर.

(२) अत्र प्राणशब्देन प्राणसहचरितो जीवो लक्ष्यते । तत्र च हेतुरुत्तरत्र वक्ष्यते — यथा रथचक्रस्याराः रथनाभ्याश्रिताः, एवं समस्तमचेतनं भूतजातमेतच्चेतनाश्रितमित्यर्थः, ‘भूतमात्राः प्रज्ञामात्रास्वर्पिताः’ (कौ. ३।८) इति श्रुत्यन्तरात् । गन्ता देवदत्तादिरपि जीव एव, गमनकरणभूतोऽश्वादिरपि जीव एव, दाताऽपि जीव एव, देयो गवादिरपि जीव एव, संप्रदानभूतो ब्राह्मणादिरपि जीव एवेत्यर्थः । पित्रादिरपि जीव इति प्रसिद्ध एवेत्यर्थः ।

रंग.

---

* रंग. शंकरेण गतार्थम् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ७।१४।२.

(२) छाउ. ७।१५।१; ब्रशांकर. १।३।८, १।४।१२, ३।३।५८; भास्कर. १।३।८; रामानुज. १।३।७; ब्रमध्व. १।३।८; श्रीकर. १।३।८, १।४।१२; बलदेव. १।१।२.

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह। धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥

कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमिति। उच्यते— सति प्राणे पित्रादिषु पित्रादिशब्दप्रयोगात्तदुत्क्रान्तौ च प्रयोगाभावात्। कथं तदित्याह—स यः कश्चित्पित्रादीनामन्यतमं यदि तं भृशमिव तदननुरूपमिव किंचिद्वचनं त्वंकारादियुक्तं प्रत्याह, तदैनं पार्श्वस्था आहुर्विवेकिनः—धिक्त्वा अस्तु धिगस्तु त्वामित्येवम्। पितृहा वै त्वं पितुर्हन्तेत्यादि।

* शंकर.

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेत्। नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥

(१) अथैनानेवोत्क्रान्तप्राणांस्त्यक्तदेहनाथान्, यद्यपि शूलेन समासं समस्य, व्यतिषंदहेत् व्यत्यस्य संदहेत्, एवमप्यतिक्रूरं कर्म समासव्यत्यासादिप्रकारेण दहनलक्षणं तद्देहसंबद्धमेव कुर्वाणं नैवैनं ब्रूयुः पितृहेत्यादि। तस्मादन्वयव्यतिरेकाभ्यामवगम्यते एतत्पित्राद्याख्योऽपि प्राण एवेति। शंकर.

(२) तेष्वेव शरीरेषूत्क्रान्तजीवेषु शूलेन समासं, संपूर्वात्क्षेपार्थादस्यतेर्णमुलन्तोऽयं शब्दः। शूलेन सम्यक् प्रतिक्षिप्य व्यत्यस्य सम्यग्दहत्यपि पुरुषे पितृहेत्यादिशब्दाः न प्रयुज्यन्ते इत्यर्थः। अतः सजीवेषु पित्रादिषु हिंसितेषु पितृहेत्यादिशब्दप्रयोगान्निर्जीवेष्वप्रयोगाच्च निर्जीवस्य शरीरस्य पित्रादित्वाभावस्य सिद्धत्वाज्जीव एव पित्रादिर्भवतीत्यर्थः।

रंग.

* रंग. शंकरवत्।

(१) छाउ. ७।१५।२; रामानुज. १।३।७.

(२) छाउ. ७।१५।३.

प्राणो ह्येवैतानि सर्वाणि भवति। स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति। तं चेद्ब्रूयुरतिवाद्यसीति। अतिवाद्यस्मीति ब्रूयात्। नापह्नुवीत ॥

(१) तस्मात्प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भवति चलानि स्थिराणि च। स वा एष प्राणविदेवं यथोक्तप्रकारेण पश्यन् फलतोऽनुभवन्, एवं मन्वान उपपत्तिभिश्चिन्तयन्, एवं विजानन् उपपत्तिभिः संयोज्यैवमेवेति निश्चयं कुर्वन्नित्यर्थः। मननविज्ञानाभ्यां हि संभृतः शास्त्रार्थो निश्चितो दृष्टो भवेत्। अत एवं पश्यन्नतिवादी भवति, नामाद्याशान्तमतीत्य वदनशीलो भवतीत्यर्थः। तं चेद्ब्रूयुस्तं (* यद्येवमतिवादिनं सर्वदा सर्वैः शब्दैर्नामाद्याशान्तमतीत्य वर्तमानं प्राणमेव वदन्त्येवं पश्यन्तमतिवदनशीलमतिवादिनं) ब्रह्मादिस्तम्बपर्यन्तस्य हि जगतः प्राण आत्माऽहमिति ब्रुवाणं यदि ब्रूयुरतिवाद्यसीति। बाढमतिवाद्यस्मीति ब्रूयान्नापह्नुवीत। कस्माद्ध्यसावपह्नुवीत। यत्प्राणं सर्वेश्वरं अयमहमस्मीत्यात्मत्वेनोपगतः। शंकर.

(२) पूर्ववाक्ये प्राणशब्दनिर्दिष्टः स वा एष जीवः स्वात्मानमुक्तेन प्रकारेण मन्वानो मननविषयीकुर्वन्ननेन प्रकारेण विजानन्नुपासीनश्च संस्तेन प्रकारेण पश्यन् साक्षात्कुर्वन्नतिवादी भवति। अतिक्रान्तस्योपास्यवस्तुवादी भवति स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवतीत्यर्थः। बृहस्पतिसमप्रत्यर्थिजनाप्रतिभाधायकस्वोपास्यदेवतापारम्यवादशीलत्वमतिवादित्वम्। तच्चोपास्यदेवतातिशये पर्यवस्यति। एवं पश्यन्नेवं मन्वान इत्यादौ 'लक्षणहेत्वोः क्रियायाः' इति हेत्वर्थे शतृप्रत्ययः। ततश्च स्वोपास्यदेवतासाक्षात्कारोऽतिवादित्वे हेतुरित्यर्थः। साक्षात्कारप्रीतस्वोपास्यदेवतानुग्रहादीदृशप्रतिवादित्वं भवतीति भावः। अत्र स वा एष एवं पश्यन्नेवं मन्वान इति वाक्येन पूर्वसंदर्भनिर्दिष्टस्य प्राणस्य द्रष्टृत्वमन्तृत्वादि-

* ( ) एतच्चिह्नान्तर्गतो भागः वाणीविलासपुस्तके नास्ति।

(१) छाउ. ७।१५।४; ब्रशंकर. १।३।८; रामानुज. १।३।७; श्रीकंठ. १।३।७; श्रीकर. १।३।८; बलदेव. १।३।८.

कथनादपि प्राणशब्दनिर्दिष्टो जीव इत्यवगीयते । प्राणशब्दनिर्दिष्टस्य जीवत्वज्ञापनायैव हि स वा एष इति पदयोः प्रवृत्तिरिति द्रष्टव्यम् । प्राणशब्दितस्य जीवस्य पूर्वोक्तनामाद्याशान्तसर्वातिशायित्वादेवातिवादित्वं नापह्नोतव्यमिति भावः । रंग.

सत्यवादिनोऽतिवादित्वं, सत्यवचनविज्ञानमननश्रद्धा-
निष्ठाकृतिसुखलाभानां कार्यकारणभावः क्रमेण

**एष तु वा अतिवदति यः सत्येनातिवदति । सोऽहं भगवः सत्येनातिवदानीति । सत्यं त्वेव विजिज्ञासितव्यमिति । सत्यं भगवो विजिज्ञास इति ॥**

(१) स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा नातः परमस्तीत्युपरराम । न पूर्ववत् 'किमस्ति भगवः प्राणाद्भूयः' इति पप्रच्छ । यतस्तमेवं विकारानृतब्रह्मविज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमात्मानं मन्यमानं योग्यं शिष्यं मिथ्याग्रहविशेषाद्विप्रच्यावयन् आह भगवान्सनत्कुमारः । एष तु वा अतिवदति यमहं वक्ष्यामि, न प्राणविदतिवादी परमार्थतः । नामाद्यपेक्षं तु तस्यातिवादित्वम् । यस्तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परमार्थसत्यं वेद सोऽतिवादीत्यत आह—एष तु वा अतिवदति यः सत्येन परमार्थसत्यविज्ञानवत्तयाऽतिवदति । सोऽहं त्वां प्रपन्नो भगवः सत्येनातिवदानि । तथा मां नियुनक्तु भगवान् यथाऽहं सत्येनातिवदानीत्याभिप्रायः । यद्येवं सत्येनातिवदितुमिच्छसि, सत्यमेव तु तावद्विजिज्ञासितव्यमित्युक्त आह नारदः, तथास्तु, तर्हि सत्यं भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छेयं त्वत्तोऽहमिति । शंकर.

(२) अत्र पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य कथनात्प्रक्रान्त आत्मोपदेशः प्राणशब्दिते प्रत्यगात्मनि पर्यवसन्न इति प्राणाद्वाव भूयोऽस्तीति पुनरपृच्छत्येव नारदे सनत्कुमारः स्वयमेव ततोऽप्यतिशयितं परमात्मानमुपक्षिपति — एष तु वा अतिवदतीत्यादि । तुशब्दो विशेषप्रदर्शकः । 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' (छाउ. ८।३।४) इति दहरविद्यायां वक्ष्यमाणत्वात् 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैउ. २।१।१) इति सत्यशब्दस्य ब्रह्मणि प्रसिद्धेः सत्यशब्दो ब्रह्मपरः । तस्य सततैकरूपत्वेन निर्विकारत्वात्सत्यत्वम् । तेन ब्रह्मणा निमित्तेन योऽतिवदत्येषोऽतिवादी पूर्वस्मात्प्राणातिवादिनो विशिष्ट इत्यर्थः । अत्र भाष्यकृता—'सत्येनेतीत्थंभूतलक्षणे तृतीया । सत्येन परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः' इतीत्थंभूतलक्षणे तृतीया कण्ठतः प्रतिपादिता । 'अतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं च परं ब्रह्म प्रतीयते' इति भाष्यवाक्यान्निमित्तत्वार्थकत्वमपि तृतीयायाः सूचितम् । ततश्च निमित्तस्य करणत्वविवक्षया कारकविभक्तित्वमपि भाष्यकृदभिमतमेवेति द्रष्टव्यम् । अत्र सत्यातिवादिनः प्राणातिवाद्यपेक्षयाऽतिशयकथनात्सत्यशब्दनिर्दिष्टस्य परस्य ब्रह्मणः प्राणशब्दनिर्दिष्टजीवापेक्षया भूयस्त्वमुक्तं भवति । ब्रह्मणाऽतिवदानीति शिष्यः प्रार्थयामासेत्यर्थः । इतर आह — सत्यं त्वेवेत्यादि । यदि सत्यशब्दितब्रह्मनिमित्तकातिवादितामभिलषसि तर्हि ब्रह्मोपास्यमित्यर्थः । ब्रह्मोपासनमतिवादित्वहेतुरिति यावत् । शिष्यस्तदभ्युपगच्छति— सत्यमिति । विजिज्ञासे उपासनं करोमीत्यर्थः । रंग.

(३) अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतयाऽतिक्रान्तस्वोपास्यवस्तुवादित्वम् । नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात् प्राणविदोऽतिवादित्वम् । तस्यापि सातिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थतया उपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्युक्तम् । ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य तदुपायभूतं ब्रह्ममननं 'मतिस्त्वेव विजिज्ञासितव्या' (छाउ. ७।१८।१) इत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मननस्य, मननोपदेशेन श्रवणमप्यर्थसिद्धं मत्वा,

(१) छांउ. ७।१६।१; ब्रशंकर. १।३।८; भास्कर. १।३।८; रामानुज. १।३।७, ३।३।३२, ५५; ब्रमध्व. ३।३।३८; श्रीकंठ. १।३।७; श्रीकर. १।३।८, ३।३।३२, [illegible] विज्ञान. १।३।८.

श्रवणोपायभूतां ब्रह्मणि श्रद्धां 'श्रद्धा त्वेव विजिज्ञासितव्या' (छाउ. ७।१९।१) इत्युपदिश्य तदुपायभूतां तन्निष्ठां 'निष्ठा त्वेव विजिज्ञासितव्या' (छाउ. ७।२०।१) इत्युपदिश्य तदुपायभूतां तदुद्योगप्रयत्नरूपां कृतिमपि 'कृतिस्त्वेव विजिज्ञासितव्या' (छाउ. ७।२१।१) इत्युपदिश्य श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति 'सुखं त्वेव विजिज्ञासितव्यं' (छाउ. ७।२२।१) इत्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति 'भूमा त्वेव विजिज्ञासितव्यः' (छाउ. ७।२३।१) इत्युपदिश्य निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छाउ. ७।२४।१) इति। रामानुज. १।३।७

**यदा वै विजानात्यथ सत्यं वदति। नाविजानन्सत्यं वदति। विजानन्नेव सत्यं वदति। विज्ञानं त्वेव विजिज्ञासितव्यमिति। विज्ञानं भगवो विजिज्ञास इति ॥**

(१) यदा वै सत्यं परमार्थतो विजानातीदं परमार्थतः सत्यमिति, ततोऽनृतं विकारजातं वाचारम्भणं हित्वा सर्वविकारावस्थं सदेवैकं सत्यमिति तदेवाथ वदति यद्वदति। ननु विकारोऽपि सत्यमेव। 'नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः'। 'प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुत्यन्तरात्। सत्यमुक्तं सत्यत्वं श्रुत्यन्तरे विकारस्य, न तु परमार्थापेक्षमुक्तं, किं तर्हि, इन्द्रियविषयाविषयत्वापेक्षं, 'सच्च त्यच्च' इति सत्यमित्युक्तं, तद्द्वारेण च परमार्थसत्यस्योपलब्धिर्विवक्षितेति। 'प्राणा वै सत्यं तेषामेष सत्यं' इति चोक्तम्। इहापि तदिष्टमेव। इह तु प्राणविषयात्परमार्थसत्यविज्ञानाभिमानाद्व्युत्थाप्य नारदं, यत्सदेव सत्यं परमार्थतो भूमाख्यं तद्विज्ञापयिष्यामीत्येष विशेषतो विवक्षितोऽर्थः। नाविजानन्सत्यं वदति। यस्त्वविजानन्वदति सोऽग्न्यादिशब्देनाग्न्यादीन्परमार्थसद्रूपान्मन्यमानो वदति, न तु ते रूपत्रयव्यतिरेकेण परमार्थतः सन्ति। तथा तान्यपि रूपाणि सदपेक्षया नैव सन्तीत्यतो नाविजानन्सत्यं वदति। विजानन्नेव सत्यं वदति। न च तत्सत्यविज्ञानमविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह — विज्ञानं त्वेव विजिज्ञासितव्यमिति। यद्येवं, विज्ञानं भगवो विजिज्ञास इति। एवं सत्यादीनां चोत्तरोत्तराणां करोत्यन्तानां पूर्वपूर्वहेतुत्वं व्याख्येयम्।

शंकर.

(२) ब्रह्मोपासनस्यातिवादित्वहेतुत्वं ब्रह्मसाक्षात्कारद्वारेत्याह — यदा वै विजानात्यथेत्यादि। अत्र विजानातिशब्दः साक्षात्कारपरः। यदा वै साक्षात्करोति तदा सत्यं वदति सत्येनातिवदतीत्यर्थः। पूर्वत्र सत्येनातिवदानीतिनिर्दिष्टत्वात्सत्यशब्दितस्य ब्रह्मणोऽतिवदनं प्रति निमित्तत्वेन करणत्वविवक्षया तृतीयाया वदनं प्रति कर्मतया द्वितीयाया अप्युपपत्तेः। सत्यं वदति सत्यमतिवदतीत्यर्थ इति। साक्षात्काराभावे नातिवादित्वम्। अतः साक्षात्काररूपं विज्ञानं विजिज्ञासितव्यं संपाद्यमित्यर्थः। पाकं पचतीतिवद्विज्ञानं विजिज्ञासितव्यमिति निर्देशः। उत्तरस्यापि विजिज्ञासितव्यपदस्य संपाद्यत्वमेवार्थः। उक्तं च व्यासार्यैः —सत्यव्यतिरिक्तविषयाणि विजिज्ञासितव्यपदानि संपाद्यवाचीनीति। शिष्यस्तदभ्युपगच्छति — हे भगवन्नतिवादित्वनिमित्तं साक्षात्कारं संपादयामीत्यर्थः। पूर्वखण्डे 'सत्यं त्वेव विजिज्ञासितव्यमिति' इति ब्रह्मोपासनस्यातिवादित्वहेतुत्वकथनादत्र च वाक्ये साक्षात्कारस्यातिवदनहेतुत्वकथनाद्ब्रह्मोपासनतत्साक्षात्कारयोर्द्वारद्वारिभावापन्नयोरेवातिवादहेतुत्वं सिध्यति।

रंग.

**यदा वै मनुतेऽथ विजानाति। नामत्वा विजानाति। मत्वैव विजानाति। मतिस्त्वेव विजिज्ञासितव्येति। मतिं भगवो विजिज्ञास इति ॥**

(१) यदा वै मनुत इति। मतिर्मननं तर्कः।

शंकर.

(२) ब्रह्मोपासनोपायभूतं मननं संपाद्यमित्यर्थः।

रंग.

(१) छाउ. ७।१७।१; रामानुज. १।३।७.

(१) छाउ. ७।१८।१; रामानुज. १।३।७.

यदा वै श्रद्दधात्यथ मनुते। नाश्रद्दधन्मनुते। श्रद्दधदेव मनुते। श्रद्धा त्वेव विजिज्ञासितव्येति। श्रद्धां भगवो विजिज्ञास इति ॥

(१) मन्तव्यविषये आदरः आस्तिक्यबुद्धिः श्रद्धा। शंकर.

(२) अत्र च भाष्यकृता—श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमप्यर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां श्रद्धा त्वेव विजिज्ञासितव्येत्युपदिश्येति भाषितम्। तत्र श्रवणोपायभूतां ब्रह्मणि श्रद्धामित्यनेन ब्रह्मश्रवणविषयिणी श्रद्धा विवक्षिता। श्रद्धा च त्वरेति व्यासार्यैर्व्याख्यातम्। शिष्टं स्पष्टम्।

रंग.

यदा वै निस्तिष्ठत्यथ श्रद्दधाति। नानिस्तिष्ठञ्छ्रद्दधाति। निस्तिष्ठन्नेव श्रद्दधाति। निष्ठा त्वेव विजिज्ञासितव्येति। निष्ठां भगवो विजिज्ञास इति ॥

(१) निष्ठा गुरुशुश्रूषादितत्परत्वं ब्रह्मविज्ञानाय। शंकर.

(२) ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायरूपा निष्ठा श्रोतुस्त्वरालक्षणश्रद्धोपायतया संपाद्येत्यर्थः। शिष्टं पूर्ववत्। रंग.

यदा वै करोत्यथ निस्तिष्ठति। नाकृत्वा निस्तिष्ठति। कृत्वैव निस्तिष्ठति। कृतिस्त्वेव विजिज्ञासितव्येति। कृतिं भगवो विजिज्ञास इति ॥

(१) यदा वै करोति। कृतिरिन्द्रियसंयमश्चित्तैकाग्रताकरणं च। सत्यां हि तस्यां निष्ठादीनि यथोक्तानि भवन्ति विज्ञानावसानानि। शंकर.

(२) उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसंधानेन मनसो नियमनरूपा कृतिर्ब्रह्मैव श्रोतव्यमितिव्यवसायलक्षणनिष्ठाहेतुत्वात्संपाद्येत्यर्थः।

रंग.

(१) छाउ. ७।१९।१; रामानुज. १।३।७, ३।३।२२; श्रीकर. ३।३।२२.

(२) छाउ. ७।२०।१; रामानुज. १।३।७.

(३) छाउ. ७।२१।१; रामानुज. १।३।७.

यदा वै सुखं लभतेऽथ करोति। नासुखं लब्ध्वा करोति। सुखमेव लब्ध्वा करोति। सुखं त्वेव विजिज्ञासितव्यमिति। सुखं भगवो विजिज्ञास इति ॥

(१) साऽपि कृतिर्यदा सुखं लभते, सुखं निरतिशयं वक्ष्यमाणं लब्धव्यं मयेति मन्यते, तदा भवतीत्यर्थः। यथा दृष्टफलसुखा कृतिस्तथेहापि। नासुखं लब्ध्वा करोति। भविष्यदपि फलं लब्ध्वेत्युच्यते, तदुद्दिश्य प्रवृत्त्युपपत्तेः। अथेदानीं कृत्यादिषूत्तरोत्तरेषु सत्सु सत्यं स्वयमेव प्रतिभासत इति न तद्विज्ञानाय पृथग्यत्नः कार्य इति प्राप्तं, तत इदमुच्यते—सुखं त्वेव विजिज्ञासितव्यमित्यादि।

शंकर.

(२) उक्तलक्षणायाः कृतेर्ब्रह्मणि निरतिशयानुकूलत्वावगमन्तरेणासंभवाच्छ्रोतव्यान्तरेषु हेयत्वानुसंधानाहितमनोनियमनरूपकृतिहेतुतया अत्यन्तानुकूलत्वलक्षणं सुखत्वं ब्रह्मणि ज्ञातव्यमित्यर्थः। अत्र च श्रवणमननश्रद्धादेः प्रागेव सुखप्राप्त्यसंभवात्प्राप्त्यर्थस्यापि लभतेर्ज्ञानमेवार्थः। ज्ञानस्यापि प्राप्तिरूपत्वात्। श्रोतव्येऽत्यन्तानुकूलज्ञानाभावे श्रोतव्यान्तरेषु हेयत्वानुसंधानाहितमनोनियमनरूपकृतेरसंभवात्। अत्यन्तानुकूलत्वं श्रोतव्ये ब्रह्मणि ज्ञातव्यमिति भावः। अत्रत्यविजिज्ञासितव्यशब्दस्य ज्ञातव्यत्वमर्थः। नोपासितव्यत्वं संपादनीयत्वं वा। रंग.

सुखात्मको भूमा अद्वैतरूपो विभुः स्वमहिमप्रतिष्ठः

यो वै भूमा तत्सुखम्। नाल्पे सुखमस्ति। भूमैव सुखम्। भूमा त्वेव विजिज्ञासितव्य इति। भूमानं भगवो विजिज्ञास इति ॥

(१) छाउ. ७।२२।१; रामानुज. १।३।७; वल्लभ. ३।३।४७; विज्ञान. १।३।८ विजिज्ञास ( विजिज्ञासस्व ).

(२) छाउ. ७।२३।१; ब्रशंकर. १।३।८; भास्कर. १।३।८; रामानुज. १।३।७; निंबार्क. १।३।८; ब्रमध्व. १।३।८; श्रीकंठ. १।३।७; श्रीकर. १।३।८, ९, ३।३।५५; वल्लभ. १।३।८, ३।३।४४, ४७, ५७, ४।४।१२, १७; विज्ञान. १।३।८ विजिज्ञास ( विजिज्ञासस्व ); बलदेव. १।१।१, २, १।३।८, ३।३।५९.

( १ ) सुखं भगवो विजिज्ञास इत्यभिमुखीभूताया- ऽऽह — यो वै भूमा, महन्निरतिशयं बह्विति पर्यायास्तत्सुखम्। ततोऽर्वाक्सातिशयत्वादल्पम्। अतस्तस्मिन्नल्पे सुखं नास्ति, अल्पस्याधिकतृष्णाहेतुत्वात्। तृष्णा च दुःखबीजम्। न हि दुःखबीजं सुखं दृष्टं ज्वरादि लोके। तस्माद्युक्तं नाल्पे सुखमस्तीति। अतो भूमैव सुखम्। तृष्णादिदुःखबीजत्वासंभवात् भूम्नः।

* शंकर.

( २ ) भूमशब्दो हि बहुत्ववाची। बहुत्वं चात्र वैपुल्यं न संख्याविशेषः। वैपुल्यं च गुणोत्कर्षरूपं, न तु परिमाणरूपं, सुखशब्दसामानाधिकरण्यात्। न हि सुखे उत्कर्षवत्परिमाणं प्रसिद्धमस्ति। अत उत्कर्षकृतवैपुल्यमेवेह भूमशब्देन विवक्षितम्। अत एव न वैपुल्यरूपधर्मपरो भूमशब्दः। सुखस्य वैपुल्यरूपत्वाभावात्। अल्पप्रतियोगितया निर्देशाच्च। अतोऽल्पशब्दप्रतियोगितया प्रयुज्यमानो भूमशब्दो वैपुल्याश्रयधर्मिपर एव। ततश्चायमर्थः — यदुत्कृष्टं विपुलं तदेव सुखम्। अत्यन्तानुकूलमित्यर्थः। नाल्पे सुखमस्ति। सुखं सुखत्वम्। अत्यन्तानुकूलत्वमित्यर्थः। 'अपशवो वाऽन्ये गोश्वेभ्यः' इत्यत्र गवाश्वव्यतिरिक्तेऽजादौ पशुत्वनिषेधस्य प्रशस्तपशुत्वनिषेधपरत्ववदल्पे प्रत्यगात्मसुखे सुखत्वनिषेधस्य प्रशस्तसुखत्वनिषेधपरत्वात्, पूर्वखण्डे एव सुखशब्दस्यात्यन्तानुकूलार्थतया व्याख्यातत्वात्। ततश्च भूमभिन्नस्य सुखत्वाभावात्, सुखत्वादेव हेतोर्भूमत्वमप्यस्तीति ज्ञातव्यमित्यर्थः। एतत्सर्वं भाष्येऽपि स्पष्टम्।

रंग.

( ३ ) 'भूमा संप्रसादादध्युपदेशात्'—परमाचार्यैः श्रीकुमारैरस्मद्गुरवे श्रीमन्नारदायोपदिष्टः 'भूमा त्वेव विजिज्ञासितव्यः' इत्यत्र भूमा प्राणो न भवति। किंतु श्रीपुरुषोत्तमः। कुतः, प्राणादुपरि भूम्न उपदेशात्।

‡ निंबार्क. १।३।८

( ४ ) 'भूमा संप्रसादादध्युपदेशात्'— प्राणो वा आशाया भूयानित्युक्त्वा यो वै भूमा तत्सुखमित्युक्तेस्तस्यैव भूमत्वप्राप्तिः। उत्क्रान्तप्राणा नित्यादितल्लिङ्गात्प्राणशब्दश्च वायुवाचीत्यतो वक्ति—भूमेति। संप्रसादात्पूर्णसुखरूपत्वात्। अध्युपदेशात्सर्वेषामुपर्युपदेशाच्च विष्णुरेव भूमा। 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्। विश्वं नारायणं देवमक्षरं परमं पदम्। विश्वतः परमान्नित्यम्' इति श्रुतिः। तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यादिना नोत्क्रमणादिलिङ्गविरोधोऽपि।

ब्रमध्व. १।३।८

( ५ ) भूमा संप्रसादादध्युपदेशात्'—इदं श्रूयते। 'यो वै भूमा तत् सुखम्' इति सुखलक्षणमुक्त्वा भूम्नो लक्षणमाह—'यत्र ......स भूमा' इति। तत्र संशयः। भूमा बाहुल्यमाहोस्वित् ब्रह्मेति। तत्र प्रपाठकारम्भे, ततस्त ऊर्ध्वं वक्ष्यामीति प्रतिज्ञातत्वात्, वेदादीनां नामत्वमुक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्तानामुक्त्वा मुख्यप्राणविद्याया अवरब्रह्मविद्यात्वख्यापनायार्द्धप्रपाठकं समाप्य ततोऽपि विज्ञानादीनामन्तरङ्गाणां सुखान्तानां भूयस्त्वमुक्त्वा सुखस्य फलत्वात् तस्यैव भूयस्त्वं वदति।

तस्य सुखबाहुल्यस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेऽपि भवति, सुषुप्तावपीति, तयोरन्यतरत् ग्राह्यम्। तत्राप्यन्तरङ्गत्वात् सुषुप्तिरेवात्र भूमत्वेनोच्यते। न सुखबाहुल्यम्। सुषुप्तिरूपमेव भूमेत्येवं प्राप्ते उच्यते भूमा भगवानेव। कुतः। संप्रसादादध्युपदेशात्। संप्रसादः सुषुप्तिः। तस्मादधि आधिक्येनोपदेशात्। यद्यपि नान्यत् पश्यतीत्यादि समानं, तथापि स एवाधस्तादित्यादिना तु ततोऽप्यधिकधर्मा उच्यन्ते। न हि सुषुप्तेः सर्वत्वादिधर्माः संभवन्ति। आत्मशब्दश्च मुख्यतया परिगृहीतो भवति। भावशब्दस्यापि सर्वत्वात् भगवति वृत्तिरदोषः। तस्मात् भूमा भगवानेव। १।३।८

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति'—ननु सुखस्वरूपजिज्ञासायां 'यो वै भूमा तत् सुखं' इत्युक्तं, भूमस्वरूपजिज्ञासायां 'यत्र नान्यत्पश्यति' इत्यादिना तद्यन्निरूपितं तत्सर्वात्मभावस्वरूपमिति यदुक्तं [illegible]

---

* ब्रशंकर. १।३।८,९ सूत्रयोः भूम्नः प्राणपरमात्मकोटिकसंशयपूर्वकं परमात्मत्वं प्रसाधितम्। भास्कर. श्रीकर. ब्रशंकरवत्। रामानुज. ब्रशंकरवत्। प्राणः प्रत्यगात्मेति विशेषः। श्रीकंठ. रामानुजवत्।

‡ ब्रशंकरवत्।

ध्यते । भूम्नो हि सुखरूपतोच्यते । सर्वात्मभावे तु विरह-भावे दुःसहदुःखानुभवः श्रूयते । तेन मोक्षसुखमेव 'यो वै भूमा' इत्यादिनोच्यते । 'यो वै भूमा तदमृतम्' इति वाक्याच्च । अग्रे च 'स वा एष एवं पश्यन्' इत्याद्युक्त्वा 'तस्य सर्वेषु लोकेषु कामचारो भवति' इति फलमुच्यते । तच्च मोक्षानन्तरमसंभव्यतः स भावः, मोक्षो वात्रोच्यत इति संशयः । तत्र कामचारोक्तेर्मुक्तिपूर्वदशायां तन्माहात्म्यनिरूपणार्थत्वादमृतशब्दाच्च मुक्तिरेव भूमपदेनोच्यते इति पूर्वपक्षः । तत्र भूमशब्देन स भाव एव उच्यत इति सिद्धान्तः । तत्र दुःखदर्शनानुरक्त्या सर्वाधिकारत्वलक्षणं भूमत्वमनुपपन्नमिति शङ्कां परिहरति । भूम्नः सर्वात्मभावस्य ज्यायस्त्वं सर्वस्मान्मन्तव्यम् । तत्रोक्तानुपपत्तिपरिहारार्थं दृष्टान्तमाह— क्रतुवदिति । दर्शपूर्णमासप्रकरणे तैत्तिरीयके पठ्यते 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्तेन स परमां काष्ठामगच्छत्' इत्युपक्रम्य 'य एवं विद्वान्दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति' इति । यथा व्रतादिदुःखात्मकत्वेऽपि परमकाष्ठालक्षणफलगमकत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्योऽधिकत्वं वक्तुं 'अग्र आसीत्' इति श्रूयते । तथा दुःखहेतुत्वेऽप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमुच्यते इत्यन्येभ्यः सर्वेभ्यो ज्यायस्त्वं मन्तव्यमित्यर्थः । अत्रोपपत्तिमाह । तथाहि दर्शयति— श्रुतिस्तु 'स एवाधस्तात्' इत्याद्युक्त्वा 'अथाहंकारादेशः' इत्याद्युक्त्वा 'अथात्मादेशः' इत्याद्युक्तवत्यग्रे चैतादृशस्यात्मन एव प्राणाशास्मरादिसर्वमिति च दर्शयति । एतत्सर्वात्मभाववत्येव सर्वमुपपद्यते, न मुक्तस्य । वृत्तिभेदाभावात् प्राणाद्यभावाच्च । जीवन्मुक्तिदशायां प्राचीनानामेव सत्त्वात् 'आत्मनः प्राणाः' इत्यादि न वदेत् । यद्वा, ननु लोकेऽपि शृङ्गाररसभाववति पुंसि नार्यां च त्वदुक्तभावसंबन्धिव्यभिचारिभावाः श्रूयन्ते। सैव सर्वत्र, स एव सर्वत्रेति । एवं सति लौकिकसधर्मवत्त्वान्न त्वदुक्तभावस्यालौकिकज्ञानादिभ्य आधिक्यं वक्तुं शक्यं, अलौकिकविषयत्वाल्लौकिकत्वमपि न तथेति भवति संशयः । तत्र मनुजत्वारिपुत्वादिज्ञानानामिव कामादिभावेन स्नेहमात्रस्यापि संभवान्नास्यालौकिकत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु, अस्य लौकिकेभ्यो ज्यायस्त्वं मन्तव्यम् । ननूक्तं लोकसाधर्म्यं बाधकमिति शङ्कानिरासाय निदर्शनमाह—क्रतुवदिति । यथा दर्शादिषु दोहनाभिश्रयणातञ्चनव्रीह्यवघातादिपुरोडाशपचनश्रपणादीनां लौकिकक्रियातुल्यत्वेन दर्शनेऽपि न लौकिकत्वम् । लौकिकप्रमाणाप्राप्तत्वादलौकिकतत्प्राप्तत्वात्तथोक्तप्रमाणरूपवरणलभ्यत्वेन श्रुत्युक्तत्वान्न लौकिकत्वमस्य भावस्येति दिक् । वस्तुतस्तु ग्रामसिंहस्य सिंहस्वरूपत्वेऽपि न तादृप्यं वक्तुं शक्यम् । तथा लौकिकपुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते । तद्दृष्टान्तेन भगवद्भाववद्भक्तरीतिभावनार्थं, न तु ऋषीणां लौकिके तात्पर्यं भवितुमर्हति । अत्रोपपत्तिमाह—तथा हीत्यादि । पूर्वोक्तभाववत आत्मनः प्राणादिकं सर्वं दर्शयति श्रुतिः । 'तस्य ह वा एतस्यैवं पश्यतः' इत्यादिना । इतः पूर्वमपि 'स वा एष एवं पश्यन्' इत्युपक्रम्य 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवति' इति श्रुतिश्च । न हि लोके एवं संभवति । आत्मपदानां भगवद्वाचकत्वादिदि एवं सर्वोत्तमविषयकभावस्यैव तथात्वं युक्तमिति चोपपत्तिर्हिशब्देन सूच्यते ।

वल्लभ. ३।३।५७

(६) अत्र 'यो वै भूमा तत्सुखम्' इति कार्यकरणाभेदादुक्तं, 'नाल्पे सुखमस्ति' इत्युत्तरवाक्ये भेदावगमात् । सुखं चेदं जीवन्मुक्तस्य संतोषाख्यधीवृत्तिविशेष एव दुःखाभावो वा, 'यदा वै सुखं लभत अथ करोति' इति पूर्ववाक्यात् । तत्र च लाभः फलत्वेन निश्चयः, तस्यैवोपायकृतिकारणत्वादिति । तथा च भूमप्राप्तिजमेव प्रकृष्टं सुखं, अल्पप्राप्तेः क्षयित्वसातिशयत्वादिना दुःखहेतुत्वादिति युक्तम् ।

* विज्ञान. १।३।८

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्य-

* जीवप्रकृतिसुखविशेषपरमात्मकोटिकः संशयः । परमात्मेति सिद्धान्तः ।

(१) छाउ. ७।२४।१; ब्रशंकर. १।१।१२, १९, २०, १।३।८, ९, २।१।१४, ३।४।५२, ४।४।४; भास्कर.

द्विजानाति तदल्पम्। यो वै भूमा तदमृतम्। अथ यदल्पं तन्मर्त्यम्। स भगवः कस्मिन्प्रतिष्ठित इति। स्वे महिम्नि यदि वा न महिम्नीति॥

(१) किंलक्षणोऽसौ भूमेत्याह—यत्र यस्मिन्भूम्नि तत्त्वे नान्यत् द्रष्टव्यं अन्येन करणेन द्रष्टाऽन्यो विभक्तो दृश्यात्पश्यति, तथा नान्यच्छृणोति। नामरूपयोरेवान्तर्भावाद्विषयभेदस्य, तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणं, अन्येषां चोपलक्षणार्थत्वेन। मननं त्वत्रोक्तं द्रष्टव्यं, नान्यन्मनुत इति। प्रायशो मननपूर्वकत्वाद्विज्ञानस्य। तथा नान्यद्विजानाति। एवं लक्षणो यः स भूमा।

यथा सत्यैकत्वाद्वितीयत्वबुद्धिं प्रकृतामपेक्ष्य सदेकमेवाद्वितीयमिति संख्याद्यनर्हमप्युच्यते, एवं भूम्येकस्मिन्नेव यत्रेति विशेषणम्। अविद्यावस्थायामन्यदर्शनानुवादेन च भूम्नस्तदभावत्वलक्षणस्य विवक्षितत्वान्नान्यत्पश्यतीति विशेषणम्। तस्मात्संसारव्यवहारो भूम्नि नास्तीति समुदायार्थः। अथ यत्राविद्याविषयेऽन्योन्येनान्यत्पश्यतीति तदल्पमविद्याकालभावीत्यर्थः। यथा स्वप्नदृश्यं वस्तु प्राक् प्रबोधात्तत्कालभावीति तद्वत्। तत एव तन्मर्त्यं विनाशि स्वप्नवस्तुवदेव, तद्विपरीतो भूमा, यस्तदमृतम्। तच्छब्दोऽमृतत्वपरः। स तर्ह्येवंलक्षणो भूमा हे भगवन् कस्मिन्प्रतिष्ठित इत्युक्तवन्तं नारदं प्रत्याह सनत्कुमारः—स्वे महिम्नीति। स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितो भूमा, यदि प्रतिष्ठामिच्छसि क्वचित्, यदि वा परमार्थमेव पृच्छसि, न महिम्न्यपि प्रतिष्ठित इति ब्रूमः। अप्रतिष्ठितोऽनाश्रितो भूमा क्वचिदपीत्यर्थः। शंकर.

(२) यत्र नान्यत् पश्यति यत्र भूम्नि सुखे वर्तमानोऽन्यत् दुःखं न पश्यतीत्यर्थः। अन्यशब्दः प्रकृतात् सुखादन्यत् प्रतियोगि दुःखमाह, न पुनर्वस्त्वन्तराभावोऽत्र विवक्षितः। भास्कर. १।३।९

(३) यत्रेत्यनुभूयमाने इत्यध्याहारः। यत्र वस्तुन्यनुभूयमाने ततोऽन्यन्न दृश्यते न श्रूयते न विज्ञायते च स भूमेत्यर्थः। यस्मिन् दृश्यमाने ततोऽन्यन्न दृश्यते, यस्मिन् श्रूयमाणे ततोऽन्यन्न श्रूयते, यस्मिन् विज्ञायमाने ततोऽन्यन्न विज्ञायते, स भूमेत्यर्थः। यद्वा सप्तम्या विषयत्वमर्थः। पश्यन्नित्यध्याहारः। ततोऽन्यन्न पश्यतीत्यर्थः। अत्र तदितरस्य दर्शनाद्यभावो विषयाभावकृतः। ततश्च यतोऽन्यन्नास्ति स भूमेति पर्यवसितोऽर्थः। ननु चेतनाचेतनवर्गस्य तद्भिन्नत्वात्कथं भूम्नोऽन्यन्नास्तीत्युच्यते। इति चेदुच्यते। ब्रह्मशब्दवत् भूमशब्दस्यापि वस्तुपरिच्छेदशून्यत्वमेवार्थः। वस्तुपरिच्छेदो नाम इदमिदं नेति निर्देशार्हत्वम्। तद्राहित्यं स्वरूपाभेदाद्वा भवेत्तदपृथक्सिद्धत्वाद्वा भवेत्। तत्र जीवजडयोरीश्वराभेदाभावात्तदपृथक्सिद्धसत्ताकत्वमिति फलति। तच्च ...तत्सत्ताधीनसत्ताकत्वमेव। एवंविधस्यापृथक्सिद्धत्वस्य सिद्धान्तेऽभ्युपगतत्वान्नानुपपत्तिः। 'अंशो नानाव्यपदेशात्' (ब्रसू. २।३।४३) इत्यत्रापृथक्सिद्धत्वलक्षणांशस्याभेदव्यपदेशनिर्वाहकत्वोक्तेः स्वनिष्ठत्वलक्षणभरणमिह सत्ताशब्दार्थः। उक्तं च हरिणा — 'आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते' इति। चेतनाचेतनयोरात्मभरणलक्षणसत्ता परमात्मसत्ताधीनेत्यर्थः। ततश्च यत्र नान्यदित्यस्यापि यत्सत्तानधीनसत्ताकं नास्ति, यदनात्मकं नास्तीत्यर्थपर्यवसानान्नानुपपत्तिः। यद्वा 'समाने पूर्ववत्त्वात्' (जै. सू. ७।१।१२) इति साप्तमिकाधिकरणे इतरादिसर्वनामशब्दानां पूर्वनिर्दिष्टसदृशवाचित्वस्य व्यवस्थापिततया नान्यतोऽस्ति द्रष्टेत्यादिवाक्येष्विव यत्र नान्यत्पश्यतीति वाक्येऽपि समानान्यनिषेधपरत्वाश्रयणान्नानुपपत्तिः। उक्तलक्षणकभूमविपरीतलक्षणमल्पमित्यर्थः। उक्तलक्षणो भूमैवामृतम्। जननमरणादिशून्यं नित्याविर्भूतानन्याधीनापहतपाप्मत्वादिगुणाष्टकमिति यावत्। इतरत्त्वनीदृशम्। नित्यमुक्तादीनामप्यनन्याधीनतादृक्त्वाभावान्न वाक्यार्थानुपपत्तिरिति द्रष्टव्यम्। सर्ववस्तूनामाधारसापेक्षत्वं दृष्ट्वा शिष्यः पृच्छति— स भगवः कस्मिन्प्रतिष्ठित इति। उत्तरमाह— स्वे महिम्नि इति। स्वस्वरूपमहिमाधारकः। 'स्वयं दासास्तपस्विनः' इतिवदनाधार

---

१।३।८, ९; रामानुज. १।३।७; श्रीकंठ. १।३।७, ८; श्रीकर. १।१।४ (पृ. ५१), १।१।२१, १।३।८, ९, २।१।८, ३।३।५५, ४।४।१०, १५; वल्लभ. १।१।११, १।३।८, ३।३।४४, ४७, ५०, ५७, ३।४।१, ४।४।१२, १७; विज्ञान. १।३।८, ९; बलदेव. १।१।२, १।३।८.

इत्यभिप्रायः । उक्ताभिप्रायेणाऽऽचार्यः स्वयमुक्त्वा स्वशब्दस्याऽऽत्मात्मीयवचनत्वादात्मीये नियन्त्र (यन्त्र)-तया महिमभूते गवाश्वहस्तिहिरण्यदासभार्यादिलक्षणे प्रतिष्ठित इत्यभिप्रायं शिष्यो गृह्णीयात् । अथ वा स्वशब्दस्य स्वात्मपरतयाऽऽत्माधार इत्यभिप्राय इति वा वाक्याभिप्रायं बुध्येत । न च तदुभयमपि संभवति । परमात्मन उभयविभूतिलक्षणात्मीयमहिमसद्भावेऽप्यनाधारस्य परमात्मनस्तत्प्रतिष्ठितत्वासंभवात् । 'न ह्यतिशिक्षितोऽपि नटपटुः स्वस्कन्धमारुह्य नरीनर्ति' इति न्यायेन स्वस्य स्वाश्रितत्वासंभवाच्च । अतो न द्वयमपि युज्यते । अतः शिष्यस्य सा बुद्धिर्निवर्तनीयेति मत्वा पुनराह — यदि वा न महिम्नीति । यदि वा स्वविवक्षितानाधारत्वाभिप्रायातिरिक्ते पूर्वोक्तपक्षद्वये त्वयाऽऽशङ्किते न स्वे महिम्नि प्रतिष्ठित इति ब्रूम इत्यर्थः ।

रंग.

( ४ ) ननु पूर्वत्राधिकरणे 'निरञ्जनः परमं साम्यमुपैति' इति मुक्तानां ब्रह्मसादृश्यमभिहितम् । ततो ब्रह्मणः सायुज्यमुपगता मुक्तात्मानः तत्पृथग्भूता वर्तन्ते इति सिद्धम् । 'यत्र......स भूमा' इति भूमशब्दवाच्ये ब्रह्मणि दृष्टे तन्निष्ठभेदप्रतियोगिप्रपञ्चदर्शनादिनिषेधः क्रियते । कथमिह साङ्गत्यमिति चेत् —भूम्नि प्रत्यक्षे 'नान्यत् पश्यति' इत्यादेरयमभिप्रायः—निरतिशयसुखस्वभावे यस्मिन् साक्षात्कृते सुखान्तराभिलाषेण रूपादिविषयदर्शनादौ न प्रवर्तते यन्मग्नः पुरुषः स भूमा ब्रह्मेति । ब्रह्मानन्दलवपरमाणवो हि विषयसुखविशेषाः । तथा हि श्रुतिः—'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति । तस्मादिह ब्रह्मणि न द्वैतनिषेधप्रसक्तिः । प्रपञ्चे सत्येव कथं मुक्तात्मनामपुरुषार्थस्य तस्य दर्शनं परिह्रियत इति न विचार्यम् । न हि मुक्तात्मनां प्राकृतप्रपञ्चो दर्शनविषयः, किंतु निरतिशयानन्दस्वरूपं ब्रह्मैव प्रपञ्चाकारेण दर्शनगोचरो भवति । ततो मुक्तानां ब्रह्मणा सादृश्यं तत्समरसीभूतप्रपञ्चदर्शित्वमिति सर्वं समीचीनम् ।

श्रीकण्ठ. १।३।८

( ५ ) 'यत्र...नान्यद्विजानाति' इति श्रुतौ भ्रमरकीटवच्छिवोपासनया शिवत्वापन्नभक्तानां शिवातिरिक्तशून्यत्वं दृश्यते ।

१।१।३१

शिवोऽसकलजीवन्मुक्तानां प्रचण्डातपमध्यनिक्षिप्तकर्पूरदीपवदन्तःकरणसद्भावेऽपि सर्वशिवात्मकज्ञानसद्भावात् सच्चिदानन्दस्वरूपपरमशिव एव विश्वात्मना दर्शनविषयो भवति ।

श्रीकर. १।३।९

( ६ ) यस्मिन्सति नान्यत्पश्यतीत्यर्थः । तथा सति सर्वात्मभाववतः प्रभुदर्शने सत्यपि लीलोपयोगिवस्तुदर्शनादिकमनुपपन्नमिति शङ्का तु 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणाः' इत्यादिना निरस्ता वेदितव्या । तैः सह लीलां चिकीर्षतः प्रभुत एव सर्वं संपद्यते, न तु भक्तसामर्थ्येनेति भावेन तदुक्तेः ।

३।२।४७

भूमस्वरूपं श्रुत्वा स भगवः कस्मिन् प्रतिष्ठित इति प्रश्ने स्वे महिम्नीत्युत्तरम् । तदर्थस्तु स्वीयत्वेन वृते भक्ते यो महिमरूपः सर्वात्मभावस्तस्मिन्निति स्वरूपात्मके महिम्नीति वा । भगवदात्मकत्वात् सर्वात्मभावस्य । तदितरस्य साक्षात्पुरुषोत्तमाप्रापकत्वादस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहत्त्वरूपोऽयमेव भावः इति महिमशब्देनोच्यते । स तु विप्रयोगभावोदये सत्येव सम्यक् ज्ञातो भवति व्यभिचारिभावैः । ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः । स एवाधस्तादित्यादिना, आत्मैवेदं सर्वमित्यन्तेन निरूप्य भूमप्रतिष्ठाधिकरणप्रश्ने यदुत्तरितं स्वे महिम्नीति तमेवानुबध्नाति, स वा एष इत्यनेन तच्छन्दस्य पूर्वपरामर्शित्वात् । एवं सति तदुक्तमन्यत्राप्रतिष्ठितत्वं चेदिह प्रतिपाद्यं स्यात् तदोक्तरीत्याऽनुबन्धं न कुर्यादहङ्कारादेशादिकं च न कुर्यादुक्तप्रश्नोत्तरं स्वान्यवस्त्वभावान्न क्वापीत्येव वदेत् । तस्मादस्मदुक्त एव मार्गोऽनुसर्तव्यः ।

३।३।५०

अत्र, नान्यद्विजानातीत्येतावतैव चारितार्थ्येऽपि यदिन्द्रियव्यापारो निषिद्धस्तत्राप्यन्यविषयकः, तेन भगवद्विषयकः स सिद्धो भवतीति जगद्व्यापारराहित्यं सिद्धम् । तत्र तेन भगवत एव स्वतन्त्रं फलत्वमुक्तं

भवति। न हि सुखस्यान्यत् प्रयोजनमस्ति।

* वल्लभ. ४।४।१७

(७) यत्रेति विषयसप्तम्याः पञ्चम्यर्थे पर्यवसानाद्यतोऽन्यन्न पश्यति स भूमेत्यर्थः।

विज्ञान. १।३।८

[1]गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति। नाहमेवं ब्रवीमि। ब्रवीमीति होवाच। अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति॥

(१) यदि स्वमहिम्नि प्रतिष्ठितो भूमा कथं तर्ह्यप्रतिष्ठ उच्यते। शृणु—गोअश्वादीह महिमेत्याचक्षते। गावश्चाश्वाश्च गोअश्वं द्वन्द्वैकवद्भावः। सर्वत्र गवाश्वादि महिमेति प्रसिद्धम्। तदाश्रितस्तत्प्रतिष्ठश्चैत्रो भवति यथा, नाहमेवं स्वतोऽन्यं महिमानमाश्रितो भूमा चैत्रवदिति ब्रवीमि। अत्र हेतुत्वेनान्यो ह्यन्यस्मिन्प्रतिष्ठित इति व्यवहितेन संबन्धः। किन्त्वेवं ब्रवीमीति होवाच—स एवेत्यादि। शंकर.

(२) तद्विवृणोति — गोअश्वमिहेत्यादि। गोअश्वमित्यादौ द्वन्द्वैकवद्भावः। आयतनानीतीतिशब्दः प्रकारवचनः। एवंजातीयकानीत्यर्थः। तत्र प्रतिष्ठितत्वं न ब्रवीमीत्यर्थः। उक्तं च व्यासार्यैः 'अस्य महिमानमिति वीतशोकः' (मुड. ३।१।२) 'एतां विभूतिं योगं च' इत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमात्। यदि वा न महिम्नीति न महिमनिषेधः। अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेधोऽवगम्यत इति। अथ स्वरूपमहिमप्रतिष्ठितत्वं निषेधति— अन्यो ह्यन्यस्मिन्निति। न स्वस्य स्वप्रतिष्ठितत्वं संभवतीति भावः।

रंग.

भूमाख्यब्रह्मणो विभुत्वं अहंकारादेशेन आत्मादेशेन च

[2]स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमिति। अथातोऽहंकारादेश एव। अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति॥

(१) कस्मात्पुनः क्वचिन्न प्रतिष्ठित इत्युच्यते—यस्मात्स एव भूमाऽधस्तान्न तद्व्यतिरेकेणान्यद्विद्यते यस्मिन्प्रतिष्ठितः स्यात्। तथोपरिष्टादित्यादि समानम्। सति भूम्नोऽन्यस्मिन्भूमा हि प्रतिष्ठितः स्यान्न तु तदस्ति। स एव तु सर्वे, अतस्तस्मादसौ न क्वचित्प्रतिष्ठितः। 'यत्र नान्यत्पश्यति' इत्यधिकरणाधिकर्तव्यतानिर्देशात्स एवाधस्तादिति च परोक्षनिर्देशाद्द्रष्टुर्जीवादन्यो भूमा स्यादित्याशङ्का कस्यचिन्मा भूदित्यथातोऽनन्तरमहंकारादेशोऽहंकारेणाऽदिश्यत इत्यहंकारादेशः। द्रष्टुरनन्यत्वदर्शनार्थं भूमैव निर्दिश्यतेऽहंकारेणाहमेवाधस्तादित्यादिना। * शंकर.

(२) ननु यत्र नान्यत्पश्यतीत्यनुपपन्नं नानादिग्वर्तिनां चेतनाचेतनपदार्थानां भिन्नानामुपलम्भादित्यत्राह— स एवाधस्तात्स इत्यादि। अत्र स एवेदं सर्वमिति सामानाधिकरण्यात्स इति निर्दिष्टस्य भूम्न इदं सर्वमिति निर्दिष्टस्य चिदचिद्वर्गस्य च शरीरात्मभावः फलितो भवति। शरीरात्मभावश्च व्याप्तिनिबन्धन इति स एवाधस्तादितिश्रुत्याभिप्रायः। ततश्च यत्र नान्यत्पश्यतीति तदनात्मकान्यनिषेधे नानुपपत्तिरिति भावः। एवं सर्वात्मभूतस्य भूम्न उपासने स्वशरीरकतयोपासनं कर्तव्यमित्युपदिशति — अथातोऽहंकारादेश इति। क्रियते इति शेषः। अथशब्दः प्रकृतविषयद्योतनार्थः। अहंकारोऽहंबुद्धिः। अहंग्रहेण भूम्न उपासनप्रकारः अतः परमुपदिश्यते इत्यर्थः। न तु जीवस्वरूपोपदेश इति मन्तव्यम्। तथा सत्यहमादेश इति निर्देशस्यैव युक्ततया कारपदवैयर्थ्यात्। परमात्मनोऽहंग्रहेणोपासनप्रकारमेव दर्शयति — अहमेवाधस्तादिति। सर्वदिग्वर्तिसर्वात्मा भूमाऽहमेवेति ज्ञातव्यमित्यर्थः। न तु जीवस्य सर्वात्मकत्वमुपदिश्यते इति भ्रमितव्यम्। जीवस्यातथात्वात्, तथात्वे कारशब्दवैयर्थ्यस्योक्तत्वाच्च। उक्तं च भगवता भाष्यकृता— यत्तु अहमेवाधस्तादित्या-

* छाउ. ७।२३।१ (पृ. ९४२) इत्यत्र द्रष्टव्यम्।

(१) छाउ. ७।२४।२.

(२) छाउ. ७।२५।१; ब्रशंकर. ३।२।३६; भास्कर. ३।२।३६; रामानुज. १।३।७; वल्लभ. १।३।८, ३।३।४४, ५०, ५७, ४।४।१२; विज्ञान. १।१।२ (पृ. ५८).

* वल्लभ. छाउ. ७।१।१ (पृ. ९२६), ७।२३।१ (पृ. ९४२) इत्यत्र द्रष्टव्यम्।

दिना सर्वात्मकत्वमुपदिष्टं तद्भूमविशिष्टस्य ब्रह्मणोऽहं-ग्रहेणोपासनमुपदिश्यते । अथातोऽहंकारादेश इत्यहंग्रहेणो-पदेशोपक्रमादिति, परमात्मनः प्रत्यगात्मशरीरकत्व-ज्ञानप्रतिष्ठार्थमहंग्रहेणोपासनं कर्तव्यमिति च ।

रंग.

( ३ ) अहं ममेति शब्दाभ्यां स्वस्वामिभावाव-गमात् अत एव पातञ्जले 'स्वस्वामिशक्त्योः स्वरूपोप-लब्धिहेतुः संयोगः' इति सूत्रे स्वस्वामिशब्दाभ्यां बुद्ध्यात्मानावुक्ताविति । अत एव च 'अथात आत्मा-देशः', 'अथातोऽहंकारादेशः' इति श्रुत्योर्न पौनरु-क्त्यं, अर्थभेदात् ।

विज्ञान. १।१।२

**अथात आत्मादेश एव । आत्मैवाधस्तादात्मोप-रिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरा-त्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति । तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽ-न्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति । तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥**

( १ ) अहंकारेण देहादिसंघातोऽप्यादिश्यतेऽविवे-किभिरित्यतस्तदाशङ्का मा भूदित्यथानन्तरमात्मादेशः आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनाऽऽदिश्यते । आत्मैव सर्वतः सर्वमित्येवमेकमजं सर्वतो व्योमवत्पूर्ण-मन्यशून्यं पश्यन् स वा एष विद्वान्मननविज्ञानाभ्यामा-त्मरतिरात्मन्येव रतिः रमणं यस्य सोऽयमात्मरतिः, तथा आत्मक्रीडः । देहमात्रसाधना रतिः बाह्यसाधना क्रीडा, लोके स्त्रीभिः सखिभिश्च क्रीडतीति दर्शनात् । न तथा विदुषः, किं तर्ह्यात्मविज्ञाननिमित्तमेवोभयं भवतीत्यर्थः । मिथुनं द्वन्द्वजनितं सुखं, तदपि द्वन्द्वनिरपेक्षं यस्य विदुषः । तथा आत्मानन्दः, शब्दादिनिमित्त आनन्दोऽवि-दुषां, न तथाऽस्य विदुषः, किं तर्हि, आत्मनिमित्तमेव सर्वं सर्वदा सर्वप्रकारेण च, देहजीवितभोगादिनिमित्त-बाह्यवस्तुनिरपेक्ष इत्यर्थः । स एवंलक्षणो विद्वाञ्जीव-न्नेव स्वाराज्येऽभिषिक्तः पतितेऽपि देहे स्वराडेव भवति । यत एवं भवति तत एव तस्य सर्वेषु लोकेषु कामचारो भवति । प्राणादिषु पूर्वभूमिषु 'तत्रास्य' इति तावन्मात्र-परिच्छिन्नकामचारत्वमुक्तं, अन्यराजत्वं चार्थप्राप्तं, सातिशयत्वात् । यथाप्राप्तस्वाराज्यकामचारत्वानुवादेन तत्तन्निवृत्तिरिहोच्यते—स स्वराडित्यादिना । अथ पुन-र्येऽन्यथाऽत उक्तदर्शनादन्यथा वैपरीत्येन यथोक्तमेव वा सम्यङ्न विदुस्तेऽन्यराजानो भवन्ति, अन्यः परो राजा स्वामी येषां तेऽन्यराजानस्ते । किंच क्षय्यलोकाः क्षय्यो लोको येषां ते क्षय्यलोकाः । भेददर्शनस्याल्पविषयत्वादल्पं च तन्मर्त्यमित्यवोचाम । तस्माद्ये द्वैतदर्शिनस्ते क्षय्य-लोकाः स्वदर्शनानुरूप्येणैव भवन्ति, अत एव तेषां सर्वेषु लोकेष्वकामचारो भवति ।

* शंकर.

( २ ) नन्वहंबुद्धिशब्दयोर्जीवात्मविषययोः कथं भूम-पर्यन्तत्वं, अनहमर्थे च परमात्मन्यहंग्रहोपासनस्याय-थार्थत्वमेव स्यादित्याशङ्क्य भूम्नः प्रत्यगात्मानं प्रत्यात्म-त्वेन तद्विषयबुद्धिशब्दानां परमात्मपर्यन्तत्वमुपपद्यते इति दर्शयन् 'तरति शोकमात्मवित्' इति प्रक्रान्तमात्म-त्वोपदेशं भूम्नि समापयति — अथात आत्मादेश इत्यादि । अत्रापि क्रियत इति शेषः । अथशब्दः प्रकृत-विषयत्वद्योतनार्थः । आत्मादेश आत्मत्वोपदेशः क्रियत इत्यर्थः ।

सर्वात्मतयोपदिश्यमानो भूमा स्वोपासकस्याऽऽत्मैवे-त्यर्थः । ततश्च तत्राहंबुद्धिशब्दयोर्याथार्थ्यमेवेति भावः । रतिः स्रक्चन्दनादिजन्या प्रीतिः । क्रीडा उद्यानादिजन्या ।

---

(१) छाउ. ७।२५।२; ब्रशंकर. १।४।२२, २।१।९, १४, ३।२।३६, ४।३।१४, ४।४।४, ५, १७; रंग. आत्मादेश एव ( आत्मादेशः ); रामानुज. १।१।१, १।३।७, ३।२।९, ३।३।३०, ४०, ५५, ४।४।९, १८; निंबार्क. ३।३।४०, ४।४।९, १८; श्रीकंठ. १।३।७, ८, ३।३।२९; श्रीकर. १।१।१ ( पृ. २० ), १।३।८, ९, ३।२।९, २६, ३।३।३०, ४०, ४४, ५१, ५५, ४।४।९, १३, १९; वल्लभ. १।१।३ ( पृ. ११९ ), १।१।११, १।३।८, ९, ३।३।४४, ५०, ५१, ५३, ५७, ४।१।५, ४।४।१२; विज्ञान. १।१।२ ( पृ. ५८ ), १।१।४ ( पृ. १११ ), ३।२।३२, ३।३।३६, ४।४।९; बलदेव. ४।४।१७, १८.

* ब्रशंकर. तैउ. १।६ ( पृ. ७०० ) इत्यत्र द्रष्टव्यम् ।

स्त्रीसंभवा प्रीतिर्मिथुनम् । विभूतिजन्या प्रीतिरानन्दः । आत्मैव रतिर्यस्य स तथोक्तः । एवमुत्तरत्रापि । श्रवणमनननिदिध्यासनैरुक्तभूमात्मसाक्षात्कारनिष्ठस्य सर्वविधसुखानुभवोऽप्यात्मसुखानुभवान्तर्गत इत्यर्थः । स्वराट्, स्वयमेव राजा । अकर्मवश्यो विधिनिषेधकिंकरो न भवतीति यावत् । 'प्रत्यक्षोपदेशान्नेति चेत्' ( ब्रसू. ४।४।१८ ) इति सूत्रे—अकर्मप्रतिहतज्ञानो मुक्तो विकारलोकान्ब्रह्मविभूतिभूताननुभूय यथाकामं तृप्यतीति सर्वेषु लोकेषु कामचारो भवतीत्यस्य वाक्यस्यार्थ इति भाषितम् । य उक्तप्रकारादन्येन प्रकारेणोपासते ते अन्यराजानो भवन्ति विधिनिषेधकिंकरा भवन्ति कर्मवश्या भवन्तीत्यर्थः । स्वराडित्यस्य प्रतिद्वन्द्वित्वात्क्षय्यलोकाश्च भवन्तीत्यर्थः । अत्र क्षय्यलोका भवन्तीत्यनेन यथोक्तप्रकारेण परमात्मोपासकानामक्षय्यभगवल्लोकत्वमस्तीत्युक्तं भवति ।

रंग.

( ३ ) 'उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्' — उपपन्न एवोत्क्रान्तिकाले सर्वकर्मक्षयः । कथम् । तल्लक्षणार्थोपलब्धेः । क्षीणकर्मणोप्याविर्भूतस्वरूपस्य देहसंबन्धलक्षणार्थोपलब्धेः । 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छाउ. ८।३।४) 'स तत्र पर्येति जक्षत्क्रीडन्रममाणः' ( छाउ.८।१२।३ ) 'स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति' 'स एकधा भवति त्रिधा भवति' ( छाउ. ७।२६।२ ) इत्यादिषु देहसंबन्धाख्योऽर्थो ह्युपलभ्यते । अतः क्षीणकर्मणोऽपि सूक्ष्मशरीरयुक्तस्य देवयानेन गमनमुपपद्यते । कथं सूक्ष्मशरीरमप्यारम्भककर्मविनाशेऽवतिष्ठते इति चेत् । विद्यामाहात्म्यादिति ब्रूमः । विद्या हि स्वयं सूक्ष्मशरीरस्यानारम्भिकाऽपि प्राकृतसुखदुःखोपभोगसाधनस्थूलशरीरस्य सर्वकर्मणां च निरवशेषक्षयेऽपि स्वफलभूतब्रह्मप्राप्तिप्रदानाय देवयानेन पथैनं गमयितुं सूक्ष्मशरीरं स्थापयति । लोकवत् । यथा लोके सस्यादिसमृद्ध्यर्थमारब्धे तडागादिके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तदेव तडागादिकमशिथिलं कुर्वन्तस्तत्र पानीयपानादिकं कुर्वन्ति तद्वत् ।

३।३।३०

अतः सर्वेषु लोकेषु कामचारस्य मुक्तोपभोग्यफलत्वान्मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ।

* रामानुज. ३।३।४०

( ४ ) 'न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः' — ननु नान्यत् पश्यतीत्यारभ्य सर्वस्य प्रपाठकस्य सर्वात्मभावनिरूपकत्वोक्तिरनुपपन्ना । अत एवात्मपदानां पुरुषोत्तमपरत्वोक्तिश्च । यतस्तस्य मुक्तावपि कामाभावः प्रतिपाद्यते । अत्र तु तस्य सर्वेषु लोकेषु कामचारो भवतीति श्रुतिः पठ्यते । एवं सति न तन्निरूपणमत्रेति वा वाच्यं, तद्भाववतोऽप्यन्यकामवत्त्वमिति वा । द्वितीयस्योक्तप्रमाणपराहतत्वेनाद्यपक्ष एवाश्रयणीय इति पूर्वपक्षं निरस्यति । नेति । तत्र हेतुमाह—सामान्यादप्युपलब्धेरिति । तत्समानधर्मयोगादपि तत्प्रयोगः श्रुतावुपलभ्यतेऽनेकशो यतः । प्रकृतेऽपि विविधानां लोकानां विविधसुखप्रधानत्वाद्भगवत्संबन्धिषु सर्वेषु सुखेषु कामचारो भवतीति श्रुतेरर्थो ज्ञेयः । ननु यथाश्रुत एवार्थोऽस्तु, तत्राह—न हि लोकापत्तिरिति । सर्वात्मभाववत इति प्रकरणात्, नान्यत् पश्यतीत्यादिधर्मविशिष्टस्यात्मनः प्राणादिसर्ववतो लोकसंबन्धो युक्तिसहोऽपि नेति ज्ञापनाय हिशब्दः । किञ्च । एतदग्रे 'न पश्यो मृत्युं पश्यति' इति श्रुत्या यथा मृत्युनिषेधः क्रियते तथा 'आत्मन एवेदं सर्वम्' इतिश्रुत्यैवकारेणात्मातिरिक्तव्यवच्छेदः क्रियत इति मृत्युवल्लोकोऽपि न संबध्यत इत्याह— मृत्युवदिति । तत्र रोगादीनामपि दर्शननिषेधे सत्यपि मृत्योरेव यन्निदर्शनमुक्तं तेन भक्तानां लोकान्तरसंबन्धस्ततुल्य इति ज्ञाप्यतेऽत एव, नोत दुःखमिति दुःखसामान्यनिषेधोऽग्रे कृतः । ३।३।५१

'द्वादशाहवदुभयविधं बादरायणोऽतः' —ब्रह्मणा सह सर्वकामाशनप्रयोजकं शरीरं शरीरत्वस्य भूतजन्यत्वव्याप्यत्वात्तदभावेनाऽशरीररूपं तद्भोगायतनत्वेन शरीररूपमपीति बादरायण आचार्यो मन्यते । अत्र हेतुरत इति । तथाविधश्रुतेरित्यर्थः । तथाहि । 'भूमैव विजिज्ञासितव्यः' इत्युक्त्वा तत्स्वरूपमाह । 'यो वै भूमा तत्सुखम्' इत्युपक्रम्याग्र उच्यते — 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा'

---

* निंबार्क. श्रीकर. रामानुजवत् ।

इत्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणमुक्त्वा केवलभाववतो भक्तस्य विप्रयोगसामयिकीं व्यवस्थामाह। 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात्' इत्यादिना। ततः 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्' इति पूर्वावस्थामनूद्य संयोगावस्थामाह। 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः' इति वाक्येन। 'सोऽश्नुते' इति श्रुतिसंवादिनमर्थमुक्त्वा भक्तस्वरूपमाह। 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राणः' इत्युपक्रम्य 'आत्मत एवेदं सर्वम्' इति। तेनाऽशरीरत्वं सिध्यति। अव्ययप्रयोगेणाऽविकृतादेव पुरुषोत्तमात् प्राणाद्याविर्भाव उच्यते। अत्र ल्यब्लोपे पञ्चमी। पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसंस्ततस्तत्प्राकट्ये तत एव प्राणादयोऽपि संपन्ना इति तत्प्राप्तेर्निमित्तत्वं, यतो विभूतिरूपाणामपि पुरुषोत्तमे लयो नानुपपन्नः। 'आत्मरतिः' इत्यादिना, 'सोऽश्नुते' इत्यनेन च शरीरत्वम्। जैमिनिरप्यत एव ब्राह्मेणेति मनुते। एकस्य विरुद्धोभयधर्मवत्त्वममन्वानं प्रति वैदिकं दृष्टान्तमाह—द्वादशाहवदिति। 'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत' इति चोदनया 'द्विरात्रेण यजेत' इत्यादिवन्नियतकर्तृकत्वेनाहीनत्वं गम्यते। 'द्वादशाहमृद्धिकामा उपेयुः', 'य एवं विद्वांसः सत्रमुपयन्ति' इति श्रुत्या च सत्रस्य बहुकर्तृकत्वं गम्यते। एवमेव द्वादशाङ्गशरीरेन्द्रियप्राणान्तःकरणात्मभिरश्नुते इति सत्रतुल्यत्वम्। वस्तुतो भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वमतो द्वादशाहवदुभयविधम्। सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववदत्रापि तादृग्भक्तदेहादीनामपि ब्रह्मात्मकत्वाच्चेतनत्वमेवेत्यप्यनेन दृष्टान्तेन ज्ञाप्यते। अत एव श्रीभागवते, 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' इति गीयते।

*वल्लभ. ४।४।१२

(५) 'अत एवानन्याधिपतिः' — अत एव अप्रतिहतसंकल्पत्वादेव स ब्रह्मसंपत्तिरनन्याधिपतिः, नास्त्यन्योऽधिपतिर्यस्य, स्वराडित्यर्थः। ईश्वरस्तु तस्येच्छां संपादयत्येव, न तु विघातयतीति। सोऽपि तस्येश्वर इति भावः। यद्वा अन्य ईश्वरातिरिक्तो नास्त्यधिपतिर्यस्येत्यर्थः। एवं च सति सूत्रस्य, तत्स्थान्यपदस्य च साफल्यं भवतीति बोध्यम्। अन्यथा संकल्पादेवेति पूर्वसूत्रादेव स्वातन्त्र्यलाभादिदं सूत्रमन्यपदं च मन्दप्रयोजनं स्यादिति। विदुषां स्वाराज्यं च 'स स्वराड्भवति तस्य सर्वेषु कामचारो भवति' इति श्रुतेः सिद्धम्। विज्ञान. ४।४।९

* छाउ. ३।१४।१ (पृ.८०९), ७।१।१ (पृ.९२६), ७।२३।१ (पृ. ९४२), ७।२४।१ (पृ. ९४५) इत्यत्र द्रष्टव्यम्।

आत्मज्ञस्य सर्वोऽपि व्यवहारः आत्ममूलकः, मृत्युदुःखरोगतरणं, आहारशुद्ध्यादिक्रमेण मोक्षः

**तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेद्ँ सर्वमिति ॥**

(१) तस्य ह वा एतस्येत्यादि स्वाराज्यं प्राप्तस्य प्रकृतस्य विदुषः इत्यर्थः। प्राक्सदात्मविज्ञानात्स्वात्मनोऽन्यस्मात्सतः प्राणादेर्नामान्तस्योत्पत्तिप्रलयावभूताम्। सदात्मविज्ञाने तु सतीदानीं स्वात्मत एव संवृत्तौ। तथा सर्वोऽप्यन्यो व्यवहार आत्मत एव विदुषः।

*शंकर.

(२) अथात आत्मादेश इत्यनेनोक्तमुपासकान्तर्यामिणश्चेतनाचेतनसकलप्रपञ्चोपादानत्वलक्षणसर्वात्मकत्वं स्पष्टयति — 'तस्य ह वा' इत्यादिना। उपासकस्यान्तर्याम्येव प्राङ्निर्दिष्टप्राणशब्दितजीवपर्यन्तसकलप्रपञ्चोपादानमतोऽहमेवेदं सर्वमितिविहिताऽहंग्रहस्तात्त्विकविषय एवेति भावः। रंग.

* वल्लभ. छाउ. ७।२३।१ (पृ. ९४२), ७।२४।१ (पृ. ९४५) इत्यत्र द्रष्टव्यम्।

(१) छाउ. ७।२६।१; ब्रशंकर. १।१।१०, १।३।८; भास्कर. १।३।८; रामानुज. १।३।७; श्रीकंठ. १।१।१२, १।३।८; श्रीकर. १।३।९; वल्लभ. ३।३।४४, ४५, ५१, ५२, ४।४।१२.

तदेष श्लोकः । न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वꣳह पश्यः पश्यति सर्वमाप्नोति सर्वशः । इति स एकधा ( धैव ) भवति त्रिधा भवति पञ्चधा । सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः । शतं च दश चैकश्च सहस्राणि च विꣳशतिः । आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः। तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान्सनात्कुमारः । तꣳ स्कन्द इत्याचक्षते ॥

( १ ) किंच तदेतस्मिन्नर्थे एष श्लोको मन्त्रोऽपि भवति । न पश्यः पश्यतीति । पश्यः यथोक्तदर्शी विद्वानित्यर्थः । मृत्युं मरणं, रोगं ज्वरादि, दुःखतां दुःखभावं चापि न पश्यति । सर्वं ह सर्वमेव स पश्यः पश्यत्यात्मानमेव सर्वं, ततः सर्वमाप्नोति सर्वशः सर्वप्रकारैरिति । किञ्च स विद्वान् प्राक्सृष्टिप्रभेदादेकधैव भवति । एकधैव च संस्त्रिधादिभेदैरनन्तभेदप्रकारो भवति सृष्टिकाले । पुनः संहारकाले मूलमेव स्वं पारमार्थिकमेकधाभावं प्रतिपद्यते स्वतन्त्र एवेति विद्यां फलेन प्ररोचयन्स्तौति । अथेदानीं यथोक्ताया विद्यायाः सम्यगवभासकारणं मुखावभासकारणस्येवाऽऽदर्शस्य विशुद्धिकारणं साधनमुपदिश्यते — आहारशुद्धौ । आह्रियत इत्याहारः, शब्दादिविषयविज्ञानं भोक्तुर्भोगायाऽऽह्रियते, तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धिः, रागद्वेषमोहदोषैरसंसृष्टं विषयविज्ञानमित्यर्थः । तस्यामाहारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति । सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवाऽविच्छिन्ना स्मृतिरविस्मरणं भवति । तस्यां च लब्धायां स्मृतिलम्भे सति सर्वेषामविद्याकृतानर्थपाशरूपाणामनेकजन्मान्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां विप्रमोक्षो विशेषेण प्रमोक्षणं विनाशो भवतीति । यत एतदुत्तरोत्तरं यथोक्तमाहारशुद्धिमूलं तस्मात्सा कार्येत्यर्थः । सर्वं शास्त्रार्थमशेषत उक्त्वाऽऽख्यायिकामुपसंहरति श्रुतिः— तस्मै मृदितकषायाय, वार्क्षादिरिव कषायो रागद्वेषादिदोषः, सत्त्वस्य रञ्जनारूपत्वात्स ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितो मृदितो विनाशितो यस्य नारदस्य, तस्मै योग्याय मृदितकषायाय तमसः अविद्यालक्षणात्पारं परमार्थतत्त्वं दर्शयति दर्शितवानित्यर्थः । कोऽसौ भगवान्—' उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ ' एवंधर्मा सनात्कुमारः । तमेव सनत्कुमारं देवं स्कन्द इत्याचक्षते कथयन्ति तद्विदः । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ।

शंकर.

( २ ) ' अबाधाच्च '— एवं च सत्याहारशुद्धौ सत्त्वशुद्धिरित्येवमादि भक्ष्याभक्ष्यविभागशास्त्रमबाधितं भविष्यति । ३।४।२९

' अभावं बादरिराह ह्येवम् '—' संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ' ( छाउ. ८।२।१ ) इत्यतः श्रुतेर्मनस्तावत्संकल्पसाधनं सिद्धम् । शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति न वा सन्तीति समीक्ष्यते । तत्र बादरिस्तावदाचार्यः शरीरस्येन्द्रियाणां चाभावं महीयमानस्य विदुषो मन्यते । कस्मात् । एवं ह्याहाऽऽम्नायः— ' मनसैतान्कामान्पश्यन्रमते ' ( छाउ. ८।१२।५ ) ' य एते ब्रह्मलोके ' ( छाउ. ८।१३।१ ) इति । यदि मनसा शरीरेन्द्रियैश्च विहरेत्, मनसेति विशेषणं न स्यात् । तस्मादभावः शरीरेन्द्रियाणां मोक्षे ।

---

(१) छाउ. ७।२६।२; ब्रशंकर. १।१।४ ( पृ. ६२ ), १।३।८, २।२।४२, ३।३।३२, ३।४।२९, ४।४।११, १५ तमसस्पारं ( तमसः पारं ); भास्कर. १।३।८, ९, ३।४।२९, ४।४।११, १५ न रोगं ( नोत रागं ) दुःखताम् (दुःखिताम्) सर्वꣳ ह ( सर्वꣳहि ) तमसस्पारं ( तमसः पारं ) सनात्कुमारः ( सनत्कुमारः ); रंग. तमसस्पारं ( तमसः पारं ) सनात्कुमारः ( सनत्कुमारः ); रामानुज. १।१।१ ( पृ. ४, ९, ११, १७, ४२ ), १।१।४ ( पृ. १५४ ), १।३।७, २।१।९, १४, २।३।१९, ३१, ३।२।९, ३।३।३०, ३।४।२९, ४९, ४।४।११, १६ रंगवत्; निंबार्क. ३।४।२९, ४।४।११; श्रीकंठ. ३।४।२९, ४।४।११, २२; श्रीकर. २।३।१७, ३।२।९, ३।४।२९, ५०, ४।४।८, ११, १५, १६; वल्लभ. १।३।९, ३।३।४४, ५१, ५२, ३।४।२७, ४।२।१२, ४।४।१८, १९; विज्ञान. १।३।८, ३।४।२९, ४।४।११, १५ रंगवत्; बलदेव. ३।३।११, ३।४।३१, ४।४।११, १२, १५.

'भावं जैमिनिर्विकल्पामननात्' –– जैमिनिस्त्वाचार्यो मनोवच्छरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते। यतः 'स एकधा भवति त्रिधा भवति' इत्यादिनाऽनेकधाभावविकल्पमामनन्ति। न ह्यनेकविधता विना शरीरभेदेनाऽञ्जसी स्यात्। यद्यपि निर्गुणायां भूमविद्यायामयमनेकधाभावविकल्पः पठ्यते, तथापि विद्यमानमेवेदं सगुणावस्थायामैश्वर्यं भूमविद्यास्तुतये संकीर्त्यते इत्यतः सगुणविद्याफलभावेनोपतिष्ठते इति।

'द्वादशाहवदुभयविधं बादरायणोऽतः' –– उच्यते ––बादरायणः पुनराचार्योऽत एवोभयलिङ्गश्रुतिदर्शनादुभयविधत्वं साधु मन्यते यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा त्वशरीरतां तदाऽशरीर इति, सत्यसंकल्पत्वात् संकल्पवैचित्र्याच्च। द्वादशाहवत्। यथा द्वादशाहः सत्रमहीनश्च भवति। उभयलिङ्गश्रुतिदर्शनादेवमिदमपीति। ४।४।१०,११,१२

'प्रदीपवदावेशस्तथा हि दर्शयति' –– 'भावं जैमिनिर्विकल्पामननात्' इत्यत्र सशरीरत्वं मुक्तस्योक्तम्। तत्र त्रिधाभावादिष्वनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारुयन्त्रवत्सृज्यन्ते किंवा सात्मकान्यस्मदादिशरीरवदिति भवति वीक्षा। तत्र चाऽऽत्ममनसोर्भेदानुपपत्तेरेकेन शरीरेण योगादितराणि शरीराणि निरात्मकानीति। एवं प्राप्ते प्रतिपद्यते। प्रदीपवदावेश इति। यथा प्रदीप एकोऽनेकप्रदीपभावमापद्यते विकारशक्तियोगात्। एवमेकोऽपि सन्विद्वानैश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति। कुतः। तथा हि दर्शयति शास्त्रमेकस्यानेकभावम् 'स एकधा भवति त्रिधा भवति ...' इत्यादि। नैतद्दारुयन्त्रोपमाभ्युपगमेऽवकल्पते, नापि जीवान्तरावेशे। न च निरात्मकानां शरीराणां प्रवृत्तिः संभवति। यत्त्वात्ममनसोर्भेदानुपपत्तेरनेकशरीरयोगासंभव इति। नैष दोषः। एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात्स्रक्ष्यति। सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते। एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया। * ब्रशंकर. ४।४।१५

* सर्वत्रात्र मुक्तशब्दः क्रममुमुक्षुसगुणब्रह्मोपासकपरः। भास्कर. निंबार्क. श्रीकंठ. ब्रशंकरवत्।

(३) तस्मिन्विदिते एव वक्ष्यमाणः श्लोकः प्रवृत्त इत्यर्थः। 'न पश्यो मृत्युं' इत्यादि। पश्यो ब्रह्मदर्शी मृत्युं मरणं रोगं दुःखमनर्थनं जगति प्रतिकूलतां च न पश्यति। सर्वसाक्षात्कर्ता सन् संकल्पमात्रेणैव संकल्पितानर्थान्सर्वस्मिन्काले प्राप्नोतीत्यर्थः। अपहतपाप्मत्वादिगुणाष्टकाविर्भावो भवतीत्यर्थः। अत्र जगति दुःखतां न पश्यतीत्युक्त्या जगतो मुक्तं प्रति प्रतिकूलत्वं नास्ति। पित्तोपहतस्य पयःप्रतिकूलत्ववज्जगतः प्रतिकूलत्वं कर्तृकर्मनिबन्धनमित्युक्तं भवति। आत्मनो निरवयवस्य त्रेधा पञ्चधा सप्तधेत्यादिविभागायोगात्संकल्पपरिगृहीतानेकविधशरीरो भवतीत्यर्थः। एवं मोक्षसाधनभूतोपासनप्रकारमुपदिश्य तादृशोपासननिष्पत्त्यावन्तःकरणस्योपासनोत्पत्तिप्रतिबन्धकपापराहित्यमपेक्षितम्। तच्च राजसतामसाहारसेविनां न संभवति, अपि तु तत् विविक्तसात्त्विकाहारसेविनां भवेत्, इत्युपासकः सात्त्विकाहारसेवी भवेदित्युपदिशति – आहारशुद्धौ इति। आहारशुद्धौ सात्त्विकाहारसेवने सति सत्त्वस्यान्तःकरणस्य शुद्धिर्नैर्मल्यं भवति। तन्नैर्मल्ये सति ध्रुवस्मृतिः अविच्छिन्नस्मृतिसंतानरूपात्मध्यानं सिध्यति। ध्रुवस्मृतिलम्भे दुर्मोचतया ग्रन्थिशब्दवाच्यानामविद्यारागादीनां मोक्षो भवतीत्यर्थः। अत्र स्मृतिलम्भ एव सर्वग्रन्थीनां विप्रमोक्ष इत्युक्त्या स्मृत्यनन्तरभाविना स्मृतिविलक्षणेन दर्शनेन न मोक्षः, अपि तु दर्शनसमानाकारस्मृतिसंतानेनैव। ततश्च 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्' (छाउ. ७।२५।४) इत्यत्र पश्यन्नित्यादिशब्दा दर्शनसमानाकारोपासनपराः। प्रकरणान्तरस्थाः 'आत्मा वा अरे द्रष्टव्यः' (बृउ. २।४।५) इत्यादिशब्दाश्च दर्शनसमानाकारध्यानपरा इति सूचितं भवति। शास्त्रार्थमशेषत उक्त्वाऽऽख्यायिकामुपसंहरति श्रुतिः — तस्मै मृदितकषायायेत्यादि। एवं शुद्धान्तःकरणाय नारदाय भगवान्सनत्कुमारः संसारसंतमसचण्डभानुभूतोपासनगोचरं परमात्मानं स्पष्टमुपादिक्षदित्यर्थः। अत्र नामादिषु ब्रह्मत्वेनोपदिष्टेष्वपि तत्र ब्रह्मत्वस्यानभ्युपगमात्तस्य मृदितकषायत्वं शिष्यस्य परिशुद्धान्तःकरणतयोपदेशयोग्यतां परीक्ष्यैवोपदिष्टवानित्यर्थः। सनत्कुमारं स्कन्द इत्यपि वदन्तीत्यर्थः। रंग.

(४) वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह । तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभवान्निर्वचनाच्चेति । विवेकादीनां स्वरूपं चाह —' जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः ' इति । अत्र निर्वचनम्—' आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' ।

* रामानुज. १।१।१ (पृ. ११)

(५) ' प्रतिषेधादिति चेन्न शारीरात् ' — ननु ' न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ' इत्यादिश्रुत्या दुःखप्रतिषेधस्तादृशे भक्ते क्रियते इति तस्य दुःखित्वं न वक्तुं शक्यमित्याशङ्क्य प्रतिषेधति । नेति । कुतः । शारीरात् । शरीरसंबन्धिनो हेतोर्यत् दुःखं कर्मजनितमिति यावत्, तस्यैव श्रुतौ प्रतिषेधान्नानुपपत्तिरित्यर्थः । एतेन दुःखत्वेन कर्मजन्यत्वानुमानमपि निरस्तं वेदितव्यम् । लौकिक एव दुःखे तज्जन्यत्वनियमात् ।

† वल्लभ. ४।२।१२

(६) ' प्रदीपवदावेशस्तथा हि दर्शयति '— यथैकः प्रदीपोऽनेकासु दशास्वंशत आविशति एवमेव सिद्धस्य चित्तं स्वांशैरनेकेषु स्थूलदेहेष्वाविशति । कुतः, हि यस्माच्छ्रुतिरेवं दर्शयति—' न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति सर्वं देहं तत्समसंख्यैः स्वलिङ्गशरीरांशैर्व्याप्नोतीत्यर्थः ।

‡ विज्ञान. ४।४।१५

इति सप्तमोऽध्यायः ॥

—

* अन्यत् ब्रशंकरवत् ।

† दुःखित्वं = भगवद्विरहजन्यदुःखभाक्त्वम् । छाउ. ७।२५।२ (पृ. ९४८) द्रष्टव्यम् ।

‡ अन्यत् ब्रशंकरवत् ।

## अष्टमोऽध्यायः

(दहरविद्या हार्दविद्या वा)

८।१-६

हृदयपुण्डरीकगतं विजिज्ञासितव्यम्

**अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः । तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥**

(१) यद्यपि दिग्देशकालादिभेदशून्यं ब्रह्म सदेकमेवाद्वितीयमात्मैवेदं सर्वमिति षष्ठसप्तमयोरधिगतं, तथाऽपीह मन्दबुद्धीनां 'दिग्देशादिभेदवद्वस्तु' इत्येवं भाविता बुद्धिर्न शक्यते सहसा परमार्थविषया कर्तुमिति, अनधिगम्य च ब्रह्म न पुरुषार्थसिद्धिरिति, तदधिगमाय हृदयपुण्डरीकदेश उपदेष्टव्यः । यद्यपि सत् सम्यक्प्रत्ययैकविषयं निर्गुणं चाऽऽत्मतत्त्वं, तथाऽपि मन्दबुद्धीनां गुणवत्त्वस्येष्टत्वात्सत्यकामादिगुणवत्त्वं च वक्तव्यम् । तथा यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमेवोपरमो भवति, तथाऽप्यनेकजन्मविषयसेवाभ्यासजनिता विषयविषया तृष्णा न सहसा निवर्तयितुं शक्यते इति ब्रह्मचर्यादिसाधनविशेषो विधातव्यः । तथा यद्यप्यात्मैकत्वविदां गन्तृगमनगन्तव्याभावादविद्यादिशेषस्थितिनिमित्तक्षये गगन इव विद्युदुद्भूत इव वायुर्दग्धेन्धन इवाग्निः स्वात्मन्येव निवृत्तिः, तथाऽपि गन्तृगमनादिवासितबुद्धीनां हृदयदेशगुणविशिष्टब्रह्मोपासकानां मूर्धन्यया नाड्या गतिर्वक्तव्येत्यष्टमः प्रपाठक आरभ्यते । दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसदद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति । सन्मार्गस्थास्तावद्भवन्तु, ततः शनैः परमार्थसदपि ग्राहयिष्यामि, इति मन्यते श्रुतिः—

(१) छाउ. ८।१।१; ब्रशंकर. १।३।१४, १।४।१८, ३।३।२३, ३९, ४।२।१८, ४।३।१४; भास्कर. १।३।१४, ३।३।३९; रामानुज. १।१।१ (पृ. ६२, १२८), १।३।१३, १।४।१८, ३।३।४, ३।३।३८, ३९; निंबार्क. १।३।१४, ३।३।३८; ब्रमध्व. १।३।१४; श्रीकंठ. १।३।१३, ३।३।१, ४, ३८; श्रीकर. १।३।१४, १६, २१, ३।२।११, ३।३।१, ४, ७, २३, ३८; वल्लभ. १।३।१४; विज्ञान. १।३।१४, ३।३।६; बलदेव. १।३।१४, १६, १।४।१८.

अथ यदिदमस्मिन्नित्यादिना । अथानन्तरं यदिदं वक्ष्यमाणं दहरमल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्मेव वेश्म द्वारपालादिमत्त्वात् । अस्मिन् ब्रह्मपुरे ब्रह्मणः परस्य पुरं, राज्ञोऽनेकप्रकृतिमद्यथा पुरं, तथेदमनेकेन्द्रियमनोबुद्धिभिः स्वाम्यर्थकारिभिर्युक्तमिति ब्रह्मपुरं, पुरे च वेश्म राज्ञो यथा, तथा तस्मिन्ब्रह्मपुरे शरीरे दहरं वेश्म, ब्रह्मण उपलब्ध्यधिष्ठानमित्यर्थः, यथा विष्णोः शालग्रामः । अस्मिन्हि स्वविकारशुङ्गे देहे नामरूपव्याकरणाय प्रविष्टं सदाख्यं ब्रह्म जीवेनाऽऽत्मनेत्युक्तम् । तस्मादस्मिन्हृदयपुण्डरीके वेश्मन्युपसंहृतकरणैर्ब्रह्मविषयविरक्तैर्विशेषतो ब्रह्मचर्यसत्यसाधनाभ्यां युक्तैर्वक्ष्यमाणगुणवद्ध्यायमानैर्ब्रह्मोपलभ्यत इति प्रकरणार्थः । दहरोऽल्पतरोऽस्मिन्दहरे वेश्मनि, वेश्मनोऽल्पत्वात्तदन्तर्वर्तिनोऽल्पतरत्वं वेश्मनः । अन्तराकाशः आकाशाख्यं ब्रह्म । 'आकाशो वै नाम' इति हि वक्ष्यति । आकाश इवाशरीरत्वात्सूक्ष्मत्वसर्वगतत्वसामान्याच्च । तस्मिन्नाकाशाख्ये यदन्तर्मध्ये तदन्वेष्टव्यम् । तद्वाव तदेव च विशेषेण जिज्ञासितव्यं, गुर्वाश्रयश्रवणाद्युपायैरन्विष्य च साक्षात्करणीयमित्यर्थः ।

शंकर.

( २ ) 'कामादीतरत्र तत्र चायतनादिभ्यः'— 'अथ यदिदमस्मिन्०' इति प्रस्तुत्य छन्दोगा अधीयते— 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' ( छाउ. ८।१।५ ) इत्यादि । तथा वाजसनेयिनः 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते सर्वस्य वशी' ( बृउ. ४।४। २२ ) इत्यादि । तत्र विद्यैकत्वं परस्परगुणयोगश्च किं वा नेति संशये विद्यैकत्वमिति । तत्रेदमुच्यते —कामादीति, सत्यकामादीत्यर्थः । यथा देवदत्तो दत्तः, सत्यभामा भामेति । यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते, तदितरत्र वाजसनेयके 'स वा एष महानज आत्मा' इत्यत्र संबध्येत । यच्च वाजसनेयके वशित्वाद्युपलभ्यते, तदपीतरत्र छान्दोग्ये 'एष आत्माऽपहतपाप्मा' इत्यत्र संबध्येत । कुतः । आयतनादिसामान्यात् । समानं ह्युभयत्रापि हृदयमायतनं, समानश्च वेद्य ईश्वरः, समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनमित्येवमादि बहुसामान्यं दृश्यते । गुणवतस्तु ब्रह्मण एकत्वादिभूतिप्रदर्शनायायं गुणोपसंहारः सूचितो नोपासनायेति द्रष्टव्यम् ।

ब्रशंकर ३।३।३९

( ३ ) एतावांस्तु विशेषः, सद्विद्यादिषु गुणानां पृथक् चिन्तनं नास्तीति निर्गुणेत्युच्यते । फलं त्वविशिष्टमन्तर्गुणदेवतोपासनात्, तथाभूतं हि तद्वस्तु, तत्प्राप्तौ सर्वप्राप्तिरिति । † भास्कर. ३।३।३९

( ४ ) अस्मिन्दहरपुण्डरीके यो दहर आकाशस्तदन्तर्वर्ति च यत् तदुभयं श्रवणमननाभ्यामवगन्तव्यं ध्यातव्यं चेत्यर्थः । इतिशब्दो वाक्यसमाप्तौ । अथ वा, इतीत्यस्यानन्तरमाचार्यो ब्रूयादित्यध्याहारः ।

$ रंग.

( ५ ) *न भेद इति । कुतः । रूपाभेदात् । इतरत्र तत्र च कामाद्येव हि रूपम् । वाजसनेयके छान्दोग्ये च सत्यकामत्वादिविशिष्टमेव ब्रह्मोपास्यमित्यर्थः । कुत एतदवगम्यते । आयतनादिभ्यः । हृदयायतनत्वसेतुत्वविधरणत्वादिभिस्तावदुभयत्र सैव विद्येति प्रत्यभिज्ञायते । वशित्वादयश्च वाजसनेयके श्रुताच्छान्दोग्ये श्रुतस्य गुणाष्टकान्यतमभूतस्य सत्यसंकल्पत्वस्य विशेषा एवेति सत्यसंकल्पत्वसहचारिणां सत्यकामत्वादीनामपहतपाप्मत्वपर्यन्तानां सद्भावमवगमयन्ति । अतो रूपं न भिद्यते ।

‡ रामानुज. ३।३।३८

( ६ ) तत्र तत्र हृदयपुण्डरीकायतनादिभ्यो विद्यैक्यमेव । अतः सत्यकामादयः सर्वत्रोपसंहार्याः । छान्दोग्यगता अपहतपाप्मत्वादयो वाजिशाखागताः वशित्वादयः तैत्तिरीयगताः प्रणववाच्यत्वादयः कैवल्यगताश्चिदानन्दरूपत्वादयश्च सर्व एते गुणा दहरविद्यायां ब्रह्मणोऽनुसंधेयाः । कैवल्योपनिषद्गतमुमासहायत्वं त्रिलो-

---

† शेषं ब्रशंकरवत् ।

$ शेषं शंकरवत् । आकाशशब्दः परमात्मा तदन्तर्वर्ति गुणजातं च ज्ञेयं ध्येयं चेत्यर्थः ।

* छान्दोग्यवाजसनेयकयोराम्नातयोर्विद्ययोर्न भेद इत्यर्थः ।

‡ निंबार्क. रामानुजवत् ।

चनत्वं अन्यत्र कृष्णपिङ्गलत्वं विरूपाक्षत्वं चैकार्थम् । आवृत्तिरादरार्था । सर्वत्र गुणानामावृत्तौ तथा द्रष्टव्यम् । अत्र गुणित्वेन ब्रह्मण एकस्यैवोपास्यत्वादपहतपाप्मत्वादियोगि सर्वेश्वरमोङ्कारवाच्यमुमासहायं त्रिलोचनं नीलकण्ठं चिदानन्दरूपमनन्तममृतमद्भुतं परं ब्रह्म दहरपुण्डरीकमध्येऽनुसंधेयमिति परविद्याविषयमेव प्रधानभूता ।

* श्रीकण्ठ. ३।३।३८

[1]**तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयात् ॥**

(१) तं चेदेवमुक्तवन्तमाचार्यं यदि ब्रूयुरन्तेवासिनश्चोदयेयुः, कथं, यदिदमस्मिन्ब्रह्मपुरे परिच्छिन्नेऽन्तर्दहरं पुण्डरीकं वेश्म ततोऽप्यन्तः अल्पतर एवाकाशः । पुण्डरीके एव वेश्मनि तावत्किं स्यात् । किं ततोऽल्पतरे खे यद्भवेदित्याहुः । दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते, न किंचन विद्यत इत्यभिप्रायः । 'यदि नाम बदरमात्रं किमपि विद्यते, किं तस्यान्वेषणेन विजिज्ञासनेन वा फलं विजिज्ञासितुः स्यात् । अतो यत्तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन प्रयोजनमित्युक्तवतः स आचार्यो ब्रूयादिति श्रुतेर्वचनम् ।

शंकर.

(२) एवमुक्तवन्तमाचार्यं स्वल्पहृदयमध्यवर्तितयाऽतिस्वल्प आकाशे किंवा वर्तितुमर्हति, यदन्वेष्टव्यं स्यादिति दहराकाशशब्दितस्य ब्रह्मत्वतदन्तर्वर्तितया निर्दिष्टस्य तद्गुणजातत्वं चाजानाना अन्तेवासिनो यदि ब्रूयुरित्यर्थः । किं तदत्र विद्यत इति वाक्यं सर्वान्तरस्य परमात्मनोऽन्तर्वर्त्यन्तरासंभवलक्षणानुपपत्तिगर्भान्तर्वर्ति— विशेषप्रश्नपरमिति व्यासार्याणामभिप्राय इति यद्यपि प्रतीयते तथाऽपि ' यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः ' इत्येतावन्मात्रं श्रुतवतां शिष्याणां परमात्मत्वविरोधिन्याकाशशब्दे जागरूके दहरत्वान्वेष्टव्यान्तराधारत्वादिविरोधिलिङ्गे च जाग्रति ब्रह्मलिङ्गेषु चानुपन्यस्तेषु परमात्मत्वनिश्चयस्य वा तदुपजीव्याक्षेपप्रवृत्तेर्वाऽसंभवात्, सर्वान्तरस्य परमात्मनोऽन्तर्वर्त्यन्तरासंभवलक्षणानुपपत्तेरेव शिष्याणां हृदि विपरिवर्तमानत्वे प्रश्नवाक्ये ' दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः ' इति दहरपुण्डरीकान्तर्वर्तित्वेनाऽऽकाशस्य दहरत्वोपन्यासस्य वा प्रतिवचने ' यावान्वा अयमाकाशः ' ( छाउ. ८।१।३ ) इति वैपुल्योपन्यासस्य वाऽसङ्गतत्वापाताद्व्यासार्याणामप्युक्त एवार्थोऽभिप्रेतः । केचित्तु शरीरस्य ब्रह्मपुरत्वेनोपक्रमादेव तदन्तर्वर्त्याकाशशब्दनिर्दिष्टं ब्रह्मेत्यवगत्यैव तदन्तर्वर्तिवस्त्वन्तरासंभवलक्षणानुपपत्तिमभिप्रयन्त एवान्तर्वर्तिविशेषं पप्रच्छुरित्यपि संभवान्नानुपपत्तिरिति वदन्ति ।

* रंग.

विश्वोपेतः अन्तराकाशः

**यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः । उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि । यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥**

(१) शृणुत । तत्र यद्ब्रूथ पुण्डरीकान्तःस्थस्य खस्याल्पत्वात्तत्स्थमल्पतरं स्यादिति । तदसत् । न हि खं पुण्डरीकवेश्मगतं पुण्डरीकादल्पतरं मत्वाऽवोचं, 'दहरोऽस्मिन्नन्तराकाशः' इति । किं तर्हि, पुण्डरीकमल्पं तदनुविधायि तत्स्थमन्तःकरणं पुण्डरीकाकाशपरिच्छिन्नं, तस्मिन्विशुद्धे संहृतकरणानां योगिनां स्वच्छ इवोदके प्रतिबिम्बरूपमादर्श इव च शुद्धे स्वच्छं विज्ञानज्योतिः-स्वरूपावभासं तावन्मात्रं ब्रह्मोपलभ्यते इति, दहरोऽस्मि-

---

* श्रीकर. श्रीकंठवत् ।

(१) छाउ. ८।१।२; ब्रशंकर. १।३।१४; रामानुज. ३।३।१४; श्रीकर. १।३।१४; विज्ञान. १।३।१४.

* ' स ब्रूयात् ' इत्युत्तरवाक्यादिः ।

(१) छाउ. ८।१।३; ब्रशंकर. १।३।१४, ३।२।३७, ३।३।२३; भास्कर. १।३।१४, ३।२।३७; रामानुज. १।१।१२, १।३।१३, ३।३।२३; निंबार्क. १।३।१४; श्रीकर. १।१।१२, १।३।१४, १७, ३।३।२३; वल्लभ. १।३।२१, २४, ३।२।३१; विज्ञान. १।३।१४, ४१ मसावुभौ ( मसा उभौ ).

अन्तराकाश इत्यवोचामान्तःकरणोपाधिनिमित्तम् । स्वतस्तु यावान्वै प्रसिद्धः परिमाणतोऽयमाकाशो भौतिकस्तावानेषोऽन्तर्हृदये आकाशो यस्मिन्नन्वेष्टव्यं विजिज्ञासितव्यं चावोचाम । नाप्याकाशतुल्यपरिमाणत्वमभिप्रेत्य तावानित्युच्यते । किं तर्हि, ब्रह्मणोऽनुरूपस्य दृष्टान्तान्तरस्याभावात् । कथं पुनर्नाऽऽकाशसममेव ब्रह्मेत्यवगम्यते । ‘ येनाऽऽवृतं खं च दिवं महीं च ’ ‘तस्माद्वा एतस्मादात्मन आकाशः संभूतः ’ ‘ एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः ’ इत्यादिश्रुतिभ्यः । किंचोभे अस्मिन् द्यावापृथिवी ब्रह्माकाशे बुद्ध्युपाधिविशिष्टेऽन्तरेव समाहिते सम्यगाहिते स्थिते । ‘ यथा वा अरा नाभौ ’ इत्युक्तं हि । तथा ‘ उभावग्निश्च वायुश्च ’ इत्यादि समानम् । यच्चास्याऽऽत्मनः आत्मीयत्वेन देहवतोऽस्ति विद्यते इह लोके, तथा यच्चाऽऽत्मीयत्वेन न विद्यते, नष्टं भविष्यच्च नास्तीत्युच्यते, न त्वत्यन्तमेवासत् , तस्य ह्याकाशे समाधानानुपपत्तेः ।

शंकर.

(२) अस्योपासकस्येह लोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमित्यर्थः। दहराकाशो निरतिशयभोग्य इति यावत् । * रंग.

(३) आकाशशब्दश्चात्र ब्रह्मणि रूपकमात्रमन्यथा यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति भेदतन्त्रस्य दृष्टान्तत्वस्यानुपपत्तेरिति ।

विज्ञान. १।३।१४

[१] तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरा वाऽऽप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥

(१) तं चेदेवमुक्तवन्तं ब्रूयुः पुनरन्तेवासिनः—अस्मिंश्चेद्यथोक्ते, चेद्यदि, ब्रह्मपुरे ब्रह्मपुरोपलक्षितान्तराकाश इत्यर्थः । इदं सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः । कथमाचार्येणानुक्ताः कामा अन्तेवासिभिरुच्यन्ते । नैष दोषः । यच्चास्येहास्ति यच्च नास्तीत्युक्ता एव ह्याचार्येण कामाः । अपि च सर्वशब्देन चोक्ता एव कामाः । यदा यस्मिन्काले, एतच्छरीरं ब्रह्मपुराख्यं, जरा वलीपलितादिलक्षणा वयोहानिर्वाऽऽप्नोति, शस्त्रादिना वा वृक्णं प्रध्वंसते विस्रंसते विनश्यति, किं ततोऽन्यदतिशिष्यते। घटाश्रितक्षीरदधिस्नेहादिवत् घटनाशे देहनाशेऽपि देहाश्रयमुत्तरोत्तरं पूर्वपूर्वनाशान्नश्यतीत्यभिप्रायः । एवं प्राप्ते नाशे किं ततोऽन्यद्यथोक्तादतिशिष्यतेऽवतिष्ठते, न किंचनावतिष्ठत इत्यभिप्रायः । शंकर.

(२) सर्वे च कामा इत्यस्य यच्चास्येहास्तीति वाक्यनिर्दिष्टनिरतिशयभोग्यत्वानुवादित्वात् , सर्वे च कामा इत्यस्य निरतिशयभोग्यत्वमर्थ इति व्यासार्यैरुक्तम् ।

* रंग.

सत्यं ब्रह्मपुरमेव अजरोऽमृत आत्मा सत्यकामोऽपहतपाप्मा

स ब्रूयात् । नास्य जरयैतज्जीर्यति । न वधेनास्य हन्यते । एतत्सत्यं ब्रह्मपुरम् । अस्मिन्कामाः समाहिताः । एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः । यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनम् । यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥

एवमन्तेवासिभिश्चोदितः स आचार्यो ब्रूयात्तन्मतिमपनयन् । कथम् । अस्य देहस्य जरयैतद्यथोक्तमन्तराकाशाख्यं ब्रह्म, यस्मिन्सर्वं समाहितं, न जीर्यति, देहवन्न विक्रियत इत्यर्थः । न चास्य वधेन शस्त्रादिघातेनैतद्धन्यते यथाऽऽकाशं, किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेन्द्रियादिदोषैर्न स्पृश्यत इत्यर्थः ।

---

* शेषं शंकरवत् ।

(१) छाउ. ८।१।४; रंग. यदैत ( यदैन ).

* शेषं शंकरवत् ।

(१) छाउ. ८।१।५; ब्रशंकर. १।३।१४, ३।३।३९, ५८, ५९; भास्कर. १।३।१४, ३०, ४०; रामानुज. १।१।१ ( पृ. १९, ६१, १११, १२१ ), १।१।४ ( पृ. १६५ ), १।१।१२, १४, २१, १।३।१३, १।४।२७, २।१।८, २३, ३०, २।३।१९, ३।२।११, २९, ३।३।३९, ४२, ३।४।८; निंबार्क. ३।३।३८; श्रीकंठ. १।२।८, १।३।१३, ३।२।११, २९; श्रीकर. १।१।१२, १।३।१४, ३।३।४, ३९, ४।४।४; वल्लभ. १।३।१५, २।३।१८; विज्ञान. १।३।१८.

कथं देहेन्द्रियादिदोषैर्न स्पृश्यत इत्येतस्मिन्नवसरे वक्तव्यं प्राप्तं, तत्प्रकृतव्यासङ्गो मा भूदिति नोच्यते। इन्द्रविरोचनाख्यायिकायामुपरिष्टाद्वक्ष्यामो युक्तितः। एतत् सत्यं अवितथं ब्रह्मपुरं ब्रह्मैव पुरं ब्रह्मपुरं, शरीराख्यं तु ब्रह्मपुरं ब्रह्मोपलक्षणार्थत्वात्। तत्त्वनृतमेव, 'वाचाऽऽरम्भणं विकारो नामधेयम्' इति श्रुतेः। तद्विकारेऽनृतेऽपि देहलिङ्गे ब्रह्मोपलभ्यते इति ब्रह्मपुरमित्युक्तं व्यावहारिकम्। सत्यं तु ब्रह्मपुरमेतदेव ब्रह्म, सर्वव्यवहारास्पदत्वात्। अतोऽस्मिन्पुण्डरीकोपलक्षिते ब्रह्मपुरे सर्वे कामाः, ये बहिर्भवद्भिः प्रार्थ्यन्ते, तेऽस्मिन्नेव स्वात्मनि समाहिताः। अतस्तत्प्राप्त्युपायमेवानुतिष्ठत, बाह्यविषयतृष्णां त्यजतेत्यभिप्रायः। एष आत्मा, भवतां स्वरूपम्। शृणुत तस्य लक्षणम्। अपहतपाप्मा अपहतः पाप्मा धर्माऽधर्माख्यो यस्य सोऽयमपहतपाप्मा। तथा विजरो विगतजरो विमृत्युश्च। तदुक्तं पूर्वमेव 'न वधेनास्य हन्यते' इति। किमर्थं पुनरुच्यते। यद्यपि देहसंबन्धिभ्यां जरामृत्युभ्यां न संबध्यते, अन्यथाऽपि संबन्धस्ताभ्यां स्यादित्याशङ्कानिवृत्त्यर्थम्। विशोको विगतशोकः। शोको नामेष्टादिवियोगनिमित्तो मानसः संतापः। विजिघत्सः विगताशनेच्छः। अपिपासः अपानेच्छः। नन्वपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति, कारणप्रतिषेधात्। धर्माधर्मकार्या हि ते इति। जरादिप्रतिषेधेन वा धर्माधर्मयोः कार्याभावे विद्यमानयोरप्यसत्समत्वमिति पृथक्प्रतिषेधोऽनर्थकः स्यात्। सत्यमेवं, तथाऽपि धर्मकार्यानन्दव्यतिरेकेण स्वाभाविकानन्दो यथेश्वरे, 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः। तथाऽधर्मकार्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादित्याशङ्क्येत। अतो युक्तस्तन्निवृत्तये जरादीनां धर्माधर्माभ्यां पृथक्प्रतिषेधः। जरादिग्रहणं सर्वदुःखोपलक्षणार्थम्। पापनिमित्तानां तु दुःखानामानन्त्यात्प्रत्येकं च तत्प्रतिषेधस्याशक्यत्वात्सर्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववचनम्। सत्याः अवितथाः कामा यस्य सोऽयं सत्यकामः। वितथा हि संसारिणां कामाः। ईश्वरस्य तद्विपरीताः। तथा कामहेतवः संकल्पाः अपि सत्याः यस्य स सत्यसंकल्पः। संकल्पाः कामाश्च शुद्धसत्त्वोपाधिनिमित्ताः ईश्वरस्य, चित्रगुवत्। न स्वतः 'नेति नेति' इत्युक्तत्वात्। यथोक्तलक्षण एष आत्मा विज्ञेयो गुरुभ्यः शास्त्रतश्चाऽऽत्मसंवेद्यतया च स्वाराज्यकामैः। न चेद्विज्ञायते को दोषः स्यादिति। शृणुतात्र दोषं दृष्टान्तेन— यथा ह्येवेह लोके प्रजा अन्वाविशन्त्यनुवर्तन्ते। यथानुशासनं यथेह प्रजा अन्यं स्वामिनं मन्यमानाः स्वस्य स्वामिनो यथा यथा अनुशासनं तथा तथाऽन्वाविशन्ति। किम्। यं यमन्तं प्रत्यन्तं जनपदं क्षेत्रभागं चाभिकामा अर्थिन्यो भवन्त्यात्मबुद्ध्यनुरूपं, तं तमेव च प्रत्यन्तादिमुपजीवन्तीति। एष दृष्टान्तोऽस्वातन्त्र्यदोषं प्रति पुण्यफलोपभोगे।

शंकर.

(२) आचार्यस्ततःप्रतिवक्ति— 'नास्य जरया' इत्यादि। भोग्यभोगस्थानभोगोपकरणभोक्तृवर्गादिशालितया पुरमिव वर्तमानमेतद्दहराकाशाख्यं ब्रह्म, न तु घटाकाशादिवत्केवलमवकाशात्मनोपकारकम्। यथा पुरं भोग्यभोगोपकरणभोगस्थानादीनां स्वत एवाऽऽधारभूतं, न तु दध्यादीनां घटाकाशादिवदवकाशात्मनोपकारकं, तथेत्यर्थः। ननु स्वतो धारकत्वेऽपि तद्देहान्तर्वर्तितया तदन्तर्गतहृदयवज्जरानाशानुविधायिजरानाशत्वं स्यादिति शङ्काबीजं परिहरति— एतत्सत्यमिति। सत्यं निर्विकारमित्यर्थः। अत एव न देहजरामरणानुविधायिजरामरणकं भवतीत्यर्थः। यद्वा 'तद्यत्सत्तदमृतम्' (छाउ. ८।३।५) इत्यस्मिन्प्रकरणे वक्ष्यमाणसत्यशब्दनिर्वचनरीत्या चेतनाचेतननियामकत्वं वा सत्यत्वम्। यथाकथंचित् घटाकाशादिविलक्षणाधार इत्यर्थः। केचित्तु—'अस्मिंश्चेदिदं ब्रह्मपुरे' इति प्रश्नवाक्ये ब्रह्मपुरशब्देन ब्रह्मरूपपुरत्वाद्दहराकाश एवोच्यते। यथैतज्जरा वाऽऽप्नोतीत्येव पाठः। तत्र चैतस्य शरीरस्य जरा, एतज्जरा यदा दहराकाशं प्राप्नोति तद्ध्वंसेन ध्वंसते वा तदा द्यावापृथिव्यादिकं नावशिष्येतेत्येवार्थः। न तु ब्रह्मपुरशब्देन शरीरपरामर्शमभ्युपेत्य तदनुगुणैतादृशाभिप्रायपरिकल्पनाक्लेशोऽनुसर्तव्य इति वदन्ति। एवं मध्ये प्रसक्तमाक्षेपं परिहृत्य 'किं तदत्र विद्यते' इत्यन्तर्वर्तिविशेषजिज्ञासां शमयति— अस्मिन्कामाः समाहिता इति। काम्यन्ते इति कामाः

कल्याणगुणाः। को दहराकाशः। स च कैः कामैर्विशिष्ट इत्याकाङ्क्षायामाह्— एष आत्मेत्यादि। उक्तं च भगवता भाष्यकृता—दहराकाशस्य कामभूतकल्याणगुणविशिष्टत्वं तस्याऽऽत्मत्वं च 'एष आत्माऽपहतपाप्मा' इत्यादिना 'सत्यसंकल्पः' इत्यन्तेन स्फुटीकृत्य, इति पापजरामरणशोकबुभुक्षापिपासावर्जितः सत्यकामः सत्यसंकल्पश्चेत्यर्थः। परमात्मप्रकरणेषु पापशब्दः सुकृतसाधारणः। अपहतपाप्मत्वमश्लिष्टपाप्मत्वमित्यर्थः। अकृतकर्माश्लेषस्य सर्वसाधारणत्वात् कृतेऽपि कर्मणि तत्फलाश्लेष उच्यते। अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानीत्यर्थः। कृते पापे तत्फलजननशक्तिप्रतिभटत्वलक्षणः कश्चिदीश्वरस्य स्वभावविशेषोऽपहतपाप्मत्वम्। परिशुद्धात्मविषयस्यापहतपाप्मत्वस्याप्ययमेवार्थः। स तु तस्य तिरोधानार्हः प्रतिबन्धकनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानानर्हो नित्याविर्भूत इति विशेष इति व्यासार्यैः 'अन्तस्तद्धर्मोपदेशात्' (ब्रसू. १।१।२०) इत्यत्र वर्णितः। अत्र सत्यकामशब्दो न कामनायाः सत्यत्वपरः। अमोघाशत्वस्य सत्यसंकल्पशब्देनैव सिद्धत्वात्। नापि काम्यत इति व्युत्पत्त्या गुणमात्रपरः, कतिपयगुणान्तराणां पृथगुक्तेः। अतो भोग्यभोगोपकरणभोगस्थानरूपा नित्याः कामा अस्य सन्तीत्युच्यते। 'तदक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ इति व्यासार्यैरुक्तम्। वेदार्थसंग्रहे भाष्यकृताऽप्युक्तम्। सत्यसंकल्पोऽप्रतिहतसंकल्पः। इह लोके प्रजा यथानुशासनं राजशासनानुल्लङ्घनेन राजानमन्वाविशन्त्यनुसरन्तीत्यर्थः। अनुसृत्य किं कुर्वन्तीत्यत्राऽऽह— यं यमन्तमभिकामा भवन्ति। कर्मणः फलापवर्गत्वात्फलमेव कर्मणोऽन्तः। यं यमन्तं यद्यत्फलमभिकामा अभ्यर्थिनो भवन्ति, जनपदक्षेत्रादिकं वा कामयन्ते, तत्तत्फलं यथाशासनमेवोपजीवन्ति। राजशासनानुरोधेनैवेह लोके यथोपजीवन्ति तथा परलोकेऽपि परतन्त्रा एव भवन्तीत्यर्थः। यद्वा यं यमन्तमभिकामा भवन्ति तं तमिह लोके यथा प्रजा अन्वाविशन्ति राजानमनुसृत्य लभन्ते तथा परलोकेऽप्युपजीवन्तीत्यर्थः। अयमेवार्थो व्यासार्यैर्वर्णितः। रंग.

(३) 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' (श्वेउ. ६।१३) 'ज्ञाज्ञौ द्वावजावीशानीशौ' (श्वेउ. १।९)। 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥' (श्वेउ. ६।७–८) 'एष आत्मा... सत्यसंकल्पः' इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति, समस्तहेयगुणरहिततां च। निर्गुणवाक्यानां सगुणवाक्यानां च विषयमपहतपाप्मेत्याद्यपिपास इत्यन्तेन हेयगुणान्प्रतिषिध्य सत्यकामः सत्यसंकल्प इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम्।

१।१।१ (पृ. ६१)

'एतत्सत्यं ब्रह्मपुरम्' इति तमेव दहराकाशं सत्यकारणतया सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य ...।

रामानुज.१।३।१३

अनात्मज्ञस्य क्षय्यलोकाः, आत्मज्ञस्य सर्वत्र कामचारः सत्यकामत्वं च, सत्यकामानां अनृतमपिधानम्

**तद्यथेह[1] कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते। तद्य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवति। अथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति॥**

---

(१) छाउ. ८।१।६; ब्रशंकर. १।१।१ (पृ. २४), १।३।१४, ३।३।३९, ४।४।९, १७ कर्मजितो (कर्मचितो); भास्कर. १।१।१; रंग. ब्रशंकरवत्; रामानुज. १।१।१ (पृ. ४, ७९), १।३।१३, ३।३।३९, ४०, ४२ ब्रशंकरवत्; श्रीकंठ. ४।४।१५; श्रीकर. १।१।१ (पृ. १५, १७), १।३।१४, २।१।७, ९, १२, २।२।२७,

(१) अथान्यो दृष्टान्तस्तत्क्षयं प्रति तद्यथेहेत्यादिः। तत्तत्र यथेह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः क्षीयते अन्तवान्भवति। अथेदानीं दार्ष्टान्तिकमुपसंहरति—एवमेवामुत्राग्निहोत्रादिपुण्यजितो लोकः पराधीनोपभोगः क्षीयत एवेति। उक्तो दोष एषामिति विषयं दर्शयति—तद्य इत्यादिना। तत्तत्रेहास्मिँल्लोके, ज्ञानकर्मणोरधिकृता योग्याः सन्तः आत्मानं यथोक्तलक्षणं शास्त्राचार्योपदिष्टं अननुविद्य यथोपदेशमनु स्वसंवेद्यतामकृत्वा, व्रजन्ति देहादस्मात्प्रयन्ति। य एतांश्च यथोक्तान्सत्यान्सत्यसंकल्पकार्यांश्च स्वात्मस्थान्कामाननननुविद्य व्रजन्ति, तेषां सर्वेषु लोकेष्वकामचारोऽस्वतन्त्रता भवति। यथा राजानुशासनवर्तिनीनां प्रजानामित्यर्थः। अथ येऽन्ये इह लोके आत्मानं शास्त्राचार्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति, यथोक्तांश्च सत्यान्कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति राज्ञ इव सार्वभौमस्येह लोके।

* शंकर.

(२) 'प्रदानवदेव तदुक्तम्'— दहरविद्यायां 'तद्य इह०' इति दहराकाशस्य परमात्मन उपासनमुक्त्वैतांश्च सत्यान्कामान् इति गुणानामपि पृथगुपासनं विहितम्। तत्र संशयः, गुणचिन्तनेऽपि तत्तद्गुणविशिष्टतया दहरस्यात्मनश्चिन्तनमावर्तनीयमुत नेति। दहराकाशस्यैवापहतपाप्मत्वादीनां गुणित्वात्तस्य च सकृदेवानुसंधातुं शक्यत्वाद्गुणार्थं तच्चिन्तनं नानुवर्तनीयमिति प्राप्ते उच्यते—प्रदानवदेवेति। प्रदानवदावर्तनीयमेवेत्यर्थः। यद्यपि दहराकाश एक एवापहतपाप्मत्वादीनां गुणानां गुणी। स च प्रथमं चिन्तितः। तथापि स्वरूपमात्राद्गुणविशिष्टाकारस्य भिन्नत्वात् 'अपहतपाप्मा विजरः' (छाउ.८।१।५) इत्यादिना गुणविशिष्टतया चोपास्यत्वेन विहितत्वात्पूर्वं स्वरूपेणानुसंहितस्यापहतपाप्मत्वादिविशिष्टतया अनुसंधानार्थमावृत्तिः कर्तव्या। रामानुज. ३।३।४२

(३) अत्र यद्यपि दहरस्थस्यैवान्वेष्यत्वमुक्तं, न तु दहरस्य, तथाऽपि 'तद्य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' इति वाक्यशेषे द्वयोरेव ज्ञेयत्वावगमादात्मन एव विशेष्यतयोपास्यत्वं, उपास्यद्वये गौरवादिति।

विज्ञान. १।३।१४

**स यदि पितृलोककामो भवति। संकल्पादेवास्य पितरः समुत्तिष्ठन्ति। तेन पितृलोकेन संपन्नो महीयते॥**

(१) कथं सर्वेषु लोकेषु कामचारो भवतीति उच्यते — य आत्मानं यथोक्तलक्षणं हृदि साक्षात्कृतवान्वक्ष्यमाणब्रह्मचर्यादिसाधनसंपन्नः संस्तत्स्थांश्च सत्यान्कामान्, स त्यक्तदेहो यदि पितृलोककामः, पितरो जनयितारस्त एव सुखहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते, तेषु कामो यस्य तैः पितृभिः संबन्धेच्छा यस्य भवति, तस्य संकल्पमात्रादेव पितरः समुत्तिष्ठन्त्यात्मसंबन्धितामापद्यन्ते, विशुद्धसत्त्वतया सत्यसंकल्पत्वादीश्वरस्येव। तेन पितृलोकेन भोगेन संपन्नः, संपत्तिरिष्टप्राप्तिस्तया समृद्धो महीयते पूज्यते वर्धते वा, महिमानमनुभवति।

* शंकर.

(२) हार्दविद्यायां श्रूयते—'स यदि०' इत्यादि। तत्र संशयः। किं संकल्प एव केवलः पित्रादिसमुत्थाने हेतुरुत निमित्तान्तरसहित इति। तत्र सत्यपि संकल्पादेवेति श्रवणे लोकवन्निमित्तान्तरापेक्षता युक्ता। यथा लोकेऽस्मदादीनां संकल्पाद्गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवत्येवं मुक्तस्यापि स्यात्। एवं दृष्टविपरीतं न कल्पितं भविष्यति। संकल्पादेवेति तु राज्ञ इव

---

* ब्रशंकर. तैउ. १।६ (पृ. ७००) इत्यत्र द्रष्टव्यम्। रंग. शंकरवत्। कामशब्दो गुणपरः।

२।३।१८, ४९, ३।१।१, ३।२।३७, ३।३।१८, ३९, ४०, ४२, ३।४।२, ४।४।११, १६, २२ ब्रशंकरवत्; वल्लभ. १।३।१५, ३।२।३१; विज्ञान. १।३।१४, ३।३।६; [illegible] १।१।१ ४।४।१७

* रंग. शंकरवत्।

(१) छाउ. ८।२।१; ब्रशंकर. ४।३।१४, ४।४।८, १०; भास्कर. ४।४।८, १९; रामानुज. २।१।१४, ४।४।८; निंबार्क. ४।४।८; ब्रमध्व. ४।४।८; श्रीकंठ. ४।४।८, १७; श्रीकर. ३।३।४०, ४।४।८, १७; विज्ञान. १।३।१९, २।३।३४, ३।१।२०, ३।३।२३, ४।४।१६. १७; बलदेव. ४।४।८. १७.

संकल्पितार्थसिद्धिकरी साधनान्तरसामग्रीं दृष्टमानैरपेक्ष्यो-च्यते । न च संकल्पमात्रसमुत्थानाः पित्राद्यो मनोरथ-विभूतिवच्चञ्चलत्वात्पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति । एवं प्राप्ते ब्रूमः । संकल्पादेव तु केवलात्पि-त्रादिसमुत्थानमिति । कुतः । तच्छ्रुतेः । ' संकल्पा-देवास्य पितरः समुत्तिष्ठन्ति ' इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत । निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्यात् , भवतु, न तु प्रयत्ना-न्तरसंपाद्यं निमित्तान्तरमितीष्यते । प्राक्संपत्तेर्वन्ध्यसंक-ल्पत्वप्रसङ्गात् । न च श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतो दृष्टं क्रमते । संकल्पबलादेव चैषां यावत्प्रयो-जनं स्थैर्योपपत्तिः । प्राकृतसंकल्पविलक्षणत्वान्मुक्तसंक-ल्पस्य । * ब्रशंकर. ४।४।८

³अथ यदि मातृलोककामो भवति । संकल्पा-देवास्य मातरः समुत्तिष्ठन्ति । तेन मातृलोकेन संपन्नो महीयते ॥

अथ यदि भ्रातृलोककामो भवति । संकल्पा-देवास्य भ्रातरः समुत्तिष्ठन्ति । तेन भ्रातृलोकेन संपन्नो महीयते ॥

अथ यदि स्वसृलोककामो भवति । संकल्पा-देवास्य स्वसारः समुत्तिष्ठन्ति । तेन स्वसृलोकेन संपन्नो महीयते ॥

अथ यदि सखिलोककामो भवति । संकल्पा-देवास्य सखायः समुत्तिष्ठन्ति । तेन सखिलोकेन संपन्नो महीयते ॥

अथ यदि गन्धमाल्यलोककामो भवति । संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतः । तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥

अथ यद्यन्नपानलोककामो भवति । संकल्पा-देवास्यान्नपाने समुत्तिष्ठतः । तेनान्नपानलोकेन संपन्नो महीयते ॥

अथ यदि गीतवादित्र*लोककामो भवति । संकल्पादेवास्य गीतवादित्रे समुत्तिष्ठतः । तेन गीतवादित्रलोकेन संपन्नो महीयते ॥

अथ यदि स्त्रीलोककामो भवति । संकल्पा-देवास्य स्त्रियः समुत्तिष्ठन्ति । तेन स्त्रीलोकेन संपन्नो महीयते ॥

समानमन्यत् । मातरो जनयित्र्योऽतीताः सुखहेतुभू-ताः सामर्थ्यात् । न हि दुःखहेतुभूतासु ग्रामसूकरादि-जन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य योगिन इच्छा तत्संकल्पो वा युक्तः । शंकर.

¹यं यमन्तमभिकामो भवति । यं कामं कामयते । सोऽस्य संकल्पादेव समुत्तिष्ठति । तेन संपन्नो महीयते ॥

यं यमन्तं प्रदेशमभिकामो भवति, यं च कामं कामयते यथोक्तव्यतिरेकेणापि, सोऽस्यान्तः प्राप्तुमिष्टः कामश्च संकल्पादेव समुत्तिष्ठत्यस्य । तेनेच्छाविघात-तयाऽभिप्रेतार्थप्राप्त्या च संपन्नो महीयते इत्युक्तार्थम् । शंकर.

²ते इमे सत्याः कामा अनृतापिधानाः । तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥

( १ ) यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साध-कानामुत्साहजननार्थमनुक्रोशन्नाह — कष्टमिदं खलु वर्तते, यत्स्वात्मस्थाः शक्यप्राप्या अपि ते इमे सत्याः कामा अनृतापिधानाः, तेषामात्मस्थानां स्वाश्रयाणा-मेव सतामनृतं बाह्यविषयेषु स्त्र्यन्नभोजनाच्छादनादिषु तृष्णा, तन्निमित्तं च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमि-त्तत्वादनृतमित्युच्यते । तन्निमित्तं सत्यानां कामानाम-प्राप्तिरित्यपिधानमिवापिधानम् । कथमनृतापिधाननि-मित्तं तेषामलाभ इति उच्यते — यो यो हि यस्मा-

---

* छाउ. ७।२६।२ ( पृ. ९५० ) इत्यत्र द्रष्टव्यम् । भास्कर. रामानुज. निंबार्क. ब्रमध्व. श्रीकंठ. श्रीकर. ब्रशंकरवत् ।

( १ ) छाउ. ८।२।२-९.

* ' वादित ' इति स्थानत्रयेऽपि पाठः आनन्दाश्रम-पुस्तके ।

(१) छाउ. ८।२।१०; रामानुज. १।३।१३; विज्ञान. ४।४।८.

(२) छाउ. ८।३।१; रामानुज. १।१।१ ( पृ. १६ ); विज्ञान. ४।४।१६.

दस्य जन्तोः पुत्रो भ्राता वेष्ट इतोऽस्माल्लोकात्प्रैति प्रगच्छति म्रियते, तमिष्टं पुत्रं भ्रातरं वा स्वहृदयाकाशे विद्यमानमपीह पुनर्दर्शनायेच्छन्नपि न लभते ।

शंकर.

( २ ) परमात्मनिष्ठा इमे सत्या अपहतपाप्मत्वादयः कामाः, अनृतमपिधानं येषां तेऽनृतापिधाना अनृताच्छादिताः । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाचि, 'ऋतं पिबन्तौ' ( कठ. ३।१ ) इति वचनात् । ऋतं कर्म फलाभिसंधिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलं, अत्र तद्व्यतिरिक्तफलं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधीति महासिद्धान्ते भावितम् । तेषां सत्यानां सतां विद्यमानानामेव कर्माच्छादकम् । ततश्च स्वात्मभूतपरमात्मगता अपहतपाप्मत्वादिधर्माः कर्मरूपाविद्यातिरोहितत्वान्न भासन्ते इत्यर्थः । अस्योपासकस्य यो बन्धुवर्ग इतः प्रैति, न स इह द्रष्टुं शक्यः ।

रंग.

( ३ ) अनृतं च स्वाभाविकं कामकर्मादिकं विकाराणां वाचारम्भणमात्रत्वात् । अथवा अनृतमैहिकप्रपञ्चः, सत्यलोकीयकामापेक्षयाऽल्पकालस्थायित्वेन वाचारम्भणमात्रत्वात् ।

विज्ञान. ४।४।१६

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते । अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः । तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः । एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥**

(१) अथ पुनर्ये चास्य विदुषो जन्तोः जीवा जीवन्तीह पुत्रा भ्रात्रादयो वा, ये च प्रेता मृता इष्टाः संबन्धिनः, यच्चान्यदिह लोके वस्त्रान्नपानादि रत्नादि वा वस्त्विच्छन्न लभते, तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना विन्दते लभते । अत्रास्मिन्हार्दाकाशे हि यस्मादस्यैते यथोक्ताः सत्याः कामा वर्तन्तेऽनृतापिधानाः । कथमिव तदन्याय्यमित्युच्यते—तत्तत्र यथा हिरण्यनिधिं, हिरण्यमेव पुनर्ग्रहणाय निधातृभिर्निधीयत इति निधिः, तं हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तं अक्षेत्रज्ञा निधिशास्त्रैर्निधिक्षेत्रमजानन्तः, ते निधेरुपर्युपरि संचरन्तोऽपि निधिं न विन्देयुः शक्यवेदनमपि । एवमेवेमा अविद्यावत्यः सर्वा इमाः प्रजाः यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं, ब्रह्मैव लोको ब्रह्मलोकस्तमहरहः प्रत्यहं गच्छन्त्योऽपि सुषुप्तकाले, न विन्दन्ति न लभन्ते एषोऽहं ब्रह्मलोकभावमापन्नोऽस्म्यद्येति । अनृतेन हि यथोक्तेन हि यस्मात्प्रत्यूढा हृताः, स्वरूपादविद्यादिदोषैर्बहिरपकृष्टा इत्यर्थः । अतः कष्टमिदं वर्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यते इत्यभिप्रायः ।

शंकर.

(२) अत्र 'यच्चास्येहास्ति यच्च नास्ति' इति वाक्यसमानार्थत्वादस्य वाक्यस्य, मुक्तस्य सर्वतो विरक्तस्य प्राप्यान्तरासंभवान्निरतिशयभोग्यत्वमेवार्थः । यद्वाऽहरहर्गच्छन्त्य इति न सुषुप्तिकालीनं गमनमुच्यतेऽपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य हिरण्यनिधिवत्परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानास्तमजानत्यस्तं न विन्दन्ति न लभन्त इत्यर्थः । अर्थद्वयमपि भाष्यकृता वर्णितं 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च' (ब्रसू. १।३।१५) इति सूत्रे । सुषुप्तिकालीनगमनविषयपूर्वव्याख्यायामुपर्युपरीत्यस्य दृष्टान्त एवान्वयो न दार्ष्टान्तिके, सुषुप्तिकाल एकीभावसद्भावेऽप्युपरिगमनाभावात् । अन्तर्यामिविषयद्वितीयव्याख्यायां तु अन्तर्यामिण उपरि सर्वदा गतिसत्त्वादुपर्युपरीत्यस्य दार्ष्टान्तिकेऽप्यन्वयो द्रष्टव्यः । रंग.

हृदयस्थस्य सत्याख्यस्यात्मनः स्वरूपेणाभिनिष्पत्तिः परमज्योतिःसंपत्त्या

**स वा एष आत्मा हृदि । तस्यैतदेव निरुक्तं[१]**

(१) छाउ. ८।३।२; ब्रशांकर. १।३।१५, ३।२।९; भास्कर. १।३।१५; रामानुज. १।१।१ ( पृ. १६, ८३, १०१ ), १।३।१४; निंबार्क. १।३।१५; ब्रमध्व. १।३।१५; श्रीकंठ. १।३।१४; श्रीकर. १।३।१५; वल्लभ. १।३।१५, ४।४।१६; विज्ञान. १।३।१५, ३।२।२६; बलदेव. १।३।१५.

(१) छाउ. ८।३।३; ब्रशांकर. १।१।९, २।३।२४; भास्कर. २।३।२४; विज्ञान. १।३।२५, २।३।२४.

हृदयमिति तस्माद्धृदयम् । अहरहर्वा एवंवित्स्वर्गं लोकमेति ॥

स वै यः ' आत्माऽपहतपाप्मा ' इति प्रकृतः, वैशब्देन तं स्मारयति । एष विवक्षित आत्मा हृदि हृदयपुण्डरीके आकाशशब्देनाभिहितः । तस्यैतस्य हृदयस्यैतदेव निरुक्तं निर्वचनं, नान्यत् । हृदि अयमात्मा वर्तते इति यस्मात्तस्माद्धृदयं, हृदयनामनिर्वचनप्रसिद्ध्याऽपि स्वहृदये आत्मेत्यवगन्तव्यमित्यभिप्रायः । अहरहर्वै प्रत्यहमेवंवित् हृदयमात्मेति जानन्स्वर्गं लोकं हार्दं ब्रह्मैति प्रतिपद्यते । नन्वनेवंविदपि सुषुप्तकाले हार्दं ब्रह्म प्रतिपद्यत एव, ' सता सोम्य तदा संपन्नः ' इत्युक्तत्वात् । बाढमेवं, तथाऽप्यस्ति विशेषः—यथा जानन्नजानंश्च सर्वो जन्तुः सद्ब्रह्मैव, तथाऽपि तत्त्वमसीति प्रतिबोधितो विद्वान्सदेव नान्योऽस्मीति जानन् सदेव भवति । एवमेव विद्वानविद्वांश्च सुषुप्ते यद्यपि सत्संपद्यते, तथाऽप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते । देहपातेऽपि विद्याफलस्यावश्यं भावित्वादित्येष विशेषः ।

शंकर.

अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥

( १ ) सुषुप्तकाले स्वेन आत्मना सता संपन्नः सन् सम्यक्प्रसीदतीति जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति संप्रसादशब्दो यद्यपि सर्वजन्तूनां साधारणः, तथाप्येवंवित्स्वर्गं लोकमेतीति प्रकृतत्वादेन संप्रसाद इति संनिहितवच्छब्दविशेषणं सोऽयं शरीरं हित्वा अस्माच्छरीरात् समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः, न त्वासनादिव समुत्थायेतीह युक्तं, स्वेन रूपेणेति विशेषणात् । न ह्यन्यत उत्थाय स्वरूपं संपत्तव्यम् । स्वरूपमेव हि तन्न भवति, प्रतिपत्तव्यं चेत्स्यात् । परं परमात्मलक्षणं विज्ञप्तिस्वभावं ज्योतिरुपसंपद्य स्वास्थ्यमनुगम्येत्येतत् । स्वेन आत्मीयेन रूपेणाभिनिष्पद्यते । प्रागेतस्याः स्वरूपसंपत्तेरविद्यया देहमेवापरं रूपमात्मत्वेनोपगत इति तदपेक्षयेदमुच्यते—स्वेन रूपेणेति । अशरीरता ह्यात्मनः स्वरूपम् । यत्स्वं परं ज्योतिःस्वरूपमापद्यते संप्रसादः, एष आत्मेति होवाच, स ब्रूयादिति यः श्रुत्या नियुक्तोऽन्तेवासिभ्यः । किंचैतदमृतमविनाशि भूमा ' यो वै भूमा तदमृतम् ' इत्युक्तम् । अत एवाभयं, भूम्नो द्वितीयाभावात् । अत एतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नामाभिधानम् । किं तत् , सत्यमिति । सत्यं ह्यवितथं ब्रह्म । ' तत्सत्यं स आत्मा ' इति ह्युक्तम् । अथ किमर्थमिदं नाम पुनरुच्यते, तदुपासनविधिस्तुत्यर्थम् ।

शंकर.

( २ ) ' ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ' —स्थितमेतत् , ' स्वेन रूपेण ' इत्यत्र आत्ममात्ररूपेणाभिनिष्पद्यते, नाऽऽगन्तुकेनापररूपेणेति । अधुना तु तद्विशेषबुभुत्सायामभिधीयते, स्वमस्य रूपं ब्राह्ममपहतपाप्मत्वादिसत्यसंकल्पत्वावसानं तथा सर्वज्ञत्वं सर्वेश्वरत्वं च तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो मन्यते ।

४।४।५

' चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः '—यद्यप्यपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते, तथाऽपि शब्दविकल्पजा एवैते । पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते । चैतन्यमेव त्वस्याऽऽत्मनः स्वरूपमिति तन्मात्रेण स्वरूपेणाभिनिष्पत्तिर्युक्ता । तथा च श्रुतिः 'एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ' ( बृउ. ४।५।१३ ) इत्येवंजातीयका अनुगृहीता भविष्यति । सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते सत्याः कामा अस्येति, तथाऽप्युपाधिसंबन्धाधीनत्वात्तेषां न चैतन्यवत्स्वरूपत्वसंभवः । अने-

(१) छाउ. ८।३।४; ब्रशंकर. १।३।१८, २०, १।४।२१, ४।४।५; भास्कर. १।३।१८, ४।४।७; रामानुज. १।१।१ ( पृ. ८० ), १।३।७, १७, ४०, ४१, १।४।२१, २२, ३।३।२७, ३०, ३८, ४०, ४।३।१२, १४, ४।४।१; निंबार्क. १।३।१८, ३।३।४०, ४।३।१२, १४, ४।४।१; ब्रमध्व. १।३।१८, ४।४।१; श्रीकंठ. १।३।७, १७, १९, ३।३।३०, ३८, ४०, ४।३।१४, ४।४।१, ५, २२; श्रीकर. १।१।४ ( पृ. ५२ ), १।३।१८, १९, २०, १।४।२२, २।१।८, ११, २।३।२८, ३।२।९, ३।३।२७, २९, ३८, ४।३।१३, १५, ४।४।२२; वल्लभ. १।३।१८, ४०; विज्ञान. १।३।९, १८; बलदेव. १।३।८, १७.

काकारत्वप्रतिषेधात्। तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेनाव्यपदेश्येन बोधात्मनाऽभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते। ४।४।६

'एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः' — एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारापेक्षया पूर्वस्यापि उपन्यासादिभ्योऽवगतस्य ब्राह्मस्यैश्वर्यरूपस्याप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते। ब्रशंकर ४।४।७

(३) एवमपि चैतन्यमात्रत्वेऽपि, पूर्वस्याप्यैश्वर्यरूपस्य भावात्। कथं, उपन्यासात्। पूर्वोक्तेन जैमिनीयेन हेतुना उभयेषां वेदवाक्यानां प्रामाण्याविशेषात्, असाधारणत्वाच्चापहतपाप्मत्वादिगुणानां व्यतिरिक्ताव्यतिरिक्तस्वभावत्वादविरोधं भगवान् बादरायणः परिनिश्चिकाय। न च गुणगुणिनोरेकत्वानेकत्वविरोधः। यथाऽग्निरेकः सप्तजिह्वः प्रकाशवानूर्ध्वज्वलन उष्ण इति नानात्वं यथा च उद्यन्दिनकर एकः किरणजालं अवनिमण्डले प्रथयन्ननेको भवतीति।

* भास्कर. ४।४।७

(४) कथं ब्रह्मप्राप्तिः, प्राप्तस्य वा ततः किं भवतीत्यत्र आह — अथ य एष इत्यादि। अथशब्दः प्रकृतापेक्षत्वद्योतकः। संप्रसादशब्दः सुषुप्तिस्थानवचनः संस्तत्संबन्धाज्जीवं लक्षयति। एष संप्रसादः 'अहरहर्वा एवंवित्' इति पूर्ववाक्यनिर्दिष्ट उपासको जीवः अस्माद्धेयतया परिदृश्यमानाच्छरीरादुत्क्रम्य देशविशेषनिष्ठं परमात्मानं प्राप्य स्वेन रूपेणाभिनिष्पद्यते। अस्य वाक्यस्यार्थः प्रजापतिविद्यायां विशिष्य वक्ष्यते।

एष आत्मेति होवाचेत्येतावन्मात्रस्याऽऽविर्भवत्स्वरूपपरत्वम्। एतदमृतमभयमेतद्ब्रह्मेत्यत्र त्वेतच्छब्दस्य परज्योतिःशब्दितब्रह्मपरत्वमित्याश्रयणेऽपि नानुपपत्तिः। अनेन वाक्यसंदर्भेण परमात्मनो मुक्तप्राप्यत्वतत्स्वरूपाविर्भावयितृत्वलक्षणो महिमा प्रतिपादितो भवति। रंग.

(५) 'संपद्याविर्भावः स्वेन शब्दात्'— ब्रह्मप्राप्तजीवस्य मलतिरोहितं ब्रह्मसदृशगुणं स्वरूपं पूर्वं सदेव मलावरणापगमादाविर्भवति। 'स्वेन रूपेण' इति शब्दात् तथाऽवगम्यते। अन्यथा ह्यागन्तुकस्यापि रूपस्य स्वासाधारणत्वात् 'स्वेन' इति विशेषणमनर्थकं स्यात्। तत्र सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादेन स्वावरणे मले विगलिते तत्सदृशगुणमात्मस्वरूपं प्रादुर्भवति, न कर्म फलवदुत्पद्यते। मलस्यानादित्वात् संसारोपपत्तिः। अतः स्वाभाविकमेव मुक्तस्य स्वरूपं चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवति। ४।४।१

'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' — पूर्वत्र स्वयंप्रकाशमपहतपाप्मत्वादिगुणविशिष्टं ब्रह्मसदृशं मुक्तस्य स्वरूपमाविर्भवतीत्युक्तम्। तदुभयरूपत्वं संभवति न वेति संशयः। एवं सति मतान्तरेण पूर्वपक्षः प्रवर्तते। 'स्वेन रूपेण' इति स्वरूपाविर्भावो ब्राह्मेणापहतपाप्मत्वादिकेन। ते हि ब्रह्मगुणाः प्रत्यगात्मनोऽपि स्वाभाविकाः 'य आत्माऽपहतपाप्मा' इत्याद्युपन्यासात्, 'जक्षन् क्रीडन् रममाणः' इत्यादिश्रवणाच्चावगम्यते। अतो गुणसाम्यमिति जैमिनिः। ४।४।५

'चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः' — 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' 'विज्ञानघन एव' इत्यवधारणात् विज्ञानस्वरूपमात्रेण साम्यमित्यौडुलोमिः। एवमुभयदर्शनात् सविशेषनिर्विशेषत्वे सिद्धे युगपदुभयासंभवात् कालभेदादिना व्यवस्थेति। * श्रीकंठ. ४।४।६

**तानि ह वा एतानि त्रीण्यक्षरणि सतीयमिति। तद्यत्सत्तदमृतम्। अथ यत्ति तन्मर्त्यम्। अथ यद्यं तेनोभे यच्छति। यदनेनोभे यच्छति तस्माद्यम्। अहरहर्वा एवंवित्स्वर्गं लोकमेति॥**

(१) तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति। सकारस्तकारो यमिति च। ईकारस्तकारे उच्चारणार्थोऽनुबन्धः, ह्रस्वेनैवाक्षरेण

* अन्यत् ब्रशंकरवत्। रामानुज. ४।४।५,६ ब्रशंकरवत्। ४।४।७ तात्पर्यं भास्करवत्। निंबार्क. रामानुजवत्।

* ४।४।७ भास्करवत्। ब्रह्मसादृश्यं जीवस्येति विशेषः।

(१) छाद. ८।३।५; रंग. सतीय (सत्तिय); श्रीकंठ. ४।१।१२; वल्लभ. १।३।२०.

पुनः प्रतिनिर्देशात् । तेषां तत्र, यत्सत् सकारः, तदमृतं, सद्ब्रह्मामृतवाचकत्वादमृत एव सकारस्तकारान्तो निर्दिष्टः । अथ यत्ति तकारः, तन्मर्त्यम् । अथ यत् यमक्षरं, तेनाक्षरेणामृतमर्त्याख्ये पूर्वे उभे अक्षरे यच्छति यमयति नियमयति वशीकरोत्यात्मनेत्यर्थः । यद्यस्मादनेन यामित्येतेनोभे यच्छति, तस्माद्यम् । संयते इव ह्येतेन यमा लक्ष्येते । ब्रह्म नामाक्षरस्यापीदममृतत्वादिधर्मवत्त्वं महाभाग्यं, किमुत नामवतः, इत्युपास्यत्वाय स्तूयते ब्रह्म नामनिर्वचनेन एवं । नामवतो वेत्ते-वंवित् । अहरहर्वा एवंवित्स्वर्गं लोकमेति इत्युक्तार्थम् ।

शंकर.

( २ ) अत्रामृतमर्त्यशब्दाभ्यां चेतनाचेतने निर्दिश्येते—अथ यद्यमित्यादि । अमृतत्वमर्त्यत्वस्वरूपेणोपलक्षिते उभे यच्छतीति यमित्यर्थः ।

* रंग.

आत्मा लोकविधरण अपहतपाप्मा ब्रह्म-
लोकः नित्यप्रकाशः

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय । नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम् । सर्वे पाप्मानोऽतो निवर्तन्ते । अपहतपाप्मा ह्येष ब्रह्मलोकः ॥**

( १ ) अथ य आत्मेति । उक्तलक्षणो यः संप्रसादस्तस्य स्वरूपं वक्ष्यमाणैरुक्तैरनुक्तैश्च गुणैः पुनः स्तूयते, ब्रह्मचर्यसाधनसंबन्धार्थम् । य एष यथोक्तलक्षण आत्मा स सेतुरिव सेतुः । विधृतिर्विधरणः । अनेन हि सर्वं जगद्वर्णाश्रमादिक्रियाकारकफलादिभेदनियमैः कर्तुरनुरूपं विदधता विधृतम् । अध्रियमाणं हीश्वरेणेदं विश्वं विनश्येद्यतस्तस्मात्स सेतुर्विधृतिः । किमर्थं स सेतुरित्याह—एषां भूरादीनां लोकानां कर्तृकर्मफलाश्रयाणामसंभेदायाविदारणायाविनाशायेत्येतत् । किंविशिष्टश्चासौ सेतुरित्याह—नैतं, सेतुमात्मानमहोरात्रे सर्वस्य जनिमतः परिच्छेदके सती नैतं तरतः । यथाऽन्ये संसारिणः कालेनाहोरात्रादिलक्षणेन परिच्छेद्याः, न तथाऽयं कालपरिच्छेद्य इत्यभिप्रायः । ‘यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते’ इति श्रुत्यन्तरात् । अत एवैनं न जरा तरति न प्राप्नोति । तथा न मृत्युर्न शोको न सुकृतं न दुष्कृतं, सुकृतदुष्कृते धर्माधर्मौ । प्राप्तिरत्र तरणशब्देनाभिप्रेता नातिक्रमणम् । कारणं ह्यात्मा । न शक्यं हि कारणातिक्रमणं कर्तुं कार्येण । अहोरात्रादि च सर्वं सतः कार्यम् । अन्येन ह्यन्यस्य प्राप्तिरतिक्रमणं वा क्रियेत । न तु तेनैव तस्य । न हि घटेन मृत्प्राप्यतेऽतिक्रम्यते वा । यद्यपि पूर्वं य आत्माऽपहतपाप्मेत्यादिना पाप्मादिप्रतिषेध उक्त एव, तथाऽपीहायं विशेषः, न तरतीति प्राप्तिविषयत्वं प्रतिषिध्यते । तत्राविशेषेण जराद्यभावमात्रमुक्तम् । अहोरात्राद्या उक्ताः, अनुक्ताश्चान्ये सर्वे पाप्मानः उच्यन्ते । अतोऽस्मादात्मनः सेतोर्निवर्तन्ते अप्राप्यैवेत्यर्थः । अपहतपाप्मा ह्येष ब्रह्मैव लोको ब्रह्मलोक उक्तः ।

शंकर.

( २ ) असंभेदायासंकरायेति ।

१।३।१६

सेतुव्यपदेशस्तावन्न ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते, सेतुरात्मेति ह्याह, न ततः परमस्ति इति । तत्र परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत । न चैतन्न्याय्यं, हठो ह्यप्रसिद्धकल्पना । अपि च सेतुव्यपदेशादात्मनो लौकिकसेतुनिदर्शनेन सेतुबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयताऽपि प्रासज्ज्येत । न चैतन्न्याय्यम् । अजत्वादिश्रुतिविरोधात् ।

* ब्रशंकर. ३।२।३२

---

* शेषं शंकरवत् ।

(१) छाउ. ८।४।१; ब्रशंकर. १।३।१६, ३।२।७, १०, ३।२।३१, ३२, ४।१।१४; भास्कर. १।३।१६, ३।२।३२, ४।१।१४; रामानुज. १।३।१५, ३।२।३०, ३१, ४।१।१४; निंबार्क. १।३।१६, ३।२।३१; श्रीकंठ. १।३।१५, १।३।२१, ३।२।८, ३०, ३१; श्रीकर. १।३।१६, २१, ३।२।३०, ३१; वल्लभ. १।३।१६, १८, ३।२।३१, ३२; विज्ञान. १।३।१६, ३।२।३१; बलदेव. १।३।१६, ३।२।३२, ४।१।१४.

* भास्कर. ब्रशंकरवत् । असंभेदशब्देऽसंकराविनाशोभयार्थः । निंबार्क. श्रीकंठ. ब्रशंकरवत् ।

( ३ ) पापहेतुकार्याचरणेऽपि तदुत्पत्तिप्रतिबन्धकशक्तियोगित्वमेव ह्यपहतपाप्मत्वम् ।

* रंग.

( ४ ) सिनोति बध्नाति स्वस्मिन्सर्वं चिदचिद्वस्तुजातमसंकीर्णमिति सेतुरुच्यते ।

† रामानुज. ३।२।३१

( ५ ) ब्रह्म । अतः । जीवात् । परं भिन्नम् । कुतः । सेतून्मानसंबन्धभेदव्यपदेशेभ्यः हेतुभ्यः । 'अथ य आत्मा स सेतुर्विधृतिः' इत्यस्य परस्य सेतुत्वव्यपदेशात् सेतुशब्दस्य च लोके कूलान्तरप्राप्तिहेतौ प्रसिद्धेरितोऽन्यदनेन प्राप्यमस्तीति गम्यते ।

श्रीकर. ३।२।३१

( ६ ) संसारसागरोत्तरणोपायत्वात् सेतुत्वम् ।

‡ वल्लभ. ३।२।३२

( ७ ) 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' — नात्यन्तमभेदो मन्तव्यः, ब्रह्म हि अतोऽनन्तपदार्थात्परं भिन्नं, कुतः सेत्वादिव्यपदेशेभ्यः ।

विज्ञान. ३।२।३१

**तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति । विद्धः सन्नविद्धो भवति । उपतापी सन्नुपतापी भवति । तस्माद्वा एतꣳ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते । सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥**

( १ ) यस्माच्च पाप्मकार्यमान्ध्यादि शरीरवतः स्यान्न त्वशरीरस्य, तस्माद्वा एतमात्मानं सेतुं तीर्त्वा प्राप्यानन्धो भवति देहवत्त्वे पूर्वमन्धोऽपि सन् । तथा विद्धः सन् देहवत्त्वे स देहवियोगे सेतुं प्राप्याविद्धो भवति । तथोपतापी रोगाद्युपतापवान् सन्ननुपतापी भवति । किंच यस्मादहोरात्रे न स्तः सेतौ, तस्माद्वा एतं सेतुं तीर्त्वा प्राप्य, नक्तमपि तमोरूपं रात्रिरपि, सर्वमहरेवाभिनिष्पद्यते । विज्ञप्त्यात्मज्योतिःस्वरूपं अहरिवाहः सदैकरूपं विदुषः संपद्यत इत्यर्थः । सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेणैष ब्रह्मलोकः ।

शंकर.

( २ ) यस्मादयमपहतपाप्मा तस्मादेवैतं परमात्मलक्षणं सेतुं प्राप्य पूर्वमान्ध्यायुधवेधज्वरादियुक्तदेहोऽपि संस्तद्दोषरहितदिव्यदेहयुक्तो भवतीत्यर्थः । परमात्मानं प्राप्तस्य तमिस्रा तामसी रात्रिरपि दिवैव । तस्याज्ञानप्रसक्तेरभावादहःसदृशी सा रात्रिः । अहोरात्रयोर्न विशेष इत्यर्थः । तत्र हेतुः—एष पूर्वोक्तो ब्रह्मलोको हि यस्मात्सकृद्विभातः । सर्वदा ब्रह्मस्वरूपप्रकाशस्यानावृततया भासमानत्वादित्यर्थः ।

रंग.

( ३ ) तत्र तरणं नाम तत्प्राप्तयेऽन्यतरणमेव । 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदते आनन्दी भवति' इति मौद्गल्यश्रुतेः ।

ब्रमध्व. ४।४।१

आत्मरूपब्रह्मलोकप्राप्तिसाधनं ब्रह्मचर्यम्

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः । तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥**

तत्तत्रैवं सति, एतं यथोक्तं ब्रह्मलोकं, ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेन, शास्त्राचार्योपदेशमनुविन्दन्ति स्वात्मसंवेद्यतामापादयन्ति ये, तेषामेव ब्रह्मचर्यसाधनवतां ब्रह्मविदां, एष ब्रह्मलोकः, नान्येषां स्त्रीविषयसंपर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात्परममेतत्साधनं ब्रह्मचर्यं ब्रह्मविदामित्यभिप्रायः ।

* शंकर.

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥**

* शंकरवत् । असंभेदशब्दोऽसंकरपर्यायः ।

† ब्रशंकरवत् ।

‡ अन्यद्वशंकरवत् ।

(१) छाउ. ८।४।२; **रामानुज.** ३।२।३०, ३१; **ब्रमध्व.** ४।४।१; **श्रीकंठ.** १।३।२१, ३।२।३०; **श्रीकर.** १।३।२१, ३।२।३०.

* रंग. शंकरवत्

(१) छाउ. ८।४।३; **ब्रशंकर.** ४।३।१; **भास्कर.** १।३।१५, ४।४।९.

(२) छाउ. ८।५।१; **ब्रशंकर.** ३।४।२६; **बलदेव.** ३।३।४९.

य आत्मा सेतुत्वादिगुणैः स्तुतस्तत्प्राप्तये ज्ञान-सहकारित्वादनन्तरं ब्रह्मचर्याख्यं विधातव्यमित्याह । यज्ञादिभिश्च तत्स्तौति कर्तव्यार्थम्—अथ यद्यज्ञ इत्याचक्षते लोके, परमपुरुषार्थसाधनं कथयन्ति शिष्टास्तद्ब्रह्मचर्यमेव । यज्ञस्यापि यत्फलं तद्ब्रह्मचर्यवान् लभते, अतो यज्ञोऽपि ब्रह्मचर्यमेवेति प्रतिपत्तव्यम् । कथं ब्रह्मचर्यं यज्ञ इत्याह—ब्रह्मचर्येणैव हि यस्माद्यो ज्ञाता स तं ब्रह्मलोकं यज्ञस्यापि पारंपर्येण फलभूतं विन्दते लभते, ततो यज्ञोऽपि ब्रह्मचर्यमेवेति । यो ज्ञातेत्यक्षरानुवृत्तेर्यज्ञो ब्रह्मचर्यमेव । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् । कथम् । ब्रह्मचर्येणैव साधनेन तमीश्वरमिष्ट्वा पूजयित्वा, अथवैषणामात्मविषयां कृत्वा, तमात्मानमनुविन्दते । एषणादिष्टमपि ब्रह्मचर्यमेव ।

शंकर.

(२) ननु यज्ञस्य कथं ब्रह्मलोकसाधनब्रह्मचर्यसाध्यत्वं, न हि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यस्य यज्ञो द्वारमित्याशङ्क्य ब्रह्मचर्यसाध्यस्य ब्रह्मप्राप्तिसाधनस्य ज्ञानस्य यज्ञरूपत्वाज्ज्ञानसाधनस्य ब्रह्मचर्यस्य यज्ञसाधनत्वमप्यस्तीति प्रतिपादयितुमेकशब्दलभितत्वेन तयोरैक्यं संपादयति—ब्रह्मचर्येण ह्येवेति ।

* रंग.

अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते । अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुते ॥

(१) अथ यत्सत्त्रायणमित्याचक्षते, ब्रह्मचर्यमेव तत् । तथा सतः परस्मादात्मनः आत्मनस्त्राणं रक्षणं ब्रह्मचर्यसाधनेन विन्दते । अतः सत्त्रायणशब्दमपि ब्रह्मचर्यमेव तत् । अथ यन्मौनमित्याचक्षते, ब्रह्मचर्यमेव तत्, ब्रह्मचर्येणैव साधनेन युक्तः सन्नात्मानं शास्त्राचार्याभ्यामनुविद्य पश्चान्मनुते ध्यायति । अतो मौनशब्दमपि ब्रह्मचर्यमेव ।

शंकर.

(२) अत्रापि ब्रह्मप्राप्तिसाधनस्य ब्रह्मचर्यसाध्यस्य विद्यान्तरविधुरीकरणक्षमत्व सत्कृष्टिनामत्राणस्य गवामयनादिसत्त्रस्य च सत्त्रायणैकशब्दलभितत्वेनाभेदाध्यवसायः । वाङ्नियमनलक्षणमौनस्य ब्रह्मचर्यसाध्यात्मश्रवणाधीनमननस्य च मौनशब्दैकशब्दलभितत्वेनाभेदाध्यवसायः ।

रंग.

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत् । एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् । तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयꣳ सरः । तदश्वत्थः सोमसवनः । तदपराजिता पूर्ब्रह्मणः, प्रभुविमितꣳ हिरण्मयम् ॥

(१) अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत् । यमात्मानं ब्रह्मचर्येणानुविन्दते, स एष ह्यात्मा ब्रह्मचर्यसाधनवतो न नश्यति, तस्मादनाशकायनमपि ब्रह्मचर्यमेव । अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् । अरण्यशब्दयोरर्णवयोर्ब्रह्मचर्यवतोऽयनादरण्यायनं ब्रह्मचर्यम् । यो ज्ञानाद्यज्ञ एषणादिष्टं सतस्त्राणात्सत्त्रायणं मननान्मौनमनशनादनाशकायनमरण्ययोगमनादरण्यायनमित्यादिभिर्महद्भिः पुरुषार्थसाधनैः स्तुतत्वाद्ब्रह्मचर्यं परमं ज्ञानस्य सहकारिकारणं साधनमित्यतो ब्रह्मविदा यत्नतो रक्षणीयमित्यर्थः । तत्र हि ब्रह्मलोकेऽरश्च ह वै प्रसिद्धो ण्यश्चार्णवौ समुद्रौ समुद्रोपमे वा सरसी, तृतीयस्यां भुवमन्तरिक्षं चापेक्ष्य तृतीया द्यौस्तस्यां तृतीयस्यां, इतोऽस्माल्लोकादारभ्य गण्यमानायां दिवि । तत्रैव च, ऐरमिराऽन्नं तन्मयः ऐरो मण्डस्तेन पूर्णमैरं, मदीयं तदुपयोगिनां मदकरं हर्षोत्पादकं सरः । तत्रैव चाश्वत्थो वृक्षः सोमसवनो नामतः, सोमोऽमृतं तन्निःस्रवोऽमृतस्रव इति वा । तत्रैव च ब्रह्मलोके ब्रह्मचर्यसाधनरहितैर्ब्रह्मचर्यसाधन-

* शेषं शंकरेण गतार्थम् ।

(१) छाउ. ८।५।२; बलदेव. ३।३।४९.

(१) छाउ. ८।५।३; ब्रशंकर. ३।४।३५, ४।३।१४; भास्कर. ४।४।१९; रंग. तत् । तदरश्च ( तदरश्च ) दैरं मदीयꣳ ( दैरंमदीयꣳ ); ब्रमध्व. १।३।१५.

बन्द्वयोऽन्यैर्न जीयते इत्यपराजिता नाम, पूः पुरी ब्रह्मणो हिरण्यगर्भस्य । ब्रह्मणा च प्रभुणा विशेषेण मितं निर्मितं, तच्च हिरण्मयं सौवर्णं प्रभुविमितं, मण्डपमिति वाक्यशेषः ।

शंकर.

(२) ब्रह्मचर्यसाध्यनाशाभावरूपफलस्य चानशनलक्षणमार्गस्य चानाशकायनशब्दैक्यकृतोऽभेदः । इतो भूलोकापेक्षया तृतीये द्युशब्दिते ब्रह्मलोकेऽरण्यसंज्ञकार्णवौ स्तः । अतश्चारण्यायनस्य ब्रह्मलोकस्य चारण्यवासस्य चारण्यायनशब्दकृतोऽभेदः । भुवं चतुर्मुखलोकान्तान्तरिक्षलोकं चापेक्ष्य भगवल्लोकस्य तृतीयत्वं, न तु चतुर्मुखलोकस्य तृतीयत्वमिति मन्तव्यम् । प्रश्नोपनिषदि चतुर्मुखलोकस्याप्यन्तरिक्षलोककोटौ निवेशितत्वात् । प्रसङ्गाद्भगवल्लोकचिह्नानि कानिचिदाह—तदैरंमदीयं सर इत्यादि । तत्त्र, ऐरंमदीयनामकं सरः । अस्तीति शेषः । इरयाऽमृतेन माद्यन्ते यस्मिंस्तदैरंमदीयममृतमयं सर इत्यर्थः । सोमसवननामाऽश्वत्थश्चास्तीत्यर्थः । चन्द्रवदाह्लादकरत्वात्सोमसवनत्वम् । तत्त्र, अब्रह्मविद्भिः प्राप्तुमशक्यत्वेनापराजिता नाम परब्रह्मणः पुरी चास्तीत्यर्थः । प्रभुविमितमिति । मण्डपमिति शेषः । प्रभुणा भगवता विशेषेण मितं स्वभोगभूमित्वेन विशेषतः परिगृहीतमित्यर्थः । भगवतो व्यासत्वेऽपि नित्यविग्रहविशिष्टतया संनिधानाद्विमितत्वम् । अतश्च तद्देशविशिष्टब्रह्मप्राप्तिरेव ब्रह्मप्राप्तिरिति भावः ।

रंग.

**तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः । तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥**

(१) तत्त्र ब्रह्मलोके, एतावर्णवौ यावरण्याख्यावुक्तौ ब्रह्मचर्येण साधनेनानुविन्दन्ति ये, तेषामेवैष यो व्याख्यातो ब्रह्मलोकः । तेषां च ब्रह्मचर्यसाधनवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवति, नान्येषामब्रह्मचर्यपराणां बाह्यविषयासक्तबुद्धीनां, कदाचिदपीत्यर्थः ।

शंकर.

(२) प्रसङ्गादाह—तद्य एवैतावरं चेत्यादि । ब्रह्मप्राप्तिसाधनीभूतारण्यशब्दितार्णवद्वयप्राप्तेर्ब्रह्मचर्याधीनत्वाद्ब्रह्मचर्यमेव सर्वसाधनोत्कृष्टमिति भावः ।

रंग.

नाडीविचारः, हार्दब्रह्मोपासकस्य विदुषः मूर्धन्यनाड्या आदित्यामृतत्वप्राप्तिः

**अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येति । असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥**

यस्तु हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्यादिसाधनसंपन्नस्त्यक्तबाह्यविषयानृततृष्णः सन्नुपास्ते, तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येति नाडीखण्ड आरभ्यते— अथ या एता इति । अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य संबन्धिन्यो नाड्यो हृदयमांसपिण्डात्सर्वतो विनिःसृताः आदित्यमण्डलादिव रश्मयस्ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्तन्ते इत्यर्थः । तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहार्यम् । सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन संपर्कात्पिङ्गलं भवति सौरं तेजः पित्ताख्यम् । तदेव च वातभूयस्त्वान्नीलं भवति । तदेव च कफभूयस्त्वाच्छुक्लम् । कफेन समतायां पीतम् । शोणितबाहुल्येन लोहितम् । वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः कथं भवन्तीति । श्रुतिस्त्वाहाऽऽदित्यसंबन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति । कथम् । असौ वा आदित्यः पिङ्गलो वर्णतः, एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव ।

* शंकर.

(१) छान्द. ८।५।४.

* रंग. शंकरेण गतार्थम् ।

(१) छान्द. ८।६।१; ब्रशंकर. ४।२।१८; श्रीकर. १।३।४०; वल्लभ. ४।२।१८, ४।३।१; विज्ञान. ४।२।१८.

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं च । अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ताः । आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥

तस्याध्यात्मं नाडीभिः कथं संबन्ध इत्यत्र दृष्टान्तमाह—तत्तत्र यथा लोके महान्विस्तीर्णः पन्था महापथः आततो व्याप्तः उभौ ग्रामौ गच्छतीमं च संनिहितममुं च विप्रकृष्टं दूरस्थं, एवं यथा दृष्टान्तो महापथः उभौ ग्रामौ प्रविष्टः, एवमेवैता आदित्यस्य रश्मय उभौ लोकावमुं चाऽऽदित्यमण्डलमिमं च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः । यथा महापथः । कथम् । अमुष्मादादित्यमण्डलात्प्रतायन्ते संतता भवन्ति । ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ताः गताः प्रविष्टा इत्यर्थः । आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः संतानभूताः सत्यस्तेऽमुष्मिन् । रश्मीनामुभयलिङ्गत्वात्ते इत्युच्यन्ते ।

* शंकर.

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति । आसु तदा नाडीषु सृप्तो भवति । तं न कश्चन पाप्मा स्पृशति । तेजसा हि तदा संपन्नो भवति ॥ ‡

(१) तत्तत्रैवं सति यत्र यस्मिन्काले एतत्स्वपनं अयं जीवः सुप्तो भवति । स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति । उपसंहृतसर्वकरणवृत्तिरित्येतत् । अतो बाह्यविषयसंपर्कजनितकालुष्याभावात्सम्यक् प्रसन्नः संप्रसन्नो भवति । अत एव स्वप्नं विषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः । यदैवं सुप्तो भवत्यमु [illegible] यथोक्तासु नाडीषु तदा सृप्तः प्रविष्टो नाडीभिर्हृदयाकाशं गतो भवतीत्यर्थः । न ह्यन्यत्र [illegible] स्वप्नदर्शनमस्तीति सामर्थ्यान्नाडीष्विति सप्तमी तृतीयार्थे [illegible] । तं सता संपन्नं न कश्चन न कश्चिदपि धर्माधर्मलक्षणः पाप्मा स्पृशतीति, स्वरूपावस्थितत्वात्तदाऽऽत्मनः । देहेन्द्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा स्पृशतीति, न तु सत्संपन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते, अविषयत्वात् । अन्यो ह्यन्यस्य विषयो भवति । न त्वनन्यत्वं केनचित्कुतश्चिदपि सत्संपन्नस्य । स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्थां प्रति गमनं बाह्यविषयप्रतिबोधोऽविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशाऽदाहनिमित्तमित्यवोचाम षष्ठे एव, तदिहापि प्रत्येतव्यम् । यदैवं सुप्तः सौरेण तेजसा हि नाड्यन्तर्गतेन सर्वतः संपन्नो व्याप्तो भवति । अतो विशेषेण चक्षुरादिनाडीद्वारैर्बाह्यविषयभोगायाप्रसृतानि करणान्यस्य तदा भवन्ति । तस्मादयं करणानां निरोधात् स्वात्मन्येवावस्थितः स्वप्नं न विजानातीति युक्तम् ।

शंकर.

(२) ‘ सता सोम्य तदा संपन्नो भवति ’ ( छाउ. ६।८।१ ) इति श्रुतेः तेजःशब्दः प्रकाशकत्वगुणयोगाद्ब्रह्मपरः । ब्रह्मणि संपत्तिर्नाम देहेन्द्रियाधिष्ठातृत्वराहित्येन ब्रह्मण्यवस्थानम् । संपत्त्यधिकरणस्य करणत्वविवक्षया तृतीयानिर्देशः ।

रंग.

अथ यत्रैतदबलिमानं नीतो भवति । तमभित आसीना आहुर्जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति । तावज्जानाति ॥

(१) तत्रैवं सत्यथ यत्र यस्मिन्कालेऽबलिमानमबलभावं देहस्य रोगादिनिमित्तं जरादिनिमित्तं वा कृशीभावमेतन्नयनं नीतः प्रापितो देवदत्तो भवति, मुमूर्षुर्यदा भवतीत्यर्थः । तमभितः सर्वतो वेष्टयित्वा आसीना ज्ञातय आहुर्जानासि मां तव पुत्रं जानासि मां पितरं चेत्यादि । स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रा-

---

* रंग. शंकरेण गतार्थम् ।

‡ छाउ. ६।८।१ ( पृ. ९०४ ) द्रष्टव्यम् ।

(१) छाउ. ८।६।२; ब्रशंकर. ४।२।१९; भास्कर. ४।२।१८; रामानुज. ४।२।१७; श्रीकर. ४।२।१७, १८; वल्लभ. ४।३।१; विज्ञान. ४।२।१९; बलदेव. ४।२।१९.

(२) छाउ. ८।६।३; ब्रशंकर. भास्कर. रामानुज. निंबार्क. ब्रमध्व. ३।२।७; श्रीकंठ. ३।२।७, ८; श्रीकर. विज्ञान. बलदेव. ३।२।७.

(१) छाउ. ८।६।४; वल्लभ. ४।२।१८.

न्तोऽनिर्गतो भवति, तावत् पुत्रादीन् जानाति ।

शंकर.

( २ ) नीतो भवतीत्येतत्र यदेत्यर्थः । यद्वा, एतदेतासु नाडीषु स्थित इत्यर्थः । रंग.

**अथ यत्रैतदस्माच्छरीरादुत्क्रामति । अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते । स ओमिति वा होद्वा मीयते । स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति । एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥**

( १ ) अथ यत्र यदा, एतत्क्रियाविशेषणमिति, अस्माच्छरीरादुत्क्रामति, अथ तदैतैरेव यथोक्ताभी रश्मिभिरूर्ध्वमाक्रमते यथाकर्मजितं लोकं प्रैत्यविद्वान् । इतरस्तु विद्वान् यथोक्तसाधनसंपन्नः स ओमित्योंकारेणाऽऽत्मानं ध्यायन्यथापूर्वं वा ह एव, उद्वोर्ध्वं वा विद्वांश्चेत्, इतरस्तिर्यङ्ङ्वेत्यभिप्रायः । मीयते प्रमीयते गच्छतीत्यर्थः । स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसः क्षेपः स्यात्, तावता कालेनाऽऽदित्यं गच्छति प्राप्नोति, क्षिप्रं गच्छतीत्यर्थः, न तु तावतैव कालेनेति विवक्षितम् । किमर्थमादित्यं गच्छतीत्युच्यते — एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यस्तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान् । अतो विदुषां प्रपदनं, प्रपद्यते ब्रह्मलोकमनेन द्वारेणेति प्रपदनम् । निरोधनं निरोधोऽस्मादादित्यादविदुषां भवतीति निरोधः । सौरेण तेजसा देह एव निरुद्धाः सन्तो मूर्धन्यया नाड्या नोत्क्रमन्त एवेत्यर्थः । 'विष्वङ्ङन्या' इति श्लोकात् । शंकर.

( २ ) 'रश्म्यनुसारी' —तत्किमविशेषेणैवाहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वमाहोस्विदहन्येवेति संशये सत्यविशेषश्रवणादविशेषेणैव तावद्रश्म्यनुसारीति प्रतिज्ञायते । ४।२।१८

'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' इति च श्रुतिरनुदीक्षां दर्शयति । तस्मादविशेषेणैवेदं रात्रिंदिवं रश्म्यनुसारित्वम् । * ब्रशंकर. ४।२।१९

( ३ ) स विद्वान् 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' ( भ. गी. १७।२३ ), 'तस्योदिति नाम' ( छाउ. १।६।७ ) इति प्रमाणप्रसिद्धं परमात्मानमाह कीर्तयति कीर्तयन्नेव मीयते प्रमीयते च । मरणकाले तस्य भगवन्नामस्मरणं संभवति । यद्वा स एतैः रश्मिभिरुन्मीयत उन्नीयते । एको वाशब्दोऽवधारणार्थः । § रंग.

( ४ ) रश्म्यनुसारित्वमपीतरसाधारणमुतास्मिन्नेवेति । तत्रावधारणमाह —रश्म्यनुसारीति । निष्कामस्त्ययमेवेति ।

४।२।१८

अतो लाघवादनेकपर्वविशिष्ट एक एव मार्ग इति मन्तव्यं, न तु पर्वभेदेन मार्गभेद इति । गौरवप्रसङ्गात् । न चैवमथैतैरेव रश्मिभिरित्यवधारणानुपपत्तिरिति वाच्यम् । तस्याः श्रुतेरुत्क्रमणमात्रमार्गनिरूपकत्वात् । ... एवमुपक्रमोपसंहाराभ्यामुत्क्रमणमात्रमार्गनिरूपकत्वं, न तु ब्रह्मप्रापकमार्गस्य, अतस्तदनुपपत्तिपरिहारोऽनर्थकः । वल्लभ. ४।३।१

**तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥** †

( १ ) तदेतस्मिन्यथोक्तेऽर्थे एष श्लोको मन्त्रो भवति । शतं चैका चैकोत्तरशतं नाड्यो हृदयस्य

---

(१) छाउ. ८।६।५; ब्रशंकर. १।३।४०, ४।२।१८, १९, ४।३।१; भास्कर. ४।२।१७, १९, ४।३।१; रंग. वा होद्वा ( वाऽऽहोद्वा ) ; रामानुज. ४।२।१७, ४।३।१; निंबार्क. ४।२।१७ थैतैरेव ( थ तैरेव ); श्रीकंठ. ४।२।१७; श्रीकर.. १।३।४०, ४।२।१७, ४।३।१; वल्लभ. ४।२।१८, ४।३।१ रूर्ध्वमा ( रूर्ध्व आ ); विज्ञान. ४।२।१८, ४।३।१ नैतदस्मा ( नैतस्मा ) रादुत्क्रा ( रात्क्रा ); बलदेव. ४।२।१८.

* भास्कर. रामानुज. निंबार्क. श्रीकंठ. श्रीकर. ब्रशंकरवत् । छाउ. ४।१५।५ ( पृ. ८४० ) इत्यत्रापि व्याख्यानादिकं द्रष्टव्यम् ।

§ शेषं शंकरेण गतार्थम् ।

† अस्य वाक्यस्य ब्रह्मसूत्रभाष्यगतस्थलाङ्कपाठभेदादि सर्वं काउ. ६।१६ इत्यत्र संगृहीतम् ।

(१) छाउ. ८।६।६.

मांसपिण्डभूतस्य संबन्धिन्यः प्रधानतो भवन्ति, आनन्त्याद्दहनाडीनाम् । तासामेका मूर्धानमभिनिःसृता विनिर्गता । तयोर्ध्वमायन् गच्छन्नमृतत्वममृतभावमेति । विष्वङ्नानागतयस्तिर्यग्विसर्पिण्य ऊर्ध्वगाश्चान्या नाड्यो भवन्ति संसारगमनद्वारभूताः, न त्वमृतत्वाय, किं तर्हि, उत्क्रमणे एवोत्क्रान्त्यर्थमेव भवन्तीत्यर्थः । द्विरभ्यासः प्रकरणसमाप्त्यर्थः ।

शंकर.

( २ ) यद्वा विष्वगुत्क्रमणेऽन्योत्क्रमणेऽन्या नाड्य उपयुज्यन्ते इत्यर्थः ।

रंग

( प्रजापतिविद्या इन्द्रविरोचनाख्यानसहिता )

ब्रह्मचर्यसाध्यं सर्वप्राप्तिसाधनं अमरापहतपाप्मात्मज्ञानं देवासुरेषु ख्यातम्

**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः । स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥** *

( १ ) 'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' इत्युक्तम् । तत्र कोऽसो संप्रसादः, कथं वा तस्याधिगमः, यथा सोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते येन स्वरूपेणाभिनिष्पद्यते स किंलक्षण आत्मा, संप्रसादस्य च देहसंबन्धीनि पररूपाणि ततो यदन्यत्स्वरूपं, इत्येतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते । आख्यायिका तु विद्याग्रहणसंप्रदानविधिप्रदर्शनार्था, विद्यास्तुत्यर्था च राजसेवितं पानीयमितिवत् —— य आत्मा इत्यादि । य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः, यस्योपासनायोपलब्ध्यर्थं हृदयपुण्डरीकमभिहितं, यस्मिन्कामाः समाहिताः सत्या अनृतापिधानाः, यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तं, उपासनफलभूतकामप्राप्तये च मूर्धन्यया नाड्या गतिरभिहिता, सोऽन्वेष्टव्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः, स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । किं तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते—स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेनान्विष्य विजानाति स्वसंवेद्यतामापादयति, तस्यैतत्सर्वलोककामावाप्तिः सर्वात्मता फलं भवतीति ह किल प्रजापतिरुवाच । अन्वेष्टव्यो विजिज्ञासितव्य इति चैष नियमविधिरेव, नापूर्वविधिः । एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः, दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः । दृष्टार्थत्वं च दर्शयिष्यति 'नाहमत्र भोग्यं पश्यामि' इत्यनेनासकृत् । पररूपेण च देहादिधर्मैरवगम्यमानस्याऽऽत्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलमिति नियमार्थतैवास्य विधेर्युक्ता, न त्वग्निहोत्रादीनामिवापूर्वविधित्वमिह संभवति ।

शंकर.

(२) 'आवृत्तिरसकृदुपदेशात्' —'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' ( बृउ. ४।५।६ ) 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' ( बृउ. ४।४।२१ ) 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति च एवमादिश्रवणेषु संशयः—किं सकृत्प्रत्ययः कर्तव्यः, आहोस्वित् आवृत्त्येति । किं तावत्प्राप्तम्—सकृत्प्रत्ययः स्यात्, प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात् । अश्रूयमाणायां हि आवृत्तौ क्रियमाणायां अशास्त्रार्थः कृतो भवेत् । ननु असकृदुपदेशा उदाहृताः

* छाउ. ८।१।५ ( पृ. ९५५ ) द्रष्टव्यम् ।

(१) छाउ. ८।७।१; **ब्रशंकर.** १।१।४ ( पृ. ५४ ), १।१।२०, १।२।२, १।३।१९, ४०, २।१।२२, ३०, २।३।४३, ३।४।१, ४।१।१, ४।४।२, ५; **भास्कर.** १।१।१, ४, १।३।१९, २।३।४३, ३।४।१, ४।१।१, ४।४।३, ५; **रामानुज.** १।१।१ ( पृ. ८, १११, १२८ ), १।१।४ ( पृ. १५१ ), १।३।१८, ४।४।२, ३, ५; **निंबार्क.** ३।२।१७, ४।४।२; **ब्रमध्व.** १।३।१४, ३।४।३४ घत्सो ( घित्सो ); **श्रीकंठ.** १।३।१८, ३।३।१, ३९, ४०, ४।४।३, ५, ७; **श्रीकर.** १।१।१ ( पृ १६, १८, २०, २१ ), १।१।१२, १३, २१, १।३।१९, २१, ४०, २।१।३२, ३६, २।३।१७, ३।१।२१, ३।२।११, १५, ३।३।१, ४, ३८, ३९, ३।४।८, ४।४।३, ५, ७, १३, १७ **अन्वेष्टव्यः ( अन्वेष्टितव्यः ); विज्ञान.** ३।३।६; **बलदेव.** १।३।१८, ३।४।५०, ४।४।२, ५.

—' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवमादयः, एवमपि यावच्छब्दमावर्तयेत्, सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति, नातिरिक्तम्। सकृदुपदेशेषु तु 'वेद' 'उपासीत' इत्येवमादिषु अनावृत्तिरित्येवं प्राप्ते ब्रूमः—प्रत्ययावृत्तिः कर्तव्या। कुतः। असकृदुपदेशात्—' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको हि असकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननु उक्तं, यावच्छब्दमेव आवर्तयेत् नाधिकमिति, न, दर्शनपर्यवसानत्वादेषाम्। दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि हि, तद्वत्। अपि च उपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रिया अभिधीयते।

* ब्रशंकर. ४।१।१

(३) एवं दहरविद्यां समाप्य तदङ्गभूतां प्रत्यगात्मविद्यां प्रस्तौति — य आत्माऽपहतपाप्मेत्यादिना। अत्रानुविद्येति वाक्यार्थज्ञानमुच्यते, विजानातीति ध्यानं, लघुसिद्धान्ते तथैव भाषितत्वात्।

रंग

(४) 'सत्यकामः' इति श्रुतौ शिवस्य परब्रह्मणः सृष्टिस्थितिप्रलयाविर्भावतिरोधानकामस्य सत्यत्वेन व्यवस्थापनादैन्द्रजालशुक्तिरजतवत्प्रपञ्चस्य न व्यवहारमात्रसत्यत्वम्।

श्रीकर.

**तद्धोभये देवासुरा अनुबुबुधिरे। ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा॑ꣳश्च लोकानाप्नोति सर्वा॑ꣳश्च कामानिति। इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणाम्। तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः॥**

तद्धोभये इत्याद्याख्यायिकाप्रयोजनमुक्तम्। तद्ध किल प्रजापतेर्वचनमुभये देवासुरा देवाश्चासुराश्च देवासुरा अनु परंपरागतं स्वकर्णगोचरापन्नमनुबुबुधिरेऽनुबुद्धवन्तः। ते चैतत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्नित्युच्यते — ते होचुरुक्तवन्तोऽन्योन्यं देवाः स्वपरिषद्यसुराश्च, हन्त यद्यनुमतिर्भवतां, प्रजापतिनोक्तं तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानित्युक्त्वेन्द्रो हैव राजैव स्वयं देवानामितरान्देवांश्च भोगपरिच्छदं च सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवान्, तथा विरोचनोऽसुराणाम्। विनयेन गुरवोऽभिगन्तव्या इत्येतद्दर्शयति। त्रैलोक्यराज्याच्च गुरुतरा विद्येति। यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ तथा गुरुमभ्युपगतवन्तौ। तौ ह किलासंविदानावेवान्योन्यं संविदमकुर्वाणौ विद्याफलं प्रत्यन्योन्यमीर्ष्यां दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमाजग्मतुरागतवन्तौ।

* शंकर.

**[१]तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच। किमिच्छन्ताववास्तमिति। तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः। स सर्वा॑ꣳश्च लोकानाप्नोति सर्वा॑ꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते। तमिच्छन्ताववास्तमिति॥**

तौ हि गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ। अभिप्रायज्ञः प्रजापतिस्तावुवाच किमिच्छन्तौ किं प्रयोजनमभिप्रेत्येच्छन्ताववास्तमुषितवन्तौ युवामिति। इत्युक्तौ तौ होचतुः, य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टाः, अतस्तमात्मानं ज्ञातुमिच्छन्ताववास्तमिति। यद्यपि प्राक्प्रजापतेः समीपागमनादन्योन्यमीर्ष्यायुक्तावभूतां, तथाऽपि विद्याप्राप्तिप्रयोजनगौरवात्यक्तरागद्वेषमोहेर्ष्यादिदोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ। तेनेदं प्रख्यापितमात्मविद्यागौरवम्।

शंकर

* भास्कर. ब्रशंकरवत्।

(१) छाउ. ८।७।२; ब्रशंकर. १।३।३३; भास्कर. १।३।३३; रामानुज. १।३।२५.

* ब्रशंकर. छाउ. ३।१।१ (पृ. ७९२) इत्यत्र द्रष्टव्यम्। रंग, शंकरेण गतार्थम्।

§ रंग. शंकरेण गतार्थम्।

(१) छाउ. ८।७।३; रंग. विजानातीति+ (हि); रामानुज. १।३।२५; श्रीकंठ. ३।३।१.

अक्षिपुरुषः आत्मा ब्रह्म

तौ ह प्रजापतिरुवाच । य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति । एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥

(१) तावेवं तपस्विनौ शुद्धकल्मषौ योग्यावुपलक्ष्य प्रजापतिरुवाच ह—य एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्द्रष्टा, एष आत्माऽपहतपाप्मादिगुणो यमवोचं पुराऽहं, यद्विज्ञानात्सर्वलोककामावाप्तिरेतदमृतं भूमाख्यं, अत एवाभयं, अत एव ब्रह्म वृद्धतममिति । अथैतत्प्रजापतिनोक्तमक्षिणि पुरुषो दृश्यते इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः । गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ । अथ योऽयं हे भगवोऽप्सु परिख्यायते परि समन्ताज्ज्ञायते, यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते खड्गादौ च, कतम एष एषां भगवद्भिरुक्तः, किंवैक एव सर्वेष्विति । एवं पृष्टः प्रजापतिरुवाच—एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति । एतन्मनसि कृत्वैषु सर्वेष्वन्तेषु मध्येषु परिख्यायत इति होवाच ।

ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेर्विगतदोषस्याऽऽचार्यस्य सतः । सत्यमेवं, नानुज्ञातम् । कथम् । आत्मन्यध्यारोपितपाण्डित्यमहत्त्वबोद्धृत्वौ हीन्द्रविरोचनौ, तथैव च प्रथितौ लोके । तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणावित्युक्तौ स्यातां, ततस्तयोश्चित्ते दुःखं स्यात्, तज्जनिताच्च चित्तावसादात्पुनःप्रश्नश्रवणग्रहणावधारणं प्रत्युत्साहविघातः स्यात्, अतो रक्षणीयौ शिष्याविति मन्यते प्रजापतिः । गृहीतां तावत्, तदुदशरावदृष्टान्तेनापनेष्यामीति च । ननु न युक्तमेष उ एवेत्यनृतं वक्तुम् । न चानृतमुक्तम् । कथम् । आत्मनोक्तोऽक्षिपुरुषो मनसि संनिहिततरः शिष्यगृहीताच्छायात्मनः । सर्वेषां चाभ्यन्तरः 'सर्वान्तरः' इति श्रुतेः । तमेवावोचत्—एष उ एवेति । अतो नानृतमुक्तं प्रजापतिना ।

शंकर.

(२) अत्र 'य एषोऽक्षिणि पुरुषो दृश्यते' इति नेहाक्षिपुरुषः परमात्मा 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छाउ. ८।९।३) इत्युपक्रम्य स्वप्नाद्यवस्थानामभिधानात् । न चायं छायादिपुरुषः प्रजापतिनोपदिश्यते, आत्मजिज्ञासदोषसन्नयोस्तयोस्तदुपदेशायोगात्, आत्मत्वामृतत्वाभयत्वब्रह्मत्वाद्ययोगाच्च । अतोऽत्र प्रजापतिना प्रत्यगात्मैवोपदिश्यते । न चेहाक्षिणि जीवस्थितिरुपदिश्यतेऽपि त्वाक्षिप्रसादविकाराभ्यां जीवस्थितिगती निश्चीयेते । अतोऽक्ष्णो जीवस्थितिगतिसूचकत्वादक्षिणि दृश्यते इत्युक्तं, कर्मणः सामर्थ्यसूचकत्वाभिप्रायेणास्मिन्कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन्पुरुषो यथा गृहादन्यः, एवं शरीरे स्थितिगतिमानात्माऽपि शरीरादन्यः, इत्युक्तं भवति । अमृतमिति निरतिशयसुखरूपत्वम् । अभयमिति दुःखासंभिन्नत्वम् । ब्रह्मेत्यसंकुचितविज्ञानतया बृहत्त्वं चोक्तमिति व्यासार्यैरुक्तम् ।

अत्र व्यासार्यैरेतादृशाभिप्रायपरिकल्पनस्यातिक्लिष्टत्वात् 'योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायते' इत्येतावानपि प्रश्न एव । प्रश्नवाक्यमध्यगत इतिशब्दः प्रश्नान्ते निवेशितव्यः । इति होवाचेत्येतदुत्तरस्योदशरावब्राह्मणस्य शेषभूतम् । उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमितीति होवाचेत्युत्तरेणान्वयः । तत्र चैक इतिशब्दः समाप्तिद्योतकोऽन्यस्तु प्रकारवचनः । अथ वा कतम एष इतीत्यत्रेतिशब्दो वक्ष्यमाणवचनोऽन्यस्तूक्तवचनः । यद्वा प्रश्नवाक्ये प्रथम इतिशब्दः प्रकारवचनः, द्वितीयस्तु प्रश्नसमाप्तिद्योतकः । होवाचेति तूत्तरशेषभूतम् । प्रब्रूतमिति होवाचेत्यन्वय इत्येवं नेतिशब्दद्वयवैयर्थ्यमित्यभिप्रेत्य प्रजापतिहृदयानभिज्ञानेन छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः—योऽयं भगवोऽप्सु परिख्यायत इत्यादिना । सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते कतम एष इत्यर्थ इत्युक्तम् ।

(१) छाउ. ८।७।४; ब्रशांकर. १।३।१९, ३।४।८; भास्कर. १।३।१९; श्रीकंठ. १।३।१८; श्रीकर. १।३।१९, २१; वल्लभ. १।२।१४, १५.

चक्षुरादिप्रतिबिम्ब एवात्मेति स्वग्रहणदार्ढ्यार्थं पुनरपि पप्रच्छतुरिति भावः । अप्सु परिख्यायत आदर्शे परिख्यायत इत्येवंप्रकारेण जलादिष्वन्तेषु स्थानेषु यो दृश्यते स नेत्रे दृश्यमान एष भवदुक्त एव किमुतान्यः, कतम एष इत्यर्थः, इति व्यासार्याणामभिप्रायः ।

* रंग.

पुरुषे उदशरावदृष्टे परिच्छिन्ने आत्मत्वभ्रमः
इन्द्रविरोचनयोः, विरोचनस्य
देहात्मवादः असुरप्रसिद्धः

**[1]उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति । तौ होदशरावेऽवेक्षांचक्राते । तौ ह प्रजापतिरुवाच, किं पश्यथ इति । तौ होचतुः, सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥**

तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं हि आह—उदशरावे उदकपूर्णे शरावादावात्मानमवेक्ष्यानन्तरं यत्तत्राऽऽत्मानं पश्यन्तौ न विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथाम् । इत्युक्तौ तौ ह तथैवोदशरावेऽवेक्षांचक्राते अवेक्षणं चक्रतुः । तथा कृतवन्तौ तौ ह प्रजापतिरुवाच, किं पश्यथ इति । ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितं इदमावाभ्यां न विदितमिति, अनिवेदिते चाज्ञानहेतौ ह प्रजापतिरुवाच — किं पश्यथ इति । तत्र कोऽभिप्राय इति उच्यते—नैव तयोरिदमावयोरविदितमित्याशङ्काऽभूत्, छायात्मन्यात्मप्रत्ययो निश्चित एवाऽऽसीत् । येन वक्ष्यति 'तौ ह शान्तहृदयौ प्रवव्रजतुः' इति । न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते । तेन नोचतुरिदमावाभ्यामविदितमिति । विपरीतग्राहिणौ न शिष्यावनुपेक्षणीयाविति स्वयमेव पप्रच्छ किं पश्यथ इति । विपरीतनिश्चयापनयाय च वक्ष्यति, साध्वलंकृताविव्येवमादि । तौ होचतुः — सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति, यथैवाऽऽवां हे भगवो लोमनखादिमन्तौ स्वः, एवमेवेदं लोमनखादिसहितमावयोः प्रतिरूपमुदशरावे पश्याव इति ।

* शंकर.

**[1]तौ ह प्रजापतिरुवाच, साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति । तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते । तौ ह प्रजापतिरुवाच, किं पश्यथ इति ॥**

(१) तौ ह पुनः प्रजापतिरुवाच छायात्मनिश्चयापनयाय । साध्वलंकृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरीक्षेथामिति । इह च नाऽऽदिदेश यदज्ञातं तन्मे प्रब्रूतमिति । कथं पुनरनेन साध्वलंकारादि कृत्वोदशरावेऽवेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात् । साध्वलंकारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा शरीरसंबद्धानामेवं शरीरस्यापि छायाकरत्वं पूर्वं बभूवेति गम्यते । शरीरैकदेशानां च लोमनखादीनां नित्यत्वेनाभिप्रेतानामखण्डितानां छायाकरत्वं पूर्वमासीत् । छिन्नेषु च नैव लोमनखादिच्छाया दृश्यतेऽतो लोमनखादिवच्छरीरस्याप्यागमापायित्वं सिद्धमित्युदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्यानात्मत्वं सिद्धम् । उदशरावादौ छायाकरत्वाद्देहसंबद्धालंकारादिवत् । न केवलमेतावदेतेन यावत्किंचिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च कादाचित्कत्वान्नखलोमादिवदनात्मेति प्रत्येतव्यम् । एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलंकारादिदृष्टान्ते प्रजापतिनोक्ते, श्रुत्वा तथा कृतवतोरपि छायात्मविपरीतग्रहो नापजगाम यस्मात्, तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानाविन्द्रविरोचनावभूतामिति गम्यते । तौ पूर्ववदेव दृढनिश्चयौ पप्रच्छ—किं पश्यथ इति ।

शंकर.

(२) अत्रोदशरावावेक्षणालंकृतदेहप्रतिबिम्बनिरीक्षणयोर्नियुञ्जानस्य प्रजापतेरयमभिसंधिः — आगमापायशालिद्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूतकेशनखवस्त्रालंकारादिलक्षणदोषगुणयुक्ताव्यवस्थितदेहानुकारिदोषगुणवत्त्वात् देह-

---

' अथ योऽयं ' इत्यादि शंकरवच्च ।
(१) छान्द. ८।८।१.

* रंग. शंकरेण गतार्थम् ।
(१) छान्द. ८।८।२.

वत्तत्प्रतिबिम्बोऽप्ययमात्मा निरतिशयसुखमदुःखमसंभिन्न- स्वलक्षणामृतस्वाभयस्वरूप इति जानीतमिति ।

रंग.

[1]तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृताविति । एष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । तौ ह शान्तहृदयौ प्रवव्रजतुः ॥

तौ तथैव प्रतिपन्नौ, यथैवेदमिति पूर्ववत्, यथा साध्वलंकारादिविशिष्टावावां स्वः, एवमेवेमौ छायात्मानाविति पुनरपि विपरीतनिश्चयौ बभूवतुः । यस्याऽऽत्मनो लक्षणं 'य आत्माऽपहतपाप्मा' इत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोः 'य एषोऽक्षिणि पुरुषो दृश्यते' इति साक्षादात्मनि निर्दिष्टे, तद्विपरीतग्रहापनयायोदशरावसाध्वलंकारदृष्टान्तेऽप्यभिहिते, आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः । अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवाऽऽत्मानं मनसि निधाय, एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति प्रजापतिः पूर्ववत् । न तु तदभिप्रेतमात्मानम् । य आत्मेत्याद्यात्मलक्षणश्रवणेनाक्षिपुरुषश्रुत्या चोदशरावाद्युपपत्त्या च संस्कृतौ तावत् । मद्वचनं सर्वं पुनः पुनः स्मरतोः प्रतिबन्धक्षयाच्च स्वयमेवाऽऽत्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे च तयोश्चित्तदुःखोत्पत्तिं परिजिहीर्षन्कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः । तौ हेन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी इत्यर्थः । न तु शम एव, शमश्चेत्तयोर्जातो विपरीतग्रहो विगतोऽभविष्यत् । प्रवव्रजतुर्गतवन्तौ । * शंकर.

[2]तौ हान्वीक्ष्य प्रजापतिरुवाच । अनुपलभ्याऽऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति । स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम । तेभ्यो हैतामुपनिषदं प्रोवाच । आत्मैवेह महय्य आत्मा परिचर्यः । आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥

(१) एवं तयोर्गतयोरिन्द्रविरोचनयोः राज्ञोर्नौगामकयोर्यथोक्तविस्तरं स्वाभिप्रायमकृत्वा, अप्रत्यक्षं, प्रत्यक्षवचनेन च चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छन्तावन्वीक्ष्य, 'य आत्माऽपहतपाप्मा' इत्यादिवचनवदेतदप्यनयोः श्रवणगोचरत्वमेष्यतीति मत्वोवाच प्रजापतिः— अनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षं चाकृत्वा विपरीतनिश्चयौ च भूत्वेन्द्रविरोचनावेतौ व्रजतो गच्छेयाताम् । अतो यतरे देवा वाऽसुरा वा किं विशेषितेन, एतदुपनिषदः आभ्यां या गृहीताऽऽत्मविद्या सेयमुपनिषत् येषां देवानामसुराणां वा, ते एतदुपनिषदः एवंविज्ञानाः एतन्निश्चयाः भविष्यन्तीत्यर्थः । ते किं, पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहिर्भूता विनष्टा भविष्यन्तीत्यर्थः । स्वगृहं गच्छतः सुरासुरराजयोर्योऽसुरराजः, स ह शान्तहृदय एव सन्विरोचनोऽसुराञ्जगाम । गत्वा च तेभ्योऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रोवाचोक्तवान् । देहमात्रमेवाऽऽत्मा पित्रोक्त इति । तस्मादात्मैव देहः इह लोके महय्यः पूजनीयः, तथा परिचर्यः परिचरणीयः, तथाऽऽत्मानमेवेह लोके देहं महयन्परिचरंश्चोभौ लोकाववाप्नोतीमं चामुं च । इहलोकपरलोकयोरेव सर्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः ।

शंकर.

(२) विरोचनस्तु— प्राजापत्यस्य द्विविधदेहच्छायादर्शननियोगस्य, देहानुकारित्वाच्छायायाः, देह एवाऽऽत्मेति सूचने तात्पर्यं, अलंकृतदेहच्छायां निर्दिश्य, एष आत्मेत्युपदेशस्य नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्महार्घमिति वचनस्य छायानिमित्ते वाससीवाऽलंकृतदेहे तात्पर्यमिति मन्वानो देह एवात्माऽलंकारादिभिः परिचरणीय इति निश्चित्य राज्यं प्राप्यासुरेभ्यस्तथैवोपादिक्षदित्यर्थः । * रंग.

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेति । असुराणाᳬ ह्येषोपनिषत् । प्रेतस्य

* रंग. शंकरवत् ।

(१) छाउ. ८।८।३.

(२) छाउ. ८।८।४.

* शंकरवत् ।

(१) छाउ. ८।८।५.

**शरीरं भिक्षया वसनेनालंकारेणेति सꣳस्कुर्वन्ति । एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥**

तस्मात्तत्संप्रदायोऽद्याप्यनुवर्तते इति, इह लोके अददानं दानमकुर्वाणमविभागशीलमश्रद्दधानं सत्कार्येषु श्रद्धारहितं यथाशक्त्ययजमानमयजनस्वभावमाहुः आसुरः खल्वयं यत एवंस्वभावो बतेति खिद्यमाना आहुः शिष्टाः । असुराणां हि यस्मादश्रद्दधानतादिलक्षणैषोपनिषत् । तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया वसनेन वस्त्रादिनाऽऽच्छादनादिप्रकारेणालंकारेण ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्ति, एतेन कुणपसंस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ।

* शंकर.

देहात्मनि आत्मत्वभ्रमनिवृत्तिः इन्द्रस्य

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श । यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः । अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ॥**

अथ ह किलेन्द्रोऽप्राप्यैव देवान्दैव्या अक्रौर्यादिसंपदा युक्तत्वात् गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान् । उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तस्तदेकदेशो मघवतः प्रत्यभाद्बुद्धौ, येन च्छायात्मग्रहणे दोषं ददर्श । कथम् । यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते छायात्माऽपि साध्वलंकृतो भवति, सुवसने च सुवसनः, परिष्कृते परिष्कृतः, यथा नखलोमादिदेहावयवापगमे छायात्माऽपि परिष्कृतो भवति नखलोमादिरहितो भवति । एवमेवायं छायात्माऽप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धे चक्षुषाऽपगमेऽन्धो भवति । स्रामे स्रामः । स्रामः किलैकनेत्रस्तस्यान्धत्वेन गतत्वात् । चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः । परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा । स्रामे परिवृक्णे वा देहे छायात्माऽपि तथा भवति । तथाऽस्य देहस्य नाशमन्वेष नश्यति । अतो नाहमत्रास्मिश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामि इति ।

* शंकर.

**स समित्पाणिः पुनरेयाय । तꣳ ह प्रजापतिरुवाच । मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन, किमिच्छन्पुनरागम इति । स होवाच । यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः । अस्यैव शरीरस्य नाशमन्वेष नश्यति । नाहमत्र भोग्यं पश्यामीति ॥**

एवं दोषं देहच्छायात्मदर्शनेऽध्यवस्य स समित्पाणिर्ब्रह्मचर्यं वस्तुं पुनरेयाय । तं ह प्रजापतिरुवाच—मघवन्यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्धं, किमिच्छन्पुनरागम इति । विजानन्नपि पुनः पप्रच्छेन्द्राभिप्रायाभिव्यक्तये—यद्वेत्थ तेन मोपसीदेति यद्वत् । तथा च स्वाभिप्रायं प्रकटमकरोत् —यथैव खल्वयमित्यादि । एवमेवेति चान्वमोदत प्रजापतिः ।

ननु तुल्येऽक्षिपुरुषश्रवणे, देहच्छायामिन्द्रोऽग्रहीदात्मेति, देहमेव तु विरोचनः, तत्किंनिमित्तम् । तत्र मन्यते । यथेन्द्रस्योदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैव आचार्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषदर्शनं चाभूत्, न तथा विरोचनस्य । किं तर्हि । देहे एव आत्मदर्शनम् । नापि तत्र दोषदर्शनं बभूव । तद्वदेव विद्याग्रहणसामर्थ्यप्रतिबन्धदोषाल्पत्वबहुत्वापेक्षमिन्द्रविरोचनयोः छायात्मदेहयोर्ग्रहणम् । इन्द्रोऽल्पदोषत्वाद्दृश्यत इति श्रुत्यर्थमेव श्रद्दधानतया जग्राह । इतरश्छायानिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तोऽयमिति, दोषभूयस्त्वात् । यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्महार्हमिति छायानिमित्तं वास एवोच्यते न च्छाया तद्वदिति विरोचनाभिप्रायः । स्वचित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे

* रंग शंकरवत् ।

(१) छाउ. ८।९।१; ब्रशंकर. १।२।१७.

* रंग. शंकरेण गतार्थम् ।

(१) छाउ. ८।९।२.

ख्यापितं, 'दाम्यत दत्त दयध्वम्' इति दकारत्रयश्रवणाच्छ्रुत्यन्तरे । निमित्तान्यपि तदनुगुणान्येव सहकारीणि भवन्ति । * शंकर.

[1] एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिꣳशतं वर्षाणीति । स हापराणि द्वात्रिꣳशतं वर्षाण्युवास । तस्मै होवाच ॥

एवमेवैष मघवन्सन्यक्त्वयाऽवगतं, न च्छाया आत्मा, इत्युवाच प्रजापतिः । यो मयोक्त आत्मा प्रकृत एतमेवाऽऽत्मानं तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्यास्यामि । यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयं प्राप्तमपि नाग्रहीः, अतः केनचिद्दोषेण प्रतिबद्धग्रहणसामर्थ्यस्त्वम् । अतस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच । ‡ शंकर.

[2] य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवानेतद्भयं ददर्श । तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामः । नैवैषोऽस्य दोषेण दुष्यति ॥

य आत्माऽपहतपाप्मादिलक्षणो य एषोऽक्षिणीत्यादिना व्याख्यात एष सः । कोऽसौ । यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान्स्वप्नभोगाननुभवतीत्यर्थः । एष आत्मेति होवाचेत्यादि समानम् । स हैवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज । स हाप्राप्यैव देवान्पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श । कथम् । तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा येऽनन्धः स भवति । यदि स्राममिदं शरीरमस्रामश्च स भवति । नैवास्य स्वप्नात्मनोऽस्य देहस्य दोषेण दुष्यति । * शंकर.

स्वप्नात्मनि अनवद्यत्वनिवृत्तिः इन्द्रस्य

[1] न वधेनास्य हन्यते । नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनम् । विच्छादयन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति ॥

[2] स समित्पाणिः पुनरेयाय । तꣳ ह प्रजापतिरुवाच । मघवन् यच्छान्तहृदयः प्राव्राजीः, किमिच्छन्पुनरागम इति । स होवाच । तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामः । नैवैषोऽस्य दोषेण दुष्यति ॥

[3] न वधेनास्य हन्यते । नास्य स्राम्येण स्रामः । घ्नन्ति त्वेवैनम् । विच्छादयन्तीव । अप्रियवेत्तेव भवति । अपि रोदितीव । नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्निति होवाच । एतं त्वेव ते भूयोऽनुव्याख्यास्यामि । वसापराणि द्वात्रिꣳशतं वर्षाणीति । स हापराणि द्वात्रिꣳशतं वर्षाण्युवास । तस्मै होवाच ॥

(१) नाप्यस्य वधेन स हन्यते छायात्मवत्, न चास्य स्राम्येण स्रामः स्वप्नात्मा भवति । यद्च्छायादावागममात्रेणोपन्यस्तं 'नास्य जरयैतज्जीर्यति' इत्यादि, तदिह न्यायेनोपपादयितुमुपन्यस्तम् । न तावदयं छायात्मवद्देहदोषयुक्तः, किन्तु घ्नन्ति त्वेवैनम् । एवशब्द इवार्थे । घ्नन्तीवैनं केचनेति द्रष्टव्यम् । न तु घ्नन्त्येवेति । उत्तरेषु सर्वेष्विवशब्ददर्शनात् । 'नास्य वधेन हन्यते' इति विशेषणात् घ्नन्ति त्वेवेति चेन्नैवम् । प्रजापतिं प्रमाणीकुर्वतोऽनृतवादित्वापादनानुपपत्तेः । 'एतदमृतं' इत्येतत्प्रजापतिवचनं कथं मृषा कुर्यादिन्द्रस्तं प्रमाणीकुर्वन् । ननु च्छायापुरुषे प्रजा-

* रंग. शंकरेण गतार्थम् ।

‡ रंग. शंकरवत् ।

(१) छाउ. ८।९।३; ब्रशंकर. १।३।१९, ४०, ३।४।८, ४।४।२; भास्कर. १।३।१९, ४०, ४।४।२; रामानुज. ४।४।२; निंबार्क. ४।४।२; श्रीकंठ. ४।४।२, ३; श्रीकर. १।३।४०; बलदेव. ४।४।२.

(२) छाउ. ८।१०।१; ब्रशंकर. १।३।१९; भास्कर. १।३।१९, ३।२।३; श्रीकंठ. १।३।१८; श्रीकर. १।३।१९.

* रंग. शंकरवत् ।

(१) छाउ. ८।१०।२.

(२) छाउ. ८।१०।३.

(३) छाउ. ८।१०।४; रामानुज. १।३।२०; बलदेव. ४।४।२.

पतिनोक्तेऽस्य शरीरस्य नाशमन्वेष नश्यतीति दोषमभ्यदघात्तथेहापि स्यात्। नैवम्। कस्मात्। 'य एषोऽक्षिणि पुरुषो दृश्यते' इति न च्छायात्मा प्रजापतिनोक्त इति मन्यते मघवान्। कथम्। अपहतपाप्मादिलक्षणे पृष्टे यदि च्छायात्मा प्रजापतिनोक्तः इति मन्यते, तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत्। जगाम च। तस्मान्न च्छायात्मा प्रजापतिनोक्त इति मन्यते। तथा च व्याख्यातं — द्रष्टाऽक्षिणि दृश्यत इति। तथा विच्छादयन्तीव विद्रावयन्तीव। तथा च पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति। अपि च स्वयमपि रोदितीव। नन्वप्रियं वेत्त्येव, कथं वेत्तेवेति। उच्यते। नामृताभयत्ववचनानुपपत्तेः, ध्यायतीवेति च श्रुत्यन्तरात्। ननु प्रत्यक्षविरोध इति चेत्। न। शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसंभवात्। तिष्ठतु तावदप्रियवेत्तेव न वेति। नाहमत्र भोग्यं पश्यामि। स्वप्नात्मज्ञानेऽपीष्टं फलं नोपलभे इत्यभिप्रायः। एवमेवैष तवाभिप्रायेणेति वाक्यशेषः। आत्मनोऽमृताभयगुणवत्त्वस्याभिप्रेतत्वात्, द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति। तस्मात्पूर्ववदस्याद्यापि प्रतिबन्धकारणमस्तीति मन्वानस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमित्यादिदेश प्रजापतिः। तथोषितवते क्षपितकल्मषायाऽऽह— ।

* शंकर.

सुषुप्तात्मनि आत्मत्वभ्रमनिवृत्तिः इन्द्रस्य

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच। एतदमृतमभयमेतद्ब्रह्मेति। स ह शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवानेतद्भयं ददर्श। नाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति। नो एवेमानि भूतानि। विनाशमेवापीतो भवति। नाहमत्र भोग्यं पश्यामीति॥**

**स समित्पाणिः पुनरेयाय। तꣳ ह प्रजापतिरुवाच। मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति। स होवाच। नाह खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति। नो एवेमानि भूतानि। विनाशमेवापीतो भवति। नाहमत्र भोग्यं पश्यामीति॥**

(१) पूर्ववदेतं त्वेव ते इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यम्। अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एष सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव। मघवांस्तत्रापि दोषं ददर्श। कथम्। नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं संप्रति सम्यगिदानीं चाऽऽत्मानं जानाति नैवं जानाति। कथम्। अयमहमस्मीति। नो एवेमानि भूतानि चेति। यथा जाग्रति स्वप्ने वा। अतो विनाशमेव विनाशमिवेति पूर्ववद्द्रष्टव्यम्। अपीतोऽपिगतो भवति, विनष्ट इव भवतीत्यभिप्रायः। ज्ञाने हि सति ज्ञातुः सद्भावोऽवगम्यते, नासति ज्ञाने। न च सुषुप्तस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः। न तु विनाशमेवाऽऽत्मनो मन्यतेऽमृताभयवचनस्य प्रामाण्यमिच्छन्। * शंकर.

( २ ) अहेत्याश्चर्ये। ‡ रंग.

**एवमेवैष मघवन्निति होवाच। एतं त्वेव ते भूयोऽनुव्याख्यास्यामि। नो एवान्यत्रैतस्मात्। वसापराणि पञ्च वर्षाणीति। स हापराणि पञ्च वर्षाण्युवास। तान्येकशतꣳ संपेदुः। एतत्तद्यदाहुः।**

---

* रंग. शंकरेण गतार्थम्।

(१) छाउ. ८।११।१; अशंकर. १।३।१९; भास्कर. १।३।१९; रामानुज. १।३।१९, ३।२।९, ४।४।१६; निंबार्क. ४।४।१६ खल्वयमेवꣳ ( खल्वयꣳ ); श्रीकंठ. १।३।१८, ४।४।१६ स्वप्नं ( स्वं ) नाह ( नाहं ) जानात्यय ( जानातीत्यय ); श्रीकर. १।३।१९, ४।४।१६ नाह ( नाहं ) ; विज्ञान. ४।४।३ विजानात्येष ( विजानातीत्येष ).

* 'तद्यत्रैतत्सुप्तः' इत्यादि वाक्यं छाउ. ८।६।३ ( पृ. ९६७ ) इत्यत्र व्याख्यातम्।

‡ शेषं शंकरेण गतार्थम्।

(१) छाउ. ८।११।२; अशंकर. १।३।१९; श्रीकर. ३।२।९.

(२) छाउ. ८।११।३; अशंकर. १।३।२६; भास्कर. १।३।२६; श्रीकर. १।३।२६; बलदेव. १।३।२६, ४।४।२.

**एकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्य-मुवास । तस्मै होवाच ।**

( १ ) पूर्ववदेवमेवेत्युक्त्वा आह — यो मयोक्तस्त्रिभिः पर्यायैस्तमेवैतं, नो एवान्यत्रैतस्मादात्मनोऽन्यं कंचन, किं तर्हि, एतमेव व्याख्यास्यामि । स्वल्पस्तु दोषस्तवावशिष्टस्तत्क्षपणाय वसापराण्यन्यानि पञ्च वर्षाणीत्युक्तः, स तथा चकार । तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसंबन्धरहितमात्मनः स्वरूपमपहतपाप्मत्वादिलक्षणं मघवते तस्मै होवाच । तान्येकशतं वर्षाणि संपेदुः संपन्नानि बभूवुः । यदाहुर्लोके शिष्टाः, एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवासेति । तदेतद्द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते । एवं किलैतदिन्द्रत्वादपि गुरुतरमिन्द्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानम् । अतो नातः परं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ।

शंकर.

( २ ) अनया चाऽऽख्यायिकया बहुकालब्रह्मचर्यनिर्मलीकृतान्तःकरणतया संपन्नोपदेशयोग्यत्वायोपदेष्टव्यमित्यर्थः सूच्यते । * रंग.

अमृतोऽशरीर आत्मा प्रियाप्रियासंस्पृष्टः

**मघवन् मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना । तदस्याऽमृतस्याऽशरीरस्यात्मनोऽधिष्ठानम् । आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥**

* शंकरवत् ।

(१) छाउ. ८।१२।१; **ब्रशंकर.** १।१।४ ( पृ. ५७, ५८, ८२ ), १।३।४०, ४।४।२ न वै (न ह वै); **भास्कर.** १।३।२०, ४०, ४।१।१ ब्रशंकरवत्; **रंग.** ब्रशंकरवत्; **रामानुज.** १।१।४ ( पृ. १५२ ), १।१।१३, २१, १।३।१८, २।१।१४, ३।३।२७, ४।४।१० ब्रशंकरवत्; **निंबार्क.** ३।३।२७, ४।४।१०; **श्रीकर.** १।१।१३ ( पृ. ६१ ), १।३।४०, २।१।१३, २२, ३।२।११, १४, ३।३।२७, ४।४।४, ७, ८; **वल्लभ.** ४।४।६; **विज्ञान.** ३।१।२ ( पृ. ६६ ), ३।३।१५, ५०, ४।१।१४ न प्रियाप्रिये ( प्रियाप्रिये न ); **बलदेव.** ४।४।२, १०, ११.

( १ ) मघवन्मर्त्यं वै मरणधर्मीदं शरीरम् । यन्मन्यसेऽक्ष्याधारादिलक्षणः संप्रसादलक्षण आत्मा मयोक्तो विनाशमेवार्हतीति मन्यसे । शृणु तत्र कारणम् । यदिदं शरीरं वै यत्पश्यसि तदेतन्मर्त्यं विनाशि । तच्चाऽऽत्तं मृत्युना ग्रस्तं सततमेव । कदाचिदेव म्रियते इति मर्त्यमित्युक्ते न तथा सन्त्रासो भवति, यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते, इति वैराग्यार्थं विशेषः इत्युच्यते—आत्तं मृत्युनेति । कथं नाम, देहाभिमानतो विरक्तः सन्निवर्तते इति । शरीरमित्यत्र सदेहेन्द्रियमनोभिरुच्यते । तच्छरीरमस्य संप्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत् । अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्तिमत्त्वे मा भूतामिति । आत्मनो भोगाधिष्ठानम् । आत्मनो वा सतः ईक्षितुस्तेजोबन्नादिक्रमेणोत्पन्नमधिष्ठानम् । जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वाऽधिष्ठानम् ।

यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं, तदधिष्ठितस्तद्वान्सशरीरो भवति । अशरीरस्वभावस्याऽऽत्मनस्तदेवाहं शरीरं शरीरमेव चाहमित्यविवेकादात्मभावः सशरीरत्वं, अत एव सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्याम् । प्रसिद्धमेतत् । तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोर्बाह्यविषयसंयोगवियोगनिमित्तयोर्बाह्यविषयसंयोगवियोगौ ममेति मन्यमानस्यापहतिर्विनाशः उच्छेदः संततिरूपयोर्नास्तीति । तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निवर्तिताविवेकज्ञानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः । स्पृशिः प्रत्येकं संबध्यते इति प्रियं न स्पृशति, अप्रियं न स्पृशतीति वाक्यद्वयं भवति । न म्लेच्छाशुच्यधार्मिकैः सह संभाषेतेति यद्वत् । धर्माधर्मकार्ये हि ते, अशरीरता तु स्वरूपमिति तत्र धर्माधर्मयोरसंभवात्तत्कार्याभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः ।

शंकर.

( २ ) हे मघवन् इदं शरीरमेव हि मरणधर्मि, न केवलं मरणधर्मित्वमात्रं, अपि तु मृत्युनाऽऽत्तं, तद्ग्रस्तं च सततविनाशशीलमिति यावत् । इदं च शरीरे हेयत्वानुसंधानार्थमुक्तम् ।

एवंभूतं तदिदं शरीरं कर्मकृतशरीरराहित्यलक्षणामृतत्वस्वरूपस्याऽऽत्मनो भोगाधिष्ठानं कर्मवश्येन जीवेन भोगार्थं परिगृहीतमित्यर्थः। ततश्चाशरीरत्वमेव स्वरूपं, सैवामृतत्वलक्षणा मुक्तिः, सशरीरत्वमेव तदभाव इत्युक्तं भवति। ननु पुरुषार्थस्य हि मुक्तिरूपत्वं वक्तव्यं, न ह्यशरीरत्वं पुरुषार्थः। अपि तु दुःखाभावः। ततश्च तस्यैवामृतत्वरूपत्वमुचितं, न त्वशरीरत्वस्येत्यत्राऽऽह—न ह वै इति। कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखयोगस्यावश्यंभावित्वात्कर्मारब्धदेहसंबन्धाभावस्यैव पुरुषार्थतया मुक्तिरूपत्वमुपपद्यते इति भावः। व्यतिरेकं दर्शयति — अशरीरं वावेति। वावशब्दः प्रसिद्धाववधारणे वा। ततश्चावश्यान्नापराहित्य(?)लक्षणस्वरूपमेव मुक्तिरित्यर्थः। शिष्टं स्पष्टम्।

रंग.

( ३ ) पुनरपि सांख्यः प्रत्यवतिष्ठते। यदुक्तं स्थूलसूक्ष्मचिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणरूपत्वाज्जीवब्रह्मणोः स्वभावविभाग उपपद्यत इति। स तु विभागो न संभवति। ब्रह्मणः सशरीरत्वे तस्य भोक्तृत्वापत्तेः। सशरीरत्वे जीवस्येवेश्वरस्यापि सशरीरत्वप्रयुक्तसुखदुःखयोर्भोक्तृत्वस्यावर्जनीयत्वात्। अतः सशरीरब्रह्मकारणवादे जीवेश्वरस्वभावविभागाभावात्केवलब्रह्मकारणवादेऽपि मृत्सुवर्णादिवज्जगद्गतापुरुषार्थादिसर्वविशेषाश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव ज्यायानिति चेत्। अत्रोत्तरं स्याल्लोकवदिति। स्यादेव विभागो जीवेश्वरस्वभावयोः। न हि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तं सुखदुःखयोर्भोक्तृत्वं सशरीरत्वकृतम्। अपि तु पुण्यपापरूपकर्मकृतम्। 'न ह वै सशरीरस्य' इत्यपि कर्मारब्धदेहविषयम्। 'स एकधा भवति त्रिधा भवति' ( छाउ. ७।२६।२ ) 'स यदि पितृलोककामो भवति' ( छाउ. ८।२।१ ) 'स तत्र पर्येति जक्षन्क्रीडन्रममाणः' ( छाउ. ८।१२।३ ) इति कर्मसंबन्धविनिर्मुक्तस्याविर्भूतस्वरूपस्य सशरीरस्यैवापुरुषार्थगन्धाभावात्। अपहतपाप्मनस्तु परमात्मनः स्थूलसूक्ष्मरूपकृत्स्नजगच्छरीरत्वेऽपि कर्मसंबन्धगन्धो नास्तीति नतरामपुरुषार्थगन्धप्रसङ्गः। रामानुज. २।१।१४

( ४ ) ब्रह्मांशभूतजीवतत्त्वप्रतिपादकशब्दादप्यंशिन आनन्दादिकं नास्ति, किं त्वाध्यानायैवेत्यवगम्यते, अशांशिनोरेकरूपत्वात्। जीवतत्त्वप्रतिपादिकाश्च श्रुतिस्मृतयो जीवानामानन्दस्वरूपत्वं प्रतिषेधन्ति 'अशरीरं वाव सन्त प्रियाप्रिये न स्पृशतः' 'मनसः परिणामोऽयं सुखदुःखोपलक्षणः' इत्याद्या इत्यर्थः।

विज्ञान. ३।३।१५

उत्तमपुरुषः परमज्योतिःसंपत्त्या स्वरूपेण निष्पन्नः आत्मा

**अशरीरो वायुः। अभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि। तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते॥**

( १ ) तत्राशरीरस्य संप्रसादस्याविद्यया शरीरेणाविशेषतां सशरीरतामेव संप्राप्तस्य शरीरात्समुत्थाय स्वेन रूपेण यथाऽभिनिष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते — अशरीरो वायुरविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः। किं चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि। तत्त्रैवं सति वर्षादिप्रयोजनावसाने यथा, अमुष्मादिति भूमिष्ठा श्रुतिर्द्युलोकसंबन्धिनमाकाशदेशं व्यपदिशति, एतानि यथोक्तान्याकाशसमानरूपतामापन्नानि स्वेन वाय्वादिरूपेणागृह्यमाणान्याकाशाख्यतां गतानि, यथा संप्रसादोऽविद्यावस्थायां शरीरात्मभावमेवापन्नः, तानि च तथाभूतान्यमुष्माद्द्युलोकसंबन्धिन आकाशदेशात्समुत्तिष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये। कथम्। शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसंपद्य सावित्रमभितापं प्राप्येत्यर्थः। आदित्याभितापेन पृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिवायुरूपेण स्तिमितभावं हित्वाऽभ्रमपि भूमिपर्वतहस्त्यादिरूपेण, विद्युदपि स्वेन ज्योतिर्लतादिचपलरूपेण, स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते।

शंकर.

( २ ) 'अभ्रं भूत्वा मेघो भवति' ( छाउ. ५।१०।६ ) इत्यादिवदभ्रस्तनयित्न्वोरवस्थाभेदेन भेदो द्रष्टव्यः। अशरीराणां च प्रियाप्रियानन्वयो दृष्ट इति

(१) छाउ. ८।१२।२; बलदेव. ४।४।१०.

भावः। अत्र व्यासार्यैस्तु वाय्वादीनामाकाशात्समुत्थानं नाम स्वकार्यकरणायोर्ध्वदेशेऽभिवृद्धिः। परशब्दो वाय्वादीनां कारणावस्थावाची। ज्योतिःशब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः। वाय्वादीनि च कारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति। वायुर्ह्यावहप्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते। विद्युत्तु विद्युत्त्वं च हित्वा तेजस्त्वेन। अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण। एवं जीवोऽपि मार्गविशेषेण देशविशेषविशिष्टं परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेणाऽऽविर्भवतीत्येवमर्थे सत्येव दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवतीति वर्णितम्। * रंग.

**एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। स उत्तमपुरुषः। स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरम्। स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः॥**

* शेषं शंकरवत्। 'अभिनिष्पद्यते' इत्यन्तं द्वितीयं वाक्यं, 'स उत्तमः' इत्यादि तृतीयं वाक्यमिति विशेषः।

(१) छाउ. ८।१२।३; शंकर. उत्तमपुरुषः (उत्तमपूरुषः); **ब्रशंकर.** १।३।१९, ४०, ३।४।८, ४।४।२, ४, ५ उत्तमपुरुषः (उत्तमः पुरुषः); **भास्कर.** १।३।१९, २०, ४०, ४।४।१, ४, ५ जक्षत्क्रीडन्नममाणः (पक्षिक्रीडं नीयमानः (?)); **रंग. ब्रशंकरवत्; रामानुज.** १।१।१ (पृ. ४२, ७९), १।३।१८, २।१।१४, २।३।१९, ३१, ३।२।९, ३।३।३०, ४०, ४।३।१४, ४।४।१, २, ५, ८, १० ब्रशंकरवत्; **निंबार्क.** ३।३।२७, ३०; **ब्रमध्व.** २।३।३४ ज्ञातिभिर्वा (ज्ञातिभिर्वाऽज्ञातिभिर्वा); **श्रीकंठ.** १।३।४१, ३।३।४०, ४।४।५ उत्तमपुरुषः (उत्तमः पुरुषः) जक्षत् (जक्षन्) (यानैर्वा०); **श्रीकर.** १।३।४०, ३।२।९, २४, २६, २।३।१७, २९, ३।३।१८, ३०, ४०, ४४, ४।३।१३, ४।४।१, २, ३, ४, ५, ७, ८, ९ उत्तमपुरुषः (उत्तमः पुरुषः) जक्षत् (जक्षन्); **विज्ञान.** ४।४।१, ५, ८ जक्षत् (जक्षन्); **बलदेव.** २।३।३२, ४।३।१३, १५, ४।४।१, ३, ५, ८, १०.

(१) यथाऽयं दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यया मनुष्यावस्थायां शरीरमात्मत्वेनापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्य इत्येवंप्रकारं प्रजापतिनेव मघवान्यथोक्तेन क्रमेण, नासि त्वं देहेन्द्रियादिधर्मा, तत्त्वमसीति प्रतिबोधितः सन् स एष संप्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः समुत्थाय देहादिविलक्षणमात्मनो रूपमवगम्य देहात्मभावना हित्वेत्येतत्। स्वेन रूपेण सदात्मनैवाभिनिष्पद्यते इति व्याख्यातं पुरस्तात्। स येन स्वेन रूपेण संप्रसादोऽभिनिष्पद्यते, प्राक्प्रतिबोधात्तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः, पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते, एवं च स उत्तमपुरुषः उत्तमश्चासौ पुरुषश्चेत्युत्तमपुरुषः। स एवोत्तमपूरुषः। अक्षिस्वप्नपुरुषौ व्यक्तावव्यक्तश्च सुषुप्तः सनस्तः संप्रसन्नोऽशरीरश्च स्वेन रूपेणेति। एषामेष स्वेन रूपेणावस्थितः क्षराक्षरौ व्याकृताव्याकृतावपेक्ष्योत्तमपुरुषः। कृतनिर्वचनो ह्ययं गीतासु। स संप्रसादः स्वेन रूपेण तत्र स्वात्मनि स्वस्थतया सर्वात्मभूतः पर्येति, क्वचिदिन्द्राद्यात्मना जक्षद्भक्षयन्वा भक्ष्यानुच्चावचानीप्सितान्, क्वचिन्मनोमात्रैः संकल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन्स्त्र्यादिभिः रममाणश्च मनसैव। नोपजनं, स्त्रीपुंसयोरन्योन्योपगमेन जायते इत्युपजनमात्मभावेन वाऽऽत्मसानीप्येन जायते इत्युपजनमिदं शरीरं, तन्न स्मरन्। तत्स्मरणे हि दुःखमेव स्यात्, दुःखात्मकत्वात्तस्य।

अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः सन्कथमेष पुरुषोऽक्षिणि दृश्यते इत्युक्तः प्रजापतिना। तत्र यथाऽसावक्षिणि साक्षाद्दृश्यते तद्वक्तव्यमितीदमारभ्यते। तत्र को हेतुरक्षिणि दर्शने इत्याह—स दृष्टान्तो यथा प्रयोग्यः, प्रयोग्यपरो वा 'स'शब्दः। प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा, यथा लोके आचरत्यनेनेत्याचरणो रथः अनो वा, तस्मिन्नाचरणे युक्तस्तदाकर्षणाय, एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिरिन्द्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः। 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति

ईश्वरेण राज्ञेव सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृतः । तस्यैव तु मात्रा एकदेशश्चक्षुरिन्द्रियं रूपोपलब्धिद्वारभूतम् । * शंकर.

(२) स उपसंपदनीय उत्तमः पुरुष इत्यर्थः । 'उत्तमः पुरुषस्त्वन्यः' (भ. गी. १५।१७) इति भगवत एवोत्तमपुरुषत्वेनोपसंपदनकर्तर्युत्तमपुरुषत्वस्य बाधितत्वात् 'स तत्र पर्येति' इत्युत्तरवाक्यस्वारस्यभङ्गप्रसङ्गाच्च स उपसंपत्ता तत्र परमात्मनि पर्येति तं परितोऽनुभवति । यद्वाऽनुसंचरतीत्यर्थः । 'कामरूप्यनुसंचरन्यत्र यत्र धाता गच्छति' इति श्रुत्यन्तरात् । यथेष्टं भोगानवाप्नोतीत्यर्थः । स्त्रीपुंसयोरन्योन्योपगमेन जातमित्युपजनत्वं शरीरस्य, तेन चापुरुषार्थत्वमुच्यते । अथवा उपजनं जनानां बन्धुजनानां समीपे शयितं कुणपमित्यर्थः । यद्यपि मुक्तः सर्वज्ञत्वात् त्यक्तमपि शरीरमनुभवत्येव, तथाऽप्यब्रह्मात्मकतया दुःखरूपत्वेनानुभूतं शरीरं न मुक्तिदशायां तथाऽनुभवतीत्यर्थः । आत्मनोऽशरीरस्वभावत्वे प्राक्शरीरसंबन्धः किंनिबन्धन इत्यत्राऽऽह— स यथा प्रयोग्यः इति यथा आचरणे शकटे प्रयोग्यो युग्योऽश्वो बलीवर्दो वा पाशेन युक्तो भवत्येवमेवायं प्राणः प्राणसहचारी प्रत्यगात्मा संसारदशायां कर्मपाशवशेन युक्तो भवति । अनेन युग्यशकटदृष्टान्तेन देहात्मनोर्व्यतिरेको दृढीकृतो भवति ।

रंग.

( ३ ) 'संपद्याविर्भावः स्वेन शब्दात्' — अत्राविर्भावशब्देनौपाधिकधर्मनिवृत्तिरेव मुक्तिरिति सूचितम् । स्मर्यते च 'मुक्तिर्हित्वाऽन्यथाभावं स्वरूपेण व्यवस्थितिः' । वस्तुतस्त्वत्राविर्भावो ज्ञानमेव । तथा चानेन सूत्रेण ब्रह्मलोकगतस्य मोक्षहेतुर्ज्ञानपरिपाक उक्तः । द्वितीयसूत्रेण च मोक्षो वक्ष्यत इति विभागः ।

विज्ञान. ४।४।१

* छाउ. ८।३।४ ( पृ. ९६१ ) द्रष्टव्यम् । रामानुज. ७।२५।२ ( पृ. ९४८ ), ४।१५।५ ( पृ. ८४३ ) इत्यत्र द्रष्टव्यम् । 'अदभ्यस्तात्' ( पा. सू. ७।१।४ ) इति सूत्रे तत्त्वबोधिन्यां 'जक्षन्' इत्यत्र नुमश्छान्दसत्वं स्वशब्देनोक्तम् ।

आत्मैव चक्षुर्घ्राणश्रोत्रमनःस्वरूपः विषयज्ञानकाले सर्वदेवोपास्यः

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वाक् । अथ यो वेदेदꣳ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥

( १ ) अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रमनुविषण्णमनुषक्तमनुगतं, तत्र स प्रकृतोऽशरीर आत्मा चाक्षुषश्चक्षुषि भव इति चाक्षुषः । तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं, यस्य तद्देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थं, सोऽत्र चक्षुषि दर्शनेन लिङ्गेन दृश्यते परोऽशरीरोऽसंहतः । 'अक्षिणि दृश्यते' इति प्रजापतिनोक्तं सर्वेन्द्रियद्वारोपलक्षणार्थम् । सर्वविषयोपलब्धा हि स एवेति । स्फुटोपलब्धिहेतुत्वाच्चक्षिणीति विशेषवचनं सर्वश्रुतिषु । 'अहमदर्शमिति तत्सत्यं भवति' इति च श्रुतेः । अथापि योऽस्मिन्देहे वेद, कथं, इदं सुगन्धि दुर्गन्धि वा जिघ्राणीति अस्य गन्धं विजानीयामिति, स आत्मा, तस्य गन्धाय गन्धविज्ञानाय घ्राणम् । अथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति, स आत्माऽभिव्यवहरणक्रियासिद्धये करणं वागिन्द्रियम् । अथ यो वेदेदं शृणवानीति, स आत्मा, श्रवणाय श्रोत्रम् ।

शंकर.

( २ ) 'अथ यो वेदेदं जिघ्राणि' इति 'स आत्मा' इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेनानुसंधानात्तद्रूपत्वसिद्धिः । नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चेत् । न । गन्धादिविषयविशेषपरिच्छेदार्थत्वात् । तथा हि दर्शयति—गन्धाय घ्राणमित्यादि । २।३।१८

(१) छाउ. ८।१२।४; ब्रशंकर. २।३।१८; २।४।१५; भास्कर. २।४।१५ यत्रैत ( अत्रैत ); रामानुज. १।१।१ ( पृ. ४२ ), १।३।१८, २।३।१९; निंबार्क. २।४।१५; श्रीकंठ. २।३।१९; श्रीकर, २।३।१७,

'प्राणवता शब्दात्' — यदप्युक्तं देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शरीरस्येति तत्परिह्रियते। सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैवैषां प्राणानां संबन्धः श्रुतेरवगम्यते। तथा हि श्रुतिः—'अथ यत्रैतदाकाशं' इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति। अपि चानेकत्वात्प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिन् शरीरेऽवकल्पते। एको ह्यस्मिन् शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते।

* ब्रशंकर. २।४।१५

(३) आकाशं प्रकाशमालोकादि। अथ वा प्रकाश्यमानत्वादाकाशं रूपम्। ततश्चायमर्थः — यत्र यस्मिन्नुपकरणत्वेनानुविषण्णं निबद्धं चक्षुराकाशमालोकं रूपं वा प्रकाशयतीति शेषः। यद्वा, आकाशं रूपादिप्रकाशकमित्यर्थः। स चाक्षुषः चक्षुरुपकरणकः पुरुष आत्मेत्यर्थः। चक्षुरुपकरणकमुद्दिश्य पुरुषशब्देनाऽऽत्मत्वं विधीयते। चक्षुस्तु तद्दर्शनाय करणमात्रम्। ततश्च चक्षुरादीनां रूपादीनामात्मनश्च करणत्वज्ञेयत्वज्ञातृत्वप्रदर्शनमुखेन शरीरेन्द्रियेभ्यो व्यतिरेक उपपादितो भवति। गन्धग्रहणकरणं घ्राणं, ज्ञाता त्वात्मेत्यर्थः। अनेन घ्राणेन्द्रियव्यतिरेक उक्तो भवति।

रंग.

(४) 'ज्ञोऽत एव' — ज्ञः एवायमात्मा ज्ञातृस्वरूप एव न ज्ञानमात्रं नापि जडस्वरूपः। कुतः। अत एव, श्रुतेरेवेत्यर्थः। 'नात्मा श्रुतेः' (ब्रसू. २।३।१८) इति प्रकृता श्रुतिः अत इति शब्देन परामृश्यते। तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने 'अथ यो वेदेदं जिघ्राणीति स आत्मा' 'मनसैवैतान्कामान्पश्यन् रमते य एते ब्रह्मलोके' (छाउ. ४।१२।५)। † रामानुज. २।३।१९

**अथ यो वेदेदं मन्वानीति स आत्मा। मनोऽस्य दैवं चक्षुः। स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके॥ ***

(१) अथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियासंस्पृष्टं केवलं मन्वानीति वेद, स आत्मा, मननाय मनः। 'यो वेद स आत्मा' इत्येवं सर्वत्र प्रयोगाद्वेदनमस्य स्वरूपमित्यवगम्यते। यथा यः पुरस्तात्प्रकाशयति स आदित्यो यो दक्षिणतो यः पश्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य इत्युक्ते प्रकाशस्वरूपः स इति गम्यते। दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि। इदं चास्याऽऽत्मनः सामर्थ्यादवगम्यते। आत्मनः सत्तामात्रे एव ज्ञानकर्तृत्वं, न तु व्यापृततया, यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं, न तु व्यापृततयेति, तद्वत्। मनोऽस्याऽऽत्मनो दैवमप्राकृतमितरेन्द्रियैरसाधारणं चक्षुः चष्टे पश्यत्यनेनेति चक्षुः। वर्तमानकालविषयाणि चेन्द्रियाण्यतोऽदैवानि तानि। मनस्तु त्रिकालविषयोपलब्धिकरणं मृदितदोषं च सूक्ष्मव्यवहितादिसर्वोपलब्धिकरणं चेति दैवं चक्षुरुच्यते। स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोवियुक्तः सर्वात्मभावमापन्नः सन्नेष व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन्नेतेनैवेश्वरेण मनसैतान्कामान्सवितृप्रकाशवन्नित्यप्रततेन दर्शनेन पश्यन् रमते। कान्कामानिति विशिनष्टि—य एते ब्रह्मणि लोके हिरण्यनिधिवद्बाह्यविषयासङ्गानृतेनापिहिताः संकल्पमात्रलभ्यास्तानित्यर्थः। ‡ शंकर.

(२) स एष उक्तरीत्या शरीरेन्द्रियग्रामविलक्षणः आत्मा विधूतकर्मनिमित्तशरीरेन्द्रियः पुरुषो मनःशब्दाभिहितेन दिव्येन स्वाभाविकेन चक्षुषा ज्ञानेन पूर्वोक्त-

---

* भास्कर. निंबार्क. ब्रशंकरवत्।

† श्रीकंठ. श्रीकर. रामानुजवत्।

(१) छाउ. ८।१२।५; शंकर. स आत्मा + (मननाय मनः); ब्रशंकर. ४।४।१०; भास्कर. ४।४।१०, १३;

* बहुषु पुस्तकेषु 'य एते' इत्यतः षष्ठं वाक्यमारब्धम्।

‡ छाउ. ब्रशंकर. ७।२६।२ (पृ. ९५० ) द्रष्टव्यम्। रंग. दैवं (दिव्यं) (एष०) दैवेन (दिव्येन); रामानुज. १।३।१८, २।३।१९, ३१, ४।४।१६ दैवेन (दिव्येन); निंबार्क. ४।४।१६ रामानुजवत्; श्रीकंठ. २।३।१९, ४।४।११, २१, २२; श्रीकर. २।३।१७, २९, ४।४।१६ (एतेन०); विज्ञान. ४।४।५; बलदेव. ४।४।१६.

ब्रह्मलोकशब्दितदहराकाशनिष्ठान्सर्वान् कामाननुभवन् मोदते इत्यर्थः । † रंग.

¹तं वा एतं देवा आत्मानमुपासते । तस्मात्तेषाँ सर्वे च लोका आत्ताः सर्वे च कामाः । स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्यस्तमात्मानमनुविद्य विजानाति । इति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥

( १ ) यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा, तस्मात्ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते । तदुपासनाच्च तेषां सर्वे च लोका आत्ताः प्राप्ताः सर्वे च कामाः । यदर्थं हीन्द्रः एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः । तदुक्तं देवानां महाभाग्यत्वात्, न त्विदानीं मनुष्याणामल्पजीवित्वान्मन्दतरप्रज्ञत्वाच्च संभवतीति प्राप्ते, इदमुच्यते--स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिदानींतनोऽपि । कोऽसौ । इन्द्रादिवद्यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच । अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः । द्विर्वचनं प्रकरणसमाप्त्यर्थम् ।

शंकर.

( २ ) अत्र प्रत्यगात्मविद्याया ब्रह्मविद्याङ्गत्वेनाङ्गीभूतब्रह्मविद्याफलमेव तदङ्गभूतप्रत्यगात्मविद्यायां स्तुत्यर्थं निर्दिश्यते इति द्रष्टव्यम् । प्रजापतिवाक्यस्य 'एष संप्रसादः ' ( छाड. ८।१२।३ ) इति दहरविद्यावाक्यान्तर्गतसंप्रसादशब्दार्थशोधनार्थं प्रवृत्ततया तदेकवाक्यत्वेन तादार्थ्ये सिद्धे इन्द्रस्यापि पश्चाद्दहरविद्योपदिष्टेत्येवावगन्तव्यत्वेनादोषात् । * रंग.

आत्मरूपब्रह्मलोकप्राप्तिसाधनं जपः

²श्यामाच्छबलं प्रपद्ये । शबलाच्छ्यामं प्रपद्ये । अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥

( १ ) ' श्यामाच्छबलं प्रपद्ये ' इत्यादिमन्त्राम्नायः पावनो जपार्थश्च ध्यानार्थो वा । श्यामः गम्भीरो वर्णः । श्याम इव श्यामो हार्दं ब्रह्मात्यन्तदुरवगाह्यत्वात्, तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन, तस्माच्छ्यामाच्छबलं शबल इव शबलोऽरण्याद्यनेककाममिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं, तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपाताद्वोर्ध्वं गच्छेयम्। यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाय श्यामं प्रपद्ये हार्दभावं प्रपन्नोऽस्मीत्यभिप्रायः। अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्ये इत्यर्थः । कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते — अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांस्वादि च रोमतोऽपनीय यथा निर्मलो भवति, एवं हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं, चन्द्र इव च राहुग्रस्तस्तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो भवति, यथैवं धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयमिहैव ध्यानेन कृतात्मा कृतकृत्यः सन् अकृतं नित्यं ब्रह्मलोकमभिसंभवामीति । द्विर्वचनं मन्त्रसमाप्त्यर्थम् ।

† शंकर.

( २ ) परमात्मनो हि त्रिविधमुपासनमुक्तम् । ' उपासात्रैविध्यात् ' ( ब्रसू. १।१।३१ ) इत्यत्र चिच्छबलतयाऽचिच्छबलतया स्वरूपेण च, तत्र स्वरूपेणानुसंधाने ज्ञानादिगुणवद्दिव्यविग्रहयोगिताऽप्यनुसंधेया । श्याम इति विग्रहविशिष्टस्वरूपमुच्यते । ततश्च श्यामादिति ल्यब्लोपे पञ्चमी । श्यामविग्रहविशिष्टं स्वरूपं प्रपद्य स्वरूपमुपास्य शबलं चिदचिद्विशिष्टं प्रपद्ये उपासे । शबलमुपास्य श्याममुपासे । ततश्च निरन्तरं त्रैविध्येनोपासे इत्यर्थः ।

‡ रंग.

---

† शेषं शंकरवत् ।

* वाक्यार्थः शंकरवत् ।

(१) छाड. ८।१२।६; रंग. ( स० ); रामानुज. ३।३।१९; विज्ञान. ४।४।६.

(२) छाड. ८।१३।१; ब्रशंकर. ३।३।२६, २७; भास्कर. ३।३।२६; रामानुज. १।३।४२, ३।३।२६, २७, ४।२।८, ४।३।१३; ब्रमध्व. ३।२।१५; श्रीकंठ. ३।२।२०, ३।३।२६, २७; श्रीकर. ३।३।२६, २७, २८, ४।२।८, ४।३।१४; बलदेव. १।३।४१.

† ब्रशंकर. मुउ. ३।२।८, भास्कर. मुउ. ३।१।३ इत्यत्र द्रष्टव्यम् ।

‡ शेषं शंकरवत् ।

( ३ ) 'प्रकाशवच्चावैयर्थ्यम्'— 'यदा पश्यः पश्यते रुक्मवर्णम्' 'श्यामाच्छबलं प्रपद्ये' 'शुभ्रज्योतिः' इत्यादिश्रुतीनां च न वैयर्थ्यम्। विलक्षणत्वावगमात्। यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः। ब्रमध्व. ३।२।१५

**आकाशो वै नाम नामरूपयोर्निर्वहिता । ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा । प्रजापतेः सभां वेश्म प्रपद्ये। यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम्। यशोऽहमनुप्रापत्सि। स हाहं यशसां यशः। श्येतमदत्कमदत्कꣳ श्येतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥**

( १ ) 'आकाशो वै' इत्यादि ब्रह्मणो लक्षणनिर्देशार्थमाध्यानाय। आकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा। आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च। स चाऽऽकाशो नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोर्निर्वहिता निर्वोढा व्याकर्ता। ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते, तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं यदित्येतत्, तद्ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथाऽपि तयोर्निर्वोढृ एवंलक्षणं ब्रह्मेत्यर्थः। इदमेव मैत्रेयीब्राह्मणेनोक्तं, चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यते एकवाक्यता। कथं तदवगम्यत इत्याह— स आत्मा। आत्मा हि नाम सर्वजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीयाऽशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगन्तव्यम्। तच्चाऽऽत्मा ब्रह्मामृतममरणधर्मा। अत ऊर्ध्वं मन्त्रः। प्रजापतिश्चतुर्मुखस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम्। किंच यशोऽहं यशो नामाऽऽत्माऽहं भवामि ब्राह्मणानाम्। ब्राह्मणा एव हि विशेषतस्तमुपासते ततस्तेषां यशो भवामि। तथा राज्ञां विशां च। तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि। तद्यशोऽहमनुप्रापत्स्यनुप्राप्तुमिच्छामि। स हाहं यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणानामात्मा। किमर्थमहमेवं प्रपद्ये इति। उच्यते। श्येतं वर्णतः पक्वबदरसमं रोहितम्। तथा अदत्कं दन्तरहितमप्यदत्कं भक्षयितृ स्त्रीव्यञ्जनं, तत्सेविनां तेजोबलवीर्यविज्ञानधर्माणामपहन्तृ विनाशयितृत्येतत्। यदेवंलक्षणं श्येतं लिन्दु पिच्छलं तन्माऽभिगां माऽभिगच्छेयम्। द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थम्।

शंकर.

( २ ) 'न च कार्ये प्रतिपत्त्यभिसंधिः'— 'प्रजापतेः सभां वेश्म प्रपद्ये' इति तु पूर्ववाक्यविच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिर्न विरुध्यते। सगुणेऽपि च ब्रह्मणि सर्वात्मत्वसंकीर्तनं 'सर्वकर्मा सर्वकामः' इत्यादिवदवकल्पते। तस्मादपरविषया एव गतिश्रुतयः। ब्रशंकर. ४।३।१४

( ३ ) किञ्च 'प्रजापतेः सभां वेश्म प्रतिपद्यते' इति नायं कार्यब्रह्मविषयः प्रतिपत्त्यभिसंधिः संप्राप्तिसंकल्पः, नामरूपयोर्निर्वहितेति परब्रह्माधिकारात्। 'यशोऽहं संभवामि ब्राह्मणानां' इति सर्वात्मनानुक्रमणादिति सिद्धान्तः।

† भास्कर. ४।३।१३

( ४ ) अत्र 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्यपि पाठान्तरं द्रष्टव्यम्। उभयत्राप्ययमर्थः— श्रुतिष्वाकाश इति प्रसिद्धो नामरूपयोर्निर्वहिता व्याकर्ता यत्, आकाशशब्दितम्। विधेयब्रह्माभिप्रायेण नपुंसकत्वम्। ते नामरूपे अन्तरा मध्ये वर्तमाने ताभ्यामस्पृष्टमित्यर्थः। ब्रह्मामृतादिशब्दानां पूर्ववदेवार्थः। प्रजापतेः परमात्मनः सभामास्थानं वेश्म प्रपद्ये। 'प्रभुविमितं हिरण्मयम्' ( छाउ. ८।५।३ ) इति दहरविद्यायां निर्दिष्टं वेश्म प्रपद्य इत्यर्थः। न चात्र प्रजापतिशब्दः कार्यहिरण्यगर्भविषयकः। अत्र यशःशब्देन यशःसाधन-

---

(१) छाउ. ८।१४।१; ब्रशंकर. १।१।२२, १।३।१७, ४१, २।१।१४, २।४।२०, ३।२।१४, ४।३।१४; भास्कर. १।१।२२, १।३।१७, ४१, ३।२।१५, ४।३।१३ प्रपद्ये ( प्रतिपद्यते ) भवामि ( संभवामि ); रंग. श्येतं ( श्वेतं ); रामानुज. १।१।२३, १।३।४२, ३।२।१४, ४।३।७, १३ वै नाम ( ह वै ); निंबार्क. १।३।१७, ४२, ४।३।१३ रामानुजवत्; ब्रमध्व. १।३।४१; श्रीकंठ. १।१।२ ( पृ. १२३ ), १।३।४२, ३।२।१४, ४।३।७, १३; श्रीकर. १।१।२ ( पृ. ३० ), १।३।१७, ४१, २।३।१, ३।२।१४ रामानुजवत्; वल्लभ. १।३।४१ वै नाम ( वै ); विज्ञान. १।३।४१, ४।३।८, १४ वल्लभवत्; बलदेव. १।३।४१.

† रामानुज. निंबार्क. श्रीकंठ. विज्ञान. भास्करवत्।

भूतात्मोच्यते ब्राह्मणादीनामात्माऽस्मीत्यर्थः । अत्राह-मितिशब्दः स्वान्तर्यामिपरमात्मपरः । ननु तव ब्राह्मणादीन्प्रति कथं यशःशब्दितमात्मत्वमित्यत्राऽऽह—यशोऽहमनुप्राप्त्सीति । अहं यशोरूपं परमात्मानमात्मतयाऽहंत्वेन प्राप्तवानस्मि साक्षात्कृतवानस्मि । अतः सोऽहं परमात्मरूपोऽहं यशसां जीवात्मनां यश आत्माऽस्मीत्यर्थः । श्वेतं शुक्लधातुकम् । अदत्कं दन्तहीनं श्वेतम् । अत्र श्वेतशब्देन लक्षणया सत्त्वगुण उच्यते । तस्माददत्कं भक्षयितृ । चरमधातोः सत्त्वगुणतत्कार्य-ज्ञानादिप्रमोषकत्वाद्भक्षकत्वम् । तादृशं चरमधातुं प्राप्य लिन्दु स्त्रीलिङ्गं माऽभिगां न प्राप्नुयां, चरमधातुतया योनिप्रवेशो मा भूदिति । जन्म मा भूदिति यावत् । लिन्दु माऽभिगां लिन्दु माऽभिगामिति द्विर्वचनं जप्य-मन्त्रपरिसमाप्त्यर्थम् ।

रंग.

ब्रह्मविद्यावंशः, ब्रह्मलोकप्राप्तये अपुनरावृत्तये च गार्हस्थ्यधर्मविधिः

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः । आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः । स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते न च पुनरावर्तते ॥**

(१) छान्द. ८।१५।१; ब्रशंकर. २।३।४४, ३।४।६, ४८, ४।४।२२; भास्कर. ३।४।६, ४६, ४।४।२२ समावृत्य+ ( स्वे ); रामानुज. ३।४।६, १२, ४७, ४।१।१२, ४।४।२२; निंबार्क. ३।४।६, १२, ४७, ४।१।१२; ब्रमध्व. ३।४।४७, ४।४।२३; श्रीकंठ. ३।४।६, १२, ४७, ४।१।१२, ४।४।२२; श्रीकर. १।१।४ ( पृ. ४६ ), २।१।११, ३।२।७, ९, ३।३।२९, ३।४।१, २, १२, ४८, ४९, ४।१।१२, ४।२।१५, १९, ४।४।२१, २२; वल्लभ. ३।४।४७, ५०, ४।४।२२ सर्वभूता ( सर्वाणि भूता ); विज्ञान. ३।४।६, ४८, ४।४।२, २२; बलदेव. ३।४।२, ४८, ४।४।२२.

( १ ) तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षर-मित्याद्यैः सहोपासनैस्तद्वाचकेन ग्रन्थेनाष्टाध्यायीलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपायोवाच । असावपि मनवे स्वपुत्राय । मनुः प्रजाभ्यः, इत्येवं श्रुत्यर्थसंप्रदायपरंपरयाऽऽगतमुपनिषद्विज्ञानमद्यापि विद्वत्स्ववगम्यते । यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या सफलाऽवगम्यते, तथा कर्मणां न कश्चनार्थ इति प्राप्ते तदानर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते—आचार्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः । सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह—गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः । एवं हि नियमवताऽधीतो वेदः कर्मज्ञानफलप्राप्तये भवति, नान्यथेत्यभिप्रायः । अभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य, न्यायतो दारानाहृत्य, कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः । तत्रापि गार्हस्थ्यविहितानां कर्मणां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते — शुचौ विविक्तेऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्यासं च कुर्वन्धार्मिकान्पुत्राञ्शिष्यांश्च धर्मयुक्तान्विदधद्धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्योपसंहृत्येन्द्रियग्रहणात्कर्माणि च संन्यस्याहिंसन्हिंसां परपीडामकुर्वन्सर्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन्नित्यर्थः । भिक्षानिमित्तमटनादिनाऽपि परपीडा स्यादित्यत आह—अन्यत्र तीर्थेभ्यः । तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्वाश्रमिणां चैतत्समानम् । तीर्थेभ्योऽन्यत्राहिंसैवेत्यन्ये वर्णयन्ति । कुटुम्ब एवैतत्सर्वं कुर्वन्स खल्वधिकृतो यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैव वर्तयन्ब्रह्मलोकमभिसंपद्यते देहान्ते । न च पुनरावर्तते शरीरग्रहणाय । पुनरावृत्तेः प्राप्तायाः प्रतिषेधात् । अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक्ततो नाऽऽवर्तते

इत्यर्थः । द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ।

शंकर.

( २ ) ' कृत्स्नभावात्तु गृहिणोपसंहारः ' — एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने कस्माच्छान्दोग्ये गृहिणोपसंहारः ' अभिसमावृत्य कुटुम्बे ' इत्यत्र । तेन ह्युपसंहरंस्तद्विषयमादरं दर्शयति । अत उत्तरं पठति—कृत्स्नेति । तुशब्दो विशेषणार्थः । कृत्स्नभावोऽस्य विशिष्यते । बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टान्याश्रमान्तरकर्माणि च यथासंभवमहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते । तस्माद्गृहमेधिनोपसंहारो न विरुध्यते ।

* भ्रशंकर. ३।४।४८

( ३ ) विद्याङ्गभूततया कर्मानुष्ठातव्यमित्येतत्प्रस्तौति । व्यासार्यैस्तु पुरुषार्थाधिकरणेऽतिशेषेण निःशेषमित्यर्थ इति व्याख्यातम् । न च ' अशुद्धमिति चेन्न शब्दात् ' ( ब्रसू. ३।१।२५ ) इति सूत्रे क्रत्वर्थपशुहिंसाया हिंसात्वाभावस्योक्तत्वात् ' अन्यत्र तीर्थेभ्यः' इति व्यर्थमिति वाच्यम् । ' न वा उ एतन्म्रियसे न रिष्यसि ' इति मन्त्रलिङ्गात्तस्य हिंसात्वाभावेऽपि गृहस्थानामवर्जनीयतुलस्याहरणादिहिंसाया हिंसाधात्वर्थसंभवेन तत्पर्युदासार्थमन्यत्र तीर्थेभ्य .इत्यस्याऽऽवश्यकत्वादिति द्रष्टव्यम् । तत्र पुनरावृत्तौ हि न मुक्तेच्छा हेतुः, अनवधिकातिशयानन्दरूपं ब्रह्मानुभवतः पुनरावृत्तीच्छाया असंभवात् । नापि भगवदिच्छा हेतुः, एतल्लाभं महालाभं मन्वानस्य पुनस्तदावर्तनेच्छाया असंभवात् । नापि कर्मसंबन्धो हेतुः, तस्य निःशेषनष्टत्वादिति भाष्ये प्रतिपादितम् ।

रंग.

( ४ ) कृत्स्नभावात्कृत्स्नेषु भावात्कृत्स्नेष्वाश्रमिषु विद्यायाः सद्भावाद्गृहिणोऽप्यस्तीति तेनोपसंहारः । तस्मात्सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ।

रामानुज. ३।४।४७

( ५ ) कुटुम्बे( म्बी ) शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदित्युक्त्वा न च पुनरावर्तत इति गृहिणोसंहारः क्रियते । तस्माद्गृहस्थस्यैवोत्तमत्वमिति न वाच्यम् । यतः कृत्स्नगृहस्थान् देवानपेक्ष्यैवोपसंहारः क्रियते । 'कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यस्योऽत एतेषां न पुत्रा दायमनुपद्यन्ति न चैते गृहान्विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तारः' इति पौत्रायणश्रुतिः ।

बलदेव. ३।४।४७

( ६ ) सर्वेष्वाश्रमेषु विद्या संभवत्येव । छान्दोग्ये ' कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः ' इत्यारभ्य ' स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ' इति कृत्स्नाश्रमेषु विद्यासद्भावप्रदर्शनात् । तत्र गृहिणोपसंहारः सर्वेषां प्रदर्शनार्थः । एवमन्याश्रमवचनमपि सर्वेषामाश्रमाणां प्रदर्शनार्थम् । अतः सर्वेषामाश्रमिणां विद्याऽस्त्येव । फलत्यागः संन्यासः । यतित्वं जितेन्द्रियत्वम् । सर्वमिदं सर्वेषां संभवत्येव ।

३।४।४७

तस्मात् ' ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते ' इति श्रुतेः सर्वज्ञस्य सर्वशक्तेः सर्वैश्वर्यसंपन्नस्य सर्वानुग्राहकस्य सर्वकर्मसमाराध्यस्य निरस्तसमस्तदोषकलङ्कस्य निरतिशयमङ्गलगुणरत्नाकरस्य विरूपाक्षस्य परब्रह्मण उमापतेर्लोकं निरवधिकानन्दप्रकाशं नित्यमक्षयमभिसंपन्नाः सर्वज्ञत्वादियोगिनोऽनावृत्तिभया वर्तन्ते तत्रेति ।

श्रीकंठ. ४।४।२२

( ७ ) 'स खल्वेवं...न च पुनरावर्तते ' इत्यादिश्रुतिषु मूर्तमहेश्वरोपासकानां तल्लोके तेन सह सर्वकामावाप्तिः लब्धा ।

* श्रीकर. ४।४।२२

(८) ननु 'बहिस्तूभयथा' इत्यादिना भगवदीयस्य गृहत्याग आवश्यक इति निरूपितम् । छान्दोग्योपनिषदन्ते 'ब्रह्मलोकमभिसंपद्यते' इति गृहिणोपसंहारः कृतः । वाजसनेयिशाखायां च 'तद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते' इत्युपक्रम्य 'अथ भिक्षाचर्यं चरन्ति' इति पठ्यते । एवं सति विकल्पे संभवत्युपसंहारस्य तात्पर्यग्राहकत्वात् गृहिण एव यथोक्तकर्तुर्ब्रह्मसंपत्तिरिति श्रुतेस्तात्पर्यम् । त्यागोक्तिस्तु, ब्रह्मैतादृशं यदर्थं सर्वं त्यज्यते इति स्तुतिपरेति प्राप्ते, गृहिणोपसंहारे हेतुत्वेन तात्पर्यमाह—कृत्स्नेति । त्यागे वाङ्मनसयोरेव भगवति विनियोगो न सर्वेन्द्रियाणाम् । गृहिणस्तु सर्वैः प्रका-

* भास्कर. निंबार्क. विज्ञान. भ्रशंकरवत् ।

* ३।४।४८ रामानुजवत् ।

रैर्भजनं भवतीति, परिजनश्च कृतार्थो भवतीति च स जने कृत्स्नता भवतीति तेनोपसंहारः कृत इत्यर्थः। अत एवात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येत्युच्यते। अत्रात्मपदं भगवत्परमिति ज्ञेयम्। कर्ममार्गीयगृहिव्यवच्छेदाय तुशब्दः। अत्रेदमाकूतम्। 'भक्तिमार्गो बहुविधः' इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तस्तयैव निर्वृत्या मुक्तिमपि तुच्छां मन्यन्ते। तदुक्तं—'मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः' इति। तेन भगवद्भजन एव तत्रापि पुष्टिमार्ग एव श्रुतेर्भर इति ज्ञायते। पूर्वमुत्कटभगवद्भाववतां तदर्थं त्यागं निरूप्य गृहिणोपसंहारतात्पर्यं पश्चात् यन्निरूपितवांस्तेन तादृग्भाववतैव त्यागः कार्यः। तद्रहितेन तु गृह एवोक्तरीत्या प्रभुभजनं कार्यम्। तेनैव तल्लाभ इति व्यासहृदयमिति ज्ञायते। उत्कभावाभावे त्यागधर्मानिर्वाहादिति। केचन भक्ता भावणादिलीलादर्शनं विना स्थातुमशक्ताः प्रचुरभावविवशाशया गृहांस्त्यक्त्वा वनं गच्छन्ति। आत्रेयौडुलोमिभ्यां तु भगवदवतारसामयिकभक्तदशोक्ता। एते सर्वे फलमार्गीयाः। वाजसनेय्युक्तास्तु साधनमार्गीया इति नानुपपत्तिः काचित्। ३।४।४७

'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्'— वैदिककर्मकरणे तात्पर्यमुक्त्वा लौकिकस्यानावश्यकत्वेऽपि तत्समयमाह। प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासंभव एवैहिकं कर्म कार्यम्। नन्वैहिकं कर्माऽस्तु मा वा, अतस्तत्समयोक्तिर्व्यर्थेत्याशङ्क्याऽऽह प्रस्तुतं प्रभुभजनं, तद्दर्शनादिति। आचार्यकुलादित्युपक्रम्याऽग्रे पठ्यते, धार्मिकान् विदधदिति। अतो धार्मिकपुत्रविधानमैहिकं कर्म श्रुतौ दृश्यतेऽतस्तत्समयोक्तिरावश्यकी। अन्यथा श्रुतावुक्तमस्तीति प्रस्तुतबाधेऽपि तत्करणे फलप्रतिबन्धः स्यादिति भावः। ३।४।५०

'अनावृत्तिः शब्दादनावृत्तिः शब्दात्'— अनावृत्तिर्भक्तानां ज्ञानिनां चोच्यते। तत्र मानं शब्दः। स च — 'तयोर्ध्वमायन्नमृतत्वमेति' 'न तेषां पुनरावृत्तिः' 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' 'ब्रह्मलोकमभिसंपद्यते' 'न च पुनरावर्तते' इत्यादिरूपस्तु ज्ञानिनां तामाह। न हि भक्तानां नाड्यादिप्रयुक्तममृतत्वम्। 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥' इत्यादिवाक्येभ्यः। किन्तु यमेवेति श्रुतेर्वरणमात्रलभ्यः पुरुषोत्तमः। एवं सति 'ब्रह्मविदाप्नोति परम्' इति श्रुतेर्विरोधपरिहारपूर्वकोक्तव्याख्यानरीत्या भक्तस्य परं ब्रह्म प्राप्तस्य निर्दोषत्वादावृत्तिहेत्वभावात् प्रपञ्चेऽनावृत्तिः संभवति। वल्लभ. ४।४।२२

इति अष्टमोऽध्यायः॥

## छान्दोग्योपनिषत्समाप्ता।



# प रि शि ष्ट म्

## छान्दोग्योपनिषत्

## * मध्वभाष्यम्

### प्रथमोऽध्यायः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥

अत्युद्रिक्तविदोपसत्सुखमहाज्ञानैकतानप्रभा-
सर्वप्राभवशक्तिभोगबलसत्सारात्मदिव्याकृतिम् ।
सृष्टिस्थाननिरोधनित्यनियतिज्ञानप्रकाशावृति-
ध्वान्तामोक्षविमोक्षदं हरिमजं नित्यं सदोपास्महे ॥

हयग्रीवमुखोद्गीर्णगीर्भिर्देवी रमापतिम् ।
अस्तुवद्भिस्तृतगुणं भोगिप्रस्तरशायिनम् ॥

ओमितिनामकमक्षरं सर्वसंनिहितत्वादेतत् । उच्चत्वाद्गीतत्वात् सर्वस्थानत्वाच्चोद्गीथं भगवन्तमुपासीत । उक्तं च महासंहितायाम् —— 'हयग्रीवोद्गीतवाक्यै रमादेवी रमापतिम्। ओमित्येतन्मुखैर्देवमस्तुवत्सामवेदगैः ॥' इति । 'ओनामानमुपासीत तदर्थगुणपूर्वकम् । ओतत्वादवनान्मानादधिकोच्चत्वकारणात् । आनन्दादोजसश्चैव भरणादोमुदाहृतः ॥' इति समन्वये । 'ओतमस्मिञ्जगत्सर्वमत्युच्चश्चाखिलैर्गुणैः । इत्योमिति सदोपास्यः सोऽक्षयः पुरुषोत्तमः । उच्चत्वाद्गीयमानत्वात्स्थानादुद्गीथ उच्यते । ओमित्येनं समुद्दिश्य ह्युद्गाता गायति स्फुटम् । विष्णोरोमिति नाम्नोऽस्य व्याख्यानमधिकोच्चता । अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते । तथा मितं सर्ववेदैर्मकारेणाभिधीयते । अधिकोच्चमिति ज्ञातमोमित्यस्यार्थ ईरितः ॥'

'तदेतत्परमत्वं तु यथाक्रममुदीर्यते । देवतानुक्रमज्ञाश्च विष्णोः परमताविदः । एकान्तिनस्ते विज्ञेया यथाक्रमपरास्तथा । अस्मादसावुच्च इति क्रमस्यान्तगतं हरिम् । एकमेव तु ये विदुस्ते ह्येकान्तिन ईरिताः । एवं यथाक्रमज्ञाश्च सदैकान्तपरायणाः । प्रविशन्ति परं देवं नारायणमनामयम् । उच्चक्रमान्तगत्वेन कुर्युः पूजां हरेः सदा । लक्ष्म्यादेः क्रमशः पूजां ज्ञात्वा भागवता इति । स्वतन्त्रपूज्यताबुद्ध्या न दद्युः किंच कस्यचित् । ब्रह्माद्या मनुसंज्ञा ये वर्णत्वेनोदिताः श्रुतौ । मानवाख्याश्च मुनयस्तान्यजन्ति न चेतरान् । पितृत्वेन गुरुत्वेन साक्षाद्भागवतत्वतः । अपभ्रष्टा अदेवाश्च ब्रह्माद्याख्यायुता अपि । देवसंज्ञाश्च दीनत्वात्पूजयेयुर्न तान्कचित् । यद्भागवतबुद्ध्यैव दत्तं ब्रह्मादयः सुराः । वैदिकाः प्रतिगृह्णीयुरपभ्रष्टास्तथेतरत् । यथाक्रमपरिज्ञानादेकान्तित्वाच्च केवलम् । अच्छिद्रत्वाच्च नियतो मोक्षोऽन्यत्तु विडम्बनम् । विष्णौ भक्तिर्विशेषेण मोक्षावाप्तौ हि कारणम् । तद्भक्तेषु क्रमेणैव रमाद्येषु त्वनन्तरम् । तृतीयमपि वैराग्यं न चान्यन्मोक्षकारणम् । एतत्साधनताहेतोस्तदन्यद्धि विधीयते । अतोऽन्यसर्वकृच्चापि गच्छेदेवाधरं तमः । अस्मिन्सुनिष्ठितो नित्यं मोक्ष्ये वाऽन्योऽज्ञकोऽपि सन् । अतस्तेषां क्रमं वक्ष्ये देवानां यः श्रुतौ श्रुतः । पृथिवी सर्वभूतेभ्यः सदा सर्वगुणैर्वरा । रसः सारो वरश्चेति शब्दा एकार्थवाचकाः । पृथिव्या वरुणः श्रेष्ठस्तस्मादोषधिदेवता । सोमस्तस्मात्तु पुरुषो रुद्रो यत्पौंस्यदेवता । तस्मात्सरस्वती वाग्वि श्रेष्ठाऽस्या ऋक्स्वरूपिणी । सैव श्रेष्ठा ततो वायुर्वरिष्ठः सामनामकः । समत्वात्सर्वभूतेषु साम साम्नां च देवता । ततः श्रेष्ठतमो विष्णुः श्रेष्ठश्रेष्ठतमः सदा । श्रेष्ठाच्छ्रेष्ठतमाच्चापि परमात्परमो विभुः । परमार्धियुतत्वाच्च परार्ध्य इति कीर्तितः ॥' इति सारनिर्णये । अतिशयेन परमार्धिगुणः परमः परार्ध्यः । उत्तमेभ्योऽप्यतिपरमोत्तमोत्तमो रसानां रसतमः परमः परार्ध्यः । रसानां सकाशादपि परमपरा-

* छान्दोग्योपनिषदः ( पृ. ७४६-९८६ ) मुद्रणकाले अस्य भाष्यस्यानुपलब्धत्वात् तत्र न संगृहीतम् । उपनिषत्काण्डस्य मुद्रणसमनन्तरं हैद्राबादस्थ( दक्षिण )स्वनामधन्यस्य जोशीत्युपाह्वस्य कृष्णाचार्यस्य सकाशात् इदं पुस्तकं लब्धम् ।

ध्र्यरसतम इत्यर्थः । प्राणादीनां भूतादिभ्यः श्रेष्ठत्ववदस्य श्रेष्ठत्वं न भवति । किंतु महान्विशेष इति ज्ञापयितुं रसानां रसतम इत्यादि बहुविशेषणम् । भूतेभ्यः पृथिव्या रसत्वं तेभ्यो वरुणस्य रसतरत्वं सोमस्य रसतमत्वं रुद्रस्य परमरसतमत्वं वाचः परमर्धरसतमत्वं प्राणस्य परमपरार्धरसतमत्वं अयं तु भगवान् प्राणादपि परमपरार्धरसतममात्रो न भवति किंतु प्राणस्यापि रसभूताया रमाया अपि परमपरार्ध्यरसतमः । अस्मादप्यतिशयेन परमित्यसंख्यागोचरत्वेन परार्धेन ज्ञेयं हि परार्ध्यम् । ऋग्रूपाया वाचः पृथक्परत्वाङ्गीकारेऽपि भूतेभ्यः प्राणस्य परमपरार्धरसतमत्वमेव न तु परमपरार्धिरसतमत्वम् । परस्मादप्यासमन्तादृद्धं हि परार्धम् । तेनासंख्यागोचरत्वेन ज्ञेयं परार्ध्यं परार्धोत्तमं परार्धितेनासंख्यागोचरत्वेन ज्ञेयं परार्ध्यमित्यतः परार्धित्वं श्रियो भवति श्रियोऽपि परार्ध्यो भगवान् । अतो रसानां रसतमः परमः परार्ध्यः ॥

पृथिव्याः सोमवरुणयोश्चौषध्यब्देवतात्वेन रुद्रस्य च लिङ्गदेवतात्वेन प्रसिद्धेः ऋगादीनामेव विमर्शः क्रियते कतमा कतमर्गित्यादिना । तज्ज्ञानस्य विशिष्टफलत्वाच्च । वाचश्च सरस्वतीत्वेन प्रसिद्धेवार्गृचोरैक्याच्च न विमर्शः कृतः । ' विशेषात्प्राणसंयुक्ता वागृगित्यभिधीयते । ऋ गताविति धातोर्हि ऋक्त्वं सर्गाभिमानिनी । विशेषसंयोगहीना यदा सैव सरस्वती । तदा तस्यावरा सैव प्राणसंयोगिनी मता । प्राणयोगवियोगाभ्यां सैषैकापि विभिद्यते । वागेवर्क्छ्रुतौ प्रोक्ता प्राणः सामेति कीर्तितः । अक्षयाद्रतिरूपत्वादक्षेषु रमणादपि । अक्षरं भगवान् विष्णुरोमित्युच्चत्वहेतुतः । इतिशब्दोऽन्यथाभावनिवृत्त्यर्थ उदाहृतः । एवमत्युच्च एवासौ सर्वदैतद्धृदि स्थितः । उद्गीयमान उद्गीथो भगवान् पुरुषोत्तमः ॥ '

'तस्मादोमित्यनुज्ञानं कुर्वन्त्येते जनाः सदा । त्वदुक्तं त्वत्तथा कुर्याद्भगवानेव केशवः । इत्यभिप्रायतः शब्दः प्रवृत्तः स पुरातनैः । तदेतदज्ञैस्तु जनैः स्वानुज्ञेति प्रतीयते । ओमित्ययं पूर्णवाची समृद्धिर्ह्योमितीरिता । समृद्धस्ते हि कामोऽयमित्यनुज्ञाऽथवा भवेत् । अतः समृद्धिवाची स्याद्धरेरोंशब्द ईरितः । इति वा दीयतेऽनुज्ञा हरिस्त्वव समृद्धिदः ॥ '

' वाक्प्राणौ दंपती चापि संसृज्येते जनार्दने । मुक्तौ तु तत्प्रसादेन संसृज्यन्ते ततः परे । तद्द्वारेणैव साक्षात्तु प्राणः संसृज्यते हरौ ॥ '

' तेनैव विष्णुनेयं च त्रयी विद्या प्रवर्तते । ओमित्युक्त्वा हि तद्व्याख्या सर्वैर्मन्त्रैः प्रवर्तते । ओंनामकस्य पूजार्थं विष्णोरेव सदैव हि । महिम्ना सारभूतेन विष्णुनाज्ञोऽज्ञ एव च । कुरुतः कर्म— ॥ '

' नाज्ञस्य मुक्तिर्ज्ञस्य भवेत्तु सा । स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतम् । अक्षरं भगवान् विष्णुस्तस्योपप्रणवः स्मृतः । उपव्याख्या तु तद्व्याख्येत्येवमाह श्रुतिः परा ॥' इति तार्तीये । ' परर्धं परमादुच्चं परार्धं तु ततोऽधिकम् । ततोऽधिकं परार्धिः स्यात्परार्ध्यमिति तत्परम् । परतः परमाच्चैव परार्धो वायुरीरितः । परार्धिनी श्रीरुद्दिष्टा परार्ध्यो भगवान् हरिः ॥ ' इति शब्दनिर्णये ॥ १ ॥

उद्गीथाख्यस्य विष्णोर्विशिष्टप्रतिमा वायुरेव । अतस्तस्य सर्वोत्तमत्वज्ञानपूर्वकं तस्मिंस्ततोऽप्युत्तमत्वेनोपासित एव भगवान् सम्यक् फलं ददातीति दर्शयति । 'वायौ मुख्यधियेति च' इति भगवद्वचनम् । 'यस्माद्वायौ स्मृतो विष्णुर्वायोर्मुख्यतयाऽखिलात् । स्वस्य मुख्यतया तस्मात्परां तुष्टिं गमिष्यति । अतो विचार्य सकलैर्देवैः प्राणे जनार्दनः । उपासितो दैत्यजयकारणात्पापवर्जिते । वायुपुत्रं च नासिक्यमग्निं वागात्मकं तथा । सोमं श्रोत्रात्मकं चैव सूर्यं चक्षुःस्वरूपिणम् । रुद्रं मनःस्वरूपं च शेषं चाहंस्वरूपिणम् । चित्तात्मकं च गरुडं पापेन विविधुः सुरान् । असुरास्तैर्यतो विद्धास्तस्मात्ते दोषयोगिनः । मुख्यवायौ यदा देवाः शरीरस्थे च सूर्यगे । विष्णुमुद्गीथनामानं तदा तं च विदध्वसुः । यदा विदध्वसुः प्राणं विध्वस्तास्ते तदा सुराः । अखन्याश्मानमेवाप्यलोष्टो विध्वंसते यथा । प्रतिमां प्रेयसीं प्राप्य विष्णोः प्राणं तथा सुराः । तस्मादादित्यसंस्थे वा शरीरस्थेऽपि वानिले । बलज्ञानात्मके दिव्याकृतिमत्युज्ज्वलात्मनि । सर्वदेवोत्तमं विष्णुमुपासीत ततोऽधिकम् । अस्योपासनया देवाः सर्वनामानि भेजिरे । इन्द्रो बृहस्पतिः शंभुरित्याद्याः प्राणगा यतः । प्राणस्य नामशब्दाश्च मुख्यतो विष्णुसंस्थिताः ॥ ' इति प्रध्याने । 'उद्गीथाख्यं परं विष्णुमुपास्त्या जह्नुरञ्जसा । तथापि प्राण

एवासौ प्रीतिमागादुपासितः ॥' इति च । 'प्राणं प्राप्यैव विध्वस्ता यथा सर्वेऽसुरास्तथा । तदुपासकस्य यश्चारिः प्रतीपं दातुमिच्छति ॥' इति च । 'एवं विदित्वा संसारान्मुक्तिमेष्यत्यसंशयम् । विष्णुमप्यन्ततो वेत्ति प्राणवेत्ता यतः स्फुटम् । वीति विष्णुः समुद्दिष्टो विशिष्टत्वात्तु सर्वतः । आददात्येव तं प्राणवेत्ताऽन्ते तत्प्रसादतः । प्राणात्परं तु ये विष्णुं जीवांश्चैवावरांस्ततः । ये विदुस्ते विदुः प्राणं नान्यथा तु कथंचन ॥' इति च । 'प्राण उद्गीथ इत्याद्या नामब्रह्मादिकास्तथा । सप्तम्यर्थाः समुद्दिष्टाः सततु प्रथमा यत. । प्राणमुद्गीथमित्याद्या द्वितीया सप्तमी मता ॥' इति च ॥ २ ॥

'आदित्यसंस्थितो नित्यं प्राणस्तपति नापरः । प्रकाशनं च तपनं काष्ठवत्सूर्यगं भवेत् । सूर्यमण्डलगो वायुरुदयास्तमयोज्झितः । अपि प्रजाभ्य उद्यश्चैवोद्गायति जनार्दनम् । आदित्यमण्डलस्थश्च सर्वप्राणिगतस्तथा । वायुः समान एवायमुष्णोऽसावपि च स्फुटम् । तस्मादस्मिन्नमुष्मिन्वाऽप्युद्गीथाख्यं जनार्दनम् । उपासीत विमोक्षाय सर्वकामाप्तये तथा ॥' इति च । 'केशवः स्वः स्वतन्त्रत्वात्तद्गतेर्मारुतः स्वरः । शरीरस्थश्च सूर्यस्थः प्रतिपत्त्या समन्ततः । मां प्रतीत्यत एवासौ प्रत्यास्वर उदाहृतः । प्राणाद्यास्त्रिविधाः पञ्च प्रधानो वायुरेव च । मुख्यपञ्चकरूपः सन्गरुडो मध्यपञ्चकः । अवमः पञ्चकस्त्वन्ये प्राणाद्यास्तस्य सूनवः । इति त्रेधा विभागोऽयं विभागोऽन्यश्चतुर्थकः । प्राणापानौ शेषवीन्द्रौ तथोदानसमानकौ । रुद्रेन्द्रौ तत्परः श्रेष्ठो वायुर्व्यान उदाहृतः । तस्मिन्नुद्गीथनामानमुपासीत हरिं परम् । योऽसौ व्यानगतो विष्णुः स वागृक्सामगः सदा । उद्गीथे च स एवैकस्तस्माद्व्यानाद्धि तत्क्रियाः । उद्गीथनामा भगवान् स्थितो व्यानादिपञ्चके । वीर्यवत्कर्मकृत्तस्माद्व्यान एव ह्युदाहृतः । तस्माद्व्यानगतं विष्णुमुपासीतैव नित्यशः । यद्यप्येको हि भगवान्सर्वदा सर्ववस्तुगः । अनूनोद्रिक्तमहिमो निर्विशेषः सदैव च । तथापि तत्क्रियाभेदान्नामरूपादिकं पृथक् । उच्यते ह्यपृथक्त्वेऽपि पूर्णैश्वर्यैकहेतुतः । अविशेषोऽपि भगवान्सर्वशक्तित्वहेतुतः । विशेषहेतुकं सर्वं करोत्यविकृतः सदा । उद्गीथाक्षरगं चैव प्राणादिषु च संस्थितम् । आशीःसमृद्धिहेतुष्वप्यखिलेषु व्यवस्थितम् । एकमेव हरिं वेद यः स सर्वमाप्नुयात् ॥' इति च । उच्छब्दवाच्याः प्राणाद्या वागाद्या गीरितीरिताः । अन्नाद्यास्थमिति प्रोक्तास्तेषूद्गीथो हरिः स्थितः ॥' इति च । आत्मानं परमात्मानमन्ततः सर्वोत्तमत्वेन सर्वत्रानसृत्य ॥ ३ ॥

'स्वरतेस्तु स्वरो विष्णुस्तद्गतेर्वायुरुच्यते । वायुस्वरं स्वरं विष्णुमोमाख्यं समुपासिरे । देवास्तेनामृतं प्राप्ता मुक्त्याख्यं मृत्युवर्जिताः । मारणान्मृत्युरित्युक्ता दुर्गा तद्भयतः सुराः । ओमित्युपास्य तं विष्णुं परमामृतमापिरे ॥' इति संध्याने । ऊर्ध्वा उत्तमाः ॥ ४ ॥

'आदित्यसंस्थितो वायुः प्रणवस्तद्गतो हरिः । प्रकृष्टत्वाच्च नेतृत्वाद्गतित्वादखिलस्य च । उद्गीथ उच्चैर्गेयत्वात्स एव पुरुषोत्तमः । स एव प्राणगो देहे ओमित्येव सदा जपन् । एत्येव भगवान् विष्णुर्ध्यायन्नेकं तमक्षरम् । एकपुत्रो मुक्तिमेति ध्यायन्प्राणेषु रश्मिषु । बहुपुत्रो विमुक्तः स्यात्तस्माद्ध्यायेत्तथा परम् ॥' इति च । प्राणस्थं भूमानमभिगाय । दुरुद्गीतमनुसन्नाहरति । अनुरूपमेव करोति । होतृषदनस्थमग्निस्थं भगवन्तं ध्यात्वा । 'अन्यथा गानजं दोषमग्नौ ध्यात्वा हरिं परम् । अपाकरोति तस्मात्तं ध्यायेदेवाग्निगं सदा ॥' इति त्रैविद्ये ॥ ५ ॥

'अग्नीरसूर्यनीलेषु वायुस्थः सामदेवता । उर्वीवियद्द्युशुक्लेषु ऋग्देवीस्था सरस्वती । सेति भार्या हि वाग्देवी प्राणो मः पतिरीरितः । एवं तौ सामनामानावुभावेवाप्युदाहृतौ । अतो हि सामवेदोऽयं ऋक्सामात्मक ईरितः । वागादिष्वेवमेवैतौ वाक्प्राणौ सर्वदा स्थितौ । तयोरन्तःस्थितो विष्णुर्गायकौ तस्य तावुभौ । ऋक्सामाभ्यां स उन्नामा पापोद्गश्चोच्च एव च ॥' इत्यादि सत्तत्त्वे । कप्यासरक्तपद्माक्षः सूर्यगश्चाक्षिगश्च सः । गायकस्तस्य विष्णोर्यः स स्वर्ग्यांश्च नृलोकगान् । कामान्दद्यान्नरश्चेत्स्यात्सुराणां च नृणामपि । मोक्षदो यदि वायुः स्यान्मुख्योद्गाता ततोऽनिलः ॥' इति च । तस्मादुद्गीथ उच्चोऽसौ गीयतेति चेति ॥ ६ ॥

आत्मा जीवः । 'सरस्वती हि चक्षुःस्था जीवस्थो वायुरीरितः । विदित्वा तावुभौ देवौ तद्गं ध्यायेद्धरिं सदा ॥' इति मानसे । 'दृश्यते ज्ञानदृष्ट्या यः सूर्ये चक्षुषि

चैकराट् । ऋङ्नामा ज्ञानरूपत्वात्सामनित्यसमत्वतः । उक्थमुत्थापकत्वाच्च यजुर्याज्यस्वरूपतः । ब्रह्माऽसौ पूर्णरूपत्वादेवं सर्वाभिधानवान् ॥' इति च । 'यथा बदरिकानाथो द्वारकानाथ इत्यपि । अर्वाङ्नाथः पराङ्नाथ इति तद्वदिहोच्यते । सर्वनाथोऽपि भगवान्संनिधानविशेषतः ॥' इति च ॥ ७ ॥

अग्निः सामाभिमानी स्याद्वरुणस्तु स्वरात्मकः । प्राणावराभिमानी तु सूर्य एव प्रकीर्तितः । अन्नाभिमानी दक्षश्च शक्रस्त्वन्नभिमानवान् । द्यात्मकश्च शिवः प्रोक्तः क्रमेणैवोत्तरोत्तराः । क्रमेण मोक्षे प्राप्याश्च पूर्वेषामुत्तरोत्तराः ॥' इति निवृत्ते । अग्नेर्वागात्मकत्वात्स्वरस्योदकात्मकत्वात् । 'आदित्य एव प्राणोऽन्नं वै प्रजापतिः' इति श्रुतेः । 'आप एवेन्द्रो द्यौर्वाव रुद्रः' इत्यादेश्च । 'विशेषज्ञानसंप्राप्त्यै जानन्तोऽपि परं हरिम् । ब्रूयुर्देवाश्च ऋषयस्तदन्यस्य परात्मताम् ॥' इति ब्रह्मतर्के । स्वर्गाभिमानिरुद्रं प्रति सामाभिसंस्थापयामः । तत्स्तावकं हि साम । मूर्धा ते विपतेदिति यः कश्चिद्ब्रूयाच्चेद्विपतिष्यति । 'ब्रह्मैव हि पृथिव्यात्मा—॥' ८ ॥

'विष्णुराकाशनामकः । आदीप्तत्वाद्वरीयांश्च परमो हरिरेव हि ॥' इति सत्तत्त्वे । 'शुभाशुभानां दाहादौ साम्यात्सामाग्निरीरितः । स्वो विष्णुः सागरे रन्ता वरुणोऽतः स्वरः स्मृतः । उदयाज्जगत्प्रणेतृत्वात्सूर्यः प्राण उदाहृतः । अत्ता रुद्रस्तद्विरोधाद्दक्षः स्यादन्ननामकः । स्वो विष्णुस्तद्रतिर्वायुस्तद्वो मुक्तौ सदाशिवः । अतः स्वर्गौ सुसंस्थत्वादसाविति च कीर्तितः । सर्वदेवान्तरत्वात्तु ब्रह्माऽयं समुदाहृतः । लोको ज्ञानस्वरूपत्वादेतेषां परमो हरिः ॥' इति ब्रह्मतर्के । आपालनादाप इन्द्रः । अधिकं वरीयान् परोवरीयान् । तत्परो वरीयोऽस्य रक्षकं भवति । यावत्तः द्वापरादिपर्यन्तम् ' ॥ ९ ॥

'उपला इष्टकाः स्थूला मटचीति प्रकीर्तिताः' इति शब्दनिर्णये । 'आसन्नयौवना योषिदाटकीत्यभिधीयते ' इति च । 'प्रद्रवन्नन्नपानार्थे प्रद्राणक इतीरितः' इति च ॥ १० ॥

'प्राणस्थविष्णुना सर्वे प्रसूयन्ते यतस्ततः । प्रस्तावदेवता स स्यात्प्रस्तावस्तु जनिर्यतः । आदित्यसंस्थितो विष्णुर्यत्सदा सर्वगीतमुक् । राजादौ गीतमप्यन्नैर्भुङ्क्ते गानस्य देवता । उद्गीथदेवता तस्मात्स एव पुरुषोत्तमः । अन्नस्थेनैव जीवन्ति भूतान्येतानि विष्णुना । प्रतिहारदेवताऽतः स प्रतिहारो हि भोजनम् ॥' इति च । उच्चैः सन्तमुत्तमं सन्तम् ॥ ११ ॥

दल्भपुत्रो बको मित्रया पुत्रार्थे स्वीकृतो ग्लाववत्तूष्णीं स्थितत्वात्तया ग्लावेत्युक्तो ग्लावनामको जातः । अत उभयथाऽस्य निर्देशो भवतीत्यर्थः । 'प्रसादार्थे बकस्यापि वायुनोक्तः श्वरूपिणा । शौवोद्गीथ इति प्रोक्तो रुद्रादीनां श्वरूपिणाम् । उपासितः पौर्णमास्यां शौवोद्गीथेन केशवः । सर्वाभीष्टं ददातीति प्रातरित्याह मारुतः । ओमदामादिकं मन्त्रं वायुनोक्तं तु देवताः । वायुस्थविष्णुमुद्दिश्य हिङ्कृत्य प्रापुरीप्सितम् । देवौ विष्णुश्च वायुश्च सर्वज्ञत्वात्क्रमेण तु । वरुणौ वरणीयत्वात्सवितारौ प्रसूतितः । प्रजानां च पती तद्वत्क्रमादेव प्रकीर्तितौ ॥' इति च ॥ १२ ॥

'हूयतेऽत्राग्निहोत्रादिर्हावुकारस्त्वियं यतः । हेत्याश्चर्यवदायाति हेति वा सुखकृत्त्वतः । हायिकारस्ततो वायुरथेत्युक्तमनन्तरम् । आनन्तर्यात्प्रकाशस्य सूर्याच्चन्द्रस्तथेरितः । सर्वसामीप्यतो विष्णुरिहेति कथितः सदा । इन्धनादग्निरीकार ऊकारः सूर्य उच्चितः । नितरामाह्वयन्त्येनमितीन्द्रो निहवः स्मृतः । एतीत्येकार एवासौ औहोयीत्यखिलाः सुराः । उच्चत्वाद्विष्णुरुः प्रोक्तो हूयन्तेऽस्मिन्यतोऽखिलाः । मुक्तावौहोयिनस्तस्मात्सर्वे देवाः प्रकीर्तिताः । हीति निश्चय उद्दिष्टो निश्चयज्ञानतः सदा । ब्रह्मा हिङ्कार इत्युक्तो वायुः प्राणः शरीरगः । स्वे विष्णौ रमयत्येनं जीवं तस्मात्स्वरः स्मृतः । यर्यिर्नित्यगतेर्वायुस्तद्वा या या सरस्वती । सैवान्नदेवता प्रोक्ता यात्रा प्राणेन नीयते । सर्ववागात्मिका या तु श्रीर्विशेषेण राजनात् । विराडुक्ता निरुक्तस्तु व्याप्तो नारायणस्तु यः । आहूत एव पातीति हुम्कार इति कीर्तितः । हुमित्याक्रियते यस्माद्धुम्कारस्तु जनार्दनः । अनिरुक्तस्त्ववाच्यत्वात्परमः पुरुषो हरिः ॥' इति माहात्म्ये । सम्यक् चरतीति स एव संचरः ॥ १३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः ॥

———

## द्वितीयोऽध्यायः

समस्तस्य पूर्णस्य साधुत्वात्सामनाम्नो विष्णो-रुपासनं साधु । सारत्वेन मेयं साम । सारत्वेन धार्यं साध्वित्येक एवार्थः । ' साधुत्वात्सामनामानं समस्तगुणपूर्तितः । समस्तं य उपासीत नारायणमनामयम् । सर्वसाम्नां देवतेति स मुक्तः साधुधर्मभाक् ॥ ' इति सामसंहितायाम् ॥ १ ॥

' नारायणाख्य उद्गीथ उद्गेयः प्रणवेन यत् । उद्गच्छन्ति यतोऽस्माद्वासुदेवादिमूर्तयः । प्रथमावताररूपत्वाद्वासुदेवः परः पुमान् । प्रस्तावो निधनं चापि संकर्षण उदाहृतः । संकर्षणो हि संहर्ता प्रद्युम्नः परमेश्वरः । हिङ्कार इति संप्रोक्तो हीतिसृष्टिरुदीर्यते । प्रसिद्धता हि सृष्टिः स्यादनिरुद्धः परो विभुः । प्रतिहार इति प्रोक्तःस हि कार्येष्विदं जगत् । प्रति प्रतिहरेन्नित्यं मूर्तिप्रतिहृतेस्तथा । ते पृथिव्यादिषु सदा तन्नामानः प्रतिष्ठिताः । पृथिवीत्यादिशब्दार्थास्ते हि मुख्यत ईरिताः । तत्संबन्धात्तदर्थत्वं पृथिव्यादेरमुख्यतः । प्रथनादेव सर्वादेः पृथिवीत्वमुदाहृतम् । अग्नित्वमदनाच्चैव ह्यन्तरीक्षणयोगतः । अभावाव्द्यवधानस्य त्वन्तरिक्षमितीर्यते । आदानादायुषश्चैव स आदित्य उदीरितः । द्यौः क्रीडाकारणत्वाच्च तत्सर्वं हि परे हरौ ॥ ' इति च । ' पञ्चात्मकं यो लोकेषु सदोपास्ते हरिं परम् । ऊर्ध्वाधःसंस्थितास्तस्य पञ्चैव दशमूर्तयः । मोक्षादिकमभीष्टं यत्कल्पन्तेऽस्य सदैव हि ॥ ' इति च ॥ २ ॥

' पञ्चरूपं तु यो विष्णुं पुरोवातादिषु स्थितम् । उपास्ते वृष्टिरस्मै स्याद्वर्षयत्यस्य मुक्तिगान् । सर्वभोगांश्च भगवान् पञ्चरूपी जनार्दनः ॥ ' इति च ॥ ३ ॥

' अप्सु पञ्चविधोपासी यो नारायणवान् भवेत् । न चास्य मृतिरप्सु स्यादप्सुषड्भगवान् हरिः ॥ ' इति च । अप्सुस्थितनारायणवान् मुक्तो भवतीत्यर्थः । अपः सूत इत्यप्सूर्भगवान् । दीर्घलोपेनाप्सुमानिति वा ॥ ४ ॥

हेमन्तशिशिरयोरैक्येन पञ्चत्वम् । ' ऋतुनामानमृतुगमृतुत्वादृतुनामकः । इत्युपासीत यो विष्णुं पञ्चात्मानममुष्य हि । मोक्षादीन्कल्पते चास्य ऋतुसंस्थो जनार्दनः । रक्ष्यत्वात्तेन तद्वांश्च सदैव स्यादुपासकः ॥ ' इति च । ' वासस्य सुखकारित्वाद्वसन्तः पुरुषोत्तमः । नीहारेरणाद्ग्रीष्मो वर्षणाद्वर्ष उच्यते । शं रातीति शरत्प्रोक्तो हेमन्तो हिमकारणात् ॥ ' इति च ॥ ५ ॥

' पालनात्सुखकारित्वात्पशुनामा जनार्दनः । मुक्तस्तद्वान्भवत्येव पशुपूपासको हरेः ॥' इति च । यज्ञेनाञ्जनहेतुत्वादजस्थो भगवानजः । अविस्थश्चविरवेरू ऊर्णशायी ततोऽवनात् । गौश्च सद्गतिहेतुत्वाद्गोस्थः स पुरुषोत्तमः । अश्वश्चैवाशु गन्तृत्वात्पुरुषः पूर्तिहेतुतः ॥' इति च । भवन्ति ह्यस्य पशव इति प्रसिद्धपशव एव । अजा इत्यादि बहुवचनं बहुरूपत्वाद्भगवतः ॥ ६ ॥

' परस्मादुत्तमं प्रोक्तं परो इति ततः परम् । परोवरं परं तस्मात्प्रोक्तं पारोवरीयकम् । परोवरीयांस्येतानि विष्णो रूपाणि सर्वशः । तेषां विशेषो नैवास्ति सदा तानि समानि हि । अत्युत्तमोत्तमान्येतान्यन्यस्मात्सर्वतोऽपि तु ॥' इति च । ' प्राणो नेतृत्वतो विष्णुर्वाक्सर्ववचनात्सदा । चक्षुश्च दर्शनान्नित्यं श्रोत्रं श्रवणहेतुतः । मनो मन्तृत्वतश्चास्य ह्येक एव तु पञ्चधा ॥ ' इति च । परोवरीयो ब्रह्मास्य भवति सर्वापेक्षितदातृत्वात् ॥ ७ ॥

' आदिः कल्पादिहेतुत्वात्क्रोडात्मा केशवः स्वयम् । दुष्टोपद्रवकर्तृत्वान्नरसिंह उपद्रवे ॥' इति च । ' हुंकारसहिते वाक्ये प्रद्युम्नस्तु सदा स्थितः । आकारयुक्ते वाराहो वासुदेवः प्रसंयुते । नारायणस्तथोद्युक्ते प्रतियुक्तेऽनिरुद्धकः । उपयुक्ते नृसिंहश्च नीतिसंकर्षणस्तथा । अभावे यावदेते स्युस्तावचदैवतं स्मृतम् । एवं सप्तविधं विष्णुं य उपास्ते सदा विभुम् । वाङ्नामा भगवांस्तस्य भवेत्सर्वार्थदोहकृत् ॥' इति च ॥ ८ ॥

'आदित्यस्थं परं विष्णुं ध्यायेदादित्यनामकम् । सप्तरूपं साम चासौ सर्वदा समरूपतः । सर्वेषां मां प्रतीत्येव दृष्टिसाम्याच्च साम सः । दृष्टिसाम्यं मण्डलस्य विष्णुस्तस्य च कारणम् । तस्मिन्निमानि भूतानि सर्वाण्येवाश्रितानि हि । उदयात्पूर्वमेवासौ भवेत्प्रद्युम्ननामकः । पश्चाचारस्तदात्माऽसौ वासुदेवस्तथोदये । आश्रयश्च नृणां तत्र वराहः संगवे तु सः । तत्र पक्ष्याश्रयो विष्णुस्तथा नारायणाभिधः । मध्यंदिने स आधारो देवानां च ततः

परम् । अनिरुद्धः स आधारो गर्भस्थानां सदैव हि । ततः परं नृसिंहाख्यः स आरण्याश्रयो मतः । अथास्तमितवेलायां स संकर्षण ईरितः । आश्रयः स पितॄणां च सप्तात्मकमुपास्य तम् । प्राप्नोति परमं स्थानं मुक्तः संसारसागरात् ॥' इति च । हिङ्कारनामानमाश्रितत्वाद्धिङ्कुर्वन्ति । प्रस्तावाश्रयत्वात्प्रस्तुतिकामाः प्रारम्भकामाः । प्रशंसाकामाश्च । प्रारम्भावतारत्वात्प्रशंसादेवतात्वाच्च तस्य । सर्वाधारत्वाद्वराहस्य तदाधाराणां पक्षिणामन्तरेणैव गमनम् । नारायणनामार्थत्वेन सर्वगुणपूर्त्योपासनादेव सर्वोत्तमा देवाः । इतरमूर्तीनामपि सर्वगुणपूर्त्योपासने नारायणोपासनमेव भवति । सर्वगुणपूर्त्यर्थत्वान्नारायणशब्दस्य । अनिरुद्धाश्रयत्वाद्गर्भाणां पितुः शरीरादन्यत्र प्रतिष्ठिता अपि न विनश्यन्ति । वर्धन्ते च तत्रैव । अन्यद्धि मुक्तं जीर्यत एव । 'धाता गर्भं दधातु ते' इति च श्रुतिः । धाता हि भगवाननिरुद्धः । विष्णुस्त्वष्टा प्रजापतिर्धाता इति चतुर्मूर्तयो ह्युच्यन्ते । 'योनिक्लृप्तिर्वासुदेवाद्रूपं संकर्षणाद्भवेत् । आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणम् ॥' इति च । 'व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टा त्वेषाद्द्वितीयकः । प्रजापतिः प्रजापातान्निषेकः पातनं ततः । प्रजापतिस्तु प्रद्युम्नो धाता धारणकर्मतः । अनिरुद्ध इति प्रोक्तः कृष्णरामौ तथाश्विनौ ॥' इति च । 'कक्षश्वभ्रे नृसिंहस्य सदावस्थितिकारणात् । द्रवन्ति कक्षश्वभ्राभ्यां तदज्ञानेऽपि रक्षणात् । मृगा भीता यतस्तेषां नृसिंहस्त्वाश्रयः सदा । पितॄणामाश्रयो यस्मात्संकर्षण उदाहृतः । अतस्तान्प्रति पिण्डादीन्निदधत्यज्ञका अपि । अन्यथा तन्मृतानां तु कुत एवोपतिष्ठति ॥' इति च । 'न रूपाणां विशेषोऽस्ति गुणतो नामतोऽपि वा । तथापि तत्प्रियं नाम नारायण इति स्म ह । विशेषतः समस्तानां नाम्नां तस्यार्थ एव तु । विज्ञायते गुणैः पूर्तिर्नामसाम्यं तदाऽथवा ॥' इति च । 'नाम्नो नारायणाख्यस्य गुणैः पूर्तिं हि देवताः । विज्ञायार्थमुपास्यैव सर्वाधिक्यमवापिरे ॥' इति च ॥ ९ ॥

'यस्मान्यः सदृशो नास्ति स्वरूपाणि समानि च । स आत्मसंमितो विष्णुरतिमृत्युरमृत्युतः । प्रद्युम्नादिस्वरूपेण स विष्णुः सप्तधा स्थितः । समानि तानि सर्वाणि ज्ञानानन्दबलैस्तथा । ज्ञानादित्रयवाचीनि त्र्यक्षराण्यपि सर्वशः । हिङ्कारदीनि नामानि सर्वेषामपि सर्वशः । आदिनाम्नः प्रकारस्तु योज्यः स्यात्प्रतिहारतः । तेन त्र्यक्षरमेव स्यान्नामद्वयमपि प्रभोः । उपद्रवे तु वःकारो यद्यपि व्यतिरिच्यते । नाम नारायणस्यैव सोऽपि क्षीराब्धिशायिनः । व्यञ्जनस्वरसंगैस्तु सोऽपि ज्ञानादिवाचकः । त्रिवर्णत्वात्समः सोऽपि ज्ञानाद्यैः पुरुषोत्तमः । वःकारार्थपरिज्ञानात्प्राप्योऽब्धिशयनः प्रभुः । एकविंशार्णविज्ञानात्प्राप्योऽसौ सूर्यमण्डले । स एव भगवान् विष्णुर्द्वाविंशद्रूपवान्यतः । तान्येव सप्त रूपाणि विभिद्यन्ते त्रिधा त्रिधा । एकः पयोऽब्धिशयन इति द्वाविंशतिः प्रभोः । प्रद्युम्नाद्यास्तु चत्वारो द्विषण्मासेषु संस्थिताः । त्रिशस्त्रिशः केशवाद्या वसन्तादिषु पञ्चमः । रूपद्वयं तु षष्ठस्य स्थितं मत्स्यादिपञ्चकम् । तृतीयं पृथिवीसंस्थं जामदग्न्याख्यमेव तत् । अन्तरिक्षद्युसूर्येषु सप्तमस्य त्रिधा तनुः । रामः कृष्णः कल्किरिति तज्ज्ञानात्तान्यवाप्य च । द्वाविंशेन पयोऽब्धिस्थं प्राप्यते रूपमक्षरम् । एतद्द्वाविंशकं रूपं नाकं चासुखवर्जनात् । पूर्णानन्दस्वरूपत्वाद्विशोकं शोकनाशनात् ॥' इति सामसंहितायाम् । प्राप्नोतीहादित्यस्य जयम् । इह पृथिव्यादिषु स्थितभगवत्प्राप्तावप्यादित्यस्थ एव प्राप्यते । ऐक्यात् । परो ह्यस्यादित्यस्य जयाज्जयो भवति । आदित्यस्थस्याऽऽदित्यनाम्नो भगवतः प्राप्त्या परो जयः रूपान्तरप्राप्तिरपि भवति । 'स्वरूपमेकं प्राप्तस्तु विष्णोः स्यात्सर्वरूपगः । ऐक्यात्तथापि संप्राप्तिर्बहूपास्त्या सुखाधिकी ॥' इति च । जयो नाम प्राप्तिरेव । धनजिते स्वर्जिते सत्राजित इत्यादिवत् । केशवादिरूपेण ललाटादिषु स्थितेरिति एकविंश इत्युच्यते । 'चित्रादियोगदातृत्वान्मासनामा स्वयं हरिः । लोकः प्रकाशरूपत्वादादित्यश्चादनादपाम् ॥' इति च ॥ १० ॥

'प्राणसंस्थे हरौ प्रोतं गायत्रं साम सर्वदा । तद्वाचकं नियम्यं चेत्यतः प्रोतमितीर्यते । प्राणस्थविष्णोः सामीप्यात्तत्स्थमेतदितीर्यते । क्वचिन्निर्देशसामीप्याद्विष्णोरेतदितीर्यते ॥' इति च । 'प्राणस्थविष्णुलाल्यत्वात्प्राणीत्येवाभिधीयते । मोक्षस्तु सर्वमायुः स्यान्नित्यत्वाज्ज्योक्समस्तवित् ॥' इति च ॥ ११ ॥

'मन्थनादिस्थितं यस्तु तन्नामानं हरिं परम्। नक्तक्रियैकहेतुत्वाद्योऽग्नौ ध्यायेज्जनार्दनम्। रथन्तराश्रयं पञ्चरूपं स च विमुच्यते ॥' इति च ॥ १२ ॥

'मिथुनस्थं पञ्चरूपं ध्यात्वैव पुरुषोत्तमम्। अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः ॥' इति च। मिथो नयतीति मिथुनं भगवान् ॥ १३ ॥

'आदित्यनाम्नि पञ्चात्मन्यभिध्याते जनार्दने। पर्जन्यनाम्नि चर्त्वाख्ये लोकाख्ये पशुसंज्ञके। अङ्गाख्ये देवताख्ये च सर्वाख्ये च प्रतिष्ठितम्। बृहदाद्यं च यो वेद मुच्यते नात्र संशयः। समुद्रेकात्समुद्रस्तु देशनाद्दिश उच्यते। लोपकत्वाल्लोम च स्यात्तत्वोरूपस्त्वगुच्यते। मादनात्सारूपत्वान्मांसोऽस्थित्वाच्चनास्थिरम्। मदस्य जननान्मज्जा सोऽङ्गमन्तिगतत्वतः। वायुर्ज्ञानात्तथायुष्ट्वान्नक्षत्रं च स्वतन्त्रतः। चद्रमाः परमानन्दात्त्वैविद्यो ज्ञानरूपतः। वयांसि व्ययनाच्चैव वीत्याकाशस्तयोच्यते। तत्रायनाद्वयः प्रोक्तो मरीचिर्मितरुक्त्वतः। सर्पः सर्पणहेतुत्वाद्गन्धर्वो गोधरत्वतः। पिता स सृष्टिहेतुत्वात्सर्वे पूर्णगुणत्वतः। एतैर्नामभिरुद्दिष्टो भगवान् पुरुषोत्तमः ॥' इति च ॥ १४–२० ॥

'यादृश्यैवोन्नतिर्योग्या तस्याः सर्वात्मनाऽऽयतिः। सर्वभावस्तु विज्ञेयो न तु सर्वस्वरूपता ॥' इति च। न च स्वर्वस्वरूपता पुरुषार्थः। नारकित्वादेरपि प्राप्तेः। न चार्थान्तरकल्पना युक्ता। प्रमाणाभावात्। 'असनान्मितिरूपत्वादस्मीत्युक्तः परो हरिः। तं सर्व इत्युपासीत पूर्णता सर्वता स्मृता ॥' इति च। सर्वमस्मीत्युत्तमपुरुषत्वे तेभ्यो न ज्यायः परमन्यदस्तीति ज्यायःपरशब्दौ व्यर्थौ। अन्यस्यैवाभावात्। अतस्ततोऽन्यदस्तीति सिद्धम्। अतस्ततोऽन्यत्परमज्याय एव नास्ति। ज्यायो लक्ष्मीर्विद्यते। परमज्यायस्तु भगवानेव। जीवैक्याङ्गीकारे यस्तद्वेदेति तच्छब्दोऽप्ययुक्तः। तदा स्वात्मानं वेदेत्येव स्यात्। न च प्रसिद्धभेदानुवादः। श्रुतिं विना तत्स्वरूपस्यैवासिद्धेस्तद्भेदस्यातिशयेनासिद्धिः। ऐक्य ईश्वरस्य स्वज्ञानमस्तीति न तद्रूपस्य जीवस्याज्ञानादिकं युज्यते। औपाधिकभेदाङ्गीकारेऽप्युपाधिरूपयोरैक्याद्भयोरप्यज्ञत्वं कुर्यात्। उपाधिनिमित्तदोषाश्चोभयोरपि स्युः। उपाधिसंबन्धस्य समत्वात्। उपाधिसंबन्धस्यासिन्नन्यथा तस्मिन्नन्यथेति विशेषार्थनयनमसाविति भेदस्योपाधिं विना स्वत एवापेक्षितत्वात्। अतः स्वतो भिन्नस्यैवोपाधिना विशेषो भवति। 'यस्तु भिन्नः स्वतः खादिस्तस्य भेदो ह्यबुद्धिनाम्। उपाधिभिर्ज्ञाप्य एव न तु भेदं स्वयं सृजेत्। उपाधिरप्यभिन्नस्य भेदं साधयितुं क्वचित्। न क्षमः सिद्धभेदस्य ज्ञापकः स्यादबुद्धिनाम्। आकाशा अप्यतस्त्वेते ह्यनन्ता अणुकादिवत् ॥' इति ब्रह्मतर्के। अतो न जीवेशाभेदः। 'न तु देवः स्वयं भूत्वा देवदेवं समर्चयेत्। समानव्यवहारे हि न पूज्यः पूजको भवेत् ॥' इति परमसंहितायाम्। 'अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात्' 'प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ' 'अन्यदेव तद्विदितादथो अविदितादधि' 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्।' 'अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता। आधिपत्यमृते चैव भोगेन विषयेण च। आनन्दादीनृते मुक्ताः सर्वे ते ब्रह्मणः समाः ॥' इत्यादेश्च। 'प्रद्युम्नादीनि रूपाणि त्रीणि त्रीण्येव पञ्च च। ऋगादिस्थानभेदेन नित्याभिन्नानि चेशनात् ॥' इति सामसंहितायाम्। दृष्टवस्तुनो मिथ्यात्वाङ्गीकारे च युक्त्यपेक्षा। न तु सत्यत्वे। दृष्टस्य सत्यतायां तु युक्तिर्वाऽयुक्तिरेव वा। भूषणं तस्य मिथ्यात्वे युक्त्यभावोऽतिदूषणम्। युक्तिश्च दोष एव स्याद्बलवन्मानवर्जिता ॥' इति ब्रह्मतर्के। न च शून्यत्वमिथ्यात्वयोः कश्चिद्विशेषः। तत्प्रमाणाभावात्। अतः सत्य एव भेदः। न च कदाचित्कस्यापि नासीदस्ति भविष्यतीति बुद्ध्यभावे व्यावहारिकसत्यमित्यत्रास्माकं विरोधः। तदभावे च न शून्याद्विशेषः। 'सत्यमेनमनुविश्वे मदन्ति' इत्यादिश्रुतेश्च सत्यो भेदः। 'प्रपञ्चो यदि विद्येत निवर्तेत न संशयः। मायामात्रमिदं द्वैतमद्वैतं परमार्थतः। विकल्पो विनिवर्तेत कल्पितो यदि केनचित्। उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥' इत्यादिश्रुतेश्च। प्रपञ्चो भेदः यदि विद्येत भवेत उत्पद्येत तर्हि निवर्तेत। अतो न जीवे-

श्वरादिभेद उत्पद्यते । किन्तु नित्य एव । अतो मायया भगवत्प्रज्ञानेन मातरं तं च मात्रम् । भगवाञ्जानाति रमते चास्मिन्भेद इति । तच्च भगवद्रूपमद्वैतं परमार्थो भगवांस्तद्रूपेणाद्वैतम् । यदद्वैतं नामोच्यते तत्परमार्थभगवदपेक्षयेत्यर्थः । स्वगतभेदो भगवति नास्तीत्युक्तम् । न च कल्पनामात्रो भेदः । यदि केनचित्कल्पितो विकल्पस्तथापि निवर्तेत । तस्मादुपदेशादयमेव वादः । केनापि तत्प्रसादेन विनाऽविज्ञातत्वादज्ञातो भगवांस्तद्गतो भेदो न विद्यत इति । 'जीवेश्वरगतो जीवेष्वथ जीवजडात्मनोः । जडेशयोर्जडेष्वेवं पञ्चभेदः प्रपञ्चकः । प्रकृष्टमोक्षहेतुत्वात्तज्ज्ञानं प्रेति कथ्यते । प्रकृष्टपञ्चकत्वाद्वा प्रपञ्चोऽयं प्रकीर्तितः । यद्ययं सादिरेव स्यान्निवर्तेत कदाचन । न निवर्तते यतस्तेन नायं सादिर्भवेत्क्वचित् । मायेति विष्णुविज्ञानं तन्मितत्वाच्च न क्वचित् । भ्रान्तत्वमस्य यद्विष्णोर्नैव भ्रान्तिः कथंचन । रमते चात्र यद्विष्णुर्न हि भ्रान्तौ रमेद्धरिः । परमार्थे हरौ नैव भेदोऽस्ति जडजीववत् । यद्ययं कल्पितो भेदः कस्मान्नैव निवर्तते । तस्माद्भूतभविष्याख्यभवदाख्यपराभिधाः । तदन्ये चैक एवास्मिन्नोंकाराख्ये जनार्दने । अज्ञातनामके तस्मिन्न भेदोऽस्ति कथंचन ॥' इति ब्रह्मतर्के । विदिः कादाचित्कस्वरूपलाभ इति च धातुः । भिद्येतेतिवद्विद्येतेति शब्दः । परमार्थ इति विश्वतश्चक्षुरितिवत्सप्तम्यर्थे । परमार्थे द्वैताभावा एवेत्यर्थः । परमार्थः परमात्माऽद्वैत इति प्रथमार्थो वा । न हि विद्यमानं निवर्तेत इति नियमः । उत्पद्यमानं हि प्रायो निवर्तते । जीवेश्वरप्रकृत्यादिकं बहुलं हि विद्यमानं न निवर्तते । न च कल्पितो विकल्प इति पक्षे कल्पितो यदीति यदिशब्दो युज्यते । कल्पितत्वं चेच्छ्रुतेरभिप्रायः अविद्यमानोऽयं प्रपञ्चो विनिवर्तते कल्पितो विकल्पो विनिवर्तत इत्येव शब्दः स्यात् । न तु निवर्तेतेति । अतः सत्यतापरमिदं वाक्यं भेदस्य । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' 'एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः' इति निन्दनाच्च । विद्यात्मनि भिदा बोधः । 'जुष्टं यदा पश्यत्यन्यमीशमस्य' इत्यादिभेदज्ञानस्य प्रशंसनाच्च । अतोऽस्यानामितत्वाच्चासीति भगवन्नामैवैतत् ॥ २१ ॥

सर्वदा समत्वात्साम भगवान् । तस्योद्गानप्रकारो विनर्दिवृषभस्वरवन्मेघनर्दनवद्वा । तदेव वृणे । सर्वोत्तमत्वात् । 'विष्णोः स्वरो वृषभवन्मेघनादवदेव वा । स्त्रीपशुस्वरवद्ब्रह्मेर्गम्भीरोऽनुपमो विभोः । ब्रह्मणस्त्वथ सोमस्य साक्षाद्घण्टानिनादवत् । मृदुमेघस्वरो वायोरिन्द्रस्य स्तनयित्नुवत् । बृहस्पतेः क्रौञ्चवच्च वरुणस्य तु विस्वरः । एकस्य पादवर्षस्य स्वरो विष्णोरुदाहृतः । वायोर्विंशतिवर्षस्य ब्रह्मणस्तु तदन्तरा ॥' इति च । 'गायेदेतैः स्वरैस्तस्माद्यथाशक्ति न विस्वरम् । अधिकारी सदौद्गात्रे मुख्यतः प्राण एव यत् । अतो मोक्षादिदाने स देवादीनां क्षमो भवेत् । अन्येषां स ददातीह मद्धृदिस्थ इति स्मृतिः । कार्यां हि नान्यथा कुर्याद‌वमन्ताऽन्यथा भवेत् । देवानां मोक्षदानादौ न हि मानुष ईश्वरः । अतः प्राणो हृदिस्थो मे ददातीति स्मृतिर्भवेत् । संकल्पोक्त्यादिकर्ता च प्राण एव यतः सदा । आगायानीति युज्येत तस्मात्तस्मिन्हि मुख्यतः । आत्मेति भगवान्विष्णुः प्राणस्थः पुरुषोत्तमः । तस्मा अन्नं ह्यर्थतस्तु प्राणस्यान्नभुजिर्भवेत् । प्राणस्याप्यमृतत्वं हि मुख्यमेव फलं यतः । देवान्तर्भावतो विष्णोर्नामृतत्वं क्वचादिमत् । इन्द्रे बलं ददानीति स्वरान् घोषबलात्मकान् । ब्रूयादग्रस्तानिरस्तानूष्मणः स्पर्शानपि । समस्तान् बलदानार्थमिन्द्रे चैव प्रजापतेः । विष्णोः स्वात्मानमेवाहमर्पये मृत्युवर्जितान् । मोक्षयोग्यान् करिष्यामीत्येवं स प्राण एव तु । कुर्यादन्यस्तु मत्स्थस्तु प्राण एवेदृशः क्षमः । करोतीति स्मरेन्नित्यं नान्यथा तु कथंचन । देवावमन्ता हि तमो यात्यसंशयतो यतः । अत इन्द्रं प्रजापाख्यं विष्णुं मृत्युं च सर्वदा । शरणं गतोऽहमिति च ध्यायेत्सर्वत्र सर्वदा । ऐश्वर्यादिन्द्रनामा तु वायुः स्वरपतिः सदा । ऊष्माधिपस्तु भगवान् विष्णुरेव प्रजापतिः । मृत्युनामा तु संहाराद्रुद्रः स्पर्शाधिपः स्मृतः । मानुषाणां तु शरणमितरेषां तु वायुतः । वायोस्तु बलदानाद्यं मोक्षदानादिकं हरेः । यस्माद्वायुपदे योग्या बहवस्त्विन्द्रनामकाः । अत इन्द्रे ददानीति स्मृतिः प्राणस्य युज्यते ॥' इति सामसंहितायाम् । सर्वोपद्रवकर्तॄणामसुराणां कुबुद्धिनाम् । उपालम्भे कृते युक्तं विष्णुस्त्वां प्रतिपेक्ष्यति । रुद्रस्त्वां

घक्ष्यतीत्यादि नान्यथा तु कथंचन ॥' इति च। मृत्योः सकाशादात्मानं परिहराणीति। 'ब्रह्मा प्रजापतिश्चेति विष्णुरन्यं प्रबोधयन्। तथेन्द्रनामा वायुश्च परेषां बोधको यदा ॥' इति च। बृंहयति प्रजाः पाति इदं रातीति व्युत्पत्तिभिः ॥ २२ ॥

'सर्वधर्मैः पुण्यलोको ब्रह्मज्ञानाद्विमुच्यते। ॐकारो ब्रह्मणो नाम सर्ववागात्मकश्च सः। तद्व्याख्यात्वात्सर्ववाचां सर्ववागात्मता भवेत्। इदं तु प्रस्तुतत्वात्स सर्वं चाप्यर्थपूर्णतः। सर्वशब्दान्वितत्वाच्च न लिङ्गव्यत्ययो भवेत्। आधिक्यं चैव सर्वत्वं प्रस्तुतं तद्यथेति तत् ॥' इति च। 'अकाराद्याः क्रमेणैव भूरादेः साररूपिणः। अस्मादयं सार इति ज्ञानमेवाभितापनम्। संप्रस्रावश्च तद्दृष्टिर्ब्रह्मणः परमस्य हि। नित्यज्ञानोऽपि भगवान् क्रीडयाऽचीक्लृपद्यदा। तदाऽभितापशब्दोऽयं वर्तते परमात्मनि ॥' इति च। तपःशब्देनैव यतिधर्मश्चोक्तः। 'सर्वेषामाश्रमस्थानामज्ञानां पुण्यलोकता। अपरोक्षदृशां विष्णोरमृतत्वं न चान्यथा ॥' इति च। 'यज्ञाध्ययनदानैस्तु गृही स्यात्सोमलोकगः। यतयस्तपसा सूर्यं चत्वारोऽपि विशेषतः। गच्छन्ति तपसैवर्षीन् वनस्था ब्रह्मचारिणः। नैष्ठिका वालखिल्याश्च गुरुशुश्रूषयैव तु। यदि पश्यन्त्येत एव साक्षाद्देवं जनार्दनम्। अमृतत्वं तदा यान्ति नान्यथा तु कथंचन ॥' इति च। न च संन्यासमात्रेणामृतत्वम्। 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इति श्रुतेः। विद्यैव तु निर्वारणादिति भगवद्वचनम्। 'न रोधयति मां धर्मो न सांख्यं योग उद्धव। न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं न दक्षिणा ॥' इति च। 'न च संन्यसनादेव सिद्धिं समधिगच्छति' इति च। 'तस्य पुत्रा दायमुपयन्ति' इत्यादेर्गृहस्थादीनामपि ज्ञानिनां मोक्षः प्रतीयते। 'सर्ववर्णाश्रमाणां च ज्ञानान्मोक्षो विनिश्चितः। अन्त्यानां स्थावराणां वा तथापि यतिरुत्तमः। ज्ञानद्वारो यतो न्यासो विशेषेण भविष्यति ॥' इति च। 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इति च ॥ २३ ॥

'वसुरुद्रादिदेवेषु विश्वेषु स्थितमीश्वरम्। तन्नामानं हरिं मन्त्रैर्लोकद्वारादिभिः प्रभुम्। प्रार्थयित्वा दिवं त्वशो मोक्षं प्राप्नुयात्तथा। यजमानो नान्यथा तु लोकोऽस्य प्राप्यते वरः। राज्यं पृथिवीलोके राज्यमित्युच्यते बुधैः। विराज्यमन्तरिक्षे तु स्वाराज्यं स्वर्गगं भवेत्। एतेषु मोक्षोऽपि भवेन्मानुषाणां विशेषिणाम्। श्वेतद्वीपं तथा गत्वा दृष्ट्वा विष्णुं च ते ततः। अनुज्ञाताः प्रमोदन्ते निर्दुःखास्तु धरादिषु ॥' इति च। 'यो देवानां नामधा एक एव' इति श्रुतेश्च भगवत एव वस्वादिनामानि। 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इति वचनाच्च भगवानेव प्रार्थ्यः। भगवत्स्वरूपस्य सम्यगपरिज्ञानाद्रागाच्च तेषामन्तवत्फलत्वम्। 'न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते।' 'गतागतं कामकामा लभन्ते' इति वचनात्। 'सर्वोत्तमत्वस्याज्ञानाद्विष्णोरन्धं तमो भवेत्। तद्द्वेषात्किमु वक्तव्यं ब्रह्मादिद्वेषतोऽपि वा। तारतम्यापरिज्ञानादनुत्थानं तमो भवेत्। अपराधकृते तेषां निरयं त्वेव गच्छति। पूजाया अकृतेस्तेषां न वर्णेषु जनिर्भवेत्। सम्यक्कर्माननुष्ठानात्स्वर्गं नैवोपगच्छति। अपरोक्षदृशोऽभावान्मोक्षं नैवोपगच्छति ॥' इति च। 'पूर्वपूर्वगुणैर्दोषा न शक्ता उत्तरोत्तराः। स्थानद्वयोत्तरे शक्ता मोक्षो नानपरोक्षिणः। विरक्तरागिणां नैव ह्यपरोक्षदृशिर्भवेत्। यावद्रागविनाशः स्याद्विरक्तो भक्तिसंयुतः। सर्वदैवाप्रमत्तश्च पश्येदेव हरिं परम्। अविस्मृतिः सदा विष्णोरन्यथा ज्ञानवर्जनम्। शास्त्राभ्यासः सदोद्योगाच्छ्रवणाच्च विचारतः। निषिद्धकर्मणां त्यागः स्वधर्मस्य कृतिः सदा। अप्रमाद इति प्रोक्तः शास्त्रं वेदास्तु पञ्च च। भारतं पञ्चरात्रं च मूलरामायणं तथा। पुराणं भागवतं चैव पञ्चमो वेद उच्यते ॥' इति च। 'त्रिलोकप्राप्तिपरिघास्त्रयः सन्ति सनातनाः। तेषामग्न्यादिगो विष्णुरपहन्ता स्मृतो भवेत्। मृतः सन् सुखभोगाय यत्र गच्छति तत्र ह। एकैकः परिघोऽग्रे स्याद्धते तस्मिंस्तु विष्णुना। यजमानः पृथिव्यादिलोकान् भोगाय याति हि ॥' इति च। 'यज्ञाति यज्ञमातारं यज्ञमात्रा हरिस्तु सः। तमेवं वेत्ति यो भक्तो याति स्वर्मुक्तिमेव च ॥' इति च ॥ २४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये द्वितीयोऽध्यायः ॥

---

## तृतीयोऽध्यायः

'य आदित्यगतो विष्णुः स एव मधुनामकः । मदधिर्मधिवति प्रोक्तो मदः सुखमिहोच्यते । अइत्याधिक्यमुद्दिष्टं मज्ज्ञानततिरुच्यते । तद्वत्ता ततिरुद्दिष्टा तेनानुभव ईरितः । अधिकोऽनुभवो यस्य सर्वस्मादीप्सितादपि। सोऽयं मद इति प्रोक्तः सर्वे हि सुखसाधनम्। तत्पूर्णो मधुनामा स्यात्तृतीयोऽतिशयार्थकः। देवानामुपजीव्यत्वात्स देवमधुनामकः । आदित्वादाततत्वाच्च ज्ञानरूपत्वतस्तथा । आदित्य इति संप्रोक्तः प्रसिद्धमधुवच्च सः । तिरोवंशादिसंयुक्तो द्युनाम्नी च द्युसंस्थिता। प्रकाशादिगुणैः श्रीस्तु वायोराश्रयरूपतः। तिरोवंश इति प्रोक्ता मध्वपूपस्तु मारुतः । तस्मिन्संनिहितो विष्णुर्विशेषेण यतः सदा । सोऽन्तरिक्षमिति प्रोक्तः स्वान्तः सम्यग्परीक्षणात् । अन्तरिक्षस्थितश्चासौ वस्वाद्या मधुकारिणः। तत्पुत्रास्तु मरीच्याद्याः सूर्यरश्मिषु संस्थिताः। तिर्यक् स्थित्वा वशे कुर्याद्यस्मादेवी रमा हरिम्। भक्त्यैवातस्तिरोवंशस्तिर्यक्त्वं प्रणतिः स्मृता । तिर्यक् स्थित्वा स्वसंस्थं तु वशीकुर्याद्यतस्ततः। वंशस्तिरश्चीनोऽन्योऽपि यस्मिन्नाप्यमुपस्थितम्। सोऽपूप आप्यो भगवान्मध्वाज्यादिप्रसिद्धगम्। प्राच्यरश्मिषु संस्थस्तु रतिशं मानरूपतः। प्राच्यरश्मिरिति प्रोक्तो वासुदेवाभिधो हरिः । एतद्विना नालमिति नाडीत्यंश उदाहृतः। स्वरूपांशैर्विना प्राप्तुं नालं हि प्रापितांशिनम्। ऋग्वेदमानिनश्चैव वह्न्याद्या वसवस्त्वृचः । अर्च्यत्वात्प्रथमं चैव विशेषाद्यज्ञदेवताः । इन्द्राद्या यजुरुद्दिष्टा रुद्रा इन्द्रसखा यतः । इन्द्रशब्दोदितो वायुः स याज्यः सोमभुक्पुरः। स हि शंकरपूर्वाणां रुद्राणां मुख्य एव च । सामनामान आदित्या मासशः समभोगतः। इन्द्रो वरुण उद्दिष्टो यज्ञेषु प्रीयते यतः । आदित्यानामधिपतिः स हि विष्णुनियोजितः । विष्णुस्तूपास्यरूपत्वान्नोपासकगणे युतः । इतिहासपुराणानां सोमाद्या अभिमानिनः। अथर्वाङ्गिरसां चैवाप्यथर्वाङ्गिरनामकाः। अवरं वर्तयेयुस्ते वृष्टिमङ्गरसास्तथा । मनस्त्वात्प्राणरूपत्वादथर्वाङ्गिरसस्ततः। गुह्यादेशा ब्रह्मपदे ये योग्या ब्रह्मणा सह। सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते। ब्रह्मेति सर्ववेदानां नामानं तत्त्वतः स्मृतम् । ऋग्वेदादींस्तु ते देवा अग्न्याद्याः संव्यचारयन् । मधु ब्रह्म व्यक्तिकृत्त्वात्ते वै मधुकृतः स्मृताः। ज्ञानपोषकरत्वात्तु वेदाः पुष्पाभिधाः स्मृताः। अन्यत्र मधुकृत्पोषान्नित्यत्वादमृताश्च ताः । वेदवाचः सुरैः पेया भोग्यत्वादाप ईरिताः। वेदपानं विचारश्च श्रवणं पाठ एव च। देवैर्विचारितेभ्यश्च वेदेभ्यो व्यक्ततां गतः। ज्ञानानन्दस्वरूपत्वाद्यशस्तेजःस्वरूपकः। इन्द्रियं परमैश्वर्याद्वीर्यरूपश्च सर्वदा । सर्वानुग्रहशक्तित्वादन्नाद्यो बलरूपतः। रसनामा च भगवान्संस्थितः सूर्यमण्डले । व्यक्षरद्धर्ममोक्षादीन् देवानां भगवान्हरिः । ऋक्प्रोक्तो लोहिताकारो वासुदेवः परः पुमान्। स एव सूर्यलौहित्ये प्राच्यरश्मिषु संस्थितः । संकर्षणः शुक्लवर्णो यजुर्वेदोदितः प्रभुः । शुक्लवर्णे च सूर्यस्य दक्षरश्मिषु संस्थितः। प्रद्युम्नः श्यामवर्णस्तु सामवेदोदितः प्रभुः। प्रत्यग्रश्मिषु सूर्यस्य श्यामवर्णेऽपि च स्थितः। अनिरुद्धः सुनीलश्च इतिहासपुराणयोः। अथर्ववेदे चोक्तः सन्नुदग्रश्मिषु संस्थितः। सुकृष्णे सूर्यरूपे च मध्ये नारायणः प्रभुः। ऊर्ध्वरश्मिषु संस्थश्च प्रोद्यदादित्यसप्रभः। महामरीचिपुञ्जेन चलतीवाचलोऽपि सन्। स वाच्यः सर्ववेदानामेवं पञ्चात्मको हरिः । वेदानां सारभूतोऽसौ वेदानां नित्यताप्रदः। अतोऽमृतानाममृतो रसानां रस एव च ॥' इति सामसंहितायाम्। न चाचेतनमात्रमुपासितं पुरुषार्थप्रदानशक्तम्। ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयादिति वाक्यशेषाच्चैतदवगम्यते। 'य एतामेवं ब्रह्मोपनिषदं वेद' इति च। कथं चाचेतनोपासनं ब्रह्मादिपदप्रदं भवति। 'न वै तत्र न विम्लोचो नोदियाय कदाचन' । 'सकृद्दिवा हैवास्मै भवति ' इत्यादि च मुक्तस्यैव मुख्यतो युज्यते । यशस्तेजइन्द्रियवीर्यान्नाद्यरसत्वं च भगवन्तं विना कस्य मुख्यतो युज्यते । 'तस्य नाम महद्यशः' । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञान-( वैराग्ययो )विज्ञानयोश्चैव षण्णां भग इतीरणा ॥' 'रसो वै सः' । 'सुखात्मकं षड्गुणविग्रहं परं हृदि स्थितं ब्रह्म निरञ्जनं स्वरुक् । ऐश्वर्यवैराग्ययशोविबोधवीर्यश्रिया पूर्णमहं प्रपद्ये ॥' 'अहं तत्तेजोरश्मीन्नारायणं पुरुषं' इत्यादेश्च। 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः' इति च । न चाचेतनस्यैश्वर्यादिरूपत्वं युज्यते । 'ज्ञानात्मको भगवानैश्वर्यात्मको भगवान् शक्त्यात्मको भग-

वान्' इति च श्रुतिः। 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति सर्ववेदप्रतिपाद्यत्वं भगवत उक्तं भगवता। 'स सर्वनामा स च विश्वरूपः प्रसीदतां ब्रह्म महाविभूतिः' इति च। 'सर्वे वेदा यत्पदमामनन्ति' 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव'। 'वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते॥' 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इत्यादेश्च। उपनिषत्त्वाच्च विशेषतो न यत्किंचिदुच्यत इति वक्तुं युक्तम्। 'विष्णुरुक्तः सर्ववेदैर्मन्त्रैरपि विशेषतः। आरण्यके विशेषेण नैवान्यत्किंचिदुच्यते। कर्मार्थे च ब्राह्मणं स्यादमुख्यार्थविवक्षया। मुख्यतो विष्णुरेवैको ब्राह्मणेष्वपि कथ्यते। आरण्यकेष्वृते विष्णुं नैवान्यत्किंचिदुच्यते। सूत्रात्मा तूच्यते विष्णोस्तद्विशिष्टत्ववित्तये। कुत्रचित्तदुपास्तिश्च तस्याध्यर्धतनुत्वतः। तस्मिन्विष्णोरुपास्त्यर्थे नान्यथा किंचिदुच्यते॥' इति ब्रह्माण्डे। 'यस्यां न मे पावनमङ्गकर्मस्थित्युद्भवप्राणनिरोधमस्य। लीलावतारैरीप्सितकर्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः॥ वित्तं त्वतीर्थीकृतमङ्गवाचं हीनां मया रक्षति दुःखदुःखी। यत्र व्रजन्त्यघभिदोऽरचनानुवादाः शृण्वन्ति येऽन्यविषयाः कुकथामतिघ्नीः॥ यास्तु श्रुता हतभगैर्नृभिरात्तवीर्यास्तांस्तान्क्षिपन्त्यशरणेषु तमस्सु हन्ता॥' इत्यादि भगवद्वचनाच्च। सर्वासु शाखास्वारणमावर्तयेदारणमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेदित्युपनिषदभ्यासस्य सतात्पर्यं विहितत्वादभगवद्विषयस्य निन्दितत्वाच्च नोपनिषत्स्वन्यदुच्यते। 'अभ्यसेदधियज्ञं चाप्यधिदैवं विशेषतः। अध्यात्मं तु विशेषेण यस्माद्विष्णुस्त्रिषूदितः॥' इति स्कान्दे। 'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम्। इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन॥' इत्यादेश्च भगवदुपासना एव सर्वत्रोक्ताः॥ १—५॥

'प्रथमामृतस्य द्रष्टारो वसवस्त्वग्निपूर्वकाः। यावत्पश्यन्ति तं विष्णुं तावत्ते नान्यभोगिनः। एतदेव विशन्त्यद्धा मोक्षे ते तत एव च। स्वेच्छयैव समुद्यन्ति मुक्ताः सन्तो बहिस्तथा। एवं द्वितीयरूपं तु शिवाद्या वायुसंस्थिताः। वायोर्हिरण्यगर्भत्वात्पदद्वयमुदाहृतम्। रुद्राणामाश्रयत्वं च साध्यानामपि सर्वशः। अतो यजुर्विचारश्च सर्ववेदात्मनस्तथा। वायोरेव विचारः स्याद्ब्रह्मणोऽपि विशेषतः। उभयाश्रयः स मोक्षेऽपि वायुरेव हि सर्वदा। द्रष्टारोऽथ तृतीयस्य शक्रमुख्यादितेः सुताः। चतुर्थस्य तु सोमाद्या मरुतः पञ्चमस्य च। ऋजवो ब्रह्ममुख्या हि सुपर्णः शेष एव च। सरस्वती सुपर्णी च वारुणी साध्यनामकाः। अन्योन्यमुखता मुक्तौ ब्रह्मणां समता तथा। वाक्शेषादेर्मुखं ब्रह्मा मुक्तावपि विशेषतः। द्रष्टोभयस्यापि शिवो द्वितीयस्यान्तगस्य च। मोक्षे त्वन्यत्र चैकस्य परतः शेषभावतः। ये चैतत्पदयोग्याः स्युर्देवाः पञ्चमहागणाः। तेषामपि यदोपासा निश्छिद्रा मधुनामके। तदा वस्वादितां प्राप्य मुक्तिमेष्यन्त्यसंशयम्। उदेत्यास्तमयं यावद्याति भानुस्तु पर्वते। उदयास्ताद्रिमन्यस्य वसवः पतयः स्मृताः। ततश्चास्तमयाद्यावदर्धरात्रं दिवाकरः। दक्षिणादुत्तरं याति किंचित्पूर्वसमन्वितम्। तद्देशकालयोरीशा रुद्रा वायुपुरःसराः। वसुभोज्यादर्धकालमर्धदेशस्तथैव च। रुद्रभोज्योऽर्धरात्रात्तु याम आदित्यदैवतः। पश्चिमात्पूर्वमार्गस्तु रौद्रादर्धः प्रकीर्तितः। ततः परोऽर्धयामस्तु सौम्याद्दक्षिणमार्गकः। मारुतः काल उद्दिष्ट आदित्यार्धश्च देशतः। पश्चात्पश्चादुदेत्येव पूर्वतोऽस्तमुपैति च। ततस्तदर्धकालेन चोत्तरादुदितस्तथा। अस्तं दक्षिणतो याति स कालो मारुतः स्मृतः। उदेत्यैन्द्रपुरे चोर्ध्वमर्वागुदयपर्वते। अस्तमेति तदर्धेन ब्रह्मा तस्य पतिः स्मृतः। एकत्रिंशत्तु घटिकाः साधिका वसुदैवताः। तदर्धा रुद्रदैवत्यास्तत आदित्यदैवताः। तदर्धा मारुता ब्राह्मास्तदर्धा देशतस्तथा॥' इति च। रौद्रो द्विगुणीभूतो वसुकालो यावांस्तावान्भवतीति द्विस्तावत् अर्ध इत्यर्थः। ब्राह्मे मुहूर्ते इत्युषःकालस्य प्रसिद्धेश्च। रौद्रः काल इति पूर्वरात्रस्य प्रसिद्धेः। सार्धरात्रस्य सौम्यः कालः इत्यपररात्रस्य। सौम्यकालत्वाच्च तस्मिन् काले शीतमुत्पद्यते। मारुतकालत्वाच्च वायुश्च वाति। आग्नेयकालत्वादेवाह्नि सैकघटिकं होमकर्माणि विशेषतः प्रवर्तन्ते। 'अहः सर्वं वसूनां तु परेषां रात्रिरेव च। प्रदत्ता विष्णुना पूर्वं नालमित्यब्रुवन्परे। पुनर्विशेषतो दत्तं रुद्राणां मरुतां तथा। माध्यंदिनं तृतीयं चाप्यादित्यानां प्रदत्तवान्। विश्वेषा-

मपि देवानां सामान्याद्वसूनामहः ॥' इति च । 'सर्वस्याधिपतिर्ब्रह्मा रुद्राद्यास्तु द्वयोर्द्वयोः । वसवस्त्वह्न एवेशाः सामान्यान्न विशेषतः ॥' इति च । 'माध्यन्दिने तृतीये च रुद्रादेराज्यमिष्यते । तद्भृत्यत्वाद्वसूनां तु प्रातःकालो विशेषतः । तत्रापि वाय्वधीनत्वमग्न्यादीनां प्रकीर्तितम् । एवं पृथिव्यां रुद्राणामन्तरिक्षे प्रकीर्तितम् । मरुतां च द्युलोकेशा आदित्याः परिकीर्तिताः । सर्वेषामधिपो ब्रह्मा द्युवाधीशस्तु मारुतः । त्रिलोकाधिपतिश्चेन्द्रस्तेषामप्यधिपो हरिः ॥' इति च । स्वाराज्यं भोगः स्वरञ्जनात् । न त्विन्द्राद्यमो द्विगुणकालं तिष्ठति तस्माद्वरुणस्तस्मात्सोम इत्यत्र किंचिन्मानम् । न च सोमाद्द्विगुणमेव ब्रह्मा तिष्ठति । द्विपरार्धं हि तस्य कालः । इन्द्रादयो हि मन्वन्तरमात्रं तिष्ठन्ति । न च वसूनां पूर्वो देशो रुद्राणां दक्षिण आदित्यानां पश्चिमो मरुतामुत्तर एव नान्यत्रेत्यत्र प्रमाणमस्ति । तत्पक्षे रुद्रैः सह इन्द्रस्य दक्षिणत्वप्राप्तेश्च । अत इन्द्रादेवेन्द्रस्य द्विगुणकालत्वमिति विरोधः । न चेन्द्रशब्देन वायुस्तैर्गृहीतः । इन्द्रादिपुरीणामुद्वासत्वेनैवमङ्गीकारे तल्लोकशगुणत्वादूर्ध्वोदयस्यैकेन्द्रात्परतोऽनिन्द्रत्वमेव स्यात् । अथ तत ऊर्ध्वं उदेत्येति तत्पक्षे पश्चादप्यादित्यमावात्कल्पान्तलयो न स्यादित्याद्यनन्तदोषदुष्टत्वेऽपि ग्रन्थाल्पत्वायैवोपरम्यते ॥ ६ ॥

'वस्वादीनां तु सर्वेषां सर्वदिक्षु पुराण्यपि । सन्त्येवमपि धीवृत्त्यै प्रत्येकं दिक्षु कथ्यते ॥' इति च । ऐन्द्रया उद्वासे रुद्राणामेवोदयाभावः इति च दोषः । अतो यत्किंचिदेतत् । 'उदेति पूर्वतः सूर्यो निम्लोचति च पश्चिमे । एवं नियम उद्दिष्टो ब्रह्मणा विष्णुचोदनात् । द्विगुणं द्विगुणं कालमुदित्वा दक्षिणादिषु । मध्ये व्यवस्थितिः पश्चाद्ब्रह्माणं याचिता पुरा । हिरण्यकेन सूर्यस्य हिरण्याक्षेण वै पुनः । तदा सुराणां देवत्वं ब्रह्मा तत्प्रददौ तयोः । तच्छ्रुत्वेन्द्रादिभिः प्रोक्तः कथं प्रादाद्वराविमौ । देवता हि विनश्येयुरेवं दत्ते वरे त्वया । इत्युक्तो दैवतैः प्राह ब्रह्मा लोकपितामहः । न मया स वरो दत्तो दैतेयानां सुराः क्वचित् । येन युष्मद्विनाशः स्यात्ततो व्येतु च वोभयम् । दक्षिणाद्युदयो यस्तु स हि दैनंदिनो मया । अभिप्रेतो नैव चायं कालान्तरगतः क्वचित् । अर्धनाड्युत्तरा नाडीः सकाष्ठा नित्यशो रविः । पश्चादशोत्तरां गच्छेत्पूर्वरात्रे तु दक्षिणात् । तदर्धं पश्चिमात्पूर्वं तदर्धं चोत्तरादपि । दक्षिणां च तदर्धं स ऊर्ध्वादर्वाक्च गच्छति । दक्षिणाद्युदयस्त्वेष न तु कालान्तरे क्वचित् । यदोत्तरस्मात् द्विगुणः पूर्वो भवति वै सुराः । तदापि द्विगुणत्वं स्यात्तन्मयात्र विवक्षितम् । अहःसाम्येऽपि क्रमश आतपस्याल्पकालतः । गिर्यावृत्तेः क्षिप्रमन्येपूदयास्तमयाविव । कालान्तरे भाविनं तु दक्षिणाद्युदयं पुनः । अपेक्ष्यैव वरो दत्तो द्वितीयो देवता मया । समयश्च कृतो नित्यो मया सूर्यस्य चानघाः । पूर्वस्मादुदयो नित्यः पश्चिमेऽस्तमयस्तथा । नियमो नान्यथाऽयं स्यात्कदाचित्केनचित्क्वचित् । तस्मान्न वो भयं क्वापि प्रोक्ता इत्थं सुरास्तदा । विशोका अभवन्सर्वे ययुः स्वं स्वं निवेशनम् ॥ ' इति च । एतदेव मोक्षधर्मेषु बलिवासवसंवादे उक्तम् । देवान्प्रति ब्रह्मणो वचनं रहस्यत्वादविज्ञाय बलिना दक्षिणाद्युदय उक्तः । इन्द्रेण तु ब्रह्मवचनं जानता दक्षिणाद्युदयो नास्तीत्युक्तम् । 'दैतेययोर्वरं ज्ञात्वा त्वविज्ञाय सुरान्प्रति । ब्रह्मणोक्तं हि बलिना वासवं प्रत्युदीरितम् । दक्षिणाद्युदयान्ते तु त्वां जेष्यामि पुरंदर । इत्युक्तस्तमुवाचेन्द्रो न कदाचन तद्भवेत् । ब्रह्मणा नियमो यस्मात्कृतः प्रागुदयो रवेः । इत्युक्त्वा तु जगामेन्द्रो दिवमैरावतस्थितः ॥' इति च ॥ ७–१० ॥

'अथ सूर्यस्थितो विष्णुरादित्यस्त्वादिमूलतः । आदानाद्वापि देवानामूर्ध्वं गच्छति मण्डलात् । प्राप्य वैकुण्ठलोकं च नोदेत्यस्तं न चैति सः । एकलः प्रलये स्थाता देवता नात्र संशयः । तेन सत्येन न व्यृद्धिमाप्नुयां ब्रह्मणा क्वचित् । इत्युवाच पुरा ब्रह्मा देवेभ्यः स चतुर्मुखः । एतां विद्यां तु यो वेद नित्यमस्य दिवा भवेत् । वैकुण्ठधामसंस्थस्य मुक्तस्यानुदयास्तकम् । तदेतद्भगवान्विष्णुः प्रादाज्ज्ञानं विरिञ्चये । विरिञ्चिर्मनवे प्राह प्रजाभ्यो मनुरेव च । पूरयित्वा तु पृथिवीं रत्नैः सप्तसमुद्रिणीम् । दत्वाऽपि गुरवे नैव पूर्यते गुरुदक्षिणा । देवास्तूपासनायोग्या एकैकस्यामृतस्य हि । सर्वस्योपासने ब्रह्मा तदन्ये ज्ञानमात्रके । उपासनेनैव योग्यास्तद्योग्या हि सुरा यतः ॥ ' इति देवश्रुतौ । ब्रह्मणा परेण मा

विराधिषि । भगवत्प्रसादादवृद्धिं न प्राप्नुयामित्यर्थः ॥ ११ ॥

यदिदं किंच भूतं प्रभूतं परिपूर्णं तत्सर्वं गायत्री भगवानेव । भू बहाविति धातोः । बहु: पूर्णतायामिति च । 'यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् । तदिदं भगवान् विष्णुः सर्वान्तःस्थित एव च । तन्निःसृतत्वाद्वेदानां गायकत्राति चाखिलम् । अतो गायत्रिनामाऽसौ वासुदेवः पर पुमान् । भूमा भूतमिति प्रोक्तः पूर्णत्वात्पुरुषोत्तमः । अनन्यापेक्षमुद्रिक्तं सर्वस्य विनियामकम् । यद्यत्तत्तद्विष्णुरेव नान्यदेतादृशं क्वचित् । स एव भगवान्विष्णुर्वाङ्नामा वाचि संस्थितः । वचनाद्धयशीर्षाख्यो गायत्र्यां च स आस्थितः । स एव पृथिवीनामा पृथिव्यामपि संस्थितः । विष्णौ हि पृथिवीसंस्थे जगत्सर्वं प्रतिष्ठितम् । नातिशेते च तं कश्चित्स हि सर्वाधिको हरिः । पृथुत्वात्पृथिवीनामा स एवान्तःशरीरगः । शरीरत्वादीरणाच्चैव शरीरं भगवानजः । पुरुषो जीव उद्दिष्टस्तस्मिन्नेव स्थितो विभुः । योऽसौ जीवे स्थितो विष्णुः शरीरमितिनामकः । शंत्वाच्चरतिरूपत्वादीरणाच्च स एव तु । जीवचैतन्यरूपस्य हृदयेऽपि व्यवस्थितः । अयनाद्धृदि विष्णुः स हृदयं कीर्तितो बुधैः । गायत्र्यां संस्थितो विष्णुः स्त्रीरूपः सूर्यः सप्रभः । द्वितीयश्चैव मत्स्यादिर्भूतनामावतारगः । तृतीयो वाचि संस्थश्च स्त्रीरूपो हयशीर्षकः । चतुर्थः पृथिवीसंस्थः स्त्रीरूपः पीतवर्णकः । जीवस्यान्तर्गतो व्याप्य शरीरमितिनामकः । पञ्चमस्तद्धृदिस्थश्च षष्ठो हृदयनामकः । गायत्रीनामको विष्णुरेवं षड्विध उच्यते । त्रिभिः स्वरूपपादैश्च भिन्नैर्नैकेन चैव हि । गायत्रीनामको विष्णुश्चतुष्पात्संप्रकीर्तितः । भिन्नपादाः सर्वजीवास्तस्य सादृश्यमात्रतः । स्वरूपपादा विष्णोस्तु त्रयो हि दिवि संस्थिताः । नारायणो वासुदेवो वैकुण्ठ इति ते त्रयः । अनन्तशयनं चैव तथानन्तासनं हरेः । बहुलक्ष्मोच्छ्रिते नित्ये विमाने संस्थितं यतः । चित्प्रकृत्यात्मनि ततो दिवीति कथितं श्रुतौ । लोकत्रयविवक्षायां परतो लक्ष्ययोजनात् । सर्वे द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः । दिवः परश्च भगवान्सप्तलोकविवक्षया । परं ब्रह्मेति भगवान्सर्वगः संप्रकीर्तितः । स एव जीवस्य बहिर्हृदयाकाश आस्थितः । योऽयं हृदयगः सोऽथ जीवान्तर्व्याप्य संस्थितः । व्याप्तो जीवान्तरे योऽसौ स जीवहृदि संस्थितः । एवं चापि चतुष्पात्त्वं वासुदेवस्य कीर्तितम् । स एव पूर्णो भगवानप्रवर्त्यस्तथाऽखिलैः । अन्यैः प्रवर्त्यते योऽसौ स प्रवर्तीति गीयते । अप्रवर्त्यो हरिर्नित्यस्वतन्त्रत्वात्सदैव च । अस्य प्रवृत्तिर्नास्तीति सोऽप्रवर्तीति कीर्तितः । पूर्णा स्वतन्त्रा श्रीश्चास्य वेत्तुर्भवति शाश्वती । साक्षाद्गायत्र्युपासायां योग्य एकश्चतुर्मुखः । तस्मादनन्यतन्त्राऽस्य श्रीर्भवेन्नान्यथा क्वचित् । विष्णुतन्त्रत्वनस्य स्यात्तरेषां तस्य तन्त्रता । यथाक्रमेण तन्त्रत्वं योग्यता क्रमतो भवेत् ॥' इति च सत्तत्त्वे । ब्रह्मशब्दाच्च भगवानित्यवसीयते । पूर्णाप्रवर्तित्वं च तस्मिन्नेव मुख्यम् । 'तावानस्य महिमा' इति मन्त्राच्च । 'पादोऽस्य विश्वा भूतानि' इति जीवानां चतुष्पादान्तर्भावात् । भूतं यदिदं किंचेति षड्विधान्तर्भूतं भूतं मत्स्याद्यवतार‌रूपमेव । 'द्वाविंशेष्ववतारेषु जीवोऽप्युक्तो यथा पृथुः । तथा पादेषु चतुर्षु सांनिध्याज्जीव ईरितः । यथा कालः पुमान्व्यक्तं प्रकृतिश्च परस्य तु । विष्णो रूपाणि गण्यन्ते पररूपेण वै सह । एवं भूतानि गण्यन्ते भिन्नान्यपि पदैः सह । मूर्तामूर्ते यथा रूपे ब्रह्मणस्तु तथैव च । भिन्नान्यपि तु भूतानि पदानि स्वपदैः सह ॥' इति प्राथम्ये । 'सुदर्शनाख्यं स्वास्त्रं तु प्रायुङ्क्त दयितं त्रिपात्' इति श्रीभागवते प्रयोगाच्च न जीवो भगवत्स्वरूपम् । 'सुवर्चला यथा सूर्यपत्न्यंशः समुदाहृता । एवं जीवा भगवतो वस्तुभेदेऽपि सर्वदा ॥' इति च ॥ १२ ॥

'प्राणाभिमानी चक्षुश्च सूर्य एव ह्युदाहृतः । तेजोऽन्नाद्यभिमानी च प्राग्द्वाराधिपतिर्हरेः । दक्षिणाधिपतिः सोमो व्यानः श्रोत्राभिमानवान् । यशोलावण्यरूपश्च पश्चिमद्वारपस्तथा । वागपानात्मको वह्निर्ब्रह्मतेजोन्नदेवता । उत्तरद्वारपस्त्विन्द्रः समानो मनआत्मकः । कीर्त्यैश्वर्यात्मको नित्यमूर्ध्वद्वारप एव च । प्रधानवायुराकाशः सार्वज्ञादुन्नतेस्तथा । उदान ऊर्जितत्वात्स ओजःपूर्णत्वतो महः । परस्य ब्रह्मणस्त्वेते पुरुषाः पञ्च कीर्तिताः । द्वारपा हृदये चैव विष्णुलोके च सर्वदा । आन्तरद्वारपा ह्येते जयाद्या बाह्यतः स्मृताः । एवमेतानु-

पास्यैव तद्गुणांशांशभाग्भवेत् । विष्णुलोकं तथा गच्छेद्भवेदपि सुसंततिः । योऽसौ वैकुण्ठगो विष्णुः सप्तलोकोपरि स्थितः । स एव सर्वलोकेषु विश्वतो ब्रह्मणस्तथा । उच्चेषूत्तमलोकेषु तथा प्रत्यवरेषु च । पुरुषेषु च सर्वेषु स एकः संव्यवस्थितः । प्राणसंस्थः स वै विष्णुः प्राणोऽग्नौ संव्यवस्थितः । स्पर्शेन दृश्यते चाग्निस्तद्दृष्टिरिव साततः । सप्राणः स्तौति तं विष्णुं सा स्तुतिः श्रूयते सदा । कर्णौ पिधाय तद्विद्वान् दिव्यचक्षुः सुकीर्तिमान् । मुक्तो भूत्वा भवेद्यस्मादुपासीतैव संततम् ॥' इति सत्तत्त्वे । 'दिक्षु यानाद्यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति शब्दनिर्णये । सर्वतः पृष्ठेषु सर्वत उच्चेषु वैकुण्ठक्षीरसागरानन्तासनादिषु । विश्वतो ब्रह्मणोऽप्युच्चेषु तत उत्तमो नास्तीत्यनुत्तमाः सर्वतः स्वयमुत्तमाः । 'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः । अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपे स्थितो हरिः । द्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते । पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् । दिवीन्द्रसदनं चैव तत्परे तु दिवः परे । पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् । तृतीयं सत्यलोकं च सदनं त्रिविधं स्मृतम् । तेभ्योऽनन्तासनाद्या यत्परतो विश्वतः परः ॥' इति सत्तत्त्वे । 'निनदः समुद्रघोषः स्यान्नदथुर्मेघसंभवः' इति च । 'चक्षुष्यश्चक्षुषि ब्रह्मण्येष यातीत्युपासकः' इति च ॥ १३ ॥

'इदं ब्रह्मातिसामीप्यात्सर्वं पूर्णगुणत्वतः । तच्च ब्रह्मजलान्साक्षाद्योऽसौ विष्णुर्जलेऽनिति । आनीदवातमिति यं वेदवागवदत्स्फुटम् । अप्रकेते तु सलिले ब्रह्मनारायणोऽपि सः । इति शान्त उपासीत यस्माज्ज्ञानमयः पुमान् । क्रतुस्तु निश्चितं ज्ञानं तद्वशः पुरुषो मृतौ । तस्माद्विनिश्चितं ज्ञानं कुर्याद्विष्णौ महागुणे । महाज्ञानात्मकत्वात्तु प्रोक्तो विष्णुर्मनोमयः । यस्माद्बलशरीरोऽसावतः प्राणशरीरकः । आसमन्तात्प्रकाशात्स आकाशात्मा प्रकीर्तितः । सर्वगन्धादिरूपश्च भोक्ता चैषां सदैव हि । इति निश्चयकृद्याति तमेव पुरुषोत्तमम् ॥' इति सद्गुणे । एकत्र सर्वगन्धादिना चिदानन्दात्मकसर्वगन्धादिरूपत्वमुच्यते । अन्यत्र तद्भोक्तृत्वम् ॥ १४ ॥

'क इत्यानन्द उद्दिष्ट उश इच्छा प्रकीर्तिता । आनन्देच्छास्वरूपोऽसौ कोशो विष्णुः प्रकीर्तितः । तस्योदरेऽन्तरिक्षं च पृथिवी पादबुध्नयोः । शिरो विवरगा द्यौश्च दिशो बाहुषु संस्थिताः । अजरोऽयं महाविष्णुर्वसवो देवतागणाः । तेषां निधानं भगवांस्तस्मिन्सर्वमिदं श्रितम् । प्राचीदिक्संस्थितस्तस्य बाहुर्दक्षिण ऊर्ध्वगः । जुहूः सहोमकर्तृत्वाद्भुङ्क्ते ह्येतेन केशवः । दक्षिणस्त्वधरो बाहुर्दक्षिणादिक्स्थितो विभोः । सहमानेति संप्रोक्तो मानं वेदात्मकं यतः । शङ्खो वेदात्मकः शङ्खसहितो दक्षिणाधरः । बाहुर्जुहोति चक्रेण शत्रूनित्यथवा जुहूः । प्रतीचीदिक्स्थितस्तस्य वामबाहुस्तथोत्तरः । राजीयुक्तगदायुक्तो राज्ञीनामा प्रकीर्तितः । अधरो वामबाहुर्य उत्तरादिक्स्थितो विभोः । श्रिय आधारपद्मित्वात्सुभूतानामकः स्मृतः । दिङ्नामानश्च ते प्रोक्ता धर्मज्ञानातिदेशनात् । तेभ्यो जातो महावायुर्दिशां वत्सस्ततः स्मृतः । धर्मज्ञानादिरूपेण विष्णोर्बाहुचतुष्टयात् । जातं वायुं विदित्वैव पुत्रो भूत्वा न रोदिति । न जायते न म्रियते मुक्तो भूत्वा सुखी भवेत् । वायुं हरेः सुतं ज्ञात्वा नाहं पुत्रतयाऽरुदम् । हरेः प्रसादसामर्थ्यादजरा चामरा ह्यहम् । अनादिकालसंबन्धादित्युवाच पुरा रमा । अविनष्टं परानन्दकामं विष्णुं सदा ह्यहम् । प्रपद्ये तत्प्रसादेन केवलं नात्मशक्तितः । प्राणं सर्वप्रणेतारं प्रपद्ये केशवं सदा । प्रभूतं यदिदं किंचित्प्रादुर्भावात्मकं हरेः । मत्स्याद्यं तत्प्राण एव विष्णुर्नास्त्यत्र संशयः । तस्मान्मत्स्यादिरूपं तं विष्णुमेव प्रपद्यथ । हे जना इत्यवोचत् सा लक्ष्मीः सर्वाः प्रजाः प्रति । प्राणनामा वासुदेवो मोक्षं स्वान्प्रणयेद्यतः । संकर्षणस्तु भूर्नामा भूषयेज्ज्ञानतो यतः । स पृथ्व्यां पृथिवीनामा स्वात्मानं प्रथयेद्यतः । अन्तरिक्षेऽन्तरिक्षाख्यो यतः साध्वन्तरीक्षते । दिवि द्युनामा स विभुः सर्वक्रीडाकरत्वतः । प्रद्युम्नश्च भुवोनामा सृष्ट्या यद्भावयेज्जगत् । सोऽग्निनामा परो वह्नावत्ति सर्वं यतो हुतम् । वायुनामा स वायुस्थो वात्यायुश्च यतोऽस्य तत् । आदित्याख्यः स आदित्ये आददात्यायुरस्य यत् । स्वर्नामा त्वनिरुद्धोऽसौ परानन्दप्रदत्वतः । ऋग्वेदाख्यः स ऋग्वेदे ज्ञानं वेदयते यतः । यजुर्वेदो यजुर्वेदे यज्ञं वेदयते यतः । सामवेदः

सामवेदे साम्यं वेदयते ह्ययम् । एवं चतुर्विधं तत्त्वं तदबोचमहं हरेः । इत्युवाचेन्दिरा देवी स्तुवन्ती परमं हरिम् ॥' इति च । 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती यदि ॥' इति च ॥ १५ ॥

'विष्णुपूजार्थयज्ञोऽहमित्युपासनमादरात् । कुर्वीत पुरुषो नित्यं तस्य यत्षोडशोत्तरम् । शतमायुस्तत्सवनत्रयमीरितमुत्तमम् । चतुर्विंशत्तु यत्पूर्वं प्रातःसवनमेव तत् । प्रार्थयित्वा वसूंस्तद्वं पुमान्मृत्युमपानुदेत् । मध्ये चतुश्चत्वारिंशन्मध्यमं सवनं स्मृतम् । रुद्राणां प्रार्थनेनात्र पुमान्मृत्युमपानुदेत् । ततोऽष्टचत्वारिंशत्तु तृतीयं सवनं स्मृतम् । आदित्यानां प्रार्थनेन तद्वं मृत्युमपौनुदेत् ॥' इति सर्वयज्ञे । महिदासोऽन्यः कृष्णश्चान्य एव । 'महिदासस्त्वैतरेयः कृष्णोऽन्यो देवकीसुतः । कपिलश्च द्वितीयोऽन्यस्त्रय एते पुरा नराः । संगत्योच्चैस्तपस्तेपुर्ब्रह्मणे परमेष्ठिने । मातुः स्वस्य च नामैक्यं विष्णुना स्यादिति ह्युभौ । स्वात्मशिष्यप्रशिष्याणां नामैक्यं कपिलस्तथा । एवमेव च वेदोक्ता भवेमेति त्वतन्द्रिताः । तान्वरान्प्रददौ तेषां ब्रह्मा लोकपितामहः । तस्मात्तन्नामिनश्चासंस्त्रयस्ते मुनयोऽपि हि । महिदासस्त्वैतरेयो बह्वृचोपनिषद्गतः । साक्षात्स भगवान्विष्णुस्तन्नामैको मुनिर्ह्यभूत् । कृष्णस्तु वासुदेवाख्यः परमात्मैव केवलम् । तन्नामा देवकीपुत्रस्त्वन्योऽप्यभवदञ्जसा । कपिलो वासुदेवाख्यः साक्षान्नारायणः प्रभुः । तन्नामा कपिलोऽन्यस्तु शिष्यनाम्ना सहाभवत् । स षोडशशतंजीवी महिदासो परस्त्वृषिः । घोरशिष्यस्तथा कृष्णः कपिलश्च कुशास्त्रकृत् । त्रय एते वरं प्राप्य ब्रह्मणः परमेष्ठिनः । कृतकृत्याः प्रमुमुदुस्तन्नामानश्च तेऽभवन् ॥' इति काल्कीये ॥१६॥

'स्वरूपभूतयज्ञस्य क्षुत्पिपासारतिस्तथा । दीक्षा भोजनपाने च रतिश्चोपसदः स्मृताः । व्यवायहासभक्षास्तु स्तुतशस्त्रात्मकाः स्मृताः । तपोदानार्जवाहिंसाः सत्यमप्यस्य दक्षिणा । सोष्यत्यसोष्टेति ततो यज्ञवत्पुत्रजन्मनि । आहुर्हि पुनरुत्पत्तिः प्रसवः प्रथमा पितुः । यज्ञस्नाने तु मरणं तदा ध्यायेत्त्रयं पुमान् । भगवन्नक्षयोऽसि त्वमच्युतोऽसि गुणैः सदा । प्राणाच्च सुखितो नित्यमाधिक्येनेति चिन्तयेत् ॥' इति सत्तत्त्वे । आदित्त्स्मादेव तत्प्रसादादेव । प्रत्नस्य पुरातनस्य अनादेर्भगवतो रेतसः रतिरूपस्य ज्योतिः पश्यन्ति । वासेन रमयतीति वासरम् । दिवः परतो वैकुण्ठे यदिध्येत । ऋद्धतममेव सर्वदा । अथ यदतः पर इत्युक्तत्वाच्च । न चादित्यमण्डलं दिवः परतः । उत्तरं ज्योतिः पश्यन्तः स्वरानन्दरूपं परिपश्यन्तो वयं तमस उदगन्म । उत्तरं ज्योतिः पश्यन्तस्तद्देवोत्तरं स्वश्च पश्यन्तः । द्विरुक्तिस्तात्पर्यार्था । उदाख्यं ज्योतिरुत्तमं तमसः सकाशादगन्म प्राप्ताः स्म । स्मेत्यर्थः । ' तस्योदिति नाम ' इति श्रुतेः । देवत्रा देवं देवविषयेऽपि देवं देवानां देवमित्यर्थः । सूरिभिः प्राप्यत्वात्सूर्यम् । 'रतिरूपं परं ज्योतिरनादेः केशवस्य यत् । तत्प्रसादेन पश्यन्ति हृदि वासाद्रतिप्रदम् । यत्पूर्णं सर्वदा भाति वैकुण्ठे परतो दिवः । तदुदाख्यं प्रपश्यन्तो निर्गत्य तमसो वयम् । ज्योतिरानन्दसद्रूपमुत्तमोत्तमसूत्तमम् । देवानां दैवतं साक्षात्सूरिप्राप्यं परं पदम् । प्राप्ताः स्म वासुदेवाख्यमिति मन्त्रदृगब्रवीत् ॥ ' इति नारायणीये ॥ १७ ॥

'मनःसंस्थस्तु यो देवः साक्षान्नारायणः प्रभुः । स एवाकाशसंस्थश्च मनआकाशनामकः । मननान्मन आकाश आसमन्तात्प्रकाशनात् । वासुदेवादिभेदेन स वागादिषु संस्थितः । अग्न्यादिषु च तन्नामा वागादिस्थः स एव तु । अग्न्यादिस्थैः सहैवेशो भाति दुष्टांस्तपत्यथ । एवं विद्वांस्तमीशेशं यशोज्ञानसुखात्मताम् । कीर्तिं च ब्रह्मसंप्राप्त्या वरतां मुक्तिगामपि । प्राप्य भाति तपत्यद्धा स्वाज्ञानादिकमेव च ॥' इति च ॥ १८ ॥

'अगम्यत्वादसन्नाम ब्रह्म नारायणाभिधम् । प्रलये वासुदेवाख्यं गम्यं सदभवद्विदाम् । तत्प्रकृत्या समभवत्तत आण्डमजायत । तस्मिन्नादित्यनामासावभवत्सूर्यमण्डले । नियन्त्यैव च सूर्यस्य भगवान्पुरुषोत्तमः । तस्मादादित्यनामानमादित्यस्थं जनार्दनम् । ब्रह्मोपासीत परमं सर्ववेदज्ञता ततः ॥' इति ब्रह्मतत्त्वे । उलूलव उरूरवः । अतिमहान्तो गायत्र्यादिघोषाः उप च निम्रेडेरन् । मुक्ते तस्मिन्नेव वसेयुः । 'सूर्यबिम्बस्थिते विष्णौ जायमाने परात्मनि । गायत्रीपूर्वकैर्वेदैर्ब्रह्माद्याः समुपस्थिताः । उपतिष्ठन्त्यतो नित्यं गायत्र्यादिभिरञ्जसा ।

तद्विद्वान्मुक्त आवासो वेदानां सर्वदा भवेत् ॥' इति च ॥ १९ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये तृतीयोऽध्यायः ॥

---

## चतुर्थोऽध्यायः

भल्लाक्ष मन्दाक्ष । यथा कृते जिते त्रेतादिजयफलं च तस्यैव भवति एवमन्येषां पुण्यफलं प्राधान्येन तस्यैव भवति । अरे अङ्ग इह सयुग्वा रैक्को ज्ञातव्यः । अहं ह्वरा३ इति प्लुतिः पामकषणभावेन ॥ १ ॥

शुचाऽऽद्रवणाच्छूद्रः । 'राजा पौत्रायणः शोकाच्छूद्रेति मुनिनोदितः । प्राणविद्यामवाप्यास्मात्परं धर्ममवाप्तवान् ॥' इति पाद्मे ॥ २ ॥

'संवृङ्क्ते सर्वदेवान्यद्वायुः संवर्ग ईरितः । महिमाऽस्य महानेष यदनद्योऽन्ति देवताः ॥' इति प्रभञ्जने । 'दशेति वै सर्वम्' इति श्रुतेः । कृतस्य च पूर्णात्मकत्वादध्यात्माधिदैवतभेदेन पञ्चदेवता दशभूताः कृतम् । तस्माद्वायुना सह दशसंख्यापूरणात्सर्वदिक्षु स्थिता देवता वायुना सहान्नमेव । अन्नादी देवता विराड्विष्णुरेव । अनद्यमान इत्यन्यैरनद्यमानः । 'वायुस्तु सर्वदेवात्ता वायोरत्ता जनार्दनः । न तस्य कश्चिदत्ताऽस्ति स विराडधिराजनात् ॥' इति च ॥ ३ ॥

'आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः । गौतमस्त्विति विज्ञाय सत्यकाममुपानयत् ॥' इति सामसंहितायाम् ॥ ४ ॥

'वायुर्वृषभरूपः सन्नग्निर्हंसश्चतुर्मुखः । मद्गुरूपश्च वरुणः सत्यकामाय होचिरे । प्रकाशानन्ततेजोवत्स्थानवत्संज्ञिका हरेः । वासुदेवादिका मूर्तीः प्रत्येकं चतुरात्मनः । दिगादिषु स्थितास्तेषामधिपाश्च तदाख्यकाः । नाचार्यबुद्ध्या तैरुक्तमतोऽनुज्ञां गुरोरगात् । उत्तमाचार्यसंप्राप्त्यै नावराचार्यतः क्वचित् । इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत्ततः । ऋषिभ्यस्तूत्तमा देवा देवेभ्यो वायुरुत्तमः । वायोश्च भगवान्विष्णुर्न तस्मादुत्तमो गुरुः ॥' इत्याचार्यसंहितायाम् । अत्र ह न किंचन वीयाय देवेभ्यः श्रुत्वा न च ते काचिद्धानिरभवदित्यर्थः ॥ ५–९ ॥

प्राणो ब्रह्म बलरूपं ब्रह्म कमानन्दरूपं खं ज्ञानरूपम् । 'अपरं ब्रह्म स प्राणः साक्षाद्यो बलदेवता । ज्ञानानन्दात्मकं पूर्णं परं ब्रह्म स्वयं हरिः । नैजानन्दबलोद्रेकः कमित्युक्तो मनीषिभिः । बलज्ञानसमाहारः पूर्णः खमिति शब्दितः । तदात्मकः परो विष्णुराकाश इति कीर्तितः । एवं प्राणस्तथाकाशो ब्रह्मणी द्वे प्रकीर्तिते ॥' इति च । प्राणशब्दस्य वायुरर्थः प्रसिद्धः । कखयोर्भिन्नार्थत्वशङ्कया कं च खं च न विजानामीत्याह । अत एवैक्याभिप्रायेण यद्वाव कं तदेव खं यदेव खं तदेव कमित्यूचुः ॥ १० ॥

'पृथुत्वात्पृथिवी विष्णुरग्निश्चाप्यङ्ग नेतृतः । अन्नमत्तृत्वतो नित्यमादित्यश्चादिरूपनः । आप आपालनाच्चैव देशनाद्दिश एव च । अनन्यराजो नक्षत्रमानन्दत्वाच्च चन्द्रमाः । प्राणोऽसौ बलरूपत्वादाकाशः पूर्तिहेतुतः । द्यौः प्रकाशस्वरूपत्वाद्वेदनाद्विद्युदेव च । यः सोमसूर्यविद्युत्सु तत्तन्नामा हरिः परः । अहेयत्वादहंनामा गार्हपत्यादिसंस्थितः ॥' इति तत्त्वसंहितायाम् । जीवैक्यपक्षे आदित्ये पुरुषं चन्द्रमसि विद्युतीति भेदव्यपदेशो न युज्यते । 'पृथिव्यग्निरन्नमादित्य आदित्ये पुरुषः' इत्यादिना आदित्यादिशब्दवाच्यौ सप्तम्यर्थः प्रथमार्थश्च द्वौ प्रतीयेते । अतो नैक्यमुच्यते । स एवाहमस्मीत्यन्तर्यामिणोः सर्वविशेषाभावज्ञापनार्थम् । पूर्वं सोऽहमस्मीत्यभेदे तात्पर्याधिक्यज्ञापनाय । 'अहमस्म्यादिकाः शब्दा अन्तर्यामिणि मुख्यतः । तत्संबन्धाज्जीवगाश्च तस्माद्वेदगता हरौ । अस्मच्छब्दोदितोऽन्तःस्थ आत्मा व्याप्तो जनार्दनः । अग्नयो द्विविधं विष्णुमवोचन्नुपकोसलः ॥' इति सामसंहितायाम् । नास्यापरपुरुषाः क्षीयन्ते भृत्यवानेव भवति । लोकी भगवल्लोकी भवति । इह च अव च इहावे । इहेति मनुष्यलोकस्था उच्यन्ते अवेति पातालस्थाः । मानुषासुरौ भगवन्तं निह्नुत एव न वक्तुं समर्थौ । अतो देवा एव मामनुशासुरित्यर्थः । ईदृशा इति वर्णतो ज्वालावर्णा इति । अन्यादृशाश्च करशिरश्चरणादिमन्तः । चन्द्रादिसर्वनामवत्त्वात् । 'यो देवानां नामधा एक एव' इति श्रुतेर्विष्णोरेव सर्वनामानि ॥ ११–१४ ॥

'असङ्गभगवत्स्थानत्वाच्चक्षुषोऽसङ्गत्वमुच्यते । यत्स्थानत्वादिदं चक्षुरसङ्गं सर्ववस्तुषु । तस्मै नमो

भगवते वामनाय परात्मने ॥' इति महाकौर्मे। 'इमं मानवमावर्तं नावर्तन्ते'। मानवा यत्रावर्तन्ते स मानवावर्तः। तं मानवावर्तं प्रति नावर्तन्ते। 'चक्षुःस्थं वामनं वेद स पुनर्नैव जायते। मुक्तो दुस्तरसंसाराद्वामनं प्राप्नुतेऽचिरात् ॥' इति च ॥ १५ ॥

'यज्ञाभिमानी यज्ञाख्यो वायुर्यज्ञे प्रतिष्ठितः। शुद्धभाव इत्यस्माद्यन्नयं पावयेद्यतः। अतो वायुर्यज्ञनामा तत्पादौ वाङ्मनःस्थितौ। दक्षिणोऽस्य मनःसंस्थो ब्रह्मर्त्विक्तस्य पूजकः। होत्राद्या वाचिसंस्थस्य वामपादस्य पूजकाः। तस्मात्प्रातरनूवाकपरिधान्योर्यदन्तरा। ब्रह्मा चेदुत्सृजेद्वाचं यज्ञपाल्लोपकृद्भवेत्। वाङ्मनःपादयज्ञाख्यप्रतिमो वायुरीरितः। ध्यायन्वायुं हरिं चैव ततो ब्रह्मा मुनिर्भवेत् ॥ १६ ॥

'अग्निर्नासिक्यवायुश्च सूर्यो लोकरसाश्रयः। अग्ने रसस्तु ऋग्वेदमानी ब्रह्मा प्रकीर्तितः। नासिक्यवायोस्तु रसो यजुर्वेदात्मको हरः। सामवेदाभिमानी तु वायुः सूर्यरसः स्मृतः। वराहसिंहकपिलास्तेषां भूरादिनामकाः। व्याहृतीभिस्ततो जुह्वन्ब्रह्मैवंविद्भिरिष्टितः। सर्वान्स ऋत्विजो रक्षेद्ब्रह्मैवंवित्ततो भवेत् ॥' इति च। उदक्प्रवण ऊर्ध्वप्रवणः ऊर्ध्वलोकानुसारी। यज्ञस्य दुरिष्टया यतो यतः स्थानादावर्तते तत्तत्स्थानमेवंविदा ब्रह्मणा गच्छति। तद्ब्रह्मैवैकर्त्विक्कुरून्कर्तृन्यजमानादीनभिरक्षति। अश्वा आशुज्ञानी। वा गतिगन्धनयोरिति धातोः। गतिशब्दश्चावगतौ भवति। दीर्घबिन्दुविसर्गादीनां लोपो वेति सूत्रादाशुवैवाश्वा ॥ १७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये चतुर्थोऽध्यायः ॥

---

## पञ्चमोऽध्यायः

'यः श्रेष्ठं ज्येष्ठमखिलदेवानां वायुमञ्जसा। वेद स स्वस्मानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः। समीपे वसतां श्रेष्ठो वसिष्ठस्यैव वेदनात्। एकस्थाने स्थितिस्तु स्यात्प्रतिष्ठास्य चेच्छतः। संपद्धेतुः संपदः स्युर्गृहं चायतनं विदः। ज्येष्ठः श्रेष्ठो वसिष्ठश्च संपदायतनं तथा। वायुरेव महांस्तस्य प्रसादादग्निरेव तु। उपचारतो वसिष्ठः स्यात्प्रतिष्ठैवं रविस्ततः। संपदिन्द्रस्तथैवोक्तो रुद्र आयतनं तथा ॥' इति प्रभावे। 'सर्वेन्द्रियाणां व्यापारान्प्राण एव करोत्ययम्। इन्द्रियरथः पृथक् चासौ शक्तोऽपि स्वयमेव तु। षण्मासात्पूर्वं बालानां केवलं प्राणतो भवेत्। व्यापार्यं मनसा सर्वमतः पश्चादनंस्मृतिः। तुरीयायामवस्थाया प्राणादेव विबोधनम्। तथापि संस्मृतिस्तत्र प्राणवश्यतया भवेत्। प्राणस्य वश्यता नाम भक्त्या स्यात्तत्प्रसादतः। प्राणे वश्ये मनो वश्यमिन्द्रियाणि च सर्वशः ॥' इति च। अक्षेषु प्रति प्रतिस्थितत्वादनः प्रत्यक्षम्। 'प्राणविज्ञानयोग्यस्तु रुद्रो मुख्यतया स्मृतः। तस्मात्स सर्वभोक्ता स्यात्तदन्येषां स्वयोग्यतः ॥' इति च। 'सिद्धमेवान्नवस्त्राद्य विष्णोः स्वातन्त्र्यतः सदा। स्वार्थं समर्पयेद्विष्णौ यथा प्राणे सुराः पुरा ॥' इति कर्मानुपूर्व्याम्। 'प्राणस्य वस्त्रबुद्ध्या तु भोजनोभवतः पिबन्। स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम् ॥' इति प्रभञ्जने। 'योग्यस्य प्राणविद्यायां स्थाणोरपि हि तच्छ्रुतेः। पलाशाद्यं भवेदत्र परतो मुक्तिरेव च। विष्णोर्दर्शनमनुप्राप्य भवेन्नास्त्यत्र संशयः ॥' इति प्राणसंहितायाम्। 'ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च। ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ॥' इति च। सवितुर्जगत्प्रसवितुर्विष्णोः सकाशाद्वयं भोजनं रक्षां सर्वभोगांश्च वृणीमहे। भगस्य समग्रैश्वर्यादिसर्वगुणस्वरूपस्य विष्णोः। पुरुषं तुरं वायुं श्रेष्ठं सर्वधातॄणां उत्तमं च धीमहि। 'नारायणीयं तं वायुं चिन्तयित्वोत्तमोत्तमम्। जगत्प्रसवितुर्विष्णोः सकाशाद्भोगमाप्नुमः ॥' इति च ॥ १–२ ॥

'नारायणादयः पञ्च क्रमात्पञ्चाग्नयः स्मृताः। अदनादगनेतृत्वान्नितरामचलत्वतः। समेधनात्समिद्विष्णुर्धूत्काराद्धूम उच्यते। अरं चितत्वादर्चिश्च सोऽङ्गारोऽङ्गरतेरपि। विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः। पुनर्नारायणाद्यात्मा प्रत्येकं पञ्चरूपवान्। आदित्यः स तथा दानाद्रश्मी रतिशरूपतः। तमसा हननीयत्वादहश्चन्द्रः परः सुखम्। अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः। अभ्रमभ्भरणाद्विष्णुर्विद्युद्विद्योतनादपि। अशनादशनिश्चैव निर्ह्रादाद्ध्रादुनिस्तथा। संवत्सरो वासनाच्च स आकाशः प्रकाशनात्। रात्रिश्च रतिदानात्स

दिशतीति दिशः स्मृतः । अवान्तरं दिशेद्यस्मादवान्तरदिगुच्यते । वचनाद्वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते । दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः । उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः । योनिर्युनक्ति यस्मात्स सर्वान्तःकृच्च नन्दनः । असौ लोकः प्रकाशत्वात्प्राणस्थत्वाच्च केशवः । पर्जन्यो जनको यस्मात्पृथिवी प्रथितत्वतः । पुरुषः पुरुर्यस्मात्स योषा जोष्यो यतोऽखिलैः ॥' इति सामसंहितायाम् । 'अभ्रधूमादिभावस्तु जीवस्याभ्रादिसंस्थितिः । अभ्रादिमानि रूपं तु ज्ञानिप्राप्यं यतो भवेत् ॥' इति च । परमस्य जन्यमिति पर्जन्यः । 'पञ्च पञ्च स्वरूपेण सूर्यादौ संस्थितो हरिः । स्वर्गादौ चापि तन्नामा तद्योगान्नामिनः परः ॥' इति च ॥ ३-१० ॥

'प्रत्यब्दयज्ञकृत्सम्यङ्महाशालः प्रकीर्तितः । वेदवेदार्थवित्सम्यङ्महाश्रोत्रिय उच्यते । क्रीडात्मकत्वाद्याख्यं च सुतेजाश्चातितेजसा । स्वर्गाधारं शिरो विष्णोः सर्वरूपातिदर्शनात् । चक्षुस्तु विश्वरूपाख्यमादानादायुधामपि । आदित्याख्यं च सूर्यस्याप्याश्रयं सर्वदा स्मृतम् । वाय्वादिप्राणशक्यं न यत्तत्कर्ता हरेर्यतः । प्राणस्तेन पृथग्वर्त्मा वायुर्ज्ञानायुरूपतः । वायोरप्याश्रयो नित्यं बहुत्वाद्बहुलः स्मृतः । आकाशनामा चादीप्तेर्मध्यदेहो रमापतेः । व्याप्तत्वादाप इत्युक्तो रयी रतिकरत्वतः । वस्तिराकाशवार्योश्च तावाधारौ प्रकीर्तितौ । प्रथनात्पृथिवीनामा प्रतिष्ठा च प्रतिष्ठितेः । पादौ भगवतो विष्णोः पृथिव्याश्रय एव च । उत्तमानां हि पादेन सर्वं रूपं हि कथ्यते । विष्णोः पदमिति ह्यस्मात्प्रथितिर्वैदिकी स्मृता । प्राणश्चक्षुस्तथादित्य इत्येका देवता स्मृता । पूर्वद्वारपतिर्विष्णोर्व्यानः श्रोत्रं च चन्द्रमाः । दक्षिणद्वारपस्त्वेको वागपानोऽग्निरेव च । पश्चिमद्वारपोऽप्येकः समानो मन एव च । इन्द्र इत्येक एवोक्त उत्तरद्वाररक्षकः । उदानो वायुरित्येक ऊर्ध्वद्वाराधिपश्च सः । स एवाकाशनामा च लक्ष्म्याविष्टो विशेषतः । पृथिवीनामिका श्रीस्तु द्यौर्दिशो विद्युदेव च । वायुपत्नी समुद्दिष्टा तत्तद्द्वाराधिपाश्च ते । अधितिष्ठन्ति ते सर्वे नारायणमनामयम् । यद्विष्णुर्ज्ञानरूपत्वात्किमानन्दस्वरूपतः । एतेषु तृप्तेषु हरिस्तृप्यत्येषां प्रियो ह्यसौ । सूर्यप्रसादात्तु नराः पूर्वद्वारेण केशवम् । प्राप्नुवन्त्यथ सोमस्य प्रसादात्पितरस्तथा । द्वारेण दक्षिणेनैव गन्धर्वाः पश्चिमेन तु । अग्निप्रसादादृषय उत्तरेणेन्द्रसंश्रयात् । शिवाद्या वायुमाश्रित्य यान्त्यूर्ध्वेण हरिं सुराः । वैश्वानराख्यविष्णोस्तु सम्यग्ज्ञानेन सर्वशः । वैश्वानरज्ञानयोग्याः साक्षादेव सुराः स्मृताः । तस्मात्तेषां फलं सर्वमन्येषां तु स्वयोग्यतः ॥' इति वैश्वानरविद्यायाम् । को न आत्मा किं ब्रह्म । सोऽयमात्मा चतुष्पात् । स्थूलभुग्वैश्वानरः प्रथमः पादः । वैश्वानरः साधारणशब्दविशेषात् । 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इत्यादेश्च वैश्वानरो विष्णुरिति सिद्धम् । 'स वायुः स आकाशः वायुश्चाकाशश्चाधितिष्ठतः' इति वचनाद्वायोः रूपमन्याधिष्ठितमाकाशाख्यं वायोः स्वरूपमिति विज्ञायते । 'आकाशनामा विघ्नेशो वायुश्चाकाशकः स्मृतः । आकाश इति लक्ष्मीश्च तथाकाशो हरिः स्वयम् ॥' इति शब्दनिर्णये । 'सुतेजोविश्वरूपादिभेदेनाङ्गानि मापतेः । अभिन्नान्यपि कथ्यन्ते लोकदृष्टिविभेदतः ॥' इति च ॥ ११-२४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये पञ्चमोऽध्यायः ॥

---

## षष्ठोऽध्यायः

'अधीत्यब्दद्वादशत्वाद्द्वादशाब्द इतीरितः । श्वेतकेतुर्भारते तु नोत्पत्तिद्वादशत्वतः ॥' इति वाक्यनिर्णये । 'यथा मृत्पिण्डविज्ञानात्सादृश्यादेव मृन्मयाः । विज्ञायन्ते तथा विष्णोः सादृश्याज्जगदेव च । यथा स्वर्णस्य विज्ञानात्सर्वे लोहमयास्तथा । प्राधान्याद्विष्णुविज्ञानाद्विज्ञातं स्याज्जगत्सदा । अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् । अनन्याधीनविज्ञानादन्याधीनं तथैव च । मृदयो लोहनाम्नां हि ज्ञानात्सांकेतिकं यथा ॥' इत्यादि सामसंहितायाम् । 'स्वर्णे लोहमणिश्चैव पुरटं चाभिधीयते' इति शब्दनिर्णये । विकारत्वविवक्षायामेकपिण्डमणिशब्दा व्यर्थाः स्युः । मृत्तिकेति लोहमणिरिति कार्ष्णायसमित्यत्रेतिशब्दा नामधेयशब्दाश्च व्यर्थाः स्युः । विकारमिथ्यात्व-

विवक्षायां मृत्तिकैव सत्यं लोह एव सत्यं कार्ष्णायसमेव सत्यमित्येव स्यात्। न तु नामधेयादिशब्दाः। न च वाचारम्भणमात्रमिति मात्रशब्दोऽस्ति। न चारम्भस्यारम्भणमिति युज्यते शब्दः। क्रिया ह्यारम्भणम्। अतो वाचा नाम्नामारम्भणं विकारो विविधाकारो विक्रियमाणः। सत्यं नामधेयं सर्वदा विद्यमानं नामधेयम्। मृत्तिकेत्यादय इत्यर्थः। सत्त्वेन कालतस्ततं ज्ञायते विद्वद्भिरिति नित्यत्वेन प्रसिद्धमेव सत्यमित्यत्र विवक्षितम्। संकेतेन क्रियमाणानि ह्यन्यानि नामानि। अतो विकाररूपाणि। विकारशब्दस्य नियतपुल्लिङ्गत्वादारम्भणं विकार इति वेदाः प्रमाणमितिवद्युज्यते। न च मृत्तिकादिनामविकारः सांकेतिकं नाम। प्राधान्यमेवात्र मृत्तिकादिनामवद्भगवतो विवक्षितम्। सृष्टिश्च प्राधान्यार्थमेवात्रोच्यते ॥ १ ॥

एकमेवाद्वितीयं स्वगतभेदवर्जितं समानवर्जितं च। 'एकमेवाद्वितीयं तत्समाभ्यधिकवर्जनात्। स्वगतानां च भेदानामभावाद्ब्रह्म शाश्वतम्॥' इति प्रवृत्ते। 'भेदाभेदनिवृत्त्यर्थमेवशब्दोऽवधारकः। समाधिकनिवृत्त्यर्थमद्वितीयपदं तथा। भेदाभेदेऽप्येकशब्दो यतोऽवयविनि स्थितः। एकमेवेत्यतः प्राह नारायणमियं श्रुतिः। समे द्वितीयशब्दः स्यादद्वितीयोऽसमत्वतः। साधिकः कुत एव स्यादित्याह परमा श्रुतिः॥' इति सामसंहितायाम्। न च विजातीयभेदवर्जनं नाम कुत्रचित् प्रसिद्धम्। तत्प्रमाणाभावाच्च। 'एक एवाद्वितीयो भगवांस्तत्सदृशः परो नास्ति' इति च श्रुतिः। 'एको भगवांस्तत्सदृशपरौ न स्तः' इति च। विजातीयाभावे 'येनाश्रुतं श्रुतं भवति' इत्यादि विशेषणं च व्यर्थम्। यस्य कस्यचिज्ज्ञानं तज्ज्ञानमेव भवति अज्ञानमपि ज्ञानमेव भवति। भेदाभावात्। न च मिथ्या सत्यमिति भेदः। तस्यैव विजातीयत्वप्राप्तेः। तद्भेदस्य मिथ्यात्वे तदभेदस्य सत्यत्वप्रसङ्गाच्च। मिथ्यासत्ययोरैक्ये इदं सत्यं इदं मिथ्येति भेदाभावाज्जीवेशभेदादेरपि सत्यत्वप्रसङ्गः। अतः परमार्थं ब्रह्मान्यन्मिथ्येत्यपि न युज्यते। अतः सजातीयः स्वगतभेदोऽधिकाख्यं विजातीयं चात्र निषिध्यते। 'सर्वोत्तमत्वात्सन्नामा हरिर्नारायणः प्रभुः। सोऽसृजत्प्रथमं देवीं तेजआख्यां श्रियं सतीम्। तते स्थितेन रूपेण साऽजैव हि यतः सदा। तेज इत्युच्यते तस्माज्जनेर्वा तत एव तु। यदस्याः सृष्टिकृद्रूपं विद्याख्यं जायते हरेः। मन्वाख्यः प्राण एवास्या अन्नामा जायतेऽथ च। ब्राह्मणादिचतुर्वर्णस्ततश्चान्नाभिधो हरः। तेजःसंस्था च सा देवी प्राणोऽप्सु स्थित एव च। ततस्तेजस एवापो जायन्तेऽन्नस्थितो हरः। जायतेऽतोऽद्भ्य एवान्नं पृथिवी त्वन्नरूपिणी ॥' २ ॥

'सृष्टेष्वेतेषु भगवानीक्षाचक्रे स केशवः। जीवाख्येनैव रूपेण योऽनिरुद्ध इति स्मृतः। तेन रूपेण लक्ष्म्यादीन्प्रविष्टो रूपनामनी। करिष्ये त्रिवृतश्चैतानेकैकं करवाणि च। इति मत्वा प्रविश्याथ तेभ्य इन्द्रादिनामपि। नामरूपाणि कृतवांस्तांश्चान्योन्यप्रवेशिनः। कृत्वाग्निसोमसूर्यादिष्वेतांस्त्रीन्विदधे पुनः ॥' ३ ॥

'अतो यल्लोहितं रूपं श्रियस्तद्रूपसंभवम्। यच्छुक्लं वायुजं विद्यात्कृष्णं चैव शिवोद्भवम्। तस्मादग्नेर्यदग्नित्वमग्निनामप्रवर्तकम्। लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः। मुख्यैवमाददानत्वमादित्यस्य तदुद्भवम्। अत आदित्य नामैषां नैवादित्यस्य मुख्यतः। यच्चन्द्राह्लादकत्वं च तत्तेषां चन्द्रता तथा। विद्युद्विद्योतनं तेषां ततस्ते सर्वनामिनः। तथैव सर्वरूपं च तद्रूपप्रतिबिम्बितम्। सर्वरूपाश्च ते तस्माल्लोहितादिक्रमेण तु। अतोऽन्यनामधेयं तु वाचारम्भणहेतुतः। सांकेत्येन विकारः स्यात्त्रयाणामेव नित्यता। यथा लक्ष्म्यादिकानां च नामसंकेततोऽन्यगम्। वाचारम्भणहेतोस्तद्विकारो नैव मुख्यतः। मुख्यं नाम त्रिरूपाणीत्याद्यं वेदोदितं परम्। अतस्तदेव सत्योक्तं मुख्यं सत्यमितीर्यते। इन्द्रादिनामरूपाणि यथैव त्रिषु मुख्यतः। तदधीनत्वतस्तेषामेषामुच्चबलत्वतः। शिवनामानि रूपाणि तथा वायोस्तु मुख्यतः। तदीयानि तथा लक्ष्म्यास्तदीयानि हरेस्तथा। तस्मात्स एव सर्वेशः सर्वरूपः स एव च। सर्वनामा स एवैकः सर्वशक्तिस्तथैव च। अन्येषां यच्च रूपाद्यं तत्तस्मात्प्रतिबिम्बितम्। एक एवाद्वितीयोऽसावतः सर्वोत्तमत्वतः। मुख्यत्वादेव सन्नामा सत्ततिज्ञानरूपतः। सत्यमित्युच्यते विष्णुः स त्वं नासि कथंचन। अतोऽनूचानमानी त्वं स्तब्धोऽसि कुत एव तु। त्वत्तोऽधिका अपीन्द्राद्यास्तदुच्चाश्च श्रियादयः।

सर्वोच्चो भगवान् विष्णुर्न स्तम्भोऽस्यापि हि क्वचित् । अतो न विद्वन्मानी स्यान्महानस्मीति वामनः । न ते स्यान्नैव च स्तम्भो ज्ञात्वा विष्णोः परं बलम् । न हि विष्णोर्बलं ज्ञात्वा स्तम्भहेतुः कथंचन ॥' इत्यादि सामसंहितायाम् ॥ ४ ॥

देवता एव मांसादिशब्दवाच्याः । तत्र प्रवेशात् । अदृश्यमानाश्चोपजीव्यत्वात् । न च दुःखं तासाम् । ऐश्वर्यात् । 'तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृत्' इति प्रस्तुतत्वात् । 'जीव इति भगवतोऽनिरुद्धस्याख्या' इति च श्रुतिः । 'प्राणस्य प्राणश्चक्षुषश्चक्षुर्जीवस्य जीवः प्रधानस्य प्रधानं भगवांश्चतुर्मूर्तिः' इति च । 'प्राणाधारो हरिर्नान्यो जीवशब्दस्ततो हरौ । संसारिणो जीवता तु जननाद्वानतस्तथा ॥' इति च । जीवशब्देन संसारिविवक्षायां 'तत्तेज ऐक्षत' इत्यादिना तेषामेव चेतनत्वावगतेर्नामरूपव्याकरणे जीवान्तरानुप्रवेशो नापेक्षितः । 'प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः । त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥' इति च । 'यावद्बलिं तेऽजहराम काले यथा वयं चान्नमदाम यत्र । यथोभयेषां त इमे इ लोका बलिं हरन्तोऽन्नमदन्त्यमूढाः ॥ त्वं नः स चक्षुः परिदेहि शक्ता देवक्रियार्थे यदनुग्रहेण ॥' इति तत्त्वानां प्रार्थनानन्तरं भगवत एतेषु प्रवेशोक्तेर्भागवते । यतश्च 'स एव जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इति भगवत्येव जीवशब्दः प्रयुज्यते । न ह्यचेतनस्य मोदमानत्वमस्ति । अतोऽन्तर्यामिरूप एव जीवशब्दः । 'भोक्तुस्तु सुखदुःखानामन्तःस्थो जीवनामकः । बहिःस्थितस्तु सन्नामा भगवान्पुरुषोत्तमः ॥' इति तत्त्वविवेके । अग्नेरग्निरिति नाम मुख्यतो नास्ति । अग्निनामानि त्रीणि रूपाणीति नामधेयं सत्यमित्यादि ॥ ५–७ ॥

स्वप्नस्यान्तः सुषुप्तिः । 'स्वातन्त्र्यात्स इति प्रोक्तो विष्णुः सर्वेश्वरेश्वरः । तं प्राप्नोति मनोनामा संसारी स्वपितीत्यतः ॥' इति च । मननान्मनोनामा संसारी । 'शुङ्गमित्यङ्कुरं प्रोक्तं तन्मूलं भगवान्हरिः । जगतो मूलमप्येष निमित्तं न विकारवान् । बीजजीवो यथा मूलमङ्कुरस्याविकारतः । यथा पिता पुत्रतन्वास्तद्देहो हि विकारवान् । एवं हरिर्मूलमपि न विकारः कथंचन ॥' इति च । प्राथम्याच्च तेजआद्या लक्ष्म्यादयः इति सिद्धम् । 'तेजोभिमानिनी लक्ष्मीः प्राणस्त्वबभिमानवान् । अन्नाभिमानी रुद्रश्च तिस्रस्ता देवताः पुरा ॥' इति च ब्रह्माण्डे । 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति' इति संसारिणो ब्रह्मप्राप्तिमुक्त्वा स यथा शकुनिः सूत्रेण प्रबद्ध इति तस्योपपादनान्मनोनामा पुरुषः । प्राणनामा भगवान् । 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इत्युपसंहारात् । प्राजाशब्दश्चेतनेष्वेव प्रसिद्धः । 'प्रजानां सुखदुःखेन राजाऽऽप्नोति शुभाशुभम्' इत्यादेश्च । 'शरीरधातुकर्तृत्वेन लक्ष्म्याद्याश्च मुमुक्षुणा । ध्येयास्तदीशितृत्वेन भगवान्पुरुषोत्तमः ॥' इति वचनादनुसंधानकर्तव्यताज्ञापनार्थं तदुक्तं पुरस्तादित्युक्तम् । 'मुक्तावुमा तु वागाख्या रुद्रं याति मनोऽभिधम् । वायुं याति शिवश्चापि वायुस्तेजोभिधां श्रियम् । वायुमादाय सा देवी याति विष्णुं परात्परम् । द्वारमात्रा तु सा देवी वायुप्राप्यो जनार्दनः । मृतिकाले च मुक्तौ च पुरुषा वाचमाप्नुयुः ॥' इति सत्तत्त्वे । 'योऽसौ नियमनाद्विष्णुः सारत्वात्स इति स्मृतः । अणिमा सूक्ष्मतो गम्य ऐतदात्म्यं च तद्वशम् । परानन्दत्वतः सत्यमात्मा पूर्णगुणत्वतः । सत्यतो नासितत्वं हि मा भूत्ते स्तब्धता ततः । असुराः स्तब्धतां याता ब्रह्माहमिति मानिनः । असत्यं जगदित्याहुः सिद्धोऽहं बलवानिति । अनीश्वरं जगत्प्राहुरप्रतिष्ठं तथैव च । चेतनैकत्वविषयान्वेदानाहुश्च सर्वशः । कुतर्कपरमा नित्यं न सहन्ते गुणान्हरेः । शास्त्रतत्त्वमविज्ञाय ब्रूयुर्देवेषु चैकताम् । यान्ति चैव तमो घोरं परमात्मविनिन्दकाः । आलम्ब्य तन्मतं न त्वमेकत्वं विद्धि विष्णुना । एकत्वाभावतो नैव भवेथाश्च महामनाः । तन्निष्ठा हि प्रजा यस्मात्तत्प्रतिष्ठाश्च मोक्षगाः । तन्मूलाश्च यतस्तासां तद्भावः कुत एव तु । यदि स्वतोऽन्यः परमो देहेऽस्मिन्स्त्व्यवस्थितः । न दृश्यते कुत इति भूयः पप्रच्छ पुत्रकः । अक्षैरदृश्यमानोऽपि न भेदो नास्ति पुत्रक यथा पुष्परसा युक्ता अजानन्तोऽपि भेदिनः । अजानन्तोऽपि पुरुषास्तथा विष्णोर्हि भेदिनः ॥' ८—९ ॥

'इति पित्रोपदिष्टः सन् पुत्रः पप्रच्छ तं पुनः । चेतनानामविज्ञानं कथमित्येव चिन्तयन् । तं प्रत्याह य

नद्यश्चेतनाश्च समुद्रगाः। स्वं वारि नैव जानन्ति प्रजास्तद्वत्प्रजालये ॥ १० ॥

'स्वतोऽन्योऽस्ति परो देह इति ज्ञायेत मे कथम्। इति पृष्टः पुनः प्राह वृक्षदृष्टान्ततः पिता । अभिमानिनो स्वतन्त्रत्वाद्भेदेन ज्ञायते तरौ । हरिः किमु मनुष्येषु ज्ञेयो ह्यस्यास्वतन्त्रतः ॥ ११ ॥

'ज्ञायते न कथं स्वस्मिन् सूक्ष्मे ज्ञाते परो हरिः। तत्रस्थ इति पृष्टः संस्तमाहोद्दालकः सुतम् । वटबीजे यथा सूक्ष्मे महान्यग्रोधभावयुक् । न दृश्यतेऽभिमानी स एवं जीवगतो हरिः ॥' १२ ॥

'कथं दृश्येत तच्छक्तिः पृथक्तस्य ह्यदर्शने। इतिभावयुतं प्राह पुत्रमुद्दालकः पुनः।यथाऽप्सु लवणं व्याप्तं रसदृष्टौ न दृश्यते । एवं चेतनगो विष्णुस्तद्भिन्नोऽपि न दृश्यते ॥' १३ ॥

'कथं स ज्ञायते विष्णुर्भिन्न इत्यत्र चाब्रवीत्। यथैवान्योपदेशेन बद्धाक्षः स्वगृहं व्रजेत्। तथाऽऽचार्योपदेशेन भिन्नमीशं व्रजेत्पुमान् ॥' १४ ॥

'यथा पुंसोऽस्वतन्त्रत्वं तज्ज्ञापयतु मा भवान्। इत्युक्त आह ज्ञाने हि दृष्टैवास्या स्वतन्त्रता ॥' १५ ॥

'अभेदज्ञानिनां दोषः कीदृशः स्यादितीरिते। प्राह यस्मात्परस्वानां हर्ता राज्ञा निहन्यते । किमु राज्ञोपहर्तैवं ब्रह्मस्तेनो निहन्यते। सर्वेषां शास्तृ यद्ब्रह्म तत्स्वरूपतया स्मरन्। ब्रह्मस्तेनो निहन्येत तमस्यन्धे सदैव हि। दोषा ह्यज्ञानपूर्वास्तु बध्वा पुरुषमीशितुः । विष्णोर्हर्तेति बाधन्ते चाभिमानकृतास्पदम् । ततो विचारयन्त्येनं देवता हरिणा सह।नाहं विष्णुर्न स्वतन्त्रो न च पूर्णगुणोऽस्म्यहम्। मम स्वामी हरिर्नित्यं स्वतन्त्रः पूर्णषड्गुणः। एवं दार्ढ्यं शपथवद्यदा कुर्यादयं सदा। जानन्नेव न तापी स्यादन्तरानन्दभोगतः । तदा तेभ्यो मोचयित्वा हत्वा मिथ्याभिशंसिनः। स्वकीयं कुरुते विष्णुरन्यथा तैः सह प्रभुः। तमस्यन्धे पातयति महाकारागृहोपमे। महान्धे वा घातयति हस्तच्छेदादिसंमिते। ततोऽवरे वा तद्योग्यं दृढाभेदं वधोपमे । तस्मादाचार्यतो ज्ञात्वा विष्णोर्भेदेन पूर्णताम् । उपासीत ततो मुक्तिं यावि तावन्न संशयः ॥' इत्यादि सामसंहितायाम् ॥ १६ ॥

स्वयंभूरिति विष्णुजत्वाद्विरिञ्चि उच्यते। न हि विरिञ्चादेव विरिञ्चो जातः। 'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिश्रुतेः। आत्मा भगवान् । ततो भूतत्वादात्मभूः। 'दत्तं दुर्वाससं सोममात्मेशब्रह्मसंभवान्' इति वचनात्। अ इति विष्णुस्तज्जातत्वादजः। 'अः इति ब्रह्म' इत्यादिश्रुतेः। 'वासुदेवात्परो नैव ब्रह्मशब्दोदितो भवेत्' इत्यादेश्च। अतः स्वशब्दो विष्णावेव प्रसिद्धः। ततः स्वमपीतो भवतीति युज्यते। अप्ययो नामाविज्ञेयत्वेन प्रवेशः। 'अविज्ञातं प्रविष्टं यदपीतमिति कीर्त्यते। यथा नद्यः समुद्रे तु यथा विष्णुं लये प्रजाः ॥' इति शब्दनिर्णये। न च जीवस्य तद्भावोऽस्ति। उत्थितस्य सुप्तिसंसारयोः परामर्शदर्शनात्। 'अहं विश्वं भुवनमभ्यभवाम्'। 'आजन्ममरणं स्मृत्वा मुक्ता हर्षमवाप्नुयुः' इति। तद्भावस्यापरामर्शाच्च। 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' इत्यादिश्रुतेश्च। 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति च भगवद्वचनम्। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। सति संपद्य न विदुः सति संपत्स्यामहे' इति। सत आगम्य न विदुः सत आगच्छामहे इति। स एष जीवेनात्मनानुप्रभूतः । पेपीयमानो मोदमानस्तिष्ठति। अण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति । लवणमेतदुदकेऽवधायाऽथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमेतदुदकेऽवधा अङ्ग तदाहरेति तद्भावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति। मध्यादाचामेति कथमिति लवणमित्यन्त्यादाचामेति कथमिति लवणमिति। अत्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति। एतां दिशं गन्धारा एतां दिशं व्रजेति। तेजः परस्यां देवतायां तावन्न जानाति। अपहार्षीत्स्तेयमकार्षीदित्यादि। नवकृत्वो भिन्नस्य वस्तुनो भेदापरिज्ञानादनर्थं सूक्ष्मत्वाद्भेदस्य दुर्ज्ञेयत्वं च सदृष्टान्तं तात्पर्येणाह। न चाभेदे कश्चिद्दृष्टान्त उक्तः। न हि शकुनिसूत्रयोर्नानावृक्षरसानां नदीसमुद्रयोर्वृक्षपरमात्मनो-

र्थानापरमात्मनोर्लवणोदकयोः पुरुषगन्धारयोर्नियतज्ञानानियतज्ञानयोश्चोरापह्रियमाणयोश्चाभेदोऽस्ति । महातात्पर्यविरोधश्चाभेदे । विष्णोः परमोत्कर्षे हि सर्वप्रमाणाना महातात्पर्यं भगवताऽभिहितम् । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत । इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुद्ध्वा बुद्धिमानस्यात् कृतकृत्यश्च भारत ॥' इति । 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति । ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः । यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते । मत्तः परतरं नान्यत्किंचिदस्ति धनंजय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् । अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि । मया ततमिदं सर्वं जगदव्यक्तमूर्तिना । मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् । अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते । परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् । यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः । मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत । ये मां ज्ञात्वा गुणैः पूर्णं न चलन्ति ततः क्वचित् । तैरेवाप्यो न चैवान्यैरहं सर्वेश्वरेश्वरः । ये तु मद्गुणसंपूर्तौ ज्ञानस्नेहस्थिरात्मकाः । तेषां हस्तगतो मोक्षो मामेव स्मरतां सदा । ये मन्यन्ते गुणापूर्तिं तमस्तेषां परायणम् । न च तेभ्यो प्रियो मह्यं यश्च स्याद्गुणपूर्तिवित् । स मामाप्नोति नियतं न च तस्मात्प्रियो मम । प्रमाणान्यखिलान्येव तर्काश्चैतत्पराः सदा । एतद्विरुद्धं यन्मानं तर्कश्चाभास एव तु ॥' इत्यादौ । 'तं भूतिरिति देवा उपासांचक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः' 'भैव भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते । तस्माद्भूना गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥' 'असुन्वन्तं समं जहि दूणाशं यो न ते मयः । अस्मभ्यमस्यवेदनं दद्धि सूरिश्चिदोहते । सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये । एतावानस्य महिमा अतो ज्यायांश्च पूरुषः । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । सृष्टिः स्थितिश्च संहारो नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च कथ्यन्ते यस्योत्कर्षप्रसिद्धये । यस्योत्कर्षप्रसिद्ध्यर्थं सर्वे वेदाश्च युक्तयः । ज्ञात्वैव च यदुत्कर्षं मुच्यन्ते स हरिः परः ॥' 'अधा तमस्य महिमानमायवोऽनु ष्टुवति पूर्वथा' इत्यादिश्रुतिश्च विष्णोरुत्कर्षे महातात्पर्यं कथयति । 'महातत्परता विष्णोरुत्कर्षे वान्तरा ततः । अन्यत्र सर्ववाक्यानां युक्तीनां च विशेषतः ॥' इति ब्रह्माण्डे । 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' 'ब्रह्मदृष्टिरुत्कर्षात्' इत्यादिनिर्णयात्मकं भगवद्वचनम् । न च शारीरपराभेदे तात्पर्यमित्यत्र किंचिन्मानम् । अतत्त्वमसीति भेदस्य नवकृत्वोऽभ्यासाच्च । 'भेदव्यपदेशात्' 'भेदव्यपदेशाच्चान्यः' 'अनुपपत्तेस्तु न शारीरः' 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' 'पृथगुपदेशात्' इत्यादिना सर्वत्र भेदस्यैव भगवता निर्णीतत्वाच्च । 'पुरुष एवेदं सर्वम्' इति च पुरुषेणेदं सर्वं व्याप्तं 'यद्भूतं यच्च भव्यम्' । न च भगवान् गोत्वेन मनुष्यत्वेन वा भवति । आतृणादाकरीषात्सर्वं भगवानिति मिथ्यादृष्टिरेषा 'दधिसक्तवो घृतौदनम्' इत्यादौ व्याप्तशब्दाभावेऽपि व्याप्तशब्दोऽवगम्यते । 'दधिसिक्ताः सक्तवो घृतसिक्तमोदनम्' इति च श्रुतिः । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' इति 'पुरुषेण हीदं सर्वं नेनीयते' इति च । अतः सर्वप्रमाणानां भगवदुत्कर्ष एव महातात्पर्याच्छारीराभेदं वदतां महातात्पर्यविरोधः । 'अज्ञानदुःखसंबन्धाद्यावज्ज्ञानं शरीरिणः । सर्वदा ज्ञानकं विष्णुमहमस्मीति ये विदुः । अज्ञानदुःखमन्तारस्ततस्ते

नीचतां विदुः। विष्णोरुत्कर्षहर्तॄणां नैव तेषां सुखं क्वचित्। योऽन्यथासन्तमीशेशं स्वरूपं प्रतिपद्यते। किं तेन न कृतं पापं चोरेणेशापहारिणा। ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः। शास्त्रतत्त्वमविज्ञाय तथा वादबला जनाः। कामक्रोधाभिभूतत्वादहंकारवशंगताः। ब्रह्मस्तेना निरानन्दा अपक्रमनसोऽशिवाः। याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः। वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते। तेषां तमःशरीराणां तम एव परायणम्। यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः। कथमस्मि स इत्येव संबन्धः स्यादसंहितः॥' इति। 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु। को ह्यत्र पुरुषश्रेष्ठस्तं भवान्वक्तुमर्हति॥' वैशम्पायन उवाच। 'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां हि यथैका योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम्॥' इति मोक्षधर्मवचनाच्च। 'हंनाम हन्यमानत्वाज्जीवस्य समुदाहृतम्। जीवादन्यो यतो विष्णुरहंनामा ततः स्मृतः। स्मीति जीवः समुद्दिष्टः स्मीत्यल्पं सुमितत्वतः। पूर्णत्वादस्मिनामासौ पूर्णपूर्णत्वहेतुतः। ब्रह्मास्मीत्युच्यते विष्णुर्बृहत्पूर्णो यतः सदा। असौ सूर्यगतो विष्णुर्दूरस्थत्वात्प्रकीर्तितः। अहंनामा जीवगतो नित्याहेयत्वहेतुतः॥' इति ब्रह्माण्डे। 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः। स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा। स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता। एतमानन्दमयमात्मानमुपसंक्रम्य। इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन्। एतत्साम गायन्नास्ते। स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति। यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। नानात्वेनाभिसंबद्धास्तदा तत्कालभाविना। प्रकृतौ करणातीताः स्वात्मन्येव व्यवस्थिताः। संयोगः प्रकृतेर्नैषां मुक्तानां तत्त्वदर्शनात्। पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते। प्रवर्तेति पुनः सर्गे तेषां सा न प्रवर्तते। इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च। न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः॥' इत्यादिश्रुतिस्मृतिषु तु तात्पर्येण मुक्तानां विष्णोर्भेदस्यैवोक्तेः। 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सति संपद्य न विदुः सत आगम्य न विदुः' इत्यादौ भेद एव ह्यत्र सतात्पर्यं प्रतिपादितः। ता नद्यः समुद्रादागत्य समुद्रं प्रविशन्ति स समुद्र एव भवति न नदीभावं प्राप्नोति स एव च समुद्रो भवति समुद्रं एव समुद्रो भवति न नद्य इति भेदस्यैवावधारणं क्रियते। न च स्वकीयस्य ब्रह्मभावस्याज्ञोऽपहर्ता भवति। किन्त्वविद्यमानब्रह्मभावाभिमन्तैवापहर्ता। न हि स्वकीयवित्तपरित्याग्यपहर्ता भवति। किं तु परस्वहर्तैव। तस्मादविद्यमानब्रह्मभावाभिमन्तैवापहार्यीत्स्तेयमकार्षीदितिदृष्टान्तपूर्वकमुच्यते। अदुःखित्वपूर्णज्ञानानन्दस्वातन्त्र्यादि ब्रह्म स्वभावाननुभवं स्वात्मनोऽपि ज्ञात्वैव तद्भावाभिमतेः स्तैन्यम्। परकीयाभिमतेरपहारः। 'परस्वभावाभिमतेरपहर्ता स्ववञ्चनात्। स्तेनश्चाभेदवेत्ता तु ब्रह्मणा हन्यते सदा॥' इति तत्त्वविवेके। न च दार्ढ्यमात्रे दृष्टान्तोऽयम्। 'स यदि तस्य कर्ता भवति स यदि तस्य न कर्ता भवति' इति हतिमुक्त्योरपहारानपहारैकहेतुकत्वश्रुतेः। अन्यथा यदि दृढो भवति यद्यदृढो भवतीत्युच्येत। न च सत्यासत्यमात्रम्। तदा सत्यानृतवाग्दृष्टान्तेन पूर्वैरपहारदृष्टान्तो न स्यात्। तस्मादभेदज्ञानेन महान्तं विनाशं प्रदर्श्य भेदज्ञानान्मुक्तिपरमेवैतद्वाक्यम्। भिन्नस्यैवोत्कर्षो भवति। अभिन्नस्य कुत उत्कर्षः स्यात्। आज्ञानदुःखयुक्तत्वाच्च। न हि तत्पक्षे परमार्थदुःखिनो भ्रान्त्या दुःखिनश्च तत्काले कश्चिद्विशेषः। अस्वातन्त्र्यं च भ्रान्तस्य निश्चितमेव। न हि भ्रमः स्वेच्छया युज्यते। 'स्वात्मानं परमं विष्णुं विदित्वैव स राघवः। दैत्यानां मोहनार्थाय दर्शयामास मूढताम्॥' इति पाद्मे। जगद्व्यापारवर्जम्। प्रकरणात्। इत्यैश्वर्यमर्यादया मुक्तानां ब्रह्मणश्च भेदस्यैव निर्णीतत्वाच्च भगवता। 'ब्रह्मसूत्रानुसारेण वेदाद्यं सर्वमेव च। योज्यं न ब्रह्मसूत्राणि दृश्यमानार्थतोऽन्यथा॥' इति च ब्रह्मवैवर्ते। 'चोरदृष्टान्ततो यस्य ह्यभेदज्ञानतस्तमः। भेदेनोत्कर्षवेत्तुस्तु मुक्तिरेव ह्यचोरवत्॥' इति च। 'सारत्वात्स इति प्रोक्तो ज्ञानत्वाद्य इतीरितः। सर्वस्येष्ट इति ह्येष माननामणकोऽ-

णिमा । तत्तन्त्रत्वादैतदात्म्यं स सत्यः साधुरूपतः । तत्ततेः पूर्णतश्चात्मा सादनात्स इतीरितः । अतस्त्वमसि पुत्रेति य उक्तो गौतमेन तु । नवकृत्वः सदृष्टान्तं सर्वभेदेन केशवः । तस्मै नमो भगवते चिदचित्परमाय ते । पुरुषोत्तमाय देवाय पूर्णानन्दैकरूपिणे ॥' इति सामसंहितायाम् । अतः सर्वचिदचिद्विलक्षणः सर्वोत्तमः सर्वगुणपरिपूर्णो भगवान्पुरुषोत्तमः इति सिद्धम् ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते छान्दोग्योपनिषद्भाष्ये षष्ठोऽध्यायः ॥

---

## सप्तमोऽध्यायः

यद्वेत्थ तेन तद्रुक्त्वा मामुपसीद । 'पितृलक्षणं तु पित्र्यं स्याद्राशिः स्यात्पूगलक्षणम् । देवतालक्षणं दैवं निधिश्च निधिलक्षणम् । वाकोवाक्यं मूलवेदो वेदसारोपसंहृतिः । एकायनमिति प्रोक्तं देवविद्या त्वमानुषी । देवशेयैव या विद्या ब्रह्मविद्या तथाऽऽरणम् । भूतविद्या भूतचिह्नं क्षत्रविद्या तु नीतिका । नाक्षत्री ज्योतिषाख्या च सर्पलक्षणमेव च । सर्पविद्येति संप्रोक्ता या देवपरिचारगा । सा देवजनविद्या स्यादेता वेद स नारदः ॥' इति सामसंहितायाम् । 'विद्यानां निर्णयाज्ञानादविद्वानुच्यते पुमान् । सर्वविद्याविदप्यद्धा तस्मान्निर्णयवित्तये । कुमारमैच्छद्देवर्षिर्नारदो ब्रह्मवित्तमम् ॥' इति च । 'विष्णोर्नाम यतो विद्याः सर्वनामेत्यतः स्मृतः । नामाभिमानिनी चोषास्तस्यां ब्रह्म परं स्मरेत् । यदेषा न त्वमेया स्यान्मीयते ह्युषसि ध्रुवम् । रात्रिमानमजानद्भिस्ततो नामेत्युषाः स्मृता ॥' १ ॥

'तस्यास्तु भूयसी स्वाहा धर्मज्ञानसुखादिभिः । सर्वैर्गुणैर्विमुक्तौ च तथा बन्धे च सर्वदा । वाचोऽभिमानिनी सैव वाङ्नाम्नी चाञ्चनाद्वसोः ॥' २ ॥

'एवं तस्या विमुक्तौ च पर्जन्यः सर्वतो वरः । मनोभिमानी संप्रोक्तो वृष्ट्या निर्माणतो मनः ॥' ३ ॥

'तथा तस्माद्वरो मित्रो मुक्तौ संकल्पदेवता । अह्नि संकल्पयेद्यस्मात् स्वप्स्यन्ति निशि यत्ततः । तथा मित्राद्वरस्त्वग्निर्मुक्तौ चित्तस्य देवता । चितत्वाच्चित्तनामा च तस्माद्वरुण एव च । ध्यानस्य देवता चासौ तन्नामा च निधानतः । सत्यानृतविवेकार्थं तथा तस्मान्निशाकरः । विज्ञानदेवता चासौ तन्नामा च विवेचनात् । सत्यस्य तस्माच्च तथा वायुर्भूतात्मको वरः । बलात्मकस्तथा तस्माद्न्नदेवोऽनिरुद्धकः । अन्ननामानुनादित्वात्तैजसाहंभवस्ततः । तथा वरिष्ठः प्राणाख्यो वायुः सोऽपां च देवता । अप्नामा देहसंव्याप्तेस्तथा तस्मात्पुरन्दरः । तेजोभिमानी तन्नामा तेजो ह्योज इतीर्यते । तथा तस्मादुमा चैव सा चाकाशाभिमानिनी । आकाशनाम्नी दीप्तत्वात्तस्याश्चैव सदाशिवः । स्थिरस्मृत्यभिमानी स सममेव रतेः स्मरः । मुख्यवायुप्रिया तस्मात्परमैव सरस्वती । बन्धमुक्त्योः सर्वगुणैः सर्वदाऽऽशास्वरूपिणी । शमित्यानन्द उद्दिष्ट आशापूर्णसुखत्वतः । तस्याः श्रेष्ठो मुख्यवायुः प्रकृष्टानां च नायकः । प्राणनामाण इत्येव ह्यानन्दः समुदीरितः । आणा सरस्वती प्रोक्ता तत्प्रकृष्टसुखत्वतः । प्राण इत्युच्यते वायुः सर्वे त्वेते दशोत्तराः । पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च । द्विगुणा एवानिरुद्धोऽनिलात्पञ्चगुणाधिकः । पादोनो वरुणादग्निरध्यर्धोनः समो मतः । शिवादाशा तथैवास्या मुख्यवायुः शतोत्तरौ । संख्यान्यथात्वं यत्र स्यात्तत्रावेशविशेषतः । अवराणां गुणस्यापि परमीयत्वतस्तथा । प्राणात्तु भगवान् विष्णुरनन्तगुणतोऽधिकः । नित्यमुक्तो नित्यशक्तिर्नित्योद्रिक्तगुणः प्रभुः ॥' इति तत्त्वविवेके । 'सैषानन्दस्य मीमांसा भवति' इत्यादेश्च । 'अथातः संभूतिः परमाद्विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद्बुद्धिर्बुद्धेरिन्द्र इन्द्रात्तैजसः प्राणस्तैजसादनिरुद्धोऽनिरुद्धात्स्पर्शवातः स्पर्शवातात्सोमः सोमाद्वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात्पर्जन्यः पर्जन्यात्स्वाहा स्वाहाया उषा जायते तेषां परः परो ज्यायान् गुणैरुत्तर उत्तरः प्रत्यवरः परस्मात्परस्मादुत्तर उत्तरो मुच्यते स्वं स्वं भावमापद्यते । नैषां पारावर्यमुच्छिद्यते कदाचन नैषां पारावर्यमुच्छिद्यते कुतश्चन पारावर्येणैव ब्रह्मोपयन्ति पारावर्येणैव मुक्ताः संचरन्ति' इत्यादिश्रुतेश्च । 'नामादिमारुतान्तेषु देवेष्वेभ्यश्च भेदतः । उपासितो हरिर्मुक्तिं दद्यान्नास्त्यत्र संशयः ॥' इति सत्तत्त्वे । 'उषादिमारुतान्तेषु समः समगुणोऽपि सन् । ध्यातः प्रीतिं

हरिर्यायादधिकामुत्तरोत्तरे । उत्तमेषूत्तमा प्रीतिस्तस्य तत्र स्मृतस्ततः । ध्यातुरप्युत्तमां प्रीतिं यायान्नास्त्यत्र संशयः। तारतम्यपरिज्ञानात्तेषु ध्यातो विमुक्तिदः। प्रीतिं न चान्यथा यायादिति शास्त्रस्य निर्णयः ॥' इति तत्त्वविवेके । 'नामादिप्राणपर्यन्ताः सप्तम्यर्थाः प्रकीर्तिताः। तृतीया पञ्चमी षष्ठी चतुर्थ्यर्थाश्च सर्वशः । शब्दास्ते ब्रह्मशब्देन संबध्येयुर्यदा तदा । ब्राह्मणोऽस्य मुखं यद्वदात्मा वै पुत्रको यथा । यथा च यूप आदित्य एवमेष प्रकीर्तितः। सप्तसु प्रथमा यस्माद्भूयोभूयस्त्वतस्तथा। षट्सु द्वितीया यस्माच्च कारणत्वात्परस्य च । न ह्यन्यदन्यदित्येव ध्यातं स्यात्पुरुषार्थदम् । अनर्थश्च भवेत्तस्माद्भृत्ये राजेति बोधवत् । राजपूजां यथा भृत्ये कुर्याद्राजा हिनस्ति हि । तद्वशत्वात्तथा भृत्य एवंनामादिकं च यः । उपास्ते ब्रह्मरूपेण तं ब्रह्माऽथेतराणि च । पातयन्ति तमस्यन्धे तस्मान्नेक्षेत तांस्तथा ॥' इति सामसंहितायाम् । 'अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित् । नोपासीत परोऽनर्थः स्यात्तथोपासनाकृतः । दर्भचर्मादयश्चातो देवता ह्यभिमानिनः । न ह्यचेतनकं किंचित्फलदं स्यात्कदाचन । औषधादिषु चैतस्मादेवा एव वरप्रदाः । औषधादिस्थिता देवास्तेऽज्ञे दृष्टफलप्रदाः । ज्ञानिन्यदृष्टदाश्च स्युर्नादैवं किञ्चिदिष्यते । यथाज्ञस्यापि राज्ञस्तु भोजनं क्लृप्तमिष्यते । न त्वविज्ञाय राजानं ग्रामप्राप्तिस्ततो भवेत् । एवं देवा दृष्टफलं दद्युरज्ञस्य चाल्पतः । किञ्चिज्ज्ञानकृताद्दृष्टात्तच्च नैवान्यथा भवेत् । अदृष्टाख्यं फलं यत्तु तज्ज्ञस्यैव न चान्यगम् । तस्मादचेतनोपास्तिं न कुर्यात्क्वापि कश्चन । न चासत्यां चायोग्यां यदीच्छेदुत्तमं फलम् । यदि नेच्छेत्तमो मन्तुं यदि चेच्छेद्धरेः प्रियम् । अथ कर्तव्यकारी च मुमुक्षुरथवा भवेत् । सोऽपीच्छेत हरेः प्रीतिं नात्र कार्या विचारणा ॥' इत्युपासनालक्षणे । 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' 'पयोम्बुवच्चेत्तत्रापि' इति भगवद्वचनम् । 'देवेषु चर्मादिनामानि संवादादेः' इति च देवतामीमांसायाम् । 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति संकर्षणसूत्रम् । 'ओषधयः संवदन्ते सोमेन सह राज्ञा' । 'प्रवो ग्रावाणः सविता देवः सुवतु धर्मणा । न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवन् चित्रमर्च । न देवानामतिव्रतं शतात्मा च न जीवति । अनेहसो व ऊतयः सु ऊतयो व ऊतयः । द्यावापृथिवी जनयन्नभिव्रताप ओषधीर्वनिनानि यज्ञिया । अन्तरिक्षं स्वारापमूतये वशं देवासस्तन्वी३नि मामृजुः ॥' 'अचेतनं चेतनेभ्यो दैवतेभ्यश्च चेतनाः । देवाः प्राणाच्च सप्राणो विष्णोरेव सदैव तु । स्वभावं च प्रवृत्तिं च विकारं च समाप्नुयुः । कश्चिद्भाव ऋते तेषां नैतत्स्याच्च कदाचन । अचेतनप्रवृत्तौ तु न दृष्टान्तोऽस्ति कश्चन । चेतनानां प्रवृत्तेश्च दृष्टत्वादेव सर्वशः । अदृष्टं दृष्टवज्ज्ञेयं यथादृष्टप्रणेतृकम् । विसर्पत्तण्डुलं दृष्ट्वा कस्या तत्र पिपीलिका । न तद्दृष्ट्वैव दृष्टानामपिपीलिकसर्पणम् । एवं दृष्टानुसारेण चिदधीनमचेतनम् । दुर्घटा शक्तिरपि हि पिशाचानां च दृश्यते । देवानां किमु किम्वेव परमस्य हरेः प्रभोः ॥' इत्यादि ब्रह्मतर्के । हृदयज्ञो भगवत्तत्त्वज्ञः । हृद्ययनाद्धृदयम् । 'उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयः' इति श्रुतिः । 'कोलं पूगफलं प्रोक्तं फलं ताम्बूलपत्रकम्' इत्यभिधानम् । 'भूतानां भौतिकानां च मन्त्राहुतिगणस्य च । अचेतनगणस्यास्य कल्पको मित्रनामकः । प्राणा भूतानि मन्त्राद्याश्चिदचित्त्वविभेदिनः । अचितां कल्पको मित्रश्चितां वाय्वादयः स्मृताः ॥' इति वस्तुतत्त्वे । सर्वमचेतनं संकल्प्यते । 'अस्थिरस्मरणं चित्तं स्थिरसंस्मरणं स्मरः' इति शब्दनिर्णये । 'वेदनं ज्ञानमात्रं स्याद्विद्वत्त्वं तु विशेषतः' इति च । 'मोक्षे यस्मिन्प्रवेशः स्यात्सा प्रतिष्ठा हि मुख्यतः । उपचारतस्त्ववस्थानमिति शब्दविदो विदुः ॥' इति च । 'देवा मनुष्यतां प्राप्ता विज्ञेया देवमानुषाः । ध्यानं कुर्वन्त इव ते नैव स्युर्बहुभाषिणः । ब्रूयुरर्थवतीं वाचं नानर्थां प्रायशो हि ते ॥' इति पाद्मे । 'बलं ज्ञानबलं चैव बाह्यं चेति द्विधा मतम् । युक्तिज्ञता ज्ञानबलं सा ज्ञानादधिका मता ॥' इति तत्त्वसारे । 'अन्नं ज्ञानरसान्नं च बाह्यमन्नमिति द्विधा । ज्ञानान्नं ज्ञानबलतः श्रेष्ठं ज्ञानरतिर्हि तत् । यद्बाह्यं तु बलं तस्माद्बाह्यमन्नं विशिष्यते । आपश्च द्विविधाः प्रोक्तास्तृप्तिर्या ज्ञानतो रतेः । ता ज्ञेया आन्तरा आपो बाह्यास्तु द्रवरूपकाः । आन्तरत्वादान्तरापो बाह्याद्बाह्यास्तथा वराः। एवं तेजः प्रातिभाख्यं बाह्यं चेति द्विधा मतम् । प्रातिभं

ज्ञानतृप्तेश्च परमाकाश एव च । स्थिरा तु प्रतिभान्तःस्था छिद्रमेव तु बाह्यगः । स्थिरा हि प्रतिभा श्रेष्ठा चञ्चला या स्मराभिधा । एकधैव स्मृतिः श्रेष्ठाऽऽशापरोक्षदृगात्मकम् । श्रेष्ठं सुखं ततो मोक्षे प्राणाख्यं परमं सुखम् । उत्तरोत्तरमेतद्धि वाय्वन्ताभिमतं सदा । वाह्याद्धयो बाह्यमन्नं च जायतेऽन्यत्तदन्यथा । व्यक्तिरन्तर्गतानां तु विपरीतक्रमाद्भवेत् । तथापि मोक्षगं यस्मात्स्वभावो नित्य एव तु । अतस्तस्मादापरोक्ष्यं कादाचित्कं हि जायते । इष्ट्यधीना स्मृतिश्चेयं प्रतिभा स्मृतिसंभवा । स्थैर्यमालम्ब्य तु चलमन्यथा नैव तिष्ठति । प्रतिभातश्च तृप्तिः स्यादतृप्तस्य तु का रतिः । तत एवं क्रमादेव वरिष्ठः प्राणजो गुणः ॥' इति च ॥ ४–१४ ॥

योऽसौ प्राणः स प्राणेन परब्रह्मणा याति । स एव भगवान् प्राणं प्रत्यभीष्टं ददाति । 'प्राणस्य प्राणम्' इति श्रुतेः । प्राणो वायुः परमात्मानं च ज्ञानेन दर्शयन् ददाति । सर्वस्मादतीतमुत्तमं वदतीत्यतिवादी । एष तु वा अतिवदतीति तुशब्दोऽर्थान्तरवाची । 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नो व्यतिहार्यः । 'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । यत्र प्रमाणं वाक्यं वा प्रतिहार्ये न संशयः ॥' 'व्यतिहारो विशिंषन्ति हीतरवत्' इति च भगवद्वचनम् । 'अतिवादी प्राणवादी विष्णुवादी विशेषतः । स सत्यो भगवान् विष्णुर्यन्निर्दोषो नियामकः । विशिष्टज्ञानरूपश्च सामान्यज्ञानरूपकः । नित्यश्रद्धास्वरूपश्च तथैव स्थैर्यरूपकः । स एव सर्वकर्ता च सुपूर्णानन्दरूपकः । स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः । यदधीनं विना नान्यत्किंचिदस्ति कुतश्चन । स भूमोक्तोऽतिपूर्णत्वादन्यदल्पमुदीर्यते । स सर्वगुणसंपूर्णः सर्वदेशेषु सर्वदा । स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः । पूर्णत्वात्सुखरूपोऽसौ सर्वकर्ता सुखत्वतः । कर्तृत्वात्सुस्थिरश्चासौ स्थिरत्वादास्तिकस्तथा । आस्तिकत्वाच्च मन्ताऽसौ विज्ञाता च ततो हरिः । ज्ञातृत्वाच्च स निर्दोषः सर्वस्यापि नियामकः । भूमा नारायणाख्यः स्यात्स एवाहंकृतिः स्मृतः । आकार्योऽहमिति ह्येष ततोऽहंकार उच्यते । जीवस्थस्त्वनिरुद्धो यः सोऽहंकार इतीरितः । सोऽप्यणुत्वेऽपि संव्यापी परमैश्वर्ययोगतः । यथा बालतनौ विष्णौ मार्कण्डेयेन धीमता । प्रविश्य नान्तोऽधिगत एवं व्याप्तो हरिः परः । अणुरूपोऽपि भगवान् वासुदेवः परो विभुः । आत्मेत्युक्तः स च व्यापी न च भेदो हरौ क्वचित् ॥' इति परमसारे । भूमप्रसादं विना नाल्पे सुखमस्ति । मर्त्ये च पूर्वम् । 'अल्पाऽपि ह्यमृता देवी श्रीः पूर्णातिप्रियत्वतः' इति च । आत्मरतिर्भगवद्रतिः । स्वो भगवान् । सोऽस्य प्रत्यक्षत आज्ञापयिता भवतीति स्वराट् । 'आत्मतः प्राण आत्मत आशा' इत्यादि मुक्तः सन् प्राणादीनां सृष्ट्यादिकं पश्यतीत्यर्थः । 'सर्वं हि पश्यः पश्यति' इति वाक्यशेषात् । पश्य इति द्रष्टा । 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतेः । 'भूमोपासनयोग्यस्तु साक्षाद्ब्रह्मैव मुख्यतः । स तद्विद्याबलेनैव विष्णुना रतिमाप्नुयात् । तेनैव क्रीडते नित्यं स्त्रीरूपो मिथुनी भवेत् । तदानन्दः स एवास्य राजा भवति नापरः । पश्येच्च प्राणसृष्ट्याद्यं ये तदन्य उपासकाः । ते यथायोग्यमाप्स्यन्ति फलं मुक्तौ न संशयः ॥' इति परमतत्त्वे । न च भूमानं भगवो विजिज्ञास इति पृष्टः सन् भूम्नो लक्षणं 'स एवाधस्तात्स उपरिष्टात्' इत्यादिना पूर्णत्वं भगवतोऽन्यस्याहंकारस्योपदिशतीति युज्यते । न चाहंकारस्य पूर्णत्वमस्ति । न च मुख्ये पूर्णत्वे युज्यमाने उपचरितं युज्यते । न चाहंकारस्य काचित्प्रस्तुतिः । अथशब्दस्तु रूपान्तरापेक्षया युज्यते । अतःशब्दस्तत्प्रसादादिति । आत्मरतिः स्वराडित्यादि । 'यो ब्रह्माणं विदधाति पूर्वम्' इति ब्रह्मण उत्पत्तिप्रसिद्धेः । स्वयंभूरात्मभूरित्यादिष्वात्मशब्दः स्वयंशब्दश्च यथा विष्णुवाची तद्वदेवात्राप्यात्मशब्दो विष्णुवाच्येव । न च मुक्तेभ्यः प्राणादिकमुत्पद्यते । 'जगद्व्यापारवर्जम्' इति वर्णितत्वाद्भगवता । 'आत्मत एव प्राणो जायते' इत्यवधारणान्न भगवतोऽन्यस्मात् प्राणो जायते । 'आत्मेति मुख्यतो विष्णुस्तदन्ये तूपचारतः । तथैव स्व इति प्रोक्तस्तस्माद्ब्रह्मात्मभूः स्वभूः ॥' इति स्कान्दे । 'इदं नामातिसामीप्यात्सर्वे पूर्णगुणत्वतः । भूमाहमात्मेति हरिस्त्रिविधोऽपि हि सर्वदा ॥' इति विश्वनिर्णये । 'स्त्रीगुणाः पुंगुणाश्चैव नपुंसकगुणा अपि । यदधीनाव्यत्ययः स्याल्लिङ्गानां तत्र सर्वशः । कः किं कं तत्सर्वमात्मा-

ऽदितिर्देवादयस्ततः ॥' इति लिङ्गनिर्णये । 'गुरोर्विद्याहुतिर्या तु स आहार इति स्मृतः । तच्छुद्धौ ज्ञानशुद्धिः स्याज्ज्ञानशुद्धौ स्थिरा स्मृतिः । स्मृतिस्थैर्ये त्वापरोक्ष्यं हरेर्मोक्षस्ततो भवेत् ॥' इति साधननिर्णये ॥ १५–२६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमच्छान्दोग्योपनिषद्भाष्ये सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः

'यदिदमस्मिन् ब्रह्मपुरे' इति ब्रह्मपुरशब्देन ब्रह्माख्यं पुरं पूर्णत्वात्पुरमिति परं ब्रह्म ब्रह्मणः पुरमिति शरीरं चोभयं विवक्षितम् । 'प्राप्तोऽवध्यं ब्रह्मपुरं राजेव निवसाम्यहम् । अस्मिंश्चेद्यदिदं ब्रह्मपुरे सर्वं समाहितम् ॥' 'यदैतज्जरा वाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिकामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युः' इति वाक्यशेषाद्भगवद्वचनाच्च ब्रह्मपुरशब्देन परं ब्रह्मोच्यत इत्यवसीयते । 'यत्पुण्डरीकं पुरमध्यसंस्थं यदिदं शरीरं तदेतदाद्यं देवसदनम्' इत्यादेः शरीरं च । 'यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशः' । 'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति' इत्यादिना परब्रह्मण्येव हृदयं स्थितम् । 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' । 'दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते' इत्याकाशशब्देन भूताकाशो विवक्षितः । 'किं तदत्र विद्यते' इत्यस्यायं परिहारः । अस्मिन्भूताकाशे परब्रह्माख्य आकाशो विद्यते । आसमन्तात्काशनादाकाशः आसमन्तात्कमश्नातीति वा । 'अस्मिन् कामाः समाहिताः' इति वाक्यशेषात् । आसमन्तात्कामानश्नातीति वा । स च यावान् बहिः परमात्मा व्याप्तोऽस्ति तावानेव विद्यते गुणतः । पूर्णगुणत्वादल्पपरिमाणस्यापि महत्परिमाणत्वं च युज्यते । अचिन्त्यशक्तित्वात् । 'यस्मिन् विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या' इति वचनात् । आनुपूर्व्येति श्रुतिप्रमाणादित्यर्थः । 'आनुपूर्वीश्रुतिर्वेद आम्नायश्चेति कथ्यते' इत्यभिधानात् । अन्यथाऽनियममित्युक्तिविरोधात् । 'एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा एष म आत्मान्तर्हृदये ज्यायान्पृथिव्याः' इति हृदयस्थस्यैवाणुत्वमहत्वोक्तेश्च । 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि' नैवात्र शङ्का । 'चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नार्हेहि तथा प्रतीताः' इति च श्रुतिः । 'सुविरुद्धा अश्रुताश्च गुणाः सन्त्येव सर्वशः । दोषाः केऽपि न सन्त्येव श्रुता अपि तु सर्वशः ॥' इति गारुडे । किं तदत्र विद्यते इति पृष्टत्वाद्भूत आकाशो हृदयशब्देनोच्यते । हृद्ययनात् तस्मिन् हृदयाख्य आकाशे ब्रह्माख्य आकाशो विद्यत इत्यर्थः । अन्यथा कथं भूताकाशस्य दहरस्य बहिराकाशसमत्वम् । 'दहरोऽस्मिन्नन्तराकाशः' इति पूर्वोक्ताकाशस्य दहरत्वमुक्तम् । उत्तरस्य तु यावान्वा अयमाकाश इत्यनन्तपरिमाणत्वम् । अतो ब्रह्माकाश एवोत्तरः । पूर्वोक्तस्याभूताकाशत्वे 'तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं' 'तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्। सहस्रशीर्षं देवम्' इत्यादि कथं युज्यते । न हि भगवदन्तः स्थितमेवान्यत्किंचिद्विजिज्ञासितव्यम् । तद्वावेत्यवधारणाच्च । उत्तरस्यापरब्रह्मत्वे च सर्वाधारत्वं 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिताः एष आत्माऽपहतपाप्मा' इत्यादि न युज्यते । 'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्यस्य 'य एषोऽन्तर्हृदय आकाशः' इत्येव परिहारः। न तु 'उभे अस्मिन्द्यावापृथिवी' इत्यादि । तत्तु विजिज्ञासितव्यत्वे हेतुत्वेन सामर्थ्यकथनमेव । न हि द्यावापृथिव्यादेरेव विजिज्ञास्यत्वम् । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इति हि श्रुतिः । 'उभे अस्मिन्द्यावापृथिवी' इत्याद्युभशब्दो मुक्तामुक्तराशिव्यपेक्षया । यच्चास्येहास्ति यच्च

नास्तीति वाक्यशेषात् । अस्येति संसारिणः । न हि संसारिणो मुक्ता उपकारकाः । यद्यस्य नोपकारकं तत्तस्य नास्तीत्युच्यतेऽन्यस्य सत्त्वेऽपि । यथा वित्तादि । यथा योग्यमेवैनं भगवन्तं प्रजा मुक्ता अन्वाविशन्ति तच्छासनानुसारेण । यं यं कामं कामयते तं तमस्मादेवोपजीवन्ति । तदविदुषां पुण्यानि क्षयिष्णुफलान्येव भवन्ति । एतांश्च सत्यान्कामान्भगवदीयान् । 'बृहत्त्वात्पूर्णकामत्वाद्विष्णुर्ब्रह्मपुराभिधः । तस्मिंस्तस्य पुरं देहस्तस्मिन्हृदयमास्थितम् । हृदयाकाशगो विष्णुस्तस्मिन्सर्वमिदं स्थितम् । स सत्यकामो भगवान्यदिष्टं तस्य तद्भवेत् । तस्मिन्समाहिताः कामाः सत्याः पुंसामपि ध्रुवम् । तस्यैव ह्यनुसारेण सत्यत्वं नान्यथा क्वचित् । यथा बिम्बानुसारेण प्रतिबिम्बप्रकाशनम् ॥' १–२ ॥

'तस्माद्ये मुक्तियोग्याः स्युस्तेषां कामाः पुराऽपि तु । सत्याः सन्तस्तदज्ञानान्न दृश्यन्ते तथाऽखिलाः । अज्ञानमनृतं प्रोक्तमृगताविति धातुतः । तस्माद्द्रष्टुं यदिष्टं स्यात्तद्दृष्टिनियमो न तु । अमुक्तस्य हरेर्लोकं मुक्तो गत्वा हि पश्यति । अज्ञत्वादेव सुप्तौ तु नित्यं यान्तोऽपि माधवम् । नैव पश्यन्त्यसौ विष्णुर्हृदयं नाम हृद्गतेः । एवं हृदयनामानं विष्णुं जानन्हि नित्यशः । विष्णुलोकगतेः पुण्यमाप्त्वा विष्णुं व्रजेत्तथा । यस्य सम्यक्प्रसादोऽस्ति विष्णोरेव स उच्यते । संप्रसादः स उत्थाय शरीरात्प्राप्य केशवम् । यथास्वरूपस्तु भवेद्यं प्राप्यासौ स्वरूपवाम् । आप्नोति स परो ह्यात्मा भगवानिन्दिरापतिः । इत्याह सा रमादेवी पश्यन्ती परमं पदम् । सदित्यमृतधर्माणो मुक्ताः श्रीरपि चेरिताः । तीत्युक्ता मर्त्यधर्माणस्तेषां नियमनाद्धरिः । सत्यमित्युच्यते सद्भिः ॥' ३ ॥

'सेतुश्चापि विधारणात् । सितमस्मिन् जगत्सर्वमिति सेतुरितीरितः । एतं सेतुं प्रतिपुमानन्यत्तीर्त्वा ह्यदोषवान् । स प्राप्यो ब्रह्मचर्येण मनोवाक्कर्मभिस्तु यत् । चरणं ब्रह्मणि परे ब्रह्मचर्यं हि तत्स्मृतम् । तेनैव ब्रह्मचर्येण भवेयुर्ब्रह्मलोकगाः । एतेषां ब्रह्मलोकः स्यात्परं ब्रह्मैव लोकनात् । ब्रह्मलोक इति प्रोक्तं तस्य लोकोऽपि कथ्यते ॥' ४ ॥

'यज्ञ इष्टं च सत्रं च मौनं चानशनं तथा । परस्य ब्रह्मणो ज्ञानं सर्वमेतदुदीरितम् । परस्य ब्रह्मणो लोके श्वेतद्वीपाभिधे परे । अरण्यौ चार्णवौ दिव्यौ चिदानन्दरसात्मकौ । यावानुच्चः स्वर्गलोकस्तावानुच्चतया स च । श्वेतद्वीपो दिविष्ठोऽतस्तत्र मद्यं सरोवरम् । सर्वभोज्यात्मकं दिव्यं तत्राश्वत्थाः सुधास्रवाः । तत्र विष्णोः पुरं दिव्यमपराजितनामकम् । विमिताख्यं च पर्यङ्कं विष्णोर्मानेन संमितम् । चित्सुवर्णमयं दिव्यं लक्ष्मीस्तत्तत्स्वरूपिणी । स श्वेतद्विपगो विष्णुः पर्यङ्कब्रह्मनामकः ॥' ५ ॥

'स एष हृदि नाडीषु पञ्चरूपः प्रतिष्ठितः । विष्णोरणिम्नो रूपाणि पञ्चनाडीस्थितानि तु । नारायणाख्यं सौषुम्नं मध्यस्थं रक्तवर्णकम् । शुक्लं तु वासुदेवाख्यं नादिन्यामग्रतः स्थितम् । पिङ्गलायां पिङ्गलं तु रूपं संकर्षणाभिधम् । पश्चिमे वज्रिकायां च पीतं प्रद्युम्ननामकम् । इडायामनिरुद्धाख्यं नीलरूपं व्यवस्थितम् । सूर्येऽप्येवं पञ्चरूपो भगवान्संव्यवस्थितः । आदित्यनामा चादित्वात्तद्यातं सूर्यमण्डलम् । तद्रश्मिभिस्तथा व्याताः समस्ताः सूर्यरश्मयः । तस्मिन्नाडीषु च प्रोतास्तथा नाडीस्थरश्मयः । तन्नाडीसंस्थितं विष्णुं मध्ये जीवः प्रपद्यते । तत्तेजसा हि संपन्नः सुप्त इत्यभिधीयते । ओमित्येव वहन्नित्यं वायुरोंवाडितीरितः । तेन वामत्वमायाति मुक्तिकाले ह्युपासकः । दिव्यचिद्रूपभावो हि वामभाव उदीरितः । यदैनं नेतुमन्विच्छन्मनः क्षिपति मारुतः । आदित्याख्यं तदा विष्णुं याति जीवः स्वविद्यया ॥' इति पर्यङ्कोपासनायाम् ॥ ६ ॥

'इन्द्रो विरोचनश्चैव श्रुत्वा तु ब्रह्मणोऽक्षिगम् । विष्णुमानन्दरूपं तं सम्यक् ज्ञानविपर्ययौ । आपतुस्तत्र देवेन्द्रो जानन्नपि विरोचनम् । मोहयन्ननुरूपाणि तस्य वाक्यान्युवाच ह । यथा विरोचनो नैव जानीयाद्विष्णुमञ्जसा । स्ववाक्यं चानृतं न स्यात्तथा ब्रह्माऽप्युवाच ह । अयोग्या ह्यसुरा ज्ञाने वक्तव्यं चैव नानृतम् । मच्छापादासुरो भावः प्रह्लादादेर्न तु स्वतः । अयं त्वासुर एवातो वक्ष्याम्यस्योभयं यथा । इन्द्रस्तु शुद्धभावत्वात्पुनरायास्यति ध्रुवम् । इत्यभिप्रायतः प्रोक्तो ब्रह्मणाक्षिगतो हरिः । अयोग्यत्वात्तु तच्छ्रुत्वा प्रतिरूपं विरोचनः । मत्वाऽप्स्वादर्शके चैव पप्रच्छ कतम-

स्त्विति । तत्रापि तु हरेर्भावं हृदि कृत्वा चतुर्मुखः । दृश्यते ह्येष एवेति तत्त्ववेदिविवक्षया ॥' ७ ॥

'तथापि योग्यतैवात्र भूयसीति निवेदितुम् । दर्शयन् प्रतिरूपस्य दोषानाह प्रजापतिः । अलङ्कारादिभिर्युक्तः पश्यस्वेति विवेचयन् । यथा देहगुणे गौण्यं दोषे दोषास्तथैव तु । तथाप्यशुद्धभावत्वात्प्रतिरूपस्य तद्गुणान् । परस्य ब्रह्मणो जानन् ययौ तुष्टमनाः स्वयम् । असुराणामविश्वासनिवृत्त्यर्थं पितामहः । माध्यस्थ्यं ज्ञापयानश्च जानन्वैरोचनं मनः । प्राहाज्ञानां परामाव इत्युच्चैश्च पुनः पुनः । तथाप्यशुद्धभावत्वादजानन्नेव निर्ययौ । गत्वा चैव परं ब्रह्म प्रतिरूपात्मकं सदा । दिदेश सर्वासुराणां शरीरालङ्कृतेरपि । अलङ्कृतिं ब्रह्मणश्च प्रत्यक्षेणोपलम्भिताम् । अतोऽसुरा न दास्यन्ति न यजन्त्यात्मनः परम् । स्वभोगेनैव तृप्तिः स्यादिति सर्वेऽपि मेनिरे । तत्संस्कारवशेनैव स्वयं ब्रह्मेति वेदिनः । अभवन्नपतंश्चैव तमोऽन्धे नित्यदुःखिताः ॥' ८ ॥

'इन्द्रश्च जानन्नपि तु मोहयन्नसुरं तदा । गत्वा निववृते पश्चादिव पश्यन् सदोषताम् । पुनः पुनश्च मोहाय गत्वा गत्वा निवर्तते । कथंचिदेव विज्ञातं मयेत्यज्ञान् विमोहितुम् ॥' ९ ॥

'तद्योग्यान्येव वाक्यानि ब्रह्माप्याह पुनः पुनः । गरीयसी योग्यतेति ज्ञापयन्पूर्ववत्पुनः । संदिग्धान्येव वाक्यानि प्रोवाचेन्द्राय चात्मभूः । स्वप्नं प्रदर्शयन्यस्तु पूज्यते सर्वदैवतैः । स एव विष्णुरित्याह तत्राप्याह पुरंदरः । दर्शयन्नासुरीं बुद्धिं स्वप्नदृश्यविवक्षया । घ्नन्तीवैनमदन्तीव तथा न स्यात्परो हरिः ॥' १० ॥

'इत्युक्त आह ब्रह्मैनं सुप्तिस्थो भगवानिति । यत्र सुप्तो ह्ययं जीव इत्युक्तः प्राह वासवः । नाहं जानामि मत्तोऽन्यं सुप्तौ नान्योऽपि दर्शयेत् । अहमस्मीति भूतानि न च पश्यन्ति कानिचित् । यदि जीवः परात्मा वाऽप्यन्योऽन्यस्मिन्नपीतताम् । गतौ तदाऽप्यपीतस्तु शं विनैव भवेदिति ॥' ११ ॥

'उक्तो ब्रह्माऽब्रवीच्छक्रं ज्ञापयंस्तत्त्वमञ्जसा । योऽयं शरीरसंबन्धी जीव इत्यवधार्यताम् । भूतैष्यद्वर्तमानेषु यस्य नो देहसंगतिः । सोऽशरीरः परो विष्णुरमृतो नित्यमूर्तिमान् । अधिष्ठाय तथापीमं देहमास्ते स ईश्वरः । जरामृत्युपरीतोऽयं जीवात्मा देहसंगतेः । परेणेयं सुखं प्रोक्तं प्रियमित्येव पण्डितैः । परेणेयमभद्रं यदप्रियं तदुदीरितम् । न जीवस्य तयोर्हानिः कदाचिद्विद्यते क्वचित् । अशरीरं परं ब्रह्म नैव ते स्पृशतः क्वचित् । अन्नामा भगवान्विष्णुर्व्याप्तत्वात्परमेश्वरः । तेनैव म्रियमाणत्वाद्ब्रह्माऽभ्रमिति कीर्तितः । वायोः पत्नी विद्युदुक्ता विशेषद्युतिहेतुतः । ब्रह्माणी स्तनयित्नुः स्यात्सर्वशब्दात्मिका यतः । एतेषां ज्ञानवैशेष्यान्नातिदेहेन संगतिः । अतः प्रियाप्रिये तेषामपि न ब्रह्मणः किमु । विष्ण्वीयं हि सुखं तेषां स्वभर्त्रीयमथापि च । न ह्यन्येयं सुखं तेषामतस्ते प्रियवर्जिताः । यथा ते परमाकाशाद्विष्णोरेव समुत्थिताः । तमेव प्राप्य संयान्ति नैजमानन्दमूर्जितम् । एवं सम्यक्प्रसादेन विष्णोर्मुक्तोऽपि यो परः । यं प्राप्यते निजानन्दमाप्नुवन्ति सकेशवः । तं प्राप्य रमते मुक्तः स्त्रीभिर्यानैश्च बन्धुभिः । यथैव सारथिर्याने एवं देहे च मारुतः । यथा रथी तथा विष्णुर्जीवोऽन्यरथगो यथा । यदाश्रितानीन्द्रियाणि प्राणश्चापि यदाश्रयः । यदाश्रयोऽप्ययं जीवो यो वेदैषां प्रवर्तनम् । दर्शनं श्रवणं घ्राणं जिह्वां स्पर्शं मनस्तथा । तदीयान् विषयांश्चैव यो वेदाखिलमञ्जसा । स विष्णुः परमो ज्ञेयो देवताः करणानि च । स एतैरिन्द्रियैर्विष्णुर्भोगाननुभवत्यजः । स्वरूपेणैव शक्तोऽपि जीवदेहस्थितो हरिः । भुङ्क्ते तदिन्द्रियैर्भोगाञ्छुरितैरिन्द्रियैः स्वकैः । जीवं तदिन्द्रियाण्येवं प्राणं च व्याप्य कृत्स्नशः । भुङ्क्ते तत्तद्गुणान्विष्णुर्नैव दोषान् कदाचन । तमेतं देवताः सर्वा वाय्वाद्याः समुपासते । तस्माद्देववशा लोकाः सर्वकामाः सजीवकाः । तमेतं यो यथा ज्ञात्वा पश्येद्विष्णुं सनातनम् । आप्नोति सर्वकामांश्च सर्वलोकांश्च कामतः ॥' इति सामसंहितायाम् । 'उभौ लोकाववाप्नोति' इति वचनाच्च लोकायतिकमतं विरोचनोक्तम् । किन्तु बिम्बप्रतिबिम्बयोरभिमान्यैक्याभिप्रायेण जीवात्मैव महय्य इति मायावाद एव । न चात्र जीव आत्मशब्दोक्तः । 'तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इतीशजीवयोः सतात्पर्ये भेदाभिधानात् । नहि जीवादन्यस्य प्रियाप्रियानुभवोऽस्ति । न च मुक्तस्यापि प्रियापहतिरस्ति ।

न च विष्णोरत्र विवक्षितं प्रियम्। पराधीनरतिप्राप्तिर्हि प्रियमत्र विवक्षितं न हि तद्भगवतः। मुक्तानां तु भगवदधीनरतित्वात्प्रियमस्त्येव। 'जीवा मुक्ता अमुक्ताश्च पराधीनरतित्वतः। न प्रियापहतिः क्वापि स्वातन्त्र्यान्न हरेः प्रियम्। पराधीनरतिर्यस्मात्प्रियमित्युच्यते बुधैः। हरेरधीनता तु स्याद्यद्यपि ब्रह्मवायुवोः। तदन्यवशताभावादप्रियाविति तौ श्रुतौ। यथा राज्ञः स्वराट् शब्दो रुद्रस्येश्वरता तथा। यथा शक्रस्य चेन्द्रत्वं तद्वदप्रियता तयोः। यथा राज्ञ्याश्च राज्ञीत्वं यथा चोमेश्वरी स्मृता। विद्युतः स्तनयित्नोश्च तथैवाप्रियता श्रुता॥' इति च परमश्रुतौ। 'स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते' इति मुक्तस्य तत्प्रसादात्तत्प्राप्त्या निजानन्दानुभवश्रुतेश्च। 'स उत्तमः पुरुषः' इति तस्य जीवादुत्तमत्वश्रुतेश्च। अपरपुरुषापेक्षया ह्युत्तमपुरुषशब्दो भवति। अन्यथोत्तमशब्द एव स्यात्। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च। 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते। तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे॥' 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति'। 'इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः'। 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' इति। 'एतमानन्दमयमात्मानमुपसंक्रम्येमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन्'। 'न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः। कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादेश्च। 'स तत्र पर्येति जक्षन् क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' इत्यत्रापि भेदेनावस्थानश्रुतेः। उपशब्दादन्तरशब्दाच्च मुक्तस्य परंज्योतिःसमीपावस्थानावगतेश्च। न च जीवमात्रं देवा उपासते। 'ऊर्जं पृथिव्या भक्त्वायोद्गायमुपासते' इति हि श्रुतिः। 'भेददृष्ट्याभिमानेन निःसङ्गेनापि कर्मणा' इत्यादेश्च। 'मूर्तैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पूरुषः। भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलंकृषीष्ट भगवान् वचांसि मे॥' इत्यादौ भगवत एवेन्द्रियैर्भोगोक्तेश्च। 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' इति च। 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति भगवद्वचनं च। 'इदं पश्यामि जिघ्राणीत्यपि जीवा न वै विदुः। द्रव्याणामपरिज्ञानाद्वेदासौ पुरुषोत्तमः॥' इति च। 'स उत्तमः पुरुषः' इति भगवत एवायं परामर्शः। 'अन्यार्थश्च परामर्शः' इति भगवद्वचनात्। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च। 'जगद्व्यापारवर्जम्' इत्यत्यैश्वर्यत्वं मुक्तस्य भगवताऽभिहितम्। अतोऽयं प्राप्य जीवः स्वेन रूपेणाभिनिष्पद्यते स भगवानुत्तमः पुरुष इति परामर्शः। 'स्वप्ने महीयमानश्चरति' 'यत्रैतत्सुप्तः' इति पुरस्तादपि भेदोक्तेः। न हि महीयमान एव जीवश्चरति। प्रायोग्यः सारथिः। प्रयोगेन यानस्य। 'यन्ता सारथिरानेता प्रायोग्य इति कीर्तितः' इत्यभिधानात्। 'अन्येभ्यो दीप्यमानत्वाद्दैवं चक्षुर्मनः स्मृतम्' इति च। य एते ब्रह्मलोके तेषु रमते। अनुविद्य शास्त्राचार्यानुसारेण विदित्वा विजानात्यापरोक्ष्येण। 'वेदनं शास्त्रतो ज्ञानं विज्ञानं ब्रह्मदर्शनम्' इति च॥ १२॥

'श्यामो हृदि स्थितो विष्णुः शबलो विश्वरूपवान्। जीववर्णो जीवगतो लोहितश्चक्षुषि स्थितः॥' इति मानसे। 'हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु। रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः। यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु। तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः। एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्धि सा॥' इति सामसंहितायाम्॥ १३॥

'आकाशोऽतिप्रकाशत्वान्नामरूपे ऋते स्थितः। ब्रह्माख्यो भगवान्विष्णुस्तद्वेश्म प्राप्नुयामहम्। यशोऽहं सर्ववर्णानां मत्तोऽन्येषां यशो भवेत्। सोऽहं मम यशो दातृ यशसां यश उत्तमम्। विष्ण्वाख्यं परमं ब्रह्म श्वेतं श्वसनगं यतः। अदत्कमद्यमानं कं स्वानन्दानुभवात्मकम्। लिन्दु तद्रहितं यस्मात्तदहं प्राप्नुयां सदा॥ १४॥

'उपदिष्टः परेणैव त्वेवमाह चतुर्मुखः। उवाच च मनोर्विद्यां प्रजाभ्यो मनुरेव च। तस्मात्सर्वेन्द्रियाणीशे निधाय पुरुषोत्तमे। दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यते। नावर्तते पुनस्तस्मात्कदाचित्केनचित्क्वचित्॥' इति च॥ १५॥

पूर्णानन्दमहोदधिः परतमो नित्यः परस्मात्सदा ।
सर्वज्ञः सकलेशिता गुणनिधिर्नित्योत्सवस्तद्विदाम्
सर्वस्मादधिकं मम प्रियतमस्त्विष्टादपीष्टोत्तमः
सर्वस्माच्च हितात्सदा हिततमः प्रीतो भवेन्मे हरिः ॥
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥
हनशब्दो ज्ञानवाची हनूमान्मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचो नेता गुणोदधिः ॥
भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ॥
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ॥
मध्व आनन्दतीर्थः स्यात्तृतीया मारुती तनुः ।
इति सूक्तगतं रूपत्रयमेतन्महात्मनः ॥
'यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादतः' इति सद्भावे ।
आनन्दतीर्थ इति तु यस्य नाम तृतीयकम् ।
पूर्णप्रज्ञेन तेनेदं कृतं भाष्यं हरेः प्रियम् ॥
नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।
नमस्तस्मै नमस्तस्मै नमस्तस्मै च विष्णवे ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमच्छान्दोग्योपनिषद्भाष्येऽष्टमोऽध्यायः ॥ ८ ॥

छान्दोग्योपनिषन्मध्वभाष्यं समाप्तम् ।

